( Continued )

**[1]अनुपा (anu-pā-)** II. P. [DhātuPā. 2.47; *caus.* पालय् Vār. 2 *on* P. vii. 3.37; AltGr. I. 122] **A** to preserve, to keep पुनः प्राणं पुनरपानम् ··· सोम देहि ··· तमनुपाहि तमनु जीव AV.(P.) ii. 80.1; **B** to protect, to guard अपि दुर्योधनं कृष्ण सर्वे वयमधश्चराः। नीचैर्भूत्वानुया( v.l. पा )स्यामो मा स्म नो भरता नशन् MahāBhā. v. 72.20; इमे ··· तरुभेदाः समुत्थिताः।··· फलेग्रहीनिमेऽस्मान्वा निगृह्णन्त्यनुपान्ति वा MahāP. 3.195 [to wait for, expect, MW.]

**[2]अनुपा (anu-pā-)** I. P. [DhātuPā. 1.972; *caus.* पायय् P. vii. 3.37] **Ai** to drink afterwards इन्द्रस्तृतीयसवनमन्वपिबत्तदनुपानीयानामनुपानीयात्वम् AitBr. 13.14 (390); अथ दक्षिणत उपविश्य पयोऽनुपिबति VādhūŚS. ii. 16.1; स यत् पयोऽनुपिबत्यात्मानमेव तद् यं चन्द्रमसमाप्याययन् मन्यते तस्मात् पयोऽनुपिबेत् VādhūŚS. ii. 16.10–11; त्रिः प्राश्य त्रिरनुपिबेच्छेषं च कुर्यात् BaudhGS. i. 2.38; क्षोभं नीत्वा सलीलं सलिलमनुपिबेर्योषिता पीतशेषम् ŚatTrayī. 794; तत्र मधुमैरेयसुरासवान् ··· वेश्याः पाययेयुरनुपिबेयुश्च KāmSū. 54.1 (1.4); मदिराक्षि ···। अनुपास्यसि बाष्पदूषितं परलोकोपनतं जलाञ्जलिम् RaghuVa. 8.68; (*caus.*) to cause to drink afterwards अथाहुतीर्जुहोति। यथा परिषिच्यानुपाययेत्तादृक् तत् ŚatBr. IX. ii. 3.41; **Aii** to drink along with (a medicine) तृप्तिं चटकमांसानां गत्वा योऽनुपिबेत् पयः। न तस्य लिङ्गशैथिल्यं स्यान्न शुक्रक्षयो निशि CaraS. vi. 2(1).46 (1941 Ed.); लिह्यादेरण्डतैलेन कुष्ठं त्रिकटुकान्वितम्। सुखोदकं चानुपिबेत् SuśruS. i. 44.76; iii. 10.57; iv. 28.3; भुक्तवानथ पानीयं पश्चादनुपिबेत्तु यः।··· समत्वायोपपद्यते BhelaS. 9.12 (1.6); न्यग्रोधाद्यमिदं चूर्णम् ··· लेहयेत्। फलत्रयरसं चानुपिबेन्मूत्रं विशुध्यति SiddhYo. 35.25; Hastyāyur. 586.29 (4.4); (*caus.*) to cause to drink along with (a medicine) पलाशफलनिर्यूहं पयसा सह पाययेत्। ततोऽनुपाययेत् कोष्णं क्षीरमेव CaraS. vi. 19.59 (1941 Ed.); अतिप्रवृत्ते रक्ते तु रक्तमेवानुपाययेत् BhelaS. 251.23 (8.4); त्रिकटुकम् ···। दत्त्वानुपाययेन्मूत्रं माहिषं वाथ सौरभम् AśvaVai. 52.21; अर्कमूलकषायं च सत्र्यूषमनुपाययेत् RasRaSa. 12.107; 17.5; 21.152; **B** to drink in imitation यश्च पिबति यश्चानुपिबत्युभौ तौ पिबतः MahāBh. i. 20.24 (*on* ŚivSū.(Gr.) 2)

**अनुपांशुकृता (an-upāṁśukṛtā)** *adj.* (*f.*) not uttered in a low voice or whisper, i.e. uttered loudly (अनुपकिंचया वाचैकैकं प्राह) अनुपकिंचया अनुपांशुकृतया वाचा VīraMi.(Saṁskāra.) 822.24.

**अनुपाकर्मन् (an-upākarman)** *adj.* who has not undergone the (ceremony of) *upākarman*, i.e. commencement of Vedic recitation न भवेदनुपाकर्मा ब्राह्मणः स्नातको व्रती BṛPar̄āSm. 6.353.

**अनुपाकिन् (anupāk-in)** *adj.* having beneficial effect मधुराण्यनुपाकीनि वातपित्तहराणि च (फलानि) CaraS. i. 27.158 (1922 Ed.) (*but* comm. अनुपाकि अनुया इति ख्याता)

**अनुपाकृत (an-upākṛta)** *adj.* **1** not brought near, i.e. not consecrated with *upākaraṇa* rite अथ यदि पशुरानीतोऽनुपाकृतो म्रियेतर्त्विगभ्यस्तं कारयेत KauṣīBr. 18.12 (83.3); ŚāṅkhāŚS. xiii. 2.1; BaudhŚS. iii. 278.1; (अनुपाकृतमांसानि) अनुपाकृतम् अपशुबन्धप्रभवम् BālaKrī. i. 121.2 (*on* 1.170); (विवर्जयेत्।··· अनुपाकृतमांसानि) अनुपाकृतस्य अयज्ञाहतस्य पशोर्मांसानि। 'उपाकरणं' पशोः संस्कारविशेषः ManuBh. i. 422.4 (*on* 5.7); मत्स्यानप्यनुपाकृतान् ··· प्रयत्नेन विवर्जयेत् KūrmaP. 570.6 (2.17); PadmP. i. 56.23; CaturCin. iii(1). 611.9; अनुपाकृतानि पशुबन्धाङ्गभूतमन्त्रवद्स्पर्शरूपसंस्कारेणासंस्कृतानि ManvaVi. 589.25 (*on* 5.7); पशुयागादौ मन्त्रबहुलेन पशोः स्पर्शनमुपाकरणं तद्रहितः पशुरनुपाकृतः ManvaMu. 194.16 (*on* 5.7); VīraMi. 246.8 (*on* 1.171); VīraMi.(Āhnika.) 515.10; **2** not begun दीक्षितानामुपतापे परिहिते प्रातरनुवाकेऽनुपाकृते वा ··· ब्रह्माहुतिं हुत्वा ··· अद्भिरवर्थं कुर्वीत ĀśvaŚS. I. vi. 9.1; समयाविषिते सूर्ये हिरण्येन षोडशिनः स्तोममुपाकरोति ··· तस्य चेदनुपाकृत आदित्योऽभ्यस्तमियाद् गार्हपत्ये तिस्रः स्रुवाहुतीर्जुहुयात् BaudhŚS. iii. 302.9; iii. 372.3; **3** not committed (something wrong) न स्मराम्यनृतं किंचिन्न स्मराम्यनुपाकृतम्। न च पर्युषितं वाक्यं स्वैरेष्वपि महात्मनः MahāBhā. iii. 71.13; **4** who has not undergone the (ceremony of) *upākarman* श्रावण्यां प्रौष्ठपद्यां वा छन्दांस्युपाकृत्याधिपञ्चमान्मासानधीयीत। ततस्तेषामुत्सर्गं बहिः कुर्यान्नानुपाकृतानाम् ViṣṇuSm. 30.2.

**अनुपाकृतग्रहण (anupākṛta-grahaṇa)** *n.* mention of the word *anupākṛta* (unconsecrated) वृथाशब्दाधिकारेऽप्यनुपाकृतग्रहणमतिथ्यादिशिष्टस्यापि गोऽव्यजमांसस्य प्रतिषेधार्थम् ManuBh. i. 422.6 (*on* 5.7)

**अनुपाकृतमांस (anupākṛta-māṁsa)** *n.* meat which is not consecrated or prepared (for offering) प्रयत्नेन विवर्जयेत्।··· अनुपाकृतमांसानि देवान्नानि हवींषि च ManuSm. 5.7; ViṣṇuDhaP. iii. 230.14; KūrmaP. 570.5 (2.17); PadmP. i. 56.23; अनुपाकृतमांसं च नाद्यम् BṛParāSm. 6.248; परिवर्जयेत्।··· अनुपाकृतमांसानि विड्जानि कवकानि च YājñaSm. 1.171; ManuBh. i. 432.1 (*on* 5.27); भुक्त्वा चान्द्रायणं कुर्यात् ··· अनुपाकृतमांसानि AgniP. 168.19; अनुपाकृतमांसानि देवाद्यर्थत्वेनानुपाकृतानामसंकल्पितानां पश्वादीनां मांसानि Aparā. 247.12 (*on* 1.171); 'अनुपाकृतमांसानि' इत्येतद्विशेषनिषेधदर्शनात् 'अनर्चितं वृथामांसम्' इति सामान्यनिषेधो गोबलीवर्देन्यानानुपाकृतमांसेतरश्राद्धाद्यनुद्देश्यमांसभक्षणे पर्यवस्यति ManvaMu. 194.19 (*on* 5.7)

**अनुपाकृतमांसभक्षण (anupākṛtamāṁsa-bhakṣaṇa)** *n.* eating of the meat which is not consecrated अनुपाकृतमांसभक्षणे श्राद्धादिष्वपि अदोषो नास्ति ManvaVi. 620.19 (*on* 5.56)

**अनुपाकृतमांसवचन (anupākṛtamāṁsa-vacana)** *n.* mention of the meat which is not consecrated अनुपाकृतमांसवचनमपि मांसस्य स्वभावदौष्ट्यज्ञापनार्थम् BālaKrī. i. 121.5 (*on* 1.170)

**अनुपाकृतमांसाशन (anupākṛtamāṁsāśana)** *n.* eating of the meat which is not consecrated ब्राह्मणस्यानुपाकृतमांसाशने क्षत्रियाद्यपेक्षया दोषभूयस्त्वम् ManvaVi. 607.14 (*on* 5.31)

**अनुपाकृतविप्रादि (anupākṛta-viprādi)** *adj.* Brahmin etc. who have not undergone the (ceremony of) *upākarman* अतो वेदाधिकारित्वं वेदपाठस्य कीर्तने। अनुपाकृतविप्रादेर्वेदाध्ययनदुष्कृतम् BṛParāSm. 6.350.

**अनुपाकृत्य (an-upākṛtya)** *ger.* not having obliged नाचार्यांस्तेहोपकृत्वा( v.l. °र्यानुपाकृत्य ) प्रवादं प्राज्ञः कुर्वीत नैतदहं करोमि। इतीव मन्येत न भाषयेत MahāBhā. v. 44.11.

**अनुपाक्त (án-upākta)** *adj.* not anointed (ऋषयः) तामब्रुवन् क्वाऽहास्था इत्यनुपाक्तोऽभूवमित्यब्रवीद्यथाक्षोऽनुपाक्तः। अवाच्छेति TaiS. II. vi. 3.3.

**अनुपाक्रुष्ट (an-upākruṣṭa)** *adj.* not censured, blameless महान्तमप्यर्थमधर्मयुक्तं यः संत्यजत्यनुपाक्रुष्ट एव MahāBhā. v. 40.2; बोधिसत्त्वः किल कस्मिंश्चिदनुप( v.l. पा )क्रुष्टगोत्रचारित्रे ··· ब्राह्मणकुले जन्मपरिग्रहं चकार JātaMā. 77.2 (12.0(2))

**अनुपाख्य (an-upākhya)** *adj.* **A** not clearly discernible, not directly perceptible (i.e. inferable) द्वितीये चानुपाख्ये P. vi. 3.80; JaineVyā. iv. 3.188; द्वयोः सहयुक्तयोरन्यतरभूतो द्वितीयः।··· अप्रत्यक्षोऽनुपाख्य उक्तः JaineVyā. 311.28 (*on* iv. 3.188); अनुपाख्ये CāndraVyā. v. 2.99 (Vṛ. अप्रत्यक्षे गम्यमाने सहशब्दस्योत्तरपदे सादेशो भवति); उपाख्यायते प्रत्यक्षत उपलभ्यते यः स उपाख्यः, उपाख्यादन्योऽनुपाख्योऽनुमेयः ··· साग्निः कपोतः KāśiVṛ. *on* vi. 3.80; अग्न्यादयः साक्षादनुपलभ्यमानाः कपोतादिभिरनुमीयमाना अनुपाख्या भवन्ति Prasā. i. 674.12; **Bi** indescribable (due to being indefinable) असदसतः ··· अनुपाख्यादनुपाख्यमवस्तुकादवस्तुकं जायते VākyaPa. 31.3 (*on* 1.8) (comm. शब्दप्रवृत्तिनिबन्धनाभावाद् अनुपाख्यात्); अत्यन्ताभावस्य वन्ध्यासुतस्य मा भून्मर्यादानुपाख्यो हि सः Bhām. 365.4 (*on* ii. 1.18); तस्मादनुपाख्ये विपक्षे हेतोर्व्यतिरेकनिवृत्तौ वा व्यतिरेके वा सहृदयानां मूकतैवोचिता TātpaṬ.(Vā.) 173.1 (*on* i. 1.5); **Bii** indescribable (due to non-existence or unreality) अनुपाख्यस्य हेतुत्वे प्रागपि सत्त्वप्रसक्तौ पुनः सदातनत्वापत्तेः NyāyKuA. i. 10.2; तात्पर्यं च स्वरूपे क्वचिदपि न भवेन्निर्निमित्तेऽनुपाख्ये TattvMu. 4.98.

**अनुपाख्यतनु (anupākhya-tanu)** *adj.* of indiscernible form or nature अनुपाख्यतनुः सोऽयं व्यवहारप्रसिद्धये। आत्मानं व्यभजत् BṛĀraUBhVā. i. 2.163.

**अनुपाख्यता (anupākhya-tā)** *f.* **A** the state of not being

(clearly) discernible or (directly) perceptible (due to non-existence) नाभावो जायते भावो नैति भावोऽनुपाख्यताम् VākyaPa. 3(3).61; व्रजतु सर्वमिदं द्वयवल्गितं स्मृतिपथोपगमेऽप्यनुपाख्यताम् Stotra. 8.7; **B** the state of not being describable (due to being indefinable) अनुपाख्यतां गतम् ।… प्रतिपद्य शंकर भवन्तम् … भवत्यणुः HarVi. 6.168 (comm. अनुपाख्यमनिर्वाच्यम्)

**अनुपाख्यत्व** (anupākhya-tva) *n.* **A** the state of not being (clearly) discernible or (directly) perceptible (due to non-existence) अभावस्यानुपाख्यत्वात् कारणं न प्रसाधकम् VākyaPa. 3(3).62; **BI** the state of being indescribable (due to non-existence or unreality) विनष्टाच्चेत् कारणात् कार्यसंभवः । प्रध्वस्तस्यानुपाख्यत्वान्निष्कारणमिदं भवेत् TattvSaṁ. 488; मृगतृष्णिकोदकादीनामूषरादिभ्योऽनन्यत्वम्, दृष्टनष्टस्वरूपत्वात् स्वरूपेण त्वनुपाख्यत्वात् BrahmSūBh.(Śaṅ.) 309.7 (*on* ii. 1.14); **BII** the state of being indescribable असत्त्वम् … किम् अनुपाख्यत्वम् TarkSaṁ.(Ā.) 11.2.

**अनुपाख्यविधि** (anupākhya-vidhi) *m.* statement or prescription of (being born from) the indescribable (संसारः) अकस्मादेव भवतीति चेन्न — हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च । स्वभाववर्णना नैवमवधेर्नियतत्वतः NyāyKuA. i. 9.3.

**अनुपाख्यात** (an-upākhyāta) *adj.* not (clearly) discerned यथा रत्नपरीक्षिणः परीक्षमाणस्य प्रथमसमधिगमानुपाख्यातमनुपाख्येयरूपप्रत्ययोपाहितसंस्काररूपाहितविशेषायां बुद्धौ … चकास्ति रत्नतत्त्वम् SphoṭSi. 131.2 (comm. प्रथमेन समधिगमेन विज्ञानेनानुपाख्यातमव्यक्तम्)

**अनुपाख्यायमान** (an-upākhyāyamāna) *adj.* not being directly perceptible द्वितीयेऽनुपाख्यायमाने सहस्य स इत्ययमादेशो भवति JaineVyā. 311.27 (*on* iv. 3.188)

**अनुपाख्येय** (an-upākhyeya) *adj.* which cannot be defined or described प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा । ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते VākyaPa. 1.84 (comm. अनुपाख्येयैरनुपाख्येयाकारैः); एकत्वेऽपि तु क्रमशो गतिरनुपाख्येयोपाख्येयाकारप्रत्ययभेदेन पुरस्तात् प्रपञ्चिता SphoṭSi. 238.4; अत्यन्ताभावस्य वन्ध्यासुतस्य मा भून्मर्यादानुपाख्यो (v. l. अनुपाख्येयो NSP. Ed.) हि सः Bhām. 365.4 (*on* ii. 1.18)

**अनुपाख्येयज्ञान** (anupākhyeya-jñāna) *n.* indefinable knowledge प्रयत्नभेदतो भिन्ना ध्वनयोऽस्य प्रकाशकाः । प्रत्येकमनुपाख्येयज्ञानतद्भावनाक्रमात् SphoṭSi. 125.3.

**अनुपाख्येयत्व** (anupākhyeya-tva) *n.* the state of being what cannot be described, indescribability एतच्चानुपाख्येयत्वमभावस्य निराकर्तुमुक्तम् Kāśi iii. 196.23 (*on* 5(8).8)

**अनुपाख्येयरूप** (anupākhyeya-rūpa) *adj.* whose nature cannot be discerned यथा रत्नपरीक्षिणः परीक्षमाणस्य प्रथमसमधिगमानुपाख्यातमनुपाख्येयरूपप्रत्ययोपाहितसंस्काररूपाहितविशेषायां बुद्धौ … चकास्ति रत्नतत्त्वम् SphoṭSi. 131.2.

**अनुपाख्येयाकार** (anupākhyeyākāra) *adj.* whose form cannot be discerned अनुपाख्येयाकारस्फोटोपलब्धिजन्मानश्च संस्कारास्तत्रैव स्फुटतरपरिच्छेदां धियमुत्पादयन्ति SphoṭSi. 133.1.

**अनुपाख्योदाहृति** (anupākhyodāhṛti) *f.* example of the indiscernible (due to non-existence) न ह्यन्यानुपलम्भेषु नास्ति नानुपलम्भनात् । इत्यज्ञज्ञापनायैकानुपाख्योदाहृतिर्मता PramāVār. 4.263.

**अनुपागच्छत्** (an-upāgacchat) *adj.* not attaining (a state) शरीरं त्वचेतनत्वादेव सुखत्वपरिणतेर्निश्चयकारणतामनुपागच्छन्न जातु सुखतामुपढौकते TattvPradī.(A.) 85.4 (*on* 1.65)

**अनुपागत** (an-upāgata) *adj.* **A** not obtained, not arrived at स्वर्गभूतिसमर्थोऽन्यो व्यापारः कोऽनुपागतः BhāvanāVi. 14.2; **B** not attained, not reached त्यक्तभोगादिकलनं विश्रान्तिमनुपागतम् । (प्रह्लादस्य) चेतः केवलमस्यासीद्दोलायामिव योजितम् YogVā. v. 33.14; उत्पन्नरतयः सम्यङ् नैर्विघ्न्यमनुपागताः ।… साधका इति कीर्तिताः BhaktiRaSi. ii. 1.104.

**अनुपाङ्ग** (an-upāṅga) *m.* absence of lubrication यथा च स एवाक्षोऽतिभाराधिष्ठितत्वात् … अनुपाङ्गात् पर्यसनाच्चान्तरावसानमापद्यते CaraS. iii. 3.38 (1941 Ed.) (comm. अनुपाङ्गादिति स्नेहादानात्)

**अनुपाचना** (anu-pācanā) *f.* suitable maturity विपाचनोक्ता परिपाचना तथा प्रपाचना चाप्यनुपाचनापरा ।… देहिषु MaYānaSū. 30.19 (8.13); यथाविनेयधर्मदेशनात्तदनुरूपा पाचना अनुपाचना MaYānaSū. 30.23 (8.13(3))

**अनुपाट** (anu-pāṭa) *m.* ? rending or the like, one of the torments of hell एभिरेते … कर्मपथा अत्यर्थमासेविताः … येन एवंविधानि दुःखान्युत्पाटानुपाटच्छेदनभेदनादीनि प्रत्यनुभवन्ति Divyāva. 186.25 [DBHS.]

**अनुपाटन** (anu-pāṭana) *n.* ? rending or the like, one of the torments of hell तत्र नारका उत्पाटानुपाटनच्छेदनभेदनादीनि दुःखानि प्रत्यनुभवन्ति Divyāva. 187.26; 185.4 [DBHS.]

**अनुपाठ** (anu-pāṭha) *m.* the act of reciting after (the teacher) गुरूक्तस्यानुपाठो वेदानुवचनम् BālaKrī. ii. 68.23 (*on* 3.181 (?191))

**अनुपात** (anu-pāta) *m.* **1A** the act of falling down subsequently (in a crematory) **B** the act of falling within (one or other category), inclusion **C** subsequent sinking **2AI** following or going after **II** pursuit **B** pursuer **3** the act of sending forth **4A** proportion or ratio (of measurement) **B** proportionate calculation (by the rule of three) **C** proportionate showering **5** trimming around the edge (of the border of a monk's robe) **1A** the act of falling down subsequently (in a crematory) चैत्यानुपातरहितं सामान्येन च सर्वगम् । यच्चित्तत्त्वमनाख्येयं स आत्मा परमेश्वरः MahāU. 4.118; 4.121; **1B** the act of falling within (one or other category), inclusion तद्धितस्य … एतस्य लक्षणविकारोभयरूपत्वादन्येष्वप्यर्थेषु प्रतिपदमनुपातेषु तद्धितस्मरणान्नास्त्युदीच्यो नाम य उदीच्यशब्देन निवर्त्येत ManuBh. ii. 93.21 (*on* 8.46); **1C** subsequent sinking, cf. **अनुपातभीरु**; **2AI** following or going after यं च पन्थानमाक्रम्य प्रयाति मनुजेश्वरः । तेनेश्वरप्रयातेन (v. l. तेनेश्वरानुपातेन Gorr. Ed.) पथा याति ध्रुवं जनः Rāmā. vi. App. I. 2 (21); **2AII** pursuit आसन्ने चानुपाते सत्रं वा गृह्णीयात् ArthŚā. ii. 357.6 (7.17); **2B** pursuer गृहीतो वा सामादिभिरनुपातमतिसंदध्यात् । रसविद्धेन वा पथ्यदानेन ArthŚā. ii. 357.8 (7.17); **3** the act of sending forth आनयनप्रेष्यप्रयोगशब्दरूपानुपातपुद्गलक्षेपाः (देशावकाशिकव्रतस्य पञ्चातीचाराः) TattvārthāSū. 7.26 (Ṭīkā अनुपातशब्दः प्रत्येकमभिसंबध्यते); SubhāRaSaṁ. 854; **4A** proportion or ratio (of measurement) द्व्यङ्गुलमानेन प्रोन्नता पृष्ठतो(ऽ)र्केः । ह्रासयेदनुपातेन PauṣkS. 29.27; वेदिकावा(?व)सुधांशा(भ्यां) त्वनुपासे(?ते)न शातयेत् । स्कन्धकण्ठात् समारभ्य त्रयो ग्रीवाः PauṣkS. 29.98; 35.47; 40.103; नीचेऽस्तोऽर्थे हसति हि ततश्चान्तरस्थेऽनुपातः Bṛhajjā. 7.2; अनुपातोऽन्तरसंस्थे कर्तव्यो वृष्टियुक्तार्थम् PañcSi. 11.6; अशुभशुभैः संदृष्टे वर्षच्चतुष्केण निर्दिशेदन्तम् । अनुपातः कर्तव्यः प्रोक्तादूनैर्ग्रहैर्दृष्टे Sārā. 10.22; इष्टच्छायावृत्तं तदग्रयोर्यदुदयास्तमयसूत्रम् । अनुपातात्तच्छङ्कोर्विषुवच्छायान्तरमिहाग्रा BrāhmSphuSi. 3.59; कर्णावलम्बकयुतौ खण्डे कर्णावलम्बयोरधरे । अनुपातेन तदूने ऊर्ध्वे सूच्यां सपादायाम् BrāhmSphuSi. 12.32; 19.16; यावत्कण्ठबिलं द्विज । ह्रासयेदनुपातेन तन्नालम् PāraS. 16.60; अन्ये पातोच्चाद्याः कलिमुखवर्षौघतोऽनुपातात् स्युः ĀryaSi. 1.51(37); 14.4(130); 15.116 (181); क्रमेणानेन मानानि लुमानां वृद्धिह्रासयोः । अनुपातेन कार्याणि च्छाद्यक्षेत्रानुसारतः SamarāSū. 54.83; कस्मिंश्चित् पुरेऽक्षांशान् ज्ञात्वा तस्मात् पुरादुत्तरोऽन्यस्मिन् पुरे ज्ञेयाः । ततस्तेषामन्तरांशैः पुरान्तरयोजनैश्चानुपातः Golā. 182.23 (21.14); अतोऽन्तराले त्वनुपातमायुरारस्य वक्रे द्विगुणीकृतं स्यात् JātaPā. 10.46; 5.7; अतो यदनुपातादेकसावनान्तर्गतनाक्षत्रं तत्तु केवलगतिकालाधिकचक्रकलातुल्यासुरूपनवास्तवम् SiddhāTaVi. 17.4; तेषामनुपातेनानयनम् SiddhāTaVi. 18.11; तच्चान्तरं परमं त्रिज्यामितान्यतरज्यासत्त्वे दृष्टमिष्टान्तरसाधनार्थमनुपातः SiddhāTaVi. 70.7; 106.20; 181.8; 182.20; 270.14; 308.1; 369.6; अनुपातात् षडङ्गुलव्यासार्धान्तरे आद्य उपपन्नः SiddhāTaVi.(ŚeṣaVā.) 37.8; 37.11; **4B** proportionate calculation (by the rule of three) होरादायः …। वर्षाणि संप्रयच्छत्यनुपाताच्चांशकादिफलम् LaJāta. 7(2); इष्टघटिकाभिरुदयैरनुपाताद् वर्धितो रविर्लग्नम् KhaṇḍKhā. 3.5 (comm. स्वघटिकाः … ताभिः … त्रैराशिकेन आगतेन वर्धितो रविः स एव लग्नं भवति); साहस्रादिषु होमेषु द्विचतुर्वसुहस्तकम् । तस्यानुपाताद्दोष्ठादि विहिते(?तै)केव मेखला MṛgendraT. ii. 6.44 (comm. ओष्ठस्यानुपाते त्रैराशिकविधिः कार्यः); तुल्यापच्छेदघनान्त्यार्धाभ्यां विक्रयक्रयार्घौ प्राग्वत् । छेदच्छेदकृतिघ्नावनुपातात् समधनानि भिन्नेऽन्त्यार्धे GaṇiSāSaṁ. 5.107½; **4C** proportionate showering (कुम्भे) शुष्के जलेऽनावृष्टिः । मध्येऽनुपातः AdbhuSāg. 715.12; **5** trimming around the edge (of the border of a monk's robe) तेनोभयपार्श्वयोः पत्रमुखानि दत्तानि । तथाप्यनुपातं विना न शोभते इत्यनुपातो दत्तः GiMs. iii(2). 51.2 [DBHS.]

**अनुपातक** (anu-pātaka) *n.* minor offence or sin न स्मराम्यनृतं किंचिन्न स्मराम्यनुपाकृतम् (v. l. अनुपातकम्) MahāBhā. iii. 71.13; कामक्रोधलोभाख्यं रिपुत्रयम् … तेनायमाक्रान्तोऽतिपातकमहापातकानुपातकोपपातकेषु प्रवर्तते ViṣṇuSm. 33.3; यः प्रातर्देवदेवेशम् … पश्येत्सः … विमुच्यते । … पापैश्चैवानुपातकैः LiṅgaP. i. 77.62; महापातकमतिपातकमनुपातकमुपपातकं प्रकीर्णकमिति पञ्चविधं पापजातमुक्तम् Mitā. 497.24 (*on* 3.290); तदेवं कामक्रोधलोभाक्रान्तम् इत्यनुवृत्तौ … अतिपातकानुपातकोपपातकेषु (समुच्चयः) VīraMi. 932.4 (*on* 3.242)

**अनुपातकत्व** (anupātaka-tva) *n.* the state of being a minor offence or sin (स्त्रिया वधः … ब्राह्मण्या अप्यात्रेयीव्यतिरेकेण) अपिना अब्राह्मणीसमुच्चयः । आत्रेयी रजस्वला गर्भिणी अत्रिगोत्रोत्पन्ना चेति त्रिविधात्रेयीत्यर्थः । इदमुप-

लक्षणम्। अग्निहोत्रिणी सवनस्था च या तद्भिन्नापीति मदनः तत्रानुपातकत्वात् BālamBha. iii. 129.18 (*on* 3.236)

**अनुपातकप्रायश्चित्त** (anupātaka-prāyaścitta) *n.* expiation for (committing) minor offence or sin ब्रह्मचारिप्रायश्चित्तप्रसङ्गादन्यदप्यनुपातकप्रायश्चित्तमाह Mitā. 477.7 (*on* 3.281); 481.29 (*on* 3.287)

**अनुपातकिन्** (anupātak-in) *adj.* committing minor offence or sin अनुपातकिनस्त्वेते महापातकिनो यथा। अश्वमेधेन शुध्यन्ति ViṣṇuSm. 36.8; 43.25; 44.4; पातकी अनुपातकी BālamBha. iii. 156.11 (*on* 3.261)

**अनुपातक्यादिपरिग्रह** (anupātakyādi-parigraha) *m.* inclusion of one committing minor offence and others (महापातकिग्रहणमितरेषामप्युपपातक्यादीनामुपलक्षणम्) आदिनानुपातक्यादिपरिग्रहः BālamBha. iii. 116.16 (*on* 3.206)

**अनुपातज** (anupāta-ja) *adj.* obtained or derived through proportionate calculation त एव सूर्यसावनद्युपिण्डतोऽनुपातजाः। तथा तथा युतोनिता भवन्ति तेऽथवा ग्रहाः GrahaGa. 19.31 (3.11); कक्षागतं ग्रहान्तरं परमं ततश्चन्द्रशरकोट्यन्तरेणानुपातजम् SiddhāTaVi. (ŚeṣaVā.) 29.8; 42.11.

**अनुपातजात** (anupāta-jāta) *adj.* obtained or derived through proportionate calculation (by the rule of three) दूरसमीपत्वात् सोऽनुपातजातोऽन्यथा भवति दृष्टः (मध्यग्रहः) ĀryaSi. 17.60 (222)

**अनुपाततस्** (anupāta-tas) *adv.* **A** proportionately, through proportionate calculation (by the rule of three) भागनवत्या राहोश्चन्द्रोऽन्तरितोऽतिमहति विक्षेपे। लिप्ताशतद्वयाधिकसप्ततिरनुपाततोऽन्यत्र PañcSi. 3.69 (3.31); स्वोच्चादर्धं नीचे तदन्तरस्थेऽनुपातः कल्प्यम् HorāSā. 7.5; लग्नदार्योऽशतुल्यः स्यादन्तरे चानुपाततः Sārā. 39.17; आद्यन्तयोः फलं युक्त्या गुणयोश्चानुपाततः। उत्क्रमज्या क्रमे ग्राह्या क्रमज्या चोत्क्रमस्थिते MaBhāsk. 4.17; व्यत्ययो दक्षिणे भानावन्येषामनुपाततः MaBhāsk. 4.27; शङ्कोर्द्वादशसंख्यस्य छाया ज्ञेयानुपाततः LaBhāska. 3.28; अविकोनकलाकालविज्ञानं चानुपाततः LaBhāska. 8.5; इष्टग्रहसावनदिननिचयाद् द्युगणोऽनुपाततः साध्यः ĀryaSi. 17.38(218); एषामथैकस्य तु बाहुकोटीकर्णैर्मिथोऽन्यान्यनुपाततः स्युः GrahaGa. 73.24 (9.18); प्रत्यहं शरलिप्ताभिर्वर्धते सानुपाततः TājiNī. 2(2).2(193) (comm. त्रैराशिकतः); तस्मान्न्यूनाधिकस्तारगृहे नीलप्रलम्बनेऽथोह्य। पुतद्वदत्तरकूटादीनां घने चानुपाततः कार्यम् (?) ŚilpaRa. i. 33.5; ऋतवः खाब्धयः। सौरे शैघ्रान्त्यफलजज्यका। भांशत्रिज्याप्रमाणेन परिधेरनुपाततः SiddhāTaVi. 109.3; **B** by proportionate measurement or ratio ततः कण्ठबिलाच्चैव ह्रासयेदनुपाततः। पादपीठम् PāraS. 16.61.

**अनुपातदक्ष** (anupāta-dakṣa) *adj.* expert in (the act of) following उपवनपवनानुपातदक्षैरलिभिरलाभि यदङ्गनाजनस्य। परिमलविषयः ŚiśuVa. 7.27 (comm. अनुपातेनानुसारेण दक्षैर्विचक्षणैः)

**अनुपातभय** (anupāta-bhaya) *n.* fear of pursuit or of pursuing party अन्यद्वा शरीरं निक्षिप्य स्वगृहमादीपयेदनुपातभयात् ArthŚā. ii. 356.6 (7.17)

**अनुपातभव** (anupāta-bhava) *adj.* originating, i.e. derived through the proportionate calculation (by the rule of three) अनुपातभवाः खचरा मृदुचलफलयोरभावकाले तु। निजनिजकक्षावृत्ते लङ्काशिरसि भ्रमन्त्येव ĀryaSi. 17.59(222)

**अनुपातभीरु** (anupāta-bhīru) *adj.* who is afraid of going down (i.e. sinking) subsequently पुंस्त्वप्रमाणीकरणाय पुंसा कार्यः प्रयत्नो विधुरेऽपि दैवे। मज्जन्समुद्रेऽप्यनुपातभीरुर्धीरः क्षिपत्येव हि पाणिपादम् Subhāṣi. 2914.

**अनुपातम्** (anupātam) *absolutive* **A** bending successively लतानुपातं कुसुमान्यगृह्णात् सः Bhaṭṭi. 2.11 (comm. लतां लतामनुपत्यासाद्य तथा लतामनुपत्यानुपत्य); **B** going towards successively, Bhaṭṭi. 2.11 [APTE]; तत्सार्थपथिकास्तस्थुरनुपातं तरुं तरुम्। प्रपां प्रपां प्रवेशं च पायं पायं पयोऽलुठन् TriṣaŚaPuC. i. 1.82.

**अनुपातयुक्ति** (anupāta-yukti) *f.* rule of proportionate calculation (by the rule of three) पुरान्तरं चेदिदमुत्तरं स्यात् तदक्षविश्लेषलवैस्तदा किम्। चक्रांशकैरित्यनुपातयुक्त्या युक्तं निरुक्तं परिधेः प्रमाणम् Golā. 182.19 (21.14)

**अनुपातयोग्यत्व** (anupātayogya-tva) *n.* the state of being fit for proportionate measurement अत्र तत्कोटिसूत्रेऽस्य कर्णसूत्रं तत्कर्णसूत्रे चास्य कोटिसूत्रमित्यनुपातयोग्यत्वं तयोः कथमिति नाशङ्कनीयम् SiddhāTaVi. 306.22.

**अनुपातलब्ध** (anupāta-labdha) *adj.* obtained through proportionate calculation (by the rule of three) तामिष्टपलभां मत्वा तत्साधितपलकर्णे इष्टपलभाभुजस्तदा त्रिज्याकर्णे क इत्यनुपातलब्धेष्टाक्षज्यायाश्चापमिष्टाक्षांशाः SiddhāTaVi.(ŚeṣaVā.) 39.14.

**अनुपातवर्धित** (anupāta-vardhita) *adj.* increased proportionately (by the rule of three) इष्टघटिकाभिरुदयैरनुपाताद् वर्धितो रविर्लग्नम्। अनुपातवर्धितेऽर्के लग्नसमे स्वोदयैर्घटिकाः KhaṇḍKhā. 3.5 (comm. अनुपातेन त्रैराशिकेनार्को लग्नसमः करणीयः)

**अनुपातवश** (anupāta-vaśa) *m.* [Abl.] in accordance with the proportion आ अग्रात् स्वधिया त्वीषदूर्ध्वान्तं कमलोद्भव। अनुपातवशान्मध्यं क्षामं क्षेत्रं विधीयते PauṣkS. 34.33.

**अनुपातव्य** (anu-pātavya) *adj.* which should be drunk along with लोहादष्टगुणं क्षीरं धारोष्णं शृतमेव वा। वयस्तम्भेऽनुपातव्यम् RasRaSa. 28.68; तृतीयादनुपातव्यं सुधातुल्यं रसायनम् BhāvPra.(Bhā.) 5.193.

**अनुपातसिद्धाहर्गण** (anupātasiddhāhargaṇa) *m.* group of days obtained or derived proportionately (by the rule of three) अत्रानुपातस्य नियतैकविषयत्वात् प्रकृतेऽनुपातसिद्धाहर्गणो मध्यमसावनमानैः सिद्ध इत्यवास्तव एव ज्ञेयः SiddhāTaVi. 17.17.

**अनुपातागत** (anupātāgata) *adj.* arrived at proportionately (by the rule of three) एकोदयकाले अनुपातागतः सावनो नाक्षत्रश्चास्ति (अहः) SiddhāTaVi.(ŚeṣaVā.) 3.4.

**अनुपाताप्त** (anupātāpta) *adj.* obtained through proportion (by the rule of three) शोध्या देयाश्च …। राशयः कालतत्त्वज्ञैरनुपाताप्तमेव च। मध्यलग्नमिदं स्पष्टं श्रीमद्भट्टमुखोदितम् MaBhāsk. 5.11; स्फुटभुक्त्यानुपाताप्तफलेनासन्नयोगिनाम्। ग्रहाणां शुद्धिकल्पाभ्यां कुर्यात्समकलावुभौ LaBhāska. 7.5.

**अनुपातार्थम्** (anupātārtham) *adv.* for the sake of (proper) proportion तद्विस्तारं द्विधा कृत्वा पञ्चधा वा समैः पदैः।… अग्रतश्चानुपातार्थं विभज्यैव यथेच्छया।… पार्श्वाभ्यामन्तरं बाह्यात् शेषं कण्ठात्मना नयेत् PauṣkS. 29.94; उद्वृत्तशङ्कुस्तु न याम्यगोले दृश्योऽनुपातार्थमयं प्रसाध्यः GrahaGa. 90.14 (9.64)

**अनुपातार्ह** (anupātārha) *adj.* fit for proportionate calculation रीत्यानया सजातीयं सिद्धमप्यत्र तद्यदा। लघुसंज्ञं बृहज्जात्ये … कृतम्। तथापि तत्सजातीयमनुपातार्हमत्र वै SiddhāTaVi. 61.8.

**अनुपातित** (anu-pātita) *adj.* caused to fall simultaneously (कैकेयि) पतन्त्या निरये कस्मादहमप्यनुपातितः Rāmā. ii. 1741*(4)

**अनुपातिन्** (anu-pātin) *adj.* [*f.* -ī] **1A** leading to, resulting in **Bi** following immediately after **ii** following, persuing **iii** following closely **C** coinciding or compatible with **2A** falling in (line with), i.e. conforming to **B** (action) befalling or relating to **C** (physically) falling or alighting upon **1A** leading to, resulting in द्यूतं मूलं कलहस्यानुपाति मिथोभेदाय महते वा रणाय MahāBhā. ii. 56.1; दृश्यत्वाभिमतं कर्म न वस्तुव्यतिरेकि च। दृश्यते सो पि (? सापि) नैवास्य सत्ता युक्त्यनुपातिनी TattvSaṁ. 705; **1Bi** following immediately after स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः। ग्रहणोपाधिभेदेन वृत्तिभेदं प्रचक्षते VākyaPa. 1.75; **1Bii** following, persuing मदनुपातिनामेष पन्था दृश्यते DaśKuC. 142.18; **1Biii** following closely महीपतिः।… आनाययच्च दुहितुर्मन्दिरात्तं विदूषकम्। दत्तानुयात्रं मनसा तस्याः स्नेहानुपातिना KathāSaSāg. iii. 4.197; नृपः। तयोर्निर्वर्तयामास स स्नेहादौर्ध्वदेहिकम्।… ततो निर्गत्य नगरात्प्रकृतीरनुयायिनीः (v.l. अनुपातिनीः BROCKHAUS Ed.)। निवर्त्य जातवैराग्यः शिश्रिये तपसे वनम् KathāSaSāg. xii. 6.410; **1C** coinciding or compatible with यद् गेयपदं नाभिकादिकमन्यतरबन्धेन बद्धं यत्र स्वरे अनुपाति भवति तत्तत्रैव यत्र गीते गीयते SthānṬ. 396B.11.; **2A** falling in (line with), i.e. conforming to कालभेददर्शनाभ्यासेन मूर्तिविभागभावनया च व्यवहारानुपातिभिर्धर्माधर्मैः सर्वास्ववस्थास्वनाश्रितादिनिधनं ब्रह्म VākyaPa.(Vṛtti.) 3.1; दृश्यमानेभ्यो दृश्यमानप्रकारानुपातिभ्यः (शब्देभ्यः) अभिधेयप्रत्यय उपपद्यमानो नैवाज्ञातावयवमत्यन्ताननुभूतं पदतत्त्वमुपकल्पयति TattvBi. 73.2; एते गुणाः … तुल्यजातीयातुल्यजातीयशक्तिभेदानुपातिनः … भवन्ति YogBh. 82.7 (*on* 2.18); **2B** (action) befalling or relating to सङ्घैकदेशे प्रक्रान्तान्यथा सङ्घानुपातिनः। क्रियाविशेषान्मन्यन्ते स द्वन्द्वावयवे क्रमः VākyaPa. 2.227; **2C** (physically) falling or alighting upon पद्मध्वजेषु पद्मानि …। अधः प्रतिमया तानि सङ्क्रान्तानि महीतले। भ्रमरान् मोहयन्ति स्म पद्मबुद्ध्यानुपातिनः MahāP. 22.226.

**अनुपात्त** (an-upātta) *adj.* [*f.* -ā] [P. vi. 3.124; vii. 4.4] **1** not seized upon **2Ai** (Buddh.) not accepted, not grasped **ii** not occurred **iii** not accepted, not admitted **iv** not acquired, not obtained **v** not taken (for one's use) **Bi** not mentioned, not specified, not stated, not referred to **ii** not enjoined or prescribed **C** not connected **1** not seized upon यत्र वैद्युतः शरणमभिहन्ति यावदनुपात्तो भवति मध्यमधर्मैव तावद् भवत्युदकेन्धनः शरीरोपशमनः Nir. 7.23 (144.1); **2Ai** (Buddh.) not accepted, not grasped सर्वधर्मा इति महामते यदुत कुशलाकुशलाः … उपात्तानुपात्ताः LaṅkāSū. 6.8(6)

(95.20); सप्त सालम्बनाश्चित्तधातवः अर्धं च धर्मतः। नवानुपात्ताः ते चाष्टौ शब्दश्च AbhidhK. 1.34; अतीतानागता अनुपात्ताः AbhidhKoBh. 23.13 (*on* 1.34); **2Aii** not occurred न चास्माभिरनुपात्तान् दोषान् सूरयो ग्रहीतुमर्हन्ति Kāśi. i. 2.27 (*on* 0.5); **2Aiii** not accepted, not admitted बृहस्पतिसवे पुनर्या ऋचश्चोदकेनाङ्गीकृताः, तासामवयवे चतुर्विंशतिसंख्या निर्दिष्टा। तस्मिन्नुपादीयमान ऋग्गुणत्वमनुपात्तं भवति प्रकृतिगायत्रीषु तूपात्तं भवति ŚābaBh. 1623.24 (*on* viii. 3.28); सत्यपि भूतत्वेऽनुपात्तानां (शरीरकार्याणाम्) न रूपादय इवोपलभ्यन्ते Bṛha. 211.1 (*on* i. 1.5) (comm. शरीरत्वेनास्वीकृतानाम्); अनुपात्तं हि हृदयताडनमपि कुर्वद्भिर्न लभ्यत एव Kād. 334.11; यत्परं वेदवाक्यं तत्तेनोपात्तं विवक्षितम्, अतत्परेण चानुपात्तमविवक्षितमित्यर्थः Bhām. 165.7 (*on* i. 2.2); वयसां वा एष प्रतिमया चीयते इत्यनुपात्ते हि विशेषे सामान्यस्य ··· वयस्त्वं सामान्यं नित्यमुपात्तम् SaṅkarKāBh. 76.3 (*on* ii. 1.78); उपात्तमनुपात्तं वानुगमय्य नियम्यस्य पाक्षिकत्वोक्तौ नियम्य प्रतिद्वन्द्विनामेव पाक्षिकत्ववन्नियमविधावव्याप्तेः VidhiRa. 17 (109.1); YuktiSneha. 60.22 (*on* i. 1.5); **2Aiv** not acquired, not obtained स्वरूपस्यानिमित्तत्वात् सनिमित्ता हि चापरे। अनुपात्तं स्वरूपं हि स्वेनात्यक्तं तथैव च UpadeSā. 285.41; अनुपात्तस्य उपादानं योगः GītāBh.(Śaṅ.) 53.6 (*on* 2.45); TaiUBh. 293.3 (*on* 3.10); स्वकर्मणानुपात्तस्य न च भोगोऽत्र दृश्यते BṛĀraUBhVā. i. 5.6 (comm. स्वकर्मानार्जितस्य); पुरुषेणानुपात्ते मा भूत्तत्त्वापरिसमाप्तिः TātpaṬ.(Vā.) 32.6 (*on* i. 1.1); वाजिनयागे ··· यथा च तुषोपवापे कपालोपादानं पुरोडाशप्रयुक्तम्। तत्र तदलाभेऽनुत्पन्ने नानुपात्तेन च क्रियानुष्ठानासंभवात् TantrRa. 86.3; **2Av** not taken (for one's use), cf. **अनुपात्तप्रसवद्रुमावृत**; **2Bi** not mentioned, not specified, not stated, not referred to यच्चानुपात्तं शब्देन तत्कस्मिंश्चित्प्रतीयते। क्वचित्प्रधानमेवार्थो भवत्यन्यस्य लक्षणम् VākyaPa. 2.307; प्रमाणमेव ह्रस्वादावनुपात्तं प्रतीयते VākyaPa. 2.309; एकप्रयोगवत् तेन कर्तृतैव प्रसज्यते। पचिना चानुपात्तेषु ज्वलनादिष्वसङ्गतिः ŚlokaVār. 7.68 (865.2); क्रियाफलसंबन्धप्रतिपत्तिमात्रचरितार्थासु चोदनास्वनुपात्ते कालान्तरे कर्मस्वभावादानन्तर्ये गम्यमाने कुत एतत्कालान्तरभावि फलम् TantrVā. 363.6 (*on* ii. 1.5); भाष्योपात्तमतो ब्रूमो नानुपात्तं कथंचन BṛĀraUBhVā. iii. 2.46; सत्यमभिमतं विशेषणं भवतोऽपि। तत् त्वनुपात्तं न लभ्यते Kāśi. i. 207.25 (*on* 4.12); i. 8.25 (*on* 1.23); दृश्यमानविशेषणमेकदेशदर्शनादितिवदनुपात्तमिति चेद् न Kāśi. iii. 137.5 (*on* 5(6).2); विस्मयवशं जगामेत्यनेनानुपात्ता अपि सर्वे संचारिणोऽनुभावाश्च गृह्यन्ते SaraKaṇṭhā. 580.10; अनुपात्तानां पुरुषैकदेशिसमुदायानां बहुव्रीह्यर्थत्वमयुक्तम् NyāyRa. 346.19 (*on* 5(4).3); 812.11 (*on* 6.324); 928.17 (*on* 7.296); अनुपात्तानि चात्र द्रव्याणि कथं तैर्गुणः संबध्येत ŚāstrDī. 191.4 (*on* iii. 1.6); VaiyāBhū. 179.19 (*on* 33); न चेह लक्षणक्रियोपात्ता तामनुपात्तामपेक्ष्यायं संबन्धः प्रत्येतव्य इति विप्रकृष्यते ŚāstrDī. 215.17 (*on* iii. 2.5); क्वचिदनुपात्तमपि द्वयं सामर्थ्याद् गम्यते Kāvyānu.(He.) 209.1; (स्तनयोः) उत्प्रेक्षानिमित्तमनुपात्तम् AlaṅkāRa. 32(42); 'वस्त्वस्ति किम्', 'मही घटत्वम्' इति श्लोकद्वयं जगदुपलब्धिप्रकारेण वस्तुभेदासत्यत्वोपपादकत्वेन उपपाद्यप्रमेयाधिक्याभावादत्रानुपात्तम् ŚrutaPra. iA. 81.28 (*on* i. 1.1); तस्मिन्प्रकरणे अनुपात्तानाम् 'चार्थे द्वन्द्वः' इत्येव समाहारेतरेतरयोगयोर्द्वन्द्वसिद्धिः, किं ज्ञापकोपन्यासेन PadMañ. *on* KāśiVṛ. *on* P. i. 2.63; पूर्वं शब्दतोऽनुपात्ते नैकवचनपरामृश्यता VedāntKa. 158.13 (*on* i. 3.14); साध्येऽनुपात्ते साधनत्वेन निर्देशो नान्वयं पुष्णाति PrataYaBhū. 384.9; हेतुशब्दोऽत्रानुपात्त इति चेन्न, तस्य फलितत्वात् NyāySiA. 231.13; क्वचिदनुपात्तयोर्द्वयोरपि सामर्थ्यादवगमः SāhiDa. 394.1; यथा राज्ञः पुरुष इति प्रातिपदिकेनानुपात्ते स्वस्वामिसंबन्धे तस्याभिधानार्थं षष्ठ्यपेक्ष्यते तथात्रापि पुंस्त्वादीनामभिधानार्थं षष्ठी स्यात् Prasā. i. 380.18; ŚivārkaMaDī. i. 380.12 (*on* i. 2.22); पदान्तरेणानुपात्ते हि द्रव्ये गुणवचनानां द्रव्यपर्यन्तत्वम् PūrvottaVāNaMā. 126.5; अनुपात्तः प्रतीयमानो धर्मः RasGaṅ. 324.17; 376.19; पञ्चमस्यापराजितापुष्पं करवीरकुसुमं वेति। एतन्मिश्रणं तु सूत्रकारेण अनुपात्तम् NityoNi. 63.2; असति यत्ने उदात्तादिशब्दैरनुपात्तो गुणोऽविवक्षितः LaŚabdeŚe. i. 290.6; **2Bii** not enjoined or prescribed, cf. **अनुपात्तरूप**; **2C** not connected शुद्धात्मतत्त्वोपलम्भसंभावनरसिकस्य पुंसः शेषोऽन्योऽनुपात्तः परिग्रहो वराकः किं नाम स्यात् TattvPradī.(A.) 301.8 (*on* 3.24)

**अनुपात्तकर्तृविशेष** (anupātta-kartṛviśeṣa) *adj.* whose specific agent is not mentioned नन्वेवं सत्यनुपात्तकर्तृविशेषेषु सामान्यधर्मेषु शूद्रस्याधिकारप्रसङ्गः ManuBh. i. 76.27 (*on* 2.16)

**अनुपात्तकुत्स** (anupātta-kutsa) *adj.* (word) which has not referred to contempt विशेषणत्वे त्वङ्गीकृतकुत्सात्प्रत्ययः, न त्वनुपात्तकुत्सात्, कुत्सितसमानाधिकरणात् PadMañ. *on* KāśiVṛ. *on* P. v. 3.74.

**अनुपात्तक्रियाविधि** (anupāttakriyā-vidhi) *m.* injunction concerning the unmentioned action न तावद्धननादिस्तस्य रागप्राप्तेः। अनुपात्तक्रियाविधौ च लक्षणाप्रसङ्गात् VedāntKa. 89.13 (*on* i. 1.4)

**अनुपात्तगुणक्रियात्मक** (anupāttaguṇakriyātma-ka) *adj.* of the nature of unmentioned quality and action अनिगीर्णविषया चेयमुपात्तानुपात्तगुणक्रियात्मकनिमित्ता ··· जात्युत्प्रेक्षा RasGaṅ. 378.4.

**अनुपात्तजातिपरिमाणविशेष** (anupātta-jātiparimāṇaviśeṣa) *m.* particular kind and quantity (of wealth) which is not specified विप्रेभ्यः ··· अष्टोत्तरशतसंख्यं धनं दापयेत् ··· अनुपात्तजातिपरिमाणविशेषेऽपि धनशब्देन सर्वत्र बहुशो निष्काणां प्रक्रान्तत्वात् तैरेव अष्टोत्तरशतं संपूरणीयम् CaturCin. i. 781.2.

**अनुपात्तजातिविशेष** (anupātta-jātiviśeṣa) *adj.* which does not specify any particular caste मनुष्याः···पुरुषधर्मैश्चाधिक्रियन्ते अनुपात्तजातिविशेषैः ManuBh. ii. 332.15 (*on* 10.5)

**अनुपात्तता** (anupātta-tā) *f.* the state of not being mentioned मृतस्य जीवतां चानुपात्ततया कथमयं (अधिकारस्य) विचारः MayūMāli. 670.2 (*on* x. 2.17)

**अनुपात्तत्व** (anupātta-tva) *n.* **1** the state of not being enjoined अनस्थिभिरिडां वर्धयन्तीत्यनुपात्तत्वादप्राप्तो वनिष्ठुर्विधीयते ŚābaBh. 2031.12 (*on* x. 7.17); न हीष्टिपशुदर्विहोमापेक्षया सोमस्य दीर्घत्वं युक्तं विजातीयत्वादनुपात्तत्वाच्च TantrVā. 893.3 (*on* iii. 3.25); कपालेषु श्रपयतीत्यत्र चित्रेष्टिव्रीहिनियमयोरुभयोरपि विध्यनुपात्तत्वम् VidhiRa. 24 (129.6); **2A** the state of not being mentioned or stated न चालसवलितैरित्यादिवद् व्यापारभेदाद्बहुत्वम् व्यापाराणामनुपात्तत्वात् KāvyPra. 321.6; सद्विद्याद्वारेणेदृशकारणवाक्यानां विषयत्वम् ···। दीपसारयोश्च तेषामनुपात्तत्वात् ŚrutaPra. iB. 173.28 (*on* i. 1.5); खड्गो यथोरगपतिरित्यादौ क्रूरत्वादेर्धर्मस्यानुपात्तत्वादियं लुप्ता (उपमा) Ekāva. 8.2(65) (201.10); एकदेशपदोपादानात्संनिहित एव सर्वनामार्थो भवतीति बहुव्रीह्युत्पत्तिः। एतदप्यनुपपन्नम् — एकदेशस्याप्यनुपात्तत्वेनासंनिधानात् YuktiSneha. 60.14 (*on* i. 1.5); णमुला तावत् कर्तुरनुपात्तत्वात् MīmāKau. ii. 191.15 (*on* iii. 1.19); ii. 241.18 (*on* iii. 2.11); यजमानस्यात्रानुपात्तत्वेन तद्गतत्वेन संख्याबुद्धिर्न संभवति MayūMāli. 516.13 (*on* vi. 7.13); 801.5 (*on* xi. 1.7); भूगृहषोडशारयोर्मध्यपरत्वेनान्तरालपदं प्राञ्चो व्याख्यन्। तन्मन्दम्। षोडशारस्यानुपात्तत्वात् SetuBa. 334.29; **2B** the state of not being obtained or grasped प्रत्यक्षेणानुपात्तत्वान्न स्मृतिस्तदितीक्षणम् BṛĀraUBhVā. i. 6.67.

**अनुपात्तदुरित** (anupātta-durita) *n.* sin which is not mentioned अत्र च पक्षे 'विहितस्याननुष्ठानान्नरः पतनमृच्छति' इतिवाक्येऽनुपात्तदुरितस्याविनाश एव पातकोदयत्वेन कथंचिल्लक्ष्यते Aparā. 1037.23 (*on* 3.219)

**अनुपात्तदेवता** (anupātta-devatā) *adj.* (*f.*) in which the deity is not mentioned अनुपात्तदेवता यत्र ··· तत्र तत्संयोगे अनुपात्तदेवताकतया विनैव देवतया कर्म कर्तव्यम् उत केनचित्प्रकारेण देवताङ्गीकर्तव्या SaṅkarKāBh. 102.17 (*on* ii. 4.3)

**अनुपात्तदेवताकता** (anupāttadevatāka-tā) *f.* the state of being that in which the deity is not mentioned अनुपात्तदेवता यत्र···तत्र तत्संयोगे अनुपात्तदेवताकतया विनैव देवतया कर्म कर्तव्यम् उत केनचित्प्रकारेण देवताङ्गीकर्तव्या SaṅkarKāBh. 102.19 (*on* ii. 4.3)

**अनुपात्तद्रव्यविशेष** (anupātta-dravyaviśeṣa) *adj.* wherein particular material is not specified सोमलतापि ··· न संबध्यते। कथं पुनरनुपात्तद्रव्यविशेषेष्वैन्द्रवायवादिविधिषु रसस्य श्रौतत्वम् TantrVā. 509.7 (*on* ii. 2.17); द्रव्यं चात्राज्यमेवानुपात्तद्रव्यविशेषेषु सर्वहोमेषु श्रूयते ManuBh. i. 382.5 (*on* 4.150)

**अनुपात्तधर्म** (anupātta-dharma) *m.* property which is not mentioned (खलफणिनोः) स्वभावसिद्धत्वेनानुपात्तधर्मेणौपम्यस्य गम्यत्वाच्चेति चेत्, मैवम् RasGaṅ. 450.2; भाष्याब्धिरित्यादौ ··· यत्तु अनुपात्तधर्मेण साम्यविवक्षणादनेन समास इति, तन्न LaŚabdeŚe. ii. 39.4.

**अनुपात्तधर्मिगत** (anupāttadharmi-gata) *adj.* present in the substratum which is not mentioned उपात्तधर्मिगतफले लभ्ये हि नानुपात्तधर्मिगतं फलं ग्राह्यम् ŚivārkaMaDī. i. 380.13 (*on* i. 2.22)

**अनुपात्तनखविदलन** (anupātta-nakhavidalana) *n.* removal (of husk) by means of nails which is not mentioned अत एवावहननविधेः ··· तदयोगव्यवच्छेद एव फलं न त्वनुपात्तनखविदलननिवृत्तिरूपस्तदयोगव्यवच्छेदः ŚivārkaMaDī. i. 380.14 (*on* i. 2.22)

**अनुपात्तनिमित्त** (anupātta-nimitta) *n.* cause which is not mentioned विद्यानाथेन पुनर्द्रव्यस्य हेतुफलोत्प्रेक्षणमभ्यङ्गीकृत्यानुपात्तनिमित्तेषु गम्यस्य निमित्तस्य ··· विभागो दर्शितः CitraMī. 84.20.

**अनुपात्तनिमित्ता** (anupātta-nimittā) *adj.* (*f.*) whose cause is not mentioned वाच्यायां स्वरूपोत्प्रेक्षा चतुर्विंशतिभेदा, अनुपात्तनिमित्तायां गुणक्रियारूपभेदगणनाभावेन भेदाष्टकह्रासात् CitraMī. 84.23; (क्रियास्वरूपोत्प्रेक्षा) प्रथमे मते धवलीकारकत्वरूपनिमित्तानुपादानादनुपात्तनिमित्ता RasGaṅ. 381.10.

**अनुपात्तपुरुषव्यापार** (anupātta-puruṣavyāpāra) *adj.* in which the activity of the (human) agent is not mentioned न चैवमादीनामनुपात्तपुरुषव्यापाराणामननुमिते यागे वाक्यान्तरापेक्षास्ति TantrVā. 537.23 (*on* ii. 2.23)

**अनुपात्तप्रमाण** (anupātta-pramāṇa) *adj.* which has not obtained (the support of) valid means of cognition वस्तुवृत्तं न पर्याप्तं तदज्ञानापनुत्तये । अनुपात्तप्रमाणं सदित्यर्थप्रतिपत्तये BṛĀraUBhVā. i. 4.484.

**अनुपात्तप्रयोज्यव्यापारत्व** (anupāttaprayojyavyāpāra-tva) *n.* the state of being the unmentioned action of the prompted person प्रयोजकव्यापारो हि प्रतीयमानस्तद्गोचरः स्यात् । स चानुपात्तप्रयोज्यव्यापारत्वान्न प्रतीयते TantrVā. 62.4 (*on* i. 2.43)

**अनुपात्तप्रसवद्रुमावृत** (anupāttaprasavadrumāvṛta) *adj.* surrounded by the trees whose flowers have not been taken (for one's use), i.e. plucked अविलूनसमित्कुशं चिरादनुपात्तप्रसवद्रुमावृतम् । अपधूममिदं तपोवनं मुनिना केन मुने समुज्झितम् Rāgh. 3.69.

**अनुपात्तभागग्रहण** (anupāttabhāga-grahaṇa) *n.* grasping or understanding of the portion which is not mentioned विश्वप्रकाशमतं दूषयति वाक्यानार्जवत्वात् पूर्वोत्तरशब्दाभ्यामुपात्तभागपरित्यागेनानुपात्तभागग्रहणस्यायुक्तत्वात् CaturCin. iii(2). 35.3.

**अनुपात्तमहाभूतहेतुक** (an-upāttamahābhūtahetuka) *adj.* not having the great elements as the cause, i.e. not produced from the great elements शब्दः कतमः । चत्वारि महाभूतान्युपादाय श्रोत्रेन्द्रियग्राह्योऽर्थः ।··· उपात्तमहाभूतहेतुको वा अनुपात्तमहाभूतहेतुको वा तदुभयो वा AbhidhSa. 4.3; अनुपात्तमहाभूतहेतुको यथा वायुवनस्पतिनदीशब्दः AbhidhKoBh. 6.23 (*on* 1.9); स (शब्दः) चानुपात्तमहाभूतहेतुकस्वभावोऽवगन्तव्यः इन्द्रियविनिर्भागवर्तित्वात् Sphuṭā. i. 30.7 (*on* 1.10)

**अनुपात्तमौक्तिकसर** (anupātta-mauktikasara) *adj.* which have not put on the strings of pearls वक्षोजैरनुपात्तमौक्तिकसरैः शंसन्ति ते पौरुषं निःसीमं नरसिंहदेव भुवने प्रत्यर्थिवामभ्रुवः Ekāva. 4.1(4) (130.6)

**अनुपात्तरूप** (anupātta-rūpa) *adj.* of the form of being that which is not enjoined कपालेषु श्रपयतीत्यत्र चित्रेष्टिव्रीहिनियमयोरुभयोरपि विध्यनुपात्तत्वं तदेवमुपात्तानुपात्तरूपे द्विविधेऽप्युदाहरणे ग्राह्यव्यावर्तनीययोर्नियतप्राप्तिरस्ति VidhiRa. 24 (129.6)

**अनुपात्तवपुस्** (anupātta-vapus) *adj.* who has not taken or assumed a corporate form अनुपात्तवपुषां क्षेत्रज्ञानां निष्परिस्पन्दतया कथं तन्निबन्धनो जरायुजाण्डजादिचतुर्विधदेहपरिग्रहः Mitā. 370.11 (*on* 3.68)

**अनुपात्तवर्णविशेष** (an-upāttavarṇaviśeṣa) *adj.* in which a particular caste is not mentioned or referred to मनुना अनुपात्तवर्णविशेषाशौचविधेः साधारण्यप्रतिपादनार्थं चातुर्वर्ण्याधिकारे सत्यपि पुनः ··· उक्तम् Mitā. 345.31 (*on* 3.24); इत्येवमादिवचनेषु येऽनुपात्तवर्णविशेषा आशौचविधयः ते सर्वे ··· सर्ववर्णविषयाः SmṛtiCan. vi. 13.14.

**अनुपात्तविशेष** (anupātta-viśeṣa) *adj.* wherein a particular region is not mentioned निर्वासनं च राष्ट्रात्, अनुपात्तविशेषे निर्वासने सर्वत्र देशस्यैवोपादानदर्शनात् DaṇḍaVi. 109.4.

**अनुपात्तविशेषण** (anupātta-viśeṣaṇa) *adj.* whose attribute is not specified or mentioned परसिद्धान्तहेतूनां चानुपात्तविशेषणानामनैकान्तिकीकृत्य त्वच्छास्त्रे बहुशो दूषितत्वात् KhaṇḍanKhā. 997.7; 999.14; श्यामत्वजातिविशेषोऽनुपात्तविशेषणः साध्यः NyāySiA. 231.10.

**अनुपात्तविशेष्य** (an-upāttaviśeṣya) *adj.* having an unspecified qualificand or substantive शब्दत्वसामान्यं पक्षो व्यक्तिर्वा ··· व्यक्तयस्तु शब्दशब्देनानभिधेयत्वादनुपात्ता इत्यनुपात्तविशेष्यः पक्षः स्यात् NyāyRa. 812.12 (*on* 6.324)

**अनुपात्तविषयत्व** (anupāttaviṣaya-tva) *n.* the state of having an object (of comparison) which is not mentioned स्वताद्रूप्यसंपादनेन निगीर्णत्वादनुपात्तविषयत्वमध्यवसानमूलत्वं चोच्यते RasGaṅ. 397.4.

**अनुपात्तविषया** (anupātta-viṣayā) *adj.* (*f.*) wherein the object (of comparison) is not mentioned (धवलीकारकत्वरूपस्य) निमित्तस्यानुपादानादनुपात्तनिमित्ता, विषयस्य निगीर्णतयानुपात्तविषया (उत्प्रेक्षा) RasGaṅ. 381.12; 391.5.

**अनुपात्तवेद** (anupātta-veda) *adj.* by whom the (knowledge of) Vedas is not acquired प्रागपीति च चोद्यं परिशिष्यते । तस्यापि ··· अपाक्रिया ···। न ह्रीयमनुपात्तवेदेन शक्या कर्तुम् Kāśi. i. 36.11 (*on* 1.82½)

**अनुपात्तव्यापारहेतुत्व** (anupāttavyāpārahetu-tva) *n.* the state of being the cause of the activity (of superimposition) which is not mentioned पल्लवितमिव ··· फलितमिवेत्युत्प्रेक्षया लताधर्माणां लावण्यधर्मिणि धर्माध्यारोपो दृश्यते । करपल्लवादीनां चानुपात्तव्यापारहेतुत्वेन साधकतमत्वेन वा प्राधान्यं लक्ष्यते SaraKaṇṭhā. 456.7.

**अनुपात्तशब्दसंबन्ध** (anupāttaśabda-sambandha) *m.* relation with the word which is not expressed (असमस्तनञ्) असमस्तेति । समासायोग्य इत्यर्थः । प्रसज्यप्रतिषेध इति यावत् । एतेन यजतिषु ये यजामहं करोति नानुयाजेष्वित्यत्र प्रसज्यप्रतिषेधः पर्युदासो वेति संशयेऽनुपात्तशब्दसंबन्धे समासापत्तिः VaiyāBhū. 66.11 (*on* 16)

**अनुपात्तश्वैत्यनिमित्तक** (anupāttaśvaityanimitta-ka) *adj.* caused by the whiteness which is not mentioned (directly) शशिकिशोरतादात्म्यमनुपात्तश्वैत्यनिमित्तकमुत्प्रेक्ष्यते RasGaṅ. 380.1.

**अनुपात्तसंख्य** (anupātta-saṅkhya) *adj.* number of which is not stated 'येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात्' इत्यनुपात्तसंख्यानां होमानां मन्त्राणां प्रत्ययमात्रभेदात् एकार्थत्वात् असति समुच्चये विकल्प एव SaṅkarKāBh. 113.8 (*on* ii. 4.43)

**अनुपात्तसंख्याविशेष** (anupātta-saṅkhyāviśeṣa) *adj.* in which no particular number has been specified or mentioned वृत्तौ हि विशेषणपदान्येकत्वादिकां संख्यां विहायाभेदैकत्वसंख्यां प्रतिपद्यन्ते। सा पुनः संख्यानमात्रमनुपात्तसंख्याविशेषं सामान्यभूतम् Nyās. ii. 423.3 (*on* vi. 3.2); अनुपात्तसंख्याविशेषमेकत्वादिष्वनुगतं सामान्यमभेदैकत्वसंख्या PadMañ. *on* KāśiVṛ. *on* P. vi. 3.2.

**अनुपात्तसम** (anupātta-sama) *adj.* as good as not stated नाप्यदर्शनमात्रमभावं गमयतीति व्यभिचार एव । तस्मान्न विशेषणमतिशयभागित्यनुपात्तसमम् PramāVāSvopVṛ. 83.17; अन्ये तु तत्रैव नृत्तमिच्छन्ति मार्गान्तरेषु (नाङ्गान्तरेषु)। तच्चासंगतम् । एवं च सति ··· 'निष्क्रान्तासु च सर्वासु' इत्यादि चानुपात्तसममेव स्यात् AbhinBhā. i. 246.16 (*on* 5.156)

**अनुपात्तसंबन्धापत्ति** (anupāttasambandhāpatti) *f.* undesired contingency of (having) relation which is not mentioned मनुष्यग्रहणं च तत्प्रधानकर्मप्रतिपत्त्यर्थमिति नानुपात्तसंबन्धापत्तिः TantrVā. 914.5 (*on* iii. 4.7)

**अनुपात्तसंबन्धिव्यतिरेक** (anupāttasambandhi-vyatireka) *m.* distinctive relationship of related member which is not expressed न ह्यनुपात्तसंबन्धिव्यतिरेके विभक्तय उत्पद्यन्ते TantrVā. 914.13 (*on* iii. 4.8)

**अनुपात्तस्त्रीलिङ्ग** (anupātta-strīliṅga) *adj.* whose feminine gender is not (directly) mentioned एकान्तिकेनैव स्त्रीत्वेन संस्तवो भविष्यति। अन्यथानुपात्तस्त्रीलिङ्गक्रियादिपदेनानेकान्ताव्यक्तलिङ्गेन शब्दधर्मतया कथंचित्कल्प्यः स्यात् TantrVā. 773.20 (*on* iii. 2.8)

**अनुपात्तस्वाहाकार** (anupātta-svāhākāra) *adj.* wberein the term *svāhā* is not used or employed विधृतिः स्वाहेत्यादयो धृतिमन्त्राश्च । एषु प्रथमान्तशब्दा होमार्थं प्रयोगकाले चतुर्थ्यन्तत्वेन विपरिणमयितव्याः।··· श्रुत्यानुपात्तस्वाहाकारेषु स्वाहाकारस्येव ··· स्मृत्या चतुर्थ्या अप्यध्याहरणीयत्वात् BhāṭṭCan. 65.19 (*on* xiv. 4.21)

**अनुपात्तान्यधर्म** (an-upāttānyadharma) *adj.* who has not acquired a different nature सृष्ट्वेदं सकलं विश्वं पश्चात्तत्प्राविशद्विभुः । अनुपात्तान्यधर्मः सन्न तु पाषाणसर्पवत् BṛĀraUBhVā. i. 4.536 (comm. स्रष्टृ रूपान्तरमनापन्नस्यैव कार्ये प्रवेशश्रवणात्)

**अनुपात्तान्यपदार्थक** (anupāttānyapadārtha-ka) *adj.* which has not referred to the meaning of another word (outside the Cpd.) न विद्मः को ज्ञातसंबन्धसमासार्थ इति। न तावत् पुरुषस्संबन्धी समुदायो वा। अनुपादानात्। न ह्यनुपात्तान्यपदार्थको बहुव्रीहिर्भवति Kāśi. iii. 2.8 (*on* 5(4).1)

**अनुपात्तान्यपदार्थकत्व** (anupāttānyapadārthaka-tva) *n.* the state of being that which has not referred to the meaning of another word (outside the Cpd.) आकाङ्क्षावाक्यस्याश्रवणादनुपात्तान्यपदार्थकत्वं तदवस्तु स्यात्, वाक्यभेदमात्रं त्वधिकम् NyāyRa. 347.23 (*on* 5(4). 3)

**अनुपात्तान्यपदार्थदोष** (anupāttānyapadārtha-doṣa) *m.* fault of non-reference to the meaning of another word (outside the Cpd.) पर्यवसिते वाक्ये कस्यैकदेशस्येत्याकाङ्क्षायां वाक्यगतमेकदेशस्येति पदं ज्ञातसंबन्धस्येति विशेष्यत इति । तन्न । आकाङ्क्षावाक्यस्याश्रवणात् । स एवानुपात्तान्यपदार्थदोषः Kāśi. iii. 3.8 (*on* 5(4). 2)

**अनुपात्तापकर्षहेतुधर्मक** (anupāttāpakarṣahetudharma-ka) *adj.* possessed of the unmentioned property of (the nature of) being the cause of subordination धर्मोऽपकर्षप्रयोजकः, तत्सामानाधिकरण्यमेव सादृश्यप्रतियोगितायामिति न व्यभिचारः । न चैवमप्यनुपात्तापकर्षहेतुधर्मकव्यतिरेके व्यभिचारः AlaṅkāKau.(Vi.) 6.7.

**अनुपात्ताभिभूतव्यापार** (anupāttābhibhūta-vyāpāra) *adj.* whose

cted, i.e. brought up तया च प्रतिदिनमनुपाल्यमानोऽहमुद्भूतपक्षतया समर्थीभूतश्चलितुम् UdaySuKa. 36.27.

**अनुपावक** (anu-pāvaka) *adj.* favourable to the (internal) fire हृत्स्थो वायुस्सदा वह्नेर्दीपकस्सोऽनुपावकः ŚivaP. v. 27.4 (437B.12)

**अनुपावृ** (anupāvṛ) *m.* [w. r. for **अनुपावृत्त**] MahāBhā. vi. 10.47.

**अनुपावृत्त** (anupāvṛtta) *m.* [pl.] name of a people (of a particular region) अत ऊर्ध्वं जनपदान्निबोध गदतो मम। तत्रेमे कुरुपाञ्चालाः ... उपावृत्ताश्चानुपावृत्ताः (v.l. उपावृत्तानुपावृत्ताः) MahāBhā. vi. 10.47; PadmP. i. 6.43 [PW.]; *adj.* ? Ved. Western, APTE.

**अनुपाश्रयत्व** (anupāśraya-tva) *n.* the state of not having any support मिथ्यादृष्टिरनुयोगक्षमानुपाश्रयत्वादसेव्या चेति मिथ्यादृष्टिविगर्हायामभ्युपनेयम् JātaMā. 155.7 (23.73(8))

**अनुपाश्रया** (an-upāśrayā) *adj.* (*f.*) wherein there is no shelter (such as fort etc.) शत्रुर्वा भूमिदानसाध्यः कश्चिदासाधेत ... भूम्यैनमुपग्राहयेत् ... अनुपाश्रयया प्रत्यपसृतम् ArthŚā. ii. 346.6 (7.16)

**अनुपाश्रित** (an-upāśrita) *adj.* **Ai** unsupported (physically) भुञ्जीत ... नानुपाश्रितः SuśruS. iv. 24.98; (अधिनितम्बम्) अत्र किंचिदनुपाश्रितः परं दुर्नहो नु मणिमेखलागुणः JānaHa. 8.37; **Aii** which is not resorted to or rested upon (physically) स्वापहेतुरनुपाश्रितोऽन्यया रामबाहुरुपधानमेष ते UttaRāC. 1.37; **Bi** not resorted to, i. e. not considered सैवेति नोच्यते बुद्धिरर्थभेदानुसारिभिः। न चास्य प्रत्यभिज्ञानमर्थभेदेऽनुपाश्रिते ŚlokaVār. 6.410 (835.4); **Bii** not supported by, i.e. not living (with) तासां (स्त्रीणां) मध्ये यान्तिमा ... या प्रथमा (पुनर्भूवाम्) तेऽप्यनुपाश्रितौ तौ तयोः पतिकृतम् ऋणं दद्याताम् BālamBha. ii. 66.8 (*on* 2.51); **C** not having any refuge or shelter वाञ्छितवस्तुदानैर्भीतोनपाश्रितभयोपनुदा (Read °दानैर्भीतानुपाश्रितभयापनुदा) भुजेन। रक्षन्समस्तभुवनाश्रयनाम सार्त्वं (Read सार्थं) भत्ते प्रजाश्च EI. v. 79.61.

**अनुपाश्रितव्यावृत्ति** (anupāśrita-vyāvṛtti) *adj.* whose distinction is not resorted to, i.e. not considered न चानुपाश्रितव्यावृत्तयो व्यक्तयो जात्यात्मना निर्दिश्यन्त इति सांप्रतम् SphoṭSi. 74.2 (comm. अनुपाश्रिता अविवक्षिता व्यावृत्तिर्यासु वर्णव्यक्तिषु ताः)

**अनुपाश्रित्य** (an-upāśritya) *ger.* not having taken recourse to, i.e. not having considered न हि भावमनुपाश्रित्य प्रतिषेध उपपद्यते Bhām. 564.22 (*on* iii. 2.22)

**अनुपासक** (an-upāsaka) *m.* **A** one who does not wait upon, i.e. non-meditator अनुपासकस्यापि प्रणवेन कर्माङ्गभूतेन कर्मणि कर्तृत्वश्रवणादुपासनकर्मस्वनियतत्वं निश्चीयते VedāntPāSau. 337.7 (*on* iii. 3.41); मुनिः ... अनुपासकस्य ... देहात्मभ्रान्तिं प्रदर्श्य ... परमात्मासिरेवामृतत्वमित्युपसंहृतवान् GoviBh. 77.14 (*on* i. 4.22); **B** one who does not worship तत्तत्फलभोगोत्तरकालं वानुपासका मानवान्तरे आवर्तन्ते SiddhāTa. 4.18; (स्तोत्रमिदम्) अनुपासकानामपि रक्षकम्, उपासकान् रक्षेत् इति किमु वक्तव्यम् LalitāSaBh. 219.10 (*on* 283); 206.17 (*on* 251); 216.17 (*on* 277)

**अनुपासकत्व** (anupāsaka-tva) *n.* the state of not being the meditator or worshipper अनुपासकत्वान्न देवान्तरकल्पना AṇuBh. 91.18 (*on* i. 3.31)

**अनुपासकशिल्पिहस्त** (anupāsakaśilpi-hasta) *m.* hand of a craftsman who is not a worshipper लेखनाभ्यासशीलस्तु लिलेखन्त्राणि नापर इति वचनानुसार्यनुपासकशिल्पिहस्ताल्लेखनशिष्टाचारोऽपि विरुध्यते SetuBa. 309.9.

**अनुपासन** (an-upāsana) *n.* **A** non-worship भाद्रपदे मासे पितॄणामनुपासनात्। ययौ वेतालतां विप्रः SkandP. iii(1). 36.36; **B** non-attendance यस्तु सक्तत्वात्स्वयं न निष्कसति तस्य निष्कासनक्रमा उच्यन्ते। तत्रायं प्रथमः कामो (कल्पो) यदस्यानुपासनम् JayaMa. 329.19 (*on* 6.3)

**अनुपासनप्रकरणत्व** (anupāsanaprakaraṇa-tva) *n.* the state of being the context not relating to meditation मृत्योः स मृत्युमिति च नाभेदप्रतिपत्तिविधिः। नेह नानास्ति किंचनेति द्वैतनिषेधवैयर्थ्यात्, अनुपासनप्रकरणत्वाच्च TattvPradī.(Ci.) 53.1.

**अनुपासनलक्षणावज्ञा** (anupāsanalakṣaṇāvajñā) *f.* disrespect or disregard characterised by non-worship or non-meditation उपास्याभेदेऽपि रूपभेदादेकत्रोपासकस्यान्यत्रानुपासनलक्षणावज्ञासंभवात् ... समस्यैव सा (उपासना) कार्या AṇuBh. 265.8 (*on* iii. 3.58)

**अनुपासनाप्रकरणस्थ** (anupāsanāprakaraṇa-stha) *adj.* present in the context not relating to meditation न ... सत्यकामत्वादीनां तात्त्विकता, अनुपासनाप्रकरणस्थतत्परवाक्यबोधितत्वाबोधितत्वाभ्यां विशेषात् AdvaiSi. 728.4.

**अनुपासनाप्रकरणस्थता** (anupāsanāprakaraṇastha-tā) *f.* the state of being present in the context not relating to meditation 'अहं ब्रह्मास्मी'ति वाक्यस्यानुपासनाप्रकरणस्थतया अभेदप्रमापकत्वमेव AdvaiSi. 839.16.

**अनुपासनाप्रकरणस्थत्व** (anupāsanāprakaraṇastha-tva) *n.* the state of being present in the context not relating to meditation यत्तु 'आदित्यो ब्रह्मे'तिवत् जीवे ब्रह्मत्वोपासनार्थस्तत्त्वमसीति निर्देश इति, तन्न अनुपासनाप्रकरणस्थत्वेन दृष्टान्तवैषम्यात् AdvaiSi. 835.14.

**अनुपासित** (an-upāsita) *adj.* **1A** not meditated upon फलं यद्गुणकं यत्र तद्गुणं स्यादुपासनम्। फलानुमानतस्तत्र न फलं ह्यनुपासितम् BṛĀraUBhVā. ii. 1.73; **1B** not honoured or waited upon अस्ति लोकतिलकः क्षितिपेषु कश्चिदेकः कृती स्वयमसावनुपासितः UdaySuKa. 3.7; **1C** not worshipped (मार्तण्डभैरवः) बलवान् देवः ... श्रीविद्योपासकैनैदंपर्येणानुपासितोऽपि ... एतच्छत्रुसंहाराय स्वयमेव यतते LalitāSaBh. 214.21 (*on* 267); **2** not employed (in initiation) दीक्षा ... मातुश्चाष्टगुणा स्मृता। इदं तु उपासितमन्त्रपरम् ... मातुरिति उपासिते त्वष्टगुणम्, अनुपासिते शुभफलम् TantrSā.(K.) 4.26.

**अनुपासितगुरु** (anupāsita-guru) *adj.* **i** who has not attended a teacher, i. e. not studied under a teacher तदिदमनुपासितगुरोश्चोद्यम् Bṛha. 247.8 (*on* i. 1.5); इतीयम् ... अनुपासितगुरोः परिचोदना TātpaṬ.(U.) 75.12 (*on* 2.117); 14.23 (*on* 1.60); अवगमैकनिबन्धनं च वस्तुत्वमित्यनुपासितगुरुं प्रबोधयितुमाह TātpaṬ.(U.) 291.19 (*on* 5(3). 219); तदेतत् ... अनुपासितगुरोर्मातुः भ्रियस्य यत्किंचित्प्रलपितम् NyāyRaMā. 26.6; **ii** who has not attended, i. e. studied under the Guru (the teacher Prabhākara), cf. **अनुपासितगुरुकथा; अनुपासितगुरुत्व** etc.

**अनुपासितगुरुकथा** (anupāsitaguru-kathā) *f.* view of one who has not attended, i. e. not studied under the Guru (the teacher Prabhākara) किमनयानुपासितगुरुकथया विकल्पितया Bṛha. 135.5 (*on* i. 1.5)

**अनुपासितगुरुकुल** (anupāsita-gurukula) *adj.* who has not attended, i. e. not studied at a teacher's house न पुनरायुःस्थितय इवानुपासितगुरुकुलस्य यत्नवल्लोऽपि सरस्वत्यः YaśasCam. i. 432.8; न हि भवति निर्विगोपकमनुपासितगुरुकुलस्य विज्ञानम् CampaŚreKa. 194.

**अनुपासितगुरुत्व** (anupāsitaguru-tva) *n.* the state of being one who has not attended, i. e. not studied under the Guru (the teacher Prabhākara) (पदविषयमौत्पत्तिकत्वमिति) कथं तर्हि प्रसिद्धिरियम्। अनुपासितगुरुत्वादित्युक्तम् Bṛha. 135.8 (*on* i. 1.5)

**अनुपासितगुरुप्रज्ञाविलसित** (anupāsitaguru-prajñāvilasita) *n.* play of wisdom of the one who has not attended, i. e. not studied under a teacher तदेतदनुपासितगुरुप्रज्ञाविलसितमिति ग्रन्थज्ञानमानिनो मन्यन्ते TātpaṬ.(U.) 30.19 (*on* 2.1)

**अनुपासितगुरुव्याख्यान** (anupāsitaguru-vyākhyāna) *n.* explanation by one who has not attended, i. e. not studied under the Guru (the teacher Prabhākara) अनुपासितगुरुव्याख्यानमुपेक्षणीयम् TātpaṬ.(U.) 304.20 (*on* 5(4).1)

**अनुपासितत्व** (anupāsita-tva) *n.* the state of not being meditated upon (ब्रह्म) स्थितिमात्रेण कथं फलदमनुपासितत्वात् TattvPrakā. 160B. 12 (*on* iii. 2.37)

**अनुपासितमहच्चरण** (anupāsita-mahaccaraṇa) *adj.* who has not waited upon, i. e. not worshipped the feet of the exalted (souls) को वा इह तेऽपराजितः ... अनुपासितमहच्चरणः BhāgP. v. 3.14.

**अनुपासितवृद्ध** (anupāsita-vṛddha) *adj.* who has not attended upon, i. e. not respected the elders यत्तु शक्यं बलवता कर्तुं प्राकृतबुद्धिना। अनुपासितवृद्धेन कः कुर्यात्तादृशं बुधः Rāmā. vi. 52.5; अनुपासितवृद्धानां विद्या नातिप्रसीदति VākyaPa. 2.493.

**अनुपासितवृद्धत्व** (anupāsitavṛddha-tva) *n.* the state of being one who has not attended upon, i. e. not respected the elders (धार्तराष्ट्रः) अनुपासितवृद्धत्वात् ... न ते श्रेयो ग्रहीष्यति MahāBhā. v. 90.17.

**अनुपासितसद्गुरुकुल** (anupāsita-sadgurukula) *adj.* who has not attended, i. e. not studied at a worthy teacher's house श्रीगुरवः प्राहुः— अनुपासितसद्गुरुकुलस्य अविज्ञातवाङ्मयतत्त्वस्य कस्यापीदं वचः KumāPraPra. 103.24.

**अनुपासितसंध्य** (anupāsita-sandhya) *adj.* who has not performed the (rite of) *sandhyā* अनुपासितसंध्यस्तु तदहर्यावके (v. l. °र्जापको) भवेत् KūrmaP. 689.10 (2.34)

**अनुपासितसाधु** (anupāsita-sādhu) *adj.* who has not attended upon, i. e. not respected the noble persons किमिहाश्चर्यमनुपासितसाधुना। ... भाषितं यत्त्वयेदृशम् BṛKathāŚloSaṁ. 10.8.

**अनुपासीन** ( an-upāsīna ) *adj.* **A** who is not performing यथानुपासीनः संध्यां प्रत्यवैति, तथानधीयानोऽपि व्याकरणम् PadMañ. *on* KāśiVṛ. *on* P. i. 1.0 (6.17); **B** who is not meditating upon न हि दहराकाशमनुपासीनेन तदन्तर्वर्तितया द्यावापृथिव्यादिकमुपासितुं शक्यम् UpaParā. 49.13; न हि दहराकाशमनुपासीनस्तदन्तर्वर्तित्वेनान्यदुपासितुं शक्नोति ŚivārkaMaDī. i. 441.14 (*on* i. 3.16)

**अनुपास्तिपक्ष** ( anupāsti-pakṣa ) *m.* view regarding non-attendance or non-performance अनुपास्तिपक्षे चाध्वर्योरन्यत्र व्यापृतत्वाभावेन चोदकप्राप्तमध्वर्युकर्तृकत्वमेव प्रोक्षणादेः MayūMāli. 416.22 (*on* v. 1.13); 417.5 (*on* v. 1.13)

**अनुपास्तिप्रकरण** ( anupāsti-prakaraṇa ) *n.* context which is other than that of meditation अनुपास्तिप्रकरणेऽपि सत्यकामत्वादेः श्रवणात् Nyāyāmṛ. 493B. 11; सत्यकामत्वादेरनुपास्तिप्रकरणे श्रवणम् AdvaiSi. 732.10.

**अनुपास्य** ( an-upāsya ) *ger.* **AI** not having served, not having attended upon विद्याशीलवयोवृद्धाननुपास्यानधीत्य वा।⋯को धर्मं वक्तुमर्हति MahāBhā. viii. 699*(2); **AII** not having worshipped वह्निमनुपास्य परान्सुरान्। शुभकामी जनः सेतौ कुर्यात् स्नानम् SkandP. iii(1). 1.70; आस्यारविन्दमनुपास्य गुरोरपास्य लास्यं चतुर्मुखमुखेषु सरस्वतीह।⋯ आतनोति रसनोपरि ताण्डवानि VīraMi.(Saṁskāra.) 124.1; **B** not having meditated upon आत्मानमनुपास्येह नानात्मानं जनोऽपि हि। उपास्ते BṛĀraUBhVā. i. 4.916; अननुविद्य अनुपास्य ŚrutaPra. ii. 38.12 (*on* i. 3.13); तस्या ( प्रकृत्याः ) अनुपोष्यानुपास्य स्वत एवामृतत्वम् TattvPrakā. 209A. 4 (*on* iv. 2.7)

**अनुपास्य** ( an-upāsya ) *adj.* **A** not to be observed or honoured एतदेव अनुशासनम् ईश्वरवचनम् ⋯ उपास्यमेव चैतत् नानुपास्यम् TaiUBh. 218.10 (*on* 1.11); **B** not to be meditated upon ब्रह्म ⋯ अनुपास्यं भवेत्तादृक्प्राणादिवदसंशयम् BṛĀraUBhVā. i. 4.1090; VivaPraSaṁ. 144.18; परमेश्वरात्मकत्वहेतुना इन्द्रादीनां स्वतो मुक्त्यर्थमनुपास्यानां तदर्थमुपास्यत्वश्रवणमुपपद्यते ŚivārkaMaDī. i. 285.14 (*on* i.1.29)

**अनुपास्यगुणवैरूप्य** ( anupāsyaguṇa-vairūpya ) *n.* dissimilarity of qualities which are not to be meditated upon उपास्यगुणसारूप्ये सत्यनुपास्यगुणवैरूप्यं न भेदावहम् ŚivārkaMaDī. ii. 303.24 (*on* iii. 3.10)

**अनुपास्यजीवात्मन्** ( anupāsya-jīvātman ) *m.* individual soul which is not to be meditated upon कथमनुपास्यजीवात्मविज्ञानोपयोगः ŚrutaPra. ii. 47.12 (*on* i. 3.19)

**अनुपास्यत्व** ( anupāsya-tva ) *n.* **A** the state of not being fit to be meditated upon अपोदितत्वादनुपास्यत्वे प्राप्ते तस्यैव ब्रह्मणः ⋯ उपासनं विधातव्यम् KenUVāBh. 86.8 (*on* 3.1); नापि स्तुतिः, अनुपास्यत्वाच्छ्वेतकेतोः ChāndoUBh. 410.14 (*on* vi. 16.3); न ह्यनुपास्यत्वे – प्राणस्य शुद्धिवचनम् ⋯ उपपद्यते BṛĀraUBh. 37.7 (*on* i. 3.1); प्रविष्टस्य दर्शनप्रतिषेधादनुपास्यत्वम् ⋯ आत्मनः BṛĀraUBh. 114.8 (*on* i. 4.7); सगुणत्वेन पृथिव्यादीनामनुपास्यत्वात् TattvPrakā. 49A. 8 (*on* i. 3.17); 200B. 2 (*on* iv. 1.3); ( जीवस्य ) अध्यासेन तथात्वे त्वनुपास्यत्वमेव AṇuBh. 54.12 (*on* i. 2.3); **B** the state of not being fit to be worshipped or adored अन्यदेवानामनुपास्यत्वात्तदभिधायकवेदवैयर्थ्यम् TattvPrakā. 182B. 2 (*on* iii. 3.57); ( वसूनाम् ) तेषामभावादनुपास्यत्वम् AṇuBh. 92.25 (*on* i. 3.33)

**अनुपास्यत्वप्रसङ्ग** ( anupāsyatva-prasaṅga ) *m.* undesired occasion of the state of not being fit to be meditated upon तासु तासु विद्यासु प्रपञ्चितानां सर्वेश्वरत्वसर्वाधारत्वसर्वैकारणत्वादिगुणानामनुपास्यत्वप्रसङ्गात् ŚivārkaMaDī. i. 317.6(*on* i. 2.2)

**अनुपास्यत्वावगम** ( anupāsyatvāvagama ) *m.* knowledge of the state of not being fit to be meditated upon न च ( कार्यब्रह्मणि ) तत्र ब्रह्मगुणानां ज्ञानानन्दैश्वर्यादीनां नित्याविर्भूतत्वात् परमात्मत्वम् ⋯ उभयभावनान्वयेनानुपास्यत्वावगमात् ŚrutaPra. ii. 629.28 (*on* iv. 3.15)

**अनुपिण्डम्** ( anupiṇḍam ) *adv.* on each and every rice-ball उदकाञ्जलीनुपनिनीयाञ्जनाभ्यञ्जने ददाति आङ्क्ष्वासौ। अभ्यङ्क्ष्वासौ इति त्रिरनुपिण्डम् BhārŚS. i. 9.7; ĀpaŚS. i. 9.14; अञ्जनाभ्यञ्जने वासश्चानुपिण्डं ददाति HirŚS. ii. 7.44 (253.15); HirGS. ii. 12.5; ĀgniveGS. iii. 1.3 (123.11)

**अनुपिधाय** (anu-pidhāya) *ger.* having covered afterwards ( हिरण्यगर्भम् ) त्रयस्त्रिंशद्देवा इत्यपिधाय तमनुपिधाय तमनुशास्ति CaturCin. i. 223.17.

**अनुपिबत्** ( anu-pibat ) *adj.* **A** drinking in ऋजु पश्यति यः सर्वं चक्षुषानुपिबन्निव।⋯ अनुरज्यन्ति तं प्रजाः MahāBhā. v. 34.22; **B** drinking, i. e. sucking uninterruptedly आह्लाद्याह्लाद्य मूर्ध्ना द्रुतमनुपिबतः प्रस्नुतं मातुरूधः ⋯ धेनुः।⋯ तर्णकस्य ⋯ अङ्गमातृप्ति लेढि ŚārṅgaPa. 597; Subhāṣi. 2425.

**अनुपिश्** ( anu-piś- ) VI.P. [listed in the *mucādigaṇa*, P. vii. 1.59; DhātuPā. 6.143] to attach or fasten along त्वष्टा पिपेश मध्यतोऽनु वर्ध्रान्त्स्ना नो अस्तु सुमङ्गली AV. xiv. 1.60; AV.(P.) xviii. 6.8.

**अनुपिष्** ( anu-piṣ- ) VII.P. [DhātuPā. 7.15] **AI** to rub along, to strike against चन्दनपादप ⋯ त्वाम् ⋯। एवं यस्तु परश्वधैः शकलयत्युद्धेऽथ ग्रावसु प्रौढं चानुपिनष्टि तस्य हि भवेः सर्वाङ्गमाह्लादकः SūktiMu. 33.25; **AII** to strike or beat up, cf. **अनुपिष्य**; **B** to grind or stir well, cf. **अनुपिष्टा.**

**अनुपिष्टा** ( anu-piṣṭā ) *adj.* (*f.*) ground or stirred well सीधुः ⋯। अरिष्टं पिबतो राजन् देयानि कुशलेन तु। अल्पां त(?ता)मनुपिष्टां तु माध्वीकं संप्रचक्षते Hastyāyur. 663.6 (4.19)

**अनुपिष्य** ( anupiṣ-ya ) *ger.* having struck or beaten up ( गाम् ) दण्डेन वानुपिष्योत्थाप्य दोहनम् KātyŚS. xxv. 1.16.

**अनुपीड्** ( anu-pīḍ- ) X.U. **1** (pass.) to be oppressed or tormented afterwards आत्मना चात्मनः पश्च पीडयन्नानुपीड्यते MahāBhā. i. 133.23 ( JñānDī. नानुपीड्यते न पश्चाच्छत्रुभिः संकोच्यते दग्धा इति ज्ञानात्।⋯ पीडयन् हिंसयन्। अनु तद्दाहानन्तरम्); **2** to press subsequently ततश्च वैद्यो बस्तिमुखम् ⋯ अमुञ्चन् ⋯ हस्तद्वयेन ⋯ शनैर्वेगमनुपीडयेत् AṣṭāSaṁ. i. 148.25 (1.28)

**अनुपीडन** ( anu-pīḍana ) n. subsequent torment or trouble अनावृष्टिरतीवोग्रा जायते शतवार्षिकी। ततो यान्यल्पसाराणि तानि सत्त्वान्यशेषतः। क्षयं यान्ति ⋯ अनुपीडनात् ViṣṇuP. vi. 3.15; *adj.* [*f.* -ī] oppressing, DBHS.

**अनुपीडिन्** ( anu-pīḍin ) *adj.* oppressing, DBHS.

**अनुपीड्य** ( anupīḍ-ya ) *ger.* having compressed or squeezed व्यायामाद् व्यवायरूक्षकटुकषायभोजनादल्पशनाच्च वातः प्रकुपितः प्राप्य हृदयमनुपीड्य तिष्ठति Hastyāyur. 328.23 (2.69)

**अनुपीत** ( anu-pīta ) *adj.* **AI** drunk मृगयूथनिपीतानि ( v. l. मृगयूथानुपीतानि ) कलुषाम्भांसि सांप्रतम्। तीर्थानि ⋯ रतिं संजनयन्ति मे Rāmā. ii. 89.5; **AII** drunk afterwards अनुपानमुष्णपयसः सारयति बद्धकोष्ठस्य। अनुपीतमम्बु यद्वा कोमलशस्यस्य नारिकेलस्य RaseCin. 8.41 (97.13); **B** soaked in (fluid) नीलान्यवान्गव्यपयोऽनुपीतान्शलाकिनः शुष्कतनून् विदध्य।⋯ तत्क्षारवत् सैन्धवतुल्यरोचनं पक्वं विदध्याद्य लोहनाड्याम्। एतद् बलासग्रथितेऽञ्जनं स्यात् SuśruS. vi. 11.11 ( comm. गव्यपयोऽनुपीतान् कृष्णगोदुग्धभावितान् ) (*but* PW. drunk afterwards); *n.* one of the three conditions of a person bitten by a snake कालदष्टं विनिर्दिशेत्।⋯ त्रिविधं दष्टजातैस्तु लक्षणं समुदाहृतम्। दष्टानुपीतं विज्ञेयं कश्यपस्य वचो यथा। विषभागात्तु सर्पस्य त्रिभागस्तत्र संक्रमेत् BhaviP. 71B. 1 (i. 33.49)

**अनुपीतरस** ( anupīta-rasa ) *adj.* soaked or saturated in the juice (of the flesh) घृतभृष्टान् रसे च्छागे रोहितान् फलसारिके। अनुपीतरसान् स्निग्धानपत्यार्थी प्रयोजयेत् CaraS. vi. 2(4). 18.

**अनुपीत्वा** ( anu-pītvā ) *ger.* having drunk subsequently धात्रीफलानां स्वरसेन चूर्णम्⋯। लीढ्वानुपीत्वा च पयोऽग्निशक्त्या कामं निकामं पुरुषो निषेवेत् BṛSaṁ. 76.6.

**अनुपीय** ( anupī-ya ) *ger.* [-*pīya*, DEBRU. 784] having drunk afterwards मधुकस्य कर्षमेकं सहितं तुल्येन सर्पिषा मधुना। लीढ्वानुपीय दुग्धं नित्यं वनशक्तिं परां धत्ते RatiRaha. 15.10; ŚārṅgaPa. 3215; मौनेन यो भुङ्क्ते स भुङ्क्ते केवलामृतम्। अनुपीय ततः क्षीरं तक्रं पानीयमेव वा SkandP. iv(1). 35.225.

**अनुपुङ्खग** ( anupuṅkha-ga ) *adj.* **A** flying after, i. e. closely behind feathery end (of an arrow) चक्रवच्चक्रवालं ( यमकम् ) तद् विज्ञेयम् ⋯। शैलास्तथा शत्रुभिराहताहता हताश्च भूयस्त्वनुपुङ्खगैः खगैः NāṭyaŚā. 16.74 ( AbhinBhā. अनुपुङ्खगैः पुङ्खान्तमग्नैः ); **B** flying after the bird of prey, NāṭyaŚā. 16.74.

**अनुपुङ्खविषयेक्षण** ( anupuṅkhaviṣayekṣaṇa ) *n.* observation of the object (i. e. a bird) through sub-feathers पुङ्खानुपुङ्खविषयेक्षणतत्परोऽपि ब्रह्मावलोकनधियं न जहाति योगी। संगीततालवयवाद्यवशं गतापि मौलिस्थकुम्भपरिरक्षणधीर्नटीव VarāU. 2.82.

**अनुपुञ्जितपिङ्गदीधिति** ( anupuñjita-piṅgadīdhiti ) *m.* tawny rays collected into a mass अनुपुञ्जितपिङ्गदीधितिद्रुतलाक्षारुणदर्पणोपमम्। परतोऽस्तगिरेरिदं गलत्यनवद्याङ्गि पतङ्गमण्डलम् NavaSāC. 12.33.

**अनुपुमाली** ( anupumālī ) *m.* name of a person ग्रामनिरुल्यां ( Read नैरुल्यां ) विषतरुपश्चिमगंजनम् ⋯ अतो भिङ्गतरुः अतः अनुपुमालीचिंचाः EI. v. 112.59.

**अनुपुरम्** ( anupuram ) *adv.* in each and every town (in the form of human body) अनुपुरमनुरुन्धन्नान्तरध्वान्तराशिम् ⋯ स सत्त्वान् अवतु भवतुषाराद्दक्षरव्योमसूर्यः PañcRāRa. 79.1.

**अनुपुराण** (anu-purāṇa) *m.* title of the Paramānandakāvya (*lit.* Purāṇa-like narration or history) इत्यनुपुराणे सूर्यवंशे ··· अध्यायः ParamāKā. 36.43 (colophon); 56.63 (colophon)

**अनुपुरुष** (anu-puruṣa) *m.* [P. vi. 2.190; AltGr. II. 1.258, 272] **1** man who has already been mentioned पुरुषशब्दोऽन्वादिष्टवाची चानोरुत्तरोऽन्तोदात्तो भवति। अन्वादिष्टः पुरुषोऽनुपुरुषः। अन्वादिष्टोऽन्वाचितः कथितानुकथितो वा KāśiVṛ. *on* vi 2.190; Prasā. ii. 784.5; SiddhāKau. 655B.12 (*on* vi. 2.190); **2** follower अन्वादिष्ट इति किम्। अनुगतः पुरुषोऽनुपुरुषः KāśiVṛ. *on* vi. 2.190; Prasā. ii. 784.6; SiddhāKau. 655B.13 (*on* vi. 2.190)

**अनुपुरुषासङ्ग** (anupuruṣāsaṅga) *m.* contact with the person referred to, i. e. chosen earlier (in previous birth) पितानङ्गप्रभां पुत्रीं शशाप क्रोधमूर्च्छितः। विरूपम् ··· ब्राह्मणं पतिमाप्स्यसि। ततोऽनुपुरुषासङ्गं बहुशश्च समेष्यसि BṛKathāMañ. xv. 1.126.

**अनुपुष्** (anu-puṣ-) IV.P. [P. iii. 1.55] **1A** to prosper, to go on prospering अनु वीरैरनु पुष्यास्म गोभिः VājaS. 26.19; VājaS.(K.) 28.11; **1B** to grow ज्येष्ठं ज्येष्ठमिवोदीक्ष्य ज्वलन्तं निजतेजसा। वोढुमाषाढवत्तापं निशुम्भोऽन्वपुषद्रुषा Surath. 9.7; **2** to assume, to take after भवान्सर्वगतैकरूपी रूपाण्यशेषाण्यनुपुष्यतीश ViṣṇuP. v. 1.45.

**अनुपुष्णत्** (anu-puṣṇat) *adj.* maintaining, fostering बहुलहिंसासंचितार्थैः कुटुम्बं प्रतिदिनमनुपुष्णन् स्त्रीजितो बाललाली। विशति हि गृहसक्तो यातनां मय्यभक्तः Nāräy. iii. 15.6.

**अनुपुष्प** (anupuṣpa) *m.* a kind of reed, *Saccharum sara roxb.*, PW., pw., MW., APTE.

**अनुपू** (anu-pū-) I.U., IX.Ā. **i** to flow along or sweep for purification सोमस्य प्रसवमनु याः पवन्ति।··· ता न आपो राजसूया अवन्तु AV.(P) xiv. 1.17; वायुः ··· एष ह्रीमांल्लोकांस्तिर्यङ्ङनुपवते ŚatBr. I. ii. 4.7; ŚatBr.(K.) II. iii. 1.5; अयमेव स्रुवो योऽयं पवते। सोऽयमिमांत्सर्वांल्लोकाननुपवते ŚatBr. I. iii. 2.5; I. vii. 1.12; III. viii. 3.21; XIV. i. 2.23; ŚatBr.(K.) IV. viii. 3.12; IV. viii. 1.10; **ii** to cleanse afterwards, to purify afterwards (पृथिवी) सेयं पूता। अथामुमब्रवीद् बहु वै किं च किं च पुमांश्चरति। त्वमनुपुनीष्वेति JaimiUBr. i. 50.8.

**अनुपूज्** (anu-pūj-) X.U. **i** to honour, to respect हर्षवस्तुषु चाप्यत्र वर्तमानेषु केषुचित्। नातिगाढं प्रहृष्टः स्यात्तान्येवास्यानुपूजयेत् MahāBhā. iv. 120*(51); **ii** to worship or adore subsequently त्रिनेत्रमुदितं ध्यात्वा गजास्यं वामनाकृतिम्। विसर्ज्य सिद्धिकामस्तु महास्त्रमनुपूजयेत् MālinīT. 8.92; कदा निष्क्रमणं मे स्याद् गर्भान्निरयसंनिभात्। इत ऊर्ध्वं नित्यमहं विष्णुमेवानुपूजये AdhyāRā. iv. 8.38.

**अनुपूजन** (anu-pūjana) *n.* **i** act of honouring or respecting subsequently गुरूणामनुवृत्तिश्च पूज्यानामनुपूजनम्।··· इतिवृत्तं महीपतेः NītiSā. 14.47; अर्चयेच्च यथान्यायं गन्धमाल्यैः पृथक् पृथक्। समाप्तौ नृप ग्रन्थस्य वाचकस्यानुपूजनम् SkandP. iii(2). 40.80; **ii** worship अपराधसहस्राणि लक्षकोटिशतानि च। नश्यन्ति तत्क्षणान्नूनं सत्येशस्यानुपूजनात् BhaviP. 825A. 9 (iv. 146.24)

**अनुपूजित** (anu-pūjita) *adj.* honoured प्रह्लादो वचनं प्राह ···। मया कृतं राज्यमकण्टकं पुरा प्रशासितान्तःसुहृदोऽनुपूजिताः VāmaP. 74.28; बृहस्पतिस्तत्र रैभ्येण सह संविदम्। कृत्वा स्वधिष्ण्यमगमद्वसुना चानुपूजितः VarāP. 5.13.

**अनुपूज्य** (anupūj-ya) *ger.* having honoured subsequently ताभ्यामर्घ्यं च पाद्यं च दत्त्वा ···। आनुपूर्व्याच्च धर्मज्ञः (v. l. अनुपूज्य स धर्मात्मा) पप्रच्छ कुशलम् Rāmā. ii. 84.69.

**अनुपूज्य** (anu-pūjya) *adj.* next (in ranking) to the respectable अनुस्वर्णं धातवः, अनुचन्दनं काष्ठानि, तथानुपूज्यान् (better *adn.*) कलाकोविदाः KumāPraPra. 97.23.

**अनुपूर** (anu-pūra) *m.* filling up, i. e. nourishing कारणशक्त्या कार्यं प्रवर्तत इति महदादयः क्षीणाः सन्तः प्रकृत्यनुपूरणेन (v.l. °पूरेण) कार्यं जनयन्ति SāṁkhyaSūVṛ. 71.6 (*on* 1.132)

**अनुपूरण** (anu-pūraṇa) *n.* filling up, i. e. nourishing, SāṁkhyaSūVṛ. 71.6 (*on* 1.32)

**अनुपूर्ण** (anu-pūrṇa) *adj.* full of, i. e. permeated प्राणो भवेत् प्राणमयस्तु कोशः। येनात्मवानन्नमयोऽनुपूर्णः प्रवर्ततेऽसौ सकलक्रियासु ViveCū. 167.

**अनुपूर्व** (anu-pūrva) *adj.* [*f.* -ā] [GaṇRa. 7.401(425)] **1** following the previous one, being in due order, successive यमावन्तरुदरे व्यतिषक्तौ सह शयाते। अथ यदनुपूर्वं सवनानि संतिष्ठन्ते तस्मादनुपूर्वौ जायेते BaudhŚS. ii. 410.5; अत्रो ह स्माह शालीकिरनुपूर्वा एवैनाः (स्रुचः) सादयेन्न चोपभृतं विधृतीभ्यामवगृह्णीयात् BaudhŚS. iii. 26.8; एवमनुपूर्वाण्येवैष्वत ऊर्ध्वं कर्माणि क्रियन्ते BhārŚS. i. 24.8; ii. 9.5; v. 4.18; ĀpaŚS. i. 24.8; v. 9.3; xi. 11.4; HirŚS. i. 6.38 (139.9); iii. 3.15 (306.24); vii. 6.4 (704.11); अशनमग्न्यन्वाधानं व्रतोपायनमित्येवमनुपूर्वाण्येके समामनन्ति BhārŚS. iv. 3.2; HirŚS. vi. 1.21 (506.8); समिध आहुतिमुपस्थानमित्येवमनुपूर्वाण्येके समामनन्ति ĀpaŚS. vi. 26.8; xviii. 14.8; xxi. 3.3; यदनुपूर्वाणि प्रदीयन्ते सर्वेभ्य उत्तरार्धेभ्यः सकृत्सकृदवद्यति HirŚS. ii. 2.45 (204.6); VaikhāŚS. 6.7; 6.10; गायत्रीं दक्षिणत उपदधाति। एवमनुपूर्वाः सर्वाः HirŚS. xii. 2.28 (90.1); द्विदेवत्यभक्षेषु होताध्वर्युः प्रतिप्रस्थाता चैवमनुपूर्वा भवेयुः VaikhāŚS. 15.31; सर्वत्र कनिष्ठप्रथमा अनुपूर्वा इतरे HirPiMe. i. 1.4; i. 3.1; (राशयः) अनुपूर्वाः स्मृताः शान्ताः ParaS. 6.25; (अन्वञ्चौ पुरोडाशौ) अन्वञ्चौ अनुपूर्वौ निरन्तराविति यावत् MayūMāli. 131.18 (*on* ii. 2.4); **2A** tapering, becoming gradually smaller (यूपः) अष्टाश्रिरनुपूर्वोऽग्रतोऽणीयान् ĀpaŚS. vii. 3.2; (यूपः) वर्षिष्ठो दक्षिणः। अनुपूर्वा इतरे KātyŚS. viii. 8.20; viii. 8.28 (*but* APTE the lowest (निकृष्टप्रमाण)); xvi. 1.9 (v.l.); **2B** proportionate, symmetrical स्नातामहतेनाच्छाद्य हुत्वा पतिः पृष्ठतस्तिष्ठन्ननुपूर्वया फलवृक्षशाखया सकृत्सीमन्तमुन्नयेत् DrāhyGS. ii. 2.25; वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे KumāSaṁ. 1.35; DaśKuC. 110.11; Kirātā. 17.50; YaśasCam. i. 301.5; श्लक्ष्णं चैवानुपूर्वं च साधुतक्षाववर्तितम्।··· श्रीगजस्य प्रतिकृतं त्रिषु लोकेषु पूजितम् Hastyāyur. 670.26 (4.22); **3** having *anu* as the preceding member or prefix ग्रामात् पर्यनुपूर्वात् P. iv. 3.61; तत्प्रत्यनुपूर्वमीपलोमकूलम् P. iv. 4.28; JaineVyā. iii. 3.151; अनुपूर्वाद्वदतेरकर्मकाद् व्यक्तवाग्विषयादात्मनेपदं भवति KāśiVṛ. *on* i. 3.49; PrakriKau. ii. 415.2; अनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः कारकपूर्वस्याः क्रियायाः कर्तृभूतं संप्रदानसंज्ञं भवति KāśiVṛ. *on* i. 4.41; दशपुरुषानूकमिति। अनुपूर्वात्कायतेः — अनूकानमनुक इति 'घञर्थे कविधानम्' इति कः Pradī. iv. 126A. 17 (*on* iv. 1.93); एतां देवतामनुशाधि। अनुपूर्वः शासिर्विविच्य ज्ञापनार्थः ŚrutaPra. iA. 55.5 (*on* i. 1.1); PadMañ. *on* KāśiVṛ. *on* P. i. 1.0 (7.15); (नानोर्ज्ञः) अनुपूर्वाज्ज्ञः सन्नन्तात्तङानौ न स्तः PrakriKau. ii. 418.3; अनुपूर्वो रुधिरिच्छार्थो दिवादिः Prasā. ii. 273.11; व्यक्तवाग्विषयादनुपूर्वादकर्मकाद्वदेरात्मनेपदं स्यात् SiddhāKau. 458B. 34 (*on* i. 3.49); अनुवित्तः। अनुपूर्वाद् 'विदिर्लाभ' इति धातोर्निष्ठाप्रत्ययः ŚivārkaMaDī. ii. 145.30 (*on* ii. 3.22); अनुपूर्वस्य तिष्ठतेर्यत्नार्थत्वात् MayūMāli. 631.12 (*on* ix. 4.1); **4** situated in the east, eastern भविष्यतः ··· रावणलक्ष्मणौ। तृतीयनरकादेत्य अनुपूर्वाच्च मन्दरात् PadmP.(Ra.) 123.112; मुण्डकेषु ···। अनुपूर्वेषु भिन्नेषु पुत्राणां मरणं ध्रुवम् SamarāSū. 43.31; **5** preceding, cf. **अनुपूर्वत्व** [made according to regular order or arrangement, DBHS.]; *m.* **A** regular order, serial process मदो अयं सर्वप्रमादमूलो न हीनभिक्षू अवमन्यितव्याः। अनुपूर्व एषो इह शासनस्य नैकेन जन्मेन लभेत बोधिम् ŚikṣāSa. 108.3 [DBHS.]; **B** sequence, successive order अनुपूर्वशः। अनुपूर्वः क्रमः। येन क्रमेणानुष्ठेयानि सोऽप्युच्यताम् ManuBh. i. 4.13 (*on* 1.2); [Abl.] in serial order अत ऊर्ध्वं प्रवक्ष्यामि पुण्ड्राणां लक्षणं शुभम्। आनुपूर्व्या यथादृष्टं (v. l. अनुपूर्वाद् यथोद्दिष्टं) मुनिभिस्त्वर्थवेदिभिः AśvaVai. 3.73; [Inst.] **Ai** in due or proper order, successively, sequentially यदि हवींषि मुह्येयुः पात्र्यां समधा विभज्यानुपूर्वेण प्रचरेत् MānŚS. 95.16; अनूपविशेतामितरौ। एतेनानुपूर्वेण सर्वं यथासनं चिकीर्षेत् LāṭyaŚS. ii. 4.8; DrāhyŚS. iv. 4.15 (v. l. REUTER Ed.); शिरोऽग्रे वपते ततः श्मश्रूणि तत इतराण्यङ्गान्यनुपूर्वेण JaimiGS. 1.19 (17.9); 1.19 (18.14); (द्विजेन्द्रम्) प्राणैर्वा विप्रयोजयेत्। सोऽनुपूर्व्ये(v. l. °र्वे°)ण यातीमान्नरकानेकविंशतिम् MahāBhā. xiv. App. I. 4 (557); VṛGautaSm. 519.3 (4); यथावदनुपूर्वेण महेन्द्रं सलिलोद्वहाः। त्रैलोक्यमातरः सर्वाः सागरं यान्तु निम्नगाः HariVaṁ. 38.75; इत्युक्ताः षडतीसाराः साध्यानां साधनं त्वतः। प्रवक्ष्याम्यनुपूर्वेण CaraS. vi. 19.13 (1941 Ed.); SuśruS. i. 46.432; पुराणः पुरुषश्चैव मया विष्णुर्हरिः प्रभुः। कथितस्तेऽनुपूर्वेण MatsyaP. 171.65; गन्धान्ब्राह्मणसात् कृत्वा पुष्पाण्यृतुभवानि च। धूपं चैवानुपूर्वे(°र्व्ये)ण अग्नौ कुर्यादनन्तरम् GobhiSm. 2.116; अनुपूर्वेण — परिपाट्या सुष्ठु जातः — उत्पन्नो यः सोऽनुपूर्वसुजातः SthānT. 209A. 14; **Aii** in the order of seniority तेषां दक्षिणा गृहपतिरुपविशति उत्तरा उत्तरे। प्रजोत्पत्त्यानुपूर्व्येण(v. l. °र्वेण) HirGS. ii. 17.7 (comm. जननक्रमेणेत्यर्थः); **B** in due course ते मातापितॄणामभिवादेत्वा प्रदक्षिणं कृत्वा गता अनुपूर्वेण कपिलवस्तुमनुप्राप्ताः MaVastuAva. i. 354.15; सो अनुपूर्वेण समुद्रपट्टनं गतः MaVastuAva. ii. 90.8; iii. 73.4; दण्डपाणिः शाक्यः स्वां दुहितरं गोपाम् ··· बोधिसत्त्वाय प्रादात्। सा च राज्ञा शुद्धोदनेनानुपूर्वेण बोधिसत्त्वस्य वृताभूत् LaliVi. 12.33 (14); 16.0(11); 26.6(5); स दरिद्रपुरुषः ··· पर्यटमानोऽनुपूर्वेण ··· तन्नगरमनुप्राप्तो भवेत् SaddhaPuṇ. 72.2; आयुष्मान्छ्रोणः ···। यावदनुपूर्वेण श्रावस्तीमनुप्राप्तः Divyāva. 12.12; 26.8; 132.6; भगवान् जनपदचर्यां चरमाणोऽनुपूर्वेण येन वैशाली महानगरी तेनानुप्राप्तोऽभूत् GiMs. i. 1.4; **C** gradually, symmetrically (गजः ··· अनुपूर्वसुजातदीर्घलाङ्गूलः) अनुपूर्वेण वा स्थूलसूक्ष्मसूक्ष्मतरलक्षणेन सुजातं दीर्घं लाङ्गूलं यस्य सः SthānT. 209B. 2; अनुपूर्वेण वृत्ते च जङ्घे

करू सकान्तिकौ।··· एतैर्गुणैः समायुक्ता मृगीजात्योपलक्षिता Mānaso. iii. 20.1722.

**अनुपूर्वकगृणाति** (anupūrvaka-gṛṇāti) *m.* (Gr.) [Vār. 1 *on* P. iii. 3.108] (verb) *gṛṇāti* (i.e. verbal root *gṝ-*) preceded by the prefix *anu* 'अनुप्रतिगृणश्च' प्रत्यनुपूर्वकगृणातेः समभिव्याहारे पूर्वशंसनादिकर्तुर्होतुः संप्रदानत्वम्। अध्वर्युर्होत्रेऽनुगृणाति BhāṭṭCin. i. 101.16 (*on* i. 1.4)

**अनुपूर्वकम्** (anupūrvakam) *adv.* **A** successively मुस्तकल्कं सत्रिफलं मधुतैलं मुखोदकम्। प्रत्येकं कवलग्राहं धारयेदनुपूर्वकम् BhelaS. 7.6 (1.6); **B** in proper or due order वणिक्।··· पिण्डनिर्वपणं तत्र प्रेतानामनुपूर्वकम्। चकार VāmaP. 79.70.

**अनुपूर्वकेश** (anupūrva-keśa) *adj.* having regular hair अनुपूर्वदंष्ट्रः ··· अनुपूर्वभ्रूः ··· अनुपूर्वकेशः ··· सर्वार्थसिद्धः कुमारः LaliVi. 7.54(149)

**अनुपूर्वक्रिया** (anupūrva-kriyā) *f.* **A** activity in regular order दानेन प्रज्ञया यावद् बुद्धाद्यौ स्मृतिभिश्च सा। धर्माभावस्वभावेनेत्यनुपूर्वक्रिया मता AbhisaAlaṅ. 6.1; **B** arrangement in proper order यथावदनुपूर्वक्रिया प्रधानस्यार्थस्य पूर्वमभिनिवेश इत्यर्थस्य क्रमः ArthŚā. i. 169.3 (2.10) (comm. यथावदनुपूर्वक्रिया यथार्हं क्रमकरणम्)

**अनुपूर्वगात्र** (anupūrva-gātra) *adj.* whose limbs are all as they should be in arrangement अनुपूर्वगात्रः ··· सर्वार्थसिद्धः कुमारः LaliVi. 7.54 (139); MahāVyu. 18.20 [DBHS.]

**अनुपूर्वग्रहण** (anupūrva-grahaṇa) *n.* acceptance, i.e. consideration of a proper order (regarding the classes of women) (ब्राह्मणस्यानुपूर्व्येण चतस्रस्तु यदि स्त्रियः) अनुपूर्वग्रहणं तृतीये दर्शितस्य क्रमस्यानुवादः ManuBh. ii. 288.10 (*on* 9.149)

**अनुपूर्वग्रीवा** (anupūrva-grīvā) *adj.* (*f.*) with tapering neck राज्ञश्च शुद्धोदनस्य माया नाम देवी ··· सुप्रतिष्ठिताङ्गी ··· अनुपूर्वग्रीवा ··· अनुपूर्वसुजातबाहुः LaliVi. 3.0(216) [DBHS.]

**अनुपूर्वचित्राङ्गुलि** (anupūrva-citrāṅguli) *adj.* with taperingly beautiful fingers अनुपूर्वचित्राङ्गुलिः ··· सर्वार्थसिद्धः कुमारः LaliVi. 7.54 (133)

**अनुपूर्वज** (anupūrva-ja) *adj.* [*f.* -ā] **1** born one after another श्येतोऽनड्वान्। यमौ। अभावेऽनुपूर्वजौ KātyŚS. xv. 3.25; **2** which is effected in due course यान्येतानि भूमावकृष्टायामनुपूर्वजायां च सितवर्णानि जायन्ते तानि च कवकानि ManuBh. i. 419.24 (*on* 5.5) [descended in a regular line, APTE]

**अनुपूर्वतस्** (anupūrva-tas) *adv.* **A** in successive order यथा संन्यासिनां कार्यं ये वहन्ति द्विजातयः। पदे पदे यज्ञफलं लभेरन्ननुपूर्वतः VaikhāGS. 5.8; **B** in due or proper order प्रकृतिं च तुरंगानां कथयाम्यनुपूर्वशः (v.l. °तः) AśvaVai. 1.15; ऋतुलोकपालपङ्क्तिद्वादशभुवनाङ्गुलोन्मितैर्गुह्यैः। अनुपूर्वतस्तु युक्ता हरिणीहरिणादयो ज्ञेयाः ŚārṅgaPa. 3123.

**अनुपूर्वता** (anupūrvá-tā) *f.* **A** the state of being in proper order प्रोक्षणीरासादय।··· आज्येनोदेहीत्याहानुपूर्वतायै TaiBr. III. ii. 9.14 (BhaṭṭaBhā. अनुक्रमेण अनुष्ठानाय); **B** the state of being proportionate or symmetrical मृष्टानुपूर्वते मेध्यमृदुत्वे शुद्धगात्रता। पूर्णव्यञ्जनता चारुपृथुमण्डलगात्रता AbhisaAlaṅ. 8.23.

**अनुपूर्वत्व** (anupūrva-tva) *n.* the state of being that which precedes, precedence लौकिके वा विद्याकर्मानुपूर्वत्वात् MīmāSū. vi. 8.12.

**अनुपूर्वदंष्ट्र** (anupūrva-daṃṣṭra) *adj.* with tapering teeth सर्वार्थसिद्धः कुमारः। तीक्ष्णदंष्ट्रश्च अनुपूर्वदंष्ट्रश्च LaliVi. 7.54(142) [DBHS.] (*but* MW. having regular teeth)

**अनुपूर्वदिक्चारिन्** (anupūrvadik-cārin) *adj.* moving towards the eastern direction (दन्तिभिः) अनुपूर्वदिक्चारिभिरुपलब्धं चन्द्रसरो नाम विमलजलसंपूर्णम् (सरः) Tantrākhyā. 98.7.

**अनुपूर्वदीक्षा** (anupūrva-dīkṣā) *f.* regular order of initiation or consecration (*lit.* initiation in the regular order) स्नातको वा ब्रह्मचारी ··· दीक्षयति न पूतः पावयेदिति ह्याहुः सैषानुपूर्वदीक्षा ŚatBr. XII. i. 1.10–11; सैषानुपूर्वं दीक्षा (v.l. अनुपूर्वदीक्षा VIŚVA.) GopBr. i. 4.6 (95.13)

**अनुपूर्वनाभि** (anupūrva-nābhi) *adj.* having regularly shaped navel अनुपूर्वनाभिश्च शुच्याचारश्च ··· सर्वार्थसिद्धः कुमारः LaliVi. 7.54(139)

**अनुपूर्वनिम्न** (anupūrva-nimna) *adj.* **1** tapering from below त्रीणि पर्वतशृङ्गाण्यनुपूर्वनिम्नानि Divyāva. 70.31; **2** taperingly deep महासमुद्रोऽनुपूर्वनिम्नः AbhidhKoBh. 165.3 (*on* 3.59)

**अनुपूर्वपरिणाह** (anupūrva-pariṇāha) *adj.* tapering in circumference (i.e. each smaller than the next lower) यावद् ब्रह्मलोकमुच्चैस्त्वेन अनुपूर्वपरिणाहेन सच्छत्रपरिग्रहाः सवैजयन्तीका घण्टासमुद्गानुरताः SaddhaPuṇ. 201.26 [DBHS.]

**अनुपूर्वपाणिलेख** (anupūrva-pāṇilekha) *adj.* with tapering lines of the hand अनुपूर्वपाणिलेखा च ··· बुद्धा भगवन्तो MaVastuAva. ii. 43.14; अनुपूर्वपाणिलेखश्च ··· सर्वार्थसिद्धः कुमारः LaliVi. 7.54 (134) [DBHS.] (*but* MW. having regular lines in the hands)

**अनुपूर्वप्रवण** (anupūrva-pravaṇa) *adj.* with tapering slopes (getting smaller as they rise) त्रीणि पर्वतशृङ्गाण्यनुपूर्वनिम्नान्यनुपूर्वप्रवणानि Divyāva. 70.31 [DBHS.]

**अनुपूर्वप्राग्भार** (anupūrva-prāgbhāra) *adj.* with tapering sides (getting smaller as they rise) त्रीणि पर्वतशृङ्गाण्यनुपूर्वनिम्नानि ··· अनुपूर्वप्राग्भाराणि Divyāva. 70.31 [DBHS.]

**अनुपूर्वभूधातु** (anupūrva-bhūdhātu) *m.* the verbal root *bhū-* preceded by the prefix *anu* अनुभवः — अनुपूर्वभूधातुप्रकृत्यर्थभूतः Bhāsk. i. 169.21 (*on* i. 4.4)

**अनुपूर्वभोग्य** (anupūrva-bhogya) *adj.* to be enjoyed (i.e. to be ruled over) by succession राज्यं कुरूणामनुपूर्वभोग्यं क्रमागतो नः कुलधर्म एषः MahāBhā v. 146.29.

**अनुपूर्वभोज्य** (anupūrva-bhojya) *adj.* to be enjoyed (i.e. to be ruled over) by succession राज्यं कुरूणामनुपूर्वभोग्यं(v.l. °भोज्यं) क्रमागतो नः कुलधर्म एषः MahāBhā. v. 146.29.

**अनुपूर्वभ्रू** (anupūrva-bhrū) *adj.* having tapering eyebrows अनुपूर्वदंष्ट्रः ··· अनुपूर्वभ्रूः ··· सर्वार्थसिद्धः कुमारः LaliVi. 7.54 (146)

**अनुपूर्वम्** (anupūrvám) *adv.* **1A** one after another, serially or successively मिनन्ता दस्योरशिवस्य माया अनुपूर्वं वृषणा चोदयन्ता ṚV. i. 117.3; अग्रत एवोपरिष्टात्संमृज्यात्। मूलतोऽधस्तात्। तदनुपूर्वं कल्पते TaiBr. III. iii. 1.3; अनुपूर्वं सर्वाणि हवींष्युद्वपति निष्पुनाति विविनक्ति BhārŚS. vi. 16.24; मध्य उन्नता भवति। अनुपूर्वमन्तौ निनतौ ĀpaŚS. xiv. 6.4; अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः। पदे पदे यज्ञफलमनुपूर्वं लभन्ति ते BṛParāSm. 8.26; अनुपूर्वं ततो विप्रान्भक्ष्यैरन्नैश्च शक्तितः।··· तर्पयेत् BrahmāṇḍP. ii. 12.40; **1Bi** in prescribed order, in proper or regular order यथाहान्यनुपूर्वं भवन्ति यथ ऋतव ऋतुभिर्यन्ति साधु ṚV. x. 18.5; AV. xii. 2.25; यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ṚV. x. 131.2; AV. xx. 125.2; TaiS. I. viii. 21.1; V. ii. 11.2; MaiS. i. 11.4 (i. 166.3); ii. 3.8 (ii. 36.3); KāṭhS. 12.9 (i. 171.15); 37.18 (iii. 99.1); VājaS. 10.32; 19.6; 23.38; VājaS. (K.) 11.10; 21.1; 25.7; TaiBr. II. vi. 1.3; ŚatBr. V. v. 4.24; ŚatBr.(K.) VII. vi. 1.17; अग्निष्टोमं प्रथममुपयन्त्यथोक्थ्यमथ षोडशिनमथातिरात्रमनुपूर्वमेवैतद्यज्ञक्रतनुपेत्य TaiS. VII. iv. 10.1; स एवमेवानुपूर्वं हवींषि निर्वपति TaiBr. III. ii. 4.6; III. ii. 7.6; III. iii. 1.2; अश्वः प्रथमोऽथ रासभोऽथाज एवं ह्येतेऽनुपूर्वम् ŚatBr. VI. iii. 1.28; अथो यदेते स्तोमा अतोऽन्यथानुपूर्वं तस्मादेवैवाक्षणयास्तोमीया अथोऽएवं देवा उपादधत ŚatBr. VIII. iv. 4.3; अथानुपूर्वं यज्ञपुच्छं संस्थाप्य ··· बहिष्पवमानेन स्तुत्वाहरेव प्रतिपद्याध्वाऽ इति ŚatBr. XI. v. 5.11; XII. viii. 1.8; XIII. ii. 1.5; अथैतान्महत ऋत्विज उत्तरतोऽनुदिशमुपवेश्यताननुपूर्वमाचमय्य तेभ्य एनं भूमिं स्पृशन्ननुच्छिन्दन्निवोपोहति BaudhŚS. ii. 207.9; अपि वा त्रयाणामेव मुख्यानामनुपूर्वमवदाय यथाकाममुत्तरेषामवद्यति BhārŚS. vii. 19.1; एवमनुपूर्वं यो यो यजते तं तं संप्रेष्यति ब्रह्मन् यज। पोतर्यज BhārŚS. xiii. 26.4; xiii. 30.11; शेषेण ध्रुवामभिघार्यानुपूर्वं हवींष्यभिघारयत्युपभृतमन्ततः ĀpaŚS. ii. 17.6; अनुपूर्वं हवींष्यधिश्रयति MānŚS. 41.13; हविर्धानमभ्युदानयन्त्यग्रतो मैत्रावरुणचमसीयाः ··· अनुपूर्वं सवनीयकलशान् MānŚS. 73.13; 85.11; एवमितरे उत्तराभ्यां प्रतिमन्त्रं बर्हिष्युपभृतं ध्रुवां चावकृष्टेऽनुपूर्वम् KātyŚS. ii. 8.13; पृथग्भक्षञ्छन्दोभिरनुपूर्वं (भक्षयेत्) इति धानञ्जय्यशाण्डिल्यौ LāṭyāŚS. iii. 1.29; v. 11.2; चतुर्थेऽहनि बृहत्यनुष्टुभोः पृथगनुपूर्वमनुकल्पयेत् LāṭyāŚS. ix. 12.8; x. 7.5; DrāhyŚS. xxix. 2.6; xxix. 4.5; मधुपर्कस्य चतुष्प्राश्नात्यङ्गुष्ठद्वितीयाभिः कनिष्ठया प्रथममेवमनुपूर्वं सर्वाभिस्तदवशिष्टं सुहृदे प्रयच्छति KāṭhGS. ii. 12.13; कर्मोत्पत्त्यानुपूर्वं प्रशस्तम् KauśiSū. 63.15; अनुपूर्वं तु ते मध्याश्चत्वारोऽन्त्या यथोत्तरम् SuśruS. vi. 1.15; मासवर्णभ्रात्रनुपूर्वम् SiddhaHe. iii. 1.161; अनुपूर्वमानुपूर्व्येण कुर्यात् CaturCin. iii(1). 1284.5; वक्षः क्रोडं तथा चैव हृदयं कुक्षिमेव च। अनुपूर्वं विजानीयादधोभागगतं बुधः AśvaVai. 2.16; सर्वमेव च संयुक्तमनुपूर्वं च निक्षिपेत् Hastyāyur. 709.25 (4.36); तुरंगः ··· वपुरास्यानुपूर्वं धुनोति SaduktiKa. 279.8; **1Bii** according to seniority or priority आ रोहतायुर्जरसं वृणाना अनुपूर्वं यतमाना यति ष्ठ ṚV. x. 18.6 (Sāy. अनुपूर्वम् आनुपूर्व्येण।···पूर्वो ज्येष्ठः। ज्येष्ठानुपूर्व्या); AV. xii. 2.24; TaiĀ. vi. 10.1 (709.1); यावन्तोऽस्य ज्ञातयः ··· एनाननुपूर्वं कल्पयति 'यथाहान्यनुपूर्वं भवन्ति' इति BaudhPiMe. i. 21.4; ध्रुवामुन्ते ध्रुवासुन्त इत्यमात्याननुपूर्वम् (परिदद्यात्) ĀśvaGS. ii. 1.11; पश्चादग्नेः स्वस्तरमुदगग्रैस्तृणैरुदक्प्रवणमास्तीर्य तस्मिन्नास्तरणे गृहपतिरास्ते। अनुपूर्वमितरे DrāhyGS. iii. 3.21; कृत्वा नमस्यामनुपूर्वमुक्तो भर्तुर्भुवो

विप्रवरेण रामः JānaHa. 7.57; ज्येष्ठस्यानुपूर्वेण …। पूर्वं क्रमेणेत्यनुपूर्वमिति सूत्र-गृहीताव्ययेनाप्यनुना समासः LaŚabdeŚe. i. 534.3; **2** along the eastern side माता … अनुपूर्वं गत्वोत्तरतस्तिष्ठेत् DrāhyGS. ii. 3.3 [from the first, MW.]

**अनुपूर्वरचना** (anupūrva-racanā) *f.* orderly arrangement बुद्धवचनं नाम क एष धर्मः। नामकायपदकायव्यञ्जनकायानां या अनुपूर्वरचना अनुपूर्वस्थापना अनुपूर्वसमायोग इति Sphuṭā. i. 60.13 (*on* 1.25)

**अनुपूर्ववत्सा** (anupūrvá-vatsā) *adj.* (*f.*) having calves regularly अनुपूर्ववत्सां धेनुम् … दत्त्वा ते यन्ति दिवमुत्तमाम् AV. ix. 5.29.

**अनुपूर्वविहारसमापत्ति** (anupūrvavihāra-samāpatti) *f.* the attainments of (nine) successive stages स सर्वशः … आयतनमुपसंपद्य विहरति।… नवानुपूर्वविहारसमापत्तिः MahāVyu. 68.7 [DBHS.]

**अनुपूर्ववृत्त** (anupūrva-vṛtta) *adj.* [*f.* -ā] proportionately or symmetrically round अस्याः … जङ्घे चानुपूर्ववृत्ते DaśKuC. 110.11; तनुनखमध्यजिह्मम् … तथानुपूर्ववृत्तावूरू।… इष्टं शरीरम् AṣṭāSaṁ. i. 242.1 (2.8)

**अनुपूर्वशस्** (anupūrva-śas) *adv.* **1A** successively, sequentially, one after another आमलक्याः फलानि च। एवमादीनि चान्यानि शाकमूलफलानि च। निवेदयीत शर्वाय …। एकैकस्मिन् फले भोगान् प्राप्नुयादनुपूर्वशः ŚivU. 6.22; बलिं चैवोपहारं च गन्धमाल्यं तथैव च। यथाक्रमेणोपहरेत् सर्वेषामनुपूर्वशः (ग्रहाणाम्) AgniveGS. ii. 5.1 (77.2); MāṇḍūŚi. 9.1; NāraŚi. i. 2.3; (सूक्तम्) दाधिक्रमथ सावित्रं रौद्रमित्यनुपूर्वशः BṛDe. 5.173; 8.41; Maitrāyaṇichando'nukramaṇī 22; ऋतुकेतून् प्रवक्ष्यामि यथावदनुपूर्वशः AVPari. 55(1).1; 52(1).5; 62(1).2; 64C(2).9; 70C(25).2; एष देवगणो राजन् कीर्तितस्तेऽनुपूर्वशः MahāBhā. i. 60.39; i. 61.2; (देहवन्तः) आनुपूर्व्याद् विनश्यन्ति जायन्ते चानुपूर्वशः MahāBhā. vi. 6.9; PadmP. i. 3.10; MahāBhā. ix. 34.34; xii. 156.6; xiii. 27.9; श्रुत्वा हनूमतो वाक्यं यथावदनुपूर्वशः। ततोऽब्रवीत् … रामः Rāmā. vi. 4.1; vii. 5.38; (देवर्षिपितृणाम्) तेषां पात्रविशेषांश्च वैशंपायन कीर्तय। वत्सान् क्षीरविशेषांश्च सर्वमेवानुपूर्वशः HariVaṁ. 4.21; BrahmāṇḍP. i. 36.120; BrahmP. 4.22; कुम्भिश्चैव च। कूपो होलाक इत्येते स्वेदयन्ति त्रयोदश। तान् यथावत् प्रवक्ष्यामि सर्वानेवानुपूर्वशः CaraS. i. 14.40; ये तु दंष्ट्राविषाः …। तेषां संख्यां प्रवक्ष्यामि यथावदनुपूर्वशः SuśruS. v. 4.9; vi. 44.6; vi. 48.6; इति कुष्ठनिदानं वै व्याख्यातमनुपूर्वशः BhelaS. 60.20 (2.5); 148.23 (6.7); 177.6 (6.18); अण्व्यो मात्रा विनाशिन्यो दशार्धानां तु याः स्मृताः।… सर्वं संभवत्यनुपूर्वशः ManuSm. 1.27 (ManvaMu. अनुपूर्वशः क्रमेण); 2.89; 2.91; 8.97; 3.201; 3.219; उक्तं काकुविधानं तु यथावदनुपूर्वशः NāṭyaŚā. 17.150; 15.151; 27.89; बोधिपक्षाप्रमाणानि विमोक्षा अनुपूर्वशः AbhisaAlaṅ. 8.2; गुणधर्मानतो राज्ञः कथयाम्यनुपूर्वशः BṛhaspaSm. 1.5; युगपद् वा प्रकुप्यन्ति दोषाः किं वानुपूर्वशः KāśyaS. 213B.23; 264B.39; ŚaṅkhaLiSm. 10; सर्वमेतच्च भगवन्पृच्छते मेऽनुपूर्वशः। तत्त्वतोऽर्हस्युदाहर्तुम् BhāgP. ii. 8.24; iii. 5.22; VāmaP. 9.14; 60.67; 91.107; ViṣṇuDhaP. iii. 39.1; एतामष्टसहस्रीमजस्रमनुपूर्वशः कृती विमृशन्। कवितारहस्यमुद्रामवाप्नुयात् YaśasCam. ii. 418.22; BhaviP. 43A.15 (i. 17.75); PadmP. iv. 82.15; iv. 90.2; प्रकृतिं च तुरंगानां कथयाम्यनुपूर्वशः AśvaVai. 1.15; 3.99; 6.1; ŚārṅgaPa. 1674; लीलावताराणाम् … गुणानि … ते वर्णयाम्यनुपूर्वशः SātvaT. 3.18; MālinīT. 2.24; पृष्ट एवं ममाचक्ष्व यथावदनुपूर्वशः Hastyāyur. 80.10 (1.12); पिता जातस्य बालस्य …। प्रत्यक्षाणि घटादीनि बोधयत्यनुपूर्वशः BṛBrahmaS. i. 1.33; ŚukraNī. 4(5).169; **1B** in regular order ज्योतिषामयनं पुण्यं प्रवक्ष्याम्यनुपूर्वशः JyotiVe. 2; मासस्य वृद्धिं गृह्णीयाद् वर्णानामनुपूर्वशः VāsiDS. 2.48; ManuSm. 8.142; ग्रहाः …। अनेकविधसंस्थानं प्रवक्ष्याम्यनुपूर्वशः AVPari. 52(1).5; 55(1).1; श्रोतुमिच्छामि तत्त्वेन …। जन्म कर्म च भूतानामेतेषामनुपूर्वशः MahāBhā. i. 61.2; xiii. App. I. 10(9); यश्चाण्डालीं द्विजो गच्छेत् …। त्रिभिः कृच्छ्रैर्विशुध्येत प्राजापत्यानुपूर्वशः AtriS. 264; भगवन् सर्ववर्णानां यथावदनुपूर्वशः। … धर्मान्नो वक्तुमर्हसि ManuSm. 1.2; 1.102; ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः। ब्रह्मवर्चस्विनः पुत्रा जायन्ते ManuSm. 3.39; प्रेतशुद्धिं प्रवक्ष्यामि। चतुर्णामपि वर्णानां यथावदनुपूर्वशः ManuSm. 5.57; स्वे स्वे धर्मे निविष्टानां सर्वेषामनुपूर्वशः। वर्णानामाश्रमाणां च राजा सृष्टोऽभिरक्षिता ManuSm. 7.35; धर्मं वर्णानामनुपूर्वशः। प्राब्रवीत् … यमः YamaSm. 1; भूतशुद्धिं शृणु मुने यथावदनुपूर्वशः। पृथ्व्यप्तेजोऽनिलाकाशं शरीरं भूतपञ्चकम् JayāS. 10.14 = PāraS. 3.140; अतिथित्वेन वर्णानां देयं शक्त्यानुपूर्वशः YājñaSm. 1.107; DevaSm. 2; ĀpaSm. 1.1; अधरोत्तररूपेण प्रथयः … ताश्चतुर्विंशतिर्ज्ञेया(:?) सर्वदिक्ष्वनुपूर्वशः ParaS. 7.42; (मासवर्षाणाम्) अग्निहवनं कार्यं सर्वेषामनुपूर्वशः NīlaP. 628; ViṣṇuDhaP. ii. 73.204; तेषां चैवानुपूर्वशः। धर्मशास्त्रम् … प्रोवाच कमलोद्भवः NaraP. 57.17; चूडाकर्म द्विजातीनां सर्वेषामनुपूर्वशः। … कर्तव्यम् BhaviP. 11A.3 (i. 3.14); क्षत्रियस्य तु यो दण्डस्तं वक्ष्याम्यनुपूर्वशः BṛDharmaP. ii. 3.25; ब्राह्मणो निवसेन्मुख्ये द्विनाम्नि क्षत्रियो वसेत्। वितथे … वैश्यः …। एते वैशेषिकाः सर्वे वर्णानामनुपूर्वशः SamarāSū. 39.19; अकारादीनि पञ्चाशदक्षराण्यनुपूर्वशः।… यः शब्दार्थात्मकोऽखिलः। प्रपञ्चः शक्तिजः ĪśānŚiPa. i. 1.57; **1C** in proper order कर्तव्यं ततः संमार्जनं कुशैः। आपो हि ष्ठेति तिसृभिर्यथावदनुपूर्वशः ŚaṅkhaLiDS. 103; तेषां महात्मनां पूजामागतानां युधिष्ठिरः।… चक्रे यथावदनुपूर्वशः MahāBhā. xiii. 27.9; xiii. App. I. 10(55); पिण्डेभ्यस्त्वल्पिका(? कां) मात्रा(? त्रां) समादायानुपूर्वशः। तेनैव विप्रान् … आशयेत् ManuSm. 3.219; गन्धमाल्यांश्च धूपं च यथावदनुपूर्वशः। दत्त्वा ततः प्रकुर्वीत बलिं पूजाम् NāṭyaŚā. 3.36; सूतकं तु प्रवक्ष्यामि … यथावदनुपूर्वशः DakṣaSm. 6.1; ततः पदप्रभेदेषु विचरेदनुपूर्वशः। विचारयेत्तदर्थांश्च MaYānaSū. 90.18 (14.5); सूतकाशौचयोरुक्तः शुद्धिपन्थानुपूर्वशः BṛParāSm. 8.59; हुत्वाष्टावाहुतीः …। वैश्वानरं हृदिस्थं तु यथावदनुपूर्वशः।… उपासते VāyuP. i. 15.5; LiṅgaP. i. 88.81; ये पूज्याः स्युर्द्विजातीनामग्रयः …। तानिदानीं समाचक्ष्व तदंशं चानुपूर्वशः MatsyaP. 51.1; लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः। नृपे पश्यति यत् कार्यं साक्षिणः समुदाहृताः KātySm. 355; इत्यष्ट वा आहुतीर्हुत्वा यथाविध्यनुपूर्वशः। पूर्णाहुत्यादिकं कर्म … आचरेत् GobhiSm. 3.17; NītiSā. 2.21; देवयानमिदं प्राडुर्भूत्वा भूत्वानुपूर्वशः। आत्मयाज्युपशान्तात्मा ह्यात्मस्थो न निवर्तते BhāgP. vii. 15.55; तच्छाखामूलदेशस्थौ … घटौ।… धनदश्रीप्रदौ द्वौ द्वौ पूजयेदनुपूर्वशः AgniP. 96.5; अग्न्याधानाद्यवभृथप्रचारमनुपूर्वशः। क्रतुः SkandP ii(2). 17.86; कृच्छ्राणामेष सर्वेषां विधिरुक्तोऽनुपूर्वशः DevīBhāP. xi. 23.41; PadmP. iv. 83.85; v. 21.218; मम पूजाविधानस्य नान्तोऽस्ति रघुनन्दन। तथापि वक्ष्ये संक्षेपाद्यथावदनुपूर्वशः AdhyāRā. iv 4.11; गृहाणाम् … वक्ष्यामो लक्षणान्यथ। शस्तानां निन्दितानां च यथावदनुपूर्वशः SamarāSū. 23.1; मुख्यादीनि विमानानि कथितान्यनुपूर्वशः ĪśānŚiPa. ii. 28.3; संग्रहं शृणु मे राजन् … रोगाणां चैव … अनुपूर्वशः Hastyāyur. 31.11 (1.4); **1D** in due course तामहं निवर्तिष्यामि सेनां ते अनुपूर्वसः(? शः) MaVastuAva. ii. 240.2; सो च व्रजेत्तं नगरं यहिं पिता अनुपूर्वशो तत्र गतो भवेत् SaddhaPuṇ. 77.14 [DBHS.]; **2** as before सीव्येत् सम्यङ् निवेश्याशु संध्यस्थीन्यनुपूर्वशः SuśruS. iv. 2.34 (comm. अनुशब्दः सदृशार्थः, तेन पूर्वसदृशेन)

**अनुपूर्वसम** (anupūrva-sama) *adj.* symmetrically equal (of *Butea frondosa* etc.) अनुपूर्वसमाः (यूपाः) प्रशस्ताः ṢaḍviBr. iv. 4.8 (Sāy. आनुपूर्व्येण समाश्च पलाशादयः)

**अनुपूर्वसमाधिसमापत्ति** (anupūrvasamādhi-samāpatti) *f.* the attainments of (nine) successive stages, DBHS.

**अनुपूर्वसमापत्ति** (anupūrva-samāpatti) *f.* attainments of (nine) successive stages अत्रान्तरे नास्ति किंचिद् बुद्धानाम् … नवानुपूर्वसमापत्तिकुशलानाम् … लोकं व्यवलोकयन्ति Divyāva. 60.18; 'नवानुपूर्वसमापत्तय' इति सूत्रे वचनात् AbhidhKoBh. 72.9 (*on* 2.44); cf. **अनुपूर्वविहारसमापत्ति,** [DBHS.]

**अनुपूर्वसमायोग** (anupūrva-samāyoga) *m.* orderly connection बुद्धवचनं नाम क एष धर्मः। नामकायपदकायव्यञ्जनकायानाम् … अनुपूर्वसमायोग इति Sphuṭā. i. 60.13 (*on* 1.25)

**अनुपूर्वसमुद्गतपरिवर्त** (anupūrvasamudgataparivarta) *m.* name of a (? part of a) work आर्यानुपूर्वसमुद्गतपरिवर्तेऽपि देशितम् ŚikṣāSa. 313.1 [DBHS.]

**अनुपूर्वसमुद्गता** (anupūrva-samudgatā) *adj.* (*f.*) tapering, becoming (gradually) smaller (by degrees), i. e. more and more fine तस्य जङ्घे अनुपूर्वसमुद्गते अभूताम् GaṇḍVyū. 310.3 [DBHS.]

**अनुपूर्वसुजात** (anupūrva-sujāta) *adj.* **A** well-born in due course हस्ती … अनुपूर्वेण — परिपाट्या सुष्ठु जातः उत्पन्नो यः सोऽनुपूर्वसुजातः SthānT. 209B.1; **B** symmetrically beautiful, i. e. long हस्ती … अनुपूर्वसुजातः … अनुपूर्वेण वा स्थूलसूक्ष्मसूक्ष्मतरलक्षणेन सुजातं दीर्घं लाङ्गूलं यस्य सः SthānT. 209B.2.

**अनुपूर्वसुजातस्कन्ध** (anupūrvasujāta-skandha) *adj.* with tapering, well-formed shoulders अनुपूर्वसुजातस्कन्धो सिंहो पर्वतगोचरोऽहमस्मि MaVastuAva. ii 71.16 [DBHS.]

**अनुपूर्वसुरुचिराङ्ग** (anupūrva-suruciräṅga) *adj.* having very lustrous limbs in regular order वलाहो तुरगः … अनूपूर्वं सुरुचिराङ्गः (v.l. अनुपूर्वसुरुचिराङ्गः DBHS.) MaVastuAva. iii. 85.9 [DBHS.]

**अनुपूर्वस्तोम** (anupūrva-stoma) *adj.* having *stoma*(s) (verses in a chant) similar to (those of) the previous (performance) स एष आवृत्तः स्तोमः पूर्वस्त्र्यहः। अनूपूर्वस्तोम उत्तरः NidāSū. 170.9 (9.12)

**अनुपूर्वस्थापना** (anupūrva-sthāpanā) *f.* orderly placement बुद्धवचनं नाम क एष धर्मः। नामकायपदकायव्यञ्जनकायानां या अनुपूर्वरचना अनुपूर्वस्थापना … इति Sphuṭā. i. 60.13 (*on* 1.25)

**अनुपूर्वाङ्गुलि** (anupūrvāṅguli) *adj.* with tapering fingers (one

ChāndoUBh. 354.6 (*on* vi. 3.2); TaiUBh. 258.10 (*on* 2.6); अपि च विश्वमनुप्रविवेश तत् परममेव पदं परमात्मनः SaṁkṣeŚā. 3.11 (ii. 155.24); सर्वेषामन्तर्वहिष्करणानां यद् यद् अनुप्रविशति तत्तत् … चेतनरूपेण आस्ते ParāTri. 46.1; (लिङ्गम्) असक्तम् अव्याहतं शिलामप्यनुप्रविशति SāṁkhyaTaKau. 394.2 (*on* 40); **1Aii** to enter into, to spread along इन्द्रस्य वै वृत्रं जघ्नुष इन्द्रियं वीर्यमपाक्रामत्तदिदं सर्वमनुप्राविशत् KāṭhS. 36.1 (iii. 68.5); ŚatBr. IX. i. 1.6; IX. i. 1.18; XIII. i. 4.1; **1Aiii** to enter into, i.e. to assume एतानि हि रूपाण्यनुप्राविशत् ŚatBr. VI. i. 3.19; निमन्त्रितान् ब्राह्मणान् अदृश्येन रूपेण पितर उपतिष्ठन्ति तच्छरीरमनुप्रविशन्ति ManuBh. i. 287.25 (*on* 3.179 (?189)); कौलिकोऽथम्।… अहं तस्य शरीरमनुप्रविशामि Pañcā. 55.23; **1Bi** to enter into, to go into तं लोकमपराजितं सर्वे देवा [अ]नु प्राविशन् AV. (P.) xvi. 88.6; नैकः शून्यगृहं न चाटवीमनुप्रविशेत् CaraS. i. 8.19; किमन्यत्। अनुप्रवेक्ष्यामि Avimā. 4.12 (41); कश्चिदेव पुरुषोऽटव्यां पर्यटन् पौराणं नगरमनुपश्येदविकलपथप्रवेशम्। स तं नगरमनुप्रविशेत् LaṅkāSū. 3.6 (11) (58.30); अहमप्यल्पकायतया विवरमनुप्रवेक्ष्यामि Tantrākhyā. 87.13; PañcT. 2.80(35) (260.5); Pañcā. 184.5; अतिस्विन्नोऽपि न सहसा शीतोदकमनुप्रविशेथाः AṣṭāSaṁ. i. 135.2 (1.26); विश्रम्य लौकिकाः संस्त्यायाननुप्रविशन्ति MahāvīC. 1.26 (1); न हि कश्चिदपरतन्त्रो बन्धनागारमात्मनः कृत्वानुप्रविशति BrahmSūBh.(Śaṅ.) 327.10 (*on* ii. 1.21); तदधुना वासुभद्रभगिनीप्राप्तये पुरीमिमामनुप्रविशावः SubhaDha. 1.17(14); JānaPa. 3.15 (2); (*caus.*) to cause to enter into उत्तुंद शिमिजावरि। तल्पेजे तल्प उत्तुंद। गिरीरनुप्रवेशय TaiĀ. iv. 39.1 (558.1); कृत्यवित् तद्गिरिविवरमनुप्रावीविशदश्वम् ViviTīKa. 98.29; **1Bii** to approach, to go towards (दीक्षितम्) नैनं शूद्रोऽनुप्रविशति। ब्राह्मणेन राजन्येन वैश्येन वा संभाषेत HirŚS. x. 2.7 (1047.21) (comm. एनं दीक्षितं प्रति शूद्रो नानुप्रविशति न प्रतिपद्यते। अनुरत्रानुलक्षीकरणपूर्वकप्रवेशनिषेधार्थः); कौसल्ये देवरस्तेऽस्ति सोऽद्य त्वानुप्रवेक्ष्यति MahāBhā. i. 100.2; युक्त्यापि तु यतः प्रसरमुपलभेत्तेनैवानुप्रविशेत् KāmSū. 200.4 (3.2); 277.1 (5.4); JayaMa. 277.18 (*on* 5.4); **1Ci** to go after, to follow ते रात्रीं प्राविश॰ स्तानश्विना अनुप्राविशताम् MaiS. ii. 5.9 (ii. 60.9); (अध्वर्यवः) हविर्धानं प्रवेश्यमाना वसतीवरीरनुप्रविशेयुः LāṭyāŚS. i. 9.8; DrāhyŚS. iii. 1.7; सदस्य एवमेव धिष्ण्यानुपतिष्ठन् ब्रह्माणमनुप्रविशेत् LāṭyāŚS. ii. 4.10; DrāhyŚS. iv. 4.17; नैनमन्यः सुहृदः प्रैषकृतोऽनुप्रविशेत् LāṭyāŚS. ix. 8.6; सह सुप्समस्यते। केन सह। समर्थेन। अनुव्यचलत् अनुप्राविशत् MahāBh. i. 378.10 (*on* ii. 1.4); i. 417.6 (*on* ii. 2.18); रामः …। प्रविवेश जलम् …। अनुप्रविविशुः सर्वे राजानो जनतास्तथा PadmP. iv. 68.20; नरसिंहनरपतिः … अनुप्रविशत मामिति च कथयति Ekāva. 1.13(118) (42.6); **1Cii** to resort to, to accompany यतो न वेदा मनसा सहैनमनुप्रविशन्ति ततोऽथ मौनम् MahāBhā. v. 254*(6); ŚatDū. 239.15; **1Ciii** to go with, to refer to or qualify समासे हि विशेषणं विशेष्यमनुप्रविशत्येकार्थीभवति विशेष्येण सह Nyās. i. 335.27 (*on* ii. 1.1); Prasā. i. 467.13; **1D** to merge in विद्युद् वै विद्युत्य वृष्टिमनुप्रविशति AitBr. 40.5(966); प्रपञ्चः प्रविलीयमानः शक्त्यात्मना कारणमध्येऽनुप्रविशति BrahmSūBh.(Bhā.) 91.12 (*on* ii. 1.9); **2** to reach, to attain य इदमथर्वशिरः ब्राह्मणोऽधीते … अनुप्रविशत्यों सत्यम् AŚiraU. 3(7); पुराणब्रह्मर्षिमगस्त्यमभिवाद्य शाश्वतं पदमनुप्रविशामि UttaRāC. 2.21 (3); काशीलिङ्गत्वमासाद्य मामेवानुप्रवेक्ष्यति SkandP. iv. 90.22; **3Ai** to join to, to get attached to सुबन्तमामन्त्रितमनुप्रविशति KāśiVṛ. *on* ii. 1.2; Prasā. ii. 739.5; न च प्रमाणान्तरावगम्यता शब्दार्थमनुप्रविशति BrahmSi. 108.15; अनुप्रविशतीति। तत्रान्तर्भवति Nyās. i. 337.3 (*on* ii. 1.2); PadMañ. *on* KāśiVṛ. *on* P. ii. 1.2 (11.11); संकीर्णं यत्र वाक्यान्तरस्य पदानि वाक्यान्तरमनुप्रविशन्ति KāvyPra. 362.2; 363.1; Prasā. i. 583.20; यत्रापर्यवसितवाक्यमध्ये तदनपेक्षवाक्यान्तरमनुप्रविशति तद्वाक्यगर्भम् AlaṅkāŚe. 5.2 (40); **3Aii** to join (hands with) यद्यानुप्रविशन्तु राक्षसबलं लोकास्त्रयः सेश्वराः AdbhuDa. 1.27; **3B** to get included, to become a part of (यज्ञोपवीतादीनि वाक्यानि) स्मृत्यनुमितवाक्यसंयोगेन क्रतुमनुप्रविशन्ति न च पूर्वगृहीतं किंचिद् बाधन्ते TantrVā. 118.12 (*on* i. 3.5); 506.7 (*on* ii. 2.17); 721.9 (*on* iii. 1.13); संस्कारविधयः … संस्कार्यद्वारेण साधिकारविध्यन्तरमनुप्रविशन्ति ManuBh. i. 200.13 (*on* 3.1); अनुप्रविशति चावघातादि प्रकृतविषयं, तदर्थव्रीह्यादिसंबन्धात् PrakaPañ. 460.6; Kāśi. iii. 3.20 (*on* 5(4).2); अनुप्रविशतु तत्र (वाक्यव्यङ्ग्यत्वे) संघटना न हि तस्याः संनिधानं प्रत्याचक्ष्महे Loc. 136.21 (*on* 3.6); न व्यक्तिरभिधामनुप्रविशति NyāyRaMā. 100.9; NyāyKu. 158.3; विशेषसामग्र्यां च सामान्यसामग्र्यनुप्रविशति SarvaDaSaṁ. 12.235; PūrvottaVāNaMā. 54.6; देवदत्तकर्तृकपिण्डक्रियायां ये देवतात्वेनानुप्रविशन्ति तेषां मध्ये यः कश्चित् भ्रातृपितृव्यमातुलादिकर्तृकपिण्डक्रियायामप्यनुप्रविशत्येव BālamBha. i. 171.22 (*on* 1.52); (*caus.*) to cause to be included, to make a part of प्रत्यक्षदृष्टं पीनत्वम् … स्वार्थप्रतिपादनमेवानुपपद्यमानं रात्रिवाक्यमनुप्रवेशयति Kāśi. iii. 183.23 (*on* 5(7).76); **3C** to engage (oneself) in (द्विजस्य भार्या शूद्रा) सा धर्मार्थं न भवेत् धर्मकार्येषु नानुप्रविशेदित्यर्थः SmṛtiCan. i. 206.14; **4** to feel, to know, to understand (व्यङ्ग्यः) न प्रतीयत इति। स्फुटतया प्राधान्यं न चकास्ति अपि तु बलात्कल्प्यते, तथापि हृदयेनानुप्रविशति Loc. 45.20 (*on* 1.15); (*caus.* pass.) to cause to be known or understood तेनाग्नेर्धूमसंबन्धस्य कालावच्छेदोऽनुप्रवेश्यते PrakaPañ. 204.16; यत्र तु प्रथमप्रतिपन्नस्संयोगः पश्चात्कदाचिद्विहन्यते यथाग्निना सह धूमस्य। तस्य देशकालावच्छेदः पश्चादनुप्रवेश्यते TantrRaha. 10.25; **5** to take recourse to, to use, cf. **अनुप्रवेशाभाव** [to attack, MW.]

**अनुप्रविशत्** (anu-praviśat) *adj.* [*f.* -ntī] **Ai** entering into, approaching अबुद्धिपूर्वमलंकृतो युवा परदारमनुप्रविशन् कुमारीं वा वाचा बाध्यः HirŚS. xxvii. 5.213 (217.24) (comm. यत्र परदारा आवस(आस)ते … तत्र … अज्ञानादनुप्रविशन् वाचा बाध्यम्) = ĀpaDS. ii(10). 26.18; अनुप्रविशन् उपसर्पन् DaṇḍaVi. 156.19; **Aii** entering into, i.e. attaining (a condition etc.) (अहम्) सर्वात्मनानुप्रविशन्तीव तन्मयतामिव … तमतिचिरं व्यलोकयम् Kād. 141.12; **Aiii** reaching up to तैजसाः परमाणवः समुद्गताः स्थाल्युदरमनुप्रविशन्तस्तण्डुलान् विक्लेदयन्ति NyāyRaMā. 44.4; **B** entering after, following आस्थानगतश्च सहसैव प्रविशन्तमनुप्रविशता … लोकेनानुगम्यमानम् … कुन्तलं नाम बृहदश्ववारम् … ददर्श HarṣaC. 255.5; **C** entering into, pervading or existing in (चेतनरूपम् ओजः) तदेव सर्वाङ्गेषु … रूपशब्दादि अनुप्रविशत् … वीर्यक्षोभरूपकामानलप्रबोधकं भवति ParāTri. 46.6; ननु बीजादङ्कुर उद्भवन् दृश्यते, न च अत्र कश्चिचेतनोऽनुप्रविशन् दृष्टः PratyabhiVi. ii. 153.5 (*on* ii. 4.2); सावयवं शरीरं प्रत्यवयवमनुप्रविशन्नात्मा सावयवः स्यात् SyādvāMañ. 9 (76)

**अनुप्रविश्य** (anu-praviśya) *ger.* **1Ai** having entered into, having existed in, having pervaded **ii** having entered into, i.e. having assumed **Bi** having entered or gone into **ii** having approached **iii** having resorted to **iv** having gone, having entered after, i.e. having followed **C** having entered into (the mind) **D** having united with **2** having paid attention to, having considered **3** having reached or attained **4A** having possessed of **B** having joined, i.e. having adapted or accommodated **C** having joined, having connected **5** having understood **6** having accompanied **1Ai** having entered into, having existed in, having pervaded सोऽमावास्यां रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते ŚatBr. XIV. iv. 3.22; BṛĀraU. i. 5.14; सः … तदनुप्रविश्य। सच्च त्यच्चाभवत् TaiĀ. viii. 6.1 (739.8); TaiU. 2.6; BṛĀraUBhVā. i. 4.445; VedāntSā.(Rā.) 26.6 (*on* i. 1.6); हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ChāndoU. vi. 3.2; VedāntSā. (Rā.) 26.4 (*on* i. 1.6); AṇuBh. 59.18 (*on* i. 2.11); तमस्सर्वभूतमधुनाध्वरेण तं सत्त्वरूपमनुप्रविस्य(?श्य) संक्लेशयन् सृष्टिनिमित्ताय तस्मै परब्रह्मणे … स्वाहा PāramāU. 10.4; अनुप्रविश्य श्रोत्रस्य ददाति श्रोत्रतां शिवः PāśBraU. 11; सच्चिदानन्दलहरी महात्रिपुरसुन्दरी बहिरन्तरनुप्रविश्य स्वयमेकैव विभाति BahvṛU. 650.23; यस्या यस्यास्तु यो भावस्तां तां तेनैव केशवः। अनुप्रविश्य भावज्ञो निनायात्मवशं वशी HariVaṁ. App. 29D (65); भूतानि सृष्ट्वा तान्यनुप्रविश्य गुहायामवस्थितं सर्वान्तरम् … ब्रह्मेह गीयते BrahmSūBh.(Śaṅ.) 55.4 (*on* i. 1.15); अणिष्ठः … धातुः … हिताख्यासु नाडीषु अनुप्रविश्य … मनो भवति ChāndoUBh. 363.11 (*on* vi. 5.1); (आत्मा) तेन रेतसा बीजेनाप्स्वनुप्रविश्याण्डरूपेण गर्भीभूतः सः, संवत्सरोऽभवत् BṛĀraUBh. 26.5 (*on* i. 2.5); परमात्मा … जगत्सृष्ट्वा तदनुप्रविश्य … संसरति SanatBh. 205.8 (*on* 1.19); समस्तं हि विकारजातमनुप्रविश्य कारणत्वान्मृदादिवत्सर्वशक्तित्वाच्च नियमयितृत्वमुपपन्नम् BrahmSūBh.(Bhā.) 44.10 (*on* i. 2.18); 65.14 (*on* i. 3.30); रूपादिविषयासङ्गः करणैः …। अनुप्रविश्य भोक्तारं रञ्जयित्वावतिष्ठते BṛĀraUBhVā. iv. 3.1096; (ब्रह्म) तदुभयमनुप्रविश्य तत्तदभवत् VedāntSā.(Rā.) 26.8 (*on* i. 1.6); 137.3 (*on* i. 4.27); सर्वमात्मतयानुप्रविश्य … स एव सर्वशब्दवाच्यो भवति VedāntDī. 4.7 (*on* i. 1.1); परं ब्रह्म … महाभूतानि सृष्ट्वा तेषु च भोक्तृवर्गात्मतया प्रवेश्य (v.l. अनुप्रविश्य) … बहुप्रकारमवतिष्ठते VedāSaṁ. 170.2; प्रकृतावनुप्रविश्य तां परिणाम्य … आत्मनो बहुधाकरणात् BrahmSūBh.(Ma.) 22B.8 (*on* i. 4.27); विश्वमनुप्रविश्य गूढम् …। कवयः … आददति … तत्त्वम् ŚaṅkaDigVi.(Mā.) 10.49; ŚaṅkaVi.(Ā.) 82.21; लिङ्गशरीरावच्छिन्नजीवमनुप्रविश्य स्वयं परमात्मैव हिरण्यगर्भरूपतया प्रादुर्भूतः ManvaMu. 7.10 (*on* 1.9); अधिष्ठातृत्वं प्रपञ्चरूपं शरीरमनुप्रविश्य वर्तमानत्वम् ŚivārkaMaDī. i. 345.21 (*on* i. 2.9); i. 376.5 (*on* i. 2.22); **1Aii** having entered into, i.e. having assumed अनुप्रविश्य रुद्रेण वह्निं जातो ह्ययं शिशुः। तत्र जातस्ततः स्कन्दो रुद्रसूनुस्ततोऽभवत् MahāBhā. iii. 218.29; मान्धातुः पुरुकुत्सनामा पुत्रस्तमहमनुप्रविश्य … दुष्टगन्धर्वानुपशमं नयिष्यामि ViṣṇuP.

iv. 3.6; वायुदेवता … ऋषभमनुप्रविश्य ऋषभभावमापन्ना ChāndoUBh. 223.7 (*on* iv. 5.1); नश्यन्नन्तरनुप्रविश्य विषमः … कलिः … स्वबान्धवजनानक्षोभयत् EI. xviii. 247.38; आयाहि पिङ्गल … तमनुप्रविश्य सर्वदुष्टान् स्तम्भय ĪśānŚiPa. i. 31.45(1); ii. 6.114(2); एह्येहि कायमनुप्रविश्य शिरसि गृह्ण ĪśānŚiPa. ii. 43.52; Śārṅga-Pa. 2971; **1Bi** having entered or gone into देवान् वा असुरा व्यवंह्वारम-जिघांसन् यद् रूपं देवानामासीत् तेन रूपेणानुप्रविश्य … जिघांसांचक्रुः JaimiBr. 3.31; स सदोऽनुप्रविश्यर्त्विजश्च यजमानं चामन्त्रयामास GopBr. i. 2.10 (43.11); वज्रो दण्डकाष्ठमनुप्रविश्य तद्बिलमदारयत् MahāBhā. i. 204*(4); अन्तर्भूमौ तु ये …। अनुप्रविश्य तान्दाणाः प्राहिण्वन्यमसादनम् MahāBhā. iii. 169.17; ix. 23.64; तदादित एव पक्वाशयमनुप्रविश्य केवलं वैकारिकं वातमूलं छिनत्ति CaraS. i. 20.15 (1922 Ed.); i. 20.23 (1922 Ed.); सत्यं रूपं वराहस्य कृत्वाम्भोऽनुप्रविश्य च। … स प्रजापतिः … उर्वीम् … अतिन्यसत् BrahmāṇḍP. i. 7.7; व्याधः … वन-मनुप्रविश्य … सूकरमपश्यत् Tantrākhyā. 64.6; वेत्यधिकारात् गेहं गेहमनुप्रविश्य गेहमनुप्रविश्यानुप्रविश्यास्ते JaineVyā. 142.17 (*on* ii. 4.41); KāśiVṛ. *on* iii. 4.56; Prasā. ii. 697.7; किं वाङ्गीकृत्य कार्यमार्यस्तेन क्षुद्रेणानुप्रविश्य विगत-घृणेन घुणेनेव … चन्दनस्तम्भः क्षयमुपनीतः HarṣaC. 256.14 (comm. अन्तर्भूय); कुरुकुलबलजलधिमनुप्रविश्य शुक्ति(? क्ते)रिव वृत्तमुक्तालक्ष्मीः AvantiKa. 48.1; 173.15; अनुप्रविश्य च द्यूतसभामक्षधूर्तैः समगंसि DaśKuC. 47.17; 48.17; इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण UttaRāC. 2.5(12); सच्छायं विपिनमनुप्रविश्य …। ऐक्षिष्ट … युवतिजनः HarVi. 17.42; आरोहकनामानः कृमयो गवां प्रजनवर्त्मनानुप्रविश्य नाशयन्ति ManuBh. ii. 180.26 (*on* 8.232); कर्णाटं शै(सै)न्यमाजो(जौ) भयरहितमना भूरिशोऽभु(नु)प्रविश्य EI. ix. 8.18; भिद्यतेऽनु-प्रविश्यान्तर्यो यथारुच्युपाधिना। विशुद्धिः कीदृशी तस्य जडस्य स्फटिकाश्मनः BhallaŚ. 51; Subhāṣi. 893; स राजा … गृहं गृहम्। अनुप्रविश्य न यदा तां ददर्श प्रियां क्वचित् KathāSaSāg. xii. 19.93; मातृयोनिमनुप्रविश्य तत एव शरीर-माप्नोति BrahmSūBh.(Ma.) 47B.7 (*on* iii. 1.29); चारेणानुप्रविश्य परबलं संक-लयानि NyāyPari. 374.24; स्थूलशरीरम् … शिलामपि वानुप्रविश्य तिष्ठति YogSā. 59.2(3); कृत्रिमव्याघ्रः पुमान् व्याघ्राकृतिदारुचर्मादियन्त्रमनुप्रविश्य नियच्छन्नपि न तद्-व्याप्याधितिष्ठति ŚivārkaMaDī. i. 309.7 (*on* i. 2.1); आनन्दयत्यन्तरनुप्रविश्य सूक्तिः कवेः ŚivLī. 1.17; मखद्विषः … अनुप्रविश्य नगरम् … सुधर्मामध्यासांचक्रिरे NīlaVi. 30.4; ज्ञातिभिः … अनुप्रविश्य दण्डकारण्यमार्यस्य प्रवृत्तिरुपलब्धव्या Jāna-Pa. 7.9(9); **1Bii** having approached अनन्तरं च द्रौपद्या सहासीनं युधि-ष्ठिरम्। अनुप्रविश्य विप्रार्थं फाल्गुनः … वनं यत्र जगाम ह MahāBhā. i. 107*(2); i. 205.18; नायकभार्यां मुग्धां विश्वास्यायन्त्रणयानुप्रविश्य नायकस्य चेष्टितानि पृच्छेत् … मूढदूती KāmSū. 285.4 (5.4); KandaCū. v. 4.45; यस्य यस्य हि यो भाव-स्तेन तेन हि तं रथम्। अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् VṛGautaSm. 601.6 (14); Tantrākhyā. 8.11; PañcT. 1.29 (26.2); Hitopa. 2.47; Pañcā. 9.32; SūktiRa. 123.37; पूर्वमेव मया ज्ञातं पूर्णमेतद्धि मेदसा। अनुप्रविश्य विज्ञातं यावद्दारु च चर्म च Tantrākhyā. 11.12; Pañcā. 13.5; रामभद्रमनुप्रविश्य रसं दास्यामि AnargharRā. 5.4(5); मनसानुप्रविश्येदं क्रमेणैकात्म्यमुत्तमम्।… तत्त्वं द्रष्टव्यं तद्विपश्चिता BṛĀraUBhVā. iv. 4.734; एष कुञ्जरः केनाप्यसुरेण … पूर्व-जन्मनि मया कृतं स्मृत्वा कमप्यपकारमुत्पन्नकोपेनानुप्रविश्य नीयते वश्यम् TilaMañ. 243.4; (सुराः) अनुप्रविश्य … भूपतीन्निखिलान् भुवि। प्रयच्छत महादानानि KathāSaSāg. xviii. 2.195; **1Biii** having resorted to सर्वं एव प्रमाता … एनामेव संविदमनुप्रविश्य सर्वव्यवहारभाजनं भवति ParāTri. 10.16; **1Biv** having gone, having entered after, i.e having followed जघ्नुस्तेऽनुप्रविश्य तम् RājTa.(Ka.) 5.411; वनेचरमनुप्रविश्य प्रकाशय नीतिनैपुण्यम् Dūtāṅg. 19 (10); **1C** having entered into (the mind for winning the confidence) सत्रिणः …। पितरि विक्रमबुद्धिं तथेत्यनुप्रविश्य भेदयेयुः ArthŚā. i. 83.1 (1.17); i. 164.1 (2.9); सैनां शीलतोऽनुप्रविश्याख्यानकपटैः … रञ्जयेत् KāmSū. 276.17 (5.4) (JayaMa. शीलेनादावनुप्रविश्य विश्वासार्थं शीलवती स्यात्); KandaCū. v. 4.3; त्वयानुकूल्येनानुप्रविश्योलूकराजः … निःशेषः कृतः Tantrākhyā. 119.4; PañcT. 3.107(2) (365.2); Pañcā. 226.1; HarṣaC. 256.14 (comm. विश्वासं नीत्वा); **1D** having united with जीवात्मा … परमात्मानमनुप्रविश्य स्वस्थः … गच्छति VedāntKau. 136.25 (*on* i.4.18); **2** having paid attention to, having regarded, having considered देशधर्मजातिकुलधर्मान् सर्वानेवैतानु(?ताननु)प्रविश्य राजा चतुरो वर्णान् स्वधर्मे स्थापयेत् VāsiDS. 19.7; हितमधुराक्षरवाणीं व्यवहारमनु-प्रविश्य तल्लीनाम्। सरला दुराशयानामुपघातफलेन विन्दन्ति KuṭṭaMa. 706; **3** having reached or attained पिङ्गलया नाडिकयादित्यमण्डलमनुप्रविश्य Vaikhā-DS. i. 11.2; अनुप्रविश्य योगेन तास्ता हि गतयो मम। अमीषाममरेन्द्राणां हन्तव्या रिपवो युधि HariVaṁ. 45.13; प्रथमं शरीरात् प्राणभूमावनुप्रविश्य … अणुरपवृज्यते ParāTri. 20.6; **4A** having possessed of यथाञ्जनमयो वायुः पुनर्मानःशिलं रजः। अनुप्रविश्य तद्वर्णो दृश्यते MahāBhā. xii. 270.9; **4B** having joined, i.e. having adapted or accommodated अनुप्रविश्य सोऽस्मासु भेदं कुर्यान्न संशयः Rāmā. vi. 177*(8); दर्पणमिवानुप्रविश्यात्मीयां प्रकृतिं संक्रामयन्ति पल्लवकाः HarṣaC. 195.8; **4C** having joined, having connected अन्योन्यमुत्पीडयतो सखीव ज्याधन्वनोर्मध्यमनुप्रविश्य। निवारयन्तीव युगं विदूरं तदायतेषुः पृथगाचकर्ष RāghPāṇ.(Dha.) 16.23; **5** having understood व्याधीनां निमित्त° … °बलकालविशेषाननुप्रविश्यानन्तरं दोष° … °प्रकृतिवयसां मानम् … यथावज्ज्ञेयं भवति भिषजा CaraS. iii. 1.3 (comm. अनुप्रविश्येति बुद्ध्वा); यत्र यत्र च कौतुकं प्रयोज्यायास्तदनुप्रविश्य साधयेत् KāmSū. 210.12 (3.3) (JayaMa. तत्तदनुप्रवि-श्येति विज्ञाय); **6** having accompanied रावणः … सलीलं वीणामनुप्रविश्य गाथाभिर्गीतैरनुगायति स्म LaṅkāSū. 1.0(23) (1.23) [DBHS.]

**अनुप्रविश्यमान** (anu-praviśyamāna) *adj.* being followed, i.e. being served or attended upon अपि त्यजत्येवोपायपटुभिरनुप्रविश्यमानः सप्ता-र्चिरप्यात्मनः स्वभावम् YaśasCam. ii. 61.1 (comm. मन्त्रादिना सेव्यमानः)

**अनुप्रविष्ट** (anu-právista) *adj.* [*f.* -ā] **1Ai** who or which has entered into, residing in, present in, who or which has pervaded **ii** who has entered into, i.e. who has assumed **iii** which has entered or spread everywhere **Bi** who or which has entered or gone into **ii** which is entered into by **iii** which is possessed by **iv** which is resorted to **2** who or which has reached or attained (the status) **3A** entered in, i. e. mixed or mingled with **B** absorbed in, involved or engaged in, associated with **C** who or which has entered, i. e. joined or adapted **Di** which has entered in, i. e. appeared in (by becoming a part) **ii** included in or united with **iii** which is included **E** entered into, i. e. joined together, inter-woven **4** who has entered subsequently or afterwards, who has followed **5** who has entered into (the mind for winning the confi-dence) **6** which has entered into, i. e. is understood **1Ai** who or which has entered into, residing in, present in, who or which has pervaded एकाष्टकायै हविषा विधेमर्तून् पञ्चानुप्रविष्टा AV.(P.) i. 106.2; सप्त सूर्या दिवमनुप्रविष्टास्तान् पथेवान्वेतु दक्षिणावान् AV.(P.) v. 6.1; <u>स</u>प्त सू<u>र्या</u> दि<u>व</u>मनु-प्रविष्टाः TaiĀ. i. 7.4 (44.2) (Sāy. आरोगादयः सप्त सूर्याः … अनुप्रविष्टाः अनु-क्रमेण व्याप्ताः); अमोऽसि प्राण तद्दृतं ब्रवीम्यमा ह्यसि सर्वमनुप्रविष्टः MantrBr. ii. 1.14 (Guṇaviṣṇu सर्वगतोऽसि); KauśīGS. iii. 5.2; स एष प्राण एव प्रज्ञात्मेदं शरीरमात्मानमनुप्रविष्ट आ लोमभ्य आ नखेभ्यः ŚāṅkhāĀ. 6.20 (25.22); Kauṣī-BrU. 4.20; यदेष सर्वाणि भूतान्यनुप्रविष्टः Śaunako. 5.6; यथा मदो नवस्त्रीणां यथा वा माधवानिलः। अनुप्रविष्टः क्षोभाय तथासौ योगमूर्तिमान् MārkP. 46.10 KūrmaP. 42.4 (1.4); चेतनस्य चायमात्मनः शरीरेऽनुप्रवेशः श्रूयते, अनुप्रविष्टस्य चेतनत्वश्रवणात् BrahmSūBh (Śaṅ.) 254.11 (*on* i. 4.15); 307.13 (*on* ii. 1.13); स एषः प्रज्ञानरूप आत्मा ब्रह्म … अन्तःकरणोपाधिष्वनुप्रविष्टः AitUBh. 291.17 (*on* 5.3); अग्निः यथा एक एव प्रकाशात्मा सन् भुवनम् … अयं लोकः, तमिमं प्रविष्टः अनुप्रविष्टः … प्रतिरूपो बभूव KāṭhUBh. 164.14 (*on* 5.9); यस्मिन् परा देवता … जीवेन आत्मना अनुप्रविष्टा ChāndoUBh. 450.1 (*on* vii. 15.1); आकाशाद्यन्नमयान्तं कार्यं सृष्ट्वा अनुप्रविष्टस्य … अनात्मसु आत्मविभ्रमः विनश्यति TaiUBh. 277.13 (*on* 2.8); आत्मस्वरूपम् … भोक्तृत्वकर्तृत्वेनेहानुप्रविष्टम् PraśnaUBh. 279.12 (*on* 4.9); सर्वत्र ब्रह्मैवानुप्रविष्टम् BṛĀraUBh. 132.15 (*on* i. 4.10); 183.11 (*on* i. 5.11); कौक्षेयं हि ज्योतिर्जीवभावेनानुप्रविष्टस्य परमात्मनो विकारः Bhām. 152.21 (*on* i. 1.24); धार्तराष्ट्रानां यौधिष्ठिरेष्वनु-प्रविष्टानां चासुरांशानां संहारेण भूभारावतरणम् … स्वेनैव करिष्यमाणं पार्थाय दर्श-यामास GītāBh.(Rā.) 550.2 (*on* 11.26); सर्वत्रानुप्रविष्टात् … सूत्रात्मसंज्ञाद् व्यवहरति जगद्भूर्भुवःस्वर्महान्तम् ŚatŚlo. 55; एक एतदनुप्रविष्टो बहुधा यथासीत् BhāgP. iii. 5.6; ii. 9.34; आभासात्मनि अस्मिन् असंवेद्यमपि आभासान्तरम् … अनुप्रविष्टम् PratyabhiVi. ii. 63.2 (*on* ii. 2.7); य एवं रोदितीति चेत् स्वात्मापि मध्ये नटस्यानुप्रविष्ट इति गलितोऽनुकार्यानुकर्तृभावः AbhinBhā. i. 275.24 (*on* 6.31); Kāvyānu.(He.) 72.21; सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम् इत्ये-वमादीनां वाक्यानाम् … विधिविषयभूतध्यानशरीरानुप्रविष्टब्रह्मस्वरूपेऽपि तात्पर्यमस्त्येव BrahmSūBh.(Rā.) 151.15 (*on* i. 1.4); प्रयातध्वनिपेशलध्वनिः …। अवाग्भ-वत्कोकिलवल्लभाननमनुप्रविष्टः VasaViKā. 7.48; ब्रह्म … भोक्तृशक्तिं चेतनां देवादिरूपेण विक्षिप्य तदन्तर्यामितयानुप्रविष्टं सत्तत्तत्कर्मफलं भोजयति VedāntKau. 170.2 (*on* ii. 1.26); सर्वश्रुतिसामरस्यविचारे सर्वेषां चिदचिद्वस्तूनामन्तर्यामितया अनुप्रविष्टः … शिव इति विज्ञायते BrahmSūBh.(Śrī.) i. 551.4 (*on* i. 4.22); ŚivārkaMaDī. i. 551.9 (*on* i. 4.22); सृष्ट्वेदं निखिलं जगत्। अनुप्रविष्टस्तत्रासौ KathāKau. 15.9; **1Aii** who has entered into, i.e. who has assumed <u>स</u> योऽ<u>यं</u> कुमा<u>रो</u> रू<u>पा</u>ण्यनु<u>प्र</u>विष्ट <u>आ</u>सीत्तमन्वैच्छत् ŚatBr. VI. ii. 1.1; त्वमेकोऽसि <u>ब</u>हूननुप्रविष्टः TaiĀ. iii. 14.3 (349.2) (Sāy. 'अनुप्रविष्टः' तत्तदानुकूल्येन पृथग्रूपाणि धृत्वा तत्र तत्र स्थितः); स हि उष्णिमा … देहमनुप्रविष्टस्य चैतन्यात्म-

ज्योतिषः लिङ्गम् ChāndoUBh. 171.14 (*on* iii. 13.8); (तम् ··· देवम्) अनुप्रविष्टं शरीरानुप्रविष्टम् ŚrutaPra. ii. 109.20 (*on* i. 4.6); ŚivārkaMaDī. i. 308.14 (*on* i. 2.1); दिव्यं तेजो विद्युद्रूपमनुप्रविष्टम् Upask. 241.10 (*on* v. 2.9); **1Aiii** which has entered or spread everywhere मूलानि अनुसंततानि अनुप्रविष्टानि GītāBh.(Śaṅ.) 434.3 (*on* 15.2); **1Bi** who or which has entered or gone into ओषधयः सोमराज्ञीः प्रविष्टाः पृथिवीमनु TaiS. IV. ii. 6.5 (better *adn.*); तत्राद्भुतं भारत सूतपुत्रश्चक्रे चक्रे भूमिमनुप्रविष्टे MahāBhā. viii. 1151*(2); iii. 186.123; (राजव्रजे) परचक्राटवीभयादनुप्रविष्टानां पशूनां पालनधर्मेण दशभागं दद्युः ArthŚā. i. 313.3 (2.29); ii. 140.4 (4.5); ii. 357.1 (7.17); ते ··· भोजनमण्डपमनुप्रविष्टाः Tantrākhyā. 5.4; PañcT. 1.6(5) (16.4) (v.l.); (पिङ्गलकः) पुनस्तस्मिन्नेव वने शिबिरमनुप्रविष्टः Tantrākhyā. 13.21; PañcT. 1.54(32) (46.2); Tantrākhyā. 82.10; PañcT. 2.77(7) (249.3); (रामलक्ष्मणौ) स्वभवनमनुप्रविष्टौ PadmP.(Ra.) 107.67; हनुमान् ··· सुग्रीवमादाय ऋष्यमूकं नाम पर्वतदुर्गमनुप्रविष्टः AnarghaRā. 2.7(5); 4.14(23); तथा च दिनेन्दुरादित्यस्य धामन्यन्तरनुप्रविष्टः ··· स्वयमशेषं भुवनमाक्रान्तवान् UdaySuKa. 8.21; योषिद्वपूंषि ··· यथावत्स्वात्मभिरनुप्रविष्टाः स कनकरेखाद्याः ।··· अद्राक्षीत्ता निजप्रियास्तिस्रः KathāSaSāg. v. 3.272; (उपनिषद् देवी) मन्दराभिधाने शैले विष्णोरायतने ··· अनुप्रविष्टा PraboCan. 6.9 (105.9); पिशिताशनानाम् ··· कुक्षिमनुप्रविष्टाः । विनिर्ययुः कण्ठपथेन तेषाम् ··· खगेन्द्राः RāghPāṇ. (Ka.) 4.28; कस्ते प्रतापं सोढुं समर्थः । येन त्वां दृष्ट्वा दूरतोऽपि चौरोऽयं तद् दुर्गम् अनुप्रविष्टः Pañcā. 45.2; अदर्शि मया ···। अर्हन्नजितदेवाख्यः ···। विन्यस्यन्वसुपद्मेषु नवसु क्रमपुष्करे । जितेष्वनुप्रविष्टेषु सेवितुं शेवधिष्विव SamarāSaṁ. 3.53; कायस्थस्य च शल्यस्य कायस्थस्य च सा गतिः । याभ्यामनुप्रविष्टाभ्यां दूष्यन्ते सर्वधातवः SūktiRa. 115.4; वागादयश्च तत्रान्नार्थमनुप्रविष्टाः AṇuBh. 166.3 (*on* ii. 4.22); प्रतिफलितं यत्तेजः सवितुः कांस्यादिपात्रेषु । तदनु प्र(? तदनुप्र)विष्टमन्तर्गृहमन्यार्थान् प्रकाशयति PraboSu. 117; वनसिंहन्यायविषयतया वनानुप्रविष्टसिंहस्य तदननुप्रविष्टसिंहादिव ŚivārkaMaDī. i. 134.5 (*on* i. 1.2); ii. 246.19 (*on* iii 2.14); नाविको नावमनुप्रविष्टोऽपि न ताम् ··· अधितिष्ठति PūrvottaVāNaMā. 200.8; आः पाप, चिरस्य खलु कालस्य मञ्जुजपञ्जरान्तरमनुप्रविष्टोऽसि AdbhuDa. .3.19(7); अत्र विहारे कथमनुप्रविष्टः ŚṛṅgāSar. 106(1); **1Bii** which is entered into (by) तत्र स्तम्भे समाधूय परिव्राट् सालभञ्जिकाम् । अनुप्रविष्टां प्रियया कलावत्या ददर्श ताम् KathāSaSāg. xviii. 2.174; अधारयत् ··· नृपात्मजः केशकलापमायतम् । दृढानुरागच्छुरितैर्मृगीदृशामनुप्रविष्टं हृदयैरिवान्तरा MadhuVi. 3.15; **1Biii** which is possessed by एवं तयोरुभयतोः(? तः) स्कन्धयोः कर्षतोः शवः । वेतालानुप्रविष्टः सन्नमुञ्चद्भैरवं रवम् KathāSaSāg. xii. 6.290; **1Biv** which is resorted to एवं च सौगतसौहार्दभयपलायितेन द्वैवर्गिकमतमहादुर्गमेवानुप्रविष्टम् ŚatDū. 94.29; **2** who or which has reached or attained (the status) योऽयं वरो गूढमनुप्रविष्टः KāṭhU. 1.29 (Śaṅ. गूढं गहनं दुर्विवेचनं प्राप्तः अनुप्रविष्टः); तं दुर्दर्शं गूढमनुप्रविष्टम् ···। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति KāṭhU. 2.12; KāṭhUBh. 129.10 (*on* 2.12); VedāntKa. 138.23 (*on* i. 2.12); विभास्वरा ब्रह्मनाडी ··· रस्मि(? श्मि)भिरेकीभूता आदित्यमण्डलमनुप्रविष्टा BrahmSūBh.(Bhā.) 232.9 (*on* iv. 2.16); तत्स्थानमनुप्रविष्टस्य चञ्चलता न भवति RājMār. 54.4; हन्तैवमास्तिकपदवीमनुप्रविष्टोऽसि ŚatDū. 151.20; **3A** entered in, i.e. mixed or mingled with यथोदके तोयमनुप्रविष्टं तथात्मरूपो निरुपाधिसंस्थितः PaiṅgU. 425.16 (4.11); अन्योन्यानुप्रविष्टानि सर्वाण्येतानि निर्दिशेत् SuśruS. iii. 1.21; सम्यक् स्निग्धस्विन्नस्य पुनर्नवीभूता दोषाः शोणितमनुप्रविष्टाः सम्यक् प्रच्यवन्ते AṣṭāSaṁ. i. 176.15 (1.36); द्वे अपि सरितावस्यां (नगर्यां) गङ्गामनुप्रविष्टे ViviTīKa. 72.6; **3B** absorbed in, involved or engaged in, associated with (हनुमान्) न त्वेव सीताम् ··· ददर्श ··· भर्तुर्मनः श्रीमदनुप्रविष्टाम् Rāmā. v. 4.21; तथागतः कृतकृत्यः ··· सर्वबुद्धधर्मनयानुप्रविष्टः ··· लोकमवलोक्यैवं चिन्तयति स्म LaliVi. 26.0(2); शान्ता ये कृतस्वस्वव्यापाराः अतीतेऽध्वनि अनुप्रविष्टाः RājMār. 47.6; (रत्याम्) यस्यां स्वात्मापि तद्वासनावत्त्वादनुप्रविष्टः Kāvyānu.(He.) 79.16; आत्मन्यनुप्रविष्टं चित्तं नापेक्षते पुनर्विषयान् PraboSu. 153; याज्ञवल्क्यविजिगीषया तेन सह जल्पकथायाम् ··· प्रवर्तमानेष्वनुप्रविष्टा गार्गी ··· प्राक्पृष्टमेव पृष्टवती ŚivārkaMaDī. i. 419.30 (*on* i. 3.9); **3C** who or which has entered, i. e. joined or adapted सः ··· पथिकसार्थं वैदिशगामिनम् अनुप्रविष्टः Mālavikā. 5.9 (57); अमी स्वामिनं परित्यज्य मच्चक्रमनुप्रविष्टाः Tantrākhyā. 57.3; वामदेव, त्वमपि भगवन्तं गाधिनन्दनमनुप्रविष्टोऽसि AnarghaRā. 1.29(2); कथमनुप्रविष्टः परपक्षम् (अङ्गदः) AdbhuDa. 1.26(10); **3Di** which has entered in, i.e. appeared in (by becoming a part) सकलश्च राजेति शब्दो राज्येऽनुप्रविष्ट इति स यौगिको युक्तः TantrVā. 592.6 (*on* ii. 3.3); शरीरेऽपि समवायिकारणतां पृथिव्यवयवानामेवाचक्ष्महे तदाश्रिततत्वस्यास्य प्रत्यक्षेण ग्रहात्सहकारिकारणत्वानुप्रविष्टभूतान्तरसंबन्धनिबन्धनस्ततः सिद्धः NyāyMañ. ii. 47.19; आत्मतत्त्वं त्रयीशिरोवाक्यमनुप्रविष्टाः । वदन्ति शब्दाः SaṁkṣeŚā. 2.97 (ii. 61.15); 'तया स पूतश्च विभूषितश्च' इत्येकेन दीपस्थानेन दीपनाद्दीपकमत्रानुप्रविष्टम् Loc. 210.8 (*on* 3.37); आक्षेपे इष्टनिषेधेऽनिष्टविधौ चानुपपद्यमानत्वाद्विरुद्धत्वमनुप्रविष्टम् AlaṅkāSa. 121.13; 199.5; अत्र ··· वाक्यमध्ये ··· वाक्यान्तरमनुप्रविष्टमिति वाक्यगर्भितत्वम् PratāYaBhū. 307.7; प्रमाणमनुप्रविष्टस्य शिवे श्रुतस्य सार्वज्ञ्यादेस्तदननुप्रविष्टाद्देवतान्तरे श्रुतात्सार्वज्ञ्यादितः प्रबलत्वेन तत्साम्यापादनायोगात् ŚivārkaMaDī. i. 134.6 (*on* i. 1.2); **3Dii** included in or united with प्रपितामहाय पिण्डः सपिण्डीकरणादूर्ध्वं न दीयते यतस्तेष्वेवानुप्रविष्टः ManuBh. i. 311.30 (*on* 3.238); मध्यं हि पूर्वापरांशसाधारण्यात् कुत्रानुप्रविष्टमिति संदिह्यते ŚrutaPra. iB. 342.21 (*on* i. 2.26); प्रयोगमध्ये ऋत्विगशक्तावनुप्रविष्टस्यापि ऋत्विक्त्वं स्यात् ManvaVi. 206.16 (*on* 2.143); ननु व्यवहारनियमसमयबन्ध एव सत्ताभ्युपगमोऽनुप्रविष्टः ŚatDū. 79.7; व्रीहिसदृशेषु नीवारेष्वनुप्रविष्टा ये व्रीह्यारम्भयोग्यावयवास्त एव ··· उपादीयन्ते ŚivārkaMaDī. ii. 424.27 (*on* iv. 1.1); **3Diii** which is included साधनजातं तेनानुप्रविष्टमेव । यथा शरीरेन्द्रियादिः BrahmSūBh.(Ma.) 26A.8 (*on* ii. 1.21); **3E** entered into, i.e. joined together, interwoven पटादेर्हि तन्त्वाद्यवयवा इतरेतरमनुप्रविष्टा दृश्यन्ते VedāntKa. 377.20 (*on* iii. 2.22); **4** who has entered subsequently or afterwards, who has followed कृष्णस्यानु प्रविष्टास्तु (v.l. अनुप्रविष्टास्तु PW.) बलाद्या यादवास्तथा HariVaṁ. App.I. 29B (416); त्वां चैवानुप्रविष्टोऽहमिमं प्रासादमुत्तमम् MārkP. 21.52; व्याघ्रोऽप्यनुप्रविष्टस्तं जातोऽथ स्वर्गपूरुषः KumāDeC. 5.33; KumāPraPra. 48.26; **5** who has entered into (the mind for winning the confidence) कृतलक्षणद्रव्येषु ··· कर्म कारयेयुः, अनुप्रविष्टान् (v.l. °ष्टाः KANGLE's Ed.) वैकत्र ग्राहयेयुः ArthŚā. ii. 140.4 (4.5); ii. 140.8 (4.5); **6** which has entered into, i.e. is understood अत्र लक्ष्यार्थोपलक्षणतया विभक्तिरनुप्रविष्टा ŚrutaPra. iA. 16.16 (*on* i. 1.1)

**अनुप्रविष्टचरत्व** (anupraviṣṭacara-tva) *n.* the state of being entered, i. e. merged into (single organism) विश्लेषेऽप्यनुसंधानमवगतम् इति वाच्यम् । तत्रापि शिरःकबन्धयोरेकस्मिन् अवयविन्यवयवभावेनानुप्रविष्टचरत्वात् SiddhāLeSaṁ. 331.3.

**अनुप्रविष्टण्यर्थ** (anupraviṣṭa-ṇyartha) *adj.* whose meaning of *ṇic* (causative affix) has entered into (the mind), i.e. is understood (उपपूर्वाद्रमतेरन्तर्भूतण्यर्थात् परस्मैपदं स्यात्) अन्तर्भूतण्यर्थादिति । बुद्ध्यादावनुप्रविष्टण्यर्थादित्यर्थः Prasā. ii. 393.19.

**अनुप्रविष्टता** (anupraviṣṭa-tā) *f.* the state of being that which has pervaded तदैक्षतेत्याद्युक्ताभिध्यानस्य तत्तत्कार्येषु 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यनुप्रविष्टतया श्रुतपरमात्मलिङ्गत्वात् स एव सर्वत्रोपादानम् ŚrutaPra. ii. 354.12 (*on* ii. 3.17)

**अनुप्रविष्टत्व** (anupraviṣṭa-tva) *n.* the state of being that which is pervaded by न तत्साधनं स्वतन्त्रं प्रेरणार्थं भगवतानुप्रविष्टत्वात् यथा शरीरेन्द्रियप्राणादिः TattvPrakā. 88B.2 (*on* ii. 1.21)

**अनुप्रविष्टबोध** (anupraviṣṭa-bodha) *m.* knowledge which is included in (the totality of causes) सामग्र्यनुप्रविष्टबोधः ··· क्वचित्प्रत्यक्षे ··· प्रमाणतां प्रतिपद्यते NyāyMañ. i. 14.23.

**अनुप्रवृज्** (anu-pravṛj-) VII. P. to throw or put into (the fire) subsequently तेनोऽ अप्यात्मानं नानुप्रवृणक्ति ŚatBr. I. viii. 3.19; I. ix. 2.17; मनो मे हार्दि यच्छेति तथो होपयष्टात्मानं नानुप्रवृणक्ति ŚatBr. III. viii. 5.5; काम्यमग्निं कुर्वाणो नाहवनीयेऽनुप्रवृञ्ज्यात् HirŚS. xi. 3.13 (26.18)

**अनुप्रवृत्** (anu-pravṛt-) I. Ā. (rarely P.) **1A** to move after, to follow यं कुमार प्रावर्तयो रथं विप्रेभ्यस्परि । तं सामानु प्रावर्तत ṚV. x. 135.4; **1B** (*caus.*) to cause to move ahead, to lead उत्पत्नीमानयन्त्यन्वनाꣳसि प्रवर्तयन्ति TaiS. III. i. 3.1; VI. iii. 2.3; BaudhŚS. i. 195.6; ii. 155.3; ĀpaŚS. xi. 17.1; HirŚS. vii. 8.9 (735.16); VaikhāŚS. 14.15; **1C** to move or roll around तद् (महावीरस्य शिरः) द्यावापृथिवी अनुप्रावर्तत TaiĀ. v. 1.5 (591.11); (*caus.*) to cause to move or roll around द्वौ ··· न तथागतस्य धर्म्यं धर्मचक्रं प्रव[र्तय]तः [न] तमनुप्रवर्तयतः GiMs. iii(3). 54.4 [DBHS.]; **1D** to move along, to behave or act accordingly (कालम्) तं परिवर्तमानमन्योऽनुप्रवर्तते Nir. 13.18 = 14.5 (230.1); इन्द्रियाणां हि यस्मात् चरताम् ··· मनः अनुविधीयते अनुप्रवर्तते GītāBh.(Śaṅ.) 67.5 (*on* 2.67); अधिष्ठितोऽसौ हि महेश्वरेण प्रवर्तते ···। अनुप्रवर्तन्ति महान्त एव चिरस्थिताः स्वे विषये प्रियत्वात् VāyuP. i. 5.19; ManuBh. ii. 215.24 (*on* 8.344); अस्येच्छया जगत्सर्वम् ··· स्वार्थे चानुप्रवर्तते BhaviP. 90B.32 (i. 48.25); (*caus.*) to cause to behave or act accordingly स्वभक्तवश्येन हरिणा स्वानुग्रहशक्तिः प्रायेण तेभ्यो दत्तास्ति ···। तैरनुगृहीते तु जने सोऽपि तमनुप्रवर्तयति GoviBh. 254.10 (*on* iii. 3.51); **2** to proceed in due order (of rites) चातुर्मास्यानाम् ··· वैश्वदेवोऽग्निष्टोमः प्रातःसवनीयान् वैश्वदेवहवींष्यनुप्रवर्तेरन्

KāṭhŚSSaṁkalana 28.25; 29.4; 29.6; 29.8; 29.11; **3A** to continue
to be in motion एवमयं द्वादशाङ्गः प्रतीत्यसमुत्पादः … अनादिकालप्रवृत्तोऽनु-
च्छिन्नोऽनुप्रवर्तते नदीस्रोतवत् ĀryaŚāS. 13.7; **3B** (*caus.*) to cause to
continue (with discussion) प्रासङ्गिकमभिधाय, यत्प्रकृतं तदेवानुप्रवर्तयति BṛĀra-
UBh. 572.16 (*on* iv. 3.22)

**अनुप्रवृत्त** (anu-pravṛtta) *adj.* [*f.* -ā] **1** which has continued, i.e.
is similar अनुप्रवृत्तेति यथाभिन्ना बुद्धिः प्रतीयते।… तथा तत्त्वेन गृह्यते VākyaPa.
3(1).99 (Vṛtti केवलं भिन्नापि सती बुद्धिरनुप्रवृत्ता अनुगता अभिन्ना); **2Ai** which
has been moving or flowing towards नद्यः अन्याश्च यां यां दिशमनुप्रवृत्ताः,
तां तां न व्यभिचरन्ति BṛĀraUBh. 448.7 (*on* iii. 8.9); **2Aii** which
has been moving or flowing continuously गङ्गोर्मिभिर्मन्दमनुप्रवृत्तैर्गच्छन्
पुरस्तादथ तच्छताङ्गः।… गन्धद्विपस्यापजहार शोभाम् Gaṅgāva. 6.26; **2B** which
has reached, i.e. followed त्वां वर्तमानं नरदेवदेहेष्वनुप्रवृत्तोऽयमधर्मपूगः
BhāgP. i. 17.32; (ये भागवताः) ऐश्वर्यमष्टाङ्गमनुप्रवृत्तम्। श्रियं भागवतीं वा स्पृह-
यन्ति भद्रां परस्य मे तेऽश्नुवते तु लोके BhāgP. iii. 25.37 (Śrīdhara अणिमाद्य-
ष्टाङ्गमैश्वर्यमनुप्रवृत्तं भक्तिमनु स्वत एव प्राप्तम्); **2C** who has reached or
attained (a state) तस्मिन्नृपेन्द्रत्वमनुप्रवृत्ते … कुमारपालः प्रवभूव भूपः EI.
ii. 442.15; **3A** who has gone after or pursued पृष्ठत एव परोक्षमनुप्रवृत्तो
लुब्धकः BhāgP. iv. 29.54; **3B** who has proceeded further or set
forth ततोऽप्यनुप्रवृत्तेषु न्यूनं न्यूनतरं श्रुतम्। अस्मद्गुरुषु यादृक्षं तादृग् न मयि निष्प्रभे
PrabhāC. 26.28; **4A** who has followed or obeyed, i.e. is obedient
अनुप्रवृत्तेभ्यः पुत्रेभ्य इमां यथादायं विभज्य … भगवतो नारदस्य पदवीं पुनरेवानुससार
(प्रियव्रतः) BhāgP. v.1.38 (Śrīdhara अनुगतेभ्यः); **4B** who has acted
accordingly, i.e. has followed (प्रकृतिम्) अनुप्रवृत्तस्तु महांस्तदेनां चिरस्थिर-
त्वाद् विषयं श्रितः स्वयम् LiṅgaP. i. 70.83; जानामि …। त्वां राम गूढनिजरूप-
मनुप्रवृत्तो मूढोऽप्यहं भवदनुग्रहतश्चरामि AdhyāRā. vii. 1.63; **4C** who has
already begun to act अनुमन्तानुप्रवृत्तस्य राजाद्यनुमतिमन्तरा हननादिसंपादकः
VīraMi. 920.18 (*on* 3.227)

**अनुप्रवृत्तत्व** (anupravṛtta-tva) *n.* the state of being that which
has continued subsequently नित्यानि होतुरिति गौतमः संघातादावनुप्रवृत्तत्वाद-
च्युतशब्दत्वाच्च ĀśvaŚS. II. i. 1.20 (comm. कर्तव्यतायामिदमप्यभ्यासे कारण-
मस्ति, संघातादावनुप्रवृत्तत्वादिति, आद्यमेवाहरारभ्य प्रवृत्तत्वात्)

**अनुप्रवृत्तधी** (anupravṛtta-dhī) *adj.* whose mind has followed
(Lord Kṛṣṇa) यस्य …। व्रजस्त्रियो दृग्भिरनुप्रवृत्तधियोऽवतस्थुः BhāgP. iii. 2.14.

**अनुप्रवृत्ति** (anu-pravṛtti) *f.* continuous presence or existence
अनुप्रवृत्तिधर्मो वा जातिः स्यात् सर्वजातिषु। व्यावृत्तिधर्मसामान्यं विशेषे जाति-
रिष्यते VākyaPa. 3(1).14; अनुप्रवृत्तिरूपां यां प्रख्यातामाकृतिं विदुः VākyaPa.
3(1).19.

**अनुप्रवृष्** (anu-pravṛṣ-) I.P. to rain continuously in abundance
सहग्रहणं योगविभागार्थं, तिङापि सह यथा स्यात् … अनुप्रावर्षत् KāśiVṛ. *on* ii.
1.4; अनुप्रावर्षत् …। तिङन्तेनात्र समासः Nyās. i. 339.11 (*on* ii. 1.3)

**अनुप्रवेश** (anu-praveśa) *m.* [= *anupraveśana* MW., GaṇPā. 7.6]
**1Ai** entrance or presenting oneself after (by way of surrender)
**ii** act of entering in, entrance, going in, penetration **iii** en-
trance (with criminal intent), tresspass **iv** entering (enemy's
party), infiltration **B** entrance (through mind), absorption **2A**
presence, existence, i.e. pervasion **B** merger (with each other) **C**
inclusion, association, becoming a part of, incorporation **3** entering
after, following **4** taking resort to, use **1Ai** entrance or present-
ing oneself after (by way of surrender) स्तेनोऽनुप्रवेशान्न दुष्यते VāsiDS.
19.38; **1Aii** act of entering in, entrance, going in, penetration
कौन्तेयश्चिन्तयामास …। अनुप्रवेशे राज्ञस्तु वनवासो भवेन्मम MahāBhā. i.
205.17; गुरोरनुप्रवेशो हि नोपघातो यवीयसः MahāBhā. i. 205.27; पितुः
प्रयत्नात्सः (रघुः) …। पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः Raghu-
Va. 3.22; अमङ्गल्यदिनारम्भे सुतृप्तो वपते च यः। क्षेत्रेष्वनुप्रवेशं वै करोत्यन्तोपसङ्गिषु
MārkP. 51.82; पवमानसखः (अग्निः) … चकार विद्युद्व्यपदेशेन घनेष्वनुप्रवेशम्
ŚiśuVa. 20.72; अञ्जनादिसंस्कृतनयनप्रभायाः पृथिव्यादावनुप्रवेशात् तदक्तचक्षुषां
निधिप्रभृतेरुपलम्भः NyāySiA. 195.5; पूर्वपूर्वभूतगुणानामुत्तरोत्तरभूतेष्वनुप्रवेशः
SiddhāBi. 95.2; **1Aiii** entrance (with criminal intent), tresspass
साहसानुप्रवेशकलहविवाहराजनियोगयुक्ताः पूर्वरात्रव्यवहारिणां च रात्रिकृताः (व्यव-
हाराः) सिध्येयुः ArthŚā. ii. 3.1 (3.1); ii. 108.2 (3.19); **1Aiv** entering
(enemy's party), infiltration बलवता विगृहीतस्य तदनुप्रवेशो विदेशगमनं वा
Tantrākhyā. 91.8; PañcT. 3.1(24) (275.5); ŚiśuVa. 9.48; जितस्य सेवा
स्वगता छद्मगा प्रतिबिम्बगा।… प्रतिबिम्बगता यथा — मुखजितश्चन्द्रः कपोलप्रतिबिम्ब-
तयानुप्रवेशं चक्रे KāvyKaVṛ. 132.27 (4.5); **1B** entrance (through
mind), absorption सत्त्वेनानुप्रवेशो हि योऽयं त्वयि कृतो मया MahāBhā. xii.
308.167; नाप्यन्यत्र सिद्धप्रामाण्येऽभ्युपायेऽनधिकारेणास्मिन्ननन्यगतिकतयानुप्रवेशः
NyāyKuA. i. 135.2; राज्ञोऽस्य व्यसनं यस्माद्वारितस्याधिकीभावेत्। तस्मादनुप्रवेशस्य
सिद्ध्यै कालं हराम्यहम् KathāSaSāg. vi. 5.68; **2A** presence, existence,
i.e pervasion हेमपात्रगतं दोर्भ्यामादधानः पयश्चरुम्। अनुप्रवेशादाद्यस्य पुंसस्तेनापि
दुर्वहम् RaghuVa. 10.51; BrahmSūBh.(Śaṅ.) 327.4 (*on* ii. 1.21);
अमृतम् अमृतत्वं मोक्षो न भवेत् अननुप्रविष्टस्य दर्शनासंभवात्। तथा च तदर्थमेव
अनुप्रवेशं दर्शयति — 'रूपं रूपम्' इति SanatBh. 299.10 (*on* 4.11); यदा तु
विकल्पेन तानि वस्तूनि बाढमुल्लिखति तदा पौनःपुन्यविशिष्टसुखतद्धेतूल्लेखनाभिधान-
कारणाभासानुप्रवेशात् … सुखी अहमित्यादिकेन स्थितिः PratyabhiVi. i. 407.2
(*on* i. 8.4); जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि इति परमात्मानु-
प्रवेशात् BrahmSūBh.(Rā.) 173.13 (*on* i. 1.6); VedāntKa. 193.19 (*on*
i. 3.41); अन्तः प्रविष्टः शास्ता … इति नियमनार्थत्वादनुप्रवेशस्य प्रधानस्याचेतनस्यैवं-
रूपोऽनुप्रवेशो न संभवति BrahmSūBh.(Rā.) 364.15 (*on* i. 4.15); अनुगति-
रनुप्रवेशः।… 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यादिना वागाद्यभिमानित्वेनाग्न्यादी-
नामनुप्रवेशः श्रूयते BrahmSūBh.(Rā.) 406.18 (*on* ii. 1.5); ब्रह्मभावशब्देन
ब्रह्मानुप्रवेश उच्यते। ब्रह्मणस्तत्र भावो ह्यनुप्रवेशः ŚrutaPra. ii. 350.8 (*on* ii.
3.17); आत्मनः शरीरपरिमाणत्वे मूर्तत्वानुषङ्गात् शरीरेऽनुप्रवेशो न स्यात्। मूर्ते
मूर्तस्यानुप्रवेशविरोधात् SyādvāMañ. 9 (107); अनुप्रवेशादेव हि अनन्तविष्व-
क्सेनादेरपि संकर्षणाद्यात्मकत्वमुच्यते NyāySiA. 234.15; यो धूमवानसावग्निमानिति
व्याप्यव्यापकभावोऽपि न स्यात्। विशेष्यांशस्योभयत्रानुप्रवेशात् NyāySu.(Ja.) 7A.5
(*on* i. 1.1); 'अनेन जीवेनात्मना' इति जीवब्रह्मणोश्चानुप्रवेशः AṇuBh. 106.8
(*on* i. 4.9); 111.4 (*on* i. 4.16); ŚivārkaMaDī. i. 567.18 (*on* i. 4.27);
**2B** merger (with each other) तेजसी भास्कराग्नेये प्रकाशोष्णस्वरूपिणी।
परस्परानुप्रवेशादाप्यायेते दिवानिशम् ViṣṇuP. ii. 8.23; यदनयोर्मिश्रत्वं दिवाग्ने-
रनुप्रवेशान्नक्तं चादित्यस्येति केवलेज्या न युक्ता TantrVā. 30.9 (*on* i. 2.12);
VedāntDī. 83.12 (*on* ii. 1.5); तृतीयकक्ष्यामेव भाविकोटिपतितामपि पुरुषार्थसंपत्तिम्
अकालकलितस्वरूपानुप्रवेशेन स्वामीकृताम् अभिमन्यमाने PratyabhiVi. i. 46.1
(*on* i. 1.1) (Bhāsk. निजं स्वरूपम् तत्रानुप्रवेशेन स्वभावबलसिद्धेनावेशेन); तत्र
दिव्यासु अप्सु दिव्यानां तेजसामनुप्रवेशो विस्फुर्जथुर्लिङ्गम् Upask. 241.6 (*on* v.
2.9); यस्य प्रतापानळज़ृ [Read नलन्जृ]भमाणज्वालाजटाले भुवनांतराले परंतप[*:]
[प्र]ापदनुप्रवेषं [Read शं] पत्यर्ति [Read प्रत्यर्थि] पृथ्वीपतिहृद्दरीषु EI. xvi. 349.29;
**2C** inclusion, association, becoming a part of, incorporation इतान्ध-
कारशब्दः शौण्डादिषु पठ्यते। शौण्डादीनामाकृतीकृतत्वात्तत्रास्यानुप्रवेशोऽवगन्तव्यः
Sphuṭā. i. 4.1 (*on* 1.1); i. 11.2 (*on* 1.2); (पदार्थः) पदार्थसंसर्गात्मके
वाक्यार्थे न गुणत्वेन प्रधानत्वेन वानुप्रवेशमर्हति BrahmSi. 23.14; ब्रह्मभावश्च मोक्षः।
तस्मान्न संस्कार्योऽपि मोक्षः।… क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते Brahm-
SūBh.(Śaṅ.) 26.2 (*on* i. 1.2); ब्राह्मणकर्तृकस्य ज्योतिष्टोमस्य पयोव्रतता। सत्यपि
क्रत्वर्थत्वे पुरुषप्रधानत्वान्निर्देशस्य पुरुषद्वारेण क्रतावनुप्रवेशः ṬupṬ. 32.18 (*on*
iv. 3.9); यदुक्तं मन्तव्य इति तर्कस्यानुप्रवेशं श्रुतिः श्रावयतीति BrahmSūBh.
(Bhā.) 90.19 (*on* ii. 1.6); यथा चाश्वमेधावभृथस्यान्यत्रानुप्रवेशो न संभवति तथा
प्रदर्शितमेव BālaKrī. ii. 101.22 (*on* 3.239 (?245)); i. 92.13 (*on* 1.96);
न च स्वर्गादिकार्याणां प्रयाजार्थसमानता। अनुप्रवेशः कल्प्येत येन कार्यान्तरं प्रति
BṛĀraUBhVā.(Sambandha.) 409; भावार्थः … आत्मविधिसिद्ध्यर्थमनुप्रवेश-
मप्यकाङ्क्षन् … पुंसोऽधिकारतां प्रतिपादयन् … अन्वयं प्रतिपद्यते ManuBh. i. 464.29
(*on* 5.89); येषां पुनः पदार्थान्वयमुखेनानुप्रवेशोऽभिमतः, तेषाम् … प्रकृतावेव निवेशः
PrakaPañ. 460.28; विश्लिष्टानामल्पत्वादित्युपलक्षणं द्रव्यान्तरपरमाणूनामनुप्रवेशा-
दित्यपि द्रष्टव्यम् Bhām. 488.9 (*on* ii. 3.26); सान्तरत्वादवयविद्रव्याणां
तदविनाशेनाग्नेर्योऽनुप्रवेशः सोऽप्रतिघात इति TātpaṬ.(Vā.) 526.7 (*on* iii.
1.50); विचित्रत्वात् कार्यस्य कारणेनापि विचित्रेण भवितव्यम्। न च तत्स्व-
भावतस्तथा। ततः सहकारिवैचित्र्यानुप्रवेशः NyāyKuA. i. 22.1; वर्णा-
देर्जातिशरीरानुप्रवेशाज्जातिलक्षण एव निरूपणं युक्तं दृश्यते।… जातिर्नाम स्वरसमूह-
मात्रम्। पदसंबन्धाधीनस्तु वस्तुवर्णव्यवहारः AbhinBhā. iv. 79.4 (*on* 29.14);
औष्ठ्यकण्ठ्यादीनामिहानुप्रवेशो भवति (श्रुत्यनुप्रासे) Sara-
iv. 2.23 (*on* 28.2); अन्येषां तु सद्यके। अनुप्रवेशाद् वक्त्राणां वक्त्रैकीकरणं स्मरेत्
Kaṇṭhā. 235.3;
ĪśānŚiPa. i. 14.144; ii. 15.3(10); पूर्वभाविशुभानां हि ज्ञानेनैव कृतार्थता।
प्रारब्धानां तु भोगेन, तज्ज्ञानोत्तरकर्मणाम्। मुक्तावनुप्रवेशः AnuVyā. 61B.11
(*on* 3.4); एकपिण्डता चैकस्यां पिण्डदानक्रियायां दातृत्वेन देवतात्वेन लेपभाक्त्वेन
वानुप्रवेशाद्भवति SmṛtiCan. i. 180.9; ब्रह्मणीव वेदार्थत्वाद्धर्मेऽप्यनुभवापेक्षा-
यामस्या[मन्यस्या]नुप्रवेशो भवतु PrakaVi. 45.17; ग्रन्थनिर्माणे पुरुषान्तराणामन्व-
नुप्रवेशात् ŚrutaPra. ii. 337.25 (*on* ii. 2.42); (अलंकारः) विरोधाभिधो
दशधा।… आक्षेपे विरुद्धत्वादनुप्रवेशेन विरोधगर्भालंकारनिरूपणस्य संप्रति प्रस्तावः
Ekāva. 8.33(1) (276.4); नाटके … शृङ्गारवीररसयोरन्यतरस्य प्राधान्यम्।

अन्येषां रसानामङ्गत्वेनानुप्रवेशः PratāYaBhū. 103.4; स्वर्गकामादौ पत्न्याः सहत्वेनानुप्रवेशेऽपि न द्विवचनापत्तिरेकत्वविरोधो वा TattvCin. iv(2). 796.12; प्रायः पुरुषेण भवितव्यमिति पुरुष एवेत्यभिप्रायश्चेति यथोचितं प्रत्यक्षानुमानादिष्वनुप्रवेशः NyāyPari. 68.5; 262.9; 480.1; 493.4; अनन्तपयोनिधौ पयोबिन्दुसंनिपातवत् संसारिवर्गे पूर्वमुक्तेषु पश्चान्मुक्तानामनुप्रवेशः NyāySiA. 216.5; स्वाध्याययोगयोश्च यथावसरं मात्रया सर्वत्रानुप्रवेशः प्रागेव दर्शितः PāñcRāRa. 158.11; वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशः संकीर्णत्वम् SāhiDa. 412.1; 631.9; आज्ञाक्रये उक्तालाभक्रये च ज्ञात्यादीनामनवकाशः नानुप्रवेशः VyavaNi. 361.5; तत्पदादिवाच्यसार्वज्ञाद्युपलक्षिताभेदबोधने तु सखण्डार्थत्वम्। सार्वज्ञादेः प्रकारत्वेनानुप्रवेशात् Nyāyāmṛ. 483A. 8; 620B.3; गोत्वत्वम् ··· सकलगोसमवेतत्वम्। तथा च गोव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशात्तथैव गौरवम् SiddhāMu. 48.12 (*on* 81); (आत्मनि) आनन्दमये ··· दुःखस्यानुप्रवेशो नास्ति ŚivārkaMaDī. i. 122.24 (*on* i. 1.2); एकस्मिन्वाचकेऽनुप्रवेशो वाच्ययोरेवालंकारयोः स्वारसिकः Kuval. 171 (316); धातोर्व्यापारशक्तावेव यत्नस्याप्यनुप्रवेशेन ··· स्वातन्त्र्येण यत्ने शक्तेर्मानाभावात् VaiyāBhū. 41.6 (*on* 7); (कारकान्तराण्यपि तु एककर्तृत्वानुप्रवेशीनि) कर्तृनिष्ठं यत्कर्तृत्वं तत्र अनुप्रवेशः उपकारकत्वेन पश्चात्प्रवेशः एषामस्तीति तादृशानि Bhāsk. ii. 205.17 (*on* ii. 4.20); वर्तिपदार्थस्यान्यपदार्थेऽनुप्रवेशात्प्राधान्यम् LaŚabdeŚe. ii. 94.17; **3** entering after, following तस्य निश्चित्य पातञ्जीं वृत्तिं भूयस्यरित्रजे। अनुप्रवेशं विदधे पदातिर्लक्ककाभिधः RājTa.(Ka.) 8.467; **4** taking resort to, use, cf. **अनुप्रवेशाभाव B** [imitation, MW.]

**अनुप्रवेशक** (anupraveśa-ka) *adj.* **A** penetrating (बोधिसत्त्वः) स्वचित्तवशवर्ती अनाभोगचर्यागतिं गतो विश्वरूपमणिसदृशः सूक्ष्मैः सत्त्वचित्तानुप्रवेशकैर्निर्माणविग्रहैश्चित्तमात्रावधारणतया भूमिक्रमानुसंधौ प्रतिष्ठापयति LaṅkāSū. 2.98(105) (20.6) [DBHS.]; **B** entering into (for nourishment) तेजस्विमण्डले मित्रे त्वां तत्रानुप्रवेशकम्। प्रवर्धमानं पश्यन्तु क्रमेणेन्दुमिव प्रजाः Kapphiṇā. 16.46.

**अनुप्रवेशकर्तृत्व** (anupraveśakartṛ-tva) *n.* the state of being an agent of entrance or pervasion परे तु जीवस्यानुप्रवेशकर्तृत्वम्, नामरूपव्याकरणकर्ता तु परमेश्वर इत्याहुः ŚrutaPra. ii. 405.5 (*on* ii. 4.8)

**अनुप्रवेशकृत** (anupraveśa-kṛta) *adj.* **i** caused by entrance or penetration into पाककाले ज्वलदनलशिखाकलानुप्रवेशकृतविनाशबलादपि शिशिरतरनीरकणनिकरानुप्रवेशकृतनाशप्रसङ्गः NyāyMañ. ii. 12.6; **ii** caused by entrance into, i.e. pervasion स्वात्मनो जीवस्य चात्मतयानुप्रवेशकृतं नामरूपभाक्त्वमित्युक्तं भवति BrahmSūBh.(Rā.) 442.15 (*on* ii. 1.15); अचिद्ब्रह्मणोस्तादात्म्यमनुप्रवेशकृतमस्तु, जीवब्रह्मणोस्तु स्वरूपैक्यकृतमेव स्यात् ŚrutaPra. iB. 60.16 (*on* i. 1.1)

**अनुप्रवेशक्रम** (anupraveśa-krama) *m.* [Inst.] during the process of entrance into (the *bhairavī mudrā*) वह्नेर्विषस्य मध्ये तु चित्तं सुखमयं क्षिपेत्।··· अत्र वह्निः अनुप्रवेशक्रमेण संकोचभूः, विषस्थानं प्रसरयुक्त्या विकासपदम् PratyabhiHṛ. 43.10(18)

**अनुप्रवेशतस्** (anupraveśa-tas) *adv.* because of (the moon's) entrance (into the sun) अनुदर्शमनुप्रवेशतस्तपनाच्छक्तिमवाप तापिनीम्। नियतं हिमदीधितिर्यतः क्षमते तापयितुं वियोगिनीः MadhuVi. 7.49.

**अनुप्रवेशदर्शन** (anupraveśa-darśana) *n.* observation of (a scriptural statement about) the entrance into or pervasion पृथिव्याद्यन्तर्यामितया श्रूयमाणः परमेश्वर एव, सर्वान्तरत्वादितद्धर्मव्यपदेशात्। अथर्वशिरसि च 'सोऽन्तरादन्तरं प्राविशत्' इति परमेश्वरस्यैव सर्वात्मतया अनुप्रवेशदर्शनात् BrahmSūBh.(Śrī.) i. 370.5 (*on* i. 2.19)

**अनुप्रवेशन** (anu-praveśana) *n.* [listed in the *anupravacanādigaṇa*, GaṇPā. 7.6] **A** entrance into or pervasion तद्विषयेणैव परेणात्मशब्देन शरीरादिकोशपरम्परया चान्तरनुप्रवेशनेन सर्वेषामन्तः प्रत्यगात्मानं निरधारयत् BrahmSūBh,(Śaṅ.) 251.9 (*on* i. 4.14); **B** act of causing (someone) to enter into विपिनेषु ··· अक्षद्यूतपक्षियुद्धयात्रोत्सवादिसंकुलेषु बलवदनुप्रवेशनैः अन्यैश्चाभ्युपायैरश्मकेन्द्रयुक्तास्तीक्ष्णगरसदादयः ··· अनन्तवर्मकटकं जर्जरमकुर्वन् DaśKuC. 137.16 [imitation, MW.]

**अनुप्रवेशनियम** (anupraveśa-niyama) *m.* rule of entering into (the mind), i.e. being known एका सा जातिः ··· एकस्यां बुद्धावनुप्रवेशादेवानुवृत्तिं लभते, तथा संस्थानमप्येकस्यां बुद्धावनुप्रवेशनियमादनुवृत्तमिति गीयताम् NyāyKu. 158.6.

**अनुप्रवेशनीय** (anu-praveśanīya) *adj.* [P. v. 1.111] ought to be included न पुनरेते (कारणगुणाः) व्याप्तावनुप्रवेशनीयाः Kāśi. i. 86.9 (*on* 2.39)

**अनुप्रवेशपक्ष** (anupraveśa-pakṣa) *m.* (Vaiśeṣika-) view regarding the entrance वेगवता वह्निद्रव्येण नोदनादभिघाताद् वा ··· द्रव्यविनाश इति, अनुप्रवेशपक्षेऽपि सूक्ष्मविवरपरिकल्पनादवश्यमवयवसंयोगविघटनं घटादेरिति विनाश एव NyāyMañ. ii. 11.23.

**अनुप्रवेशपूर्वक** (anupraveśapūrva-ka) *adj.* preceded by the entrance into, i.e. pervasion अनुप्रवेशश्रवणाभावेऽपि सामान्येनोक्तं नामरूपव्याकरणमनुप्रवेशपूर्वकनामरूपव्याकरणे पर्यवस्यति ŚrutaPra. iB. 76.25 (*on* i. 1.1); iB. 220.13 (*on* i. 1.13)

**अनुप्रवेशपूर्वकत्व** (anupraveśapūrvaka-tva) *n.* the state of being preceded by the entrance into, i.e. pervasion बहु स्यामिति ··· अस्मिन् वाक्येऽपि व्याकरणस्यानुप्रवेशपूर्वकत्वप्रतिपादनाच्च व्याक्रियमाणरूपस्य ब्रह्मविशेषणत्वमवगम्यते ŚrutaPra. iB. 61.15 (*on* i. 1.1); iB. 76.28 (*on* i. 1.1)

**अनुप्रवेशपूर्वकसृष्टि** (anupraveśapūrvaka-sṛṣṭi) *f.* creation preceded by entrance into, i.e. pervasion सृष्ट्यनुप्रवेशयोः पौर्वापर्यनियमोऽपि न विवक्षितः, अनुप्रवेशपूर्वकसृष्टिवचनात् सृष्टिपूर्वकानुप्रवेशवचनाच्च ŚrutaPra. ii. 170.27 (*on* i. 4.27)

**अनुप्रवेशप्रतिपादन** (anupraveśa-pratipādana) *n.* promulgation of the entrance into (अग्निर्वाग्भूत्वा मुखं प्राविशत्, इत्यादिना अचिद्वस्त्वभिमानिदेवतानुगतेश्च) अनुगतेरिति। अनुप्रवेशप्रतिपादनादित्यर्थः ŚivārkaMaDī. ii. 11.10 (*on* ii. 1.5)

**अनुप्रवेशप्रसङ्ग** (anupraveśa-prasaṅga) *m.* undesired occasion of inclusion महावयवारब्धत्वस्यापि व्याप्तावनुप्रवेशप्रसङ्गात् NyāySiA. 192.6.

**अनुप्रवेशभाज्** (anupraveśa-bhāj) *adj.* having entrance into, i.e. transmission (स्त्रियमुद्वहेत्।··· महाकुलात्। स्फीतादपि न संचारिरोगदोषसमन्वितात्) संचारिणः शुक्रशोणितद्वारेणानुप्रवेशभाजो रोगाः कुष्ठापस्मारादयो दोषाश्च VīraMi. 107.21 (*on* 1.52)

**अनुप्रवेशभावभावितत्व** (anupraveśabhāvabhāvita-tva) *n.* the state of being caused by the nature of entering into, i.e. pervasion (तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात्) 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति सर्वस्य वस्तुनो नामरूपविभागाय तत्तदात्मतया ब्रह्मणोऽनुप्रवेशभावभावितत्वात् BrahmSūBh.(Śrī.) ii. 138.15 (*on* ii. 3.17)

**अनुप्रवेशम्** (anupraveśam) *absolutive* [P. iii. 4.56] having entered into (something) repeatedly आसेव्यविवक्षायां तु मुख्यस्यासेव्यस्य क्रियारूपस्य द्वित्वम्। गेहं गेहमनुप्रवेशमास्ते। गेहमनुप्रवेशमनुप्रवेशमास्ते JaineVyā. 142.14 (*on* ii. 4.41); CāndraVṛ. *on* i. 3.148; विश्यादिभ्यो धातुभ्यो णमुल् प्रत्ययो भवति व्याप्यमाने आसेव्यमाने चार्थे गम्यमाने ··· गेहं गेहमनुप्रवेशमास्ते। आसेवायाम्। गेहमनुप्रवेशमनुप्रवेशमास्ते KāśiVṛ. *on* iii. 4.56; KātanVṛ. *on* iv. 6.39; SiddhāKau. 584B.16 (*on* iii. 4.56); लोको वितपमानेन तप्तस्तेन गृहं गृहम्। अनुप्रवेशं निभृतमध्यास्ते हितकाम्यया RāghPāṇ.(Dha.) 9.23.

**अनुप्रवेशयत्** (anu-praveśayat) *adj.* **i** causing to enter, i.e. infusing (something) into (पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः) सोमः।··· सर्वरसात्मकः सर्वा ओषधीः स्वात्मरसान् अनुप्रवेशयन् पुष्णाति GītāBh.(Śaṅ.) 442.8 (*on* 15.13); **ii** causing to enter into वस्तुतस्तु स कलकलध्वनिः श्रोत्राकाशे अनुप्रविशन् न वर्णान् अनुप्रवेशयन् तथा भवेत् तद्वर्णातिरिक्तस्य कलकलस्यैव भावात् ParāTri. 70.4.

**अनुप्रवेशयुक्ति** (anupraveśa-yukti) *f.* means for entrance into ईश्वरप्रत्यभिज्ञाटीकायामपि श्रीमदुत्पलदेवपादैर्निर्णीतम्, अत्र चानुप्रवेशयुक्तिः ParāTri. 195.5.

**अनुप्रवेशवचन** (anupraveśa-vacana) *n.* statement about the entrance into, i.e. pervasion सृष्ट्यनुप्रवेशयोः पौर्वापर्यनियमोऽपि न विवक्षितः, अनुप्रवेशपूर्वकसृष्टिवचनात् सृष्टिपूर्वकानुप्रवेशवचनाच्च ŚrutaPra. ii. 170.27 (*on* i. 4.27)

**अनुप्रवेशवद्गगनादि** (anupraveśavad-gaganādi) *adj.* space and the like which have (the capacity of) entrance into, i.e. pervasion (अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि) अस्मिन् वाक्ये स्वात्मकजीववाचिपदं दर्शयन्ननुप्रवेशवद्गगनादिव्यावृत्त्यर्थं नियन्तृतयानुप्रवेशं च दर्शयति ŚrutaPra. ii. 254.28 (*on* ii. 1.15)

**अनुप्रवेशविरोध** (anupraveśa-virodha) *m.* contradiction to entrance into, i.e. pervasion आत्मनः शरीरपरिमाणत्वे मूर्तत्वानुषङ्गात् शरीरेऽनुप्रवेशो न स्यात्। मूर्ते मूर्तस्यानुप्रवेशविरोधात् SyādvāMañ. 9(107)

**अनुप्रवेशवैयर्थ्य** (anupraveśa-vaiyarthya) *n.* futility of entrance into, i.e. pervasion न तत्साधनं स्वतन्त्रं प्रेरणार्थं भगवता अनुप्रविष्टत्वात् ··· यः प्राणे तिष्ठन्नित्यादेरीश्वरेणानुप्रविष्टत्वान्न स्वतन्त्रम्। अन्यथानुप्रवेशवैयर्थ्यात् TattvPrakā. 88B.3 (*on* ii. 1.21)

**अनुप्रवेशश्रवण** (anupraveśa-śravaṇa) *n.* scriptural statement about entrance into, i.e. pervasion तदनुप्रविश्य इति अचेतन इव जीवेऽप्यनु-

approached कश्यपस्य मुनेः पुत्रो विनतायाश्च खेचरः। हर्तुं सोममनुप्राप्तः MahāBhā. i. 26.36; काश्यपः … अनुप्राप्तौ तावुभौ प्रत्यवेदयत् MahāBhā. iii. 183.18; vii. 28.27; तच्छ्रुत्वाहमनुप्राप्तो धनुर्गृह्यापरं शुभम् Rāmā. i. 74.2; पत्नीं च तमनुप्राप्तां वृद्धामामन्त्र्य सत्कृताम्। सान्त्वयामास धर्मज्ञः Rāmā. ii. 109.7; iv. 38.28; vi. 23.34; इमां भगवतीं लक्ष्मीं जानीहि जनकात्मजाम्। सा भवन्तमनुप्राप्ता मानुषीं तनुमास्थिता Abhiṣe. 6.28; वरदोऽहमनुप्राप्तो वरं वरय ViṣṇuP. i. 12.42; BhaviP. 233B. 18 (i. 156.13); जैमिनिं मां निबोधत। व्यासशिष्यमनुप्राप्तं भवतां दर्शनोत्सुकम् MārkP. 4.9; भैरवाचार्यवचनाद्देवमनुप्राप्तोऽस्मि HarṣaC. 152.13; यः स यक्ष्या वने देव्या वसुमत्या हस्तार्पितो युष्मत्सूनुः सोऽनुप्राप्तः DaśKuC. 85.20; सखे रत्नचूड, दिष्ट्या वर्धसे यदयमनुप्राप्तः।… रामभद्रः AnargharRā. 6.49(7); गृहस्थो वा यतिर्वापि जैनं समयमास्थितः। यथाकालमनुप्राप्तः पूजनीयः सुदृष्टिभिः YaśasCam. ii. 406.24; अनुप्राप्तस्तथा चाश्वो भानुस्तद्रूपवांस्ततः। अश्वं निवारयामासुर्जनस्था मुनिदारकाः BrahmP. 89.32; **4Aiii** who or which has come back or returned सा शक्तिर्हत्वा शत्रून् सहस्रशः। स्कन्दहस्तमनुप्राप्ता दृश्यते देवदानवैः MahāBhā. iii. 221.67; दूतम् …। वनवासादनुप्राप्तं कस्मान्न प्रतिभाषसे Rāmā. ii. 51.25; ii. 66.2; पञ्चभ्यः संस्कृते देहे पञ्चत्वं च पुनर्गते। स्वां स्वां योनिमनुप्राप्ते धीर का परिदेवना Hitopa. 4.74; **4Aiv** who or which has reached or arrived द्वारमनुप्राप्ता द्वारस्थैश्च निवेदिता। अर्जुनस्य…उर्वशी शुभलोचना MahāBhā. iii. App. I. 6(68); गजमध्यमनुप्राप्तः पाण्डवश्च व्यराजत MahāBhā. vi. 98.31; vii. 15.48; x. 1.24; चित्रकूटमनुप्राप्य (v.l. अनुप्राप्ताः) … रममाणा वने त्रयः Rāmā. i. 1.26; iii. 6.10 (v.l.); नगरान्तमनुप्राप्तं बुद्ध्वा पुत्रमथाब्रवीत् Rāmā. ii. 37.13; सोऽहं शासनमाज्ञाय धनदस्य महात्मनः। त्वत्सकाशमनुप्राप्तो निर्विशङ्कः प्रतीच्छ माम् Rāmā. vii. 41.9; SuśruS. ii. 8.3; एकस्मिन् समये भगवान् … येन वैशालीं महानगरीं तेनानुप्राप्तोऽभूत् GiMs. i. 1.5; iii(2). 122.9; इमं देशमनुप्राप्तौ किमर्थं वनगोचरम्। भवन्तौ AhirbuS. 33.57; प्रणिपत्य ततो देवाः …। नाकपृष्ठमनुप्राप्ताः MārkP. 18.37; 21.33; एकदाहमनुप्राप्तः … पातालम् BrahmāṇḍP. ii. 36.4; एषोऽस्मि … भट्टिजीमूतस्य … भवनमनुप्राप्तः PādaTā. 41.4; सुरतसर्वातिथिसंनिवेशं वेशमनुप्राप्ताः PadmPrā. 14.17; तदस्याः सुकृतवशेन महाभागेमां भूमिमनुप्राप्तः … भवान् VāsaDa. 240.6; KathāSaSāg. ii. 4.125; xiv. 4.65; तातोऽम्बा च … देवसकाशमनुप्राप्तौ VeṇīSaṁ. 4.357; 1.252; लक्ष्मणः …। अधोलोकमनुप्राप्तः कृतपापोऽभिमानतः PadmP.(Ra.) 122.20; यावत् … कथा परिसमाप्यते। तावदावामनुप्राप्तावास्थानं भवताम् BṛKathāŚloSaṁ. 20.411; अहम् … इमां नगरीमनुप्राप्तः Hitopa. 2.99(23); यज्ञदत्तशरीरे च तं प्रदेशमनुप्राप्ते … समानः सुखदुःखानुभवो दृश्यते BrahmSūBh.(Śaṅ.) 489.15 (*on* ii. 3.53); त्वदीयविजयप्रयाणघोषणानुपदमेव सागरोपकण्ठमनुप्राप्तोऽहम् TilaMañ. 130.21; 249.13; सूर्ये त्वस्तमनुप्राप्ते पूजयित्वा करीषिणीम् NīlaP. 399; 1168; सूर्ये मध्यमनुप्राप्ते नरेन्द्रः … सोदकैः कुर्यात्ततः पूजां स्वयंभुवः ViṣṇuDhaP. ii. 100.1; आश्रममनुप्राप्तं महादेवं कृपानिधिम्। धर्मः … तुष्टाव SkandP. iii(1). 3.54; तवान्तिकमनुप्राप्तः प्रसादं कर्तुमर्हसि VāmaP. 58.45; अञ्जनमलीमसैरश्रुभिर्लिप्तं क्षालयितुमिवात्मानमम्भोधिमनुप्राप्ते प्रतापे UdaySuKa. 7.24; 20.11; 112.21; तदाश्रममनुप्राप्तः कालभीरुर्महातपाः ĀdiP. 18.3; (नृपः) वध्यभूमिमनुप्राप्तः MalliC. 7.361; मध्यमलोकस्य नेदीयांसं प्रदेशमनुप्राप्तोऽस्मि PārvPa. 1.8(2); पूर्ववल्मीकमनुप्राप्तेति EI. xvii. 333.18; **4Av** who has come (for refuge) शरणं त्वामनुप्राप्तः पुत्रार्थी द्विजसत्तम Rāmā. i. 331*(6); शरणं त्वामनुप्राप्ताः समस्ता देवतागणाः ViṣṇuP. i. 9.65; **4Avi** which has reached, i.e. which is received तदिदं मामनुप्राप्तं विभीषणवचः शुभम्। यदज्ञानान्मया तस्य न गृहीतं महात्मनः Rāmā. vi. 56.16; **4Avii** which is reached, i.e. placed कोकिलैर्ध्मानयोगतः। मूषाकण्ठमनुप्राप्यै(v.l. °प्ते)रेककोलीसको मतः RasRaSa. 8.34; **4Bi** who has met with or reached (a consequence) पिता मम। जीवितान्तमनुप्राप्तः MahāBhā. i. 110.3; नेदं कृच्छ्रमनुप्राप्तो भवान् स्याद् वसुधाधिप। यद्यहं द्वारकायां स्यां राजन् संनिहितः पुरा MahāBhā. iii. 14.1; तस्मिन्मोहमनुप्राप्ते पुनरेव वृकोदरः।… क्षुरप्रेणाहरत्तदा MahāBhā. ix. 15.42; xiii. 95*(4); दशां कष्टामनुप्राप्तः स पापात्मा नराधमः MārkP. 16.29; देशान्तरगतो विप्रः … देहनाशमनुप्राप्तः ParāSm. 3.12; प्रसन्नसलिलवाहिनीं समुद्रगामिनीं चावलोकयन् संस्मृत्य दण्डकावनवासमेवं वैक्लव्यमनुप्राप्तोऽस्मि KundaMā. 3.11(48); पुरुषभाग्यानामचिन्त्याः खलु व्यापाराः। यदहमीदृशीं दशामनुप्राप्तः Mṛcch. 10.4(3); संस्थिते च पितरि महता शोकेनाभीलमनुप्राप्तः … कतिपयान् दिवसानात्मगृह एवानैषीत् HarṣaC. 66.5; ते … निराहारा जपपरा दिव्यवर्षसहस्रकम्। श्रान्ताः खेदमनुप्राप्ताः GaṇeP. i. 12.24; ममापि मन्दभाग्यायाः पापिन्याः शिवसेवनम्। विफलत्वमनुप्राप्तम् KalkiP. i. 6.3; विश्वंभराभर्ता …। वियोगार्तिमनुप्राप्तः शोक एव परासुताम् PāṇḍaC. 5.307; चतुर्थीं दशामनुप्राप्तांस्तलकर्मणोपचरेत् Hastyāyur. 228.22 (2.29); **4Bii** which has arisen consequently, which has occurred as a result लोभस्य ज्ञाननाशस्य द्रोहस्यात्याहितस्य च।… तत्त्वामिदमनुप्राप्तं तत्कोपाद्वै महात्मनाम्।… फलम् MahāBhā. vii. 39.5; vii. 113.1; xii. 273.42; रामात्क्षयमनुप्राप्तं रक्षसां प्रत्यचोदयत् Rāmā. v. 35.13; VākyaPa. 3(8).10; विद्याधरमहाराजे निहते खरदूषणे। अर्थान्तरमनुप्राप्तं दुरन्तमवधार्यताम् PadmP.(Ra.) 45.85; **4Ci** which has reached or permeated along शीतकाले … शरीरमत्यर्थशीतवातविष्टब्धबद्धगुरुदोषं भवति। तदनुप्राप्तं च भेषजम् … शीतोपहतत्वान्मन्दवीर्यतां गतमयोगाय जायते AṣṭāSaṁ. i. 121.17 (1.23); तत्राहारस्य … क्रमान्मज्जानमनुप्राप्तस्य सारः शुक्रसंज्ञां लभते AṣṭāSaṁ. i. 195.12 (2.1); (रसः) स्थानानि षडनुप्राप्तो वीर्यं समनुलभ्यते Hastyāyur. 452.16 (3.9); 693.20 (4.31); **4Cii** which has touched, which has reached up to अनुवंशमनुप्राप्ता जयन्त्यो यदि मन्दिरे। वित्तायुषोस्तदाल्पत्वमनारोग्यं च जायते SamarāSū. 48.97; **5** who is led or subjected to, i.e. who has experienced कचग्रहमनुप्राप्ता सास्मि कृष्ण वरा सती MahāBhā. iii. 13.108; युद्धस्वेदमनुप्राप्ताः शक्तयः स्युः पिपासिताः BrahmāṇḍP. iii. 20.75; प्रीत्यादिभिरथ तानिह कुर्यान्निजवश्यतामनुप्राप्तान् KandaCū. iii. 5.15; **6** who is engaged in द्वन्द्वयुद्धमनुप्राप्तो दिष्ट्या ते रावणिर्हतः Rāmā. vii. 1.25; **7** which is connected or construed with, cf. **अनुप्राप्तत्व.**

**अनुप्राप्तत्व** (anuprāpta-tva) *n.* the state of being that which is connected or construed with (ब्राह्मणं कुशलं पृच्छेत् …। वैश्यं क्षेमं समागम्य) गोविन्दराजस्तु प्रकरणात्प्रत्यभिवादकस्यैव कुशलादिप्रश्नमाह। तन्न, अभिवादकेन सह समागमस्यानुप्राप्तत्वात् ManvaMu. 61.2 (*on* 2.127)

**अनुप्राप्तवध** (anuprāpta-vadha) *adj.* whose capital punishment is due immediately or imminent यः स्यादनुप्राप्तवधस्तस्यागारं प्रदीपयेत् (राजा) MahāBhā. i. App. I. 81(119) (BhārBhāDī. अनुप्राप्तवधः शीघ्रं हन्तुमिष्टः चौरादिः)

**अनुप्राप्तस्वकार्थ** (anuprāpta-svakārtha) *adj.* who has gradually attained his own goal (बुद्धस्य षष्ट्याकारा वाक्) प्रेमणीयानुप्राप्तस्वकार्थानां प्रेमकरत्वात् MaYānaSū. 80.13 (12.9); निःक्लेशः … अनुप्राप्तस्वकार्थः … श्रमण इत्युच्यते PrasaPa. 143.6.

**अनुप्राप्ति** (anu-prāpti) *f.* subsequent acquisition (of knowledge) (अष्टाशीत्यनुशयाः … तत्प्राप्तयश्च सानुचराः) सानुचरा इति ग्रहणेनानुप्राप्तयस्तल्लक्षणानि च संगृह्यन्ते Sphuṭā. i. 90.13 (*on* 1.40) [getting to, reaching, arriving etc., APTE.]

**अनुप्राप्तिलेखास्मृति** (anuprāptilekhā-smṛti) *f.* name of one of the twenty arts (in the game of dice) (*lit.* remembering the (square of) line of subsequent movement) शास्त्रान्तरे चतुःषष्टिर्मूलकला उक्ताः। तत्र द्यूताश्रया विंशतिः।… तद्यथा … क्षिप्रग्रहणम्, अनुप्राप्तिलेखास्मृतिः JayaMa. 31.23 (*on* 1.3)

**अनुप्राप्तुम्** (anu-prāptum) *inf.* to attain राज्ञां विशां च … यशोऽहमनुप्रापत्सि … अनुप्राप्तुमिच्छामि ChāndoUBh. 550.11 (*on* viii. 14.1)

**अनुप्राप्य** (anu-prāpya) *ger.* **1** having realised तत्क्षेत्रं तज्ज्ञानात् क्षेत्रज्ञमनुप्राप्य निरात्मकम् Nir. 13.16 = 14.3 (229.9); **2A** having attained or obtained अन्येषामिन्द्रियाणां तु कल्पितानामपीश्वरः। तत्तद्रूपमनुप्राप्य ददाति (तत्तदिन्द्रियत्वम्) PāśBraU. 2.14; तत्राश्रुबिन्दवो जाता महारुद्राक्षवृक्षकाः। स्थावरत्वमनुप्राप्य भक्तानुग्रहकारणात् RudraJābāU. 567.13 (1.3); भरद्वाजात्मजाः …। योगधर्ममनुप्राप्य भ्रष्टा दुश्चरितेन HariVaṁ. 14.1; मदंशः …। तत्तद्रूपमनुप्राप्ता (v.l. °प्राप्य) सेवनी नाम शाश्वती।… वैष्णवः शक्तिरूपो मे … अवतिष्ठते LakṣmīT. 32.39; कर्मणा दुष्कृतेनेह स्थानाद्भ्रश्यति स द्विजः। श्रेष्ठं वर्णमनुप्राप्य तस्मादाक्षिप्यते पुनः BrahmP. 223.13; (नरः) मानुषत्वमनुप्राप्य राजा भवति धार्मिकः BhaviP. 144B.16 (i. 93.40); कबन्ध उवाच — पूर्वरूपमनुप्राप्य भार्यामार्गं वदामि ते AdhyāRā. iii. 9.27; (यतयः) हिरण्यगर्भपदवीमनुप्राप्यापवृज्यन्ते Kiraṇā. 90.17; बुधः … ज्योत्स्नयामृतरूपया। स्वतन्त्रत्वमनुप्राप्य न क्वचित्प्रतिहन्यते MālinīT. 13.53; **2B** having obtained again, having recovered रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् Rāmā. i. 1.70; i. 107*(1); **2C** having received तपस्वी …। स तच्छस्त्रमनुप्राप्य …। न विना याति तं खड्गं न्यासरक्षणतत्परः Rāmā. iii. 8.16; (रामः) स तदाज्ञामनुप्राप्य विवेशान्तःपुरं मुदा BrahmāṇḍP. ii. 32.17; (क्रूरो नायकः) एवमाज्ञामनुप्राप्य … यातो नरान्तकम् GaṇeP. ii. 58.22; **3Ai** having reached or arrived राजा … स्वनगरमनुप्राप्य … रमन्नास्ते MahāBhā. iii. 190.20; iv. 871*(11); चित्रकूटमनुप्राप्य … तत्र ते न्यवसन् सुखम् Rāmā. i. 1.26; i. 64.1; iv. 37.15; ब्रह्मापि … प्रयागं तीर्थमुत्तमम्।… अनुप्राप्य न चान्यत्किंचिदर्हति MatsyaP. 109.16; पुण्यस्थानमनुप्राप्य …। सर्वात्मना परं देवमभ्यर्च्य शरणं व्रजेत् ParaS. 11.66; 31.4; तां विलासिनीविलासहंसावतारसरसीमिकानसीमनुप्राप्य … चरमाधिकरणां दशामशिश्रियम् YaśasCam. ii. 226.2; (वणिक्पुत्रः) मर्त्यलोकमनुप्राप्य राजन्यतनयोऽभवत् VāmaP. 79.76; यः करोति सदा राम स्नानं तु सवनद्वयम्। स तु स्वर्गमनुप्राप्य त्रिदशैरपि पूज्यते ViṣṇuDhaP. ii. 88.25; (नराः) संतर्प्य देवदेवेशम् …। सर्वलोकमनुप्राप्य मोदन्ते BṛNāraP. 13.197; अर्चयन्ति महादेवम् …। रुद्रलोकमनुप्राप्य न निवर्तन्ति ते पुनः

LiṅgaP. i. 33.8; PadmP. i. 16.5; SaurP. 34.37; 42.8; AdhyāRā. ii. 8.60; आश्रयं किमनुप्राप्य यस्तु तिष्ठति सू(शू)कलः। अनाश्रये प्रदेशेऽसौ वाहनीयः प्रयत्नतः Mānaso. iv. 4.774; असौ …। उपाश्रयमनुप्राप्यातिष्ठत् परमया मुदा PrabhāC. 99.8; स च रुद्र आदित्याननुप्राप्याबाधत MayūMāli. 38.10 (*on* i. 3.7); **3Aii** having come to or approached जनार्दनः।… धर्मराजमनुज्ञाप्य- (v.l. °प्राप्य) …। प्रययौ स्वां पुरीम् MahāBhā. ii. 22.52; धर्मराट् …। मदन्तिकमनुप्राप्य प्रणम्य शिरसाब्रवीत् BrahmP. 45.59; (अर्जुनम्) रथिनस्तमनुप्राप्य ये बभूवुरपत्रपाः। संत्रस्ता रणमुत्सृज्य तेऽपजग्मुरपत्रपाः KīcaVa. 4.46; न माता न पिता भार्या …। यमान्तिकमनुप्राप्य सुकृतं दुष्कृतं व्रजेत् VetāPañ.(Śi.) 59.4; लोपामुद्रामनुप्राप्य प्रणनाम विदेहजा Rāgh. 7.68; **3B** having got into यस्ते कण्ठमनु प्राप्तो (v.l. °प्राप्य) …। दहेदङ्गारवत्पुत्र तं विद्याद् ब्राह्मणर्षभम् MahāBhā. i. 24.6; (दितिम् इन्द्र उवाच) तदन्तरमनुप्राप्य गर्भं हन्तारमाहवे। भिन्नवानहमेतं ते BrahmāṇḍP. ii. 5.74; स्रवत्येव सदा ज्ञानम् …। छिद्रं छिद्रमनुप्राप्य न चेच्छादयति क्षमा SabhāS. 70; **3C** having met with कर्णमनुप्राप्य न जीवन्ति महारथाः MahāBhā. viii. 40.60; अन्तकमनुप्राप्य जीवन्कश्चिन्न मुच्यते MahāBhā. xi. 11.26; **3D** having passed to वसुधे … त्वं दशरथाच्च्युता। रामहस्तमनुप्राप्य कष्टात्कष्टतरं गता RaghuVa. 15.43.

**अनुप्राप्य** (anu-prāpya) *adj.* which is to be reached or placed कोकिलैर्ध्मानयोगतः। मूषाकण्ठमनुप्राप्यैरेककोलीसको मतः RasRaSa. 8.34.

**अनुप्रायम्** (anuprāyam) *adv.* mostly, as usual न वेद्मि कारणं तस्या (राधिकायाः) भिन्नतायाः …। श्रीलाञ्छितमनुप्रायं क्षणे कोपः क्षणे कृपा ĀdiP. 13.110.

**अनुप्रायाय** (anu-prāyāya) *ger.* having gone away अधि चेदनुप्रायाय मथित्वा तत्रैकान् वसेत् कालातिपाते च दर्शपूर्णमासयोः Atharvaprāyaścitta 5.3 [Viśva.]

**अनुप्रार्थ्** (anu-prārth-) x. Ā. to seek after, DBHS., cf. **अनुप्रार्थयमान.**

**अनुप्रार्थना** (anu-prārthanā) *f.* repeated request अलमनुप्रार्थनयेत्यभिधाय … स्थितवान् (सः) UdaySuKa. 33.24.

**अनुप्रार्थयमान** (anu-prārthayamāna) *adj.* seeking after बोधिवरामनुप्रार्थयमानो … भवेदिमु पुण्यम् GaṇḍVyū. 434.27 [DBHS.]

**अनुप्रास्** (anu-prās-) IV. P. to throw subsequently वपाश्रपणी अनुप्रास्यति … एतें विषूची अनुप्रास्यति MaiS. iii. 10.1 (iii. 131.3); समीच्यौ। वपाश्रपण्यौ कृत्वानुप्रास्यति ŚatBr. III. viii. 2.28; ŚatBr.(K.) IV. viii. 2.21; KātyŚS. vi. 6.27; स्रुचमनुप्रास्यति ŚatBr. IX. iii. 3.14; IX. iii. 4.16-17; सह रशना अनुप्रास्यन्ति दर्भान् वपाश्रपणीः स्वरूंश्च MānŚS. 137.13.

**अनुप्रास** (anu-prāsa) *m.* (rarely *n.*) **1** (Poet.) alliteration, repeated use of a sound or word in a composition (a figure of speech based on words, usually divided into five types, viz. *cheka-*, *vṛtti-*, *śruti-*, *antya-* and *lāṭa-*) अनुप्रासः सयमको रूपकं दीपकोपमे। इति वाचामलंकाराः Kāvyālaṅ.(Bh.) 2.4; KāvyālaṅSāSaṁ. 1.7; शेषः सरूपोऽनुप्रासः KāvyālaṅSū. iv. 1.8 (Vṛtti पदमेकार्थमनेकार्थं च स्थानानियतं तद्विधमक्षरं च शेषः); वक्रोक्तिरनुप्रासो यमकं श्लेषस्तथापरं चित्रम्। शब्दस्यालंकाराः Kāvyālaṅ.(Ru.) 2.13; 2.18; अतिदूरपतित्यागात्तुल्या वृत्ताक्षरश्रुतिः। या सोऽनुप्रास इत्युक्तः AlaṅkāCin. 45.16; शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धवान्। सर्वेष्वेव प्रभेदेषु नानुप्रासः Dhvanyā. 2.14; KāvyMī. 6.13; AgniP. 341.20; स्यादावृत्तिरनुप्रासो वर्णानां पदवाक्ययोः AgniP. 342.1; एकैकस्य तु वर्णस्य विन्यासो यः पुनः पुनः। अर्थगत्या तु संख्यातमनुप्रासं पुरातनैः ViṣṇuDhaP. iii. 14.1; वर्णविन्यासवक्रत्वं चिरन्तनेष्वनुप्रास इति प्रसिद्धम् VakroJī. 30.8; ŚṛṅgāPra. 371.14; SaraKaṇṭhā. 141.10; पदानामनुप्रासाय च्छन्दःपूरणाय चार्थानुगुण्येन रचितत्वादियं पदरचना SaraKaṇṭhā. 183.3; 228.17; Loc. 5.20 (*on* 1.1); वर्णसाम्यमनुप्रासः। स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम्। रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः KāvyPra. 494.1; AlaṅkāŚe. 10.1(12); KāvyPra. 495.1; यमकानुप्रासयोरिव वृत्तस्यापि शब्दालंकारत्वमुपगतमस्माभिः VyaktiVi. 45.18; श्रुतिवर्णानुप्रासाभ्यां वाग्रसः Kāvyānu.(He.) 237.17; 247.1; 347.10; 348.8; 'कुसुमसौरभलोभ° …' अत्रानुप्रासयमकयोर्विजातीययोः संसृष्टिः AlaṅkāSa. 195.8; Vāgbhaṭā. 4.2; Kuval. 171(196); तुल्यश्रुत्यक्षरावृत्तिरनुप्रासः Vāgbhaṭā. 4.17; छेकभाषितोपलक्षितोऽनुप्रासः छेकानुप्रासः AlaṅkāRa. 3(5); जायन्तेऽद्य यथायथं तु कवयस्ते तत्र संतन्वते येऽनुप्रासकठोरचित्रयमकश्लेषादिशल्कोच्चयम् ŚrīKaC. 2.42 = Subhāṣi. 178; चीनौंजे जो जो लीर्वान्तेऽनुप्रासे पद्धतिः (चगणचतुष्टयं पादान्तेऽनुप्रासे सति पद्धतिः) Chandonu. 3.73; 5.23; षट्पदीषु चाद्यस्य पादस्य द्वितीयेन … चतुर्थस्य पञ्चमेनानुप्रासः ChandaśCū. 6.14(5); अदूरान्तरितावृत्तिरनुप्रासश्छेकवृत्तिलाटभेदेन त्रिधा Kāvyānu.(Vā.) 49.20; छेका विदग्धास्तैः प्रयुक्तोऽयमनुप्रासः (छेकानुप्रासः) Ekāva. 7.3(2) (186.8); उपस्कुर्वन्ति तं सन्तम् (रसम्) … अनुप्रासोपमादयः PratāYaBhū. 337.2; 74.1; अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत् SāhiDa. 474.1; 631.11; अनुप्रासोऽक्षरावृत्तिः स तु वीप्सासकृत्कृतः ŚabdaRa.(Vā.) 3389; अनुप्रासेषु नो कष्टम् (तन्नामको दोषः) यथा — 'महाराष्ट्रेषु नोष्ट्रिणः' इत्यादौ AlaṅkāŚe. 9.2A(1); 10.1; द्वितीयचतुर्थासु वर्ग्याः … नैकट्येन तु प्रतिकूला अपि भवन्ति (माधुर्यस्य) यदि तदायत्तोऽनुप्रासः RasGaṅ. 80.12; AlaṅkāMañ. 240.3; **2** sprinkling चन्द्रलोकादपि परं पदमारोपयन्ति माम्। अमूरमृतबिन्दूनामनुप्रासास्तवोक्तयः Anargha Rā. 7.77; **3** movement अनुप्रासवलनावर्तनाद्यात्मकसुन्दरवैचित्र्यस्यामिश्रणया … न रसाभिव्यक्तिहेतु AbhinBhā. i. 22.16 (*on* 1.45)

**अनुप्रासकल्पना** (anuprāsa-kalpanā) *f.* assumption of (being) *anuprāsa* आरूढं भूयसा यत्तु पदं यमकभूमिकाम्। न युज्यते पुनस्तस्य युक्तानुप्रासकल्पना KāvyālaṅSū. iv. 1.7.

**अनुप्रासजाति** (anuprāsa-jāti) *f.* class or type of *anuprāsa* वर्गत्रयसंपादनार्थं तिस्रोऽनुप्रासजातयो वृत्तय इत्युक्ताः Loc. 5.22 (*on* 1.1); 6.7 (*on* 1.1); वृत्तयस्तावदलंकारान्तर्भूता एव … तासामनुप्रासजातिरूपतयाभ्युपगमात् Ekāva. 1.13(28) (27.3)

**अनुप्रासधी** (anuprāsa-dhī) *f.* consideration as (being) *anuprāsa* शिथिलम् …। अनुप्रासधिया गौडैस्तदिष्टं बन्धगौरवात् Kāvyāda. 1.44.

**अनुप्रासनायक** (anuprāsa-nāyaka) *m.* chief, i. e. prominent among (the types of) *anuprāsas* प्रायेण श्रुत्यनुप्रासस्तेष्वनुप्रासनायकः SaraKaṇṭhā. 229.8.

**अनुप्रासनिचय** (anuprāsa-nicaya) *m.* multitude of *anuprāsas* (मधुररसे) अनुप्रासनिचयान् यमकादींश्च संभवतोऽपि कविर्न निबध्नीयात् RasGaṅ. 89.10.

**अनुप्रासनिर्वहण** (anuprāsa-nirvahaṇa) *n.* accomplishment of *anuprāsa* रेफलकारयोरैक्येन तुल्यश्रुत्या चतुर्ष्वपि पादेष्वनुप्रासनिर्वहणम् SaraKaṇṭhā. 234.19.

**अनुप्रासप्रकर्ष** (anuprāsa-prakarṣa) *m.* excellence of *anuprāsa* 'प्रोज्ज्वलत् … पातु वो नरकेसरी।' अत्र क्रमेणानुप्रासप्रकर्षः पतितः SāhiDa. 404.1.

**अनुप्रासप्रधान** (anuprāsa-pradhāna) *adj.* in which *anuprāsa* is predominant अनुप्रासप्रधानं चेत् खण्डत्रयसमन्वितम्। दन्तीपदान्वितं प्रान्ते तदा दन्ती निगद्यते SaṁgīRa. ii. 333.17 (4.309)

**अनुप्रासप्रिय** (anuprāsa-priya) *adj.* fond of *anuprāsa* अनुप्रासप्रियैस्त्वपभ्रंशः कृतः KāvyālaṅSū. v. 2.88.

**अनुप्रासभाव** (anuprāsa-bhāva) *m.* nature of *anuprāsa* 'अत्रान्तरे … सह सौविदल्लैः।' सोऽयमीषदमसृणोऽनुप्रासभावो न गुणः। ओजःप्रकार एवायम् Kāvyānu.(He.) 238.13.

**अनुप्रासभास्** (anuprāsa-bhās) *f.* beauty or glory of *anuprāsa* प्रथमचरमयोर्वा शब्दयोर्वर्णसख्ये विलसति चरमेऽनुप्रासभासां विलासः NaiṣC. 13.54.

**अनुप्रासभेद** (anuprāsa-bheda) *m.* type of *anuprāsa* अनुप्रासानामेव … तिस्रोऽनुप्रासजातयो वृत्तय इत्युक्ताः। वर्तन्तेऽनुप्रासभेदाः Loc. 5.22 (*on* 1.1)

**अनुप्रासमहिमपरतन्त्रा** (anuprāsamahima-paratantrā) *adj.* (*f.*) dependent upon the profusion of *anuprāsa* बहुतरसमासयुक्ता सुमहाप्राणाक्षरा च गौडीया। रीतिरनुप्रासमहिमपरतन्त्रा स्तोकवाक्या च SāhiDa. 467.12.

**अनुप्रासमात्र** (anuprāsa-mātra) *n.* mere *anuprāsa* नापि काव्यशोभाकरणं रसान्तरादनुप्रासमात्राद्वा तथाभावात् KāvyPra. 449.3.

**अनुप्रासयुक्तोक्ति** (anuprāsayuktokti) *f.* statement which contains *anuprāsa* वादेऽनुप्रासयुक्तोक्तिः स्वोत्कर्षः परगर्हणा। कुलशास्त्रादिसंप्रश्नः स्वशाखाध्ययनप्रथा KāvyKaVṛ. 20.2 (1.4); 20.4 (1.4)

**अनुप्रासरसिकता** (anuprāsarasika-tā) *f.* the state of being an appreciator of *anuprāsa* अनुप्रासरसिकतया प्रेङ्खदिति लाक्षणिकः … प्रयोगः कविना कृतोऽपि न ध्वन्यमानरूपसुन्दरप्रयोजनांशपर्यवसायी Loc. 121.19 (*on* 2.33)

**अनुप्रासलाटीयादिसंग्रह** (anuprāsalāṭīyādi-saṅgraha) *m.* inclusion of alliteration based on the repetition of words in different applications, i. e. *lāṭānuprāsa* etc. (यमकं पादादिषु विकल्पितम्) पादे आदिग्रहणं तदा मध्यान्तादिषु विकल्पितवचनान्नास्त्यपि स्थापननियमोऽनुप्रासलाटीयादिसंग्रहाय AbhinBhā. ii. 326.25 (*on* 16.59)

**अनुप्रासलेश** (anuprāsa-leśa) *m.* bit of *anuprāsa* उपमादिवियुक्तापि राजते काव्यपद्धतिः। यद्यनुप्रासलेशोऽपि हन्त तत्र निवेश्यते SaraKaṇṭhā. 265.5.

**अनुप्रासवत्** (anuprāsa-va(n)t) *adj.* possessed of *anuprāsa* सा प्रवृत्तिरौड्रमागधी।… तया यदवशंवदीकृतः समासवदनुप्रासवद्योगवृत्तिपरम्परागर्भं जगाद सा गौडीया रीतिः KāvyMī. 8.14.

**अनुप्रासविन्यास** (anuprāsa-vinyāsa) *m.* arrangement of *anuprāsa* व्यवहितः … द्वितीयो व्यस्तोऽपरः समस्तः …। सोऽपि द्विधा प्रतिपादमन्ताद्योर्गर्भ इवानुप्रासविन्यासात् SaraKaṇṭhā. 261.4; 261.13.

**अनुप्रासविन्यासतस्** (anuprāsavinyāsa-tas) *adv.* due to the arrangement of *anuprāsa* (वर्णावृत्तिप्रयोगेषु) तेषु स्थाने स्थानेऽनुप्रासविन्यासतः स्तबकवान् (वर्णानुप्रासः) SaraKaṇṭhā. 243.18.

**अनुप्रासविशेषविषयत्व** (anuprāsaviśeṣaviṣaya-tva) *n.* the state of being the object of a particular type of *anuprāsa* न ह्यर्थभेदे शब्दसाम्येऽपि कश्चिद् दोषः।… तदभेदे तु दुष्टैव। अन्यत्र तात्पर्यभेदात्। तच्च भूषणमेव न दूषणम्। तस्यानुप्रासविशेषविषयत्वेनेष्टत्वात् VyaktiVi. 69.17.

**अनुप्रासवृत्तपरिपूरण** (anuprāsavṛtta-paripūraṇa) *n.* filling up of *anuprāsa* and metre मधुपृषत्पिङ्गाः पयोबिन्दवः … पृषत्पदप्रयोगोऽत्रातिरिच्यमानोऽनुप्रासवृत्तपरिपूरणायैव पर्यवस्यति VyaktiVi. 96.7.

**अनुप्रासवृत्ति** (anuprāsa-vṛtti) *f.* style of composition containing *anuprāsa*, alliterative style नागरिकया ह्युपरमते अनुप्रासवृत्तिः शृङ्गारादौ विश्राम्यति Loc. 232.15 (*on* 3.48)

**अनुप्रासव्यसनिता** (anuprāsavyasani-tā) *f.* the state of being excessively devoted to, i. e. full of *anuprāsa* 'मूर्धविकलामस्त्रेण तेने तनु'-मिति युक्तः पाठः। अनेनानुप्रासव्यसनिता काव्यस्य परिपुष्यत्येव VyaktiVi. 77.1.

**अनुप्रासश्लेषोपाय** (anuprāsaśleṣopāya) *m.* means of *anuprāsa* and *śleṣa* (pun) अनुप्रासश्लेषोपायाः पूर्वोक्ता एव KāvyKaVṛ. 85.7 (3.4)

**अनुप्रासादि** (anuprāsādi) *adj. anuprāsa* etc. तत्र च शब्दगताश्चारुत्वहेतवोऽनुप्रासादयः प्रसिद्धा एव Dhvanyā. 17.1 (*on* 1.1); 106.2 (*on* 1.13); काचित्तादृशी विच्छित्तिरस्माभिर्दृष्टा या नानुप्रासादौ … अन्तर्भवेत् Loc. 8.11 (*on* 1.1); 121.17 (*on* 2.33); कष्टत्वादिगाढत्वाद्यनुप्रासादयः … शब्दार्थगतत्वेन व्यवस्थाप्यन्ते KāvyPra. 518.2; दुःश्रवत्वमपि वृत्तस्य शब्दानौचित्यमेव तस्याप्यनुप्रासादेरिव रसानुगुण्येन प्रवृत्तेरिष्टत्वात् VyaktiVi. 87.13; अनुप्रासादीनामपि रसादिपरत्वेन … अर्थालंकारत्वप्रसङ्गः SāhiDa. 491.7; 496.13; ये … रसचर्वणायामेव सुसुखं गोचरीकर्तुं शक्याः, न तेषामनुप्रासादीनां त्यागो युक्तः RasGaṅ. 90.2; तादृशजनकतावच्छेदकत्वं वर्ततेऽनुप्रासादावुपमादौ चेति लक्षणसमन्वयः AlaṅkāMañ. 241.1.

**अनुप्रासादिविशिष्ट** (anuprāsādi-viśiṣṭa) *adj.* distinguished by *anuprāsa* etc. अनुप्रासादिविशिष्टशब्दज्ञाने … सत्यात्मनि चमत्कारोदयाद्विषयितासंबन्धावच्छिन्नचमत्कृतिजनकता वर्तते AlaṅkāMañ. 240.19; 242.3.

**अनुप्रासानयन** (anuprāsānayana) *n.* act of effecting *anuprāsa* अनुप्रासानयनोपायान्तरमाह KāvyKaVṛ. 42.25 (2.3)

**अनुप्रासानुरोध** (anuprāsānurodha) *m.* [Inst.] in accordance with *anuprāsa* कर्तृकर्मप्रतिनियमेन स्तुतिः अनुप्रासानुरोधेनैव कृता KāvyPra. 770.7; Kāvyānu.(He.) 227.13.

**अनुप्रासिन्** (anuprās-in) *adj.* consisting of *anuprāsa* अनुप्रासिनि संदर्भे गोनन्दनसमः कुतः SūktiMu. 4.85.

**अनुप्रासैकरसिक** (anuprāsaika-rasika) *adj.* appreciator of *anuprāsa* alone अत्र ह्यनुप्रासैकरसिकेन कविना पौनरुक्त्यदोषमपश्यता … चक्रशब्दार्थः प्रयुक्तः VyaktiVi. 76.27.

**अनुप्रासोपाय** (anuprāsopāya) *m.* means of (effecting) *anuprāsa* अथानुप्रासोपायमाह KāvyKaVṛ. 36.25 (2.3)

**अनुप्रास्य** (anu-prāsya) *ger.* having thrown after (?) अनुप्रास्येवान् प्रतितिबुद्धयमान श्वेभ्यः संताय? कविभिः कृतानि AV.(P.) xv. 12.11 [VIŚVA.]

**अनुप्रिय** (anu-priya) *adj.* (also used as noun) loyal even at the back कच्चिदर्थेषु संप्रौढान् हितकामाननुप्रियान्। नापकर्षसि कर्मभ्यः पूर्वमप्राप्य किल्बिषम् MahāBhā. ii. 5.63 (JñānDī. अनु पश्चात् परोक्षेऽपि प्रियानिति भावः); *n.* **A** what is agreeable अनुप्रियं चेदनुकाङ्क्षसे त्वम् …। स्त्रियश्च राजन् जडपङ्गुकांश्च पृच्छ MahāBhā. ii. 57.16 (*but* JñānDī. अनन्तरप्रियं परिणतिविरसम्); **B** favour, kindness मिथ्योपचारिता ह्येते वर्तमाना ह्यनुप्रिये। अहितत्वाय कल्पन्ते दोषाः MahāBhā. v. 137.9 (JñānDī. and MahāBhāDī. अनुकूले, BhārArthaPra. अनुकूलतया प्रिये); निवृत्तं प्रतिकूलेभ्यो वर्तमानमनुप्रिये। भक्तं भजेत नृपतिः MahāBhā. xii. 94.13; *m.* (anupriya) name of one of the three types of a lover (*nāyaka* of the *madhyamā* type of *nāyikā*) त्रिविधस्तु मतः कामी प्रियोऽनुप्रिय एव च। अतिप्रियस्तु विज्ञेयस्तृतीयः कामवेदिभिः ViṭVṛ. 52; प्रथमायाः प्रियो ज्ञेयो मध्यमायास्त्वनुप्रियः। अतिप्रियस्तृतीयायाः ViṭVṛ. 53.

**अनुप्रियकारिणी** (anupriya-kāriṇī) *adj.* (*f.*) who does what is agreeable or dear क सानुसूर्या सावित्री ममानुप्रियकारिणी SkandP. v(1). 56.36.

**अनुप्रियवाच्** (anupriya-vāc) *adj.* of agreeable speech लभ्यः खलु प्रातिपीय नरोऽनुप्रियवागिह MahāBhā. ii. 57.17 (JñānDī. रुच्यनुसारिणी वागस्य)

**अनुप्री** (anu-prī-) IX.P. to please या एवैतद्देवता अयाक्षीत्ता एतैरनुप्रीणाति MaiS. iii. 9.8 (iii. 127.14)

**अनुप्रीत** (anu-prīta) *adj.* who is delighted or pleased तत्राश्रममनुप्रीतस्त्वरस्व गुणवारिधे MalliC. 1.138.

**अनुप्रीतम्** (anuprītam) *adv.* agreeably सोऽपि … अनु प्रियमनुप्रीतम् …कुर्वन्नतिचिरमिव गोष्ठीलीलयावतस्थे NalaCam. 7.10(18)

**अनुप्रे** (anu-pre-) II.P. **1A** to go after, to follow तं वः शर्धं रथानाम् …। अनु प्र यन्ति वृष्टयः ṚV. v. 53.10; मित्रश्च त्वा वरुणश्चानु प्रेयतुराञ्जन AV. xix. 44.10; AV.(P.) xv. 3.10; यस्य त्रया गत[मनु] प्रयन्ति देवा मनुष्याः पशवश्च सर्वे। तं नो देवं मनोऽधि ब्रवीतु AV.(P.) i. 78.2; KauśiSū. 82.13; तेजोऽसि तेजोऽनु प्रेह्यग्निस्ते तेजो मा विनैत् TaiS. 1. i. 10.3; MaiS. iv. 9.7 (iv. 128.5); TaiĀ. iv. 8.4 (472.1); BhārŚS. ii. 6.8; MānŚS. 17.14; सोऽब्रवीत् … मामेवानुप्रायाथ MaiS. iii. 7.1 (iii. 75.5); तदनु प्रेतं सुकृतामु लोकम् VājaS. 18.58; VājaS.(K.) 20.4; ŚatBr. IX. v. 1.45; प्रैतु ब्रह्मणस्पतिरित्यनुप्रैति AitBr. 4.5(93); प्राणं हीमानि सर्वाणि भूतान्यनु प्रयन्ति AitBr. 10.8(279); 10.9(284); तं ते … अस्तुवंस्तांस्तुतोऽनु प्रैत् AitBr. 14.1(395); 25.5(661); स यः सकृदभ्युन्नयते यथैकरात्रं सार्थान् प्रेषिताननुप्रेयादेवं तत् KauṣīBr. 8.9 (40.15); (गायत्री) साग्निमेवानुप्रेयाय ŚatBr. I. iv. 1.34; ŚatBr. (K.) II. iii. 4.24; ŚatBr. IV. i. 5.9; के तं यान्तमनुप्रेयुः के चास्यासन्पुरोगमाः MahāBhā. vi. 15.5; **1B** to chase (for driving away) अरातिमनुप्रेमो वयम् AV. v. 7.3; AV.(P.) vii. 9.4; **1C** to start with पङ्क्तिप्रायणो वै यज्ञः पङ्क्त्युदयनः पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजाः समिष्टयजुः पञ्चमं पङ्क्तिमेवानु प्रयन्ति पङ्क्तिमनूद्यन्ति TaiS. II. vi. 10.4 (BhaṭṭaBhā. प्रायणोदयनहेतुत्वं पङ्क्तेरनुशब्देन द्योत्यते); **2** to pass away, to die आमीवद्ध नाम तच्छ्मशानकरणं क्षिप्रे हैषामपरोऽनुप्रैति ŚatBr. XIII. viii. 1.7; XIII. viii. 1.12; तथो हैषामेकैकोऽपरो जरसानुप्रैति ŚatBr. XIII. viii. 3.1; XIII. viii. 3.4.

**अनुप्रेक्ष्** (anu-prekṣ-) I.Ā. **A** to think of, to recite (in mind) अवेलायां चेद्व्याहरेदयज्ञियं वापद्येतैता एव व्याहृतीरनुप्रेक्षेत LāṭyāŚS. iv. 11.6 (comm. मनसानुद्रवेत्) = DrāhyŚS. xii. 3.3; **B** to consider or reflect upon शस्त्रं शास्त्रं विक्रमं कौलपुत्र्यं तस्यैवानुप्रेक्षसे नास्य विष्णोः RāghPāṇ.(Dha.) 11.28; **C** to witness, cf. **अनुप्रेक्षक**; **Di** to examine, to investigate, cf. **अनुप्रेक्षण**; **Dii** to contemplate, cf. **अनुप्रेक्षा 1**; **Diii** to revise, cf. **अनुप्रेक्षा 2**; **E** to look at with favour, cf. **अनुप्रेक्षित** [to follow with the eyes, MW.]

**अनुप्रेक्षक** (anu-prekṣaka) *m.* witness विभीषणस्य संकेतमुद्राकरणेष्वनुप्रेक्षकेण भवता भवितव्यम् AdbhuDa. 2.1(2)

**अनुप्रेक्षण** (anu-prekṣaṇa) *n.* **1** examination, investigation यथा देशानुप्रेक्षणपंचिका। एवमावासप्रेक्षणपंचिका GiMs. iii(2). 170.19 [DBHS.]; **2** contemplation, cf. **अनुप्रेक्षणतस्.**

**अनुप्रेक्षणतस्** (anuprekṣaṇa-tas) *adv.* through contemplation चारित्राद् गुप्तितो धर्मादनुप्रेक्षणतः सदा।… कर्माष्टकविनिर्मुक्तो ययौ त्रैलोक्यमस्तकम् PadmP.(Ra.) 9.219 (BJP. Ed.)

**अनुप्रेक्षणीय** (anu-prekṣaṇīya) *adj.* to be reflected upon एवं संशयादीनामपि तत्त्वाभासत्वं प्रेक्षावद्भिरनुप्रेक्षणीयम् SyādvāMañ. 10(88)

**अनुप्रेक्षमाण** (anu-prekṣamāṇa) *adj.* observing, supervising अध्वर्युः सं वा विशति कर्माणि वानुप्रेक्षमाण आस्ते BaudhŚS. i. 202.12; अध्वर्युस्तिष्ठन्मनसा ते वाचं प्रतिगृह्णामीति होतारमुक्त्वा कर्माण्यनुप्रेक्षमाण आस्ते VaikhāŚS. 15.4.

**अनुप्रेक्षा** (anu-prekṣā) *f.* **1** contemplation, reflection आस्रवनिरोधः संवरः। स गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैः TattvārthāSū. 9.2; अनित्याशरण° … °अनुचिन्तनमनुप्रेक्षाः TattvārthāSū. 9.7 (Ṭīkā अनुप्रेक्षणम्); शरीरादीनां स्वभावानुचिन्तनमनुप्रेक्षा SarvāSi. 409.8 (*on* 9.2); निर्गतो गेहात् … अनुप्रेक्षाभिरात्मानं भावयन्मोहवर्जितः PadmP.(Ra.) 9.92; 14.239; स्थिरमध्यवसानं यत्तद्ध्यानं यच्चलाचलम्। सानुप्रेक्षा MahāP. 21.9; पुनरिमाः … द्वादशाप्यनुप्रेक्षाः YaśasCam. i. 256.3; ii. 395.1; इत्यनुप्रेक्षामातेनुरात्मविदः GadyCin. 51.8; AupaSūṬ. 84.13; अनुप्रेक्षा उच्यन्ते – अन्विति – ध्यानस्य पश्चात् प्रेक्षणानि – पर्यालोचनान्यनुप्रेक्षाः SthānṬ. 190B.7; **2** repetition (of what is learnt), revision वाचनाप्रच्छनानुप्रेक्षाम्नायधर्मोपदेशाः TattvārthāSū. 9.25 (Bhāṣya ग्रन्थार्थयोरेव मनसाभ्यासः); SarvāSi. 443.5 (*on* 9.25); अध्ययनं स्वाध्यायः, स च पञ्चधा … अनुप्रेक्षा धर्मकथा चेति SthānṬ. 365A.11; 213B.14; KumāPraPra. 83.18 [JainaL.]

**अनुप्रेक्षादिलक्षण** (anuprekṣādi-lakṣaṇa) *adj.* characterised by

contemplation etc. तदपायप्रतीकारचित्रोपायानुचिन्तनम्। अत्रैवान्तर्गतं ध्येयम् अनुप्रेक्षादिलक्षणम् MahāP. 21.142.

**अनुप्रेक्षादोष** (anuprekṣā-doṣa) *m.* fault or drawback in contemplation अनुप्रेक्षमाणस्यैवोष्ठपुटे चलयतः स्थानमनुप्रेक्षादोषः JainaL.

**अनुप्रेक्षित** (anu-prekṣita) *adj.* seen or looked at with favour, i.e. blessed with अनुप्रेक्षितश्च स तया (वाग्देव्या) निषादनिहतसहचरीकं क्रौञ्चयुवानम् ··· क्रन्दन्तमुदीक्ष्य शोकवान् श्लोकमुज्जगाद KāvyMī. 7.7.

**अनुप्रेक्षिन्** (anu-prekṣin) *adj.* examining, investigating भिक्षुः ··· बहिःसीमां प्रक्रामति देशानुप्रेक्षी अपुनरागमनाय GiMs. iii(2). 170.11 [DBHS.]

**अनुप्रेक्ष्य** (anu-prekṣya) *ger.* **A** having looked or gazed at साताननुप्रेक्ष्य विशालनेत्रा जिघृक्षमाणानवभर्त्सयन्ती। प्रोवाच MahāBhā. iii. 252.22; iv. 307*(5); **B** having observed, i.e. having kept in mind राजधर्ममनुप्रेक्ष्य कुलधर्मानुसंततिम्। कर्तुमर्हसि ··· याचनाम् Rāmā. ii. 104.10.

**अनुप्रेत** (anu-preta) *adj.* who has passed away or died afterwards प्रेतेषु पित्रादिषु येऽनुप्रेता अनुमृता ये च स्वकुलेऽप्रजसोऽल्पायुषश्च तानुद्दिश्योच्छोषणादि दद्यात् Aparā. 504.18 (*on* 1.240); उच्छेषणम् ··· लेपमोदकम्। अनुप्रेतेषु विसृजेत् ···। अनुमुख्यपित्र्यनुगमनबुद्ध्या प्रमीतेभ्यो दासवर्गेभ्यः ··· मृतेभ्यश्च विसृजेत् CaturCin. iii(1). 1512.1.

**अनुप्रेप्सु** (anu-prepsu) *adj.* desirous of regaining यो वा प(?पु)ण्यो हीनोऽन(?नु)प्रेप्सुः स्यात् ĀśvaŚS. II. iv. 2.2 (comm. सुखभावत्वाद् भ्रष्टो हीनः, स पुनरपि तमेव भावं प्राप्तुमिच्छन् अनुप्रेप्सुरित्युच्यते)

**अनुप्रेष्** (anu-preṣ-) IV.P., IX.P. **A** (*caus.*) **i** to cause to go forth or send forth after सामदानादिभिः कल्पैराशु प्रेषय (v.l. अनुप्रेषय) वानरान् Rāmā. iv. 36.9; श्रीमानानन्दरङ्गस्तदनु नरपतेराज्ञया हीरचन्द्रौ निस्तन्द्रं जेतुकामौ रिपुनिहवमनुप्रेषयामास हार्दात् ĀnandRa. 7.2; **ii** to cause to send back subsequently, cf. **अनुप्रेषयितव्य**; (*caus.* pass.) to cause to be sent forth after इयं विनयवत्यानुप्रैषि मेघवनस्थया SamarāSaṁ. 4.169; **B** to cast forth, to turn, cf. **अनुप्रेषित 1B**; **C** to urge, to inspire, cf. **अनुप्रेषित2**.

**अनुप्रेषण** (anu-preṣaṇa) *m.* act of sending forth after निष्फलमनुप्रेषणम् PratiYau. 1.5(10)

**अनुप्रेषणतस्** (anupreṣaṇa-tas) *adv.* [w. r. for **अनुप्रेक्षणतस्**] PadmP.(Ra.) 9.218.

**अनुप्रेषयत्** (anu-preṣayat) *adj.* sending forth after प्रहृष्टेन हूणपतिना ··· केवलं स्वानुकूलान् अमात्यजनाननुप्रेषयता कृताभ्यनुज्ञः ··· सः ··· उपकारिकाम् ··· अवजगाहे ĀnandRa. 4.49(5)

**अनुप्रेषयितव्य** (anu-preṣayitavya) *adj.* caused to be sent back subsequently धैर्यमवलम्ब्यतामार्येण, अनुप्रेषयितव्याः खलु यथास्थानं राजानः JānaPa. 7.9(2)

**अनुप्रेषित** (anu-preṣita) *adj.* [*f.* -ā] **1A** sent forth, directed (पाण्डवाः) धृतराष्ट्रेण व्याजेन वारणावतमनु प्रहिता (v.l. अनुप्रेषिता) गमनमरोचयन् MahāBhā. i. 903*(8); राज्ञो यानपात्रकेण वणिजा चन्दनगण्डीरकः प्रावृतोऽनुप्रेषितः GiMs. iii(2). 64.11; राजकुलात्पर्वके प्रवचनकरादाननिमित्तं राजमहिष्या दास्यनुप्रेषिता Tantrākhyā. 133.2; PañcT. 5.2(48) (402.9); सा किल त्वयि उत्पन्नकामया ··· मालतिकया त्वत्सकाशं दौत्येनानुप्रेषिता PadmPrā. 14.2; मयैष श्लोकः सुखप्राश्निकहस्तेनानुप्रेषितः PādaTā. 25.23; अलंकारत्रयं च सत्यवता यदनुप्रेषितं तदुपगतम् MudrāRā. 5.9(20); 5.13(37); (पारसीकाधिपतिना) राजपुत्राणां सहस्रं परिचारार्थमनुप्रेषितं तुरंगमाधिरूढं द्वारि प्रणामलालसं प्रतिपालयति Kād. 78.9; अहं च देवेन चक्रपाणिना देवसकाशमनुप्रेषितः VeṇīSaṁ. 6.139; प्रतिगृह्यतामिदम् ··· अभिषेचनाय स्वस्त्ययनशेषं भगवतानुप्रेषितं शान्त्युदकम् CaṇḍaKau. 1.24(19); तेन चैवमन्वेषयितुमनुप्रेषिताः सर्वतोऽपि चराः UdaySuKa. 135.27; 143.18; सा नक्तं कृतमण्डना। मात्रानुप्रेषिता भेजे शय्यास्थापि न तं पतिम् KathāSaSāg. xii. 10.56; त्यक्तभोज्या सा स्थितानुप्रेषिता ततः। बन्धुदत्तेन मिलिता SamarāSaṁ. 6.38; अहं (शूर्पणखा) ··· महाराजलङ्केश्वरेणानुप्रेषितास्मि JānaPa. 5.5(8); अयम् ··· मया जम्भकेन सहार्यसकाशमनुप्रेषितः MadaKeC. 14(5); **1B** cast forth, turned गगनावलोकनकुतूहलादूर्ध्वमनुप्रेषिता नयनरश्मयः ··· रूपज्ञानम् ··· नभसि जनयन्ति NyāyKa. 179.9; (अहम्) गगनमनुप्रेषितेन चक्षुषा सहसैव ··· पक्षियुगलमालोकयाञ्चक्रे UdaySuKa. 143.12; निद्रार्तं किल लोचनं मृगदृशा विश्लेषयन्त्या कथां दीर्घापाङ्गसरित्तरङ्गतरलं शय्यामनुप्रेषितम् SubhāRaK. 19.44; **2** urged, inspired अनुप्रेक्षितश्च (v.l. अनुप्रेषितश्च) स तया (वाग्देव्या) ··· क्रौञ्चयुवानम् ··· क्रन्दन्तमुदीक्ष्य शोकवान् श्लोकमुज्जगाद KāvyMī. 7.7.

**अनुप्रेषितवती** (anupreṣita-vatī) *adj.* (*f.*) who has sent forth यस्य हस्ते मातृष्वसा ते पत्रिकामनुप्रेषितवती PriyDa. 4.7(3)

**अनुप्रेष्य** (anu-preṣya) *ger.* having sent forth भ्रात्रे त्वं मामनुप्रेष्य किमेवं त्वं विकत्थसे MahāBhā. iv. 341*(3)

**अनुप्रैष** (anu-praiṣá) *m.* after-direction, supplementary direction तानेतान् प्रैषानुप्रैषान् विश्वामित्रो ददर्श KauṣīBr. 28.1 (134.10); जा॒गता अनु॑प्रै॒षा भवन्ति ŚatBr. XII. viii. 2.20 [*but* MW. a subsequent invitation]

**अनुप्रैषसंयुक्त** (anupraiṣa-saṁyukta) *adj.* accompained by the after-direction श्राद्धे क्षणः क्रियतामित्यादि प्रैषसंयुक्तमों तथेत्याद्यनुप्रैषसंयुक्तं कृत्स्नं श्राद्धविधानं कृत्वा देवपित्रर्थं त्यक्तमन्नम् ··· समर्पयेत् SmṛtiCan. v. 415.19.

**अनुप्रोक्त** (anu-prokta) *adj.* narrated serially शृणु वंशमनुप्रोक्तं यत्र जातोऽसि पार्थिव HariVaṁ. 23.42.

**अनुप्रोता** (anu-protā) *adj.* (*f.*) interwoven, interrelated आज्यतो विभक्त्योऽनुप्रोता भवन्ति KauṣīBr. 1.5 (3.10)

**अनुप्रोत्साहन** (anu-protsāhana) *n.* favourable or agreeable stimulation शास्त्रान्तरे चतुःषष्टिर्मूलकला उक्ताः। ·· शयनोपचारिकाः षोडश।··· अनुप्रोत्साहनम् JayaMa. 32.5 (*on* 1.3)

**अनुप्रोह्** (anu-proh-) I.P. **1** to push forward accordingly देवतानामेवैनं (द्रोणकलशम्) तत् प्रौढिमनुप्रोहति JaimiBr. 1.78 (better *adn.*); (उपलाम्) प्राचीमन्ततोऽनुप्रोहति BhārŚS. i. 23.7; **2** to insert in सजनीयं प्रातःसवनिके वैश्वदेवेऽनुप्रोहेत्। विहव्यं माध्यंदिनीये मरुत्वतीये। अगस्त्यस्य कयाशुभीयं निष्केवल्यं तार्तीयसवनिके वैश्वदेवेऽनुप्रोहेत् ĀpaŚS. xiv. 19.11.

**अनुप्रोह्य** (anu-prohya) *ger.* having pushed forward accordingly (उपलाम्) प्राचीमन्ततोऽनुप्रोह्य ··· कृष्णाजिने पिष्टानि प्रस्कन्दयित्वा ··· संप्रेष्यति ĀpaŚS. i. 21.7.

**अनुप्लव** (anu-plava) *adj.* [*f.* -ā] [Vār. 14 *on* P. ii. 2.24] floating along न वै सर्वमनुप्लवम् AV.(P.) vii. 7.4; (साहम्) उभयकरविधृतदारका सुदूरमनुप्लवा पयसि AvantiKa. 199.4; *m.*, *n.* **1** following, pursuit नामनिमित्तानुप्लवेन महामते बाला निमित्तमनुसरन्ति LaṅkāSū. 6.4(19) (92.8) [DBHS.]; **2A** attendant, servant (*lit.* one who runs after) सानुप्लवः प्रभुरपि क्षणदाचराणां भेजे रथान्दशरथप्रभवानुशिष्टः RaghuVa. 13.75; तेऽपि ···। सानुप्लवाः क्वापि यातास्त्रिमूर्धखरदूषणाः MahāvīC. 7.19; असौ ···। अप्राप्तसंतोषमसंविभक्तसंभुक्तसर्वस्वमनुप्लवेषु। अथादिशति RāmC. 3.45; 3.55; 34.71; (सः) तुरगमुत्सृज्य विसृज्यानुप्लवानपि। तमन्वियाय सारङ्गम् NavaSāC. 2.36; सतां सेव्यः कथं त्वेष स्यात्तिरश्चामनुप्लवः ŚāliC. 1.15 (comm. सेवकः); स (अक्रूरः) ददर्श गवामनुप्लवम् ··· केशवम् Yādavā. 9.52 (comm. अनुचरम्); अनुप्लवान् ··· स्वपुरश्चारयेद्राजा स्वसंरक्षणकारणात् NītiPra. 6.26; **2B** companion, ally बाणोऽपि ··· वशिकविशिखाविहारिणीष्वनन्यजानुप्लवासु प्रचलितास्वभिसारिकासु ··· निवासस्थानमगात् HarṣaC. 126.6; अनुप्लवस्याभिसमीक्ष्य जल्पतश्चरन्ति हि छन्दमधीश्वरा अपि RāmC. 4.17; अनुप्लवेन व्रजता बभूवे तासामनङ्गेन तदोद्यतानाम् Yādavā. 8.58 (comm. सहचरेण); 14.62 [Kośas give *anuplava* as one of the synonyms of the following words: *anujīvin*, Vaija. 105.16; *abhigāmin*, ParaNā. 1961; *abhicara*, AbhidhāCin. 496; ParaNā. 1961; KalpaK. 115.240; *abhisara*, AmaK. 1610; ŚabdaRa.(Vā.) 2731; KośaKaTa. 1.6207; *abhisāra*, Vaija. 105.16; *catura*, KalpaK. 115.240; *vaśin*, ParyāŚaRa. 1023; *sahakṛt*, KośaKaTa. 1.6207; *sahāya*, AmaK. 1610; Vaija. 105.16; AbhidhāCin. 496; ŚabdaRa.(Vā.) 2731; ParyāŚaRa. 1023; ParaNā. 1961; KośaKaTa. 1.6207; KalpaK. 115.240]

**अनुप्लवत्** (anu-plavat) *adj.* following, pursuing यश्चाधर्मं चरेन्मोहात् कामलोभावनुप्लवन्।··· सानुबन्धो विनश्यति MahāBhā. xii. 205.7.

**अनुप्लवमान** (anu-plavamāna) *adj.* **i** going after, following रामहतकः कौशिकमृषिमनुप्लवमानो मिथिलामुपस्थितः AnargharRā. 3.35(2); **ii** running into कृतवान्भावम् ··· अनुप्लवमानोऽहं हारे मर्कटबन्धने VāmaP. 91.101.

**अनुप्लवान्य** (anuplavānya) *m.* other than a follower (i. e. enemy) अदृष्टतूणीरमनुप्लवान्यैः अग्राह्यसंधानविमोक्षबाणम्। अमंसतैनं (कृष्णम्) स्थिरचापचक्रं प्रत्येकमात्माभिमुखं प्रतीपाः Yādavā. 20.46 (comm. स्वानुयायिव्यतिरिक्तैः परिपन्थिभिः)

**अनुप्लवौघ** (anuplavaugha) *m.* stream or multitude of followers परस्परं प्रापुरथावसानमनुप्लवौघाः पृतनाधिपत्योः RāmC. 32.45.

**अनुप्लावित** (anu-plāvita) *adj.* flooded, inundated (शशापानं तीर्थम्) प्राप्ता तत्र सरस्वती। वडवाग्निं समादाय तयानुप्लावितं पुनः। ततो मेध्यतरं जातं तीर्थम् SkandP. vii(1). 258.24.

**अनुप्लाव्य** (anuplāv-ya) *ger.* having filled with (water), i. e. having flooded जघनेन दहनं तिस्रा दक्षिणाः कर्षूः कुर्वन्ति। अथैना अद्भिरनुप्लाव्य सिकताभिरवकीर्य संगाहन्ते ĀgniveGS. iii. 6.1 (149.12); Baudh-

PiMe. i. 11.14.

**अनुप्लु** (anu-plu-) I. Ā. **1A** to float after, to float favourably अनुप्लवन्ते मेघाश्च तथैवेन्द्रधनूंषि च। एतानि जयमानानां लक्षणानि MahāBhā. vi. 4.24; xii. 103.6; अनुप्लवन्ते मेघाश्च यस्य तस्य रणे जयः ŚārṅgaPa. 1939; **1B** to flow after, to blow after तमनुप्लवते वायुः प्लवन्तं पुत्रमात्मनः Rāmā. vii. 35.28; **1Ci** to follow, to pursue (शरीरवान्) शब्दादीन्विषयांस्तस्मादसंरागादनुप्लवेत् MahāBhā. xii. 205.8; **1Cii** to go after, to follow वानरद्वयमार्यस्य पार्ष्णिग्राहमिव संभ्रमादनुप्लवते AnargһaRā. 5.50(4); **1D** to follow (in action), i. e. to imitate, to enact निगूढसौजन्यभृतोऽपि केचित्पारुष्यमाहार्यमनुप्लवन्ते ŚrīKaC. 2.20 (comm. अभिनयन्ति); **2** to plunge in continuously, i. e. to remain for ever आनन्दसंप्लवमनुप्लवतां मनो मे KṛṣṇaKa. 1.14 (Subodhanī निरन्तरं प्लवताम्); **3A** to attend, to serve, cf. **अनुप्लव 2A**; **3B** to accompany, cf. **अनुप्लव 2B**.

**अनुफणम्** (anuphaṇam) *adv.* on each and every hood उदञ्चन्न्यञ्चद्भूविवृतनिभृतानामनुफणं मणीनां विद्युद्भिः क्षणमुषितपातालतिमिरः … अजनि भुजगानामधिपतिः AnargһaRā. 6.72 (comm. फणां फणामनु)

**अनुफल** (anu-phala) *n.* consequence अहं सो ममेदमित्येवं मन्यमानो निबध्नात्यात्मनात्मानं जालेनेव खचरः कृतस्यानुफलैरभिभूयमानः सदसद्योनिमापद्यता इति … परिभ्रमति MaiU. 3.2; MaitrīU. 372.6(3); (जीवः) एक एवाहमद्वितीयः कंचित्कालमज्ञानवृत्त्या विस्मृतजाग्रद्वासनानुफलेन … प्राज्ञ इदानीमस्मीति … परिपक्वो भवति MaṇḍBrU. 2.4 (350.23)

**अनुफलिनी** (anuphalinī) *f.* plant *Amomum subulatum*, large cardamom कान्तोऽश्मनि गृहे चारौ कान्तानुफलिनी स्त्रियोः ViśvaPra. 59.34.

**अनुबद्ध** (anu-baddha) *adj.* [*f.* -ā] **1Ai** bound by **ii** bound by (studentship with the teacher) **iii** tied or held up by, detained **iv** bound to, liable to **Bi** surrounded by, covered with **ii** encircled by, tied around by **Ci** connected, effected by **ii** connected with, related to **iii** strung together, clustered **iv** connected to, comprising of **D** attached to, devoted to **2A** followed, pursued or chased by **B** who has gone after or followed **3Ai** continuous, uninterrupted **ii** continued (further) **Bi** commenced **ii** brought about **4** engaged in **1Ai** bound by वेतसशाखानुबद्धा भवति VārāŚS. III. iv. 1.27; जीवस्य कर्मलोकेषु कर्मभिस्तु शुभाशुभैः। अनुबद्धस्य तैः पाशैर्नीयमानस्य दारुणैः। मृत्युदूतैः … पुण्यपापकृतं तिष्ठेत् MahāBhā. xiv. App. I. 4(587); VṛGautaSm. 520.10(5); (आत्मा) न पुण्यपापाभ्यामनुबद्धः, यो हि करोति पुण्यपापे, स ताभ्यामनुबध्यते, न हि दर्शनमात्रेण तदनुबद्धः स्यात् BṛĀraUBh. 555.18 (*on* iv. 3.15); 557.1 (*on* iv. 3.15); प्रजापतेस्ते वचसाधीश तन्त्या लोकः किलायं कामहतोऽनुबद्धः BhāgP. iii. 21.16; अनुबद्धं मम मानसमरुणिमसर्वस्वसंप्रदायेन MūkaPañ. 4.15; **1Aii** bound by (studentship with the teacher) गुरुसमवाये भिक्षायामुत्पन्नायां यमनुबन्ध(द्ध)स्तदधीना भिक्षा HirŚS. xxvi. 2.71 (34.16); ĀpaDS. i(2). 7.14; **1Aiii** tied or held up by, detained हित्वा पलायमानस्य सहायान्प्राणसंशये। अमित्रैरनुबद्धस्य द्विषतामस्तु नस्तथा। मनुष्यापसदा ह्येते ये भवन्ति पराङ्मुखाः MahāBhā. xii. 101.34; गुरुकार्येण मित्रैर्वा मन्त्रिणा राज्यचिन्तया। अनुबद्धः प्रियः किं नु धृतो वल्लभयापि वा NāṭyaŚā. 22.251; अनुबद्धांस्तान् सिन्धुरान् शिक्षयेन्नृपः Mānaso. ii. 3.283; **1Aiv** bound to, liable to महाराजव्याघ्रसेनः … समाज्ञापयति।… भारद्वाजसगोत्रब्राह्मणनागशर्म्मणे इयं पल्लिका … अन्वयभोज्या … तदस्मद्वङ्श्यराजभिरन्यैश्च विभवानभावानुबद्धानायुर्व्वियोगानुगतङ्गुणांश्च दीर्घकालानुगुणान् विगणय्य … पल्लिकादायोनुमन्तव्यः पालयितव्यश्च EI. xi. 221.12; **1Bi** surrounded by, covered with पुष्पौघेणानुबद्धेन नानावर्णेन वानरः। बभौ मेघ इवोद्यन् वै विद्युद्गणविभूषितः Rāmā. v. 1.50; लोलालकानुबद्धानि आननानि चकासति KāvyālaṅSū. ii. 2.8; रक्षोभिरनुबद्धस्य कपिसैन्यस्य निर्यतः। सस्रतुः सज्यधन्वानौ रक्षार्थं रामलक्ष्मणौ RāmC. 35.120; **1Bii** encircled by, tied around by अग्निजिह्वैर्महानागैरनुबद्धः समन्ततः (सागरः) Rāmā. vi. 246*(2); अहीश्वरानुबद्धमध्यमेखलं मन्थानकाचलमिव … इदम् … दाक्षिणात्यं बलम् YaśasCam. i. 462.4; **1Ci** connected, effected by अतियोगानुबद्धानां (व्याधितानाम्) सर्पिःपानं प्रशस्यते CaraS. i. 16.24; **1Cii** connected with, related to शतायुर्वै पुरुषो विभज्य कालमन्योन्यानुबद्धं परस्परस्यानुपघातकं त्रिवर्गं सेवेत KāmSū. 10.3 (1.2) (JayaMa. धर्मादीनामन्यतमं द्वाभ्यामेकेन वानुबद्धम्); आख्यातेन हि योऽर्थः कर्तव्य इत्युच्यते, तत्रैतदनुबद्धं, यथा शक्यते तथा ŚābaBh. 1476.26 (*on* vi. 5.54); साधनोपालम्भौ उभयोरपि पक्षयोर्व्यतिषक्तावनुबद्धौ च NyāyBh. 57.13 (*on* i. 2.1); शालिबीजादङ्कुर उपजायते शालिबीजविमर्दोत्तरकालं नालकाण्डादिभावेन भूतानुग्रहवशात् शालिबीजं प्रादुर्भवति न च तत्रैकं निमित्तं किंचिदनुबद्धमस्ति NyāyVār. 354.11 (*on* iii. 1.4); मानी च मानसारः … राष्ट्रादिना धृतिमनुबद्धस्य वारिणा सुचिरोपार्जितसंनिहिते स्वतेजसि प्रकाशके न शक्यमदृश्येनात्मना … गहनेषु स्थातुम् AvantiKa. 49.12; विलम्बिका। कफवातानुबद्धामलिङ्गा तत्समसाधना AṣṭāHṛ. i. 8.28; विहातुं शक्यात्मप्रकृतिरनुबद्धा न हि सुखम् RāghPāṇ.(Dha.) 17.40; उत्पत्तौ यत्कारकानुबद्धं यत्कर्म प्रतीयते, ततोऽन्येन कारकेणानुबद्धं तत् न शक्यतेऽवगन्तुम् PrakaPañ. 260.17; यदि ज्ञानजात्यानुबद्धं परतःप्रामाण्यं, तत्कथं शाब्दमप्यतिक्रामेत् Kāśi. i. 79.20 (*on* 2.33); ततानुबद्धत्वात्स्वरस्य न न्यूनाधिकभावाशङ्का काचित्, तत्र मूर्च्छितायां वीणायामशिक्षितेनाप्यभिहननेन स्वरत्वोपलम्भः AbhinBhā. iv. 1.20 (*on* 28.1); परस्परानुरागोऽन्यतरानुरागो वा … मनोवाग्बुद्धिशरीरारम्भजन्मभिश्चानुभावैरनुबद्धः प्राप्तप्राप्यप्रकर्षावस्थो विप्रलम्भशृङ्गाराख्यां लभते SaraKaṇṭhā. 623.13; मातॄ रसवहां नाडीमनुबद्धा पराभिधा SaṃgīRa. i. 36.8 (1(2).39); व्यूहादिभेदे कतिचन पुरुषाः स्युः परेणानुबद्धाः TattvMu. 3.74; **1Ciii** strung together, clustered सौगन्धिकानुबद्धकमलकेयूरपर्यायिणा … सुन्दरीजनेन सह रमन्ते कामिनः YaśasCam. i. 106.3; i. 480.6; **1Civ** connected to, comprising of त्रैगुण्यमनुबद्धानामितरेषामथेतरत्। द्विविधस्यापि चान्नस्य यद्यशो रूपमुत्तमम् LakṣmīT. 50.174; **1D** attached to, devoted to मनुः कामान् … बुभुजे … प्रत्यूषेष्वनुबद्धेन हृदा शृण्वन्हरेः कथाः BhāgP. iii. 22.33; RāghPāṇ.(Dha.) 17.40; **2A** followed, pursued or chased by (तारा वानरान्) तानुवाच … रामवित्रासितान्सर्वाननुबद्धानिवेषुभिः Rāmā. iv. 19.7; (हर्षः) पराधीनमाधिभिरनुबद्धमनुबन्धिकाभिः पार्श्वोपविष्टया … यशोमत्या … स्पृश्यमानं पितरमद्राक्षीत् HarṣaC. 219.7; आहारकृते ततो दवीयान् सोऽत्यर्थं जविना मयानुबद्धः RāmC. 14.90; न कैश्चिदपि चापपाणिभिरसौ मृगोऽनुबद्धस्तथापि न क्वचित्तस्थौ त्रासचापलयोगात् स्वाभाविकादेव Loc. 114.22 (*on* 2.28); Kāvyānu. (He.) 58.11; **2B** who has gone after or followed स च ब्राह्मणस्तं प्रदेशमागतः।… स च (दारिकाणाम्) आसामवधानतत्परो मन्दगतिप्रचारतया पृष्ठतोऽनुबद्धः GiMs. iii(2). 53.21; **3Ai** continuous, uninterrupted (कफः) प्रभिन्नस्तु श्वेतं पिच्छिलं तन्तुमद् घनमनुबद्धं स्निग्धमास्रावं स्रवति CaraS. vi. 21.34 (1941 Ed.); अनुबद्धसमुद्धताम्बुवाहध्वनिताडम्बरमम्बरं बभूव ŚiśuVa. 20.68; या धात्री गुर्वम्ललवणमधुराभिष्यन्दिदिवास्वप्नालस्याहितानि चात्यर्थमुपसेवते तस्याः … स्तन्यम् पिबतः … अस्य … बहुलं पिच्छिलं चानुबद्धमतिसार्यते KāśyaS. 333A. 2; **3Aii** continued (further) जन्मान्तरेऽनुबद्धा यदि नेयं संगतिः कृता विधिना। तत्किं त्वयि मम जाता परलोके पुत्रकार्याशा SamaMā. 8.23; BālamBhā. ii. 304.32 (*on* 2.212); **3Bi** commenced तन्निमित्तकस्तर्हि कश्चिदनुबद्धः परैरभियोगः MahāvīC. 5.12(1); **3Bii** brought about उदबिन्दूनां मुहुरनुबद्धं वीच्या वात्यासारं प्रशमि तता पारम्यम्। फेनालीनां छिमितिकरोति RāghPāṇ.(Dha.) 8.17; **4** engaged in, cf. **अनुबद्धयुद्ध**.

**अनुबद्धजघन** (anubaddha-jaghana) *adj.* whose hinder part is closely followed स्वामी … सेनाभिर्मनसानुबद्धजघनं कृत्वा जवे वारणम् PratiYau. 3.5.

**अनुबद्धत्व** (anubaddha-tva) *n.* the state of being followed (as a consequence) or produced ततानुबद्धत्वात्स्वरस्य न न्यूनाधिकभावाशङ्का काचित् AbhinBhā. iv. 1.17 (*on* 28.1)

**अनुबद्धत्वाभाव** (anubaddhatvābhāva) *m.* absence of the state of being connected with or related to त्रिवर्गस्य नियतकालत्वादन्योन्यानुबन्धो नास्ति, ततश्चासेवनप्रसङ्ग इति, नायं नियमः अनुबद्धत्वाभावे निरनुबद्धत्वमभ्युक्तम् JayaMa. 11.26 (*on* 1.2)

**अनुबद्धनर्मन्** (anubaddha-narman) *n.* love or affection which is associated with राधायामनुबद्धनर्मनिभृताकारं यशोदाभयात् … कंसद्विषः … विजयते … वपुः SaduktiKa. 40.17.

**अनुबद्धबिन्दु** (anubaddha-bindu) *adj.* having drops closely connected, i. e. having continuous (line of) drops सा … अनुबद्धबिन्दुभिः … अश्रुभिरामीलितलोचना निःशब्दं रोदितुमारेभे Kād. 135.12.

**अनुबद्धमानस** (anubaddha-mānasa) *adj.* whose mind is attached to यदर्थिताभूदनुबद्धमानसैः सुरैश्च सिद्धैश्च महोरगैश्च। तेषां पुरस्तादकृत व्यवस्थामित्येकदा संसदि पन्नगेन्द्रः NavaSāC. 9.42.

**अनुबद्धयुद्ध** (anubaddha-yuddha) *adj.* engaged in fighting चित्रं मुरारे सुरवैरिपक्षस्त्वया समन्तादनुबद्धयुद्धः। अमित्रमुच्चैरविभिद्य भेदं मित्रस्य कुर्वन्नमृतं प्रयाति StavMā. 154.10.

**अनुबद्धयोग** (anubaddh-yoga) *adj.* who is engrossed in thought (अनागसौ) एतौ … संरम्भसंभृतसमाध्यनुबद्धयोगौ। भूयः सकाशमुपयास्यतः BhāgP. iii. 16.26.

**अनुबद्धरति** (anubaddha-rati) *adj.* having fixed love or compassion, compassionate वन्देमहि …। त्वामिह दामोदर … हर नो दरमनुबद्धरतिम् StavMā. 50.7 (comm. भक्तेषु सरागम्)

**अनुबद्धरागम्** (anubaddharāgam) *adv.* with fixed faith, faithfully आरूढवाहनिवहैरनुबद्धरागं नाथोऽन्वगामि धरणेर्नरपालवर्गैः Acyutarā. 10.21.

**अनुबद्धरुज्** ( anubaddha-ruj ) *adj.* associated with pain अथातोऽतीसारग्रहणीरोगनिदानं व्याख्यास्यामः … श्लेष्मणा घनम् ।… अभीक्ष्णं गुरु दुर्गन्धं विबद्धमनुबद्धरुक् ( शकृत् ) AṣṭāSaṁ. i. 279.23 (3.8); AṣṭāHṛ. iii. 8.10.

**अनुबद्धविजृम्भिकम्** ( anubaddhavijṛmbhikam ) *adv.* with continuous yawning ( विलासवती ) मुहुर्मुहुरनुबद्धविजृम्भिकमाजिह्मितलोचना सालसं निशश्वास Kād. 66.7.

**अनुबद्धवेदन** ( anubaddha-vedana ) *adj.* **i** associated with pain (as a symptomatic affection) शोणितादिषु धातुषु अतिप्रदुष्टेषु … अनुबद्धवेदनमवेदनं वा समासव्यत्यासादुपवेक्ष्यते CaraS. vi. 19.12 (1922 Ed.); **ii** (person) having continuous pain ( व्रणशुक्रे ) शीतैश्चास्य शिरोवक्त्रं दिह्यात् … अनुबद्धवेदनं शताह्वायष्ट्याह्वचाघृतमण्डेनानुवासयेत् AṣṭāSaṁ. ii. 230.6 (6.14)

**अनुबद्धवैर** ( anubaddha-vaira ) *adj.* **i** having continuous enmity पूर्वानुबद्धवैरेण शत्रुणा प्रभविष्णुना । नरके पतता तेन मनागस्मि निपातितः Mṛcch. 10.45; **ii** who has developed enmity पितुर्निपातादनुबद्धवैरः पत्युर्बलानां तनयः खरस्य । रोषेण मूर्च्छन्मकराक्ष उच्चैर्युगक्षये वार्धिरिवोच्चचाल RāghPāṇ. (Ka.) 11.22.

**अनुबद्धशिरःपाद** ( anubaddha-śiraḥpāda ) *adj* to which the head and legs are (still) attached, i.e. not severed अनुबद्धशिरःपादेन गोशालां चर्मणावच्छाद्य … अवदानकृतं ब्राह्मणान् भोजयति KauśiSū. 24.10; शृतमजमित्यनुबद्धशिरःपादं त्वेतस्य चर्म KauśiSū. 64.22; 81.28.

**अनुबद्धशूल** ( anubaddha-śūla ) *adj.* having continuous pain तस्य ( श्लेष्मलस्य अतिसारस्य ) रूपाणि — स्निग्धं श्वेतम् … दुर्गन्धं श्लेष्मोपहितमनुबद्धशूलम् … अतिसार्यते सप्रवाहिकम् ( मलम् ) CaraS. vi. 19.7 (1941 Ed.)

**अनुबद्धसनातनधर्मा** ( anubaddha-sanātanadharmā ) *adj.* (*f.*) adhering to the eternal path of virtue शठचरितोऽयं तव वनमाली मृदुहृदयाहम् …। तव हरिरेष निरङ्कुशनर्मा अहमनुबद्धसनातनधर्मा StavMā. 268.2.

**अनुबद्धसंधिलिपि** ( anubaddhasandhi-lipi ) *adj.* having continuous joint script, i.e. drawn on continuous joints षड्बीजैरनुबद्धसंधिलिपिभिर्वीतं गृहाभ्यां भुवः ŚāraTi. 9.52.

**अनुबद्धसेवा** ( anubaddha-sevā ) *f.* **A** constant devotion सच्चिवालम्बितधुरं नराधिपम् । परिवृद्धरागमनुबद्धसेवया मृगया जहार चतुरेव कामिनी SaraKaṇṭhā. 604.11; **B** continuous practice, SaraKaṇṭhā. 604.11.

**अनुबद्धस्पृह** ( anubaddha-spṛha ) *adj.* which has developed a desire for तेनायं न परोपकार इति नः चिन्तापि चेतश्चिरम् । सूक्ताभ्यासविवर्धितव्यसनमित्यत्रानुबद्धस्पृहम् PramāVār. 1.2.

**अनुबद्धा** ( anubaddhā ) *f.* name of a type of *dhruvā*- song शीर्षका चोद्धता चैव ह्यनुबन्धा( द्धा ) विलम्बिता । अड्डिता चापकृष्टा च षट्प्रकारा ध्रुवा स्मृताः- ( ता ) NāṭyaŚā. 32.329 ( AbhinBhā. चेष्टितप्राधान्ये नोद्धतसंगतां समस्तविभावानुभावव्यभिचारिसंपदं सूचयत्यनुबद्धा ( ध्रुवा ) ); ध्रुवाः …। यतिं लयं वाद्यगतिं पदं वर्णान् स्वराक्षरम् । अनुबध्नाति यत्रैवमनुबद्धा भवेत्तु सा NāṭyaŚā. 32.331; AbhinBhā. iv. 366.12 (*on* 32.331)

**अनुबद्धार्थानर्थसंशय** ( anubaddhārthānartha-saṁśaya ) *m.* doubt associated with advantage and disadvantage एष हि गणिकामातुरधिकारो यद्दुहितुः … अर्थैरनर्थप्रतिघातिभिश्चानिन्द्यैरिभ्यैरनुबद्धार्थानर्थसंशयान्विचार्य भूयोभूयः संयोजनमिति DaśKuC. 42.19.

**अनुबद्धोत्कम्प** ( anubaddhotkampa ) *adj.* having incessant agitation मम हि कुवलयाक्षीं प्रत्यनिष्टैकबुद्धेः भृशमयमनुबद्धोत्कम्प एवान्तरात्मा MālaMā. 8.195 ( comm. अनुगतोत्कम्पः )

**अनुबध्नत्** ( anu-badhnat ) *adj.* [*f.* -ī, -ntī] **1Ai** clinging to, taking recourse to **ii** binding (in embrace) **B** fixing or casting upon **C** binding, i.e. arranging **D** insisting, persisting **2A** producing continuously **B** composing **3A** pursuing, chasing **B** following **4A** connecting **B** connecting, i. e. concerning ( the motive ) **1Ai** clinging to, taking recourse to यत्तु कार्यं मनुष्येण शौण्डीर्यमवलम्बता ( v.1. शौटीर्यमनुबध्नता )। अस्मिन्काले महाप्राज्ञ सत्त्वमातिष्ठ तेजसा Rāmā. vi. 2.13; तृष्णे त्वामनुबध्नता फलमियत् प्राप्तं जनेनामुना ŚatTrayī. 649; BhallaŚ. 7; SūktiRa. 175.30; Kuval. 167(6); स चायमविद्यामनुबध्नन् जीवः … संसारी … स्वर्गापवर्गयोग्यो भवति SiddhāSiA. i. 119.2; **1Aii** binding (in embrace) रुरोध त्रपमाणेव रावणं रमणी निजा। अनुबध्नन्तमाश्लेषैः सविश्लेषा शनैरसौ । तमूचे RāmC. 24.81; **1B** fixing or casting upon चक्षुरनुबध्नन्त्याम् ( प्रयोज्यायाम् ) इङ्गिताकारनिवेदनम् KāmSū. 299.3 (5.6) ( JayaMa. चक्षुरनुबध्नन्त्यामिति पुनः पुनः पश्यन्त्यां प्रयोज्यायाम् ); **1C** binding, i. e. arranging सीमन्तं निजमनुबध्नती कराभ्यामालक्ष्य स्तनतटबाहुमूलभागा । भर्त्रान्या मुहुरभिलष्यता निदध्ये ŚiśuVa. 8.69; **1D** insisting, persisting अन्येद्युश्चानुबध्नन्त्या राज्ञ्या राजा स यत्नतः । वीणाया गुणशर्माणं शिक्षारम्भमकारयत् KathāSaSāg. viii. 6.47 (*but* APTE bearing, enduring); xii. 14.26; दूतः …। ऋणिकस्योत्तमर्णेभ्यः प्रदातुमनुबध्नतः RājTa.(Ka.) 8.1855; **2A** producing continuously सहचरम् …। स रथाङ्गनामवनितां करुणैरनुबध्नतीमभिननन्द रुतैः Kirātā. 6.8 (*but* comm. अन्विष्यन्तीम् ); कलकलाननुबध्नन्नग्रतः परभृतोऽजनि बन्दी ŚrīKaC. 12.9; **2B** composing ( शब्दार्थयोः ) तयोरप्युन्मेषः स्रवदमृतमाधुर्यसुभगः परं पुण्यश्लोकं चरितमनुबध्नन् विजयते PratāYaBhū. 37.2; **3A** pursuing, chasing मया मृगयायां यदृच्छया निरर्थकमनुबध्नता … मानवानामगम्यः … प्रदेशो वीक्षितः Kād. 132.3; 319.6; गृध्रराजस्तं पापमस्मिन् सहसानुबध्नन् … यशःशरीरं नवमाललम्बे MahāvīC. 7.18; अथानुबध्नन्मां वेगात् …। बद्धमुष्टिकरः क्रोधादागतो मरुभूतिकः BṛKathāŚloSaṁ. 6.19; अथ वातमृगं मृगव्यशीलः स नृपः … अनुबध्नन् । तुरगेण तरङ्गिणीमवापत्तमसाम् RāmC. 8.54; प्रधानदन्ती … अरण्यवारणं रणायानुबध्नन् … अतिमहत्कान्तारं प्रविष्टः TilaMañ. 184.8; अथैवमनुबध्नता पापर्द्धिविस्तरेण प्रथमरवपलायितैः … श्वापदगणैर्विरलतां गते मृगवने … विजयवर्धनः सविनयमुवाच UdaySuKa. 44.26; **3B** following भर्तृदारिके कादम्बरि कस्मान्न निवारयस्येनमलीकसुभगाभिमानिनमतिदुर्विनीतं मामनुबध्नन्तं विहङ्गापसदम् Kād. 194.16; आश्रमाङ्कणबलिकुसुमपुटधूलिं चरणपृष्ठलग्नमनुबन्धन्त्या … भ्रमरमालयोपास्यमानम् … तपोराशिं ददर्श AvantiKa. 143.3; 241.14; प्रातरारभ्य मामनुबध्नन् किष्किन्धायां प्रस्थाप्य संप्रति निवृत्तः ( माल्यवान् ) MahāvīC. 5.45(3); अहो हलमुखविनिर्भिन्नविश्वम्भराविर्भूतयोषिद्रत्नमनुबध्नता मम मनोरथेन चिराय फलितम् MahāvīC. 6.9(2); **4A** connecting प्रासङ्गिकं यदुपक्रान्तं तत् परिसमापय्य प्रकृतमनुबध्नन्नाह HetuBiṬ. 138.23; विच्छिन्नामनुबध्नती मम कथाम् … सा मया । नाश्लिष्टा CaṇḍaKau. 1.13; **4B** connecting, i.e. concerning (the motive) यः पुनः … प्रहारम् … अनुबध्नन्नप्यधिकं वा प्रहरति तस्य यथोक्तादल्पो दण्डः DaṇḍaVi. 248.12.

**अनुबध्य** ( anubadh-ya ) *ger.* **1A** having tied or fastened कृष्णशकुनेः सव्यजङ्घायामङ्कमनुबध्याङ्के पुरोडाशं प्र पतेत इत्यनावृतं प्रपादयति KauśiSū. 18.16; **1B** having clung or resorted to नृनात्मनोऽनुबध्यान्तर्हित्वैनान् परितोऽपि च । या स्थितिस्तस्य देवस्य पुरुषोत्तमताह्वया । सोक्ता नृसिंहशब्देन AhirbuS. 55.27; सत्यानृते च वर्तेते सत्यसमानुबन्धिनी परमार्थसत्यमेकमधिष्ठानमनुबध्य SanatBh. 305.2 (*on* 4.17); **1C** having insisted or persisted इत्यसकृदनुबध्यानुयुक्तो मनस्येव किं मामुपहसितुम् … पृच्छति Mukundā. 218(22); **2A** having related or continued स तु ( केयूरकः ) … उपसृत्योपविश्य पार्श्वे वैशंपायनागमनालापमेवानुबध्य … चन्द्रापीडं व्यज्ञपयत् Kād. 262.21; क्षितिपतिः … वचनपुरःसरं कथान्तरमनुबध्य … बलिं निजदेशान्निर्वासयामास YaśasCam. ii. 318.10; **2B** having associated with भृशमविध्यतानुबध्य कुमुदबान्धवेन AvantiKa. 71.19; **2C** having adhered to, i.e. understood नारदः … करणाध्यायमिव स्वाध्यायमनुबध्य मनोमर्कटक्रीडाप्रकाममिन्द्रियारामसुपरम्य … संजातकेवलस्तत्पदाप्तिपेशलो बभूव YaśasCam. ii. 356.13.

**अनुबध्यमान** ( ánu-badhyamāna ) *adj.* [*f.* -ā] **1A** being bound or tied subsequently ये ( पशवः ) बु॒ध्यमा॑न॒मनु॑बु॒ध्यमा॑ना अ॒भ्यैक्ष॑न्त॒ मन॑सा॒ चक्षुषा च TaiS. III. i. 4.2; MaiS. i. 2.15 (i. 25.5); iii. 9.7 (iii. 125.16); KāṭhS. 30.8 (ii. 190.3); 30.9 (ii. 191.9); **1B** being connected, being attached प्रज्ञान्तराणि शाण्डिल्यविद्याप्रभृतीनि स्वेन स्वेन अनुबन्धेन अनुबध्यमानानि पृथगेव कर्मभ्यः प्रज्ञान्तरेभ्यश्च स्वतन्त्राणि भवन्ति BrahmSūBh.(Śaṅ.) 696.15 (*on* iii. 3.50); **1C** being arranged or composed एकरूपत्वानुबन्धं त्यक्त्वा विचित्रानुप्रासोऽनुबध्यमानो न दोषाय Loc. 85.19 (*on* 2.15); **2A** being followed, i. e. being attended अयमनुरुध्यमानः ( v. l. अनुबध्यमानः KALE's Ed. ) तापसीभ्यामबालसत्त्वो बालः Śāk. 7.13(4); **2B** being followed मधुकरकुलैरनुबध्यमानमनाघ्रातपूर्वममानुषलोकोचितं कुसुमगन्धमभ्यजिघ्रम् Kād. 139.3; 194.12; अच्छेनाभरणदीधितीनां निवहेन दिशामिव दर्शनानुरागलग्नेन चक्रवालेनानुबध्यमानम् … युवानमद्राक्षीत् HarṣaC. 34.2; धवलिम्ना क्षीरोदेनोच्चैःश्रवशङ्कयानुबध्यमानः … तुरंगरत्नं भद्रवाहनो नाम AvantiKa. 88.6; **2C** being pursued or chased तच्चानुबध्यमानं किंनरमिथुनमालोकयत एवास्य संमुखापतितमचलतुङ्गशिखरमारुरोह Kād. 120.1; स्फाटिककुण्डलाभ्यां शुक्रबृहस्पतिभ्यामिव … अनुबध्यमानम् … भैरवाचार्यं ददर्श HarṣaC. 155.15; सैन्ययोधैरनुबध्यमानः कियन्तमपि मार्गमगमत् ( गन्धवारणः ) TilaMañ. 242.4; **3** being insisted upon, i. e. being requested repeatedly समुपजातकुतूहलया सारिकयानुरुध्यमानः ( v. l. अनुबध्यमानः ) कथयितुमारेभे VāsaDa. 109.5; विलासवती … पुनः पुनश्चानुबध्यमाना … राजानम् … अपश्यत् Kād. 69.10 ( comm. अनुबध्यमाना सनिर्बन्धं पृच्छ्यमाना ); 133.21; 207.1; 233.2; ते … भूयो भूयश्चानुबध्यमाना दुःखेन कथं कथमप्याचचक्षिरे देव पावकं प्रविष्ट इति HarṣaC. 223.10; तया चाहमनुरुध्यमानः ( v. l. अनुबध्यमानः ) तां बकुलमालामात्मनः कण्ठादवतार्य दत्तवान् MālaMā. 1.305; भूयोऽप्यनुबध्यमानया

च्च निषिध्यमानया च … रुदितमनया न पुनः किंचिदुदितम् TilaMañ. 29.20; 281.6; 313.16; यदर्थिताभूदनुबद्धमानसैः (v.l. तदर्थिभावादनुबध्यमानैः) सुरैश्च सिद्धैश्च महोरगैश्च। तेषां पुरस्तादकृत व्यवस्थाम् इत्येकदा संसदि पन्नगेन्द्रः NavaSāC. 9.42.

**अनुबध्यमानदुःख** (anubadhyamāna-duḥkha) *n.* misery which is being effected or produced subsequently कृते कर्मण्यनुबध्यमानदुःखमनुबन्धः GītāBh.(Rā ) 677.19 (*on* 18.25)

**अनुबध्यमानपरिमल** (anubadhyamāna-parimala) *adj.* whose fragrance is being closely followed झंकारिभिरलिकदम्बकैरनुबध्यमानपरिमलेन … चन्दनेनानुलिप्तसर्वाङ्गः … आहारम् … अवनिपो निर्वर्तयामास Kād. 16.19.

**अनुबध्यमानविनिवेश** (anubadhyamāna-viniveśa) *m.* substratum which is being resorted to closely उररीचकार सुरवारवधूच्चिकुरोत्करानगुरुधूमभरः। घटनात्तदर्थिमधुपायिततेरनुबध्यमानविनिवेश इव ŚrīKaC. 13.30 (comm. अनुबन्धेनाश्रीयमाणो विनिवेशोऽर्थादगुरुधूमस्यैव संस्थानमिव)

**अनुबन्द्धुम्** (anu-banddhum) *inf.* to tie (an animal to the sacrificial post) यूपश्च नाम पश्वनुबन्धार्थमुपादीयते। शक्यं चानेन किंचिदेव काष्ठमुच्छ्रित्यानुच्छ्रित्य वा पशुरनुबन्द्धुम् MahāBh. i. 8.17 (*on* i. 1.0), cf. **अनुबन्धुम्.**

**अनुबन्ध्** (anu-bandh-) IX. U. (rarely IV. Ā.) [P. vi. 4.24] **1A** to tie or bind on, (pass.) to be tied or bound after **B** to attach, to join, to connect, (pass.) **i** to be attached or connected **ii** (Gr.) (a letter) to be added **C** to cling to, (pass.) to be clung to **D** to insist, to persist **E** to put together, to compose, to harmonize **F** to keep in captivity, to arrest **G** to hold, to sustain, to bind together **H** to restrain, to hold back **2** to take up, to accept, to adopt, (pass.) to be taken up or adopted **3A** to continue, (pass.) to be continued **B** to go after, to follow, to attend **C** to pursue, to chase, i. e. to haunt, (pass.) to be pursued, to be chased **D** to follow (in action), to imitate **4A** to lead to or cause, (pass.) to be led to or caused **B** to follow, i. e. to share common symptoms, (pass.) to be followed, i. e. to be shared by common symptoms **Ci** to form, to make **ii** to form (a posture) **iii** to prevent, to control **5** to refer to, to imply, (pass.) to be referred to, to be implied **1A** to tie or bind on यां मृतायानुबध्नन्ति कूद्यं पद्योपनीम्। तद् वै ब्रह्मज्य ते देवा उपस्तरणमब्रुवन् AV. v. 19.12; शिरसा पादेन गवामनुबध्नन्ति विद्वांशः(?सः) NyāyKa. 29.2; दोलां मदाशयमिवानुबधान नाके ŚrīKaC. 7.55; (pass.) to be tied or bound after उभये वा (पशुम्) एतं बध्यमानमनुबध्यन्ते ये ग्राम्याः पशवो ये चारण्या ये बध्यमानमनु बध्यमाना अन्वैक्षन्त मनसा MaiS. iii. 9.7 (iii. 125.15); तद् यद्वशानूबन्ध्या यज्ञस्य शान्त्या अनुबध्यते KāṭhS. 29.4 (ii. 172.10); KapiKaS. 45.5 (271.8); यथा गौरनुबध्यतामित्युक्ते वाहीको नानुबध्यते PariVṛ.(Sī.) 165.3; **1B** to attach, to join, to connect राष्ट्रं वै वैश्वानरो विद् मरुतो वैश्वानरꣳहुत्वा मारुतान् जुहोति राष्ट्र एव विशमनु बध्नाति TaiS. V. iv. 7.7; TaiBr. I. viii. 3.2; ऐन्द्रमालभ्य मारुतमा लभते विड्वै मरुतो विशमेवास्मा अनु बध्नाति TaiS. VI. vi. 5.3; UttaRāC. 3.6(6); स्वातन्त्र्यं मनश्चिदादीनां प्रतिपत्तव्यम्, यत् क्रियावयवान् मनआदिव्यापारेष्वनुबध्नाति BrahmSūBh.(Śaṅ.) 695.9 (*on* iii. 3.50); निषेधशास्त्रकिंकरत्वेनाविशेषात् विधिशास्त्रमप्यनुबध्नातीति दुरन्तता ŚatDū. 233.17; अस्त्येव जन्मान्तरसौहृदं नौ मनोऽनुबध्नाति यदद्य यावत् Ragh. 17.68; (pass.) **i** to be attached or connected उभयोरपि राजेन्द्र संबन्धेनानुबध्यताम्। इक्ष्वाकुकुलमव्यग्रं भवतः पुण्यकर्मणः Rāma. i. 71.8; (रक्तपित्तम्) ऊर्ध्वगं कफसंसृष्टमधोगं मारुतानुगम्। द्विमार्गं कफवाताभ्यामुभाभ्यामनुबध्यते CaraS. vi. 4.24 (1941 Ed.); दीक्षणीयादिष्विष्टिषु दार्शपौर्णमासिको विध्यन्तः प्रवृत्तः। … यथा देवदत्तो भोजयितव्यः, विष्णुमित्रो भोजयितव्यः, माठरः कौण्डिन्यो भारद्वाज इत्युत्तरेष्वपि भोजयितव्य इति प्रवृत्त्यानुबध्यते ŚābaBh. 1586.13 (*on* viii. 1.3); फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते ŚlokaVār. 2.268 (126.4); यो हि करोति पुण्यपापे, स ताभ्यामनुबध्यते BṛĀraUBh. 555.19 (*on* iv. 3.15); 557.2 (*on* iv. 3.15); भूयांसोऽन्यवयवाः संपातयितव्याः विद्यायामित्येतस्मात् कारणादग्निनानुबध्यते विद्या न कर्माङ्गत्वात् BrahmSūBh.(Bhā.) 195.23 (*on* iii. 3.52); देव्याः स्मरारौ पूर्वमुत्पन्ना रतिः … सात्त्विकव्यभिचारिभ्यामनुबध्यते SaraKaṇṭhā. 572.3; पूर्वार्धोक्तार्थनिर्धारणरूपा मतिरुत्तरार्धेनानुबध्यते SaraKaṇṭhā. 585.6; विद्यामया मनश्चिता(?त्ता)दयो बृहदारण्यकेऽनुबन्धव्याः किमर्थमिहानुबध्यन्ते BrahmSūBh.(Rā.) 666.19 (*on* iii. 3.50); प्रतिपत्तौ विशेषणत्वेनानुबध्यत इत्यनुबन्धः VedāntKa. 42.11 (*on* i. 1.1); **ii** (Gr.) (a letter) to be added (लण्) अयं णकारो द्विरनुबध्यते पूर्वश्च परश्च MahāBh. i. 34.4 (*on* ŚivSū.(Gr.) 6); (च्लेः सिच्) आगमानुदात्तत्वं हि प्रत्ययस्वरमिव चित्स्वरमपि बाधेतेति स्थानिन्यादेशे च द्विश्चकारोऽनुबध्यते KāśiVṛ. *on* iii. 1.44; Prasā. ii. 29.14; सामान्यग्रहणार्थं पकारोऽनुबध्यते Prasā. i. 319.11; i. 319.14; **1C** to cling to सवितारं वितन्वन्तम्। अनुबध्नाति शाम्बुरः TaiĀ. i. 10.3 (77.1); धन्या स्पृहणीया च पत्त्रलेखा यामेवमनुबध्नाति दुर्लभो देवीप्रसादः Kād. 221.11; 347.9; विप्रलम्भः पुनः पुनरनुबध्नाति माम् UttaRāC. 3.43(16); आर्य चिरसंवासेन रामराजधानीप्रवादो मामनुबध्नाति AnarghaRā. 6.5 (13); स बन्धुर्योऽनुबध्नाति हितेष्वत्याहितादरः NītiSā. 8.77; यथा ध्रुवो नृणां मृत्युर्वित्तनाशस्तथा ध्रुवः। मूढस्तत्रानुबध्नाति जीवितेऽथ चले धने AgniP. 38.24; संसाररात्रिदुःस्वप्ने शून्ये देहमयभ्रमे। आस्थां चेदनुबध्नामि तन्मूर्खो नास्ति मत्परः ŚārṅgaPa. 4118; (pass.) to be clung to तेषु तद्रिक्थहारेषु गृहकोशानुजीविषु। निरूढेन ममत्वेन विषयेष्वन्वबध्यत BhāgP. iv. 27.10; **1D** to insist, to persist यत्कर्म कृतवानसि भार्गव। अनुरुन्ध्यामहे (v. l. अनुबन्ध्यामहे) ब्रह्मन् पितुरानृण्यमास्थितः Rāma. i. 75.2; तथापि यदि (बौद्धः) परोऽनुबध्नीयात् – इह लोकः प्राचुर्येण अर्थक्रियार्थी तत्कारिणि सत्यत्वं व्यवहरति, तत्किं संबन्धादीनामस्ति इति PratyabhiVi. ii. 60.5 (*on* ii. 2.7); क्रीडामनुबध्नाति यन्नयननिमीलनं तदेव … विहितं छलं येन सः Kāvyānu. (He.) 85.15; महापार्श्व, कुतो मां प्रेक्षणकदर्शनार्थमनुबध्नाति मन्त्रिजनः JānaPa. 6.3 (31); **1E** to put together, to compose, to harmonize यतिं लयं वाद्यगतिं पदं वर्णान् स्वराक्षरम्। अनुबध्नाति यत्रैवमनुबद्धा भवेत्तु सा NāṭyaŚā. 32.331; **1F** to keep in captivity, to arrest सेनानिवृत्तमायुधीयमशासनं शून्यपालोऽनुबध्नीयात् ArthŚā. iii. 105.4 (10.1); कामपि कान्तारपादपच्छायामुपासीनमेनं जनं नानुबध्नीयात् AvantiKa. 49.9; **1G** to hold, to sustain, to bind together स्नेहच्छेदेऽपि साधूनां गुणो नायाति विक्रियाम्। भङ्गेऽपि हि मृणालानामनुबध्नन्ति तन्तवः Hitopa. 1.69; °धूलिप्रकरजनितकार्श्यामन्वबध्नादधस्तात्। लघुविदलनभीतिव्याकुलात्मा कथंचित् फणनिगडसहस्रेणाहिनाथो धरित्रीम् HarVi. 41.11; सरितो यतीरनुबबन्ध रसन् परिहासवानिव समुल्लासितः।… सिन्धुपतिः RāmC. 26.10; **1H** to restrain, to hold back यदर्थं राज्यमेतन्मे स किमर्थं श्रितः परान्। नानुबध्नाति ह स्वार्थोऽप्यभिमानवतो नरान् ParamāKā. 86.14; **2** to take up, to accept, to adopt न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद् बहून्। न व्याख्यामुपयुञ्जीत नारम्भानारभेत्क्वचित् NāraPaU. 5.22; BhāgP. vii. 13.8; कथं पुनः साध्यधर्मः साधनधर्मभावमात्रमनुबध्नाति HetuBiṬ. 41.15; न हि प्रतिषेधान्तरधर्ममवश्यं प्रतिषेधान्तरमनुबध्नाति TātpaṬ.(Vā.) 499.11 (*on* iii. 1.1); एवमन्यान्यप्यनन्तानि विकल्पदूषणानि अविद्यास्वरूपमनुबध्नन्ति ŚatDū. 176.26; (pass.) to be taken up or adopted रामनाम तव धाम गुणानाम्। अन्वबन्धि भवतैव तु कस्मात् NaiṣC. 21.114; **3A** to continue चक्षुरसीत्यनुबध्नीयात् GobhiGS. iii. 4.22; ज्वरस्य पूर्वरूपाणि भवन्ति प्राक्संतापात्, अपि चैनं संतापार्तमनुबध्नन्ति CaraS. ii. 1.33 (1941 Ed.); द्वयोरापन्नयोस्तुल्यमनुबध्नाति यः पुनः। स तयोर्दण्डमाप्नोति NāraSm. 210.10; Mitā. 286.21 (*on* 2.212); (नायिका) तत्र कथामवस्थानार्थमनुबध्नाति KāmSū. 214.14 (3.3); JayaMa. 215.11 (*on* 3.3); साधुवादिनी सती किमिदमशोभनमभिधत्स इति कथामनुबध्नाति KāmSū. 279.18 (5.4); न हि ज्वरोऽनुबध्नाति मारुताद्यैर्विना कृतः AṣṭāSaṁ. ii. 14.16 (4.2); ii. 48.24 (4.9); सप्रयोजनत्वमभिधाय … पुराकल्पमनुबध्नाति AbhinBhā. i. 43.1 (*on* 1.117); न त्वधुना प्रस्तुतः नाप्युत्तरकालमनुबध्नाति Loc. 121.16 (*on* 2.32); यद्यपि दैवात्स्नेहो नश्यति साधोस्तथापि सत्त्वेषु। घण्टाध्वनेरिवान्तश्चिरमनुबध्नाति संस्कारः SubhāRaK. 37.41; यः पूर्ववैरमनुबध्नाति स एव दण्डभाक् Subodhi. 91.23 (*on* 2.212); कलहमापन्नयोः प्राप्तयोः द्वयोर्मध्ये यः पुनः यस्तु वैरमनुबध्नाति दृढतरं स्मरति तयोर्मध्ये स एव दण्डभाक् भवति BālamBha. ii. 305.9 (*on* 2.212); (pass.) to be continued तदेवानुबध्यतां व्रतपरिग्रहोचितं तपः Kād. 322.7; अहो निरन्तरप्रसादोन्मुखता देवस्य। यथा काकतीयप्रसवेषु श्रेयांस्युत्तरोत्तरमनुबध्यन्ते PratāYaBhū. 148.8; **3B** to go after, to follow, to attend भूमिः कीर्तिर्यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि। स्वर्गस्थं चानुबध्नन्ति सत्यमेव भजेत् तत् Rāma. ii. 101.22; स्त्रियश्चितामनुबध्नन्त्यपि मुक्तजीविताः।… न तु भावेन वहन्ति सौहृदम् Saund. 8.42; संपत्संपदमनुबध्नाति Kād. 73.15; सार्थमर्दनस्तु माम् … रक्षाविधौ नियुज्य राजानमन्वबध्नात् AvantiKa. 169.7; तेऽवश्यं स्वयमेव त्वामनुबध्नन्ति मदनशरभिन्नाः KuṭṭaMa. 281; दशमुखः स्वपुराभिमुखं ययावनुबबन्ध न कश्चन कञ्चन RāmC. 33.97; अस्मद्रथमनुबध्नीयुर्वृष्णयः SubhaDha. 4.6(8); 4.5(1); धिङ् मूर्ख एषास्मद्वधूस्त्वद्गुरुपत्नी मातृतुल्या च। तत् किमेनामनुबध्नासि DhūrtaSa 86.3;. **3C** to pursue, to chase, i. e. to haunt दिष्ट्या तावदयमनङ्गो मामिव तमप्यनुबध्नाति Kād. 158.23; (हर्षः) अचिन्तयच्च किं नु खलु मामेवममी सततमनुबध्नन्ति दुःस्वप्नाः HarṣaC. 254.12; (pass.) to be pursued, to be chased पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि। तस्थौ तथापि न मृगः कचिदङ्गनानामाकर्णपूर्णनयनेषु हतेक्षणश्रीः ŚiśuVa. 5.26 = VyaktiVi. 129.24; **3D** to follow (in action), to imitate तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति।… इति शब्दाः सादृश्यसूचकाः Kāvyāda. 2.64; AlaṅkāŚe. 15.3(18); कमले इव लोचने इमे अनुबध्नाति विलासपद्धतिः। लोलालकानुबद्धानि आननानि चकासति KāvyālaṅSū. ii. 2.8;

SaraKaṇṭhā. 106.22; **4A** to lead to or cause अहो ममोपरि विधेः संरम्भो दारुणो महान्। नानुबध्नाति कुशलं कस्येदं कर्मणः फलम् MahāBhā. iii. App. I. 10(78); तथा हे वृषल विक्षेपो भूयाद्यथा हिंसामनुबध्नातीत्यर्थः KāśiVṛ. *on* vi. 1.141; किरतेरर्थस्य हिंसाविषयतां दर्शयति। अनुबध्नातीति। अनुगच्छतीत्यर्थः Nyās. ii. 290.11 (*on* vi. 1.141); भूयः श्रेयोऽनुबध्नाति प्रायः साधुसमागमः MahāP. 9.161; (कथा) तस्य (कार्यान्तरान्तरायस्य) निष्पत्तेः निर्निबन्धरसोज्ज्वलाम्। प्रबन्धस्यानुबध्नाति नवां कामपि वक्रताम् VakroJī. 241.2; अनुष्ठीयमानः स्वफलमनुभावयन्न कश्चिद्धर्मोऽधर्ममनुबध्नाति NītiVā. 29.15; 32.63; अनुबध्नन्ति यद्दुःखं विषयाः सुखवाहिनः। मध्वन्तर्विषसंसृष्टं मधुरं यदि भक्षणे LakṣmīT. 43.89; निर्मूलोपालम्भमात्रमनौचित्यमनुबध्नाति AuciViCa. 37(22); अनुबध्नाति भव्यानामुदयेऽभ्युदयान्तरम् RājTa.(Ka.) 8.2275; स्नेहः प्राग्भवसंबद्धो ह्यनुबध्नाति बन्धुताम् TriṣaŚaPuC. i. 1.796; गुणानां सा शक्तिर्विपदमनुबध्नन्ति यदमी प्रसन्नस्तद्वेधा मम यदि न तैर्योगमकरोत् Subhāṣi. 451; अनुबध्नन्त्यप्यर्था आचरिताः काप्यनर्थसंदर्भम् KandaCū. vi. 6.2; (pass.) to be led to or caused सातत्येनोत्पद्यते। दोषवैषम्येणैव च बहुरूपा रुगनुबध्यते प्रवर्धते च AṣṭāSaṁ. i. 115.24 (1.22); तत्र पौनःपुन्येन प्रवृत्तिरनुबन्धः। प्रवृत्तिकरणं वा, अनुबध्यते प्रयुज्यते येन तस्मिन्कर्मणि ManuBh. ii. 129.21 (*on* 8.126); अयं च पुष्टोऽपि (रसः) सात्त्विकत्वात् सदैवान्यानुयायीति नानुभावादिभिरनुबध्यते SaraKaṇṭhā. 580.19; 583.8; **4B** to follow, i.e. to share common symptoms सर्वेऽपि तु खल्वेतेऽभिप्रवृद्धाश्चत्वारो रोगाः परस्परमनुबध्नन्ति CaraS. i. 20.7; ii. 4.5 (1922 Ed.); AṣṭāSaṁ. i. 117.8 (1.22); (pass.) to be followed, i.e. to be shared by common symptoms अनुबध्यते यक्ष्मणा यथोपदेक्ष्यमाणरूपेण CaraS. ii. 6.10 (1922 Ed.); अशुद्धम् … स्रवद्रुधिरमुपेक्षेत। उभौ च तत्रानुबध्येते श्लेष्मानिलो वा AṣṭāSaṁ. ii. 61.20 (4.10); **4Ci** to form, to make यैर्निरस्तो भवाँल्लुब्धैः पुत्रदारादिभिर्धनैः। तेषु किं भवतः स्नेहमनुबध्नाति मानसम् MārkP. 81.22; अतिमहानुभावः खलु कुमारो येनैवमविज्ञायमाने क्षणदृष्टेऽपि जने परिचयमनुबध्नाति HarṣaC. 49.4; कौशिककुमारः … विष्णुवर्धनाख्ये राजसूनौ प्रणयमन्वबध्नात् AvantiKa. 10.6; मम श्रीमल्लम्बोदरदरकृपापाङ्गितगिरः प्रबन्धेऽस्मिंश्चेतः कुतुकमनुबध्नाति तदपि ŚṛṅgāSar. 8; **4Cii** to form (a posture) प्राङ्मुखो दृढमाबध्य पद्मासनमनन्यधीः। त्रिखण्डामनुबध्नीयाद् गुर्वादीनभिवन्द्य च BrahmāṇḍP. iii. 44.3; **4Ciii** to prevent, to control (रोगम्) तस्मात्तमनुबध्नीयात्प्रयोगेणानपायिना AṣṭāSaṁ. i. 123.17 (1.23); SiddhYo. 1.16; **5** to refer to, to imply लोकशब्देन अग्न्यादीननुबध्नाति — 'अग्निलोकमागच्छति' इत्यादि BrahmSūBh.(Śaṅ.) 826.12 (*on* iv. 3.4); यो हि यत् नानुबध्नाति स तन्निष्पत्तावनिष्पन्नः NyāyBiṬ. 163.7; अवयवार्थस्तु विसिन्वन्ति विषयिणमनुबध्नन्ति स्वेन रूपेण निरूपणीयं कुर्वन्ति SāṁkhyaTaKau. 111.1 (*on* 5); यत्पुनः काममेवानुबध्नाति तत् कामोदर्कम् SaraKaṇṭhā. 703.6; अतोऽप्यूर्ध्वं विकथनं पराभूतजृम्भारिसभे महाराजसदसि गोवधमनुबध्नाति MudriKu. 5.7 (21); 'स्वे महिम्नि' इति तमेवानुबध्नाति स वा एष इत्यनेन AṇuBh. 257.10 (*on* iii. 3.50); (pass.) to be referred to, to be implied आर्षेयमन्वाचष्ट ऋषिणा हि देवाः पुरुषमनुबध्यन्त इति विज्ञायते HirŚS. xxi. 3.4 (714.29)

**अनुबन्ध** (anu-bandha) *m.* [AltGr. I. 123 (RENOU'S *Introduction générale*)] **1A** continuation, uninterrupted succession **B** course or process of activity **2A** consequence, result, after effect, [Inst.] on account of the after effect **B** aim or object **C** consequent bondage **3** insistence, persistence, repeated request, [Inst.] with insistence, insistently or persistently **4** obstacle, hindrance **5A** retinue, dependent, attendant **B** act of following, dependence **6A** strong bond, close attachment **B** connecting end-portion or tail **C** binding, connection, relation, association, union **D** (Math.) addition, junction of fraction **E** tying, binding **Fi** (Philo.) connecting link (or introductory link) of a topic (an indispensable element of the *śāstras*) **ii** appendage, delimiting adjunct **G** association through eyes, i.e. casting (of glance) **7** cause, motive, intention, inclination, design **8** (Gr.) indicatory letter (added to a word for some specific purpose) **9Ai** musical composition **ii** a type of *antaravādya* (accompanying music played on instrument) **Bi** *karaṇa-dhātu* (note produced by hand-strokes) **ii** *āviddha-dhātu* (note produced by heavy and light strokes) **iii** *vyañjana-dhātu* (note produced by the use of different fingers) **iv** any type of *dhātu* (musical notes arising from different types of strokes) **C** type of *svarāṅga*, break or pause (in a musical composition indicated by release of breath) **10** secondary symptomatic development or affection (supervening on the principal disease) **11A** offence, fault **B** related circumstance (of offence etc.) **12** a child who follows (the example set by) the parents **1A** continuation, uninterrupted succession अनुबन्ध इति। अनुबध्यतेऽनेनेत्यनुबन्धः। आख्यातार्थस्य नित्यतां यः शब्दो ब्रवीति सोऽनुबन्धः Bhāṣikasūtra 2.17; अर्थमर्थानुबन्धं च यः परीक्षेत् स पण्डितः Rāmā. vi. App. I. 2(8); iv. 1386*; श्रुत्वा चेदमुपाख्यानम् …। योगधर्मो हृदि सदा परिवर्तेत।…तेनैवानुबन्धेन कदाचिल्लभते शमम् HariVaṁ. 19.33; शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितम्। नित्यगश्चानुबन्धश्च CaraS. i. 1.42 (1941 Ed.); 1.30.22 (1941 Ed.); धातूनाम् …। समानां चानुबन्धः स्यादित्यर्थं क्रियते क्रिया CaraS. i. 16.35; असंदेहोऽनुबन्धश्च रोगाणां संप्रकाशितः CaraS. i. 20.23 (1941 Ed.); iii. 2.13 (1941 Ed.); vi. 19.50 (1941 Ed.); अनुबन्धो नाम पदान्तरेष्वपि विच्छेदः (v.l. पदान्तरेष्वविच्छेदः) अनुच्छ्वसनं वा NāṭyaŚā. 17.130; सानुबन्धाः कथं न स्युः संपदो मे निरापदः RaghuVa. 1.64; उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं बाष्पं कुरु स्थिरतया शिथिलानुबन्धम् Śāk. 4.17; SaraKaṇṭhā. 582.14; Kāvyānu.(He.) 120.16; मुच्यतामयं देवि शोकानुबन्धः Kād. 63.17; अनुबन्धे तु दोषस्य गर्भकालमपेक्ष्य च।… भिषग्भेषजमाचरेत् KāśyaS. 293B.1; विरम वह्ने मुञ्च धूमानुबन्धम् Ratnā. 4.16; 2.19(7); संपत्तेः कोऽनुबन्धः Tantrākhyā. 118.18; PañcT. 3.103 (363.9); चिरक्षोभानुबन्धलज्जयेव मन्दमन्दं वरुणालयमुपसर्पन्तीषु … फेनमालिनीषु AvantiKa. 32.4; निदानविपरीतमौषधमवचारयेत्। सति त्वनुबन्धे AṣṭāSaṁ. i. 72.14 (1.11); AṣṭāHṛ. i. 8.23; अनुबन्धे च यथाव्याधि प्रकुर्वीत AṣṭāSaṁ. ii. 179.10 (6.2); AṣṭāHṛ. vi. 2.26; EI. xii. 74.18; अभ्यर्थनानुबन्धो लज्जाकर एव मादृशाम् KuṭṭaMa. 218; अलमनेन दोषानुबन्धकथानुबन्धेन NyāyMañ. ii. 88.1; सः … निजमदगन्धानुबन्धबाधितापरद्विरदमदप्रभेदैः … सामजैः सह चिक्रीड YaśasCam. i. 29.1; i. 147.3; आवासितशब्दः … प्रवृत्तेर्महान्तमनुबन्धं लक्षयति SaraKaṇṭhā. 186.8; अम्बरतलात्पपात … वारिसंदोहः।… तस्य तावतोऽनुबन्धादसाध्यापि विध्वस्ता शवाशिनो वैश्वानरी सृष्टिः UdaySuKa. 82.25; अजीर्णस्यानुबन्धेन … जायते व्याधिरुदरम् Mānaso. i. 19.258; प्रवृत्ति(? त्ते)स्त्वनेकसूत्रव्यवहितत्वान्न सानुबन्धमर्हति ŚrutaPra. ii. 285.34 (*on* ii. 2.8); भीमः … प्रयोजनस्य कुरुकुलक्षयस्यानुबन्धं दर्शयति NāṭaLaRaK. 172; अनुबन्धो नैरन्तर्येण प्रवर्तनम् NāṭaLaRaK. 204; ManvaVi. 1400.2 (*on* 11.107); अनुबन्धान्निरूढस्य प्रदानं बाधते द्विपम् Hastyāyur. 601.5 (4.5); इयम् … अनघचरितानुबन्धमासिनं धर्मशिवदेशिकाभिधानम् … प्राणंसीत YātrāPra. 1.50(3); **1B** course or process of activity विक्षिप्ताचित्तकस्यापि योऽनुबन्धः शुभाशुभः। महाभूतान्युपादाय स ह्यविज्ञप्तिरुच्यते AbhidhK. 1.11; Sphuṭā. i. 34.20 (*on* 1.11); **2A** consequence, result, after effect त्रिवर्गे त्रिविधा पीडा अनुबन्धास्तथैव च MahāBhā. i. App. I.81 (139); xii. 138.57; आदत्तेऽर्थपरो बालो नानुबन्धमवेक्षते MahāBhā. ii. 14.10; iv. 44.1; अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्। मोहादारभ्यते कर्म यत्तत्तामसमुच्यते MahāBhā. vi. 40.25 = BhagGī. 18.25; MahāBhā. vi. 40.39 = BhagGī. 18.39; परुषाण्युच्यमानांश्च यथा पार्थानुपेक्षसे। तस्यानुबन्धः प्राप्तस्त्वाम् MahāBhā. vii. 62.13; अनुबन्धे तु ये दोषास्तान्न पश्यन्ति मोहिताः MahāBhā. xii. 112.15; xii. 166.3; xiv. 62.7; अनुबन्धमजानन्तः कर्मणामविचक्षणाः।… विनश्यन्ति Rāmā. iii. 49.21; iii. 49.27; वीर्यदर्पेण नानुबन्धो विचारितः Rāmā. vi. 51.4; vi. App. I. 2(7); यः कृतघ्नोऽनुबन्धेन प्रीतिं वहति …। नरकाध्युषितः पन्था गन्तव्यस्तेन HariVaṁ. 65.64; कर्मफलमनुबन्धं देशकालौ च विदित्वा … शास्त्रमेवादितः परीक्षेत CaraS. iii. 8.3; तदात्वे चानुबन्धे वा यस्य स्यादशुभं फलम्। कर्मणस्तन्न कर्तव्यम् CaraS. iii. 3.46 (1941 Ed.); AṣṭāSaṁ. i. 64.3 (1.9); CaraS. v. 5.26 (1941 Ed.); शान्तज्वरोऽपि शोध्यः स्यादनुबन्धभयान्नरः SuśruS. vi. 39.164; अर्थानाचर्यमाणाननर्था अप्यनूद्भवन्त्यनुबन्धाः संशयाश्च KāmSū. 6.6 (352.3); 6.6 (356.6); दण्डश्चानुबन्धः ArthŚā. ii. 69.4 (3.11); प्रियाप्रियौ जवाजवौ सामीप्यविप्रकर्षौ तदात्वानुबन्धौ … विमृश्य … लाभमाददीत ArthŚā. iii. 70.5 (9.4); ii. 166.12 (4.10); अलमलमनुबन्धेन। ऋतुपरिणामेन स्वस्था भविष्यसि PadmPrā. 25.16; शुभाशुभविमिश्रितान्। जात्यायुरनुबन्धान् स प्राप्नोति AhirbuS. 14.24; यस्यानुबन्धात् पापीयानधोनिष्ठो विपद्यते। तस्यार्थे को नु विबुधः कुर्यात्कर्म विगर्हितम् Tantrākhyā. 73.6; PañcT. 2.53 (240.6); Pañcā. 153.15; शस्त्रादिष्वपि यद्यनुबध(? न्ध)गुरुलाघवविचाराद्दानमापद्येत नैवापत्तिः ŚikṣāSa. 271.13; अनुबन्धः पश्चाद्भावि GītāBh.(Śaṅ.) 434.3 (*on* 15.2); नातिक्रान्तं प्राप्यते यौवनं वा तेनालोच्यं वोऽनुबन्धैश्चतुर्भिः RāghPāṇ. (Dha.) 11.3; भूपालो(? लः) चिरकालेन … पिशिताशनाशयानुबन्धात्तत्रैव सिन्धौ … शफरोऽभूत् YaśasCam. ii. 332.7; i. 428.2; निपुणैरनुसंधेया अनुबन्धाः संशयास्तेषाम् (अनर्थानाम्) KandaCū. vi. 6.2; vi. 6.9; [Inst.] on account of the after effect किमनेनात्मदोषानुबन्धेन … शप्तोऽस्मि Kād. 319.20; **2B** aim or object सर्वज्ञमद्राक्षमहं भवन्तम्। इतः परं सेत्स्यति मेऽनुबन्धः ŚaṅkaDigVi.(Mā.) 11.13 (*but* comm. प्रकृतस्य कार्यस्यानुवर्तनम्); **2C** consequent bondage, cf. **अनुबन्धहिंसा**; **3** insistence, persistence,

repeated request सूतो राजानमब्रवीत् । मा क्रियतामनुबन्धः । नैष शक्यस्त्वया मृगो ग्रहीतुम् MahāBhā. iii. 190.46; दुर्विनीतः … यः … गुरुजनस्योपरि खेदमेवं कुर्यादनुबन्धाद् विरमेद् वा Kād. 280.13; 309.11; दीर्धरतौ निर्वेदः …। तदशक्तावनुबन्धः KuṭṭaMa. 624; अवशेषय नाथ बन्धुतामनुबन्धः समरस्य मुच्यताम् RāmC. 33.17; यदि हि बाह्येन्द्रियेष्वमर्षो न त्वेष्वतिशयो विषह्यते तदलमनुबन्धेन NyāyMañ. i. 97.6; न कार्यः कार्यवेदिना मम स्कन्धावारगमनायानुबन्धः TilaMañ. 291.11; दुर्वर्णनिर्वर्णविधौ बुधानां सुवर्णवर्णस्य मुधानुबन्धः YaśasCam. i. 10.8 (*but* comm. परीक्षा); न चात्र त्वयानुबन्धो विधेयः UdaySuKa. 33.20; 85.18; वित्तत्यागे न भवति सतां ग्रन्थिबन्धानुबन्धः CaturSaṁ. 2.8; KarṇaSu. 2.35; अनुबन्धः आग्रहः Aparā. 757.18 (*on* 2.149); SmṛtiCan. iv. 717.2; VyavaMa. 137.3; VīraMi.(Vyavahāra.) 562.30; अकथनीयमेतत् … तथापि तु यद्यनुबन्धस्तत्कथयामि Kāvyānu.(He.) 311.9; निषिधेधानुबन्धात्तु सानुतापाम् … मरणादेताममात्यो नरवाहनः RājTa.(Ka.) 6.196; यदि पुनस्तत्रैवानुबन्धं कृत्वा तीव्रकषायवशादतिप्रसङ्गं करोति तदा चारित्रभ्रष्टो भवति TātpaVṛ. 356.17 (*on* 3.65); अनुबध्नीयात् – अनुबन्धं कुर्यात् Bhāsk. ii. 60.24 (*on* ii. 2.7); [Inst.] with insistence, insistently or persistently (पितरौ) अनुबन्धेन सुतैः पृष्टौ PadmP.(Ra.) 6.537; तामनुबन्धेन पृच्छन्तीमहमुक्तवान् KathāSaSāg. xii. 4.90; **4** obstacle, hindrance प्रागेव नागतं कस्मात् …। विरात्रे चागतं कस्मात् कोऽनुबन्धश्च तेऽभवत् MahāBhā. iii. 282.28; अनेनैव प्रपन्नस्य भगवन्तं सुदर्शनम् । तस्यानुबन्धाः पाप्मानः सर्वे नश्यन्ति AhirbuS. 37.33; राज्ञा दृष्टे व्यवहारे नास्त्यनुबन्धः NītiVā. 28.23; **5A** retinue, dependent, attendant आशंसेऽहम् … दुर्योधनं सानुबन्धं निहन्तुम् MahāBhā. v. 47.88; रामं स्थापयता राज्ये सानुबन्धा हता ह्यसि Rāmā. ii. 7.25; कैकेयीं च वधिष्यामि सानुबन्धां सबान्धवाम् Rāmā. ii. 90.21; मृतके सानुबन्धेऽस्मिन् बद्धस्नेहाः पतन्त्यधः BhāgP. xi. 5.15; **5B** act of following, dependence स्वरसवाही विदुषोऽपि तथारूढो(v. l. तन्वनुबन्धो)ऽभिनिवेशः YogSū. 2.9 (KSS. 83, 1930 Ed.); सर्वे एते साधनधर्मा यथास्वं प्रमाणैः सिद्धसाधनधर्ममात्रानुबन्ध एव साध्यधर्मेऽवगन्तव्याः NyāyBi. 3.15; **6A** strong bond, close attachment अनुबन्धात्र विज्ञानम् MahāBhā. xii. App. I.18(28); यस्यां (पत्युः) मनश्चक्षुषोरनुबन्धस्तस्यामृद्धिः MālaMā. 2.114 (comm. रतिः); अमङ्गलं प्रतिहतं मोदध्वमसुराङ्गनाः । स्थिते गते वा कृपणे कोऽनुबन्धो विभीषणे RāmC. 24.52; भवादृशीनामनुबन्धमप्राप्येषु वस्तुषु विधत्ते बुद्धिः TilaMañ. 295.13; अनुबन्धमवेक्ष्य तादृशं क्षितिभर्तुस्सुरसुन्दरीं प्रति । गणयन्नपराधमात्मनः PṛthvīVi. 12.29; **6B** connecting end-portion or tail खे यथा निपतत्युल्का …। दृश्यते सानुबन्धा Rāmā. v. 1.61; **6C** binding, connection, relation, association, union नियतस्त्वनुबन्धो रजस्तमसोः परस्परम् CaraS. iii. 6.9; धर्मस्यार्थकृतत्वाद् द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात् MīmāSū. ix. 2.40; परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः BrahmSū. iii. 3.52; iii. 3.50; AṇuBh. 256.23 (*on* iii. 3.50); ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः NyāySū. iv. 1.59; ददातिर्हि स्वेन कारकग्रामेण कृतानुबन्धो न यागं होमं वानुबन्धमपेक्षते ŚābaBh. 466.14 (*on* ii. 2.1); कार्यानुबन्धादधिकारानुवृत्तिः CāndraPari. 41; यम् … हरनयनहुतवहोष्मानुबन्धसंभूतप्रतापशमनं पुनर्जातमिव मीनकेतुं मेनिरे प्रजाः AvantiKa. 21.4; तन्मात्रानुबन्धस्तु वस्तुतः तत्तत्स्वभावतयैव युक्तः HetuBiṬ. 43.26; AṣṭāSaṁ. i. 202.4 (2.2); स्वप्नेऽप्यङ्गेऽनुबन्धं त्यजति न … अन्तरात्मा ŚatŚlo. 77; भावानुबन्धवशतो दयितायमानः । वेणुः … विस्पष्टमक्रियत निर्भररागगर्भः HarVi. 26.85; 27.75; कृतघ्नगंगो यदुद्दितदण्डपलायनोनुबन्धाध्य[Read बन्धात् । व्य]पगतपदशृंखलः खलो यस्सनिगलबन्धगलः EI. xviii. 244.15; यथोक्तम् — 'अहरहर्ब्रह्मलोकं यान्तीति' तदलमनेन दोषानुबन्धकथानुबन्धेन NyāyMañ. ii. 88.1; ii. 151.24; BālaKrī. i. 204.5 (*on* 2.6); पश्वादीनामपि कार्यकारणसंघातेऽहंकारानुबन्धः PañcPā. 32.18 (*on* i. 1.1); एकस्त्वमाविशसि जन्मनि संक्षये च भोक्तुं स्वयं स्वकृतकर्मफलानुबन्धम् YaśasCam. i. 262.7; 'सद्योगृहीतगर्भायाः … शुक्रशोणितयोरव(v. l. °नु)बन्धः' … इत्यादि तत्रैवोक्तम् Mitā. 373.24 (*on* 3.79) (BālamBha. मेलनम्); परिहरन् … चेतनाचेतनमिश्रपरद्रव्येष्वनुबन्धान् TātpaVṛ. 286.13 (*on* 3.13); नराणां छायेव न त्यजति कर्मफलानुबन्धः ŚāntiŚ. 3.21; कः स्वामिना कुवलयाक्षि सहानुबन्धः SūktiMu. 57.31; Subhāṣi. 1631; अनवस्थितसंयोगादनुबन्धो न चेदृशः SamarāSaṁ. 9.175; परमेश्वरभावः । तन्मात्रस्य … योऽनुबन्धः — योगः सोऽस्यास्तीति तन्मात्रानुबन्धी Bhāsk. i. 68.14 (*on* i. 1.3); **6D** (Math.) addition, junction of fraction जानास्यंशानुबन्धं चेत्तथा भागापवाहनम् Līlā. 31; **6E** tying, binding सूक्ष्मे घने नैषधकेशपाशे निपत्य निस्पन्दतरीभवद्भ्याम् । तस्यानुबन्धं न विमोच्य गन्तुमपारि तल्लोचनखञ्जनाभ्याम् NaiṣC. 8.13; **6Fi** (Philo.) connecting link (or introductory link) of a topic (an indispensable element of *śāstras*) अधिकारिविषयप्रयोजनानुबन्धेषु सूत्राक्षिप्तप्रयोजनविषययोरुपपादकं बन्धमिथ्यात्वम् NyāySu.(Ja.) 22B.2 (*on* i. 1.1); VedāntKau. 11.23 (*on* i. 1.1); तत्रानुबन्धो नाम अधिकारिविषयसंबन्धप्रयोजनानि VedāntSā.(Sa.) 1.9; SarvaDaKau. 114.18; SiddhāSi. i. 6.16; अनुबन्धभेदादिभिर्भिन्नमेव शास्त्रम् BhāṭṭCan. 126.13 (*on* xvi. 4.10); **6Fii** appendage, delimiting adjunct अनुबन्धो नियोगावच्छेदको धात्वर्थः VedāntKa. 374.19 (*on* iii. 2.16); 398.10 (*on* iii. 3.1); ŚrutaPra. ii. 529.14 (*on* iii. 3.56); तत्र च प्रधानयाग एवानुबन्धः MayūMāli. 183.7 (*on* iii. 1.1); **6G** association through eyes, i. e. casting (of glance) कुर्यात्तस्यां नियताननुबन्धांश्चक्षुषश्चैव KandaCū. v. 6.20; **7** cause, motive, intention, inclination, design अनुबन्धानवेक्षेत सानुबन्धेषु कर्मसु MahāBhā. v. 34.8; अनुबन्धं च संप्रेक्ष्य विपाकांश्चैव कर्मणाम् । उत्थानम् … कुर्वीत MahāBhā. v. 34.9; ViṣṇuDhaP. i. 218.21; MahāBhā. v. 34.13; तेन पापानुबन्धेन वचनं न प्रतीच्छता । एवं ब्रुवन्त्यः सर्वाः स्म वायुना निहता भृशम् Rāmā. i. 32.4; अनुबन्धं परिज्ञाय देशकालौ च … दण्डं दण्ड्येषु पातयेत् ManuSm. 8.126 (ManuBh. पौनःपुन्येन प्रवृत्तिः); आगन्तुश्चानुबन्धः … विषमज्वरे SuśruS. vi. 39.56; वामत्वमनुबन्धं च प्रौढत्वम् … सुरतेषु प्रदर्शयेत् NāgaSa. 37.11; KuṭṭaMa. 159; (पशुपक्षिणः) एते … अनुबन्धापबन्धवैषम्यवैरूप्यचापल्यपिङ्गलिमभिः … लोचनैर्वीर्यस्रवन्तीरिव स्रवन्तः AvantiKa. 93.16; नानुबन्धं त्यजत्यरिः PadmP.(Ra.) 6.486; BṛKathāK. 67.27; देवि किमनेनाकारणमरणानुबन्धेन Kād. 236.16; दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरात् … विहितक्रीडानुबन्धच्छलः … धूर्तः AmaŚ. 19; Avalo. 47.7 (*on* 2.19); 59.6 (*on* 2.52); SaraKaṇṭhā. 73.5; 682.20; ŚṛṅgāPra. 344.18; SubhāRaK. 19.45; Kāvyānu.(He.) 84.12; SaduktiKa. 122.12; ŚārṅgaPa. 3575; SāhiDa. 115.12; Subhāṣi. 2069; नानुबन्धोऽस्ति देवानामसुरान् प्रति कश्चन KathāSaSāg. viii. 7.117; दोषोऽपराधविशेषः । स द्विविधः, अनुबन्धोऽननुबन्धश्च तत्रानुबन्धो नाम पुनः पुनरिच्छया मन्दक्रियाकरणम् DaṇḍaVi. 36.10; 65.4; अनुबन्धं च संप्रेक्ष्य … अनुबन्धं कारणम् VīraMi.(Rājanīti.) 476.21; 477.12; **8** (Gr.) indicatory letter (added to a word for some specific purpose) प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न Vār. 16 *on* ŚivSū.(Gr.) 5; सिद्धमनुबन्धस्यानेकान्तत्वात् Vār. 8 *on* P. i. 1.20; Vār. 5 *on* P. iii. 1.94; अनुबन्धोऽन्यत्वकर इति चेन्न लोपात् Vār. 3 *on* P. i. 1.26; स्वरानुबन्धज्ञापनाय च Vār. 13 *on* P. i. 3.1; यावतिथोऽलनुबन्धस्तावतो योगानिति वचनात् सिद्धम् Vār. 6 *on* P. i. 3.11; पूतिश्च चानुबन्धः Vār. *on* P. viii. 1.69; अनुबन्धानासङ्क्ष्यामि MahāBh. i. 13.9 (*on* i. 1.0); ii. 21.18 (*on* iii. 1.11); ककारमनुबन्धं करोति MahāBh. i. 24.22 (*on* ŚivSū.(Gr.) 4); i. 43.9 (*on* i. 1.3); अनुबन्धानामपि निवृत्तिर्भविष्यति MahāBh. i. 39.8 (*on* i. 1.1); ii. 6.8 (*on* iii. 1.3); कादीननुबन्धानासजति MahāBh. ii. 4.16 (*on* iii. 1.2); एकाजयं तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन MahāBh. ii. 16.3 (*on* iii. 1.8); ii. 410.3 (*on* v. 3.36); आत्मनेपदार्थो ङकारोऽनुबन्ध आसङ्क्ष्यः MahāBh. ii. 38.22 (*on* iii. 1.30); ii. 43.24 (*on* iii. 1.34); सार्वधातुकादेशेऽनुबन्धा न स्थानिवद् भवन्ति MahāBh. ii. 63.15 (*on* iii. 1.83); कार्याद् विद्यादनुबन्धम् MahāBh. ii. 138.22 (*on* iii. 3.1); PrakriKau. ii. 600.3; यस्यादेशोऽनुबन्धौ तेन कर्तव्यौ MahāBh. ii. 230.21 (*on* iv. 1.78); iii. 247.12 (*on* vii. 1.18); सिद्धिरिज्वद्ञ्णानुबन्धे Kātan. iv. 1.1; iii. 8.31; अनुबन्धश्च सिद्धेऽर्थे स्मृत्यर्थमनुषज्यते VākyaPa. 3(12).12; 3(14).78; उच्चरितप्रध्वंसिनोऽनुबन्धाः VyāḍiPari. 13; रिपुराप पराभवाय मध्यं प्रकृतिप्रत्यययोरिवानुबन्धः Kirātā. 13.19; EI. viii. 192.33; i. 87.26; xxii. 117.22; ञकारानुबन्धकरणसामर्थ्यात् KāśiVṛ. *on* ii. 4.54; अन्ते हि ञकारेऽनुबन्धे सति … ङीब् भवति Nyās. i. 965.4 (*on* iv. 2.116); i. 524.21 (*on* iii. 1.33); न तिबनुबन्धगणैकाचां ग्रहणेषु SaraKaṇṭhā.(Gr.) i. 2.79; Pradī. i. 447B.20 (*on* i. 1.56); अनुबन्धा अवयवाः PariVṛ.(Sī.) 15.6; 21.17; कार्याद् गुणाभावादेरनुबन्धं ककारादिकं विद्यात् Prasā. ii. 600.21; i. 794.9; अनुबन्धस्येहानिर्देशात् SiddhāKau. 613A.9 (*on* vi. 1.12); 364B.16 (*on* vi. 4.48); अनुबन्धाश्च महेश्वरकृता एव LaŚabdeŚe. i. 6.12; अनुबन्धानामेकान्तत्वमेव न्याय्यम् LaŚabdeŚe. i. 64.5; i. 9.1; **9Ai** musical composition आक्री(पी)डितप्रवृत्तो यश्चतुर्थलयकारकः । नाट्योपचारजनितः सोऽनुबन्धः प्रकीर्तितः NāṭyaŚā. 32.332; **9Aii** a type of *antaravādya* (accompanying music played on instrument) अथान्तरवाद्यानि । अनुबन्धः … तत्रानुबन्धसंज्ञमन्तरवाद्यं यथा धोणाधोक्षवे इति NāṭyaŚā. 34.239; **9Bi** *karaṇa-dhātu* (note produced by hand-strokes) अनुबन्धः स्यात् । पञ्चविधः … वीणावाद्ये करणधातुः NāṭyaŚā. 29.59 (AbhinBhā. अनुबध्यते मिश्रीक्रियते भावो यत्र); SaṁgīRa. iii. 257.9 (6.150); **9Bii** *āviddha-dhātu* (note produced by heavy and light strokes) अनुबन्धसंज्ञितश्चैव । आविद्धः … धातुः NāṭyaŚā. 29.61; **9Biii** *vyañjana-dhātu* (note produced by the use of different fingers) व्यञ्जनधातोः पुष्पं कलतलनिष्कोटितम् …। रेफोऽनुबन्धसंज्ञः NāṭyaŚā. 29.63; व्याससमासादेषामनुबन्धः सार्वधातुको ज्ञेयः NāṭyaŚā. 29.69; **9Biv** any type of *dhātu* (musical notes arising from different

types of strokes) सजातीयविजातीयभेदसंमिश्रणोद्भवः । अनुबन्धाभिधो धातुः शार्ङ्गदेवेन कीर्तितः SamgīRa. iii. 256.8 (6.147); **9C** a type of *svarāṅga*, break or pause in a musical composition (indicated by release of breath) स्वराङ्गम् - अनुबन्धो नाम पदान्तरेषु विच्छेदोऽनुच्छ्वासनं वा BharataK. 15B; **10** secondary symptomatic development or affection (supervening on the principal disease) तत्रानुबन्धं प्रकृतिं च सम्यग् ज्ञात्वा ततः कर्म समारभेत CaraS. i. 19.7 (1941 Ed.); AṣṭāSam. i. 119.4 (1.22); चिकित्सितम् ··· स्राविणाम् । तत्रानुबन्धो द्विविधः श्लेष्मणो मारुतस्य च CaraS. vi. 14.170; RugVi. 5.27; मूर्च्छानुबन्धा विषमज्वराः ··· प्रायेण ते द्वन्द्वसमुत्थिताः SuśruS. vi. 39.58; अथानुबन्धं कुर्वीत स रोगी च बली भवेत् ।··· तस्य कुर्यात् संशोधनम् KaśyaS. 139A. 21; कफानुबन्धे पवने कुर्यात् कफहरां क्रियाम् । पित्तानुबन्धयोर्वातकफयोः पित्तनाशिनीम् AṣṭāSam. ii. 24.19 (4.4); AṣṭāHṛ. iv. 3.70; **11A** offence, fault न च यथाविधोऽनुबन्धो हन्तुः, तथाविधः संसर्गे संभवति BālaKrī. ii. 137.14 (*on* 3.257 (?263)); ईदृक्कोऽप्यनुबन्धो यस्य विपाकोऽप्रतीकारः KuṭṭaMa. 454 (comm. दोषोत्पत्तिः); (पिशाचपरमेश्वरौ) परिगृहीतगृहदाहबान्धववधनविध्वंसानुबन्धैः प्रत्यूहप्रबन्धैः ··· विहितविघ्नावपि तम् ··· धर्मध्यानाच्चालयितुं न शेकतुः Yaśas-Cam. ii. 287.24; अनुबन्धो दोषोत्पादः Subodhi. 78.2 (*on* 2.146); 93.3 (*on* 2.219); अनुबन्धे त्वसमापत्तिपक्षे क्षत्रियादिविषये हननमेव DaṇḍaVi. 261.19; BālamBha. ii. 270.10 (*on* 2.146); ii. 307.30 (*on* 2.219); **11B** related circumstance (of offence etc.), cf. **अनुबन्धविशेषापेक्षा** etc.; **12** a child who follows (the example set by) the parents दोषोत्पादेऽनुबन्धः स्यात् ··· मुख्यानुयायिनि शिशौ AmaK. 2531; AnekāSa. 65; Vaija. 265.2; AnekāSam. 4.147; ViśvaPra. 84.37; DharK. 1308; AnekāK. 434; अनुबन्धः ··· शिशौ श्रेष्ठानुयायिनि NānārthSam. 2.11; NānārthāSam. iii. 8.25; अनुबन्धस्तु ··· मुख्यानुयायिबाले MediK. 86.40; NānārthaMa. 928; अनुबन्धः ··· शिशौ च स्यात् ViśvaLoK. 183.43; अनुबन्धः ··· मुख्यानुगे च बाले KośaKaTa. 2.6074; ŚabdaRaSaK. 184.14 [Kośas give the following as the meanings of *anubandha* : *aprayogin*, AnekāSam. 4.147; *krodha*, NānārthāSam. iii. 8.25; *anubandha* is given as one of the meanings of the following words : *anutāpa*, NānārthSam. 4.36; *anuśaya*, AnekāSa. 320; ParyāRaMā. 1596; Vaija. 265.8; AnekāSam. 4.220; ViśvaPra. 123.106; AnekāK. 665; NānārthaMa. 1359; ViśvaLoK. 273.121; KośaKaTa. 2.7500; ŚabdaRa. (Vā.) 4396; ŚabdaRaSaK. 246.14 (v. l.); *anudraya*, *anudveṣa* or *ayavāya*, NānārthāSam. iii. 8.26; *anubandha* is also given as a synonym of *leśa*, TrikāŚe. iii. 2.9; KalpaK. 238.31] [commencement, beginning, MW., APTE; hickup, thirst, MW.; course, pursuit, base, stem, APTE; a pupil who follows (the example set by) the teacher, APTE; subsidiary (of sacrifice), Viśiṣṭādvaitakośa]

**अनुबन्धक** (anubandhaka) *m.* (Mus.) name of one of the five kinds of *āviddhadhātu* (note produced by heavy and light strokes) ये प्रहारविशेषोत्थाः स्वरास्ते धातवो मताः । विस्तारकरणाविद्धव्यञ्जनाश्चेति धातवः ।··· क्षेपः प्लुतः ··· अनुबन्धकः । इत्याविद्धे पञ्च भेदाः SamgīRa. iii. 252.11 (6.132); *adj.* (anubandha-ka) which binds together मोहसंक्लेशयोरसी । विषया हेतवः सात्म्यादेतयोश्चानुबन्धकाः SamarāSam. 9.294.

**अनुबन्धकत्व** (anubandhaka-tva) *n.* the state of having an indicatory letter पूतिश्च चानुबन्धो भवतीति वक्तव्यम् । तेनायं चकारानुबन्धकत्वादन्तोदात्तो भवति KāśiVṛ. *on* viii. 1.69.

**अनुबन्धकबन्धबन्ध** (anubandhakabandha-bandha) *m.* multitude of trunks of the retinue (of the enemy) उत्तान्यमानमनुबन्धकबन्धबन्धस्कन्धोर्ध्वरन्ध्ररुधिरप्लुतिपूरदण्डैः ।··· तापं जहार भुवि यस्य यशोवितानम् Kapphiṇā. 1.26.

**अनुबन्धकरण** (anubandha-karaṇa) *n.* **A** act of attaching an indicatory letter गाङ्यनुबन्धकरणं विशेषणार्थम् Vār. 1 *on* P. ii. 4.49; MahāBh. i. 485.18 (*on* ii. 4.49); गुपादिष्वनुबन्धकरणमात्मनेपदार्थम् Vār. *on* P. iii. 1.5; MahāBh. ii. 10.22 (*on* iii. 1.5); LaŚabdeŚe. ii. 546.8; अनुबन्धकरणं च प्रत्याहारार्थम् MahāBh. i. 13.11 (*on* i. 1.0); खगादीनां चानुबन्धकरणस्य वैयर्थ्यं प्रसज्येत Nyās. i. 127.20 (*on* i. 1.67); **B** act of linking up (by assuming) अनुबन्धकरणस्य फलमाह PrakaVi. 902.15.

**अनुबन्धकरणसामर्थ्य** (anubandhakaraṇa-sāmarthya) *n.* force of attaching an indicatory letter ङित्यभस्याप्यनुबन्धकरणसामर्थ्यात् Vār. *on* P. vi. 4.143; MahāBh. iii. 225.16 (*on* vi. 4.143); Pradī. ii. 192B.28 (*on* i. 4.1); सन्नन्तादात्मनेपदभावः ··· अनुबन्धकरणसामर्थ्याद्भविष्यति MahāBh. i. 289.2 (*on* i. 3.62); ii. 11.3 (*on* iii. 1.5); 'गुपादिष्वनुबन्धकरणसामर्थ्यात्सन्नन्तादात्मनेपदम्' इति भाष्योक्तं संगच्छते LaŚabdeŚe. ii. 546.11.

**अनुबन्धकरणार्थ** (anubandhakaraṇārtha) *adj.* meant for attaching an indicatory letter अनुबन्धकरणार्थश्च Vār. 16 *on* P i. 1.0; अनुबन्धकरणार्थश्च वर्णानामुपदेशः कर्तव्यः MahāBh. i. 13.9 (*on* i. 1.0)

**अनुबन्धकार्य** (anubandha-kārya) *n.* grammatical operation caused by attaching an indicatory letter नावश्यमनुबन्धकार्येषु स्थानिवद्भावो भवति Nyās. i. 50.2 (*on* i. 1.5); कथमस्यानुबन्धकार्यं कृतम् Pradī. i. 315A.17 (*on* i. 1.26); सर्वस्यानुबन्धकार्यस्य परभूतप्रत्ययाश्रयत्वात् Pradī. iii. 10B. 1 (*on* iii. 1.2); भवत्यनुबन्धकार्याणामतिदेशः PadMañ. *on* KāśiVṛ. *on* P. i. 1.56 (191.18); PariVṛ. (Sī.) 101.22; अनुबन्धकार्याणामल्विधित्वेऽप्यतिदेशः स्यात् Prasā. i. 43.11; क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेधज्ञापनात् SiddhāKau. 116B.8 (*on* iv. 1.15); 342A.3 (*on* iii. 4.103); अनुबन्धकार्ये त्वनल्विधाविति निषेधो न LaŚabdeŚe. i. 78.17; i. 385.3.

**अनुबन्धकार्यत्व** (anubandhakārya-tva) *n.* the state of being the grammatical operation caused by attaching an indicatory letter इद्ग्रहणे त्वनुबन्धकार्यत्वात् स्थानिवत्त्वं स्पष्टम् LaŚabdeŚe. i. 239.8.

**अनुबन्धकृत्** (anubandha-kṛt) *adj.* **1** causing an obstacle स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत् । स राज्ञांशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत् BṛhaspaSm. 220.140; SmṛtiCan. iv. 717.1; **2** causing a symptomatic aggravation or affection दोषशेषश्च वान्तस्य यः स्यात्तदनुबन्धकृत् । तस्योपशमनं कुर्यात् KaśyaS. 337A. 11; संनिपातेषु ···। अल्पान्तरबलेष्वेषु दोषेषु मतिमान् भिषक् । श्लेष्माणमादौ शमयेत् स ह्येषामनुबन्धकृत् KaśyaS. 352A. 14.

**अनुबन्धकृत** (anubandha-kṛta) *adj.* **1** caused by (the attachment of) an indicatory letter नानुबन्धकृतमनेकाल्त्वम् VyāḍiPari. 12; MahāBh. i. 132.5 (*on* i. 1.55); i. 267.3 (*on* i. 3.9); Nyās. i. 101.8 (*on* i. 1.55); PariVṛ (Sī.) 14.12; SiddhāKau. 49A. 7 (*on* vii. 1.17); LaŚabdeŚe. ii. 434.18; अथवाचार्यप्रवृत्तिर्ज्ञापयति नानुबन्धकृतमनेजन्तत्वम् MahāBh. i. 76.12 (*on* i. 1.20); ii. 171.22 (*on* iii. 4.19); PariVṛ.(Sī.) 91.4; PariVṛ.(Nī.) 4.19; आचार्यप्रवृत्तिर्ज्ञापयति नानुबन्धकृतमसारूप्यं भवति MahāBh. i. 267.1 (*on* i. 3.9) = ii. 80.7 (*on* iii. 1.94); KāśiVṛ. *on* iii. 1.94; PariVṛ.(Sī.) 82.17; नानुबन्धकृतान्यसारूप्यानेजन्तत्वानेकाल्त्वानि SaraKaṇṭhā. (Gr.) i. 2.100; अनुबन्धकृतमनित्यमित्यौर्न भवति ज्योतिषिकः GaṇRa. 4.306(346); **2** caused by *anubandha* (a type of *dhātu*) संघातजः ··· समवायजश्च विस्तारजोऽनुबन्धकृतः । ज्ञेयश्चतुष्प्रकारो धातुर्विस्तारसंज्ञश्च NāṭyaŚā. 29.51.

**अनुबन्धकोप** (anubandha-kopa) *adj.* having continuous anger अमर्षिणमनुबन्धकोपं छिद्रप्रहारिणम् ··· राक्षसं विद्यात् CaraS. iv. 4.38 (1941 Ed.)

**अनुबन्धक्रम** (anubandha-krama) *m.* order of the indicatory letters (लकाराणाम्) एतेषां क्रमनियामकश्चानुबन्धक्रम एव VaiyāBhū. 98.5 (*on* 23)

**अनुबन्धगुणापेक्षा** (anubandhaguṇāpekṣā) *f.* [Inst.] in accordance with the intensity of offence or fault (अरण्ये नियतो जप्त्वा त्रिष्कृत्वो वेदसंहिताम् । शुध्येत) तेन पञ्चकृत्वः षट्कृत्व इत्येवमाद्यन्यत्रानुबन्धगुणापेक्षया योज्यम् BālaKrī. ii. 103.16 (*on* 3.242(?248))

**अनुबन्धगुणोत्तर** (anubandhaguṇottara) *adj.* fraught with uninterrupted merit तस्य तद्वचनं धर्म्यमनुबन्धगुणोत्तरम् । साधु साध्विति सर्वः स जनः प्रतिगृहीतवान् MahāBhā. xv. 16.24.

**अनुबन्धगौरव** (anubandha-gaurava) *n.* gravity of offence ये दण्डविशेषास्तेऽनुबन्धगौरवात् पापातिशये चतुर्गुणा ग्राह्याः DaṇḍaVi. 54.14; 83.2; 106.13; दण्डसमुच्चयश्च वचनाभावेऽनुबन्धगौरवाद्यभावे च दुर्वच एव प्रमाणाभावात् DaṇḍaVi. 133.23.

**अनुबन्धग्रहण** (anubandha-grahaṇa) *n.* mention of an indicatory letter गाङोऽनुबन्धग्रहणं विशेषणार्थम् KāśiVṛ. *on* ii. 4.49.

**अनुबन्धचतुष्क** (anubandha-catuṣka) *n.* group of four connecting links or elements (of a *śāstra*, viz. topic, purpose, matter of discussion and eligibility of a learner) अनुबन्धचतुष्कं न सम्बन्धत्रयमेव न TejoBiU. 5.35.

**अनुबन्धचतुष्कसिद्धि** (anubandhacatuṣka-siddhi) *f.* establishment of the group of four connecting links or elements (of a *śāstra*) वेदाध्ययनानन्तरमर्थविचारो धर्माधर्मज्ञानाय उपनीतैः कर्तव्यः सहकारित्वादिति सूत्रार्थवशादनुबन्धचतुष्कसिद्धिः BhaṭṭDī. i. 3.14 (*on* i. 1.1)

**अनुबन्धचतुष्टय** (anubandha-catuṣṭaya) *n.* group of four connecting links or elements (of a *śāstra*) 'अथ योगानुशासनम्' इति प्रथमसूत्रेण ··· विषयप्रयोजनसंबन्धाधिकारिरूपमनुबन्धचतुष्टयं प्रतिपाद्यते SarvaDaSam. 15.38;

स्थानातिक्रमः ArthSaṁ. 81.5.

**अनुबन्ध्यनिगम** (anubandhya-nigama) *m.* Vedic formula relating to *anubandhya* (victim) वैध एव निगमेषु प्रयोक्तव्यः। न चैवमनुबन्ध्यनिगमे वैधो गोशब्दः प्राप्नुयात् NyāyMāVi. 543.3 (*on* x. 4.18)

**अनुबन्ध्यपशु** (anubandhya-paśu) *m.* sacrificial victim called *anubandhya* अग्नीषोमीयसवनीयानुबन्ध्यपशुष्वमी उपाकरणमुख्यास्तु धर्माः साधारणा न वा NyāyMāVi. 183.16 (*on* iii. 6.7); अनुबन्ध्यपशुरवभृथादूर्ध्वमालभ्यते NyāyMāVi. 268.14 (*on* v. 1.6); ŚivārkaMaDī. i. 78.7 (*on* i. 1.1)

**अनुबन्ध्यमान** (anu-bandhyamāna) *adj.* **A** being pursued पश्यतु देवः … अभियोगं पुरातनैः … कर्मभिर्वानुवर्त्यमानस्य (v.l. अनुबन्ध्यमानस्य) … दुष्कृतिनः कृतचित्तस्य संप्रवेष्टुं राजकुलम् HarṣaC 297.9; **B** being insisted or persisted upon सहसा न प्रतिजानीयात्। अनुबन्ध्यमानमनुकुर्यादित्यर्थः JayaMa. 223.13 (*on* 3.4); **C** being appended अनुबन्धभेदस्यानुबन्ध्यमाननियोगभेदद्वारा एव शास्त्रभेदहेतुतया तस्य साक्षाच्छास्त्रभेदहेतुत्वाभावात् MayūMāli. 184.9 (*on* iii. 1.1)

**अनुबन्ध्यलक्षणसमन्वित** (anubandhyalakṣaṇa-samanvita) *adj.* accompanied by the symptoms of a primary disease अनुबन्ध्यलक्षणसमन्वितास्तत्र यदि दोषा भवन्ति, तत्त्रिकं संनिपातमाचक्षते, द्वयं वा संसर्गम् CaraS. iii. 6.11.

**अनुबन्ध्यवपा** (anubandhya-vapā) *f.* omentum of *anubandhya* (victim) (दक्षिणाः) एकादश तृतीयसवने ता अनुबन्ध्यवपायां हुतायामपाकुर्यात् LāṭyāŚS. viii. 7.8.

**अनुबन्ध्या** (anu-bándhyā) *f.* **A** Vedic sacrifice related to the *anubandhya* (victim) सा नराशंसपङ्क्तिस्त्रीणि सवनान्यवभृथोऽनुबन्ध्या सवनानां पञ्चमी सा सवनपङ्क्तिः MaiS. iii. 10.5 (iii. 137.8); ŚatBr.(K.) VII. ii. 4.19; विहितत्वाद् गोदानस्य दक्षिणाविधाने, गोयागस्य त्वनुबन्ध्यायाम् ŚābaBh. 433.3 (*on* ii. 1.31); निर्वपतीति। अनुबन्ध्यायामपि देविकाहवींषि ŚābaBh. 2257.1 (*on* xii. 3.3); चोदकस्तु विधिशब्दादन्येन प्रकाशनं प्रापयति। तस्मादनियमः। नन्वनुबन्ध्यायां भवेदपि ṬupṬ. 261.21 (*on* x. 4.32); तच्छेषिण्यामनुबन्ध्यायां गोद्रव्यकत्वस्य प्राप्तत्वात् MīmāKau. iii(2). 102.21 (*on* ii. 1.30); **B** sacrificial cow (*lit.* which is to be tied to the sacrificial post) अनुबन्ध्याया हुतायाँ वपायामग्रेण शालामुखीयं प्राग्वंशे पात्नीवतँ संमिनोति VārāŚS. III. ii. 6.55; III. iii. 4.42.

**अनुबन्ध्याकाल** (anubandhyā-kāla) *adj.* occurring at the time of *anubandhyā* sacrifice किं न्याय्यं, यदनुबन्ध्याकालस्य (स्वरोः) दर्शनं भवन्न तन्त्रतया प्रवृत्तस्येति ŚābaBh. 2171.3 (*on* xi. 3.8)

**अनुबन्ध्याङ्गभूत** (anubandhyāṅgabhūta) *adj.* which has become ancillary to the *anubandhyā* sacrifice न चायमनुबन्ध्याङ्गभूतस्य (स्वरोः) कालविधिः BhaṭṭDī. iv. 178.8 (*on* xi. 3.5)

**अनुबन्ध्यार्थम्** (anubandhyārtham) *adv.* for the sake of the *anubandhyā* (victim) पूर्वपक्षे सोमेऽग्नीषोमीयपश्वञ्जनेनैव प्रतिपत्तित्वे सिद्धे नानुबन्ध्यार्थं धारणं तथा पशुगणे यस्य कस्यचित्पशोरञ्जनम् MayūMāli. 402.6 (*on* iv. 4.10)

**अनुबन्ध्यावशा** (anubandhyā-vaśā) *f.* barren cow to be tied (to the sacrificial post) विधिधर्मो विधायकवाक्यविहितो महोक्षमहाजालम्भनरूपः तथानुबन्ध्यावशालम्भनरूपश्च धर्मः Subodhi. 49.21 (*on* 2.117)

**अनुबन्ध्यास्वरु** (anubandhyā-svaru) *m.* the first chip (cut from the tree-trunk from which the sacrificial post is prepared) for the *anubandhyā* sacrifice सोमान्ते चाग्नीषोमीयस्वरोरेव प्रतिपत्तिर्न तु अनुबन्ध्यास्वरोः MayūMāli. 820.23 (*on* xi. 3.5)

**अनुबल** (anu-bala) *n.* rear guard, auxiliary force व्यूढानीकैरनुबलैर्नोपेयाद् बलवत्तरम्। इति बुद्धिमतां नीतिस्तन्ममापीह रोचते MahāBhā. ii. 16.6; गते त्वनुबले तस्मिन् … विराटः प्रत्यभाषत MahāBhā. iv. 1065*(1); निजघान रणे रामस्तेषां चैव पदानुगान्। रक्षसां निहतान्यासन् (v.l. तेषामनुबलं चैव) सहस्राणि चतुर्दश Rāmā. i. 1.38; अयं सुखधनो राजन्नहं चानुबलं विना। युध्यावहे स्वसैन्याभ्यां सत्त्वासत्त्वमवेक्ष्यताम् KathāSaSāg. vii. 9.119; *adj.* **1** secondary to the principal disease संचितं पित्तमुद्रिक्तं शरदादित्यतेजसा। ज्वरं संजनयत्याशु तस्य चानुबलः कफः CaraS. vi. 3.44 (1941 Ed.); RugVi. 2.56; ज्ञात्वा दोषावनुबलौ बलमाहारमेव च। जलं पिपासवे दद्यात् CaraS. vi. 4.52 (1941 Ed.); वायुश्च शीतसामान्यात् कफस्यानुबलो बली KāśyaS. 231B. 34; ज्वरे तेजो विशिष्यते।… तस्य चानुबलः श्लेष्मा गौरवापत्तिजाड्यकृत् AṣṭāSaṁ. i. 113.8 (1.21); ज्ञात्वा निदानमयनं मलावनुबलौ बलम्। देशकालाद्यवस्थां च रक्तपित्ते प्रयोजयेत् AṣṭāSaṁ. ii. 15.11 (4.3); ii. 70.23 (4.11); **2A** which gets aggravated subsequently यः स्यादनुबलो धातुः स्नेहवध्यः सः CaraS. vi. 3.217 (1941 Ed.) (comm. अनु पश्चाद्बलं भवति यस्य); **2B** which is less in strength श्लेष्मण्यणु(?नु)बले पित्ते ये मेहन्ति तु तान्छृणु BhelaS. 62.6 (2.6)

**अनुबाध्** (anu-bādh-) I. Ā. **i** to harass, to torment ये त्वानुवादेयु-(v.l. अनुबाधेयु)रवृत्तिकर्शिता ब्रूयाश्च तेषां वचनेन मे सदा। दास्यामि सर्वम् MahāBhā. iv. 6.15; **ii** to afflict (in the form of ill effects) तव नामानुरक्ता वाग्यस्य पुंसो जगत्पते। अप्यद्रिकूटतुलितं नैनस्तमनुबाधते SkandP. iv. 31.96 = ŚivaP. iii. 9.37 (305B.9)

**अनुबाधन** (anu-bādhana) *n.* (bad medicine) which afflicts, i.e. kills after some interval अनौषधं पुनर्द्विविधमेव। बाधनमनुबाधनं च। तत्र सद्यः प्राणहरं बाधनं, कालान्तरेणानुबाधनमिति AṣṭāSaṁ. i. 75.10 (1.12)

**अनुबाध्यमान** (anu-bādhyamāna) *adj.* **A** being afflicted consequently अनुबाध्यमानश्च कन्याजन्मशुचा पुनः। स राजा गृहवृद्धेन केनाप्यूचे द्विजन्मना KathāSaSāg. vi. 2.46; **B** being affected repeatedly क्षयरोगेण पार्थिवः। ततोऽनुबाध्यमानोऽभूदपर्यन्तव्यथातुरः RājTa.(Ka.) 5.443.

**अनुबाहु** (anubāhu) *m.* name of a person अनुबाहुः — सान्वबाहुः। सान्वबाहविः। "बाह्वादेरिञ्" JaineVyā. 363.9 (*on* v. 2.25)

**अनुबिन्द** (anubinda) *m.* name of a warrior (hailing from Avanti) विन्दानुविन्द(v.l. बिन्दानुबिन्दा)वावन्त्यौ समेतौ रथसत्तमौ MahāBhā. v. 163.6.

**अनुबिभ्रती** (anu-bibhratī) *adj.* (*f.*) bearing continually ब्रह्मास्त्रां महाविद्यां शाम्भवीम् … ललाटपट्टोल्लसत्पीतचन्द्रार्धमनुबिभ्रतीम् … संचिन्त्य … ध्यायेत् PītāU. 421.16.

**अनुबिभ्राण** (anu-bibhrāṇa) *adj.* having or possessing (आत्मा) शुद्धानन्तशक्तिज्ञानविपरिणमनस्वभावेन साधकतमत्वात् करणत्वमनुबिभ्राणः TattvPradī.(A.) 20.6 (*on* 1.16)

**अनुबिम्ब** (anu-bimba) *m., n.* **1** reflection संसारसिन्धावनुबिम्बमत्र जागर्ति जाने तव वैरसेनिः। बिम्बानुबिम्बौ हि विहाय धातुर्न जातु दृष्टातिस्वरूपसृष्टिः NaiṣC. 8.46; मज्जत्यम्भस्येष दोषाकरोऽस्मिन् नक्तं नक्तं नायमस्यानुबिम्बः Rāgh. 10.35; **2** imitation अहो रमणीयता रङ्गवाटस्य … नायं लोको बलारेः … नाप्यन्यस्यानुबिम्बः किमयमुदयते दृष्टिबन्धः प्रबन्धः KaṁVa. 6.31.

**अनुबिम्बत्व** (anubimba-tva) *n.* the state of being a replica, i.e. an object of comparison यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना SāhiDa. 556.1 (comm. उपमानोपमेयभावम्)

**अनुबिम्बदम्भ** (anubimba-dambha) *m.* [Abl.] by the pretext of (being a) reflection उपर्यधः पुष्पफलैरुदग्रमुद्यानमामोद्य दिवं भुवं च। आवालवारिण्यनुबिम्बदम्भाद्रसातलं रञ्जयतीव यस्याम् Acyutarā. 1.47 (comm. प्रतिबिम्बव्याजात्)

**अनुबिम्बन** (anu-bimbana) *n.* reflection एतद्गन्धगजः …। दन्तद्वन्द्वजलानुबिम्बनचतुर्दन्तः कराम्भोवमिव्याजादभ्रमुवल्लभेन विरहं निर्वापयत्यम्बुधेः NaiṣC. 12.85; नभसः प्रसादमवलुण्ठयितुं लघु चालिताह्लहरिभोगिमुखात्। अवपातितैः किमभितो वरणैरनुबिम्बनैः स्फुरति याम्बुमुचाम् Acyutarā. 6.5; विवस्वतः … मरीचयस्तरलतरङ्गभङ्गुराः। पयोनिधेः पयसि तदानुबिम्बनादबिन्धनज्वलनशिखाश्रियं दधुः Rāgh. 16.2.

**अनुबिम्बम्** (anubimbam) *adv.* behind the reflection सा … दर्पणे … पृष्ठतः प्रणयिनो निषेदुषः। प्रेक्ष्य बिम्बमुपबिम्ब(v.l. अनुबिम्ब)मात्मनः कानि कानि न चकार लज्जया KumāSaṁ. 8.11; VakroJī. 107.12; SaraKaṇṭhā. 391.19.

**अनुबिम्बव्यतिकर** (anubimba-vyatikara) *m.* relation of (i.e. as) reflection ममामीषामञ्जन्मतिमुकुरबिम्बेषु महतां निबन्धः संधत्तामनिशमनुबिम्बव्यतिकरम् SiddhāSi. i. 3.12 = iv. 130.6.

**अनुबिम्बायित** (anu-bimbāyita) *adj.* who has acted as image(s) or replica(s) दुर्योधनः। सेनादुन्दुभिनादतुन्दिलनभाः स्वस्यानुबिम्बायितैरासीदत्स नवाधिकैः परिवृतप्रान्तो नवत्यानुजैः BhārCam. 2.72.

**अनुबिम्बित** (anu-bimbita) *adj.* [*f.* -ā] reflected (नगरी) विललास जलाशयोदरे क्वचन द्यौरनुबिम्बितेव या NaiṣC. 2.79; क्वापि ह्रदे व्योमसरिद्वरायाः पतिर्नदीनामनुबिम्बितः किम् HammīMaKā. 8.20.

**अनुबीज** (anu-bīja) *n.* subsequent (mystic) syllable *śrīṁ* स्थितायैपदमस्यान्ते भूयो मद्धृदयं पठेत्। अनुबीजं तदन्ते च मद्बीजं पुनरुत्तमम् LakṣmīT. 45.25.

**अनुबीजिका** (anubījikā) *f.* mustard seed, *Brassica nigra* सर्षपा सासवी प्रोक्ता … कौपना चानुबीजिका AbhidhāMañ. 14.2.

**अनुबुद्ध** (ánu-buddha) *adj.* which was noticed or discovered यस्यं व्रीर्यं प्रथमस्यानुबुद्धम् AV. iv. 24.6; AV.(P.) iv. 39.6; अनुबुद्धम् … वैरं त्सायेन्वविद्धम कर्त्रम् AV. x. 1.19; AV.(P.) xvi. 36.9.

**अनुबुद्धवत्** (anubuddha-va(n)t) *adj.* **A** who has known अहो

अनुबुद्धवानस्मि AitUBh. 283.13 (*on* 4.5); देवासुराः अनु परम्परागतं स्वकर्णगोचरापन्नम् अनुबुबुधिरे अनुबुद्धवन्तः ChāndoUBh. 508.8 (*on* viii. 7.2); **B** which has awakened विद्या वै पञ्चविंशकः।…एवं परमसंबोधात्पञ्चविंशोऽनुबुद्धवान्। अक्षरत्वं निगच्छति BrahmP. 243.40.

**अनुबुद्धि** (anu-buddhi) *f.* awakening, enlightenment, making up of the mind यस्या रवं दशदिशे व्रजि क्षेत्रकोट्या। अद्यावबोद्धुममतं अनुबुद्धि शास्ता LaliVi. 20.29 [DBHS.]

**अनुबुद्ध्वा** (anu-buddhvā) *ger.* (irr.) having known or realised धृतराष्ट्रस्य तं काममनुबुद्ध्वा युधिष्ठिरः। आत्मनश्चासहायत्वं तथेति प्रत्युवाच तम् MahāBhā. i. 131.11.

**अनुबुध्** (anu-budh-) I.U., IV.Ā. (rarely P.) [DhātuPā. 4.63; AltGr. I. 126; I. 1.69; I. 1.72; DEBRU. 70] **1A** to become aware of, to notice, to come to know, to learn, (pass.) to be known or realised, (*caus.*) **i** to cause to know, to make aware of, to communicate or inform **ii** to restore to awareness or consciousness **B** to recollect, to remember **C** to recognize, to identify, (pass.) to be recognised **D** to take into account, to regard or consider **2** to awake, to wake **1A** to become aware of, to notice, to come to know, to learn तस्मात्प्राचीनोपवीतस्तिष्ठे प्रजापतेऽनु मा बुध्यस्वेति। अन्वेनं प्रजा अनु प्रजापतिर्बुध्यते य एवं वेद AV. ix. 1.24; ददामीत्येव ब्रूयादनु चैनामभुत्सत AV. xii. 4.1; अन्वेनं देवा बुध्यन्ते TaiS. VII. i. 6.8; BaudhŚS. ii. 272.7; तस्माद् तत्र प्रथमत एवोच्चैरनुब्रूयाद् यथैनामागतामनुबुध्येरन् KauṣīBr. 9.1 (41.11); कृतकर्मेव हि स तर्हि भवति सर्वो हि कृतमनुबुध्यते ŚatBr. II. ii. 3.17; ŚatBr.(K.) I. ii. 3.13; अथ यस्मादुपैव तिष्ठेत उत वै याचन्। दातारं लभतऽ एवोतो भर्ता भार्यं नानुबुध्यते ŚatBr. II. iii. 4.7; ŚatBr.(K.) I. iv. 1.6; तद् हासुरा अनुबुबुधिरे ŚatBr. IX. v. 1.19; तस्य हाप्स्वन्तर्नौनगरं परिप्लवमास। तदिन्द्रोऽन्वबुध्यत JaimiBr. 1.125; 1.332; अतिरिक्तमनुबुध्यन्ते JaimiBr. 1.351; तद्यमोऽन्वबुध्यत सहस्रमज्यासिष्टामिति JaimiBr. 2.249; ते तदन्वबुध्यन्त शिशून् ह जातान् विपर्यहार्षीदिति JaimiBr. 3.23; 3.2; 3.168; 3.202; स तद्ध सुदक्षिणोऽनुबुबुधे JaimiUBr. iii. 7.8; तदिन्द्रोऽन्वबुध्यत Luptaśāṭyāyanibrāhmaṇa 35.9; 37.7; तद्धोभये देवासुरा अनुबुबुधिरे ChāndoU. viii. 7.2; यद्यष्टापदीत्यनुबुध्येत ĀpaŚS. ix. 18.16; xxiv. 5.4; HirŚS. xv. 8.15 (339.29); अथ वाप्यनुबुध्येत नृपोऽस्माकं चिकीर्षितम् MahāBhā. iii. 227.4; मया हतांश्चेन्मात्स्यांस्तु धार्तराष्ट्रोऽनुबुध्यति MahāBhā. iv. 425*(1); एतन्मांसस्य मांसत्वमतो बुध्यस्व (v.l. अनुबुध्यस्व) भारत MahāBhā. xiii. 117.34; (धृतराष्ट्रस्य निर्वेदम्) नान्वबुध्यत … युधिष्ठिरः MahāBhā. xv. 4.13; BhāgP. iii. 32.31; (pass.) to be known or realised कथितम् … ज्ञानं तद्ब्रह्मदर्शनम्। येनानुबुध्यते तत्त्वं प्रकृतेः पुरुषस्य च BhāgP. iii. 32.31; (*caus.*) **i** to cause to know, to make aware of, to communicate or inform तमनुबोधयेत्येवैतदाह श्रौषळिति शृण्वन्ति ŚatBr.(K.) II. viii. 1.19; इदम् … कर्म चिकीर्षितम्। प्रागेव विदुरो वेद तेनास्मानन्वबोधयत् MahāBhā. i. 135.14; तम् … गुरुः … शिष्येण किलान्वबोधयत् RaghuVa. 8.75; नित्वगोहालीषु ब्राह्मणोत्तरान् महत्तरादिकुटुम्बिनः कुशलमनुवर्ण्यानुबोधयन्ति EI. xx. 61.3; लुब्धकावनुगच्छेतां सावधानौ नृपेरितौ। अन्तरस्थानिकं(निको) गत्वा पुरस्थमनुबोधयेत् Mānaso. iv. 15.1591; **ii** to restore to awareness or consciousness सोऽवसीदद्विचेतनः …। उपेति चास्यां कुशिकान् विश्वामित्रोऽनु(? न्व)बोधयत् BṛDe. 4.115; **1B** to recollect, to remember अग्निः … ओषधीरेवास्मै पावका भागधेयमपिदधाति न गार्हमनुबुध्यते KāṭhS. 6.6 (i. 55.13) = KapiKaS. 4.5 (43.5); कुन्ती …। नान्वबुध्यत संसुप्तमुत्सङ्गे स्वे वृकोदरम् MahāBhā. i. 114.12; स तु कामपरीतात्मा तं शापं नान्वबुध्यत MahāBhā. i. 116.9; प्रमत्तः कामभोगेषु …। समुत्पन्नं भयं घोरं बोद्धव्यं नावबुध्यसे (v.l. नानुबुध्यसे) Rāmā. iii. 31.2; मित्राणां संग्रहः शेषस्तद्भवान् कर्तुमर्हति (v.l. अनुबुद्ध्यताम्) Rāmā. iv. 28.9; **1C** to recognize, to identify तस्माच्छ्रेष्ठमायन्तं प्रथमेनैवानुबुध्यन्ते। अयमागन्। अयमवासादिति TaiBr. II. iii. 1.3; विमूढा हि वयं सर्वे प्रच्छन्नमृषिसत्तमम् (v.l प्रच्छन्नं नानुबुध्नुमः)।… वसिष्ठम् MahāBhā. i. 91.12; व्यभिचारात्तु सा तस्मात् क्लिन्नाम्भसि विचेतना। प्रविवेशाश्रमं त्रस्ता तां वै भर्तान्वबुध्यत MahāBhā. iii. 116.8; HarVi. 26.48; (pass.) to be recognized विपाटलत्वम्। आहूतवत्यभिमुखे प्रतिपक्षवर्तिनाम्नान्वबुध्यत तदेव रुषा तरुण्याः HarVi. 26.48; प्रेयानेव भवेत्प्रेयानतः सर्वरसेष्वयम्। सख्यसंपृक्तहृदयैः सद्भिरेवानुबुध्यते BhaktiRaSi. iii. 3.61; **1D** to take into account, to regard or consider (लक्ष्मीः) न सत्यमनुबुध्यते Kād. 104.19; **2A** to awake, to wake वसतोस्तु तयोस्तत्र कण्वपत्न्याः शिरः स्वपत्। कृत्वा कनीयान्कण्वस्य उत्सङ्गे नान्वबुध्यत BṛDe. 6.36; अनुबुध्यस्व राजेन्द्र वेत्थ धर्मान्सनातनान् MahāBhā. iii. 34.52; तयोः संवदतोरेव कृष्णदारुकयोस्तदा। सात्यगाद्रजनी राजन्नथ राजान्वबुध्यत MahāBhā. vii. 58.1; दूतौ …। ईक्षेते वागवसरं ततो देवोऽन्वबुध्यत GaṇeP. ii. 53.10.

**अनुबुध्य** (anu-budhya) *ger.* having noticed, having come to know, having learnt विश्वन्तरो ह सौषद्मनः श्यापर्णान् परिचक्षाणः … यज्ञमाजह्रे तद्धानुबुध्य श्यापर्णास्तं यज्ञमाजग्मुः AitBr. 35.1(877); तद्धैवेन्द्रोऽनुबुध्य शुको भूत्वोत्पपात JaimiBr. 1.126; तद् होवाच वासिष्ठश्चैकितानेयः पश्चैवानुबुध्य JaimiBr. 1.273; 2.272; तद् होवाचानुबुध्योद्दालक आरुणिः VādhūŚS. ii. 13.5.

**अनुबुध्यन** (anu-budhyana) *n.* the understanding, becoming aware of, DBHS.

**अनुबुभूष** (anu-bubhūṣa-) *desid.* **A** to desire to experience or enjoy नैनमन्येऽवजानन्ति … राजा सुखान्यनुबुभूषति MahāBhā. xii. 95.11; वैरनिर्यातनसुखमनुबुभूषामि DaśKuC. 83.14; **B** to desire to realize सोऽहमित्यनुबुभूषसि Yādavā. 21.19.

**अनुबुभूषत्** (anu-bubhūṣat) *adj.* desiring to experience or enjoy एते … प्रमोदनिर्भराः … सुमनसः कमपि महोत्सवमनुबुभूषन्तो मामेव प्रतीक्षन्ते MahāvīC. 6.63(3); राजन् धन्याः प्रजाः कार्याः सुखं चानुबुभूषता BṛKathāŚloSaṁ. 2.5.

**अनुबुभूषा** (anu-bubhūṣā) *f.* desire to experience अवधानं खल्वनुबुभूषा …। न चैते आत्मनो धर्मौ Bhām. 491.15 (*on* ii. 3.32); अनुबुभूषाशुश्रूषे साश्रये गुणत्वाद् रूपवद् यस्तयोराश्रयस्तन्मनः VedāntKa. 322.27 (*on* ii. 3.32)

**अनुबुभूषित** (anu-bubhūṣita) *adj.* desired to be experienced यतिभिरनुबुभूषितस्स ताभिः यदुपतिः … अन्वभावि Yādavā. 24.67 (comm. योगबलेनानुभवितुमिष्टः)

**अनुबुभूषु** (anu-bubhūṣu) *adj.* **i** desirous of experiencing मरुद्गणभ्रमितपत्रमण्डलोपरुद्धसुरभव(न)मुग्रातपमनुबुभूषुः AvantiKa. 26.16; **ii** desirous of enjoying (अहम्) तदालिङ्गनसुखमनुबुभूषुस्तामादाय गर्भगृहमविक्षम् DaśKuC. 65.4; मुहूर्तमात्रमपि राममुखावलोकनसुखमनुबुभूषुर्दशरथः RāmāCam. 2.23(1)

**अनुबृंह्** (anu-bṛṁh-) I.P. (*caus.*) **1** to strengthen, to make to increase, to devote oneself to तथागतः … शुभाशुभाधिमुक्तिताम् … प्रजानाति। शुभां चाधिमुक्तिमनुबृंहयति BodhiBhū. 272.9; शाक्यमुनिः … एवमाह … अयं क्रोधराजा … जापिनं विहेठयेत् … शोषयिष्यति …। जापिनस्य रक्षाधरणगुप्तये स्थास्यति। अनुबृंहयिष्यति Āryamañjuśrīmūlakalpa 154.7; (एवं ज्ञात्वा य)थाभूतं बुद्धानां श्रावकः सदासत्कार(म्) नाभिनन्देत विवेकमनुबृंहयेत् Udānavarga 13.6[DBHS.]; **2** to promote or consent, cf. **अनुबृंहयितृ.**

**अनुबृंहणता** (anubṛṁhaṇa-tā) *f.* strengthening, making to increase अन्यूनं यथोपात्ततुल्याधिकवीर्यानुबृंहणतया BodhiBhū. 140.7; सप्तविधं पुनः छन्दसहगतं बोधिसत्त्वस्य वीर्यम् … तीव्रच्छन्दप्रणिधानानुबृंहणतया BodhiBhū. 140.19 [DBHS.]

**अनुबृंहणा** (anu-bṛṁhaṇā) *f.* strengthening, making to increase तत्राध्याशयप्रयोगो या तस्यैव हितसुखाध्याशयस्य प्रतिदिवसमनुबृंहणा BodhiBhū. 12.18 [DBHS.]

**अनुबृंहयत्** (anu-bṛṁhayat) *adj.* who strengthens, who makes to increase, who devotes oneself to यस्यैवं दीर्घरात्रं प्रणिधानमनुबृंहयतः सम्यक् प्रतिपत्तिपरिगृहीतमृध्यति BodhiBhū. 65.21 [DBHS.]

**अनुबृंहयितृ** (anu-bṛṁhayitṛ) *adj.* who promotes or consents पूजासत्कारम् … अनुबृंहयिता — परेण स्वस्य क्रियमाणस्य तस्यानुमोदयिता SthānṬ. 389B.13.

**अनुबृंहित** (anu-bṛṁhita) *adj.* strengthened, made to increase दीर्घरात्रं खलु … प्रणिधानमनुबृंहितं भवति BodhiBhū. 65.19 [DBHS.]

**अनुबोद्धुम्** (anu-boddhum) *inf.* to become aware of, to come to know धर्मार्थकामान् …। अनुबोद्धुं स्वभावेन न हि लक्षणमस्ति ते Rāmā. vi. 52.6.

**अनुबोद्धृ** (anu-boddhṛ) *adj.* who understands in order बोधिसत्त्वः।… लाभी ह्यलाभी धीसंस्थितश्च बोद्धानुबोद्धा प्रतिदेशकश्च MaYānaSū. 175.10 (19.80)

**अनुबोध** (anu-bodha) *m.* **1Ai** notice, i.e. knowledge कृपणतामिवैष न्वेति यस्सर्वं ददातीति गच्छति प्रजापतेरनुबोधम् JaimiBr. 2.183; (स्त्री पशुः … गर्भिणी) प्राक् संज्ञपनादनुबोधे तामुत्सृज्यान्यामुपाकुर्यात् comm. *on* ĀpaŚS. ix. 19.1; **1Aii** realization, enlightenment आत्मसत्यानुबोधेन न संकल्पयते यदा। अमनस्तां तदा याति GauḍKā. 3.32; **1Aiii** comprehension तेनास्मि बुद्धो जगतोऽनुबोधात् SaddhaPuṇ. 32.2; 47.26; 55.6; 55.11; श्रेष्ठिदारकः … निर्याणसभागतां प्रत्यलभत … °दशबलज्ञानानुबोधाय GaṇḍVyū. 267.25; एकक्षणत्र्यध्वानुबोधं च बुद्धानां भगवतामवतरति Daśabhūmikasūtra 55.22 [DBHS.]; **1B** recollection विदितमस्तु … ममानुवो(बो) [धेनल] [मा] ता – पि[त्र्] ओ [रात्म]नश् च पु[ण्य्]आभिवृद्[ध्] अये शास [Read शासनेन] EI. xxiii. 77.22; **2** revival of the (evaporated) scent (of a perfume).

प्रबोधनम्। अनुबोधः AmaK. 1318 (Maheśvara इयं गतगन्धस्य पुनर्गन्धव्यक्तीकरणे); Vaija. 170.147; KośaKaTa. 1.5404; KalpaK. 61.367.

**अनुबोधक** (anubodha-ka) *adj.* who leads to knowledge, preceptor सूतः ...। वेदानहैस्तथा चैषां धर्माणामनुबोधकः AuśaSm. 3.

**अनुबोधतस्** (anubodha-tas) *adv.* due to comprehension बोधिसत्त्वचर्याबलं समुद्रच्छति।... धर्मकायानुबोधतः Daśabhūmikasūtra 67.7 [DBHS.]

**अनुबोधन** (anu-bodhana) *n.* **1A** act of leading to knowledge सूतः ... मन्त्रहीनोपनीतो द्विजधर्महीनः। अस्य वृत्तिधर्मानुबोधनं राज्ञोऽन्नसंस्कारश्च VaikhāDS. iii. 13.9; **1B** act of awakening प्रबोधना तु न पुमान् ज्ञापनेऽप्यनुबोधने NānārthaSaṁ. iii. 55.343; **2** (logical) comprehension, reason, cf. **अनुबोधनवैनेय** [DBHS.]

**अनुबोधनता** (anubodhana-tā) *f.* the state of having comprehension of सम्यग्वाग् धर्मालोकमुखं सर्वाक्षररुतघोषवाक्यपथप्रतिश्रुत्कासमतानुबोधनतायै संवर्तते LaliVi. 4.0(77); बुद्धकुलेषु जनयित्रीणि।... आचार्यभूतानि कल्याणमित्राणि बोधिसत्त्वशिक्षानुबोधनतया GaṇḍVyū. 365.12 [DBHS.]

**अनुबोधनवैनेय** (anubodhana-vaineya) *adj.* (person) convertible by (logical) comprehension, by reason दशसु दिक्षु सर्वधर्मधातुनयसागरान् स्फरित्वा ... अनुबोधनवैनेयानाम् ... सत्त्वानामाशयवशेन कालवशेन ... प्रवर्तयामि GaṇḍVyū. 270.28 [DBHS.]

**अनुबोधबोध** (anubodha-bodha) *m.* awareness of enlightenment or realization अबोधबोधादनुबोधबोधादभावबोधात्प्रभवानुबोधात्। अबोधबोधप्रतिबोधतश्च तेनोच्यते हेतुन बोधिसत्त्वः MaYānaSū. 174.18 (19.77)

**अनुबोधयितुम्** (anu-bodhayitum) *inf.* to make known, to inform वाग्उपन्यासेन वालिवधमनुबोधयितुमपारयद्भिरमात्यैरुशनसा रामकथां प्रस्तुत्य किमपि प्रेक्षणकं कारितं लङ्केश्वरस्य दर्शयितव्यम् JānaPa. 6.3(2)

**अनुबोधित** (anu-bodhita) *adj.* [*f.*-ā] **A** taught, made acquainted with सदुपचारविधिष्वनुबोधिताम् ... मम समुद्धर बुद्धिमिमाम् ŚivāL. 78; **B** reminded सम्यगनुबोधितोऽस्मि AdbhuDa. 2.4(2); अत एवेयमीदृशावस्थेति मदुक्तमनुबोधितोऽस्मि वयस्येन JānaPa. 3.54(18)

**अनुबोध्य** (anubodh-ya) *ger.* having awakened or aroused, i.e. blown पाञ्चजन्यं महाशङ्खमनुबोध्य च पङ्कजम्। प्रगृह्य रक्ष मां विष्णो VāmaP. 17.31.

**अनुबोध्य** (anu-bodhya) *adj.* to be known, PW.; pw.

**अनुबोध्यत्व** (anubodhya-tva) *n.* the state of being what is to be remembered उपक्रमावगतेश्च वेदोदितन्यायेनानुबोध्यत्वात् ... गुणलोपेनामुख्यस्येत्यपि न्यायेन बाध्येत ManvaMu. 215.30 (*on* 5.104)

**अनुबोभूय** (anu-bobhūya-) *intens.* (pass.) to be perceived frequently यस्तु मायाविवर्तो महाभूतः प्रपञ्चः स विषमानोऽपि निरिन्द्रियेणेव रूपं नानुबोभूयते PrakaVi. 4.10.

**अनुब्रह्म** (anubrahma) *adv.* **1** after the Vedic prayer प्रदक्षिणमनुब्रह्म स्तोत्रमेतदुदीरयेत् BṛNāraP. 18.21; **2** in respect of each Brahmin 'अनुब्रह्म' प्रतिब्राह्मणं, दक्षिणाश्च दद्यात् CaturCin. iii(1). 1567.8.

**अनुब्राह्मण** (anu-brāhmaṇa) *n.* [P. iv. 2.62; SiddhaHe. vi. 2.123] work similar to the Brāhmaṇa(-text, i.e. Kalpasūtras) 'आयुरसि विश्वायुरसि। सर्वायुरसि सर्वमायुरसि। यतो वा (सा ? तो) मनोजवाः' इत्यन्तैश्चतसृभिरनुच्छन्दसैरनुब्राह्मणैराशीर्वाचनमाह ĀgniveGS. ii. 4.6 (67.1); JaineVyā. 182.9 (*on* iii. 2.53); ब्राह्मणसदृशोऽयं ग्रन्थोऽनुब्राह्मणम् KāśiVṛ. *on* iv. 2.62; Prasā. i. 756.18; SiddhāKau. 246A. 8 (*on* iv. 2.62); ननु योऽनुब्राह्मणमधीते तस्यानुब्राह्मणमस्तीति Nyās. i. 950.4 (*on* iv. 2.62)

**अनुब्राह्मणम्** (anubrāhmaṇam) *adv.* according to the Brāhmaṇa (-text), following the (reading or prescription in the) Brāhmaṇa (-text) आद्याः प्रतिपदामनृगावानन्। अनुब्राह्मणं वानुपूर्व्यम् ĀśvaŚS. I. v. 9.23; अनुब्राह्मणं वा स्वरः ĀśvaŚS. I. v. 15.23; समानमितरं ज्योतिष्टोमेनानुब्राह्मणं क्लृप्ताः कर्मकल्पाश्चाहुतिकल्पाश्च Kṣudra. 46.5; षोडश्याः षोडशिनोऽनुब्राह्मणं वेति विचारयन्ति। त्रिष्टोमा अनुब्राह्मणश्स्युरिति NidāSū. 135.8 (8.3); 135.16 (8.3); अनुब्राह्मणमार्त्विकान् सत्रामान् सर्वत्र कुर्यादप्यन्यस्मिन् साम्नि LāṭyāŚS. ii. 10.24 (comm. ये ब्राह्मणे ऋचं साम्नि प्रतिसत्रामा उक्ताः एवं कृत्वोद्गेयम्); DrāhyŚS. vi. 3.3.

**अनुब्राह्मणिक** (anubrāhmaṇ-ika) *adj.* knower of an Anubrāhmaṇa(-text, i.e. Kalpasūtras) अनुब्राह्मणिकानामहर्योगं गृहीत्वा स्तोत्रविधिः कल्पितो मशकेन comm. *on* LāṭyāŚS. vi. 9.1.

**अनुब्राह्मणिन्** (anubrāhmaṇ-in) *m.* [P. iv. 2.62; SiddhaHe. vi. 2.123; DEBRU. 338] one who studies or knows the Anubrāhmaṇa (-text, i.e. Kalpasūtras) आग्नेयावाज्यभागौ। इध्मिदिन्दुमन्ताविलाचक्षते। तथानुवृत्तिः। इज्या च। नित्यं पूर्वमनुब्राह्मणिनः ĀśvaŚS. I. ii. 8.11; यथावापवानेकाहाः श्रीस्तोमा उत्तरा ततिरनुब्राह्मणिनाम् NidāSū. 24.1 (2.1); स्तुते बहिष्पवमाने (यजमानम्) वाचयति। श्येनोऽसि ...। ब्राह्मणोक्तानित्यनुब्राह्मणिनः VaitāSū. 17.11 (comm. कल्पकाराः); अनुब्राह्मणी अनुब्राह्मणिनौ अनुब्राह्मणिनः MahāBh. ii. 284.17 (*on* iv. 2.62); कथमनुब्राह्मणीति। इनिना सिद्धम् CāndraVṛ. *on* iii. 1.40; अनुब्राह्मणम्। तदधीतेऽनुब्राह्मणी KāśiVṛ. *on* iv. 2.62; अनुब्राह्मणमधीते वेद वा अनुब्राह्मणी Prasā. i. 756.19; SiddhāKau. 246A. 9 (*on* iv.2.62); KośaKaTa. 1.1386.

**अनुब्राह्मणिनी** (anubrāhmaṇ-inī) *f.* (a twice-born female) who knows or studies an Anubrāhmaṇa (-text, i.e. Kalpasūtras) ब्राह्मणोऽनुब्राह्मणी स्यादनुब्राह्मणिनी द्विजा KośaKaTa. 1.1386.

**अनुब्राह्मण्याढ्य** (anubrāhmaṇy-āḍhya) *adj.* abounding in the knowers of the Anubrāhmaṇa (-text, i.e. Kalpasūtras) अनुब्राह्मण्याढ्यैः सशतपथिकैः षष्टिपथिकैः कृताध्यायानि ... सः ... सुरगृहाणि व्यरचयत् DvyāśraKā. 15.122.

**अनुब्राह्मिन्** (anubrāhm-in) *m.* one who studies or knows the Anubrāhmaṇa(-text, i.e. Kalpasūtras) पदाय पदाय स्तोमाननुसंहरेदित्याचार्यसमयः। यथाधीतान्येव गेयानीत्यनुब्राह्मिणो वचनात् JaimiŚS. 26 (Vṛtti केचिद् ग्रन्थविशेषार्थविदोऽनुब्राह्मिणः)

**अनुब्रुवत्** (anu-bruvát) *adj.* **A** reciting along यस्य होतां प्रातरनुवाकमनुब्रुवन्नग्निमुप आदित्यमभि विपर्यत्युदेनमुत्तरो यज्ञो नमति TaiS VI. ii. 6.1; MaiS. iii. 8.4 (iii. 98.15); तैं यर्हि प्रवर्तयेयुस्तर्हि होतानुब्रुवम् मनसा पदा तां जनतां प्रतिनुदेत् MaiS. iii. 8.7 (iii. 104.11); यत्र होतुः प्रातरनुवाकमनुब्रुवतं उपशृणुयात्तत्पोऽध्वर्युर्जुहुयात् MaiS. iv. 5.2 (iv. 64.17); ĀpaŚS. xii. 5.5; MānŚS. 73.6; HirŚS. viii. 1.62 (791.23); होता ... मार्जालीयं परीयायामीरनुब्रुवन् KāṭhS. 34.2 (iii. 37.5); BaudhŚS. ii. 199.10; ĀpaŚS. xiv. 22.1; HirŚS. xv. 5.35 (320.11); VaikhāŚS. 21.8; Kṣudra. 45; सर्वा ह्यस्मिन् देवताः प्रातरनुवाकमनुब्रुवति प्रमोदन्ते AitBr. 7.6 (204); 8.2 (223); (अध्वर्यवः) ता ऋचोऽनुब्रुवन्तस्त्रिर्मार्जालीयं परियन्ति सव्यानूरूनाघ्नानाः PañcBr. ix. 8.9; TaiBr. I. iv. 6.6; JaimiBr. 1.345; केवलीः सौमीरन्वाह सोमो जिगाति गातुविदितीतवत्तृचमनुब्रुवन्ननुसमेति KauṣiBr. 9.6 (43.19); ब्राह्मणः सामिधेनीर्विद्वाननुब्रुवंस्तपत्यनवधृष्यो हि भवति ŚatBr. I. iv. 3.2; I. vii. 2.15; ŚatBr.(K.) II. vi. 4.14; ŚatBr. VII. iii. 2.9; यामं साम भवति।... स्तुतमनुशंसन्त्येता ऋचोऽनुब्रुवन्तः JaimiBr. 1.345; वाचं विसृजेत। अन्यत्रापि यत्रानुब्रुवन्ननुब्रजेत् ĀśvaŚS. I. ii. 17.11; देवयजनम्।... अनुब्रुवन्यत्र होताहवनीयमादित्यमपश्च पश्येत्तद् ब्रह्मवर्चसकामस्य ŚāṅkhāŚS. v. 2.3; VādhūŚS. iv. 90A.3; चितिभ्यः प्रणीयमानाभ्य इत्युक्तः ... उपांश्वनुब्रुवन् पश्चादनुसमेति ŚāṅkhāŚS. ix. 24.9; (कृषिकर्मणि) प्रथमप्रयोगे सीरस्य ब्राह्मणः सीरं स्पृशेत् 'शुनं नः फाला इति' एतामनुब्रुवन् ŚāṅkhāGS. iv. 13.4; **B** uttering, pronouncing उपो अस्मान् ... हयध्वनिमित्यनुब्रुवत्यच्छावाके प्रत्युपह्वमयं ब्राह्मण इच्छते तं होतुरुपह्वयस्वेत्याह VaikhāŚS. 15.33; ऋते वामीदृशं वाक्यं कः समर्थो ह्यनुब्रुवन् HariVaṁ. 15494 [PW.]

**अनुब्रुवाण** (anu-bruvāṇá) *adj.* **AI** repeating others' words, learning सुतंभरो यजमानस्य सत्पतिः ... अनुब्रुवाणो अध्येति न स्वपन् ṚV. v. 44.13 (*but* Sāy. संकीर्तयन्); संवत्सरं चतुर्णामेको नाश्नीयात्। तद् व्रतमिति विज्ञायते चतुर्होतृणामनुब्रुवाणस्य ĀpaŚS. xiv. 13.1 (comm. अधीयमानस्य); **AII** conversing, talking to each other ऋषयो वै ब्रह्मोद्यमाह्वयितवा ऊचुः परस्परा(?र)-मिवानुब्रुवाणाः ĀrṣeU. 1.1; **B** pronouncing, uttering यदाश्रौषम् ...। भारद्वाजं चाशिषोऽनुब्रुवाणं तदा नाशंसे विजयाय संजय MahāBhā. i. 1.121.

**अनुब्रू** (anu-brū-) II. U. [P. ii. 4.53; iii. 4.84; viii. 2.35] **1AI** to speak, to utter, to pronounce, to announce यन्मेऽनूक्तं तद्रमतां शकेयं यदनुब्रुवे ṚV.(Khila.) iv. 8.4; KāṭhGS. iv. 1.18; ṢaḍviBr. ii. 4.1; होतान्वाह अथा प्रज्ञातवन्धुरावार्षामुष्यायणमनुब्रवीतार्षेयप्रवरमु हैव प्रवृणीत BaudhŚS. iii. 213.9; अग्ने हविर्निर्वप्स्यामीत्यनुब्रूयात् HirŚS. i. 5.5 (119.7); **1AII** to narrate, to tell, to hold a dialogue with वाक् च मनश्चावदेताम् ...तौ प्रजापतिं प्रश्नमैताम् ... स मनसेऽन्वब्रवीत् MaiS. iv. 6.4 (iv. 84.5); सा (दक्षिणा) गर्भमधत्त ... तं विष्णुरवायत ... तं विष्णवेऽन्वब्रुवन् KāṭhS. 13.3 (i. 182.6); श्रुतिविरोधे त्रैविद्यसमवायेषु निर्णयः। यथाबलेयं शास्त्रतस्तेऽनुब्रूयुः ŚāṅkhaLiDS. 9; कृपः शल्यः सौमदत्तिर्विकर्णः ...। एतान् हत्वा कीदृशं तत्सुखं स्यात्तद्विन्द्धेथास्तदनुब्रूहि पार्थ MahāBhā. v. 27.25; xiv. 26.2; xiv. 61*; वक्ष्ये पौराणिकीं दिव्यां कथाम् ... धार्मिकाय द्विजातये। इमां कथामनुब्रूयात् KūrmaP. 2.15 (1.1); **1AIII** to speak favourably or respectfully of निषादरथकाराश्च यत्पिमनुब्रवते तेन तेषां वृणीत SaṅkarKā. iii. 4.10 (AOR Ed.); पुत्रः कामं मातुरेवानुब्रूयात् ...। अनुब्रूयात् अनुकूलं वदेत् VīraMi.(Saṁskāra.) 479.13; **1BI** to recite for address-

ing or invoking (a deity or sacrificial material) (mostly used with Dat.) ऐन्द्रस्यावघन् ब्रूयादिन्द्रायानुब्रूहीत्याश्राव्य ब्रूयात् TaiS. II. ii. 11.2; अग्नये मथ्यमानायानु ब्रूहि TaiS. VI. iii. 5.3; AitBr. 3.5(66); ĀpaŚS. vii. 13.1; अग्नये समिध्यमानायानु ब्रूहि TaiS. VI. iii. 7.1; MaiS. i. 4.11 (i. 59.9); TaiBr. III. iii. 7.1; ŚatBr. I. iii. 5.2; II. v. 2.19; ĀpaŚS. ii. 12.1; MānŚS. 19.12; HirŚS. ii. 1.1 (179.9); Nir. 1.15 (38.14); इन्द्राय राथन्तरायानुब्रूहि MaiS. ii. 3.7 (ii. 34.21); KāṭhS. 12.5 (i. 167.5); (घर्माय) सꣳसाद्यमानायानुब्रूहि MaiS. iv. 9.9 (iv. 130.4); वायव इन्द्रवायुभ्यामनुब्रूहि KapiKaS. 42.3 (249.22); सोमाय क्रीताय प्रोह्यमाणायानुब्रू३हीत्याहाध्वर्युः AitBr. 3.2 (53); 4.5 (96); अग्नये प्रणीयमानायानुब्रूहीत्याहाध्वर्युः … गायत्रीं ब्राह्मणस्यानुब्रूयात् (यजमानस्य) AitBr. 5.2(115); हविर्धानाभ्यां प्रोह्यमाणाभ्यामनुब्रूहीत्याहाध्वर्युः AitBr. 5.3 (124); 6.2 (142); BaudhŚS. ii. 53.15; MānŚS. 66.15; अध्वर्युरेवाह वरुणायानुब्रूहि ŚatBr. II. v. 2.37; यूपायाज्यमानायानुब्रूहि ŚatBr. III. vii. 1.10; अग्नीषोमाभ्यां छागस्य वपायै मेदसोऽनुब्रूहि ŚatBr. III. viii. 2.26; ŚatBr.(K.) I. ii. 3.18; देवेभ्यः प्रातर्यावभ्योऽनुब्रूहि ŚatBr. III. ix. 3.8; ĀpaŚS. xii. 3.15; KātyŚS. ix. 1.10; आदित्येभ्योऽनुब्रूहि ŚatBr. IV. iii. 5.20; पशुपुरोडाशस्याहानुब्रूहि ŚatBr. IX. iv. 3.15; उन्नीयमानेभ्योऽन्वाह ĀśvaŚS. I. v. 5.14; अनुवाचनप्रैषो यथादेवतममुष्मा अनुब्रूहि KātyŚS. i. 9.13; xix. 3.4; MānŚS. 19.12; सूक्तवाके होता यां यां देवतामनुब्रूते … तां देवतां यजमानोऽनुमन्त्रयते VaikhāŚS. 7.6; 8.12; आज्यलेपादि पुरोडाशेन प्रचर्य। आशाया अनुब्रूहि। आशां यज KāṭhŚS-Saṃkalana 4.8; ब्रूहि … आवह इत्येतेषामादेः प्लुतो भवति यज्ञकर्मणि। अग्नयेऽनुब्रू३हि KāśiVṛ. *on* viii. 2.91; अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा SiddhāKau. 154A.7 (*on* ii. 3.61); कस्मा अनुब्रूहीति कल्पसूत्तोक्तमार्षम् LaŚabdeŚe. ii. 240.10; **1Bii** to recite or sing (in ritual), to repeat त्रीꣳस्तृचाननुब्रूयात् TaiS. II. v. 10.1; पुरा वाचः प्रवदितोः प्रातरनुवाकमन्वाह MaiS. iv. 5.3 (iv. 66.13); अगस्त्यस्यैतत् सूक्तं कयाशुभीयं तस्य सामिधेनीष्वनुब्रूयात् KāṭhS. 10.11 (i. 139.12); 11.10 (i. 158.9); 23.5 (ii. 79.19); KapiKaS. 36.2 (188.23); अग्निं चापश्च पश्यन्प्रातरनुवाकमनुब्रूयात् KāṭhS. 25.3 (ii. 105.16) = KapiKaS. 38.6 (211.4); सप्तदश सामिधेनीरनुब्रूयात् AitBr. 1.1 (16); अथ योऽनु चाह यजति च AitBr. 1.2 (16); 2.3 (42); 3.2 (54); 5.2 (123); प्रजापतौ वै स्वयं होतरि प्रातरनुवाकमनुवक्ष्यति … स वै देवेभ्य एवान्वब्रवीत् AitBr. 7.5 (201); तृचं पूर्वाह्णेऽनुब्रूयात् KauṣīBr. 8.8 (39.13); 28.3 (135.11); य एतं वेदमनुब्रूते यदा वा एतं वेदमनुब्रूतेऽथैनꣳशृण्वन्ति ṢaḍviBr i. 3.16; सप्तदश सामिधेनीः। इष्ट्याऽ अनुब्रूयादुपाꣳशु ŚatBr. I. iii. 5.10; ŚatBr.(K.) II. v. 4.11; ŚatBr. I. v. 1.18; सोऽनुब्रूहीत्येवोक्त्वाध्वर्युः। नापव्याहरेत् ŚatBr. I. v. 2.8; ŚatBr.(K.) II. iv. 4.4; VII. iii. 2.8; XI. ii. 6.3; ŚatBr.(K.) II. vi. 4.15; यत् परिमिता अनुब्रूयात्। परिमितमवरुन्धीत TaiĀ. v. 4.3 (604.6); प्रेषितो जपति। … समाप्य सामिधेनीरन्वाह ĀśvaŚS. I. i. 1.2; अग्निमन्थनीया अन्वाह ĀśvaŚS. I. ii. 16.1; I. iii. 2.9; I. iv. 4.2; अनभिहिंकृत्यापोनप्त्रीया अन्वाह ĀśvaŚS. I. v. 1.1; II. ii. 14.15; संप्रेषितोऽन्वाह ŚāṅkhaŚS. i. 2.27; iii. 15.12; v. 15.4; BaudhŚS. i. 99.5; पृथक् प्रतिप्रस्थातारोऽवद्यन्ति तेषां मैत्रावरुणा एवानुब्रूयुः BaudhŚS. iii. 288.3; इदं वा अन्वाहुः VādhūŚS. iv. 1.1 = iv. 90A.1; पञ्चदश सामिधेनीरन्वाह ĀpaŚS. ii. 12.2; vii. 13.4; असंप्रेषितो ग्रावस्तोत्रीय अन्वाह ĀpaŚS. xiii. 1.6; एकैकामेव संतन्वन्ननवानमनुब्रूयादित्येके ĀpaŚS. xxiv. 11.8; पत्नी यजमानश्च याज्यामनुब्रूतः VaikhāŚS. 8.12; न सावित्रीमन्वाह ŚāṅkhāGS. ii. 11.3 = KauṣīGS. ii. 7.3; (कृषिकर्मणि) प्रथमयोगे सीरस्य … 'क्षेत्रस्य पतिना' इति सूक्तमनुब्रूयात् KauṣīGS. iii. 13.11; सायं प्रातः संध्यामुपासीत। … सावित्रीमन्वाह KāṭhGS. i. 1.28; i. 9.4; फलीकरणतुषबुसावतक्षणान्यावपति। अन्वाह KauśiSū. 14.16; छन्दाꣳसि गायत्र्यादीन्येतान्यविदित्वा योऽधीतेऽनुब्रूते जपति … तस्य ब्रह्म निर्वीर्यं यातयामं भवति VājaS. (Pariśiṣṭa) 7A.13; सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात् सामिधेनीनाम् MīmāSū. iii. 7.15; ŚābaBh. 1084.10 (*on* iii. 7.15); SaṅkarKā. i. 4.36 (AOR Ed.); SaṅkarKāBh. 49.22 (*on* i. 4.36); SaṅkarKā. iv. 1.1 (AOR Ed.); याज्यामन्वाह, पुरोऽनुवाक्यामन्वाह ŚābaBh 416.6 (*on* ii. 1.13); अभ्यासे देश्यमाने – 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति पुनरुक्तदोषो भवति NyāyBh. 118.11 (*on* ii. 1.58); यत्र सुन्वन्ति तत्र हविर्धाने स्थित्वा सामिधेनीरनुब्रूयात् Nyāyāmṛ. 596A.7; AdvaiSi. 833.14; हिंकृत्य सामिधेनीरन्वाह BhaṭṭCan. 99.15 (*on* xvi. 1.1); **1Biii** to recite (for expiation or atonement) यदि (वाचम्) विसृजेत् वैष्णवीमृचमनुब्रूयात् TaiS. VI. i. 4.4; अक्रन्ददग्निः स्तनयन्निव द्यौरित्यनुब्रूयाद्यद्यक्ष उत्क्ष्वेदेत् MaiS. iii. 2.2 (iii. 17.6); यद्यतीयाद्यज्ञपरुष्यतीयादैन्द्रीमनुब्रूयात् MaiS. iii. 8.10 (iii. 111.4); **2A** to recite for imparting learning, to teach, to instruct सद्यो ह वाव ब्राह्मणायानुब्रूयादाद्धेयो वै ब्राह्मणः सद्यो वाऽअग्निर्जायते ŚatBr. XI. v. 4.12; दध्युङ् ह वाऽआथर्वणः। … स हेन्द्रेणोक्त आस। एतं चेदन्यस्माऽअनुब्रूयास्तत एव ते शिरश्छिन्द्यामिति ŚatBr. XIV. i. 1.19; BṛĀraUBh. 339.9 (*on* ii. 5.16); संवत्सरवासिनेऽनुब्रूयात् ŚatBr. XIV. i. 1.27; ChāgU. 4.6; तपस्व्यनुब्रवै ŚatBr. XIV. i. 1.29; तद् यद् दध्यङ् आथर्वणोऽन्वपश्यत्तं तद्गच्छतम्। स वां तदनुवक्ष्यति। … स वै नावनेनाश्वस्य शीर्ष्णानुब्रूहीति। … ताभ्यां ह श्रद्धाय तेनाश्वस्य शीर्ष्णानूवाच JaimiBr. 3.126; स यामेवासूꣳसावित्रीमन्वाहैषैव सा। स यस्मा अन्वाह तस्य प्राणाꣳस्त्रायते BṛĀraU. v. 14.4 (Śaṅ. आचार्यः यस्मै माणवकाय अन्वाह अनुवक्ति); बालिशा ऊचुः अवात्त वा संवत्सरमिमे ब्राह्मणाः। हन्तैषामनुब्रवामेति ChāgU. 5.1; वि वा एतस्मै ब्राह्मणायोच्छति यो वेदमनुब्रूते ŚāṅkhāŚS. xv. 16.6; यो वोऽनुब्रुवातै य(ः) श्राम्यात् … देवानामेव स एकोऽसदिति VādhūŚS. iv. 26A.18; पत्यौ प्रेते … अध्वर्युः पत्नीमनुब्रूयात् MānŚS. 182.4; संवत्सरे सावित्रीमन्वाह ŚāṅkhāGS. ii. 7.1; ii. 5.11; 'सावित्रीं भो अनुब्रूहीति' इतरः। 'सावित्रीं तेऽअनुब्रवीमीति' आचार्य ŚāṅkhāGS. ii. 7.8 9; KauṣīGS. ii. 4.16–17; ĀśvaGS. i. 21.4; ĀpaGS. iv. 11.8; व्याहृतीः सावित्रीं चानुब्रूयात् VārāGS. 5.25; HirGS. i. 6.10; PāraGS. ii. 3.3; GobhiGS. ii. 10.38; **2B** to expound, to explain उत्तरं प्रश्नमनुब्रूहि MaiU. 4.5; निदाघो नाम योगीन्द्र ऋभुम् …। प्रणम्य …। आत्मतत्त्वमनुब्रूहीत्येवं पप्रच्छ AnnaU. 1.2; कुमारः शिवं पप्रच्छाखण्डैकरसचिन्मात्रस्वरूपमनुब्रूहि TejoBiU. 2.1; पैङ्गलो याज्ञवल्क्यमुपसमेत्य … परमरहस्यकैवल्यमनुब्रूहीति पप्रच्छ PaiṅgU. 420.12 (1.1); 423.17 (3.1); भुसुण्डः कालाग्निरुद्रं विभूतियोगमनुब्रूहीति स होवाच PṛJābāU. 3(1); भो भगवन्नादित्यात्मतत्त्वमनुब्रूहि MaṇḍBrU. 1.1 (347.21); 4.1 (351.26); श्रीरामचन्द्रं मारुतिः पप्रच्छ … पृथक् शान्तिमनुब्रूहि MuktiU. 1(2).1; भगवान्मैत्रेयः कैलासं जगाम तं गत्वोवाच भो भगवन् परमतत्त्वरहस्यमनुब्रूहि MaitreU. 2(1); जनको ह वैदेहो याज्ञवल्क्यमुपसमेत्योवाच भगवन् संन्यासमनुब्रूहि YājñaU. 601.9 (1); मतङ्गऋषिं गुरुं कूचिमारः प्रोवाच। … गुरो राजश्यामलारहस्योपनिषदं मेऽनुब्रूहि RājŚyāU. 423.6; सनकाद्या मुनयो हनूमन्तं पप्रच्छुः। … पूर्वोक्तमन्त्राणां पूजापीठमनुब्रूहि RāmRaU. 3.1; ऋभुं भगवन्तं निदाघः पप्रच्छ जीवन्मुक्तिलक्षणमनुब्रूहि VarāU. 4.1; 5.1; एनं देवा ऊचुर्भवचक्रविवेकमनुब्रूहि SaubhāLaU. 655.6; **3** to repeat after the teacher, i.e. to learn or study स यदेव यजेत। तेन देवेभ्य ऋणं जायते तद्धेभ्य एतत्करोति यदेनान्यजते यदेभ्यो जुहोति। अथ यदेवानुब्रुवीत। तेनऽर्षिभ्य ऋणं जायते ŚatBr. I. vii. 2.3; अथोऽअयं वाऽआत्मा। सर्वेषां भूतानां लोकः … अथ यदनुब्रूते तेनऽर्षीणाम् ŚatBr. XIV. iv. 2.29; BṛĀraU. i. 4.16; स य इच्छेत्। पुत्रो मे गौरो जायेत वेदमनुब्रुवीत … इति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम् ŚatBr. XIV. ix. 4.13; BṛĀraU. vi. 4.14; स होवाचाषाढ आमारुणे यत्सहैव ब्रह्मचर्यमचराव सहान्वाब्रवीवहि JaimiBr. 1.271; यस्मादेवानुब्रुवीत, तं ब्रूयाद् — अमुष्मादन्ववोच इति JaimiBr. 3.77; यौ द्वौ कुलस्यानुब्रुवीयातां, तयोः पुत्र आर्त्विज्यं कुर्यात् VādhūŚS. iv. 90A.12; ये त्रयः कुलस्यानुब्रुवीरंस्तेषां नप्तार्त्विज्यं कुर्यात् VādhūŚS. iv. 90A.15; यदनुब्रुवते स्वाध्यायमधीते अहरहः BṛĀraUBh. 156.7 (*on* i. 4.16); यच्चाप्यहरहर्वेदमनुब्रूते प्रयत्नवान्। … गृहस्थो भोज्य उच्यते BṛĀraUBhVā. i. 4.1798; गुरुं देवतां वा प्रणम्य तत्पदारविन्दार्पितदृष्टिस्तिष्ठेत तदनुष्ठानस्तदनुब्रूयात् PārāSū. 36.3.

**अनुभ** (an–ubha) *adj.* other than both, non-both एवमेतन्न चाप्येवमुभे चापि न चाप्युभे (v. l. न चोभे नानुभे) MahāBhā. xii. 230.6.

**अनुभक्तिवैराग्ययुक्त** (anubhaktivairāgya–yukta) *adj.* consisting of devotion and renunciation ज्ञानम् … अनुभक्तिवैराग्ययुक्तम् …। जानाम्यहम् AdhyāRā. i. 1.9.

**अनुभक्षम्** (anubhakṣam) *adv.* after partaking (of the Soma-drink) वषट्कर्तुरनुभक्षꣳ सर्वत्र भक्षयेयुः (स्वं चमसम्) LāṭyāŚS. ii. 5.3 = DrāhyŚS. v. 1.3.

**अनुभग्नताल** (anubhagnatāla) *m.* a kind of musical beat with pause वर्णोऽथ मत्तपाली वा भग्नतालावनन्तरम्। गाथानुभग्नतालाश्च मात्रा वा प्रथमे भवेत् BhāvPra.(Śa.) 260.14(9); 259.4(9)

**अनुभज्** (anu–bhaj–) I.U. **1** to have a share with (someone), to distribute तौ वायुरब्रवीत्। अनु मा भजतमिति TaiBr. II. i. 6.4; नेत्यब्रवीदनु नु मा भजतमिति JaimiBr. 1.210; **2A** to worship, to attend upon एको वशी सर्वगः कृष्णः … तं पीठस्थं येऽनुभजन्ति धीरास्तेषां सुखम् GopālaPūTāU. 1.5; त्वाम् …। स्फुटकुटजकदम्बस्तोमपुष्पाञ्जलिं च प्रविदधदनुभेजे देव गोवर्धनोऽसौ Nārāy. x. 58.9; **2B** to cherish, to honour reciprocally भजतोऽनुभजाम्यहम् AdhyāRā. ii. 9.66; iv. 2.37; **3** to attain, to acquire न चाप्राप्ता एव सूर्यगतयो विशेषणतामनुभजन्ति Upask. 110.6 (*on* ii. 2.6); अदृष्टम् … कचित्तौ (रागद्वेषौ) प्रति असाधारणतामप्यनुभजति Upask. 276.12 (*on* vi. 2.12)

**अनुभजत्** (anu–bhajat) *adj.* [*f.* -ntī] **A** worshipping, attending upon अनुभजतः … भगवान् परिपाति … अस्मान् BhāgP. iv. 9.17; (राजर्षिः).

गोविन्दचरणाम्बुजम् ।… अनुभजन् भक्त्या तत्साम्यतामगात् BhāgP. iv. 29.82; कृष्ण( ? ष्णं ) कीर्तयतस्तथानुभजतः साश्रून् सरोमोद्गमान् … कदा वीक्ष्या( ? क्षा )महे वैष्णवान् CaitaCan. 33.10(2); **B** serving as, imitating अधरमनुभजन्ती लम्बते बिम्बमाला UjjvaNīMa. 599.1.

**अनुभञ्ज्** (**anu-bhañj-**) VII. P. to break or shatter afterwards (श्रीजयसिंहदेवनामा महीपतिरभूत्) सः … यशःपटहकुञ्जरेण लौहीमर्गलामन्वभञ्जत् PrabaK. 90.29.

**अनुभय** (**an-ubhaya**) *adj.* **i** not belonging to (either of) the two हविराकृतिकमुभयमनुभयं वार्तं निमित्तं गम्यते ŚābaBh. 1445.1 (*on* vi. 4.23); तच्च कार्यादप्यन्यत् कारणमनुभयं वा HetuBiṬ. 56 2; ईप्सितम् … अनीप्सितम् … (कर्म) । अनुभयम् – ग्रामं गच्छन् वृक्षमूलान्युपसर्पति JaineVyā. 39.22 (*on* i. 2.120); घटादिकार्यं मृत्पिण्डादिना कारणेन क्रियमाणमपि क्रियते सद्वासद्वा सदसद्वानुभयं वा NyāyMañ. ii. 63.16; अनुभयं (फलम्) कस्मान्न भवति TātpaṬ.(Vā.) 621.15 (*on* iv. 1.48); विपरीतसाधकानुमानं त्रिविधं भवति उपजीव्यमुपजीवकमनुभयं च TarkBhā.(Ke.) 92.3; नित्यमपि दुःखरूपं दुःखनिमित्तं वा … अनुभयं चेत्, उपेक्ष्येत ŚrutaPra. iA. 71.21 (*on* i. 1.1); कश्चिदर्थः प्रकृतिरेव कश्चिद्विकृतिप्रकृतिश्च कश्चिद्विकृतिरेव कश्चिदनुभयः SarvaDaSaṁ. 14.4; **ii** not characterized by both स एव विशेषोऽन्यत्र नास्तीत्यनुभयं परम् । सर्वात्मत्वे च सर्वेषां भिन्नौ स्यातां न धीध्वनी PramāVār. 1.185 (comm. सामान्यविशेषरहितम्); (द्विपथप्रबन्धः) तालहीनः सतालो वा स च ज्ञेयश्चतुर्विधः । स्वरैरेकोऽन्यः प्रयोगैः सोभयानुभयौ परौ SaṁgīRa. ii. 294.4 (4.233); *n.* other than both or non-both (characteristics) क्वचिद्विधिनिषेधयोरनुभयम् Kāvyānu. (He.) 39.8; सा वासना सा क्षणसंततिश्च नाभेदभेदानुभयैर्घटेते SyādvāMañ. 19; स्यादस्ति, स्याच्च नास्ति, द्वितयम्, अनुभयम्, स्यात् त्रिभिश्चान्तिमं त्रिः, सैषोक्ता सप्तभङ्गी TattvMu. 5.12.

**अनुभयकारिन्** (**an-ubhayakārin**) *adj.* not causing (either of) the two (viz. harm or benefit) तृणबहुवृक्षगुल्मचयवीरुध एव नृणामनुभयकारिणो भुवि भवेयुरभक्ष्यगणाः KalyāKā. 19.25.

**अनुभयजननस्वभाव** (**anubhayajanana-svabhāva**) *adj.* of the nature of generating neither of the two कारणं हि … उभयस्वभावं वा अनुभयजननस्वभावं वा (स्यात्) NyāySu.(Ja.) 391B.10 (*on* ii. 2.7)

**अनुभयतत्त्वक** (**anubhayatattva-ka**) *adj.* having neither of the two realities ब्रह्मणो जगत् … न सन्नासन्न सदसत् न चानुभयतत्त्वकम् AdvaiSi. 434.15.

**अनुभयताद्रूप्यरूपक** (**anubhayatādrūpyarūpaka**) *n.* kind of *rūpaka* (metaphor) based on identity (of two different objects) by showing neither of the two distinct qualities वक्त्रेन्दोः … प्रसिद्धचन्द्रकार्यकारित्वमात्रप्रतिपादनेनोत्कर्षापकर्षयोरप्रदर्शनानुभयताद्रूप्यरूपकम् Kuval. 20 (41); इदं सममनुभयाभेदरूपकमनुभयताद्रूप्यरूपकम् AlaṅkāMañ. 17.15.

**अनुभयत्र** (**anubhaya-tra**) *adv.* with reference to the object possessing neither of the two (opposite natures) अनुभयत्रोभयकोटिस्पर्शी प्रत्ययः संशयः PramāMī. i. 1.5.

**अनुभयनिष्ठता** (**anubhayaniṣṭha-tā**) *f.* the state of not existing in both (i.e. being present or existing in only one) रतेरनुभयनिष्ठतेत्याभासताहेतुर्वाच्यः RasGaṅ. 120.12 (comm. नायके सत्त्वेऽपि नायिकायामभावात्)

**अनुभयनिष्ठत्व** (**anubhayaniṣṭha-tva**) *n.* the state of not existing in both (i.e. being present or existing in only one) रतेः…अनुभयनिष्ठत्वे यथा — मालतीमाधवे नन्दनस्य मालत्याम् SāhiDa. 201.4; रतेः … अनुभयनिष्ठत्वेनाभासत्वम् RasGaṅ. 122.4.

**अनुभयनिष्ठा** (**an-ubhayaniṣṭhā**) *adj.* (*f.*) not present or existing in both (i.e. present or existing in only one) बहुनायकविषयायां रतौ तथानुभयनिष्ठायाम् … अनौचित्यम् … ज्ञेयम् SāhiDa. 199.15; बहुनायकविषयाया अनुभयनिष्ठायाश्च रतेरसंग्रहात् RasGaṅ. 119.19.

**अनुभयन्यूनाधिकभाव** (**anubhayanyūnādhika-bhāva**) *m.* the categories (of *tādrūpya rūpaka*) such as *anubhaya-*(not the both), *nyūna-*(less) and *adhika-*(more) (based on identity by the indication of equal, less or more attributes) एवमुत्तरेषु ताद्रूप्यरूपकोदाहरणेष्वपि क्रमेणानुभयन्यूनाधिकभावा उन्नेयाः Kuval. 20(14)

**अनुभयपक्ष** (**anubhaya-pakṣa**) *m.* (alternative) view of being non-both सा हि भिन्ना वासना क्षणिका स्यादक्षणिका वा ।… अनुभयपक्षेणापि न घटेते SyādvāMañ. 19(22)

**अनुभयपर्यवसायिता** (**anubhayaparyavasāyi-tā**) *f.* the state of not culminating into either of the two (viz. *upamāna* or *upameya*) राजंश्चन्द्रसमानं ते छत्रं दण्डो विशिष्यते । दण्डमात्रेण वैलक्षण्यं, न तु किंचिन्माहात्म्यादौ न्यूनत्वमाधिक्यं वा, इत्यनुभयपर्यवसायिता AlaṅkāMañ. 75.13.

**अनुभयपर्यवसायिन्** (**an-ubhayaparyavasāyin**) *adj.* **i** not culminating into either of the two, i.e. superior or inferior *upamāna* अनुभयपर्यवसायी यथा Kuval. 57 (10); कुवलयानन्दकृता अनुभयपर्यवसायिनो व्यतिरेकस्योदाहरणमुक्तम् RasGaṅ. 477.16; 478.4; उपमानेऽथवोपमेये । विशेषो वैलक्षण्यम् । स च कुत्रचिदाधिक्यपर्यवसायी, कुत्रचिन्न्यूनत्वपर्यवसायी, कुत्रचिदनुभयपर्यवसायी AlaṅkāMañ. 74.5; **ii** not culminating into either of the two (viz. *upamāna* or *upameya*) अनुभवपर्यवसायी, यथा — वर्तुलं विमलं चोर्ध्ववर्तमानमथोज्ज्वलम् । राजंश्चन्द्रसमानं ते छत्रं दण्डो विशिष्यते AlaṅkāMañ. 75.9.

**अनुभयप्राप्ति** (**an-ubhayaprāpti**) *f.* **A** absence of the obtainment of the both (through injunction) अर्थात्संबन्ध उभयप्राप्तावनुभयप्राप्तौ वा केवलसंबन्धविधानम् TantrVā. 497.15 (*on* ii. 2.16); **B** (anubhaya-prāpti) application of neither of the two (rules), cf. **अनुभयप्राप्तिविषय.**

**अनुभयप्राप्तिविषय** (**anubhayaprāpti-viṣaya**) *adj.* regarding or having reference to the application of neither of the two (rules) कृत्यानाम् 'कर्तृकर्मणोः' इति नित्ये प्राप्ते विभाषा ।… 'कर्तरि वा' इति त्वनुभयप्राप्तिविषयमिति वृत्तिकैयटादयः LaŚabdeŚe. i. 516.8.

**अनुभयभाक्त्व** (**anubhayabhāk-tva**) *n.* the state of being one who shares neither of the two (viz. *samyaktva* or *mithyātva*) उभयस्मिन्न प्रत्ययं लभन्ते अनुभयभाक्त्वेऽपि Sphuṭā. iii. 84.7 (*on* 3.44)

**अनुभयमत** (**anubhaya-mata**) *n.* view regarding neither of the two अनुभयमते तु — तथैवोपक्रम्य हेतुरयं हेतुश्च हिनोतेर्धातोस्तु प्रत्यये सति सिद्धमित्यादिः SarvaDaKau. 86.1.

**अनुभयरूप** (**anubhaya-rūpa**) *adj.* [*f.* -ā] **i** of the form of neither of the two क्वचिद्वाच्ये विधिरूपेऽनुभयरूपः (अर्थः) Dhvanyā. 73.1 (*on* 1.4); 74.1 (*on* 1.4); मदीयं वा गृहमागच्छ, त्वदीयं वा गच्छाव इत्युभयत्रापि तात्पर्यादनुभयरूपो वल्लभाभिप्रायश्चाद्वात्मा व्यङ्ग्य इत्येव व्यवतिष्ठते Loc. 22.18 (*on* 1.4); क्रिया त्रिधा विधिनिषेधानुभयरूपा AbhinBhā. ii. 66.15 (*on* 9.171); ii. 66.16 (*on* 9.171); अन्योक्तिश्च क्वचित्स्तुतिरूपा … क्वचिन्निन्दारूपा,… क्वचिदनुभयरूपा Kāvyānu.(He.) 315.4; **ii** (**an-ubhayarūpa**) not consisting of both the *guṇas* (viz. *sattva* and *tamas*) यत्त्वनुभयरूपं तन्नीलप्रतीत्या तावदकल्पितया न विषयीकृतं चेत् तत् कल्पितामनीलधियमनुधावेत् PratyabhiVi. ii. 291.5 (*on* iv. 1.6); Bhāsk. ii. 291.11 (*on* iv. 1.6)

**अनुभयरूपक** (**anubhayarūpaka**) *n.* name of one of the types of *rūpaka* (metaphor consisting of superiority, inferiority or equality of the *upamāna* with the *upameya*) (रूपकम्) त्रिधा त्रिप्रकारम् । अधिकाभेदरूपकम् … समाभेदरूपकं, समताद्रूप्यरूपकं च । इदमेव 'अनुभयरूपकम्' इत्युच्यते AlaṅkāMañ. 17.3.

**अनुभयरूपत्व** (**anubhayarūpa-tva**) *n.* the state of not being of the nature of both यस्तु कथंचित्प्रकाशः … कथंचिच्चाप्रकाशः … तदेव दुःखत्वम् … अत्रानुभयरूपत्वं तु नास्ति PratyabhiVi. ii. 291.1 (*on* iv. 1.6); अनुभयरूपत्वेऽवस्तुत्वप्रसङ्गः भेदाभेदलक्षणपक्षद्वयव्यतिरिक्तस्य मार्गान्तरस्यानस्तित्वात् SyādvāMañ. 19(25); ननु द्विविधा शब्दप्रवृत्तिः । योगो रूढिर्वा ।… अनुभयरूपत्वात्कथं सृष्टिवाचकत्वम् AṇuBh. 106.13 (*on* i. 4.10)

**अनुभयवती** (**anubhayavatī**) *f.* name of a type of the figure of speech called *samāsokti* (not consisting of either censure or praise) अनुभयवती … अत्र गर्हा श्लाघा वा विस्मयोक्तावेवास्तमयते । सेयम् … अनुभयवती नाम समासोक्तिः SaraKaṇṭhā. 460.7.

**अनुभयविषय** (**anubhaya-viṣaya**) *m.* name of a kind of figure of speech called *sambhava* (not having either prescription or negation as the subject-matter) अनुभयविषयो यथा … अत्र यदि त्वमेवं कुर्यास्तदेवं स्यादिति विधिनिषेधयोरनवगतेरयमनुभयविषयः संभवः SaraKaṇṭhā. 344.6.

**अनुभयविषयस्पर्श** (**anubhayaviṣaya-sparśa**) *m.* contact with the object which is neither of the two (viz. desirable or undesirable) वेदनास्कन्धो या प्रियाप्रियानुभयविषयस्पर्शे सुखदुःखतद्रहितविशेषावस्था चित्तस्य जायते Bhām. 414.15 (*on* ii. 2.18)

**अनुभयसाधक** (**an-ubhayasādhaka**) *adj.* not proving either of the two (viz. difference or non-difference) सहोपलम्भो द्वित्वसाधकः; तन्नियमस्तु भिन्नयोरेकस्मिन्नपि नास्तीत्यसाधारणानैकान्तिकत्वादनुभयसाधकः ŚrutaPra. iA. 122.9 (*on* i. 1.1)

**अनुभयसामन्** (**an-ubhayasāman**) *adj.* devoid of both the *sāmans* य एक इद्धव्यश्चर्षणीनामिति त्रैष्टुभम् … यदि बृहत्स्वयोनौ वा स्वयोनौ वा कुर्युः अनुभयसामानं चेत् कुर्युः समानमोक्थमुखीयायाः KauṣīBr. 25.6 (114.12)

**अनुभयस्वभाव** (**an-ubhayasvabhāva**) *adj.* not possessing both

the natures अपि चाणवः प्रवृत्तिस्वभावा वा, निवृत्तिस्वभावा वा, उभयस्वभावा वा, अनुभयस्वभावा वा अभ्युपगम्यन्ते BrahmSūBh.(Śaṅ.) 372.6 (*on* ii. 2.14); BrahmSūBh.(Bhā.) 115.19 (*on* ii. 2.14); तत् किं सामान्यतोऽनुभयस्वभाव एव विनाशः ĀtmaTaVi. 245.8; अनुभयस्वभावे वस्तुनि … ज्ञानम् … शेते … स संशयः PramāMī. 5.8 (*on* i. 1.5)

**अनुभयस्वभावत्व** ( anubhayasvabhāva-tva ) *n.* the state of not having both the natures ( अणूनाम् ) अनुभयस्वभावत्वे तु निमित्तवशात्प्रवृत्तिनिवृत्त्योरभ्युपगम्यमानयोरदृष्टादेर्निमित्तस्य नित्यसंनिधानान्नित्यप्रवृत्तिप्रसङ्गः BrahmSūBh.(Śaṅ.) 372.10 (*on* ii. 2.14); अनुभयस्वभावत्वे पटस्याप्यनुत्पत्तिः NyāySu.(Ja.) 393A.4 (*on* ii. 2.7)

**अनुभयाकारत्व** ( anubhayākāra-tva ) *n.* the state of not having both the forms (viz. distinct and non distinct) भेदस्वरूपमपह्नुवानैरभेदस्वरूपमप्यपह्नुतं स्यात्। न चास्त्विति वाच्यम्, माध्यमिकमतापातात्। न चानुभयाकारत्वसिद्धिः, उभयाकारत्ववद् व्याघातात् ŚatDū. 91.17.

**अनुभयात्मक** ( anubhayātma-ka ) *adj.* not of the nature of both पुद्गलादिपरीक्षासु द्वैराश्यप्रतिषेधनात्। द्विरूपोऽतिशयो नास्ति न वाप्यनुभयात्मकः TattvSaṁ. 408; असच्चेन्नासद् भवेदसच्च न सत् … अनुभयात्मकं तु नाम वस्तु नास्त्येव NyāyMañ. ii. 63.32; यत्र तावदुभयोरनुभयात्मके पाषाणस्तम्भादौ समारोपस्तत्रोभयोपमर्दक एव बाधकः NyāyVārPari. 571.7; 282.9; सामान्येन कार्यं वा कारणं वानुभयात्मकं वा … दृष्टम् NyāyVārPari. 746.8; सद्वा कार्यमसद्वा संभाव्यते। उभयात्मकमनुभयात्मकम् … इति तु स्ववाचैव विरुध्यते PratyabhiVi. ii. 154.11 (*on* ii. 4.3); अनुभयात्मकं निःस्वभावं शून्यं प्रतीयते ŚrutaPra. ii. 226.29 (*on* ii. 1.12); ( प्रमाणाप्रमाणयोः ) उभयोश्चेदुभौ हेतू ज्ञानं नानुभयात्मकम् NyāyKu. 22.6; अद्वैतज्ञानमिति। किम् … ज्ञानाद् भिन्नम्, उताभिन्नम्, उतानुभयात्मकम् ŚatDū. 179.17; अनुभयात्मकः पुरुषः। तदुक्तं न प्रकृतिर्न विकृतिः पुरुषः SarvaDaSaṁ. 14.45; आप्तानाप्तप्रणीतत्वे इति चेत्। तर्ह्युभयाभावाद्वेदवाक्ये नोभयात्मकमनुभयात्मकं वा ज्ञानमुत्पद्येत NyāySu.(Ja.) 321A.7 (*on* ii. 2.1); सर्वं जगन्न सत्, बाधितत्वात्। नासत्, प्रतीयमानत्वात् … नानुभयात्मकम्, असंभवात् BrahmSūBh.(Śrī.) ii. 99.5 (*on* ii. 2.30)

**अनुभयात्मकतारूप** ( anubhayātmakatā-rūpa ) *adj.* which is of the nature of the state of not having the character of both वेदान्तिभिरुभयात्मकत्वेऽपि अनुभयात्मकतारूपमनिर्वाच्यत्वमत्र संभाव्यते Bhāsk. ii. 154.27 (*on* ii. 4.3)

**अनुभयात्मकत्व** ( anubhayātmaka-tva ) *n.* the state of not having the nature of both अन्यतरकोटिसमर्पकतया हि सच्छब्दस्यानुभयात्मकत्वानुपस्थापकत्वम् ŚrutaPra. ii. 227.12 (*on* ii. 1.12); उभयात्मकत्वानुभयात्मकत्वयोः स्फुटं विरोधात् Bhāsk. ii. 155.10 (*on* ii. 4.3)

**अनुभयात्मता** (anubhayātma-tā ) *f.* the state of not being of the nature of both (*guṇa* or *doṣa*) अन्येषामपि दोषाणामित्यौचित्यान्मनीषिभिः। अदोषता च गुणता ज्ञेया चानुभयात्मता SāhiDa. 448.3.

**अनुभयात्मत्व** (anubhayātma-tva ) *n.* the state of not being of the nature of both जीवेनात्मनेति ब्रह्मणो जीवतादात्म्यानुसंधानं युक्तमिति, तदप्यसारम् … अनुभयात्मत्वे त्वनुसंधानासिद्धेरेव ŚatDū. 173.23.

**अनुभयात्मन्** (an-ubhayātman ) *adj.* not of the nature of both ( अर्थः ) उभयानुभयात्मा हि नैवासौ युज्यते परः। एकस्यैकत्र विज्ञाने व्याहते हि क्रियाक्रिये TattvSaṁ. 1702; यश्चासौ विषयविषयिभावात्मा दृग्दृश्ययोस्संबन्ध इष्यते, किं ताभ्यामसंबद्धः, उत संबद्धः उतोभयात्मा आहोस्विदनुभयात्मा ŚatDū. 101.28.

**अनुभयादिपक्ष** (an-ubhayādipakṣa) *m.* alternative view (called) other than both etc. संबन्धिन एव स्वसंबन्धात्मकत्वे व्याघातस्य पूर्वोक्तत्वाच्च। उभयानुभयादिपक्षास्तु व्याघातादिनिरस्ता एव ŚatDū. 102.2.

**अनुभयाधिष्ठाना** (an-ubhayādhiṣṭhānā ) *adj.* (*f.*) not having both as the substrata दीपघटयोरुभयाश्रिता शक्तिर्दृष्टा … सा कथमनुभयाधिष्ठाना भवितुमर्हति NyāyMañ. ii. 65.23.

**अनुभयाभेदरूपक** ( anubhayābhedarūpaka ) *n.* name of a variety of *rūpaka* (metaphor based on the identity caused by the absence of both, viz. more or less attributes) 'येन दग्धा' इति विशेषणेन वर्णनीये राज्ञि … शिवस्य … वर्णनीयराजभावावस्थायां न्यूनत्वाधिक्ययोरवर्णनाच्चानुभयाभेदरूपकमाद्यम् Kuval. 20(10); AlaṅkāMañ. 17.15.

**अनुभयाश्रय** ( an-ubhayāśraya ) *m.* variety of figure of speech called *samuccaya* (*lit.* not dependent on its two varieties, viz. *dvipada* and *bahupada*) द्विपदाश्रयः … बहुपदाश्रयः। उभयाश्रयः … स (समुच्चयः) स्यादनुभयाश्रयः SaraKaṇṭhā. 485.4; अनुभयाश्रयस्तु समुच्चयोऽन्वाचयश्च न भवति SaraKaṇṭhā. 489.6.

**अनुभयेद्युस्** (an-ubhayedyus) *adv.* [cf. AltGr. III. 345, 593] not on both (previous or following) days तत्राष्टमी द्वेधा — रोहिणीरहिता तद्युता च। आद्यापि चतुर्धा — पूर्वेद्युरेव निशीथयोगिनी परेद्युरेवोभयेद्युरनुभयेद्युश्चेति NirṇaSi. 98.15; 98.20.

**अनुभयोक्ति** (an-ubhayokti ) *f.* absence of the description of both (superiority and inferiority) रूपकं तावद् द्विविधम्-अभेदरूपकं, ताद्रूप्यरूपकं चेति। द्विविधमपि प्रत्येकं त्रिविधम्। प्रसिद्धविषय्याधिक्यवर्णनेन तन्न्यूनत्ववर्णनेनानुभयोक्त्या Kuval. 20(5); 17; अनुभयोक्तावभेदरूपकातिशयोक्तिः AlaṅkāMañ. 48.13.

**अनुभयोक्तितस्** ( anubhayokti-tas ) *adv.* on account of the non-description of both अभेदरूपकातिशयोक्तिस्ताद्रूप्यरूपकातिशयोक्तिश्च। ते अप्याधिक्यन्यूनत्वानुभयोक्तितस्त्रिविधे AlaṅkāMañ. 48.11.

**अनुभरणीया** ( anu-bharaṇīyā ) *adj.* (*f.*) to be borne or maintained for a long time, i.e. strong ( नित्यं प्रयत्नेन रज्जुग्रहणमिष्यते ) रज्जुग्रहणमित्यच्छेद्यानुभरणीया। तादृशी च सावधानतयावष्टम्भवियोगाद्युभयथा तथा प्रयत्नतो योज्यम् AbhinBhā. i. 55.19 (*on* 2.31)

**अनुभर्तृ** ( anu-bhartṛ́ ) *adj.* [*f.* -trī́] [P. vi. 1.163; vi. 2.139; DEBRU. 97, 687] **1** which echoes or resounds <u>ए</u>षा स्या वो मरुतोऽनु<u>भ</u>र्त्री प्रति॑ ष्टोभति <u>वाघतो</u> न वाणी॑ ṚV. i. 88.6 ( *but* pw., MW., APTE penetrating); ṚPrāti. 2.20; **2** who supports or strengthens ये॑ राष्ट्रभृ॑तो ये राष्ट्र॑स्यानुभर्तार॑स्तेभ्यो राष्ट्री॑यः परि॑देयः KāṭhS. 37.11 (iii. 91.16); 37.11 (iii. 92.1); 37.11 (iii 92.13) [praising conformably, imitating, APTE]

**अनुभव** ( anu-bhava ) *m.* **1A** experience, observation, relishing **Bi** enjoyment **ii** potentiality of Karman, intensity of Kārmic result, one of the four types of *karmabandha* **iii** consequence or result ( of one's deeds ), experience or undergoing (of suffering etc.) **2A** realisation (of *jīvātman* etc. being one with the Supreme) **Bi** direct perception or cognition or understanding **ii** after-cognition, *anuvyavasāya* **C** consciousness **3** custom, habit **4** the word *anubhava* **5** every birth **1A** experience, observation, relishing स्वानन्दानुभवाच्छान्तिरेषैवोपरतेः फलम् AdhyāU. 28; आत्मानुभवमनुब्रूहि TejoBiU. 3.1; 5.3; दमिति … एकाक्षरं व्याख्यातम्।… अयम् …। योगानुभवो भवति DattāU. 1; शास्त्रज्ञानात्पापपुण्यलोकानुभवश्रवणात्प्रपञ्चोपरतः … स एव ज्ञानसंन्यासी NāraPaU. 5.1; आत्मतत्त्वम् …। स होवाच नारायणः।… सुखागतवस्त्वनुभवश्च तद्वस्त्वनुभवेन तुष्टिः MaṇḍBrU. 1.1 (347.23); प्रपञ्चानुभवः सदा न हि स्वरूपबोधानुभवः सदा खलु VarāU. 2.31; ताः कन्याः … तस्मिन् वने … तद्भक्तैः सह राधारसिकलीलयोरनुभवं कुर्वन्ति SāmaraU. 232.21; 227.13; 241.3; तत् … स्वात्मानन्दानुभवामृतकल्लोलरसप्रवाहैरलंकृतम् SiddhāSāU. 387.12 (5); सर्वथा निश्चितार्थोऽयं हनूमति हरीश्वरः। निश्चितार्थतरश्चापि ( v.l. निश्चितानुभवश्चापि ) हनूमान् कार्यसाधने Rāmā. iv. 43.8 ( *but* pw. mind, intellect); वेदनानुभवः AbhidhK. 1.14; चन्द्रगुप्तस्य चेतः पीडामुपचिनोति। इत्थमपि ममानुभवः MudrāRā. 2.21(54); न परोपहितं न च स्वतः प्रमिमीतेऽनुभवादृतेऽल्पधीः ŚiśuVa. 16.40; अनुभवमनुसृत्य स्वं च सात्म्यं भवेद् यद् भवति सहजसात्म्यं देशसात्म्याद् बलीयः RatiRaha. 5.23; विनाशलक्षणोऽपैति न मुक्तावप्युपप्लवः। न चास्त्यनुभवः कश्चिद् भवावस्था वरं ततः MṛgendraT. i. 2.26; लोकेऽनुभवः — शुक्तिका हि रजतवदवभासते, एकश्चन्द्रः सद्वितीयवदिति BrahmSūBh.(Śaṅ.) 2.11 (*on* i. 1.0); कूटस्थात्मस्वरूपत्वेऽप्यानन्दस्याप्यनुभवस्येव भ्रान्त्यैव जन्यत्वादिप्रसिद्ध्युपपत्तेः IṣṭaSi. 28.5; 61.5; अनपेक्षाश्च प्राञ्चः प्रत्ययाः … स्वानुभवाद्भासमानाः न परस्परं स्वगोचरं संभिन्दन्ति TattvBi. 47.5; उदयव्ययधर्माणामनुभवानाम् … नानात्वेऽपि तदाश्रयभिन्नं चित्तम् TattvVai. 38.24 (*on* 1.32); 47.21 (*on* 1.43); भावसंयोजनाव्यङ्ग्यपरिसंवित्तिगोचरः। आस्वादनात्मानुभवो रसः काव्यार्थ उच्यते VyaktiVi. 12.25; 67.4; यस्य श्रीमगधेश्वरो [ नयवशा ]त् … प्राग्भा[ रा ]नुभवैरचुम्बि(म्ब)तमतिर्व्यासाभिधानं व्यधात् EI. ii. 335.14; निश्चित्यानुभवैस्तैस्तैर्भवस्यानभिरामताम्। अस्माभिरपि वैराग्यात्प्रविव्रजिषुमानसैः PāṇḍaC. 18.17; त्वं ममानुभवं शृणु SamarāSaṁ. 4.533; अनुभवस्तु वस्तुतो रसे नास्ति विभावादिगतस्य रसगतत्वेनोपचर्यमाणत्वात् Ekāva. 3.1(62) (93.4); यतः कारणात्तद्गुराचार्योपदेशागमानुभवैरपध्वस्तं चिदात्मनः सकाशान्निराकृतम् JīvanVi. 150.5; अनुष्ठानं तु विनाप्यनुभवं शाब्दज्ञानमात्रादेव सिध्यति VivaPraSaṁ. 270.9; परिणाम इहादिमो न तस्यात्मगतत्वानुभवस्य भङ्गापत्तेः ŚaṅkaDigVi.(Mā.) 15.127; SarvaDaSaṁ. 16.37; करुणादावपि रसे जायते यत्परं सुखम्। सचेतसामनुभवः प्रमाणं तत्र केवलम् SāhiDa. 82.4; RasGaṅ. 67.10; दण्डे सति घट इति सर्वसाक्षिकोऽनुभवः Upask. 49.11 (*on* i. 2.2); 61.6 (*on* i. 2.10); स्थूलोऽहं कृशोऽहं इत्याद्यनुभवाच्च स्थूलशरीरमात्मेति वदति VedāntSā.(Sa.) 18.9; 19.4; जीवस्यांशत्वे हस्तादिवत् तद्दुःखेन परस्यापि दुःखित्वं स्यादिति चेन्न। एवं परो न भवति।… द्विष्टत्वेनानुभव इति यावत् AṇuBh. 155.22 (*on* ii. 3.46); कवीन्द्राः सरसमनु-

भवादेव कुर्वन्ति काव्यम् HammīMaKā. 14.30; 14.33; घोरक्रियाद्यनुभवादाच्छाद्य सहजां रतिम्। डु(?दु)र्वाराविरभूद्भीतिर्मोहोऽयं भीवशस्ततः BhaktiRaSi. ii. 4.92; वेदान्तवृन्दतात्पर्यस्यास्वादः आ समन्तात् साकल्येनानुभवः Śivārka-MaDī i. 14.16 (*on* i. 1.1); तथा चानुभवः - पर्वतं पश्यामि वह्निमनुमिनोमीति VedāntPari. 56.5; 140.1; लोके चाहमेनं प्रवर्तयामीति प्रवर्तयितुरनुभवात् MīmāKau. iii(1). 20.11 (*on* i. 2.7); विलक्षणो हि कमनीयः काव्यव्यापारज आस्वादः प्रमाणान्तरजादनुभवात् RasGaṅ. 32.9; 32.17; 335.2; स्वदि आस्वादने। अयमनुभवे सकर्मकः SiddhāKau. 352B.1 (*on* vi. 4.126); लोके हि … माञ्जुल्यमात्रलिप्सयैव हि वीणानादे रुचिरित्यनुभवः LalitāSaBh. 34.17 (*on* 62); न प्रियाकथितं सम्यङ् मन्येतानुभवं विना ŚukraNī. 3.165; **1Bi** enjoyment सुखाद्यनुभवो यावत्तावत्प्रारब्धमिष्यते AdhyāU. 49; अस्मिन् वने पर्वते नानारमणस्थानमस्माकमनुभवं प्रतिपद्य रचितं आधिदैविकं स्थानं वृन्दावनम् SāmaraU. 246.6; मालत्या गुणवार्तां नो सम्यग्वेत्ति मधुकरस्तावत्। अनुभवमेति न यावत् सुमनोऽन्तरसङ्गमास्वादः KuṭṭaMa. 715; उत्पन्नेषु घटादिषु येषां तत्साध्ययोः सुखदुःखयोरनुभवो भोगो भविष्यति ते भोगिनः NyāyKa. 108.13; मनोऽनुकूलेऽनुभवः सुखस्य रतिरिष्यते AgniP. 338.13; (कर्मणः क्यङ्) सुखादेरनुभवे SiddhaHe. iii. 4.34; (क्यङ्) सुखदुःखतृप्रकृच्छ्रास्रालीककरुणकृपणसोढप्रतीपेभ्योऽनुभवे SaraKaṇṭhā.(Gr.) i. 3.23; MugdhaBo. 21.10 (133.7); राज्ञी सरोमांचमवनतमुखी स्पर्शसुखानुभवं नाटयति EI. viii. 110.50; क्रीडासुखस्यानुभवं तनोति मकरध्वजः SamarāSaṁ. 2.33; (सुखादिभ्यः कर्तृवेदनायाम्) एभ्यः कर्मभ्यः क्यङ् स्यात् वेदयितुरनुभवेऽर्थे PrakriKau. ii. 381.2; Prasā. ii. 381.8; नाप्यानन्दत्वम्।… तस्याप्यात्मत्वे नीरपानजातात् क्षीरपानजं सुखमधिकमित्यनुभवेन Nyāyāmṛ. 74B.6; शाश्वत एव स्यात् स्वाम्यं नानुभवादपि ŚukraNī. 4(5).292; **1Bii** potentiality of Karman, intensity of Kārmic result, one of the four types of *karmabandha* विपाकोऽनुभवः TattvārthaSū. 8.21; नानाविधानां शुभाशुभानां कर्मणां फलविपाकं प्रत्यनुभवन्त्यनेनेत्यनुभवः AbhidhSa. 2.16; नानाविधो वा पाको विपाकः। असावनुभव इत्याख्यायते TattvāRāVār. viii. 21.2; **1Biii** consequence or result (of one's deeds), experience or undergoing (of suffering etc.) सुकृतदुष्कृतकर्मवशादयं दिवमथो यमसादनमेव वा। अनुभवेन समाप्य पुनर्महीतलमबोधवशादवरोहति SaṁkṣeŚā. 3.49 (ii. 177.4); बुद्धिः … भवमनुभवैस्तापैः पापा तमेव युनक्ति सा NyāyMañ. ii. 67.9; धर्माधर्मयोः फलहेतुत्वं स्वफलानुभवानुगुणशरीरोत्पादनद्वारेण BrahmSūBh.(Rā.) 152.9 (*on* i. 1.4); ज्ञानिनामपि प्रारब्धकर्मानुभवेनैव नश्यति VedāntSā.(Rā.) 310.3 (*on* iii. 3.31); वियोगदुःखानुभवक्लेशः … मे VyaktiVi. 80.20; अत्रानुभावा विज्ञेयाः प्राप्तार्थानुभवस्तथा RasāSu. 129.1 (2.75); **2A** realisation (of *jīvātman* etc. being one with the Supreme) सर्वान्तरस्थम् … चैतन्यं विना किंचिन्नास्तीति साक्षात्कारानुभवो ज्ञानम् NirāU. 255.24; 256.20; अथ होवाच भगवान् ब्रह्मापरोक्षानुभवपरोपनिषदं व्याख्यास्यामः MaVākyaU. 585.12; सर्वदा समरूपोऽस्मि …। एवं स्वानुभवो यस्य सोऽहमस्मि न संशयः MaitreU. 3(24); स्वस्वरूपतया सर्वं वेद स्वानुभवेन यः। स धीरः VarāU. 2.30; देशिकवरम् … वन्देऽहम् …। यच्चरणद्वयमद्वयम् अनुभवमुपदिशति तत्पदस्यार्थम् SvātmNi. 2; मीमांसितं चानुभवोपपत्तिभ्यां ब्रह्म KenUVāBh. 80.12 (*on* 2.3); ब्रह्मविदामनुभवोऽपि प्रपञ्चस्य बाधकः। तेषां निष्प्रपञ्चात्मदर्शनस्य विद्यमानत्वात् ŚvetāUBh. 53.12 (*on* 1.0); विज्ञातेर्यस्तु विज्ञाता स त्वमित्युच्यते यतः। स स्यादनुभवस्तस्य UpadeSā. 196.8; 197.9; आदौ ब्रह्माहमस्मीत्यनुभव उदिते खल्विदं ब्रह्म पश्चात् ŚatŚlo. 3;91; अनुभवोऽन्तःकरणवृत्तिभेदो ब्रह्मसाक्षात्कारः Bhām. 68.11 (*on* i. 1.2); VivaPraSaṁ. 270.3; Bhām. 201.3 (*on* i. 3.8); इदानीं कथयिष्यामि मुक्तस्यानुभवं प्रिये ŚivS. 5.50; परं ज्योतिषि …। मुहूर्तं तिष्ठतः साक्षात्तस्य चानुभवो भवेत् SaurP. 12.68; कटकत्वं यथा हेम्नि तरङ्गत्वं यथाम्भसि।… नास्त्येव सत्यनुभवे तथा नास्त्येव ब्रह्मणि YogVā. iii. 21.66; दिव्यमूर्तेर्महात्मनः। निरङ्कुशं त्वनुभवमाहुस्त्र्यन्तवित्तमाः NītiMā. 69.10; तत्त्वज्ञानम् …। तत्त्वम् …। तस्य ज्ञानमनुभवः SaptaPa. 64(19); न चानन्दादीनां साक्ष्याणां साक्षिधर्मत्वम्, आनन्दानुभवयोरात्मरूपत्वात् TattvPradī.(Ci.) 382.12; (ब्रह्मजिज्ञासा) अनुभवार्थेति … अनुभवोऽवसाने समाप्तौ फलत्वेन यस्याः सा तथोक्ता VedāntKa. 53.10 (*on* i.1.2); 'ब्रह्म समश्नुते' इति वाक्यस्य चानुभवेनोपासनकाले ब्रह्म समश्नुते इत्यर्थः VedāntKau. 402.1 (*on* iv. 2.7); भातितरामुपाधिरत्रादलदेतद् व्यवहर्तृतेति चेन्न। अहमोऽनुभवेन साधनव्यापकभावात् ŚaṅkaDigVi.(Mā.) 15.118; न चात्मनः स्वप्रकाशत्वे विवदितव्यम्। अहमित्यनुभवात् TattvPrakā. 4A.6 (*on* i.1.0); VedāntSā.(Sa.) 19.8; 20.10; विज्ञानमनुभव एव न तु ज्ञानमात्रम् AṇuBh. 274.13 (*on* iii. 4.12); VīraMi.(Āhnika.) 489.11; युक्त्या वानुभवेन यत्र परमानन्दश्च तत्सेव्यताम् PraboSu. 248; ब्रह्म … ज्ञातमित्यनुभवेन आत्मनि व्यभिचारात् AdvaiSi. 237.1; LaCandr. 318.42; **2Bi** direct perception or cognition or understanding अन्या च स्मृतिरन्योऽनुभवः Bṛha. 103.2 (*on* i. 1.5); ज्ञानं वस्तुस्वभावग्राहिणानुभवेनाहितां वासनामाश्रित्य विकल्पकमुत्पद्यते PramāVāSvopVṛ. 27.12; सुभ्रुवामनुभवात्प्रतिपेदे मुष्टिमेयमिति मध्यमभीष्टैः ŚiśuVa. 10.59; शब्दादीनामिन्द्रियार्थानां सातत्येनानुभवः DaśKuC. 136.12; प्रत्यक्षोऽनुभवः साध्यो न ह्यतो व्य[न हेतोर्व्य]भिचारिणः VibhraVi. 115; अनुभवं वदनेन्दुरुपागमत् MālaMā. 3.99; एको ह्ययमनुभवः अतीतविज्ञानकर्मतापरोक्षत्वे एकाधिकरणे गृह्णन्नुपपद्यते TātpaṬ.(U.) 177.10 (*on* 4.233); यदा तु ग्राह्यमाकारं नीलादि प्रतिपद्यते …। तस्मादभिन्नता चेत्स्यात् तस्याप्यनुभवो भवेत् ŚlokaVār. 5(3).75 (291.3); येनापि तु निरूप्येत पश्चादनुभवादसौ। न स्यादेव प्रमाणाङ्गमसता तुल्य एव सः ŚlokaVār. 5(7).82 (471.4); 5(3).203 (326.4); 5(8).13 (477.2); भ्रान्तेरनुभवात् …चोदनैव लघीयसी TantrVā. 74.12 (*on* i. 3.2); BrahmSūBh.(Śaṅ.) 289.19 (*on* ii. 1.4); KenUBh. 44.15 (*on* 2.2); वाद्याघातध्वनीनां न पृथगनुभवः किं तु तत्साहचर्यात् ŚatŚlo. 63; प्रत्यक्षेण वस्तुन उपलब्धिरनुभवः Nyās. i. 506.10 (*on* iii. 1.18); क्वान्यत्र श्रवणाकाशे कथमन्यत्र तद्गुणः। परेष्टादाश्रयात्तत्र निर्णेतानुभवो नृणाम् MṛgendraT. i. 12.24; श्रुतमेकं यदन्यत्र स्मृतेरनुभवस्य वा। हेतुतां प्रतिपद्येत काव्यलिङ्गं तदुच्यते Kāvyālaṅ-SāSaṁ. 6.7; ParāTri. 45.1; करणशक्तिः स्वतोऽनुभवात् ŚivSū. 3.37; विशेषणं नियोज्यस्य भवन्ननुभवः फलम् BṛĀraUBhVā.(Sambandha.) 802; 1059; न युक्तः अकार इव ह्रस्वत्वाभिमानः। ननु तत्रापि कथम्। अनुभव एव PañcPā. 16.7 (*on* i. 1.1); 23.13 (*on* i. 1.1); रूपादीनां तु चक्षुराद्यपेक्षत्वादनुभवस्य नित्यत्वेऽपि कदाचिदसिद्धिः IṣṭaSi. 60.23; 66.6; भ्रान्तिः सदा जडतयानुभवेऽपरोक्षे SaṁkṣeŚā. 1.122 (i. 103.12); 3.14 (ii. 157.16); 3.308 (ii. 324.11); प्रमितिः संवेदनमनुभवः BrahmSūBh.(Bhā.) 7.1 (*on* i. 1.1); स्मृतिः केनाथ यत्रैवानुभवस्तत्पदैव सा ĪśvaPraSū. i. 2.4; न चैवानुभवोऽप्यस्ति भिन्नाभिन्नविनिश्चयम्। मुक्त्वान्यस्य प्रकाशस्य विमर्शरहितात्मनः AjaḍaPraSi. 14; स्मृतावनुभवस्मरणयोर्विवेको न गृहीतो भवति NyāyMañ. i. 62.23; ii. 42.4; अर्थादनुभवः, ततः संस्कारः, संस्काराच्च स्मृतिः PrakaPañ. 117.1; स खल्वयमेको वाक्यात्मा वाक्यार्थधीहेतुरनुभवाद्वा व्यवस्थाप्यते TattvBi. 9.1; 160.9; ĀgaPrā. 5.14; 11.12; उपलम्भस्त्वनुभवः AgniP. 366.24; कथमेकं दर्शनं यावता बुद्धेः … वृत्तिः प्राकृततयाजडत्वेनानुभाव्या दर्शनं ततोऽन्यत्पुरुषस्य चैतन्यमनुभवो दर्शनम् TattvVai. 8.29 (*on* 1.4); अनुभवः प्राप्तिः TattvVai. 17.27 (*on* 1.11); TātpaṬ.(Vā.) 209.18 (*on* i. 1.9); 55.2 (*on* i. 1.1); एकविषयः स्मृतिप्रवाहो विजातीयप्रत्ययासंभिन्नश्चिन्तनं तच्चानुभवश्च(?स्य) पश्चाद्भवतीत्यनुचिन्तनम् TātpaṬ.(Vā.) 517.22 (*on* iii. 1.25); कारणसामर्थ्यमाश्रित्य विषयविषयिभावमिच्छति. न त्वनुभवानुभाव्ययोरिति ĀtmaTaVi. 459.12; नित्यानित्यवस्तुविवेकः … भवति अनुभवोपपत्तिभ्याम् Bhām. 52.7 (*on* i.1.1); NyāyVārPari. 305.3; अङ्गलग्नेऽपि वातादौ स्पर्शाद्यनुभवं विना। जीवतश्चेतसो रूपं यत्तद्वै परमात्मनः YogVā. iii. 10.42; प्रकाशस्य प्रमातृरूपस्य प्रत्यवमर्श एव जीवितम् इति श्लोकचतुष्टयेन अनुभवागमन्यायस्वरूपनिरूपणाभिः अभिधत्ते PratyabhiVi. i. 195.2 (*on* i. 5.1); AbhinBhā. i. 44.18 (*on* 1.119); भाविते च रसे तस्य भोगः। योऽनुभवस्मरणप्रतिपत्तिभ्यो विलक्षण एव Loc. 68.16 (*on* 2.4); 159.18 (*on* 3.16); न चेदं स्मरणं तत्पिण्डानुभवे विशिष्टस्याननुभवात् NyāyKuA. ii. 195.5; सायंतनसमयेऽनुभूयमानस्य राजादेः प्रातःकालीनाभावविषयोऽनुभवो जायेत TārkiRa. 110.5; बुद्धिरपि द्विविधा स्मृतिरनुभवश्च SaptaPa. 32(11); TarkBhā.(Ke.) 78.4; TarkKau. 6.16; Tarkāmṛ. 12.4; TarkSaṁ.(Ā.) 21.23; अस्मृतिरूपं ज्ञानमनुभवः SaptaPa. 139 (39); PramāLa. 3A.6; TarkBhā.(Ke.) 28.5; अनुभवः स्मृत्यादिप्रत्यूहो व्यासङ्गः AlaṅkāRa. 21; ज्ञातुर्ज्ञातृत्वेनेव अनुभूतेरनुभूतित्वेनैवानुभवात् PramāMī. 3.24 (*on* i.1.1); श्रद्धाति क इवेह न साक्षादाह चेदनुभवः परमाप्तः NaiṣC. 5.22; अनुमानसिद्धेश्वराच्च भेदोऽनुभवत एव सिद्धो जीवस्य। असर्वकर्तृत्वेनानुभवात् Viṣṇu-TaNi. 4A. 3; न च दृष्टस्यापि स्वप्नादिवदभावः। तस्योत्तरकाले स्वप्नोऽयं नायं सर्प इत्याद्यनुभवात् BrahmSūBh.(Ma.) 30B.5 (*on* ii.2.29); TarkSaṁ.(Ā.) 91.18; स्मृतिः संस्कारमात्रजन्या तदतिरिक्तकारणजन्योऽनुभव इत्यप्यसाधु PrakaVi. 562.14; NyāyPari. 7.5; दृष्टेऽनुभवः उपपत्तिस्त्वदृष्टे VedāntKa. 40.16 (*on* i. 1.1); सिद्धिः - अनुभवः ŚrutaPra. iA. 249.13 (*on* i. 1.1); संवित्तिलक्षणं कार्यं किमात्मनि व्यवस्थितमाहोस्विद् विषये …। विषये चेत् कथमात्मनोऽनुभवः प्रतीयते SyādvāMañ. 8 (210); संस्काराधानद्वारा स्मृतिं प्रत्यनुभवस्य कारणत्वम् Ekāva. 3.1 (163) (93.4); यत्र सदृशस्य पदार्थस्यानुभवेन सदृशवस्त्वन्तरपरामर्शो जायते तत्र स्मरणालंकारः PratāYaBhū. 370.6; VedāntRaMañ. 1.1 (8.19); ज्ञानप्रयत्नयोरसमानकालत्वेऽप्यनुभवस्मरणयोरिव मनसा कार्यकारणभावग्रह इति नासिद्धिः TattvCin. i. 264.1; iv(2). 413.4; NyāyPari. 484.4; संस्कारः … न च भ्रान्तिरूपोऽनुभवः तत्करणम् SarvaDaSaṁ. 16.146; त्रिविधा हि पुंसां चित्तवृत्तिः। अनुभव इच्छा प्रयत्नश्च NyāySu.(Ja.) 11A.1 (*on* i.1.1); 250B.11 (*on* ii. 1.2); स्मृत्यनुभवयोरनुभवो यथार्थः NyāySu.(Ja.) 251A.3 (*on* ii.1.2); न ह्यनुभवोऽपि व्याख्यायते Upask. 53.13 (*on* i.2.3); 78.5 (*on* ii.1.7); 287.14 (*on* vii. 1.6); 327.2 (*on* vii. 2.10); यथानुभवस्य क्षणिकत्वेऽपि संस्कारो द्वारं कालान्तरभाविस्मृतिजनने SarvaDaKau. 1.22; 51.20; अहं विकल्पवानित्याद्यनु-

भवाच्च VedāntSā.(Sa.) 19.1; अपहतपाप्मत्वं च । तद्विरुद्धधर्माणामनुभवात् AṇuBh. 81.12 (*on* i. 3.15); यदानुभवस्य सौकर्यातिशयप्रदर्शनाय भक्तव्यापारो न विवक्ष्यते तदा विषयत्वापत्तौ दृशिर्वर्तते Prasā. ii. 421.3; स्मृत्यनुभवयोर्विवेकः प्रपञ्चयिष्यते TantrRaha. 2.4; 3.10; स्मृतिसंस्कारानुभवानामेकाधिकरणानामेव कार्यकारणभावात् Nyāyāmṛ. 375B.9; बाह्यार्थापरित्यागेनान्तरमनुभवमारूढ इत्यत्र प्रमाणाभावात् YuktiSneha. 54.35 (*on* i. 1.5); स्मृतिहेतुरनुभवः YogSā. 3.16(1); पदजन्यस्मरणस्य निर्विकल्पकवाक्यार्थानुकूलस्य निर्विकल्पकत्वमनुभवादेवाविरुद्धम् SiddhāBi. 9.3; अनुभव एवैको विषयोऽज्ञातलक्षणः AdvaiSi. 318.11; ŚivārkaMaDī. ii. 92.20 (*on* ii. 2.25); अनुभवः सद्रूपम् GuruCandr. i. 172.17; धूमो वह्निव्याप्यः इत्यनुभवो जायते Tarkāmṛ. 17.6; VīraMi.(Bhakti.) 51.5; विलक्षणो हि कमनीयः काव्यव्यापारज आस्वादः प्रमाणान्तरजादनुभवात् RasGaṅ. 32.9; 354.21; अनुभवस्य स्वसमानप्रकारकमात्रस्मृतिजनकत्वात् ŚaktiVā. 67.4; 111.4; अनुभवश्च स्मृतिव्यतिरिक्तं ज्ञानम् MānaMe. 6.4; SiddhāKau. 17A.13 (*on* viii. 6.46); त्वं पचसीत्यादौ युष्मच्छब्दसामानाधिकरण्यस्यानुभवमनुसरता सूत्रकृतानूद्य ··· युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः इत्यादिना कृतत्वात् VaiyāBhū. 14.8 (*on* 2); 241.23 (*on* 65); तारत्वमित्यादिध्वनिधर्माणां वर्णेष्वनुभवः SetuBa. 232.24; 344.16; अनुभव एव – निर्विकल्पज्ञानमेव, तत्र अनुभवे, तेष्वपि स्मरणविकल्पादिष्वपि, ··· अनुभवेऽर्थाः यदि भेदेन न भासन्ते Bhāsk. i. 195.19 (*on* i. 5.1); अनुभवं चानुसृत्य विवेक्तव्यम् LaŚabdeŚe. i. 31.15; ii. 39.5; प्रागसत्त्वे सति सत्त्वरूपाया उत्पत्तेर्न वर्णेष्वनुभवः वर्णानुच्चारयतीत्येव प्रत्ययात् VaiyāSiMañ. 218.7; आप्तवाक्यैरनुभवैरागमैरनुमानतः ।··· वैचित्र्यं व्यवहाराणामौन्नत्यं गुरुलाघवैः । न हि तत्सकलं ज्ञातुं नरेणैकेन शक्यते ŚukraNī. 2.5; 'अरविन्दतुल्यो भाति अरविन्दवद्भाति' इत्याभ्यां तुल्यविषयकोऽनुभवः AlaṅkāKau.(Vi.) 88.8; **2Bii** after-cognition, *anuvyavasāya* सद्भावे ··· एतस्य ···। मानं श्रुतिः ··· अज्ञोऽहमित्यनुभवोऽपि च SarvaVeSāSaṁ. 304; द्रष्टव्यादिवचो वदत्यनुभवादज्ञात आत्मा यतः SaṁkṣeŚā. 2.51 (*on* ii. 30.8); जातिभेदोऽयं न तूपाधिभेद इति किमत्र निष्टङ्कं कारणमिति चेत् अनुभव एव ĀtmaTaVi. 344.13; अज्ञानं तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किंचिदिति वदन्ति, अहमज्ञ इत्यनुभवात् VedāntTaSā. 3.5; धर्माधर्मादिकं च जानामीत्यनुभवश्च न स्यात् Nyāyāmṛ. 69B.8; इदमहं जानामीति ह्यनुभवः Nyāyāmṛ. 73B.5; BhedaDhi. 20.2; मनसेदं पश्यामीत्यनुभवोऽपि ··· मनस आत्मनि दर्शनाद्यारोपितनिमित्तत्वान्न विरुध्यते BhedaDhi. 19.2; **2C** consciousness अविक्षिप्तो ह्यसंसुप्तोऽनुभवः किमपेक्षते TaiUBhāVā. 166.14(2); यद्यपि पुरुषसमारोपः ··· अनुभाव्यस्तथापि बुद्धेः पुरुषत्वमापादयन् पुरुषवृत्तिरिवानुभव इवावभासते TattvVai. 8.22 (*on* 1.4); YogVā. iii. 44.43; स्वापमदमूर्च्छासु च सविशेष एवानुभवः BrahmSūBh.(Rā.) 28.14 (*on* i. 1.1); **3** custom, habit तत्र खल्वपि बोधिसत्त्वश्चतुरशीतिस्त्रीसहस्राणां मध्ये प्राप्तो लोकानुभवनतया (v.l. लोकानुभवेन तथा च समानम् *nt.*) रममाणं क्रीडयन्तं परिचारयन्तमात्मानमुपदर्शयति स्म LaliVi. 12.33(15); लोके हि ··· माञ्जुल्यमात्रलिप्सयैव हि वीणानादे रुचिरित्यनुभवः LalitāSaBh. 34.17 (*on* 62); **4** the word *anubhava* बोधानुभवसंवित्तिवित्तयो ह्यात्मवाचिनः BṛĀraUBhVā.(Sambandha.) 1058; स्मरणज्ञानव्यवच्छेदार्थमनुभवग्रहणम् NyāySā. 2.10; स्मृतिव्यवच्छेदार्थमनुभवग्रहणम् SarvaMaSaṁ. 1.6; **5** every birth, cf. **अनुभवम्**; [Kośas give *anubhava* as the synonym of the following words : *upalambha*, AmaK. 2304; Vaija. 193.19; AbhidhāCin. 1520; ŚabdaRa.(Vā.) 3418; KośaKaTa. 2.735; KalpaK. 242.71; *vedanā*, AnekāSa. 348; and *anubhava* is given as the meaning of the following words : *upalabdhi*, KośaKaTa. 2.6083; ŚabdaRaSaK. 185.5; *vedanā*, AnekāK. 497; NānārthāSaṁ. ii. 199.1742; *saṁskāra*, AnekāSaṁ. 3.610; ViśvaPra. 139.180; MediK. 151.233; ViśvaLoK. 316.241; ŚabdaRaSaK. 282.12; and *tarka* is given as the meaning of *anubhava*, KośaKaTa. 1.1169]; *adj.* (element) which exists nearby चित्र्यं वनस्पतिं दृष्ट्वा ··· समिधौ ··· आधायोपतिष्ठते नमो अग्निषदे रुद्राय ··· इत्यनुभवं परिभवं तद्विषद्भ्यो दिशाम्यहम् BhārGS. 2.31 (65.10)

**अनुभवकथा** (anubhava–kathā) *f.* narration of the experience शिष्टानुशिष्टस्वेष्टध्यानकथासेवानुभावेन तेषामनुभवकथायामासक्तिः स्यात् SāmaraU. 257.2.

**अनुभवकर्तृ** (anubhava–kartṛ) *adj.* agent of experience, experiencer तदेव च अनुभवकर्तृ – अनुभवितृरूपम् आत्मा अनुभावकः PratyabhiVi. i. 94.1 (*on* i. 2.3)

**अनुभवकर्मता** (anubhavakarma–tā) *f.* the state of being the object of direct perception or cognition पुरुषस्त्वपरिणामी ···। अपराधीनप्रकाशता ह्यस्य स्वयंप्रकाशता नानुभवकर्मता TattvVai. 202.21 (*on* 4.19)

**अनुभवकर्मतोपसृष्ट** (anubhavakarmatopasṛṣṭa) *adj.* connected with the state of being an object of direct perception or cognition स्मृतिरनुभवानुसारिणी तद्गोचरानक्रमानपि तत्क्रमेण क्रमवदनुभवकर्मतोपसृष्टानपर्यायमपि समाकलयन्ती अक्रमविपरीतक्रमानुभूतेभ्यो भिनत्ति TattvBi. 67.2.

**अनुभवकर्मत्व** (anubhavakarma–tva) *n.* the state of being an object of direct perception or cognition अनुभूयमानता चानुभवकर्मत्वमितरथास्याः प्रत्यक्षतैव न स्यात् NyāyMañ. ii. 6.11.

**अनुभवकर्मन्** (anubhava–karman) *n.* **A** object of direct perception or cognition तद्धि (चित्तम्) नीलादिवदनुभवव्याप्यम् ।··· पुरुषस्त्वपरिणामी नानुभवकर्मेति नास्मिन् स्वयंप्रकाशता न युज्यते TattvVai. 202.20 (*on* 4.19); **B** object of the act of enjoyment, cf. **अनुभवकर्मविषयता.**

**अनुभवकर्मविषयता** (anubhavakarmaviṣaya–tā) *f.* the state of being an object of the act of enjoyment तदेतत् ··· अनुभवकर्मविषयतामापन्नम् YogBh. 80.1 (*on* 2.17) (TattvVai. अनुभवो भोगः पुरुषस्य कर्म क्रिया तद्विषयतां भुज्यमानतामापन्नम्)

**अनुभवकलह** (anubhava–kalaha) *m.* **A** dispute regarding realisation पार्थक्यानुभवाननुभवरूपस्यानुभवकलहस्य त्वन्मतसमानत्वात् AdvaiSi. 783.17: **B** dispute regarding experience न तु नायं साधारणः पुरुषः ··· नापि गवेष्यमाणोऽपि तद्व्यञ्जनोपायः शब्दोऽर्थो वा उपलभ्यते, येनानुभवकलहोऽपि स्यात् RasGaṅ. 372.4.

**अनुभवकल्पन** (anubhava–kalpana) *n.* assumption or supposition of experience तस्याः (वासनायाः) ··· जन्मान्तरेऽनुभवकल्पनात् सिद्धमस्तित्वम् NyāyRa. 327.8 (*on* 5(3).206)

**अनुभवकल्पना** (anubhava–kalpanā) *f.* **A** assumption or supposition of experience अनुभवकल्पनायां सर्वः सर्वदा सर्वं जानाति ĀtmaTaVi. 736.16; अनुभवकल्पना नु कुतस्त्या TātpaṬ.(Vā.) 512.21 (*on* iii. 1.15); **B** assumption of direct perception or cognition अनुभवसिद्धे हि लक्षणं न तु लक्षणानुरोधेनानुभवकल्पना TattvCin. ii(1). 920.2.

**अनुभवकल्पनोपपत्ति** (anubhavakalpanopapatti) *f.* possibility of the assumption of direct perception or cognition स्पार्शनप्रत्यक्षवाचित्वाङ्गीकारेणैव ··· स्पर्शप्रयोगसत्वादेवानुभवकल्पनोपपत्तेः MīmāKau. i. 18.2 (*on* i. 3.3)

**अनुभवकाम** (anubhava–kāma) *adj.* who is desirous of realisation यदानुभवकामस्य कार्यं साध्यं प्रतीयते । प्रसंख्याने तदैकात्म्यतात्पर्यं कथमुच्यते BṛĀraUBhVā.(Sambandha.) 800.

**अनुभवकारण** (anubhava–kāraṇa) *n.* **A** cause of direct perception or cognition इह तु संबन्धनियमस्मरणमेकदेशदर्शनं चानुभवकारणमस्ति PrakaPañ. 205.11; संस्कारोऽनुभवकारणम् KhaṇḍanKhā. 301.12; 293.14; **B** cause of realisation मुक्तावनुभवकारणाद्यदन्यत् तत्पुण्यमपि विनश्यति BrahmSūBh.(Ma.) 68B.1 (*on* iv. 1.17)

**अनुभवकारणत्व** (anubhavakāraṇa–tva) *n.* the state of being the cause of direct perception or cognition अनुभवकारणत्वमुपजीव्य संस्कारस्य कारणत्वेन कल्पनं नानुभवकारणत्वं विहन्ति GuruCandr. ii. 214.5.

**अनुभवकारणासंभव** (anubhavakāraṇāsambhava) *m.* impossibility of the cause of direct perception अनुभवकारणासंभवेन हि शुक्तिकारजतादिषु स्मृतिप्रमोषः PrakaPañ. 205.9.

**अनुभवकारिन्** (anubhava–kārin) *adj.* effecting realisation विचारणादनुभवकारिवैरिणोऽपि वाङ्मयं त्वनुगतमस्मदादिषु YogVā. ii. 18.69.

**अनुभवकार्या** (anubhava–kāryā) *adj.* (*f.*) to be produced by direct perception अनुभवानुविधायितया तावदनुभवकार्या स्मृतिः Kiraṇā. 129.17.

**अनुभवकाल** (anubhava–kāla) *m.* [Loc.] at the time of direct perception अनुभवकालेऽप्येषा बुद्धिरेव केवला गृहीता कथमन्यथा केवला स्मर्येत Kāśi. ii. 134.23 (*on* 5(3).84); अनुभवकाले तस्यार्थस्य तादवस्थ्यात् NyāyVārPari. 162.5; तथा हि गवादिव्यक्त्यनुभवकाले वर्णसंस्थानात्मकं व्यक्तिरूपमपहाय नान्यत्किञ्चिदेकमनुयायि प्रत्यक्षे प्रतिभासते TarkBhā.(Mo.) 30.7; पीतिमशङ्खयोरेकैकशोऽनुभवकाले दृष्टपीतिम्नः पश्चाच्छङ्खे समारोपः VedāntKa. 12.22 (*on* i. 1.1); अनुभवकाले अर्थतथाभावात् स्मृतिकाले तद्विपर्ययात् SarvaDaKau. 51.22.

**अनुभवकालपरामर्श** (anubhavakāla–parāmarśa) *m.* consciousness or awareness of the time of direct perception पूर्वकालपरामर्शः अनुभवकालपरामर्शः Bhāsk. i. 153.10 (*on* i. 4.1)

**अनुभवकालसंबन्ध** (anubhavakāla–sambandha) *m.* relation with the moment of direct perception or cognition अस्तु तावदनुभवकालसंबन्ध एव तत्ता तथापि बाल्ययौवनयोरिव ··· एकविशेष्यवृत्तित्वं तावदस्ति Nyāyāmṛ. 470B.6.

**अनुभवकालस्वीकार** (anubhavakāla–svikāra) *m.* acceptance, i.e.

inclusion of the moment of direct perception ननु स प्रकाशः किमनुभवकालस्वीकारेण वर्तते त्यागेन वा Bhāsk. i. 157.16 (*on* i. 4.2)

**अनुभवकालीन** (anubhava-kālīna) *adj.* pertaining to the moment of direct perception or cognition यौ पूर्वापरपरामर्शौ अनुभवकालीन-स्मृतिकालीनौ परामर्शौ Bhāsk. i. 153.7 (*on* i. 4.1)

**अनुभवकालीनज्ञान** (anubhavakālīna-jñāna) *n.* knowledge pertaining to the time of direct perception or cognition तत्प्रकाशः स्मर्यमाणस्य भावस्य प्रकाशः, तदानीन्तनावभासेन अनुभवकालीनज्ञानेन पृथक्कृतः Bhāsk. i. 153.13 (*on* i. 1.4)

**अनुभवकृत** (anubhava-kṛta) *adj.* **A** caused by direct perception or cognition न हि ज्ञानारूढस्य तस्य संख्याकारस्य वा कश्चिदनुभवकृतो विशेषो येन कोऽर्थजोऽनर्थजश्चापर इति प्रतिपद्यामहे NyāyKa. 114.3; **B** caused by experience, cf. **अनुभवकृतवैषम्य.**

**अनुभवकृतवैषम्य** (anubhavakṛta-vaiṣamya) *n.* difference caused by experience वेद्यप्रमेयत्वं सममेव, ततोऽनुभवकृतवैषम्यमपि मा भूत् VivaPraSaṁ. 270.12.

**अनुभवक्रम** (anubhava-krama) *m.* order of direct perception or cognition अनुभवक्रमेणैव स्मरणक्रम इति चेत् न TantrRa. 246.12; नन्वयमनुभवक्रमोऽनुभवबाधित एव NyāyVārPari. 396.3.

**अनुभवक्रमाहित** (anubhavakramāhita) *adj.* obtained in the order of direct perception or cognition नन्वनुभवक्रमाहितसंस्कारसामर्थ्यमनुरुध्यमानाः स्मृतयोऽपि ··· अर्हन्ति NyāyMañ. i. 347.3.

**अनुभवक्रमोपहित** (anubhavakramopahita) *adj.* delimited by the order of direct perception or cognition अनुभवक्रमोपहितानामेव तेषां स्मृत्यावगाहनान्न क्रमव्युत्क्रमयोरविशेषापत्तिः NyāySu.(Ja.) 88B.5 (*on* i. 1.1); VaiyāBhū. 248.21 (*on* 65)

**अनुभवक्रियाकर्तृत्व** (anubhavakriyākartṛ-tva) *n.* the state of being an agent of the act of understanding कर्तृभूते – अनुभवक्रियाकर्तृत्वेन स्थिते (अनुभवो ब्रुडितः) Bhāsk. i. 169.19 (*on* i. 4.4)

**अनुभवक्षण** (anubhava-kṣaṇa) *m.* moment of experience ज्ञेयोऽसावपि भोगाङ्गः सकारकक्रुतो यतः। प्राग्भुक्तरूपताच्छायां गतेऽर्थेऽनुभवक्षणे MṛgendraT. ii. 8.89.

**अनुभवग** (anubhava-ga) *adj.* [*f.* -ā] **A** pertaining to the direct perception or cognition अनुभवगा बाधा नानुभूतोऽन्यथा भवेत् ŚivDṛ. 4.17; **B** known through the direct perception or cognition न चानुभवगं कामस्वामित्वं वेदवागपि। शक्तापवदितुं तस्मात् AnuVyā. 23A. 9 (*on* 2.2)

**अनुभवगत** (anubhava-gata) *adj.* pertaining to experience अर्थानुभवगतस्य भानाभानरूपस्य विरुद्धधर्मद्वयस्य साधनात् वैधर्म्यदृष्टान्तत्वम् Bhāsk. i. 168.3 (*on* i. 4.4)

**अनुभवगम्य** (anubhava-gamya) *adj.* knowable through experience सकलसुखविशेषाद्यत्र पीयूषवर्षैः स्वयमनुभवगम्यो जायते त्वत्प्रसादात् EI. i. 261.30.

**अनुभवगम्यता** (anubhavagamya-tā) *f.* the state of being knowable through direct perception or cognition ब्रह्म शब्दैकगम्यम्, रूपादिभिः व्याप्तिग्रहादिभिश्च हीनत्वात् ··· अनुभवगम्यताया अपि भवद्भिरङ्गीकारात् VivaPraSaṁ. 285.20.

**अनुभवगम्यत्व** (anubhavagamya-tva) *n.* **A** the state of being knowable through direct perception or cognition मनसो विशेषगुणवत्त्वस्य श्रुत्यनुभवगम्यत्वात् न तस्य विशेषगुणवैधुर्यम् TarkSaṁ.(Ā.) 52.14; **B** the state of being knowable through experience लोके वागविषयस्यापि क्षीरगुडादिमाधुर्यविशेषस्य अनुभवगम्यत्वात् VivaPraSaṁ. 277.5.

**अनुभवगृहीत** (anubhava-gṛhīta) *adj.* grasped through direct perception or cognition नन्वनुभवगृहीत ··· स्मृतिः SarvaDaKau. 51.15.

**अनुभवगोचर** (anubhava-gocara) *adj.* (used as noun) **Ai** object of direct perception or cognition अनाधारत्वं तु कार्यस्य नानुभवगोचरः TātpaṬ.(Vā.) 367.7 (*on* ii. 1.16); यतो यद्यसन्तो नानुभवगोचराः कथं तर्हि ··· अनुभवगोचरत्वम् Bhām. 11.14 (*on* i. 1.0); 490.6 (*on* ii. 3.29); गुणान् ··· शृण्वन्नस्यानुभवगोचरान्। भविता पूर्वभूपालकृत्ये सप्रत्ययो जनः RājTa.(Ka.) 8.1557; SarvaDaSaṁ. 4.75; **Aii** object of realisation देहाद्या इन्द्रियग्राह्या आत्मानुभवगोचरः TriṣaŚaPuC. iii. 5.97; ŚivārkaMaDī. i. 417.13 (*on* i. 3.8); **B** object of experience अस्मन्निष्ठमपि नटनलीलायितं नास्माकमनुभवगोचरस्तद्व्यवसितम् CaitaCa. 93.11(4)

**अनुभवगोचरता** (anubhavagocara-tā) *f.* **Ai** the state of being an object of experience or relish (नवरसानाम्) तेषामनिर्वचनीयत्वेऽपि अनुभवगोचरतायाम् ··· *क्रियाश्रयत्वमुपचर्यते LalitāTriBh. 301.5 (*on* 28); प्रतीयमानं पुनः काव्यपरमार्थज्ञानामेवानुभवगोचरतां प्रतिपद्यते VakroJī. 56.17; ये रसाननुभावयन्ति अनुभवगोचरतां नयन्ति ते अनुभावाः RasTa. 45.1; **Aii** the state of being the object of enjoyment दारग्रहो भवति तावदयं सुखाय यावत्कृतोऽनुभवगोचरतां गतः स्यात् ŚaṅkaDigVi.(Mā.) 2.17; **B** the state of being the object of direct perception or cognition भावात्मनोपाख्येयतयास्य (सतः) युज्येतानुभवगोचरता Bhām. 11.19 (*on* i. 1.0)

**अनुभवगोचरत्व** (anubhavagocara-tva) *n.* the state of being an object of direct perception or cognition यद्यसन्तो नानुभवगोचराः कथं तर्हि मरीच्यादीनामसतां तोयतयानुभवगोचरत्वम् Bhām. 11.15 (*on* i. 1.0); 13.4 (*on* i. 1.0)

**अनुभवजनकत्व** (anubhavajanaka-tva) *n.* the state of being the producer of (verbal) cognition बोधजननशक्तिः संबन्ध इति चेत्, किमनुभवजननशक्तिः ··· नाद्यः पदानां वाक्यरूपेण वाक्यार्थानुभवजनकत्वेऽपि स्वार्थेषु तदसंभवात् VivaPraSaṁ. 37.7.

**अनुभवजनन** (anubhava-janana) *n.* production of direct perception or cognition तदिदमनुभवजननमपि ततो दृश्यते एव ··· अन्यच्च शब्दतत्त्वं नानुभूयते NyāyMañ. i. 346.22; जागरावस्थायां तावदनुभवजननद्वारा सुखोत्पत्ताविन्द्रियार्थसंनिकर्ष उपयुज्यते NyāyVārPari. 522.7; VivaPraSaṁ. 37.6; नानुभवजननसामर्थ्यमीश्वरसंकेतो वा वृत्तिरूपा शक्तिः, अपि तु पदार्थान्तरमेव सा च जातावेव कल्प्यते ŚaktiVā. 206.10.

**अनुभवजनित** (anubhava-janita) *adj.* produced by direct perception or cognition पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितोऽन्त्यो वर्णोऽर्थं प्रत्याययिष्यति BrahmSūBh.(Śaṅ.) 193.2 (*on* i. 3.28); BrahmSūBh.(Bhā.) 125.7 (*on* ii. 2.30); अनुभवजनितसंस्कारात्तत्राकारप्रतिभासनियमः PrakaPañ. 178.11; पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायकोऽर्थस्य TattvBi. 25.13; 27.5; TātpaṬ.(Vā.) 139.6 (*on* i. 1.3); अनुभवजनितसंस्कारसमुद्बोधसापेक्षत्वात् तन्नियमः स्यात् TarkSaṁ.(Ā.) 90.23; NyāySiA. 258.18.

**अनुभवजन्मन्** (anubhava-janman) *adj.* originating from direct perception or cognition अनुभवजन्मा विकल्पोऽर्थात्मतयारोपितस्वप्रतिभासः NyāyKa. 190.19.

**अनुभवजन्य** (anubhava-janya) *adj.* [*f.* -ā] arising from direct perception or cognition अनुभवजन्या हि वासना ··· कथमवस्तुनि गोत्वादौ NyāyRa. 592.17 (*on* 5(13). 100); भावनाख्यस्तु संस्कार आत्ममात्रवृत्तिरनुभवजन्यः स्मृतिहेतुः TarkBhā.(Ke.) 75.3; NyāySu.(Ja.) 460A. 2 (*on* iii. 2.1); TarkSaṁ.(A.) 59.12; न च स्मरणेनानुभवजन्यसंस्कारनाशात् स्मरणोत्तरमस्मरणप्रसङ्गः BhāṭṭCin. i. 10.25 (*on* i. 1.3)

**अनुभवजा** (anubhava-jā) *adj.* (*f.*) arisen from direct perception or cognition अनुभवजा स्मृतिहेतुर्वासना NyāySiA. 258.16.

**अनुभवज्ञ** (anubhava-jña) *adj.* conversant with experience यस्मिन् किरति वसंते दिशि दिशि कामोत्सवेषु कर्पूरं। अ[वि]वासितपरिधानानुभवज्ञोभूच्चिराय गिरिशोपि EI. iv. 323.25.

**अनुभवज्ञान** (anubhava-jñāna) *n.* knowledge (of the nature) of direct perception or cognition किं स एवायं कुम्भ इत्येकं ज्ञानमुत द्वे एते स्मृत्यनुभवज्ञाने NyāyMañ. ii. 21.12; शब्दज्ञानात्र कार्यस्य सिद्धिः ··· नानुभवज्ञानं संभवत्यतिमानुषम् DevīBhāP. vi. 15.54; स्वाभासमेव सत् तत् अनुभवज्ञानं स्मरणे भासिष्यते PratyabhiVi. i. 127.4 (*on* i. 3.2); i. 138.2 (*on* i. 3.6); अन्यदेव हि स्मरणरूपं ज्ञानमनुष्ठाननिमित्तं, न तु वाक्यजनितमनुभवज्ञानम् TantrRa. 246.12.

**अनुभवज्ञानजन्य** (anubhavajñāna-janya) *adj.* arising from the knowledge (of the nature) of direct perception or cognition स्मृतिहेतुः संस्कारः स ह्यनुभवज्ञानजन्यः स्मृतिज्ञानहेतुः स्वयं न ज्ञानजातीयः TārkiRa. 147.8.

**अनुभवत्** (anu-bhavat) *adj.* [*f.* -ī, -ntī] **1A** realising (oneness with the Supreme) **B** cognising, perceiving, observing, knowing **2Ai** enjoying **ii** experiencing, undergoing (mishap, agony etc.) **iii** experiencing, i.e. passing through **B** experiencing, relishing **3i** attaining (a state), possessing or comprising **ii** assuming (a body) **1A** realising (oneness with the Supreme) इयं नेत्यवचनेनैवानुभवन्नुवाचैवमेव चिदानन्दावप्यवचनेनैवानुभवन्नुवाच NṛsimhoTāU. 7; (विदेहा देवाः) ते हि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवानुभवन्तः स्वसंस्कारविपाकं तथाजातीयकमतिवाहयन्ति YogBh. 24.1 (*on* 1.19); TattvVai. 23.23 (*on* 1.19); यथोक्तपरिपूर्णलक्षणब्रह्मात्मभावं साक्षादनुभवतः ··· न पुनस्तस्य संसारस्संभवेत् IṣṭaSi. 73.11; असौ ··· अविक्षिप्तमसंसुप्तं ह्यनुभवन्किमपेक्षते BṛĀraUBhVā. i. 4.873; सततमपि विशुद्धदृष्टि-

ज्ञप्तिस्वभावमात्मानमनुभवतः … संयतस्य लक्षणमालक्षणीयम् TattvPradī.(A.) 334.5 (*on* 3.41); निरस्तनिखिलाज्ञानस्य ब्रह्मात्मकं कृत्स्नं जगदनुभवतः … भेददर्शनं निरस्य BrahmSūBh.(Rā.) 382.7 (*on* i. 4.22); न च … अहमिति स्वात्मानमनुभवतः करचरणाद्यवयवा भासन्ते NitiMā. 46.19; 73.1; ब्रह्मानुभवतो जीवस्य सर्वलोककामचाराद्यपेक्षा कथं स्यात् ŚrutaPra. ii. 511.7 (*on* iii. 3.40); ब्रह्माहमस्मीत्येवं सर्वदानुभवन्नयं योगी परमहंसः कृतकृत्यो भवति JīvanVi. 163.2; स्वरूपानन्दमनन्तमनुभवद् ब्रह्म नित्यतृप्तम् BrahmSūBh.(Śrī.) i. 124.2 (*on* i. 1.2); ii. 494.9 (*on* iv. 4.15); ब्रह्मानुभवतः प्रपञ्चाकारेणापि ब्रह्मैवानुभवगोचरो भवति ŚivārkaMaDī. i 417.13 (*on* i. 3.8); **1B** cognising, perceiving, observing, knowing तेषाम् … पक्षरचनानैपुणम् … चान्यानि चानुभवन् न तृप्तिमध्यगच्छम् DaśKuC. 48.3; ज्ञानस्य ज्ञेयाकाराणामनतिक्रमाद्यथोदितानुभावमनुभवत्तत् केन नाम निवार्येत TattvPradī.(A.) 72.5 (*on* 1.54); पित्तद्रव्यवर्तिनीं पीततां पित्तरहितामनुभवन् … सामानाधिकरण्यं पीतत्वशङ्खत्वयोरारोप्याह Bhām. 10.18 (*on* i. 1.1); ययोरामलकयोः … देशान्तरौत्तराधर्यपरिणामक्षणविशिष्टत्वमनुभवन् संयमी ते भिन्ने एव प्रत्येति TattvVai. 178.22 (*on* 3.53); त्वगिन्द्रियोपनीतं गुडमननुभूयमानमाधुर्यमनुभवन् रसनाग्रवर्तिनश्च पित्तस्य तिक्तत्वमनुभवन् … तिक्तो गुड इति विपर्यस्यति TātpaṬ.(Vā.) 83.19 (*on* i. 1.2); गोसदृशं पिण्डमनुभवतः … अयमसौ गवयशब्दवाच्य इति भवति मतिः NyāyKuA. ii(1). 197.3; जातोऽहम् …। चित्तस्पन्दितकल्पनामनुपतन् (v.l. अनुभवन्) PraboCan. 1.29 (16.16); त्वमाद्यं स्फुटमनुभवताम् … प्रत्यक्षत्वभ्रमोऽयं त्वमसि दशमः TattvMu. 2.46; चक्षुष्मत्सु प्रथमगणनां प्राप्स्यसि … लक्ष्मीमस्याः (कौलम्बेतिनगर्याः) चिरमनुभवन् MayūSaṁ. 1.52; गुणप्रधानभावालिङ्गितस्य सहभावस्यालंकारान्तराद्विच्छित्तिविशेषमनुभवन्तः प्राचीना एव सहोक्तेः पृथगलंकारतायां प्रमाणम् RasGaṅ. 488.3; NīlaVi. 52.16; **2Ai** enjoying रसिकानन्दस्तया निकुञ्जदेव्या सह … वसन्तसुखान्यनुभवन्नास्ते SāmaraU. 229.7; (गोप्यः) तृतीये रासे … सुखमनुभवन्त्य आत्मभाव एवासन् SāmaraU. 240.2; 266.22; ये तां व्रजेश्वरीं रसिकानन्देन सहोपासते सदानन्दरसमनुभवन्तो भवन्ति SāmaraU. 273.14; 286.17; राजभोगाननुभवन् महार्हान् पार्थिवात्मज। विहर त्वमयोध्यायाम् Rāmā. ii. 100.9; कुम्भकर्णः … निद्रामनुभवति Rāmā. vii. 25.26; दर्शनसुखमनुभवतः … त्वया मे … चित्रीकृता कान्ता Śāk. 6.23; पिङ्गलकः … राजत्वमनुभवन्नास्ते Tantrākhyā. 4.23; PañcT. 1.3(25) (12.7); 1.177 (2) (180.6); 3.46(6) (303.1) (v.l.); महर्षयः।… ददृशुः पुरुषम्। ककुदे वृषस्य कृतबाहुम् …। स्पर्शसुखमनुभवन्तम् Kirāta. 12.20; अनेकेन्द्रियसुखातिशयमनुभवन्नपि नोपलक्ष्य(?क्षय)ति PriyDa. 2.3(32); सः … नन्दराज्यमनुभव(न्?न्तं) चन्द्रगुप्तम् … उपस्थितवान् AvantiKa. 176.3; श्वेतद्वीपनिवाससुखमनुभवदिव जगदामुमुदे VāsaDa. 215.1; Hitopa. 2.15(3); यत्र … संलापामृतप्रमोदमनुभवतां गुरूणां लालनीयाभ्यामावाभ्यां बाल्योचितमुल्लसितम् MahāvīC. 7.27(6); App. B (302.21); अनुभवतामपि यस्यामुपभोगान् कामतः शरीरवताम्। शशधरखण्डविभूषितदेहलयः किल न दुष्प्रापः KuṭṭaMa. 4; 405; आत्मनश्च सुखतामजानन्तः सुखं चानुभवन्तः … भ्रान्ताः केचित् IṣṭaSi. 30.9; सुरतोत्सवमनुभवन्ती … प्रियङ्गुमञ्जरी गर्भं बभार NalaCam. 3.22(13); (वीरसेनः) प्रियया सह मकरकेतनकेलिफलमनुभवन्नतिचिरमासांचक्रे NalaCam. 4.9(42); 4.9(59); क्रीडासुखम् … अनुभवतः … पञ्चवर्षाणि तस्यान्तःपुरेऽतिचक्रमुः TilaMañ. 78.20; 244.7; तयोः … त्रिवर्गफलमनुभवतोः … मिथःसंभाषणकथः प्रावर्ततायमुदन्तः YaśasCam. i. 224.2; i.549.2; अहं तु पुत्रस्य श्रियमनुभवन्ती गृह एव प्रतिष्ठामि YaśasCam. ii. 148.7; धर्मफलमनुभवतोऽप्यधर्मानुष्ठानमनात्मज्ञस्य NītiVā. 1.33; स्वच्छन्दं सुचिरं सुखान्यनुभवन् … सीतया रामः पालयति स्म … मेदिनीम् RāmāCam. 6.109; अस्याः शैशवकलाखेलनसुखान्यनुभवन्त्याः प्रयान्ति दिवसाः UdaySuKa. 98.4; 9.10; सुखं वैषयिकं तस्यानुभवतोऽनिशम्।… जज्ञिरे सुताः TriṣaŚaPuC. ii. 5.44; श्रीचोडगंगदेवः सकलधरातलसाम्राज्यलीलासुखमनुभवन् … आज्ञ[ा]पयति EI. vi. 342.80; xii. 191.34; (वासुदेवाः) उत्तमर्द्धिम् … प्राप्ताः सन्तस्तामेव प्रत्यनुभवन्तः … विहरन्ति SthānṬ. 77A.2; PrabaK. 75.3; सा … वर्तते … अनेकवैभवाननुभवती ŚaṅkaVi.(Ā.) 254.4; (मन्त्री) सुखान्यनुभवन् … यौवनं निनाय PuruṣPa. 176.4; 225.5; सुरत्राणमाजेदीन (? मोजदीन)माता कादिकश्च … मन्त्रिवचसा गौरवमनुभवन्तौ हजयात्रां कृत्वा प्रत्यावृत्तौ PūrāPraSaṁ. 66.18; सोऽपि सर्वदा तस्यामनुरक्तः सुरतसुखम् अनुभवंस्तिष्ठति SiṁhāDvā. 29.0(6); 88.0(8); Bharaṭ. 4B.6; सौख्यं चानुभवन् स्फीतं स प्रजाश्चिरमन्वशात् (गोविन्दराजः) HammīMaKā. 4.31; विषयसुखमनुभवन्नपि तदधिकविषयान्तरदर्शनाकर्णनध्यानेषु प्रवर्तते (जीवः) ŚivārkaMaDī. i. 416.26 (*on* i. 3.8); NayaMañ. II. i. 11.22; NīlaVi. 37.6; राजराजेश्वरोऽनिर्वचनीयं तद्राज्यसुखमनुभवन् कालं नयन्नवतिष्ठते VetāPañ.(Jam.) 4.9; भूदिवस्पतिः। सुखान्यनुभवन् ParamāKā. 40.19; तिरुवेङ्कटक्षितिपतिः … प्रचुरतरमानन्दमनुभवन् … आत्मानं धन्यतमं मन्यते स्म ĀnandRa. 3.11(29); 1.24(6); मनोरमान् भोगाननुभवन्ती सुखेन वर्तसे VasaTi. 14.18; 46.6; (अहम्) वेशवीथिकायां संचरंस्तद्दर्शनसंलापादिकं चानुभवन् क्रमेण देव्यालयपरिसरं च प्राप्तः RasSa. 151(4); **2Aii** experiencing, undergoing (suffering, mishap, agony etc.) एवं क्लेशाननुभवन्नवशः …। नीयते … धर्मराजपुरं नरः MārkP. 10.69; त्वया विना साविना सायमनुभवन्ती दुःखानि VāsaDa. 207.1; 299.1; तात गुरुमेनमनिष्टकष्ट कष्टामिमामनुभवन्तमुपेक्षसे किम् RāmC. App. (2) 37.8; अदृष्टमद्रक्षणोपायतया च मनसि पुञ्जितासह्यदुःखां मुहुर्मुहुर्मूर्च्छामनुभवन्तीम् … बन्धुसुन्दरीमपश्यम् TilaMañ. 307.23; कासरः … आपगायाम् … नरकदुःखवेदनादप्यसह्यव्यथावेगमातङ्कसंगमनुभवन् … कथाशेषतामवाप YaśasCam. ii. 227.2; महामुनयो महर्षयश्च विप्राश्च राजानश्च … दुःखकरीम् … संसारकदर्थनामनुभवन्तः सततमेव मुदितमनसस्तिष्ठन्ति YogVā ii. 12.18; अत्यर्थमन्तर्व्यथामनुभवन्ती क्वापि कालं क्षपयति UdaySuKa. 71.13; 103.10; अनन्तदुःखरूपाणि फलान्यनुभवन्नपि। संसारविषवृक्षस्य जनो वैराग्यभाग् न हि TriṣaŚaPuC. ii. 1.95; स्वकर्मानुष्ठानहानौ मनःपीडामनुभवतां क्षत्रियविट्शूद्राणां दशरात्रमशौचम् HārLa. 9.21; शुशोच राजा … स्वदुर्नयस्यानुभवन्फलानि RāghPāṇ.(Ka.) 12.37; सः तत्र महतीं वेदनामनुभवन् … प्राणांस्तत्याज PuruṣPa. 8.26; सा … पराभवमनुभवन्ती … उवाच PuruṣPa. 91.7; भवता वध्या रिपवस्तदपनयाननुभवता YudhiVi. 6.95; क्लममिवानुभवन्नतिपानजं गिरितटे निषसाद पयोधरः Subhāṣi. 1751; नवरुजम् … मृगदृशः।… कराब्जव्यापारान् … रसयतो जनुः सर्वश्लाघ्यं जयति ललितोत्तंस भवतः BhāmiVi. 2.53; RasGaṅ. 507.9; कापि … तां दारुणामवस्थां स्वयमप्यनुभवन्तीव … मामप्राक्षीत् VasaTi. 26.14; **2Aiii** experiencing, i.e. passing through अयमत्रभवतो दशमो वत्सरो विद्यगृहमधिवसतः। प्रविष्टोऽसि षष्ठमनुभवन् वर्षम् Kād. 77.19; **2B** experiencing, relishing ता गोप्यस्तद्भावेन रसमनुभवन्त्यस्तस्या निकुञ्जदेव्या भावमापन्ना आसन् SāmaraU. 239.22; 291.23; सः … जन्मसहस्राणि सस्मारानुभवन्निव BuddhaC. 14.3; रतावसानिकं विधिमनुभवन्तौ … क्षणमवतिष्ठावहि DaśKuC. 74.13; भ्राम्यति चेतनः। सुभूरिलक्षसंख्यासु योनिष्वनुभवत् (v.l. °न् BJP. Ed.) सदा। वेदनीयं यथोपात्तं नानाकरणसंभवम् PadmP.(Ra.) 14.19; सर्वमिदमनुभवन्नपि न प्रत्येमि UttaRāC. 7.19 (32); मोहक्षयादनुभवन्नपि नाथ मर्त्यो नूनं गुणान् गणयितुं न तव क्षमेत KalyāMaSt. 4; (अहल्या) सेयम् … मुनेर्मन्युना निजमेव तदिन्द्रियदौर्बल्यमेवं विवर्तमानमनुभवन्ती … तस्मादन्धकारान्निरमुच्यत AnarghaRā. 2.6(22); नचिकेतसमब्रवीत् प्रीयमाणः … प्रीतिमनुभवन् महात्मा (यमः) KāṭhUBh. 111.8 (*on* 1.16); जाग्रत्स्वप्नयोर्मनः स्वातन्त्र्यमनुभवदहरहः सुषुप्तं वा प्रतिपद्यते PraśnaUBh. 273.13 (*on* 4.5); अन्योऽन्यस्य सचित्तावनुभवतो नायकौ यदिद्धमुदौ। आलोकनवचनादि स सर्वः संभोगशृङ्गारः Kāvyālaṅ.(Ru.) 13.1; (लक्ष्मणम्) तमसौ द्विपदानसौरभमथानुभवन्।… गन्धवहः … अभिययौ RāghPāṇ.(Dha.) 12.46; निद्रामुद्राविभेदं प्रथमम[नु]भवन् … धातुः [नाभिपद्मश्च]काशे EI. xviii. 33.49; तन्मयतामिवानुभवति भूभुजि … प्रस्तावपाठकः पपाठ NalaCam. 6.23(4); सर्वं हि सातिशयं निरतिशयदशामनुभवद् दृष्टम् ĀgaPrā. 2.13; इदं तु चित्रं यत् … ईदृशानपि दशाविशेषाननुभवतां न जातुचिज्जन्तूनां विरज्यते चित्तम् TilaMañ. 244.20; 418.10; यद्यपीयम् … बन्धुजनमकाण्ड एव दशमीं दशामानीय इदमवस्थान्तरमनुभवन्ती तिष्ठति YaśasCam. ii. 313.14; प्रमाणमत्र परिपालनक्रियामिमां मदीयामनुभवन्तो ननु भवन्त एव RāmāCam. 2.2(9); जन्मान्तरं मिथ्या तस्यानुभवतः … प्रबोधिनीं विद्यां गुरुः प्रायुङ्क्त KathāSaSāg. xii. 25.68; स्थायिव्यभिचारिलक्षणं चित्तवृत्तिविशेषं सामाजिकजनोऽनुभवन्ननुभाव्यते Kāvyānu.(He.) 67.19; (परिणमति ज्ञेयमर्थं ज्ञाता यदि नैव क्षायिकं तस्य। ज्ञानमिति तं जिनेन्द्राः क्षपयन्तं कर्मैवोक्तवन्तः) क्षपयन्तमनुभवन्तम् TātpaVṛ. 55.18 (*on* 1.42); 95.18 (*on* 1.75); (कृष्णः) निजानन्दमनुभवन् स्वगोष्ठम् उपससार GopāKeCan. 118.21; लज्जापङ्कनिमज्जनमनुभवन्त्या मेऽर्धावलम्बनोऽयमङ्गसंतापः PrasaRā. 5.0(32); अयम् … श्रवणाध्वनि पथिकीभावमनुभवन्नस्ति ViviṬīKa. 61.18; कर्मफलान्यनुभवतः क्षेत्रज्ञस्य प्रतिबिम्बितस्य भिदा कल्पनीया ŚaṅkaVi.(Ā.) 262.1; कुमारः … अधिकसंमानपात्रतामनुभवन् … स्वसमाचारवैषम्यमनुबभूव PuruṣPa. 21.28; अनुभवंस्तस्यैवोत्सुकविक्रियाम्।… स्नेहात्तं बबन्ध न भूपतिः RājTa.(Jo.) 594; अवलोकयति स्म … अपनिमेषचापलमात्मीयरूपसंपदमनुभवद्भिरिव दीपिकाप्ररोहैरवभासितभूषणप्रपञ्चम् … अगिमेषपतिम् YātrāPra. 3.199(12); व्यङ्ग्यम् … गुणीभूतमपि … दास्यमनुभवद्राजकलत्रमिव कामपि कमनीयतामावहति RasGaṅ. 21.2; **3i** attaining (a state), possessing or comprising of न च प्रत्यक्षाद् गरिष्ठं प्रमाणमस्ति, यतस्तद्विषयस्य भेदसिद्ध्या बाधामनुभवदप्रमाणमेतत् स्यात् HetuBiṬ. 84.4; 82.10; वधकखादकौ स्वार्थप्रवृत्तौ नष्टाश्वदग्धरथवदितरेतरोपकारमनुभवन्तौ, न पुनरन्यतरप्रयोजकौ ManuBh. i. 443.23 (*on* 5.51); इन्द्रियैः … विषयानभिपतद्भिरसमीचीनवृत्तितामनुभवन् … अयमात्मा सुखतामापद्यते TattvPradī.(Ā.) 85.2 (*on* 1.65); न हि … रजतभाजनानि शुक्तिभावमनुभवन्ति दृश्यन्ते Bhām. 545.5 (*on* iii. 2.3); न हि शुक्लगुणद्वारेण क्रियान्वयमनुभवतो गोत्वस्य कृष्णादिसंसर्गः संभवति NyāyRa. 920.11 (*on* 7.270); चण्डांशोरातपत्रस्थितिमनुभवतो मण्डलं दण्डलग्नम्। कर्तुं देवो गणेशः … तुण्डम् … उपरि सरलयन्नस्तु विघ्नच्छिदे वः AlaṅkāRa. 32(87); पृथ्वीराजसहायतामनुभवन्नेकं सुपर्णः … मानवत्वं दधौ PṛthvīVi. 9.88; न हि विरुद्धधर्मकृतं भेदमनुभवतो वस्तुनो

**अनुभावप्रतिपादन** (anubhāva-pratipādana) *n.* description of ensuants पुनरनुभावप्रतिपादने हि पुनरुक्तमतन्मयीभावो वा Loc. 25.19 (*on* 1.4)

**अनुभावप्रतीति** (anubhāva-pratīti) *f.* knowledge of ensuants सहृदयस्य हृदयसंवादबलाद्विभावानुभावप्रतीतौ तन्मयीभावेनास्वाद्यमान एव रस्यमानतैकप्राणः सिद्धस्वभावसुखादिविलक्षणः परिस्फुरति Loc. 24.18 (*on* 1.4)

**अनुभावप्रत्यय** (anubhāva-pratyaya) *m.* knowledge of ensuants स्थायिव्यभिचारिणां च भेदप्रतीतौ – यान्त्या तया वलितकन्धरमानतम् ··· इत्यादावनुभावप्रत्ययोऽपि दुर्लभीभवेत् AbhinBhā. ii. 222.7 (*on* 14.2)

**अनुभावप्रयुक्त** (anubhāva-prayukta) *adj.* **1** endowed with supernatural power एतानि हृतराज्यानां दैतेयानां स्म मातले। दीप्यमानानि दृश्यन्ते सर्वप्रहरणान्युत।··· अनुभावप्रयुक्तानि सुरैरवजितानि ह MahāBhā. v. 96.16; **2** employed or hurled with power, MahāBhā. v. 96.16.

**अनुभावप्रवर्तन** (anubhāva-pravartana) *adj.* propelled by supernatural power विद्यया ह्यनया राजन् वयं नृभ्यो विशेषिताः। अविशिष्टाश्च देवानामनुभावप्रवर्तिताः (v.l. अनुभावप्रवर्तनाः) MahāBhā. i. 158.44.

**अनुभावप्रवर्तित** (anubhāva-pravartita) *adj.* propelled by supernatural power विद्यया ह्यनया राजन् वयं नृभ्यो विशेषिताः। अविशिष्टाश्च देवानामनुभावप्रवर्तिताः MahāBhā. i. 158.44.

**अनुभावप्रवर्तिन्** (anubhāva-pravartin) *adj.* who propels (others) through supernatural power विद्यया ह्यनया राजन् वयं नृभ्यो विशेषिताः। अविशिष्टाश्च देवानामनुभावप्रवर्तिताः (v. l. अनुभावप्रवर्तिनः) MahāBhā. i. 158.44.

**अनुभावप्राधान्य** (anubhāva-prādhānya) *n.* predominance of ensuants अनुभावप्राधान्यं यथा शुद्धसारस्वतप्रवाहपवित्रसकलवाङ्मयमहार्णवपूर्णभावसंपादनात् द्विजराजस्येन्दुराजस्य AbhinBhā. i. 286.10 (*on* 6.31); i. 286.18 (*on* 6.31); अनुभावप्राधान्ये च तेषां (व्यभिचारिणाम्) प्राधान्यं दूरादित्यादिना उदाहरिष्यते Kāvyānu.(He.) 79.25.

**अनुभावप्रीयणा** (anubhāva-prīyaṇā) *f.* amiability through the efficacy or power अनुभावप्रीयणामनसिकारश्चतुर्विधानुभावदर्शनप्रीयणा। चतुर्विधानुभावो विपक्षप्रहाणं संभारपरिपाकः स्वपरानुग्रह आयत्यां विपाकफलनिःष्यन्दफलदानता च MaYānaSū. 71.20 (11.62)

**अनुभावबन्ध** (anubhāva-bandha) *m.* (Jain.) bondage in the form of intensity of Kārmic result जीवस्य ··· कर्मणो बन्धः प्रकृतिबन्धः ··· तथा अनुभावो विपाकः तीव्रादिभेदो रस इत्यर्थस्तस्य बन्धोऽनुभावबन्धः SthānṬ. 220B.14.

**अनुभावभाव** (anubhāva-bhāva) *m.* **1** presence of the ensuants धिगुच्छ्वसितवैशसं मम यदित्थमेकाकिनो धिगेव रमणीयतां त्वदनुभावभावादृते MālaMā. 9.209 (comm. वागङ्गसत्त्वाभिनये भावः); **2** feeling of togetherness, MālaMā. 9.209 (comm. तवानुभावः सहभावस्तत्र भावोऽभिप्रायः); **3** presence of dignity उत्पत्तिभूमिसुलभानुभवो न भूम्ना कस्याप्यहो व्यभिचरत्यनुभावभावः RājTa.(Ka.) 8.3395.

**अनुभावभाव्य** (anubhāva-bhāvya) *adj.* to be determined by the consequence धाता विधाता निजकर्मयोगात् विधेस्त्वभीष्टं त्वनुभावभाव्यम् BṛPaṛāSm. 12.75.

**अनुभावभिन्नत्व** (anubhāvabhinna-tva) *n.* the state of being different from ensuants अथ किं भावत्वम्। विभावानुभावभिन्नत्वे सति रसव्यञ्जकत्वमिति चेत्, रसकाव्यवाक्येऽतिव्याप्त्यापत्तेः RasGaṅ. 91.17.

**अनुभावभूता** (anubhāva-bhūtā) *adj.* (*f.*) turned into ensuants क्रोधशोकयोरनुभावभूता दृष्ट्यो वाचश्च व्रीडाजडा इति विशेषणानि संबध्यन्ते SaraKaṇṭhā. 586.15.

**अनुभावभेद** (anubhāva-bheda) *m.* variety of ensuants मनसो मोहः।··· मनसः प्रसाद इति स्वरूपभेदात्, तत्र निद्रारोदनादयोऽत्र पुलकादयोऽनुभावा इत्यनुभावभेदाच्च RasTa. 77.8; 77.12.

**अनुभावमहोदधि** (anubhāva-mahodadhi) *m.* ocean (in the form) of power त्वदनुभावमहोदधिशीकरैरवशपातिभिराहितशक्तयः। अवधिभेदवतीमुपभुञ्जते स्वपदसंपदमब्जभवादयः Yādavā. 3.17 (comm. त्वत्प्रभावाम्बुधेरम्बुकणैः त्वत्प्रभावलेशैः)

**अनुभावमात्र** (anubhāva-mātra) *n.* mere dignity or majesty अनुभावमात्रसमुपस्थितश्रियं सहसैव वीक्ष्य रघुनाथमीदृशम्।··· प्रमोहमुपयान्ति मातरः UttaRāC. 6.41.

**अनुभावमार्दव** (anubhāva-mārdava) *n.* mildness of ensuants (व्याजाच्चैवापराधाच्च वित्रासितकमेव च। पुनर्भयानकं चैव विद्यात् त्रिविधम्) व्याजादिति। कृतक इत्यर्थः। अनेनानुभावमार्दवं दर्शितम् AbhinBhā. i. 331.10 (*on* 6.80)

**अनुभावमुख** (anubhāva-mukha) *n.* [Inst.] by means of ensuants नन्वेवं विभावानुभावमुखेनाप्यधिकश्चमत्कारो दृश्यत इति विभावध्वनिरनुभावध्वनिश्च वक्तव्यः Loc. 66.8 (*on* 2.3); 'जाता लज्जावती मुग्धा प्रियस्य परिचुम्बने'। अत्र प्रथमे पादे 'आसीन्मुकुलिताक्षी सा' इति लज्जाया अनुभावमुखेन कथने युक्तः पाठः SāhiDa. 421.10.

**अनुभावयत्** (anu-bhāvayat) *adj.* [*f.* -ntī] **1Ai** causing to enjoy **ii** causing to suffer **Bi** causing (oneself) to experience, i.e. meditating upon **ii** causing to experience **Ci** causing to feel, i.e. touching **ii** causing to feel or relish **2A** causing to know **B** causing to perceive, exhibiting, displaying (through gesture) **3** (used in primitive sense) realising **1Ai** causing to enjoy अनुष्ठीयमानः स्वफलमनुभावयन्न कश्चिद्धर्मोऽधर्ममनुबध्नाति NītiVā. 29.15 (comm. आत्मीयफलं प्रयच्छन्); **1Aii** causing to suffer श्वभ्रादिपातानशनैर्मृत्युरिष्टतमोऽपि मे। अनुभावयता क्लेशं न दत्तो बत वेधसा KathāSaSāg. xii. 7.16; क्लेशमनुभावयतः कारुणिकस्य वैद्यस्य वैषम्यनैर्घृण्यं प्रसज्यते ŚivārkaMaDī. ii. 50.21 (*on* ii. 1.35); **1Bi** causing (oneself) to experience, i.e. meditating upon (ऋषयः) य एव लोकानां शमनुभावयन्तो भगवतो विष्णोर्यत्परमं पदं प्रदक्षिणं प्रक्रमन्ति BhāgP. v 22.17; **1Bii** causing to experience स्वस्वरूपानन्दमनुभावयंस्तं प्रधानीकरोति AṇuBh. 359.23 (*on* iv. 4 21); कामनीयकनिधे भवान् पूर्णसंमदरसार्णवं कमपि योगिगम्यमनुभावयन्।··· कृष्ण परिपाहि माम् Nārāy. x. 69.11; **1Ci** causing to feel, i.e. touching कामुको दन्तोष्ठनासिकादीनवयवाननुभावयन् तस्यां सक्तो भवति TātpaṬ.(Vā.) 641.2 (*on* iv. 2.3); **1Cii** causing to feel or relish अन्यत् सर्वमिव तिरोदधत् ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको रसः KāvyPra. 93.3; परेभ्यो दर्शयन्नेवं श्रावयन्ननुभावयन्।··· संतुष्टमानसः। प्राप्नोति मुक्तिम् ··· शान्तेनैव रसेन सः BhāvPra.(Śā.) 135.2(6); **2A** causing to know द्विपदक्रमिधावनभ्रमिप्लुतिभेदाननुभावयन् हयम्। स जयन्तः ··· सुखमुच्चैःश्रवसं व्यराजत VīraBhā. 8.25; **2B** causing to perceive, exhibiting, displaying (through gesture) यदूरुशोभामनुभावयन्ती रम्भापि दम्भातिशयं मुमा(मो?)च PadyāTa. 157; कदाचिदहं भिक्षार्थमटन्ती सायंतनसमये ··· कदलीमण्डपे विरहविसंष्ठुलैरङ्गैरनङ्गवेदनारसमनुभावयन्तीव कामपि कदलीमालिङ्ग्य स्थिताम् ··· तां पृष्टवती VasaTi. 28.12; **3** (used in primitive sense) realising देहादहंकृतिं हित्वा ममत्वमितरेषु च। केवलं ब्रह्मभावत्वमात्मनो ह्यनुभावयन् BṛBrahmaS. iii. 3.9.

**अनुभावयितुम्** (anu-bhāvayitum) *inf.* **A** to cause to experience श्रावितोऽस्मि श्रियं शत्रोः ···। अनुभावयितुं मन्ये यत्नः संप्रति मां विधेः MudrāRā. 6.15; तेषाम् (विदुषाम्) अपि मध्ये माध्यंदिनचरणगुरवः ··· फगदहद्विजा एव जानते समाधिजमथ च ध्वनिजन्मानमानन्दमेकपदेऽनुभावयितुम् AmṛUda. 5.18(2); सा (विद्या) च स्वोत्तराणि तानि (कर्माणि) न विनाशयति ···। किंतु स्वर्गादिवैचित्रीमनुभावयितुं रक्षत्येव GoviBh. 276.11 (*on* iii. 4.33); **B** to cause to perceive न च रजतमर्थयमानस्य शुक्तिकाशकलज्ञानं तद्रूपमनुभावयितुं प्रभवति SarvaDaSaṁ. 16.492.

**अनुभावयित्वा** (anu-bhāvayitvā) *ger.* having caused to perceive यस्मै भक्ताय यल्लीलाविशिष्टं स्वरूपमनुभावयित्वा प्रभुर्भवति तद्गुहायां तल्लीलाश्रयभूतमक्षरस्वरूपं वैकुण्ठलोकवदाविर्भावयति AṇuBh. 261.4 (*on* iii. 3.54)

**अनुभावयोग** (anubhāva-yoga) *m.* connection with ensuants विभावस्थाय्यनुभावयोगः क्रमाद्विशेषणत्रयेण दर्शितः AbhinBhā. i. 340.9 (*on* 6.82(6))

**अनुभावरूपता** (anubhāvarūpa-tā) *f.* the state of being of the form of ensuants भावशब्देन ··· चित्तवृत्तिविशेषा एव विवक्षिताः।··· तेषां तु योग्यतावशाद्यथायोगं स्थायिसंचारिविभावानुभावरूपता संभवति AbhinBhā. i. 342.19 (*on* 7.1)

**अनुभावरूपत्व** (anubhāvarūpa-tva) *n.* the state of being of the form of ensuants विभावादयो वक्ष्यन्ते। सात्त्विकाश्चानुभावरूपत्वान्न पृथगुक्ताः SāhiDa. 75.1.

**अनुभावलक्षण** (anubhāva-lakṣaṇa) *n.* definition of ensuants भावानामपि लक्षणं रसलक्षणमेव पूरयति। विभावव्यभिचार्यनुभावलक्षणेन रसलक्षणमेव पूर्यते AbhinBhā. i. 341.17 (*on* 6.83); अनुभावलक्षणं तु – अनुभावो विकारस्तु भावसंसूचनात्मकः AlaṅkāŚe. 20.32(13)

**अनुभावलिखित** (anubhāva-likhita) *adj.* drawn on (the basis of) feeling, i.e. imagination चेतश्चित्रपटेऽनुभावलिखितम् ··· प्रतिरूपमस्य ···। एकस्मिन्समये ··· पलितव्याजेन तत्कर्णयोराचख्यौ ··· जरेत्याहन्त्रिका दूतिका VasaViKā. 14.11.

**अनुभाववत्** (anubhāva-va(n)t) *adj.* possessed of resolution, resolute अनुभाववता गुरु स्थिरत्वात् ··· धनुर्धनंजयेन। स्वबलव्यसनेऽपि ··· मित्रमिवानतिं प्रपेदे Kirātā. 13.15 (comm. निश्चयबुद्धिमता)

**अनुभाववर्ग** (anubhāva-varga) *m.* group of ensuants रत्यात्मनः स्थायिभावस्य व्यभिचारिणः साधारणीभूतोऽनुभाववर्गः प्रकाशितः Loc. 103.18 (*on* 2.23); अप्रधानत्वं जडे विभावानुभाववर्गे व्यभिचारिनिचये च ··· संभवतीति तदतिरिक्तः स्थाय्येव तथा चर्वणापात्रम् AbhinBhā. i. 281.22 (*on* 6.31); Kāvyānu.(He.) 76.24; विभावकृतं तत्सौन्दर्यम् ··· भाति। तदनुगतत्वेन केलीविभ्रमभङ्गुरनर्मवचोमहिम्ना चानुभाववर्गः ··· प्रतिभाति AbhinBhā. i. 286.8 (*on* 6.31); Kāvyānu.(He.) 80.17.

**अनुभाववर्णन** (anubhāva-varṇana) *n.* description of ensuants ननु मरणानुभाववर्णनेनेदानीं किं कृत्यं, युद्धवीररौद्रादावप्येतदनुभाववर्णने किं प्रयोजनम् AbhinBhā. ii. 426.22 (*on* 18.38)

**अनुभाववश** (anubhāva-vaśa) *m.* [Abl.] on account of power or efficacy हृन्मन्त्रं भ्रामयेत्ततः।··· तत्कालं तत्कुलोद्भूतमनुभाववशाद् द्विज PauṣkS. 27.283.

**अनुभाववशंवदा** (anubhāva-vaśaṁvadā) *adj.* (*f.*) dependent on the majesty कुवलयप्रतिमा द्युतिरस्य (रघुपतेः) तु प्रविकसत्यनुभाववशंवदा PrasaRā. 6.44 (comm. प्रभावस्य ··· आश्रिता)

**अनुभाववशतस्** (anubhāvavaśa-tas) *adv.* due to the force of prowess तेऽपि त्रिविष्टपसदो विजिता भवद्भिर्यस्यानुभाववशतो विजितैरपि प्राक्। कालः ··· भुवनत्रयेऽत्र क्रीडति HarVi. 38.39.

**अनुभावविजृम्भित** (anubhāva-vijṛmbhita) *n.* manifestation of greatness दामोदर तवैवेदमनुभावविजृम्भितम् PāṇḍaC. 14.316.

**अनुभावविद्** (anubhāva-vid) *adj.* who knows the greatness कृष्णप्राणान्निर्विशतो नन्दादीन्वीक्ष्य तं ह्रदम्। प्रत्यषेधत्स भगवान् रामः कृष्णानुभाववित् BhāgP. x. 16.22.

**अनुभावविभावबोध** (anubhāvavibhāva-bodha) *m.* knowledge through ensuants and excitants (अत्र विभावानुभावबलादुत्कण्ठा प्रतीयत एव) अनुभावविभावबोधानन्तरमेव तन्मयीभवनयुक्त्या ··· स्वसंविदानन्दचर्वणागोचरोऽर्थात्माभिलाष° ··· °वितर्कादिशब्दाभावेऽपि स्फुरत्येव Kāvyānu.(He.) 132.13.

**अनुभावविभावसंपद्** (anubhāvavibhāva-sampad) *f.* abundance of ensuants and excitants करुणातिशयोऽनुभावविभावसंपदोद्दीपितः Loc. 230.15 (*on* 3.44)

**अनुभावविशेष** (anubhāva-viśeṣa) *m.* **1** peculiar majesty (तौ दंपती) मा भूदाश्रमपीडेति परिमेयपुरःसरौ। अनुभावविशेषात्तु सेनापरिवृताविव RaghuVa. 1.37; **2** particular type of ensuants अत्र चानुक्ता अपि सात्त्विका व्यभिचारिणोऽन्येऽपि चानुभावविशेषाः प्रतीयन्ते SaraKaṇṭhā. 573.15.

**अनुभावविषयविभाग** (anubhāvaviṣaya-vibhāga) *m.* division of the objects of ensuants (नानावस्थाः प्रकृतयः) अङ्गादिभिः ··· अनुभावविषयविभागं नामोपपत्तिं देशकालादिविभागं चार्पयद्भिः स्फुटतमतामानीयन्ते AbhinBhā. iii. 109.10 (*on* 21.3)

**अनुभाववैचित्र्य** (anubhāva-vaicitrya) *n.* diversity of ensuants सा (भ्रुकुटिः) हि तादृशी शोकस्य विभावो दुःखानलश्च तथानुचितकारी क्रोधस्य तच्च विभागद्वयं झटिति पुरः पतितमनुभाववैचित्र्यमाधत्ते Kāvyānu.(He.) 26.23.

**अनुभावव्यक्तक्रोध** (anubhāvavyakta-krodha) *m.* anger revealed through ensuants गम्भीरस्य प्रभोरनुजीविगतोऽनुभावव्यक्तक्रोधोऽपि परस्थो भवेत् AbhinBhā. i. 314.15 (*on* 6.48)

**अनुभावव्यभिचारिवैचित्र्य** (anubhāvavyabhicāri-vaicitrya) *n.* diversity of ensuants and transitory feelings शृङ्गारस्य द्वौ भेदौ ···। तयोरपि विभावानुभावव्यभिचारिवैचित्र्यम् KāvyPra. 148.6.

**अनुभावव्यभिचारिसंयोग** (anubhāvavyabhicāri-saṁyoga) *m.* combination of ensuants and transitory feelings विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः NāṭyaŚā. 6.34 = Loc. 57.8 (*on* 1.21) = KāvyPra. 87.1; रतिः ··· रसान्तरैः पृथक् पृथग्विभावानुभावव्यभिचारिसंयोगान्निष्पद्यमानैः संकीर्यमाणा ··· प्रतीयते SaraKaṇṭhā. 574.14; 578.13; 579.10; 584.3.

**अनुभावव्यभिचारिसंयोजन** (anubhāvavyabhicāri-saṁyojana) *n.* combination of ensuants and transitory feelings रसध्वनिस्तु ··· विभावानुभावव्यभिचारिसंयोजनोदितस्थायिप्रतिपत्तिकस्य प्रतिपत्तुः···आस्वादप्रकर्षः Loc. 67.9 (*on* 2.3)

**अनुभावसंचय** (anubhāva-sañcaya) *m.* collection of ensuants प्रतिभासते। विश्रान्तिलक्षणस्तम्भविलोकनवैचित्र्यगात्रतानवतारतम्यपुलकवैवर्ण्यप्रभृतिस्त्वनुभावसंचयः प्रधानतया AbhinBhā. i. 286.18 (*on* 6.32)

**अनुभावसंचारिसंयोग** (anubhāvasañcāri-saṁyoga) *m.* combination of ensuants and transitory feelings विभावानुभावव्यभिचारि (v. l. संचारि) संयोगलक्षणाया रसनिष्पत्तेः SaraKaṇṭhā. 578.13.

**अनुभावसंचार्यौचित्य** (anubhāvasañcāry-aucitya) *n.* propriety of ensuants and transitory feelings विभावभावानुभावसंचार्यौचित्यचारुणः। विधिः कथाशरीरस्य Dhvanyā. 3.10.

**अनुभावसद्भाव** (anubhāva-sadbhāva) *m.* existence of ensuants नटे रससंभवः किमनुभावादिना भावनासंभवेन वा। नाद्यः ···। किं च सामाजिकेषु यथोचितमनुभावसद्भावेऽपि त्वया तेषां रसाश्रयतानङ्गीकारात् RasāSu. 173.13 (2.165)

**अनुभावसप्तक** (anubhāva-saptaka) *n.* group of seven supernatural powers कलौ युगे बुद्धतया स्थितो हरिर्ददाति यत् कारुणिको जनान् प्रति। तदापदस्मादनुभावसप्तकं सः PṛthvīVi. 2.40.

**अनुभावसंपद्** (anubhāva-sampad) *f.* excess of power (पार्थ) दीपितस्त्वमनुभावसंपदा गौरवेण लघयन्महीभृतः Kirātā. 13.38; सा विभूतिरनुभावसंपदां भूयसी तव यदायतायति ŚiśuVa. 14.5.

**अनुभावसंपादन** (anubhāva-sampādana) *n.* acquisition of power किमन्यदप्यनुभावसंपादनेन संवीतविग्रहमाग्रहव्यापृताक्षोऽपि लोकः स्तोकमपि नालोकयति देहिनम् TilaMañ. 376.8.

**अनुभावसाम्य** (anubhāva-sāmya) *n.* similarity of ensuants संभोगशृङ्गारो वर्णनीयवीरव्यभिचारिणः क्रोधस्यानुभावसाम्येन विवक्षितः SāhiDa. 443.10.

**अनुभावस्तिमित** (anubhāva-stimita) *adj.* motionless, i.e. startled on account of the supernatural power (स्वयंप्रभा) परिवेषयति स्म सादरं हरिवीरानथ भक्ष्यजातिभिः। समभोजयदङ्गदं चिरादनुभावस्तिमितम् RāmC. 13.48.

**अनुभावस्वरूप** (anubhāva-svarūpa) *adj.* of the form of ensuants लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः ···। तद्रूपाः सात्त्विका भावाः ··· तद्रूपा अनुभावस्वरूपाः SāhiDa. 143.16.

**अनुभावांश** (anubhāvāṁśa) *m.* part of ensuants 'चञ्चद्भुज' इति च परिन्यासोऽनुभावांशं पुष्णाति AbhinBhā. iii. 62.9 (*on* 19.105)

**अनुभावाकर्षण** (anubhāvākarṣaṇa) *n.* drawing along, i.e. continuation of ensuants 'याते ··· मधुरिपौ ··· सोत्कण्ठया।··· उत्कमुत्कूजितम्।' इत्यत्र ··· उत्कमित्यनेन तूक्तानुभावानुकर्षणं कर्तुं सोत्कण्ठशब्दः प्रयुक्तः Loc. 25.18 (*on* 1.4); Kāvyānu.(He.) 133.2.

**अनुभावातिशय** (anubhāvātiśaya) *m.* excess of magnanimity लोकसीमातिक्रमेण विशेषव्यवस्थया पर्वतानुभावभणनं सोऽयमनुभूयमानमाहात्म्यातिशयस्यैव भेदोऽनुभावातिशय उच्यते SaraKaṇṭhā. 542.18; 542.11.

**अनुभावात्मन्** (anubhāvātman) *adj.* of the nature of ensuants हेतुभिर्विभावाख्यैः कार्यैश्चानुभावात्मभिः सहचारिरूपैश्च व्यभिचारिभिः प्रतीयमानः स्थायी भावः ··· रसः AbhinBhā. i. 272.21 (*on* 6.31(3))

**अनुभावादि** (anubhāvādi) *adj.* ensuant etc. उद्दीपनविभावेभ्यः स्मृतिहेतौ पटीयसि। अनुबन्धोऽनुभावादेरनुबन्धोऽस्य कथ्यते SaraKaṇṭhā. 557.9; 597.8; अभिधेयानां विभावानुभावादीनामविनाभूता रसादय इति लक्ष्यन्ते Loc. 56.18 (*on* 1.21); 146.23 (*on* 3.14); 169.24 (*on* 3.20); न हि लोके विभावानुभावादयः केचन भवन्ति AbhinBhā. i. 292.18 (*on* 6.33(2)); i. 272.11 (*on* 6.31(3)); RasāSu. 173.11 (2.165)

**अनुभावादिसूचन** (anubhāvādi-sūcana) *n.* indication, i.e. suggestion (of the sentiment) by means of ensuants etc. रत्यादिकानां भावानामनुभावादिसूचनैः। यत् काव्यं बध्यते सद्भिस्तत् प्रेयस्वदुदाहृतम् KāvyālaṅSāSaṁ. 4.2.

**अनुभावादिहेतु** (anubhāvādi-hetu) *adj.* having ensuants etc. as the cause विशेषेणाभितः काये स्थायिनं चारयन्ति ये। अनुभावादिहेतूंस्तान् वदन्ति व्यभिचारिणः SaraKaṇṭhā. 557.1; AlaṅkāŚe. 20.36.

**अनुभावाद्य** (anubhāvādya) *adj.* ensuants etc. मधुमाधवौ। अभिख्यावीचिविक्षेपैरपृथग्भावचित्रितैः। समेतैरनुभावाद्यैः सक्ताविव रसोत्तमौ Yādavā. 10.3.

**अनुभावानुबन्धा** (anubhāvānubandhā) *adj.* (*f.*) having association with, i.e. arising from ensuants (रतिः) त्रिधानुभावानुबन्धा रसोत्कर्षं यथारति। पुष्यन्ती ··· विलोक्यताम् BhāvPra.(Śā.) 131.12(6)

**अनुभावान्तर** (anubhāvāntara) *n.* another ensuant एषु च 'शृङ्गारम्' इत्यादिषु श्लोकेषु चकारा विभावानुभावान्तरनिरासशङ्कां पराकर्तुम् AbhinBhā. i. 332.12 (*on* 6.82)

**अनुभावापरिज्ञान** (anubhāvāparijñāna) *n.* absence of the perfect knowledge of ensuants ननु मरणानुभाववर्णनेनेदानीम् ··· किं प्रयोजनं, तदनुभावापरिज्ञाने प्रवेशकैरपि कथं वर्णनं स्यात् AbhinBhā. ii. 426.22 (*on* 18.38)

**अनुभावापर्यवसायिन्** (anubhāvāparyavasāyin) *adj.* not culminating into an ensuant उद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावापर्यव-

सायिनः स्थिताः Kāvyānu.(He.) 143.3.

**अनुभावापेक्षा** (anubhāvāpekṣā) *f.* [Inst.] with reference to an ensuant अनुभावापेक्षया विभावव्यभिचारिणाम्, व्यभिचार्यपेक्षया विभावानुभावानां चान्यतमत्वम् Kāvyānu.(He.) 80.14.

**अनुभावाप्रतीति** (anubhāvāpratīti) *f.* absence of experience, i.e. relish of ensuants चन्द्रादय उद्दीपनालम्बनविभावाः शृङ्गारयोग्या अनुभावाप्रतीत्या आस्वादनापर्यवसायिनः स्थिताः AlaṅkāŚe. 21.2(34)

**अनुभावाभाव** (anubhāvābhāva) *m.* absence of ensuants सर्वचेष्टोपरमादनुभावाभावेनाप्रतीयमानता स्यात् Loc. (KSS. Ed.) 391.9 (*on* 2.26); (शान्तरसे) निश्चेष्टत्वादनुभावाभाव इति प्रत्युक्तम् AbhinBhā. i. 330.9 (*on* 6.83); यत्कैश्चिज्जीमूतवाहनस्य धीरोदात्तत्वं प्रतिष्ठितं तत् प्रत्युक्तमेव। न च तदीया पर्यन्तावस्था व्यावर्णनीया येन सर्वथेष्टोपरमादनुभावाभावेनाप्रतीयमानता स्यात् Kāvyānu.(He.) 99.14.

**अनुभावाभास** (anubhāvābhāsa) *m.* false appearance of ensuants यदा तु विभावानुभावाभासाद् रत्याभासोदयस्तदा विभावानुभावाभासाच्चर्वणाभास इति रसाभासस्य विषयः Loc. 66.11 (*on*2.3); AbhinBhā. i. 295.14 (*on* 6.39); Kāvyānu.(He.) 62.22.

**अनुभावाभिनयादिव्यवहार** (anubhāvābhinayādi-vyavahāra) *m.* usage such as ensuants, acting etc. कविनटशिक्षार्थमेव सर्वमिदं प्रकरणम्। लोके विभावानुभावाभिनयादिव्यवहाराभावात् AbhinBhā. i. 327.20 (*on* 6.71)

**अनुभावावसर** (anubhāvāvasara) *m.* occasion or scope for ensuants विभावसमय एव रसनीयस्यानुभावावसरेऽवस्थावेशवैरस्यास्पदस्य पश्चाद् व्यभिचारिणः स्वामेव रसनीयतां चित्रयन्तः सातिशयं पुष्यन्ति AbhinBhā. i. 306.11 (*on* 6.45).

**अनुभावासद्भाव** (anubhāvāsadbhāva) *m.* absence of ensuants (शान्तः) अनुभावासद्भावादि( v.l. °द्य PARIKH's Ed.)मादिमध्यसंभाव्यमानभूयोव्यभिचारिसद्भावात् प्रतीयते एव Kāvyānu.(He.) 99.18.

**अनुभाविक** (anubhāv-ika) *adj.* [*f.* -ā] **i** which produces direct perception or cognition कार्यान्वयस्य वाक्यार्थतया पदानामेव कार्यान्विते अनुभाविका शक्तिः BhāṭṭCin. i. 137.24 (*on* i. 1.7); **ii** of which one has experience, i. e. proved by experience, cf. **अननुभाविक.**

**अनुभावित** (anu-bhāvita) *adj.* [*f.* -ā] **1Ai** caused or made to experience (ऋषयः) निकुञ्जदेव्या स्वलोकदर्शनमनुभाविता अभूवन् SāmaraU. 246.19; अहम् ··· कोशदासेन यत्नवदत्युदारं स्नानभोजनादिकमनुभावितोऽस्मि DaśKuC. 105.14; पुंसस्त्रिवर्गो विहितः सुहृदो ह्यनुभावितः। न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते BhāgP. v. 5.28; इत्थमनुभावितरासरसातिरेकपरंपरापचेलिमनिर्भरानन्दाद्वयविस्मृतरसान्तरमपरिचितोचितानुचितविचारचातुरीचमत्कारम् ··· रासक्रीडामहोत्सवं निर्वर्त्य KaṁVa. 4.47(6); **1Aii** caused to undergo (suffering) कमलदीर्घिके ··· क्लेशमनुभावितासि TilaMañ. 301.22; तव स्नेहाद्व्रजे किंचिन्न दुःखमनुभावितम्। युवयोर्नित्यसंसर्गाज्जातं सुखमनुत्तमम् ĀdiP. 25.5; अहम् ··· पुराकृतैः कर्मभिरनुभावितश्च भूयांसं क्लेशम् UdaySuKa. 36.25; सः ···। स्वदुर्नयफलं देव्याः प्रकोपेनानुभावितः RājTa.(Ka.) 6.255; 8.1380; **1Bi** caused to realise (मुनिः) मनो ब्रह्मणि युञ्जानः ··· परम्। गुणावभासे विगुण एकभक्त्यानुभाविते BhāgP. iii. 24.43 [*but* APTE experienced]; **1Bii** caused to think स्वयं स्वर्गस्य कचितः स्वप्ने चिदणुखण्डकः। ब्रह्मादेः ··· देहदृष्ट्यानुभावितः YogVā. iv. 18.52; **2A** made powerful, empowered तत्रैव मे विहरतो भुजदण्डयुग्मं गाण्डीवलक्षणम् ··· देवाः। सेन्द्राः श्रिता यदनुभावितमाजमीढ तेनाहमद्य मुषितः पुरुषेण भूम्ना BhāgP. i. 15.13; याः काश्च ··· विभूतयः ···। ता मह्यमाख्याह्यनुभावितास्ते BhāgP. xi. 16.5; **2B** protected वयं च सर्वे भवतानुभाविता विभावयामो भुवनानि सप्त BhāgP. x. 63.37; **3** made to manifest, enriched उत्साहः स्थायिभावः ··· सर्वस्वत्यागादिभिरनुभावैरनुभावितः ··· दानवीरतां भजते SāhiDa. 188.4; नयननिमीलनादिभिरनुभावितः स्थायी निर्वेदः प्रतीयते RasGaṅ. 44.2; 47.2; 291.1; विभावितः प्रभावाद्यैर्दानाद्यैरनुभावितः। भावितः स्मृतकार्श्याद्यैरुत्साहो वीरतां व्रजेत् SāhiSā. 5.97.

**अनुभाविताशय** (anubhāvitāśaya) *m.* mind made to experience स वै ···। प्रवृद्धभक्त्या ह्यनुभाविताशये निवेश्य वैकुण्ठमिमं विहास्यति BhāgP. iii. 14.47.

**अनुभाविन्** (anu-bhāvin) *adj.* (also used as noun) **1** who is born after, younger one, *sapiṇḍa* अनुभाविनां तु परिवापनम्। न समावृत्ता वपेरन् HirŚS. xxvi. 3.35 (45.29); ĀpaDS. i(3). 10.6; शावं दुःखमनुभवन्तीत्यनुभाविनः सपिण्डाः ··· अनु पश्चाद् भवन्तीत्यनुभाविनोऽल्पवयसः ··· पुत्रा इति केचिन्मन्यन्ते Mitā. 333.4 (*on* 3.17); अनु पश्चात् भवन्ति जायन्त इत्यनुभाविनो भ्रातरः SmṛtiCan. vi. 113.19; अनुभाविनः कनिष्ठाः NirṇaSi. 416.26; **2A** who perceives, eye-witness अनुभावी तु यः कश्चित् कुर्यात् साक्ष्यं विवादिनाम् ManuSm. 8.69; अनुभावी साक्षाद् द्रष्टा ManuBh. ii. 105.27 (*on* 8.69) = Aparā. 671.8 (*on* 2.72); **2B** expert ग्रामप्रतिष्ठानकाले भवा उत्पत्तिसहभुवो मौलाः ··· अथवा मौला अनुभाविनः ManuBh. ii. 188.22 (*on* 8.259); अनुभावी कार्याभिज्ञः SmṛtiCan. iii. 181.16; अनुभावी येन तत् कार्यं प्रसङ्गादप्यनुभूतम् ManvaVi. 917.11 (*on* 8.69); अनुभावी – तदर्थानुभवशीलः VīraMi. (Vyavahāra.) 121.4 [showing signs of feeling, APTE]

**अनुभावैकनिधि** (anubhāvaikanidhi) *m.* **A** the only abode of powers अनुभावैकनिधिना ··· श्रीशिङ्गभूभुजा साङ्गमनुभावा निरूपिताः RasāSu. 97.6 (1.312½); **B** the only abode, i. e knower of ensuants, RasāSu. 97.6 (1.312½)

**अनुभावोत्पत्ति** (anubhāvotpatti) *f.* origination of ensuants तदेवानुभावोत्पत्तौ यथा SaraKaṇṭhā. 571.10.

**अनुभावौचित्य** (anubhāvaucitya) *n.* propriety of ensuants स्थाय्यौचित्यं हि व्याख्येयत्वेनोपक्रान्तं नानुभावौचित्यम् Loc. 145.21 (*on* 3.14)

**अनुभाव्य** (anu-bhāvya) *adj.* [*f.* -ā] **Ai** to be experienced पूर्वजन्मन्यशुभं कृतम्। तच्चानुभाव्यम् ṬupṬ. 37.3 (*on* iv. 3.28); TantrRa. 188.13 (*on* iv. 3.28); द्वितीयेन च वरेणोत्तीर्णदेहात्मानुभाव्यफलसाधनभूताग्निविद्या वृता BrahmSūBh.(Rā.) 248.7 (*on* i. 2.12); 580.21 (*on* iii. 1.25); यो यदन्तःकरणो यत्कर्म चक्रे, तदन्तःकरणेनैव तेनानुभाव्यम् ŚrutaPra. ii. 373.30 (*on* ii. 3.36); तत्कथाविषयो न भवति अनुभववेद्यमेव भवति चेदस्यानुग्रहस्त्वयि तदा भवतैवानुभाव्यम् CaitaCa. 142.4 (6); स्फटिक ··· परीक्षाविधिषु त्वयैव भङ्गोऽनुभाव्यो न च हीरकेण PadyaVe. 722; **Aii** to be undergone (suffering) कूर्मक्रोडझषादिरूपविगतिर्नैवानुभाव्या मया TripuDi. 1.40; न तद्व्यावृत्तहिंसिधातुप्रवृत्तिनिमित्तकल्पनाक्लेशोऽनुभाव्यः PūrvottaVāNaMā. 57.9; महाराजोऽप्येवं कष्टमनुभवति, इतः परमपि कियदनुभाव्यमनेन CitraMī. 80.6; **Bi** to be perceived or cognised निराकृते ह्यनुभाव्य आकारेऽनुभाव्याभावेनानिष्टमप्यनुभवस्यासत्त्वं बलादापद्यते TātpaṬ.(U.) 198.10 (*on* 5(2). 14); 239.18 (*on* 5(3). 1); (पुरुषः) प्राकृतत्वेनाचिद्रूपतयानुभाव्यः TattvVai. 8.21 (1.4); 8.28 (1.4); स्वप्नदृशैवानुभाव्यं तत्कालमात्रावसानमित्याश्चर्यतया मायेत्युक्तम् VedāntSā.(Rā.) 257.1 (on iii. 2.3); BrahmSūBh.(Śrī.) ii. 227.3 (*on* iii. 2.3); एतेनानुभूतिरनुभाव्या न भवत्यनुभूतित्वादित्यादिप्रयोगोऽपि परास्तः TattvPradī.(Ci.) 7.12; घटवदनुभाव्यं च भवद्भिरिष्यते ज्ञानम् SyādvāMañ. 12(52); अनुभूतिरनुभाव्या वस्तुत्वात् घटादिवत् NyāyPari. 122.1; 127.3; यदनुभाव्यं (तदननुभूति) न तदनुभूतिरूपम् ŚatDū. 109.22; परामर्शरूपा वाक् ··· गुरूपदेशादिना स्वयमेवानुभाव्या Bhāsk. i. 303.20 (*on* i. 6.1); i. 189.13 (*on* i. 4.8); (used as noun) that which is to be perceived or cognised 'नेदं रजतम्' इत्यनुभवान्तरादनुभूतस्यैव वानुभूयमानस्य वासत्त्वमवगम्यते, न त्वनुभवानुभाव्ययोरैक्यम् TātpaṬ.(U.) 240.18 (*on* 5(3). 3); न हेतुत्वं ग्राह्यलक्षणं नाप्याकारार्पणक्षममस्य हेतुत्वं तस्माद् ग्राह्यलक्षणाभावाद् बुद्धेरन्योऽनुभाव्यो नास्ति NyāyKa. 125.15; यद्यप्यनुभवान्नान्योऽनुभाव्योऽनुभवितानुभवनं तथापि बुद्ध्यारूढेन बुद्धिपरिकल्पितेनान्तस्थ एवैष प्रमाणप्रमेयफलव्यवहारः Bhām. 437.18 (*on* ii. 1.28); नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः। ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते ŚāstrDī. 55.7 (*on* i. 1.5); SarvaDaSaṁ. 2.196; TarkBhā. (Mo.) 37.25; व्यवहृतिरूपज्ञानालीकभेदयोर्नियामकान्तराभावेऽपि कारणसामर्थ्यमाश्रित्य विषयविषयीभावमिच्छति नन्वनुभवानुभाव्ययोः ĀtmaTaVi. 459.12; अनुभवश्च द्विधा – परामर्शभेदात् कदाचित् स्वात्मपरामर्शपूर्वकमनुभाव्यं परामृशति PratyabhiVi. i 187.8 (*on* i. 4.8); अनुभाव्ये स्वतःप्रवणस्यानुभावस्यान्यद्वारा तदुपरक्तत्वम् Nyāyāmṛ. 219B. 6; **Bii** to be realised अनुभाव्यं सुखं विकारभावासंस्पृष्टं विशुद्धं परिपूर्णब्रह्मस्वरूपम् BrahmSūBh.(Śrī.). ii. 497.7 (*on* iv. 4.19); ब्रह्मणो जीवान्यत्वसूचनया तत्प्रसादलभ्यपाशनिवृत्तिपूर्वकमनुभाव्यस्य तस्य प्रयोजनत्वमप्युपपादितं भवति ŚivārkaMaDī. i. 94.1 (*on* i. 1.1)

**अनुभाव्य** (anubhāv-ya) *ger.* **A** having caused to undergo (suffering) एतां च प्रणामकर्मणा ··· कोमलाङ्गयष्टिं कष्टमनुभाव्य बहुमानार्थिजनपदव्यामारोपितः (नृपकुमारः) TilaMañ. 315.15; रागद्वेषमोहाः ··· हि पुरुषं संसारदुःखमनुभाव्य क्लेशयन्तीति क्लेशाः Bhām. 376.15 (*on* ii. 1.36); अनुभाव्य व्यथाम् ··· गणरात्रेण तं प्राणाः ··· जहुः RājTa.(Jo.) 780; याच्ञापदं मरणदुःखमिवानुभाव्य ··· सन्तः ··· अतिददति Subhāṣi. 274; **B** having caused to experience पानकेलिमनुभाव्य ···। तल्पसद्मनि जगाम स सार्धं कुन्तलेन्दुरथ चन्दलदेव्या VikraDeC. 11.68.

**अनुभाव्यता** (anubhāvya-tā) *f.* **A** the state of being that which is to be experienced यद्यपि जन्मायुषोरेव ह्लादपरितापपूर्वभावितया तत्फलत्वम् ··· तथाप्यनुभाव्यतया भोग्यतया (ह्लादपरितापयोः) भोगकर्मतामात्रेण भोगफलत्वमिति मन्तव्यम् TattvVai. 74.11 (*on* 2.14); **B** the state of being that

which is to be perceived or cognised स्वयमेवानुभूतित्वाद्विद्यते नानुभाव्यता PañcDa. 3.13 (comm. आनन्दमयादीनां साक्षिणोऽनुभवरूपत्वादेवानुभाव्यत्वं नास्ति)

**अनुभाव्यत्व** (anubhāvya-tva) *n.* **Ai** the state of being that which is to be realised स्वयमेवानुभवत्वाद् यद्यप्येतस्य नानुभाव्यत्वम्। सकृदप्यभावशङ्का न भवेद् बोधस्वरूपसत्तायाः SvātmNi. 16; **Aii** the state of being that which is to be perceived or known अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गात् IṣṭaSi. 1.5; ĀtmaSi. 20.18; 28.4; BrahmSūBh.(Rā.) 34.5 (*on* i. 1.1); PramāMī. 3.23 (*on* i. 1.3); Syādvā-Mañ. 12(50); ŚatDū. 107.23; NyāyPari. 132.10; भेदादीनामनुभाव्यत्वेन च रूपादेरिवानुभूतिधर्मत्वं न संभवति BrahmSūBh.(Rā.) 26.1 (*on* i. 1.1); विषयतः स्मृतिविवेचनमन्ततो वाक्येनाप्यनुभाव्यत्वात् … अशक्यम् KhaṇḍanKhā. 381.24; अनवच्छिन्नस्यात्मभूतस्य ज्ञानस्यानुभाव्यत्वानभ्युपगमात् ŚrutaPra. iA. 164.30 (*on* i 1.1); अज्ञातायाः एव पदार्थनिष्ठाया लक्षणाया वृत्तित्वाङ्गीकारात् न संसर्गस्य पदस्मारितत्वम्, किं त्वनुभाव्यत्वम् AdvaiSi. 673.3; **B** the state of being that which is to be experienced कृत्स्नस्य भगवदात्मकत्वेनानुभाव्यत्वात् ŚrutaPra. ii. 45.31 (*on* i. 3.18); सता संपन्नोऽपि सुप्त एव प्रतिबुद्ध उत्तिष्ठति, ज्ञानवैधुर्येण कृतस्य कर्मणस्तेनानुभाव्यत्वात् BrahmSūBh.(Śrī.) ii. 241.2 (*on* iii. 2.9)

**अनुभाव्यत्वनिबन्धन** (anubhāvyatva-nibandhana) *adj.* dependent on the state of being that which is to be directly perceived or cognised घटादिगतमप्यननुभूतित्वं तत्तद्वस्तुप्रतिनियतघटत्वादिप्रयुक्तं न त्वनुभाव्यत्वनिबन्धनम् ŚatDū. 111.2.

**अनुभाव्यत्वप्रतिक्षेप** (anubhāvyatva-pratikṣepa) *m.* refutation of the state of being that which is to be directly perceived or cognised व्यतिरेकदृष्टान्तेऽपि त्वदुक्तन्यायेनानुभाव्यत्वप्रतिक्षेपस्य शक्यत्वात् साध्याव्यावृत्तो दृष्टान्तस्स्यात् ŚatDū. 109.23.

**अनुभाव्यत्वप्रतीति** (anubhāvyatva-pratīti) *f.* knowledge of the state of being that which is to be directly perceived or cognised अनुभूतेरनुभाव्यत्वप्रतीतिर्भ्रान्तिरिति चेत्, किं घटादेरनुभाव्यत्वप्रतीतिर्भ्रान्तिर्न देवानां प्रियस्य ŚatDū. 109.27; 110.22.

**अनुभाव्यत्वमात्रनिषेध** (anubhāvyatvamātra-niṣedha) *m.* negation of the state of being that which is to be directly perceived or cognised in general अनुभाव्यत्वमात्रनिषेधोऽप्यशक्यः ŚatDū. 109.30.

**अनुभाव्यत्वरूप** (anubhāvyatva-rūpa) *adj.* having the nature of the state of being that which is to be directly perceived or cognised अनुभाव्यत्वरूपतद्व्यतिरेकः सुग्रह इति चेत् न तथापि यदनुभाव्यं न सानुभूतिः NyāyPari. 133.5.

**अनुभाव्यत्वसंबन्ध** (anubhāvyatva-sambandha) *m.* relation of the state of being that which is to be experienced (with experiencer) ब्रह्मणि मुक्ते चेति। अनुभाव्यत्वसंबन्धो विवक्षितः नाधाराधेयभावः ŚivārkaMaDī. ii. 492.23 (*on* iv. 4.14)

**अनुभाव्यत्वसंभव** (anubhāvyatva-sambhava) *m.* possibility of the state of being that which is to be directly perceived or cognised अनुभूतेरनुभाव्यत्वसंभवमुपपाद्य तदसंभवे परोक्तमनुमानं दूषयति ŚrutaPra. iA. 134.16 (*on* i. 1.1)

**अनुभाव्यत्वस्थिति** (anubhāvyatva-sthiti) *f.* establishment of the state of being that which is to be directly perceived or cognised प्रागुक्तप्रत्यक्षेण तत्रत्यानुभूतिशब्देनैव चानुभूतेरनुभाव्यत्वस्थितावननुभूतित्वप्रसङ्गात् ŚatDū. 109.21.

**अनुभाव्यत्वासंभव** (anubhāvyatvāsambhava) *m.* impossibility of the state of being that which is to be realised शुद्धेऽपि घटादिस्वरूप इव शक्तिधीसंभवात् शुद्धमपि शक्त्यानुभूयतामिति — चेन्न, तावतापि शुद्धब्रह्मणः शक्त्यानुभाव्यत्वासंभवात् LaCandr. 785.38.

**अनुभाव्यधर्मविरह** (anubhāvyadharma-viraha) *m.* absence of the property which is to be realised अद्वितीयत्वं धर्म इति चेन्न। अनुभवस्वरूपस्य ब्रह्मणोऽनुभाव्यधर्मविरहस्य भवतैवोपपादितत्वात् BrahmSūBh.(Rā.) 85.2 (*on* i. 1.1)

**अनुभाव्यपुण्यपापफल** (anubhāvya-puṇyapāpaphala) *n.* result of the merit or demerit which is to be experienced देहवियोगादूर्ध्वं ब्रह्मप्राप्तिव्यतिरेकेणानुभाव्यपुण्यपापफलाभावात् … अध्वन्याम्नातमपि … वाक्यं देहवियोगकाले संगमयितव्यम् VedāntDī. 181.18 (*on* iii. 3.27)

**अनुभाव्यभूमन्** (anubhāvya-bhūman) *adj.* whose majesty is to be experienced अनन्यभक्तैरनुभाव्यभूम्ना दत्तेक्षणो दानपतिस्त्रिधाम्ना।… पुरोधसां पूजनमाचचार Yādavā. 13.79.



**अनुभाव्यभेद** (anubhāvya-bheda) *m.* difference of those which are to be directly perceived or cognised प्रतिभासनिमित्ता च भेदाभेदव्यवस्था। इतरथा 'नीलमिदम्' 'पीतमिदम्' इत्यनुभाव्यभेदोऽपि परस्परतो न स्यात् TātpaṬ.(U.) 240.16 (*on* 5(3). 5); अनुभाव्यभेदस्वाभाविकमात्मनश्चैतन्यगुणमवच्छिनत्ति ĀtmaSi. 54.18.

**अनुभाव्यमाना** (anu-bhāvyamānā) *adj.* (*f.*) who is being caused to be undergone अहम् … स्खलितेऽनुभाव्यमानावतारणकमङ्गलानि … शैशवमतिवाहितवती TilaMañ. 264.2.

**अनुभाव्यातिरिक्त** (anubhāvyātirikta) *adj.* which is different from that which is to be directly perceived or cognised 'नेदं रजतम्' … अत्रानुभाव्यातिरिक्तानुभवाभावोऽस्त्येव, आनुमानिकविषयाभ्युपगमात् TātpaṬ.(U.) 240.20 (*on* 5(3).5)

**अनुभाव्याद्यभाव** (anubhāvyādy-abhāva) *m.* absence of that which is to be directly perceived or cognised etc. अनुभाव्याद्यभावेऽनुभूतित्वासंभवात् Nyāyāmṛ. 517B.5 (comm. आत्मरूपज्ञानस्य विषयाद्यभावात्)

**अनुभाव्याभाव** (anubhāvyābhāva) *m.* absence of that which is to be directly perceived or cognised निराकृते ह्यनुभाव्य आकारेऽनुभाव्याभावेनानिष्टमप्यनुभवस्यासत्त्वं बलादापद्यते TātpaṬ.(U.) 198.10 (*on* 5(2).15); न चानुभाव्याभावे अनुभूतित्वायोगः AdvaiSi. 773.4.

**अनुभाष्** (anu-bhāṣ-) I. Ā. **1Ai** to call out, to address or speak to **ii** to instruct **B** to answer, to reply, (pass.) to be answered, to be replied **2** to declare, i.e. to confess or admit **3A** to restate, to repeat or to refer to (a proposition) **B** to restate or repeat (for the sake of refutation of an argument) **4** to describe **5** to speak after **1Ai** to call out, to address or speak to नमुचिर्ह वै नामासुर आस तमिन्द्रो निविव्याध … तस्य पदा शिरः प्रचिच्छेद ततो रक्षः समभवत्तद्ध स्मैनमनुभाषते क गमिष्यसि क मे मोक्ष्यसऽ इति ŚatBr. V. iv. 1.9; महामात्रवचः श्रुत्वा रामो दशरथं तदा। अन्वभाषत वाक्यम् Rāmā. ii. 33.1; तदा स भगवान् देवः परितुष्टोऽनुभाषते। वद साधकराजेन्द्र यत्ते चेतस्यवस्थितम् JayāS. 29.25; **1Aii** to instruct नैतदाश्चर्यमार्याया यन्मां त्वमनुभाषसे Rāmā. ii. 110.2; **1B** to answer, to reply तदैव कुरवः सर्वे निराशा जीवितेऽभवन्। भीष्मद्रोणौ यदा राजा न सम्यगनुभाषते MahāBhā. v. 48.47; कैकेय्या वचनं श्रुत्वा पितुर्दशरथस्य च। अन्वभाषत धर्मात्मा रामः Rāmā. ii. 861*(2); ज्ञातार्थं प्राश्निकैर्वाक्यं त्रिरुक्तं नानुभाषते। योऽनुद्भाव्य स्वमज्ञानम् TārkiRa. 347.13; (pass.) to be answered, to be replied नागच्छन्नुपहूयते न वचनोत्थानासनैः पूज्यते नो पृच्छन्ननुभाष्यते न च दृशा सान्द्रादरं वीक्ष्यते।… प्राज्ञः शठैर्हस्यते KāmVa. 1.5; **2** to declare, i.e. to confess or admit यथा यथा नरः सम्यगधर्ममनुभाषते। समाहितेन मनसा विमुच्यति तथा तथा। भुजङ्ग इव निर्मोकात् MahāBhā. xiii. 113.4; ManuSm. 11.228; BrahmP. 218.7; **3A** to restate, to repeat or to refer to (a proposition) एतत्तावत् परमतमनुभाषते Śarka. 41.23; प्रयोजनस्वरूपप्रतिपादनपूर्वकं प्रयोजनपदोपादानप्रयोजनप्रदर्शनार्थं भाष्यमनुभाषते TātpaṬ.(Vā.) 40.16 (*on* i. 1.1); 147.8 (*on* i. 1.4); पूर्वपक्षबीजमनुभाषते Bhām. 129.9 (*on* i. 1.5); भाष्यमर्थतोऽनुभाषते TantrRa. 28.10; योऽपि चेत्यादिनोक्तं पूर्वपक्षं तावदनुभाषते NyāySu.(So.) 26.6 (*on* i. 2.7); यदुक्तं वैश्वदेवीपदादामिक्षाप्रतीतावामिक्षापदवैयर्थ्यमिति तदनुभाषते VedāntKa. 396.6 (*on* iii. 3.1); परप्रश्नमनुभाषते मामिति ŚrutaPra. iA. 169.17 (*on* i. 1.1); ii. 165.20 (*on* i. 4.23); आक्षेपं तावदनुभाषते … एवं हीति YuktiSneha. 108.32 (*on* i. 1.5); **3B** to restate or repeat (for the sake of refutation of an argument) इदानीं तु यदुक्तम् …। तद् दूषयितुमनुभाषते Kāśi. i. 247.27 (*on* 4.111); प्रकृतसिद्ध्यर्थमेकदेशिमतं दूषयितुमनुभाषते Bhām. 100.1 (*on* i. 1.4); यत्त्वभेदादेव ग्रहणे परमपि गृहीतमेवेत्युक्तम् … तदनुभाषते निराकरोति न तदिति NyāyRa. 301.17 (*on* 5(3).119); 168.12 (*on* 4.111); पुनः परोक्तमनुभाषते – यत्पुनरिति। दूषयति – नेति PrakaVi. 82.21; आर्थगुणनिषेधं परिहर्तुं श्रुतिप्रतिपन्नमर्थमनुभाषते ŚrutaPra. iA. 193.21 (*on* i. 1.1); कैश्चित् … अन्यथा व्याख्यातं तन्निराकर्तुमनुभाषते Subodhi. 8.12 (*on* 2.16); 36.27 (*on* 2.80); परमेश्वरस्य संहर्तृत्वे पूर्वपक्ष्यापादितं दोषं परिहर्तुमनुभाषते ŚivārkaMaDī. i. 344.15 (*on* i. 2.9); **4** to describe, cf. **अनुभाषितुम् A**; **5** to speak after, cf. **अनुभाषण B.**

**अनुभाषण** (anu-bhāṣaṇa) *n.* **Ai** restatement, i.e. recapitulation (of an objection for refuting) अनुभाषणं परिचोदना वा TantrVā. 779.22 (*on* iii. 2.14); 821.3 (*on* iii. 3.6); न पूर्वत्वादिति सूत्रम् … विसंवादस्यानुभाषणम् NyāySu.(So.) 78.27 (*on* i. 2.22); द्रव्याश्रयगुणवाचिपदसामानाधिकरण्यं च न स्यात् इत्यनुभाषणमिदं सूत्रम् MīmāKau. i. 148.24 (*on* i. 3.34); **Aii** restatement, repetition यच्छब्दज्ञानादर्थज्ञानम्, अयं संबन्धः … कृतक इति

पूर्वमुपपादितम्, इति चानुभाषणात् स एवायं संबन्ध इति गम्यते NyāyRa. 642.16 (*on* 5(15).11); आत्मन एव केवलास्तिबुद्धिबोध्यत्वमिति स परमार्थ इत्युक्तम्। श्रोतुश्च मैत्रेयस्य ⋯ अनुभाषणात् BrahmSūBh.(Rā.) 109.16 (*on* i. 1.1); सर्वभूतमात्मवस्तु भवतीत्यर्थः।⋯ 'योऽयं योगस्त्वया प्रोक्तः साम्येन' इत्यनुभाषणात् GītāBh.(Rā.) 345.1 (*on* 6.29); वाक्यान्तरेणानुभाषणेऽपि तत्प्रयोजनसिद्धेः तत्प्रसिद्धपदैरेवानुवादेनानुभाषणमिति ⋯ आचार्यैरेव ⋯ अनुभाषणस्याङ्गीकृतत्वात् TārkiRa. 350.4; 'सर्वे च कामाः' इत्यनुभाषणात् यच्छब्दो भोग्यजातपरः Śruta-Pra. ii. 36.3 (*on* i. 3.13); श्रुत्यन्तरमिदमिति द्रष्टव्यम्। अर्थतो वानुभाषणं बोध्यम् MayūMāli. 606.9 (*on* ix. 2.6); **B** act of speaking after अनु-भाष्येत्यनेनैव सिद्धत्वात् वाचेत्यनर्थकं स्यात्। अनुभाषणे वागिन्द्रियस्य साधनत्वात् ManuBh. i. 222.2 (*on* 3.30); कदाचिद् गौरीशः कलहमभजत् कीरकविना।⋯ कीरकृते त्वाक्षेपे कीरवदनुभाषणं ज्यायः ŚivLī. 20.60; **C** speaking to, addressing स मन्त्रो मन्त्रिभिर्यत्र व्यसनाद्वार्यते नृपः। शिष्टचित्तग्रहायैव प्रमत्त-स्यानुभाषणम् RāmāMañ. 301.18 [Vaija. 33.24 and ŚabdaRa.(Vā.) 1858 give *anubhāṣaṇa* as synonym of *anuvāda*]; **D** reply, answer, i.e. reproduction (of meaning), cf. **अननुभाषण** [conversation, dialogue, APTE]

**अनुभाषणच्छायाप्रविष्ट** (anubhāṣaṇacchāyā-praviṣṭa) *adj.* who has entered the shadow, i.e. guise of replying or answering (imaginary questions) उत्तरत्वेन यानि कृतानि वाक्यानि 'मैवं ब्रवीषि' इति तैः प्रयोज-येदिति प्राक्प्रविष्टस्यैव पात्रस्य कर्तृत्वं परोक्तवचनमनुभाषणच्छायाप्रविष्ट एवं ब्रूयात् AbhinBhā. iii. 280.18 (*on* 25.87)

**अनुभाषणपुरस्सरम्** (anubhāṣaṇapuraḥsaram) *adv.* as preceded by the restatement (of an argument for refutation) प्रतिवादिनाप्यनुभाषण-पुरस्सरं वादिसाधनं दूषयित्वा स्वपक्षे साधनमभिधेयम् TārkiRa. 540.2 = Sarva-DaKau. 86.19.

**अनुभाषणभाष्यार्थ** (anubhāṣaṇabhāṣyārtha) *m.* sense of the commentary which is the repetition or restatement अनुभाषणभाष्यार्थमाह स्वत इति NyāyRa. 642.18 (*on* 5(15).12)

**अनुभाषणवाक्य** (anubhāṣaṇa-vākya) *n.* statement which is (of the nature of) repetition चोदयितुरनुभाषणवाक्ये 'सर्वे च कामाः' इत्यनुभाषणात् यच्छब्दो भोग्यजातपरः ŚrutaPra. ii. 36.3 (*on* i. 3.13)

**अनुभाषणव्याज** (anubhāṣaṇa-vyāja) *n.* [Inst.] under the pretext of repetition or restatement प्रश्नस्य त्रितयविषयत्वमनुभाषणव्याजेन दर्शयन् तदनन्तरमन्त्रस्यापि त्रितयविषयत्वमाह ŚrutaPra. ii. 109.28 (*on* i. 4.6)

**अनुभाषणश्लोक** (anubhāṣaṇa-śloka) *m.* verse which is (of the nature of) restatement अनुभाषणश्लोकपूर्वार्धफलितमर्थमाह ŚrutaPra.iB. 52.15 (*on* i. 1.1)

**अनुभाषणसामान्यपरिहार** (anubhāṣaṇasāmānya-parihāra) *m.* refutation of the restatement (of an earlier argument) in general (उपह्वये प्रतिप्रसवः) अनुभाषणसामान्यपरिहारो वा TantrVā. 651.20 (*on* ii. 4.28)

**अनुभाषणसूत्र** (anubhāṣaṇa-sūtra) *n.* aphorism meant for recalling or restating (an earlier argument) (आग्नेयवत्पुनर्वचनम्) अनुभाषण-सूत्रमेतत् TantrVā. 644.14 (ii. 4.15); 648.21 (*on* ii. 4.21); 1039.14 (*on* iii. 5.9); MīmāKau. ii. 125.17 (*on* ii. 4.22)

**अनुभाषणा** (anu-bhāṣaṇā) *f.* reproduction (of the words of a teacher), cf. **अनुभाषणाशुद्ध.**

**अनुभाषणाशुद्ध** (anubhāṣaṇā-śuddha) *n.* name of a type of *pratyākhyāna* (*lit.* perfect reproduction of the words of a teacher) [सर्वज्ञेन प्रत्याख्यानं देशितम्] अनुभाषणाशुद्धं यथा ⋯ [अनुभाषते गुरुवचनमक्षरपद-व्यञ्जनैः परिशुद्धम्। कृतप्राञ्जलिरभिमुखस्तत् जानीहि अनुभाषणाशुद्धम्] SthānṬ. 349B.10.

**अनुभाषणासामर्थ्य** (anubhāṣaṇāsāmarthya) *m.* inability of replying, i. e. reproducing (for refutation) वादिवाक्यार्थस्य प्रतिवादिनो यद-ज्ञानं तदज्ञानं नाम निग्रहस्थानं भवति। अविदितोत्तरविषयो हि कोत्तरं ब्रूयात्। न चाननुभाषणमेवेदम्, ज्ञातेऽपि वस्तुन्यनुभाषणासामर्थ्यदर्शनात् PramāMī. 71.7 (*on* ii. 1.34)

**अनुभाषणीय** (anu-bhāṣaṇīya) *adj.* to be answered, i. e. to be reproduced (for refutation) किं प्रतिवादिना सर्वमनुभाषणीयम् NyāyMañ. ii. 202.26; दूष्यमात्रमेवानुभाषणीयं न तु सर्वं वादिवाक्यम् TārkiRa. 349.10; न च तेनैव वादिवाक्येनानुभाषणीयमिति नियमः TārkiRa. 350.3.

**अनुभाषत्** (anu-bhāṣat) *adj.* addressing, conversing with असं-मूढस्य गृध्रस्य रामं प्रत्यनुभाषतः। आस्यात् सुस्राव रुधिरम् Rāmā. iii. 64.15.

**अनुभाषयत्** (anu-bhāṣayat) *adj.* (used in primitive sense) addressing, conversing with गुहोऽपि सह सूतेन सौमित्रिमनुभाषयन्। अन्व-जाग्रत्ततो रामम् Rāmā. ii. 44.26.

**अनुभाषा** (anubhāṣā) *f.* name of a type of *ālāpa* (consisting of four *svaras* and twenty-eight *tānas*) अष्टाविंशतिभिस्तानैरनुभाषा चतुस्स्वरैः BhāvPra.(Śā.) 190.17(7)

**अनुभाषित** (anu-bhāṣita) *adj.* **A** pointed out, referred to प्रसूतैर्मधुरैर्वाक्यैस्तत्त्वार्थमनुभाषितैः। कथं पापं करिष्यामि वरुण त्वय्यहं प्रभो Hari-Vaṁ. 1514*(2); **B** said afterwards उत्कण्ठितहृदयेन मया (स्वयूथमनु-स्मृत्येदम्) अभिहितम् (v.l. तदा मया समुपजातौत्सुक्येनानुभाषितम्) PañcT. 2.79(30) (257.11); **Ci** restated, repeated प्रथमाध्यायप्रतिपादितो हि प्रमाण-विवेक° ⋯ °विधिनिर्णयप्रविभागः ⋯ प्रपञ्चेनानुभाषितः TantrVā. 657.12 (*on* iii. 1.1); एतच्चोदनाचोद्यमनुभाषितम् NayaVi. 200.5 (*on* i. 1.5); भाष्यं व्याख्या-तुमनुभाषितम् TantrRa. 22.17; 293.1; वादिनोक्तस्य स्वेन चानुभाषितस्य वाक्यार्थस्य प्रतिषेधरूपमुत्तरं यदा प्रतिवादी न प्रतिपत्तुमीष्टे तदा तस्याप्रतिभा नाम निग्रहस्थानं भवति TārkiRa. 351.3; **Cii** replied, i.e. reproduced परपक्षे गृहीतेऽप्यनुभाषितेऽपि तस्मिन्नुत्तराप्रतिपत्तिरप्रतिभा नाम निग्रहस्थानं भवति PramāMī. 71.10 (*on* ii. 1.34); *n.* **A** speech, words महाभागवतोऽसुरः (प्रह्लादः)। उवाच स्मयमानांस्तान् स्मरन्मदनुभाषितम् BhāgP. vii 7.1; हनूमानपि तामाह श्रुत्वा सीतानुभाषितम् AdhyāRā. v. 3.61; **Bi** restatement (of an argument for refuting) यत्तूक्तम् ⋯ तद् दूषयितुमनुभाषते — एवमनुभाषिते दूषणमाह Kāśi. ii. 167.24 (*on* 5(3).189); **Bii** restatement, repetition उत्तरस्याप्रतिपत्तिर-प्रतिभेति प्राचामुपदेशः साधनाप्रतिपत्तेरप्युपलक्षणार्थः ⋯। अनुभाषितेऽप्युत्तराभावस्याप्य-वचनोपपत्तेः NyāyPari. 206.3; काचित् ⋯ निन्दापराण्यकथयद्वचनानि बाला। तानि प्रकोपमधिकं जनयांबभूवुस्तस्याः पुनः परिजनैरनुभाषितानि BhikṣāKā. 22.18.

**अनुभाषितुम्** (anu-bhāṣitum) *inf.* **A** to describe नास्य शक्यं बलं रूपं प्रभावो वानुभाषितुम् Rāmā. vi. 19.17; **Bi** to reply, i.e. to reproduce योऽनुभाषितुमकौशलः स उत्तरविषयापरिज्ञानादुत्तरमपि प्रतिपत्तुमसमर्थः NyāyMañ. ii. 202.27; ii. 203.28; **Bii** to repeat, to restate अभिव्यक्तिपक्षमनुभाषितुं छायापत्तिसंपर्कपक्षयोरभिव्यक्तिपक्षस्य चान्योन्यवैषम्यं दर्शयति ŚrutaPra. iA. 161.27 (*on* i. 1.1)

**अनुभाषितृ** (anu-bhāṣitṛ) *adj.* who speaks to or addresses क्षितीशं श्लाघ्यो भवान्स्वजन इत्यनुभाषितारम्। संयोजयां विधिवदास समेतबन्धुः कन्या-मयेन कुमुदः कुलभूषणेन RaghuVa. 16.86.

**अनुभाषिन्** (anubhāṣ-in) *adj.* [*f.* -ṇī] **A** who repeats (the words of others) दूताः किमपराध्यन्ते यथोक्तस्यानुभाषिणः MahāBhā. v. App. I. 12(67); भृत्यस्यास्यापराधः कः ⋯। विक्रीतनिजदेहस्य शुकस्येवानुभाषिणः PadmP. (Ra.) 8.187; **B** who speaks or addresses अकरुणः ⋯ तव परिचितः स्नेहः सम्यङ्मयेत्यनुभाषिणीम्।⋯ तन्वीम् ⋯ क इह भवतीं भद्रे निद्रे विना विनिवेदयेत् RasGaṅ. 106.14.

**अनुभाष्य** (anubhāṣ-ya) *ger.* **A** having pointed out, having explained or declared तस्य गुरोर्बान्धवानां राज्ञश्च समक्षं दोषानभिख्याप्यानुभाष्य पुनः पुनराचारं लभस्व ŚaṅkhaLiDS. 455; Mitā. 502.28 (*on* 3.294); प्रागेव तु करादानमनुभाष्य पुनः पुनः। संनिपत्य स्वविषये भयं राष्ट्रे प्रदर्शयेत् MahāBhā. xii. 88.24; एतावानर्थः सामान्यस्तस्यैतावान् प्रत्यंशः इत्यनुभाष्य ब्रुवन् साक्षिषु विभागं कारयेत् ArthŚā. ii. 34.4 (3.5); अधिवेदनमुपरिपरिणयनम्। तदासामनुभाष्य दोषं कर्तव्यम्, स्मृत्यन्तरात् BālaKrī. i. 78.19 (*on* 1.73); **Bi** having spoken to or addressed हरिष्यामि विनिक्षिप्तं सोममित्यनुभाष्य तम् (शक्रम्)। आजगाम ततस्तूर्णं सुपर्णो मातुरन्तिकम् MahāBhā. i. 30.13 (BhārBhāDī. संबोध्य); राजा तु स सर्वान्पृथिवीपतीन्। अनुभाष्य महाराज पुनः पप्रच्छ संजयम् MahāBhā. v. 57.29; प्रत्यर्च्य तान् राजा (v.l. राजानुभाष्यैतान्) ब्राह्मणानिदमब्रवीत् Rāmā. ii. 3.3; एवं तमनुभाष्याथ भगवान् प्रत्यगक्षजः। जगाम BhāgP. iii. 21.33; **Bii** having talked to, having conversed with गुहोऽपि सह सूतेन सौमित्रिमनुभाषयन् (v.l. °मनुभाष्य च) Rāmā. ii. 44.26; **Ci** having repeated or restated दृष्टान्तमनुभाष्य सूत्रेण परिहारो वक्तव्यः TantrVā. 1044.5 (*on* iii. 5.18); यत्तु ⋯ कृतकत्वानित्यत्वादयः शब्दग्रहणे न प्रतिभासन्त इत्युक्तम्, तदनुभाष्याह TātpaṬ.(U.) 264.21 (*on* 5(3).99); किं वान्यस्मात् प्राप्तमेवानु-भाष्य तस्या (मुक्तेः) रूपं ब्रह्मतत्त्वं विदध्यात् SaṁkṣeŚā. 2.216 (ii. 129.4); उक्तम् ⋯ अनुभाष्य पृच्छति Śarka. 4.19; भाष्यमनुभाष्य तात्पर्यं व्याचष्टे TātpaṬ. (Vā.) 42.15 (*on* i. 1.1); 144.4 (*on* i. 1.3); प्रश्नार्थमनुभाष्योत्तरमाह Abhin-Bhā. i. 343.15 (*on* 7.1); भाष्यम् ⋯ अर्थतोऽनुभाष्याक्षिपति TantrRa. 7.9; 160.16; भाष्यमनुभाष्यास्मिन् पक्षे योजयति NyāyRa. 100.19 (*on* 2.181); सदस्यानां तु ⋯ मन्दस्यानुभाष्य प्रतिपादनमिति कर्माणि TārkiRa. 208.10; **Cii** having made to repeat सहोभौ चरतां धर्ममिति वाचानुभाष्य च। कन्याप्रदान-

मभ्यर्च्य प्राजापत्यो विधिः स्मृतः ManuSm. 3.30 (*but* ManvaVi. नियम्य); **Ciii** having repeated or restated (an argument for refuting) यदुक्तम् …। तद् दूषयितुमनुभाषते …। एवमनुभाष्य दूषयति Kāśi. i. 247.27 (*on* 4.111); ii. 140.22 (*on* 5(3).99); iii. 226.13 (*on* 5(10).14); प्रतिपत्तिविधिपरा वेदान्ता इति तदनुभाष्य दूषयति Bhām. 117.1 (*on* i. 1.4); 436.10 (*on* ii. 2.26); भाष्यमनुभाष्याक्षिपति TātpaṬ.(Vā.) 49.24 (*on* i. 1.1); 698.18 (*on* v. 2.1): उभयोदाहरणपृष्ठ एव भाक्तमाहुरित्यनुभाष्य दूषयति Loc. 50.16 (*on* 1.17); प्रतीकेनानुभाष्याक्षिपति TantrRa. 195.6; अनुभाष्य परिहरति NyāyRa. 14.16 (*on* 1.43); 490.15 (*on* 5(8).51); यदपि मतं स्वात्मानमेव परिकल्पितभेदं गुरुः शास्तीत्यनुभाष्य तदप्यसंगतम् NyāyMa. 330.14; आशङ्कामनुभाष्य परिहरति BrahmSūBh.(Rā.) 173.2 (*on* i. 1.5); 615.10 (*on* iii. 3.1); अनुभाष्य निराकर्तुमाह NyāySu.(So.) 26.10 (*on* i. 2.7); 76.33 (*on* i. 2.22); आद्यमनूद्य …। द्वितीयमनुभाष्य दूषयन् … भाष्यभावमाह VedāntKa. 221.11 (*on* i. 4.22); यत्तु परैरस्य दूषणस्य प्रतिवचनं द्वेधा कृतम्, तदनुभाष्य दूषयति Śruta-Pra. iA. 50.18 (*on* i. 1.1); न च भवत्सिद्धान्तं यथावदनुभाष्य दूषयतां परेषामज्ञानमेवेति वचोऽर्थवत् NyāyKu. 47.7; विस्तरेण कुदृष्टिमतमनुभाष्य … शिष्यान्प्रत्युपदिशतो भाष्यकारस्यायं भावः ŚatDū. 77.18; **D** having repeated, i. e. recited repeatedly गायत्रीमनुभाष्यान्तर्जले प्राणायामशतं कुर्यात् DīpKa. 106.24 (*on* 3.306)

**अनुभाष्य** (anu-bhāṣya) *n.* name of a commentary (*lit.* a sub-commentary) भगवानानन्दतीर्थमुनिर्यथाचार्याभिप्रायमस्य भाष्यं विधायानुभाष्यमपि करिष्यन् NyāySu.(Ja.) 1A. 12 (*on* i. 1.1); बहुज्ञा एवेति। एतयोर्भाष्यानुभाष्ययोः NyāySu.(Ja.) 154B. 2 (*on* i. 1.12)

**अनुभाष्यतार्थता** (anubhāṣyatārtha-tā) *f.* the state of being meant for being repetition or restatement एतत्सूत्रार्थस्य पूर्वमुक्तत्वादनुभाष्यतार्थतयैतत्सूत्रम् NyāySu.(So.) 89.21 (*on* i. 2.28)

**अनुभास्** (anu-bhās-) I. Ā. to shine, cf. **अनुभासमान**; (*caus.*) to cause to shine, i. e. to illuminate (ब्राह्मणस्य) तपसा वीर तद् वनं तेजसावृतम्। आदित्य इव तं देशं कृत्स्नमेवान्वभासयत् SkandP. i(2). 1.34.

**अनुभास** (anubhāsa) *m.* a kind of crow, pw.; MW.

**अनुभासक** (anu-bhāsaka) *adj.* who causes to shine यस्येदं सकलं विभाति महसा तस्य स्वयंज्योतिषः … आत्मनो नान्यः कोऽप्यनुभासकः SarvaVeSāSam. 599.

**अनुभासत्** (anu-bhāsat) *adj.* shining through, DBHS.

**अनुभासमान** (anu-bhāsamāna) *adj.* shining, i.e. becoming known afterwards यदि सर्वोऽयं ज्ञानमनुभासमान आकारो ज्ञानस्यैवान्ये च पृथिव्यादयो भावाः कल्पिताः, एवं तर्हि … केन विशेषेणायं स्वप्नादिभ्रमाणामत्यन्तासन्नर्थ इष्यते Kāśi. ii. 175.16 (*on* 5(3).209)

**अनुभिक्ष्** (anu-bhikṣ-) I. P. (*caus.*) to make (one) subject of begging afterwards, i. e. to make (one) to give alms again सप्तागारांश्चरेद् भैक्ष्यं(क्षं) भिक्षितं नानुभिक्षयेत् ŚaṅkhaSm. 7.3.

**अनुभित्ति** (anubhitti) *adv.* along the partition or wall गार्हपत्याहवनीयाऽ उत्तरेण खरौ निवपति दक्षिणतोऽनुभित्त्युच्छिष्टखरम् KātyŚS. xxvi. 2.16.

**अनुभिद्** (anu-bhid-) VII. U. **1A** to break or cut along (the length) हतो वृत्रः।… तमिन्द्रोऽभ्यादुद्राव हनिष्यन्। स होवाच … मामुया भूवमिति स वै मेऽन्नमेधीति तथेति तं द्वेधान्वभिनत् ŚatBr. I. vi. 3.17; तं द्वेधान्वब्रमनुबिभेद ŚatBr.(K.) II. vi. 1.11; **1B** to breach बद्धं सेतुं को नु भिन्द्यात् (? कोऽनुभिन्द्यात्) MahāBhā. ii. 66.32; **2** (refl.) to appear forth अभिद्येतामक्षिणी चक्षुरेतयोः। तस्मात् सूर्यो न्यभिद्येतां (v.l. सूर्योऽन्वभिद्येतां Śrīdhara) कर्णौ श्रोत्रं ततो दिशः BhāgP. iii. 26.55.

**अनुभिद्य** (anubhid-ya) *ger.* having split or cut along पशुनैव पशु स्पृणोति व्युह्यावद्यति यथानुभिद्य शल्यं निर्हरति KāṭhS. 12.1 (i. 162.11)

**अनुभुक्त** (anu-bhukta) *adj.* enjoyed पैतृकं क्रीतमाधेयम् … वेणिस्तथा धूमशिखा … भुक्तानुभुक्तदशवर्षम्।… हीयते VāsiDS. 16.17.

**अनुभुज्** (anu-bhūj-) VII. U. [for Ā. cf. P. i. 3.66] **1A** to enjoy, to rejoice over एकोऽनुभुङ्क्ते सुकृतमेकश्चाप्नोति दुष्कृतम् MahāBhā. xiv. App. I. 4 (2200); सा मण्डनान्मण्डनमन्वभुङ्क्त KumāSam. 7.5; कार्तिकीषु … यामिनीषु …। अन्वभुङ्क्त … स चन्द्रिकाम् RaghuVa. 19.39; BrahmāṇḍP. ii. 4.14; तावच्चाभ्युदयं सौख्यं दिव्यमानुषगोचरम्। त्वयैव सममेतेऽनुभोक्तारः MahāP. 8.245; दैत्येश्वराणामनुभुङ्क्ष्व भोगान् BhāgP. vii. 10.11; व्रतानुभावेन सद्यः श्रेयोऽनुभोक्ष्यसे SkandP. iii(3).18.24; मयि तुष्टे सुता भोगाननुभुञ्जन्तु चाक्षयान् PadmP. ii. 3.57; सुखमनुभुङ्क्ते DhātuPra. 7.17 (120.2) = BhāṣāVṛ. *on* i. 3.66; बुद्ध्यादिकरणैर्भोगाननुभुङ्क्ते BhāvPra.(Śa.) 53.2(2); 13.23(1); अमर्त्यभोगाननुभुङ्क्ष्व शाश्वतान् Nalābhyu. 4.57; VasaTi. 37.4; (pass.) to be enjoyed वस्तूनि दुर्लभानि …। त्रिदशा(?शै)श्चापि मर्त्या(?र्त्यैं)श्चान्वभुज्यन्त SkandP. ii(2). 17.70; इह यत्क्रियते कर्म स्वर्गे तदनुभुज्यते ŚivaP. v. 20.38 (429B.1); संसार एव वरमस्तु। यत्र तावदन्तरान्तरापि दुःखकलुषितमपि कियदपि सुखमनुभुज्यते SyādvāMañ. 8(296); **1B** to experience, to undergo (suffering etc.) प्रागार्जितेन केनापि कर्मणा द्विज सांप्रतम्। अनुभुङ्क्ते फलम् PauṣkS. 20.10 = PāraS. 8.72; त्वम् … दुर्विनयवृक्षफलमनुभुङ्क्ष्व PañcT. 259.15 (Kos. Ed.) = Pañcā. 284.22; सोऽयं तस्माच्छोकमेवानुभुङ्क्ते SarvaVeSāSam. 631; कर्मणः कस्य वै दुःखमनुभुञ्जामि PadmP. ii. 106.9; सर्वानर्थवहेऽनुभुङ्क्ष्व नरकानेकाकिनी मन्थरे JānaPa. 7.30; (pass.) to be experienced, to be undergone (suffering etc.) आत्मनोपार्जितं कर्म चात्मनैवानुभुज्यते VarāṅgaC. 15.79; **2** to rule, to govern भीमो भूपतिरन्वभु[ङ्]क्त भुवन[म्*] न्यायात् समास्त्रिंशतम् EI. vii. 186.22; **3** to pass through (signs of zodiac) अङ्गारकः …। त्रिभिस्त्रिभिः पक्षैरेकैकशो राशीन् द्वादशानुभुङ्क्ते BhāgP. v. 22.14.

**अनुभुञ्जान** (anu-bhuñjāna) *adj.* [*f.* -ā] **1** experiencing स्वमेव सर्वतः पश्यन् …। स्वानन्दमनुभुञ्जानो निर्विकल्पो भवाम्यहम् KuṇḍiU. 27; स्वानन्दमनुभुञ्जानः कालं नय महामते ViveCū. 526; **2** taking food subsequently भुञ्जानमनुभुञ्जाना शयानमनुशायिनी। सा कामुकेति विज्ञेया BhāvPra.(Śa.) 291.9(10)

**अनुभुवि** (anubhuvi) *adv.* on the surface of the earth शूली क्रोधमादिदेश …। ज्वरो भवेति। सोऽयमेवमुमापतिनानुगृहीतो नानानामभिः सर्वतोऽनुभुवि विचरति AṣṭāSam. i. 257.11 (3.1)

**अनुभू** (anu-bhū-) I. P. (rarely Ā.) [for *vṛddhi* of the causal base, cf. P. iii. 1.66; for pf. of Ā., cf. P. i. 3.13; for *vṛddhi* in forms like *anubhāviṣyate*, *anubhāvitā* etc., cf. P. vi. 4.62] **1A** to be equal or superior to, to come to the same or higher level **B** to become subordinate to **C** to become faithful, to be in accordance with **D** to be similar, to resemble **2A** to acquire, to obtain, to attain, (pass.) to be acquired, to be obtained, to be attained **B** to attain, i. e. to undergo (modification) **3A** to experience, to relish, (pass.) to be experienced or relished, (*caus.*) to cause to experience or relish, (*caus.* pass.) to cause to be experienced or relished **B** to perceive, to know, to cognise, to understand, (pass.) to be perceived, to be known, to be cognised, to be understood, (*caus.*) to cause to perceive, know or understand, (*caus.* pass.) to cause to be perceived or cognised, to cause to be noticed **Ci** to enjoy (happiness etc.), (pass.) to be enjoyed, (*caus.*) to cause to enjoy, (*caus.* pass.) to cause to be enjoyed **ii** to experience, to undergo (suffering, grief etc.), (pass.) to be experienced, to be undergone, (*caus.*) to cause to experience or undergo, (*caus.* pass.) to cause to be experienced or undergone **D** to attend, to participate in, (pass.) to be attended, i. e. to be witnessed **E** to realise (oneness with the Supreme), (pass.) to be realised, (*caus.*) to cause, i. e. to enable to realise **4Ai** to occupy, i.e. to pervade **ii** to occupy with, i.e. to govern **iii** to occupy, i. e. to pass through **B** to hold, to encompass **5** to suffice for, to be sufficient (to produce) **6A** to follow, to be in succession, to appear in subsequent ritual **B** to appear or to be born subsequently **7** to undertake, to perform **1A** to be equal or superior to, to come to the same or higher level अत्राह ते मघवन् विश्रुतं सहो द्यामनु शवसा बर्हणा भुवत् ṚV. i. 52.11; अग्निना तपोऽन्वभवद् वाचा ब्रह्म TaiS. VII. iii. 14.1; TaiBr. III. viii. 17.3; ĀpaŚS. xx. 11.10; BaudhŚS. ii. 241.16; HirŚS. xiv. 2.26 (223.21); Atharva-prāyaścitta 5.6; तां संभवन्नत्यरिच्यत सोऽब्रवीन्न वै त्वानुभवामि JaimiUBr. i. 54.7; ज्यैष्ठ्यमश्नुते स ह्येनमनुभवति HirŚS. xvi. 1.2 (346.11); **1B** to become subordinate to उभे यत्त्वा भवतो रोदसी अनु ṚV. x. 147.1 (*but* MW.; APTE to turn or incline to); **1C** to become faithful, to be in accordance with अथ य एवैतमनुभवति यो वै तमनु भार्यान्बुभूर्षति स हैवालं भार्येभ्यो भवति ŚatBr. X. iii. 5.9 = XIV. iv. 1.20; BṛĀraU. i. 3.18; आप्तो वै बतायं याभो यो देवांश्च संवत्सरं चानुभवतीति। तस्मादाप्तोर्यामः ŚāṅkhaŚS. xv. 5.13; **1D** to be similar, to resemble मुखचरणरचितमनुभवति तृतीयः। चरण इह हि लक्ष्म … यदि भवति लवली सा VṛttaRa. 5.4; नीलोऽयम् …। अप्येको दशसु किरीटपीठिकासु द्राक्प्रेङ्खन्ननुभवतीन्द्रनीललीलाम् PrasaRā. 7.27; **2A** to acquire, to obtain, to attain न ते महित्वमनु भूदध द्यौः ṚV. iii. 32.11; ŚatBr. IV. v. 3.3; ŚatBr.(K.) V. vi. 1.3; पुरूरवाः पिशाचत्वं तत्रैवानुभविष्यति MatsyaP. 24.31; तस्य करणनियमे सदिङ्मुखम्। स्तम्भमनुभवति

… नभस्तलम् Kirātā. 12.28; महतः … °परिणामाः … विवृद्धिकाष्ठामनुभवन्ति YogBh. 86.1 (*on* 2.19) (TattvVai. प्राप्नुवन्ति); आनन्दातिशयेन किमप्यवस्थान्तरमनुभवामि Ratnā. 4.12(2); यदि चायं (ध्वंसः) हेतुमांस्तद्भेदादात्मभेदं किं नानुभवति HetuBiṬ. 82.9; सोऽपि क्रीडाकपित्वं क्षणमिषुनिवहैरन्वभूदत्र वाली MahāviC. 7.16 (198.2); नवरताम्बरतां मधुपोऽन्वभूत् HarVi. 3.8; दर्शपूर्णमासापूर्वसंबन्धमनुभवति अवघातः ManuBh. i. 200.15 (*on* 3.1); अवयवेभ्यश्चावयवी …। व्यतिरिक्तो हि तदग्रहेऽपि ग्रहणं कदाचिदनुभवेत् PrakaPañ. 68.5; (अशक्तत्वभावं नित्यम्) न चाजनकमिन्द्रियज्ञानविषयतामनुभवति PrakaPañ. 69.4; पौरुषेयं हि वचः … वक्तुस्तदर्थसिद्धिमनुरुध्यमानमेव प्रमाणभावमनुभवति ĀgaPrā. 2.2; यावद्धि पदार्था नान्योन्यान्वयमनुभवन्ति तावदप्रयोजनकं जायते Kāśi. iii. 185.16 (*on* 5(7).78); ये खलु नाद्यापि संभूतिमनुभवन्ति TattvPradī.(A.) 51.6 (*on* 1.38); दारुः … द्वैधीभावमनुभवति TātpaṬ.(Vā) 23.19 (*on* i. 1.1); यः पूर्वं क्वापि वाक्यालंकारभावमुपमादिरूपतयान्वभूत् Loc. 15.10 (*on* 1.4); त्रिदशवनितया सार्धमृद्धे विवाहे यागान्ति(?)स्तम्भशोभामनुभवति नभोबर्हि राजन् मुहूर्तम् UdaySuKa. 51.20; वेदान्तवाक्यान्यपि कार्यपरतयैव ब्रह्मणि प्रमाणभावमनुभवन्ति BrahmSūBh.(Rā.) 148.10 (*on* i. 1.4); तदुत्तरकालभाविनी अर्थज्ञानानुष्ठाने तस्यावान्तरव्यापारतामनुभवतः NītiMā. 3.6; यस्य चाङ्गभावः स कथं तदैव विवक्षितत्वात् प्राधान्यमनुभवेत् VyaktiVi. 35.22; यत्र पूर्वं पूर्वं प्रति क्रमेण परं परं विशेषणत्वमनुभवति स एकावल्यलंकारः AlaṅkāSa. 141.2; पिङ्गलकः … वनान्तरे … राजत्वमनुबभूव Pañca. 5.2; न हि बोध्यबोधकभाव एव सामान्यविशेषात्मना भिद्यमानोऽपि व्याप्त्यादिसंबन्धान्तरभावमनुभवति NyāyKu. 7.25; 112.3; रसस्य मुख्यत्वे सत्यपि … अङ्गित्वमनुभवन्ति भावशान्त्यादयः Ekāva. 3.1 (247) (107.12); वंशनालः। अनुभवति यदेष श्रीमदाभीरसूनोरधरमणिसमीपन्यासधन्यामवस्थाम् KṛṣṇaKa. 2.9; स पुनस्तां पतयालुं तथा मुष्टिप्रहारेण प्रहतवान् यथा सा त्रिखण्डतामन्वभूत् ViviṬīKa. 61.12; ज्वालैक्यप्रत्यक्षं तु … बाध्यतामनुभवतीति युक्तम् ŚatDū. 210.26; स्वस्यैवात्मा तु सिद्धिं मतिरनुभवति स्वान्ययोस्सिद्धिभावम् TattvMu. 2.5; कोऽसौ, पाञ्चाल इत्याद्यनुभवतु वचः सिद्धतात्पर्ययोगम् TattvMu. 4.73; गुणभूतापि क्रिया या साधनमनुसंबन्धमनुभवति PariVṛ.(Sī.) 169.15; मालिन्यं तर्हि कस्मादनुभवसि, मिलत्कज्जलैर्मालवीनां नेत्राम्भोभिः Kuval. 66 (113); ते चत्वार एकात्मका आत्मस्त्रीकलहात् पृथक्त्वमन्वभवन् VetāPañ.(Jam.) 110.13; त एते सद्यमादातुं प्रागल्भन्त यदा यदा। अपराद्धपृषत्कत्वमन्वभूवंस्तदा तदा ParamāKā. 48.89; सर्वसाम्राज्यपदवीमतीवानुभविष्यसि ParamāKā. 74.90; वैकुण्ठे यदि कृष्णतामनुभवेद्यापि किं केशवः BhojanKu. 144.23; न चेह सन् द्वित्वमनुभवति SiddhāKau. 435B.6 (*on* vii. 4.56); उल्लसन्निचुलमञ्जरीमयैश्चामरैः … ऋद्धतामनुबभूवुरापगाः Rāgh. 11.12; सकलसार्वभौमपदमनुभवति चिराय शृङ्गारः VasaTi. 33.9; (pass.) to be acquired, to be obtained, to be attained आर्यप्रसादादनुभूयत एव सर्वम् MudrāRā. 3.19(1); 7.16(5); पातित्यमथान्वभावि कुन्दैः ŚrīKaC. 8.25; 20.63; अन्वभावि … बन्धो नौसेतुभिः RājTa.(Jo.) 625; महद्यशो विनावश्यं जगन्न जगतो विना। रतिः प्राज्यैकसाम्राज्यपदवी नानुभूयते ParamāKā. 91.35; **2B** to attain, i. e. to undergo (modification) कार्यं दध्यादि … सूक्ष्माणि तावद्रूपान्तराणि अनुभवति TantrVā. 368.6 (*on* ii. 1.5); स्वयमपि हि क्षीरं यां च यावतीं च परिणाममात्रामनुभवति, तावत्येव त्वार्यते त्वौष्ण्यादिना दधिभावाय BrahmSūBh.(Śaṅ.) 330.17 (*on* ii. 1.24); **3A** to experience, to relish केनाहमेकेनाक्षरेण सर्वांश्च कामान् सर्वाणि च भूतानि स्थावरजङ्गमान्यनुभवेयम् (ब्रह्मा) … तया सर्वांश्च कामान् … अन्वभवत् GopBr. i. 1.16 (13. 3, 8); PraṇU². 32.8, 12; GopBr. i. 1.17 (13.14); PraṇU². 32.16; अत्रैष देवः स्वप्ने महिमानमनुभवति PraśnaU. 4.5; 5.3; PraśnaUBh. 274.2 (*on* 4.5); तृतीयां भूमिकां प्राप्य बुद्धोऽनुभवति स्वयम् AkṣiU. 20; प्रणवमयविकारौ भास्कराकारदेहौ सततमनुभवेऽहं तौ बलातिबलान्तौ SāvitrīU. 10; यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवति Nir. 13.13 (227.14); 13.27 = 14.14 (235.8); शरीरात्मा सुखदुःखे अनुभवति MahāBh. i. 292.15 (*on* i. 3.67); अतीतमननुस्मरन्नपि च भाव्यसंकल्पयन्नतर्कितगमागमाननुभवामि भोगानहम् ŚatTrayī. 267; कन्याकुमारौ … आर्द्राक्षतारोपणमन्वभूताम् RaghuVa. 7.28; परमेश्वरः। जन्तुभिर्निजसृष्टैश्च लीलारसमथान्वभूत् AhirbuS. 30.13; संप्रीयमाणोऽनुबभूव तीव्रं पराक्रमं तस्य (अर्जुनस्य) पतिर्गणानाम् Kirātā. 17.13; अहं तु स्नेहपराधीनतयान्यदेव किमप्यवस्थान्तरमनुभवामि Nāgā. 2.9(13); वयमद्य तदवलोकनेन चक्षुषः फलमनुभवामः Ratnā. 2.5(1); राघवस्यामुषः कान्तामाप्तैरुक्तो न चार्पिषः। मा नानुभूः स्वकान् दोषान् Bhaṭṭi. 15.16; अनुभविष्यसि कपालकुण्डलाकोपस्य विजृम्भितम् MālaMā. 6.4; भिक्षुः …। ऋतुवशात् शीतोष्णादीनायातानानुभवति MāṭhVṛ. 33.4 (*on* 19); न खलु भीरुजनोऽन्वभवन्मधौ न समदोऽसमदोलनविभ्रमम् HarVi. 3.33; उच्चैरन्वभूद्भूरि शम्भोः। … °फणिपतिफणदोलान्दोलनं भूतधात्री HarVi. 41.10; कथयन्त्युन्मनीभावं स्वयं नानुभवन्ति KulārT. 1.93; अनुभवति च मूढः … कोशशून्यताम् NalaCam. 4.16(22); किं पुनः पुरा जन्मनीदं किंचिद् दुष्कृतमकार्षीत्। कथं वा तदन्वभूत् YaśasCam. ii. 259.1; तेषु विमूढो रक्तो दुष्टो वा बन्धमनुभवति TattvPradī.(A.) 56.5 (*on* 1.43); जीवः … सोमभावमनुभवतु Bhām. 526.22 (*on* iii. 1.1); नृपः। स संगतं यन्मृगशावचक्षुषः …। स्फुटमन्वभूदिव NavaSāC. 13.2; मधुरिपुः …। [प्रतिबिम्बि-(बिम्बि)ता(?)] … [नि*]र्मलकपोलफलकेषु। अनुभवति [सेर्ष्य]लक्ष्मीकलहं मन्ये स्मितः सततम् EI. xxii. 124.22; बन्धनं नागपाशेन प्राप रामो महाबलः। गरुडान्मोक्षणं पश्चादन्वभूद्रघुनन्दनः DevīBhāP. iv. 25.15; पुरुषः प्रकृतिस्थः … सत्त्वादिगुणकार्यभूतान्सुखदुःखादीन् भुङ्क्तेऽनुभवति GītāBh.(Rā.) 583.21 (*on* 13.21); आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्यानुभवति VedāntSā.(Rā.) 206.6 (*on* ii. 3.26); कापि हरिमनुभवति कृतसुकृतकामिनी GītGo. vii. 13.4; xii. 23.1; अनुभव चपलाविलसितगर्जितदेशान्तरभ्रान्तीः ĀryāSaŚa. 179; चोलस्य यद्भीतिपलायितस्य भालत्वचं कण्टकिनो वनान्ताः। अद्यापि किं वानुभविष्यतीति व्यपाटयन्द्रष्टुमिवाक्षराणि AlaṅkāSa. 60.5; मूर्तो रूपरसगन्धस्पर्शवान् पुद्गलद्रव्यगुणः … अन्योन्यसंश्लेषेण बध्यते बन्धमनुभवति TātpaVṛ. 236.15 (*on* 2.81); एक उत्पद्यते जन्तुरेक एव विपद्यते। कर्माण्यनुभवत्येकः YogŚā. 4.68; परान्तजन्मनि प्रीतिम् … भूतान्यनुभवन्ति स्म PāṇḍaC. 2.28; मरुतां विपरीतोऽयं परीतः खड्गपाणिभिः। अन्वभूदिव जीवन्नप्यसिपत्रवनस्थितिम् Surath. 9.74; किं चैकमेव ब्रह्म सर्वशरीरेषु जीवभावमनुभवति VedāntTaSā. 35.5; आत्मा पुनरपि देहयोगमनुभवतीति मुक्तस्य पुनरुत्पत्तिप्रसङ्गो दुर्वारः ŚrutaPra. ii. 226.9 (*on* ii. 1.12); निर्वेदं नृपतिर्विन्दन् भावसंकरमाप सः (v.l. °मन्वभूत्) ŚāliC. 4.108; अपरिणामिनी भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुभवतीति पतञ्जलिवचनादौपचारिक एवायं प्रतिसंक्रमः SyādvāMañ. 15(98); कल्यः पश्यन्फलमनुभवेः कर्मणां निर्मलानाम् HaṁsSaṁ. 53; ख्याता … प्रौढिः प्रतापस्य ते।… विपिने वासम् … कुर्वन्तोऽनुभवन्ति संततमिमं दावानले विद्विषः Ekāva. 8.19(27) (248.6); नित्यमुक्तं ब्रह्मैव स्वगतानाद्यविद्यामनुभवति ŚatDū. 105.21; अन्वभूवं विषयोत्थजातम् ŚaṅkaDigVi.(Mā.) 7.88; उपाध्यायबुद्ध्यनुभूतस्य शिष्यबुद्धिः स्मरेत्तदुपचितकर्मफलमनुभवेद्वा SarvaDaSaṁ. 3.37; यदमी दशन्ति दशना रसना तत्स्वादमनुभवति ŚārṅgaPa. 244; कुमारः … स्वसमाचारवैषम्यमनुबभूव PuruṣPa. 21.28; को नामानुबभूव चन्द्रसुरभिं कुन्दोज्ज्वलां कौमुदीसी(?शी)तां कीर्तिम् … अकीर्तिं च कः HammīMaKā. 14.30; त्वं तस्याम् … यातं समुत्सृज्य मां तत्केनाहमिदं किमप्यनुभवाम्यन्तः समुत्कण्ठितम् Subhāṣi. 1348; पश्यन्तश्च ताम् … क्षणमनुबभूवुः संशयान्दोलनं यावदसुरवराः NīlaVi. 126.11; सुदुःसहं कर्माचरन्ति विजिगीषवः। भूमण्डलाखण्डलत्वं प्रथामनुभवन्ति हि ParamāKā. 90.30; नूनमसि संकल्पेन वा स्वप्नेन वा कमपि वृत्तान्तव्यतिकरमनुभविता AmṛUda. 2.2(10); अन्येन निक्षिप्तमन्योऽनुभवति भाग्यवशात् JānaPa. 5.14(8); न क्वापि स्थितिमन्वभूवमिति तच्चिन्ताकुलः सर्वदा VasaTi. 25.23; सदाचारनिरतः … हरिं ध्यायंस्तमनुभवति GoviBh. 256.12 (*on* iii. 3.54); (य एषः) निजं रूपं शुद्धं सुखमवगमं ज्योतिरुदयत्परं साक्षात्कुर्वन्ननुभवति सीमामतिमुदः Manmatho. 4.17 (645.20); (pass.) to be experienced or relished अपानेऽस्तंगते प्राणो यावन्नाभ्युदितो हृदि। तावत्सा कुम्भकावस्था योगिभिर्यानुभूयते MuktiU. 2.51; या प्रत्यग्दृष्टिभिर्जीवैर्व्यज्यमानानुभूयते।… सा मां पातु सरस्वती SaraRaU. 3.6; करसादोऽम्बरत्यागः…वारुणीसङ्गजावस्था भानुनाप्यनुभूयते PañcT.(Kos.) 1.194 (37.2); Subhāṣi. 1886; (भवतेरः) भवतेरिति कर्तृनिर्देशादिह न भवति। अनुबभूवे कम्बलो देवदत्तेन Kāśi-Vṛ. *on* vii. 4.73; विषतरुप्रसव इव यथा यथानुभूयते तथा तथा मोहमेव द्रढयति VāsaDa. 71.4; तदनुभूयतामुग्रस्य तपसः परिपाकः UttaRāC. 2.11(1); हृदयेन … त्वद्व्यापदो गणयता भयमन्वभावि MālaMā. 9.224; 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' इति ब्रूते श्रुतिः साक्षात् सुषुप्तावनुभूयते ViveCū. 407; (स्वप्नजागरिते) किं त्वनुभूयेते त्वया सततम् UpadeSā. 82.87; न चैवं ब्रह्मविज्ञानम्। न खल्वेतदनुकूलमिति वा … अनुभूयते Bhām. 57.18 (*on* i. 1.1); भोग्ये हि सुखदुःखे अनुकूलप्रतिकूलवेदनीये प्रत्यात्ममनुभूयेते SāṁkhyaTaKau. 312.3 (*on* 17); TattvPradī.(Ci.) 170.10; किं नु स्वप्नोऽनुभूयते PadmP. v. 36.96; शिवद्वेषफलं साक्षात् किं हृदा नानुभूयते BṛDharmaP. i. 37.62; सुखं मे स्यात् सुखी भूयासमिति ह्यात्मगुणत्वेन तदनुभूयते NītiMā. 15.8; जीवन्मरणमस्याग्रे गुणिभिर्नानुभूयते RājTa.(Ka.) 3.135; मनुमान्धातृरामाद्या बभूवुः … नृपाः। अन्वभावि तदग्रेऽपि ब्राह्मणैर्न विमानना RājTa.(Ka.) 4.641; अहो भवाब्धौ किं नाम जीवद्भिर्नानुभूयते। तिरस्काराङ्कुरं कर्णे शासनस्य ममापि यत् MudriKu. 2.29; रसानुभवस्तु प्रतिपदमनुभूयते GopāKeCan. 44.30; त्वद्दर्शनमहानन्दस्यन्दनिष्यन्दलोचनैः। स्वामिन् मोक्षसुखास्वादः संसारेऽप्यनुभूयते TriṣaŚaPuC. i. 3.541; ii. 3.457; मान्येन धर्मविवशेन तयान्तरिक्षादेत्यान्वभूयत सुषुप्तदशाप्रवेशः PṛthvīVi. 4.54; 12.53; अन्यत्वं स्वात्मनस्तस्मात्सर्वैरेवानुभूयते UpādhiKha. 238B.10; 244B.5; केनापि न परं शास्त्ररसः सर्वोऽनुभूयते PrabhāC. 100.9; KṛṣṇaKa. 3.63; ननु चिद्रूपस्यात्मनो जडरूपमनात्मानं प्रति साधकत्वेनानुकूल्यमनुभूयते VivaPraSaṁ. 12.5; स्वर्गे नरके वा यत्र कर्मफलमनुभूयते, तत्रैव कर्मफलभोगायतनशरीरारम्भकभूतमात्रा लभ्यन्ते VedāntKau. 255.7 (*on* iii. 1.1); (जीवः) स हि यत्कार्य-

मारभते तत्समापयतीत्यनुभूयते TattvPrakā. 88B.12 (*on* ii. 1.22); अनुभूयते कम्बलो देवदत्तेनोपास्यते गुरुरित्यत्र ··· भावे लकारः स्यात् PariVṛ.(Sī.) 191.5; सामाजिकैस्ततो हास्यरसोऽयमनुभूयते SāhiDa. 184.12; तदलाभात्तथान्येन मोहत्वमनुभूयते BhaktiRa. 1.17; गद्यपद्यमयकाव्यगुम्फने। चापलं किमपि मे रसज्ञया स्वानुरूपमनयानुभूयते YātrāPra. 1.10; स्वतोऽनुभूयत इत्यत्र पर्यवसितेनोत्तरवाक्यार्थेन पूर्ववाक्यार्थस्य यथा साधर्म्यमेव, न वैधर्म्यम् RasGaṅ. 449.2; परवद्भिः सहायैस्तु तद्यशो नानुभूयते ParamāKā. 80.8; यत्सत्य[मा]मसंभाव्यं बीजमेवानुभूयते NāṭaLaRaK. 2240; (*caus.*) to cause to experience or relish अनुभावयति ब्रह्मानन्दसाक्षात्क्रियामित्र। स्पर्शस्ते MahāvīC. 7.31; 5.70(1) (285.1); तत्पदार्थतामनुभावयति Bhām. 42.3 (*on* i. 1.1); अनुभावयति पूर्वकर्म स्वानुरूपं फलम् Kiraṇā. 121.5; ये रसाननुभावयन्ति अनुभवगोचरतां नयन्ति ते अनुभावाः RasTa. 45.1; भगवानेव स्वात्मानमनुभावयति PāñcRāRa. 165.20; भगवान् स्वानुभवार्थमेवताननुभावयति AṇuBh. 296.23 (*on* iii. 4.44); अनुभावयति च भक्तान् BhaktiSū.(Nā.) 5.80; व्यपदिश्यन्ते।··· यानि च कार्यतया तान्यनुभावशब्देन। ··· अनुभावयन्तीति वा व्युत्पत्तेः RasGaṅ. 40.8; (*caus.* pass.) to cause to be experienced or relished (आत्मा) पुराणः पुरापि नवः सर्वदा पूर्ववदनुभाव्यते GītāBh.(Rā.) 89.4 (*on* 2.20); चित्तवृत्तिविशेषं सामाजिकजनोऽनुभवन्ननुभाव्यते साक्षात्कार्यते Kāvyānu.(He.) 67.19; येन व्यज्यते चानुभाव्यते BhāvPra. (Śā.) 13.14(1); **3B** to perceive, to know, to cognise, to understand ऋषयः ऊचुः ··· स्वर्गस्य लोकस्य द्वारं नानु चनाभुत्स्महि (v.l. अभूत्) JaimiUBr. iv. 14.7; अकृत्स्नो ह्येष आत्मा यद्वागभि हि प्राणेन मनसेऽस्यमानो वाचा नानुभवति AitĀ. II. iii. 5.7; षोडशानां कलानामेका कलातिशिष्टा स्यात्। तयैतर्हि वेदान्नानुभवसि ChāndoU. vi. 7.3 (*but* MW. to enclose, embrace; APTE to learn, hear); ChāndoU. vi. 7.6; विश्वमयो ब्राह्मणः शिवं व्रजति। ब्राह्मणः पञ्चाक्षरमनुभवति RudrU. 308.14; स एव जपकोट्यां नादमनुभवति HamsU. 2.2; घ्राणेन गन्धमनुभवन्ति VaikhāDS. i. 11.8; परोवरपरंपरपुत्रपौत्रमनुभवति P. v. 2.10; JaineVyā. iii. 4.135; (दूती) प्रसृतसद्भावायाम् ··· इत्थं वदेत्। शृणु विचित्रमिदं सुभगे, त्वां किल दृष्ट्वा ··· नायकश्चित्तोन्मादमनुभवति KāmSū. 278.6 (5.4); तयोः ··· ह्रीयन्त्रणां तत्क्षणमन्वभूवन् ··· विलोचनानि KumāSam. 7.75; प्रत्यक्षानिव वृत्तान्तान् पूर्वाननुभवामि च UttaRāC. 2. 17; यः पुनर्नानुभूतोऽर्थो न वाप्यनुभविष्यते ŚlokaVār. 5(3).203 (326.3); कथमाकृत्या लक्ष्मणमनुभवामि AnarghaRā. 7.14 (3); अनुभवति भवन्निभावुभौ यस्त्रिभुवनशत्रुसमाप्तिकालकालौ RāmC. 6.66; स हि (साक्षी) क्रोधेन व्याप्तचित्तत्वान्न यावदनुभवति नाप्यनुभूतं स्मरति ManuBh. ii. 105.1 (*on* 8.67); अङ्गप्रत्यङ्गवर्तिनमिव देवदत्तमनुभवेत् TattvBi. 9.4; कथमुत्पन्नज्ञानेन संविदितं अन्योऽनुभवेत् Kāśi. ii. 129.10 (*on* 5(3).70); रसमन्वभवम् NyāyKa. 72.23; योऽहं बाल्ये पितरावन्वभवं स एव स्थविरे प्रणप्तृननुभवामीति प्रतिसंधानं न भवेत् Bhām. 2.14 (*on* i. 1.1); Nyāyāmṛ. 398A.7; TātpaṬ.(Vā.) 110.3 (*on* i. 1.3); यथा ज्ञप्तिरुदेत्यन्तस्तथानुभवति क्षणात्। चितिश्चेत्यार्थतामेति चित्तं चित्तार्थतामिव YogVā. iii. 44.18; अनुभवति तु उन्मीलयन्नेव नयने शाखां शीतमयूखं चेति Kiraṇā. 74.10; वेद्यतया वेदितानुभवति GītāBh.(Rā.) 568.16 (*on* 13.1); तेऽन्वभूवन् जनास्तं नु पार्थदूतो बभूव यः DvyāśraKā. 9.26; इत्याख्याय यथाख्यातचरित्रोऽन्यत्र सोऽगमत्। अहमप्यन्वभूवं तत्प्रतिपादितमादितः PāṇḍaC. 13.214; घट इति घटमनुभवामीति चानुभूतिद्वयातिरिक्तायाः ··· कस्याश्चिदनुभूतेरनुभवागोचरत्वात् TattvPradī. (Ci.) 15.10; अतो मद्वचनेन देहास्थिशिरादीनां वक्ष्यमाणरसादीनां संस्थितिस्वरूपं यद्येकोऽपि स्वयमेवानुभवेत् तदा 'मोक्षायासौ कृती भवेत्' इति वक्ष्यमाणेन संबन्धः DīpKa. 85.7 (*on* 3.104); (पितरौ) सुतां सुजाताकृतिमन्वभूताम् Yādavā. 12.9; 3.28; ज्ञातृत्वाभिन्नाहमर्थत्वम् ···। अहं जानामीच्छामि करोम्यनुभवामीत्यादिप्रत्ययेभ्यः VedāntRaMañ. 1.1 (7.19); न कोऽपि सच्चासच्च द्वयमेकत्रानुभवति SarvaDaKau. 37.11; तदा पूर्वमन्तरमन्वभूवमधुना बहिः AṇuBh. 309.22 (*on* iv. 1.12); न हि चक्षुरादिजन्यरूपादिज्ञाने मानसत्वं कश्चिदनुभवति BhedaDhi. 14.3; यः खलु ··· सदा प्रत्यक्षमनुभवति ŚivārkaMaDī. i. 122.10 (*on* i. 1.2); आत्मीयस्य पुरस्यैव सद्यो दहनमन्वभूत् Kuval. 90(14); शक्तिग्रहः··· शक्तिं गृहीत्वा स्वरूपतस्तत्प्रकारेण धर्मिणं स्मरत्यनन्तरमनुभवति ŚaktiVā. 105.21; दिग्वासाः ··· रिपुरनुभवति श्रीमहादेवलीलाम् PadyaVe. 160; (pass.) to be perceived, to be known, to be cognised, to be understood लक्ष्मीरित्यनुभूयते स्थिरमिव स्फीते शुभे कर्मणि ŚatTrayī. 7; दया कयाचिच्छ्रुत्या यत्समानमनुभूयते। तद्रूपा हि पदासत्तिः Kāvyāda. 1.52; न त्वं तेनान्वभाविष्ठा नान्वभावि त्वयाप्यसौ। अनुभूतो मया चासौ तेन चान्वभविष्यहम् Bhaṭṭi. 5.35 (comm. त्वं तेन रामेण नान्वभाविष्ठाः समरे साक्षान्नाज्ञायिष्ठाः न ज्ञात इत्यर्थः।··· मया चासावनुभूतः तेन चाहमन्वभविषि ··· तच्छक्तिमहं जानामि) (*but* APTE to try, test, put to the test); चक्रवाकसदृशश्च मन्त्री न क्वाप्यनुभूयते Hitopa. 4.54(8); सम्यग् ज्ञातो रसो यद्वद् गुडादेर्नानुभूयते। पित्तज्वरयुतैस्तस्माद्दोषानेव विनाशयेत् SarvaŚiSam. 10.6; किं वा कदाचिदपि केनचिदन्वभावि सारङ्गसंगरविधौ ··· हरेः प्रमादः MālaMā. 5. 215; धूपधूमाश्रितं विद्धि वैखरीविग्रहं पुनः। घण्टायां चाल्यमानायामच्छिन्नमनुभूयते PāraS. 6.92; अहो पुत्रस्य माहात्म्यं प्रत्यक्षमनुभूयते BṛKathāŚloSam. 4.43; (वाचा) तयार्थोऽनुपनीतत्वादात्मना नानुभूयते ŚlokaVār. 4.50 (148.7); 4.113 (169.1); ग्राह्यो वा नानुभूयेत ग्राहकाननुभूतिवत् ŚlokaVār. 5(3).75 (291.4); विशिष्टकारणाभावेऽप्यर्थो नैवानुभूयते ŚlokaVār. 5(3).183 (320.2); अविद्या च स्वानुभवेन रूप्यते ···। तथा विद्याविवेकः अनुभूयते TaiUBh. 276.14 (*on* 2.8); अपरं यदि नानुभूयते किंचित् SvātmNi. 15; तदा यत्परमं सौख्यमिति वक्तुं न शक्यते। स्वयमेवानुभूयन्ते शर्कराः क्षीरपानवत् KulārT. 8.88; प्रमाणव्यवहारिणां तथा कार्यकारणयोर्भेदाभेदावनुभूयेते BrahmSūBh.(Bhā.) 101.23 (*on* ii. 1.18); न द्वितीयमनुभूयते स्म वस्त्वन्तिकादपि तमस्तिरस्कृतम् RāmC. 2.65; सूत्रादयोऽनुभूयन्ते यथाकर्म यथाश्रुतम् BṛĀraUBhVā. i. 4.1148; घटनास्तितावगतिरविच्छेदेनानुभूयते NyāyMañ. i. 48.17; कारणवशान्निम्बोऽप्यनुभूयते एव NītiVā. 24.18; (रसादयः) तेऽपि चक्षुषानुभूयेरन् Kāśi. i. 232.23 (*on* 4.62); चतस्रः खल्विमाः प्रत्यक्षादिप्रमितयो भिन्नबुद्धिव्यपदेशभाजोऽनुभूयन्ते TātpaṬ.(Vā.) 25.25 (*on* i. 1.1); एते नानुभूयेरन् असति संनिकर्षान्तरे TātpaṬ.(Vā.) 109.22 (*on* i. 1.3); सुस्थात्मा ··· स हि न तावत् प्रत्यक्षेणानुभूयते तथानवसायात् ĀtmaTaVi. 50.6; वेदानां हि कर्तावश्यं तत्कालभवैः पुरुषैः प्रत्यक्षेणानुभूयेत NyāyRa. 949.14 (*on* 7.368); न च यदि नीलतादात्म्येन पीतादयोऽनुभूयन्ते NyāyMa. 43.4; प्रत्यगर्थः ··· अप्रतिपन्नश्चेद्व्यावर्तकाश्रयविषयज्ञानशून्यमज्ञानं कथमनुभूयेत BrahmSūBh.(Rā.) 88.15 (*on* i. 1.1); करीर्या वृष्टिकामो यजेतेत्यादिषु सिद्धेऽपि नियोगे ··· वृष्टिव्यतिरेकेण नियोगस्यानुकूलता नानुभूयते VedāSam. 150.6; जगद्भ्रमोऽयं दृश्योऽपि नास्त्येवेत्यनुभूयते YogVā. i. 3.5; ii. 8.11; शैत्यमेव हि तेजःस्पर्शेनाभिभूतमौष्ण्यम् ··· शीतत्वेनानुभूयते Kiraṇā. 49.17; अनुभूयन्त एव युगपद् बहूनि ज्ञानानि नर्तकीदर्शनादौ TarkBhā.(Mo.) 36.9; 8.12; मम मद्विषयमज्ञानमस्तीति ह्यज्ञानमनुभूयते NītiMa. 23.1; 47.23; शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते AnuVyā. 4A.3 (*on* 1.1); 24A.3 (*on* 2.2); न हि निरपेक्ष(धी)विषयत्वं दीर्घादावनुभूयते TarkSam.(Ā.) 12.22; सलिलादौ स्वरूपं तत्र भिन्नमनुभूयते TarkSam. (Ā.) 115.8; शुक्तिकैव रजताकारेणानुभूयते NyāyKu. 43.6; 61.11; यदि परगतानुभूतिर्नानुभूयते, कथं शब्दार्थसंबन्धग्रहः ŚatDū. 109.30; प्रायेण सर्वप्राणिनः ··· चार्वाकमतमनुवर्तमाना एवानुभूयन्ते SarvaDaSam. 1.21; लोक्यतेऽनुभूयत इति लोकः JīvanVi. 3.10; तमः ···। वियोगिनां शोकमयस्य वह्नेराशागतो धूम इवान्वभावि Yādavā. 2.44; 6.111; 17.44; जिज्ञासायामेवानुभवोऽनुभूयत इति न वाच्यम् TattvPrakā. 4A.7 (*on* i. 1.0); न हि विषयानुपरक्तो घटादिवदसावनुभूयते NyāySu.(Ja.) 58A.8 (*on* i. 1.1); 375B.6 (*on* ii. 2.6); तथाभूतप्रमाणसिद्धस्वरूपकं परमार्थसद्वस्तु चेत् कथं नानुभूयते VedāntRaMañ. 1.2 (20.12); योऽयं स्पर्शोऽनुभूयते स क्वचिदाश्रितः स्पर्शत्वात् Upask. 81.11 (*on* ii. 1.9); 47.10 (*on* i. 2.1); 99.7 (*on* ii. 1.25); 194.7 (*on* iv. 1.2); संयोगविभागौ शब्दयोनी तौ च नानुभूयेते Upask. 242.8 (*on* v. 2.11); विज्ञाननाश्यता मिथ्यारूप्यादौ नानुभूयते Nyāyāmṛ. 40B.7; 65B.6; रसगन्धरूपशब्दस्पर्शा अन्ये पदार्थाश्च। कस्मादनुभूयन्ते नो देहान्नेन्द्रियग्रामात् PraboSu. 90; पटावस्था ··· स्थूलेनैव रूपेण ··· तन्तुत्वेनानुभूयते ŚivārkaMaDī. ii. 25.27 (*on* ii. 1.16); जातमात्रस्य शिशोः शरीरं प्रतिदिवसमुपचितपरिणाममनुभूयते ŚivārkaMaDī. ii. 88.32 (*on* ii. 2.24); दुर्गेति पद्मनिलयेति सरस्वतीति शब्दैरनन्यविषयैरनुभूयते या YātrāPra. 1.48; भूतले ··· मानवीयमपि जन्म चेद्भवेत्। सावधानमनसानुभूयतां तद्विनाशरचना विधीयते Vidvanmo. 7.27; ययोः प्रकाशविमर्शयोर्बलेन सर्वमनुभूयते Bhāsk. i. 14.19 (*on* i. 1.1); (*caus.*) to cause to perceive, know or understand तस्याः ··· मध्यभागे। निर्वाणमृच्छति मनः ··· अस्मिन्मुहुः किमनुभावयतीव दृष्टिः SaduktiKa. 120.2; सुखाभिव्यक्तिमुक्तिरिति पक्षं परित्यज्य दुःखनिवृत्तिरेव मुक्तिरिति स्वीकारः क्षीरं विहाय ··· सौवीररुचिमनुभावयति SarvaDaSam. 11.146; जडं मोहात्मकं तच्चेत्यनुभावयति श्रुतिः PañcDa. 6.126; पदार्थाः ··· तादृशाश्च ··· स्वान्वयमनुभावयन्ति AdvaiSi. 702.1; (*caus.* pass.) to cause to be perceived or cognised, to cause to be noticed यदि कदाचिदभ्यर्थनां(ना?) नानुभाव्यते TāpaVa. 6.1(26); सन्तः स्वतः प्रकाशन्ते गुणा न परतो नृणाम्। आमोदो न हि कस्तूर्याः शपथेनानुभाव्यते RasGaṅ. 449.2; BhāmiVi. App. 6.12 (v. l. APTE); यत्तु तेषां वृष्टिपुत्रस्वर्गादिफलकत्वं क्वापि क्वापि वीक्ष्यतेऽनुभाव्यते GoviBh. 85.16 (*on* ii. 1.1); **3Ci** to enjoy (happiness etc.) केन त्वं चिरं जीवसि केन वानन्दमनुभवसि DakṣiMūU. 1; उपकरणकामकलया सुरतकेलिज्ञ उपतापसुखमन्वभूत् SāmaraU. 229.9; 240.6; दुःखस्यान्ते नरव्याघ्राः सुखं त्वनुभवन्त्विमे MahāBhā. xii. 25.4; xii. 54.30; xv. 36.6; महाद्रुमः ··· पुष्पितो भूत्वा फलानि न विदर्शयेत्। स तां नानुभवेत्प्रीतिं यस्य हेतोः प्रभावितः Rāmā. ii. 98.9; न वनेषु न शैलेषु न निरोधेषु वा पुनः। क्रीडामनुभविष्यन्ति समेत्य कपिकुञ्जराः Rāmā. v. 11.34; को नु खल्वयं सर्वकालसुखी पुरुषः कान्तया सह गान्धर्वमनुभवति Avimā. 3.4(2); (दिलीपः) अगृध्नुराददे सोऽर्थमसक्तः सुख-

मन्वभूत् RaghuVa. 1.21; KāvyPra. 292.2; VyaktiVi. 38.9; SāhiDa. 388.5; सुवासितं हर्म्यतलम् ··· प्रियामुखोच्छ्वासविकम्पितं मधु। सुतन्त्रिगीतम् ··· शुचौ निशीथेऽनुभवन्ति कामिनः ṚtuSaṁ. 1.3; सः ··· खद्योतं दृष्ट्वाग्निरयमिति ··· प्रतापमनोरथसुखानि किलानुभवति Tantrākhyā. 45.5; PañcT. 1.151(7) (151.4); Tantrākhyā. 89.23; यत्र भवान्स्वर्गगतमिवात्मानं मन्यते (v.l. सुखेन सुभाषितगोष्ठीसुखमनुभवावः) PañcT. 4.17(15) (387.7); 3.121(1) (369.16); (राघवः) तन्मुखं सुरभिगर्भमन्वभूत् JānaHa. 8.39; 8.44; शिवभुजाहतिभिन्नपृथुक्षतीः सुखमिवानुबभूव कपिध्वजः Kirātā. 18.3; अयं तावत् ··· सारस्वतभद्रः ··· चक्रपीडकक्रीडामनुभवति PadmPrā. 5.10; अमुष्मिंल्लोकेऽत्र यद्दिव्यं मानुषं सुखमनुभवामि SāṁkhyaKāBh. 26.11 (*on* 45); बालमित्रमण्डलमध्यगतो मोक्षसुखमिवान्वभवत् HarṣaC. 69.2; 253.5; तदागत्य स्वयमेव स्वां भूमिकां कुर्वाणः समागमोत्सवमनुभवतु PriyDa. 3.5 (7); 4.5 (17); समन्तादापानोत्सवमनुभवन्तीव मधुपाः Nāgā. 3.8; राजवृषो रतानि निर्विशन्नुपवनविषयिणीमृतुविभूतिमनुबभूव AvantiKa. 26.11; तदनुभवतु महाभागः AvantiKa. 242.3; (अहम्) अन्वभवं च मधुकर इव नवमालिकामार्द्रसुमनसम् DaśKuC. 100.22; 6.8; कार्यं निश्चित्य विषयाननुभवति यः स उत्तममर्थं साधयति Bārhas. 2.38; अद्याप्यन्तःपुरविहारमनुभवति VeṇīSaṁ. 2.24; कुमारः ··· स्वच्छन्दवृत्त्यानुबभूव भोगान् VarāṅgaC. 2.89; मिथः प्रमोदमनुभवन्त्वेते महानुभावाः MahāvīC. 7.30(8); नन्विमौ विलोकनेन मानसं मुहुर्मुहुर्मोहनमनुभवतः MālaMā. 4.65; प्रजापतिः ··· रतिं नान्वभवत् BṛĀraUBh. 85.9 (*on* i. 4.3); (सुखमात्यन्तिकम् ···। वेत्ति) वेत्ति तत् ईदृशं सुखमनुभवति GītāBh.(Śaṅ.) 197.1 (*on* 6.21); 260.9 (*on* 9.10); आनन्दान्यश्च सर्वाननुभवति नृपः सर्वसंपत्समृद्धः ŚatŚlo. 71; कदा वा त्वां दृष्ट्वा गिरिश तव भव्याङ्घ्रियुगलम् ··· मुदमनुभविष्यामि हृदये ŚivāL. 26; अनया तावत्स्पर्शसुखमनुभवामि ĀścaCū. 4.2(4); भोग्यभोज्यानि वस्तूनि गुरवे च समर्पयेत्। तच्छेषमिति संचिन्त्य चानुभूयात् कुलेश्वरि KulārT. 12.55; विरलितवानरवीरवृन्दवादः। अनुभवति वनान्तगन्धवाहं प्रियसुहृदेष च गन्धमादनो मे RāmC. 6.53; नानाख्यानकविस्तरामृतरसास्वादादमन्दस्फुरत्संतोषात्सुखमन्वभूदविरतं पृथ्वीशचूडामणिः EI. iii 349.39; पार्थिवः ··· सकलसंसारसुखसंदोहमन्वभूत् NalaCam. 1.39(8); 5.28; स समाहृतवान्कान्ताः ···। सुखान्यनुभविष्यामि संततानीत्यचिन्तयत् BṛKathāŚloSaṁ. 10.183; 11.62; अप्रमितमसुखम् ··· अतीतरसमकालं चान्नं नानुभवेत् NītiVā. 25.39; 1.42; मारिदत्तः ··· गृहदीर्घिकासु ··· जलक्रीडासुखमन्वभूत् YaśasCam i. 40.1; ii. 250.22; भूयसा च कालेन ··· जीवलोकसुखमनुबभूव (राजा) TilaMañ. 20.10; 168.22; आत्मा हि ··· विषयं भुञ्जानः सुखमनुभवति JayaMa. 13.28 (*on* 1.2); अनुभूयासमीशान ···। भवत्पूजामृतापानमहास्वादमहामुदम् Stotrā. 17.19; राजसद्मानुभवति स च सा चाप्यरुन्धती YogVā. iii. 28.5; वानरवरूथिनी ··· मधुपानसुखमनुबभूव RāmāCam. 5.67(6); अन्तरेणात्मनः स्वाभाविकप्रेमास्पदतां कथं तदर्थतयान्यत्सकलमपि प्रेमास्पदभावमनुभवेत् NyāyMa. 174.9; प्रविश्य वासके सद्यस्तयैव सममन्वभूत्। मर्त्योऽपि दिव्यसंभोगमसंस्पृष्टं मनोरथैः KathāSaSāg. iii. 3.131; viii. 2.318; द्विरदवराः ··· अनुनादैरुपशोभितानाम् ··· वनानां वसन्ते सुखमनुभवन्ति Hastyāyur. 194.26 (2.13); 198.22 (2.13); अयम् ।··· चिरमनुभवतु भवत्या बाहुलताबन्धनं धूर्तः SubhāRaK. 21.38; सर्वे स्वस्थानं प्राप्य मनोऽभिलाषितं सुखमनुभवन्ति Hitopa. 4.136(8); अधररसपानमनुभवसि Kāvyānu.(He.) 22.21; 37.14; धनजीवो युग्मधर्मान्वभूद् वैषयिकं सुखम् TriṣaŚaPuC. i. 1.237; स्वर्णकारोऽपि निर्भरम्। निद्रासुखं सप्तरात्रं चिरादनुबभूव PariPar. 2.566; 3.179; प्रभवोऽपि योगनिद्रासुखमनुभवन्तु MudrīKu. 4.19(4); प्रमदं दधुर्यममृतोद्धरणात्पुनरेव तं सुमनसोऽन्वभवन् PṛthvīVi 3.2; 5.73; शरीरमनुविश्यापि तत्प्रकाशयन्तः पुण्यानेव भोगाननुभवन्ति BrahmSūBh. (Ma.) 74B.10 (*on* iv. 4.15); मध्वः पीत्वा तत्र सचेवहि सुखमनुभवाव KarmaNi. 9A.2; तौ दम्पती यथौचित्यं सुखान्यनुबभूवतुः PāṇḍaC. 1.53; पितापि भीष्ममाश्लिष्य ···। आत्मैकवेद्यमानन्दममन्दं वरमन्वभूत् PāṇḍaC 1.241; 17.358; आसेतोराहिमाद्रेरम्भुवमविचलितां कन्हरोर्व्वीश्वरस्य स्वायत्तीकृत्य लब्ध्वान्वभवदभिमतं तस्य राज्यार्द्धमेष[:] EI. xix. 23.22; (इन्द्रः) निर्वृतिसुखं नानुबभूव VedāntKa. 161.1 (*on* i. 3.19); द्वैतातीतमहोमहोदयसखं तावन्वभूतां सुखम् ŚāliC. 7.143; सुखमनुभवति सुखायते MugdhaBo. 21.10 (133.8); गोविन्दाद्यैः सममनुभवासाद्य राज्यं सुखानि NemiDū. 12; 117; वयम् ··· अत्रासंकटकान्वयाः। अन्वभूम निराबाधमत्रासं कटकान्वयाः Yādavā. 6.56; बुधः। दृष्टैरेव सदोपायैर्भोगाननुभवेद्भुवि SarvaSiSaṁ. 2.15½; यदहम् ··· पितुरुपार्जिते राज्ये सुखमनुभवामीति न मम पौरुषम् PuruṣPa. 21.1; यदि प्रश्नं विज्ञास्यति तदध्ययनफलमनुभविता PuruṣPa. 88.17; 215.25; न जडशरीरप्रवेशेऽपि दुःखानुभवप्राप्तिः किन्तु साधूनेव भोगाननुभवन्ति TattvPrakā. 222A. 2 (*on* iv. 4.15); येन जीवः सुखमनुभवति तत्सुखवेदनीयं पुण्यप्रकृतिः KumāPraPra. 82.1; भोगान् ··· रासाख्यानन्वभूत्कृष्णः HariC.(Pa.) 127; फलमनुभवेः कर्मणां निर्मलानाम् HaṁsSaṁ. 53; जगत्याः ससर्ज वृष्टिं समये विधाता।··· प्रजाश्च नित्योत्सवमन्वभूवन् Nalābhyu. 1.13; अङ्गैरुत्पुलकैरनङ्गकलहव्यापारदूरालसैरैक्यं तादृशमन्वभूवमलकामोदेन वीतश्रमः ŚṛṅgāBhū. 14; अनुभवतु तावदयं कान्तानुवर्तनसुखम् UnmaRā (Vi.) 64(2); 80(1); अनुभवत ददत वित्तम् SiṁhāDvā. 54.7; 142.4; एकैक एव क्षत्रपतित्वं तदीयद्विरात्रानुष्ठानफलमनुभवति ŚivārkaMaDī. i. 482.16 (*on* i. 3.35); हर्षमन्वभवन्सर्वे RājTa.(Śrī.). 1(3). 29; 1(5). 91; अकर्मकस्याप्यर्थान्तरवृत्त्या सकर्मकत्वम्। यथा सुखमनुभवति Prasā. ii. 5.15; तस्मिन्ननुभवति मनः प्रगृह्यमाणं परात्मसुखम्। याति मदोन्मत्तदन्तिदशाम् PraboSu. 182; क्षणमहं तदेव प्रियाभिमर्शसौख्यमनुभवामि VidaMā. 5.26(17); तदेतयोः प्रत्यनन्तरीभूय यथेष्टगोष्ठीसमागमसुखमनुभवावः KaṁVa. 3.31(3); हृदपूर्णभूमिः। मृगव्ययोग्या मृगयासुखानि श्रीवीरसिंहोऽनुबभूव यस्याम् VīraBhā. 2.29; नन्दश्चिदानन्दमयस्य तस्य मायानुरूपस्य परावरस्य। आलिङ्गनाद्यत्सुखमापदन्तस्तज्ज्ञानभाजोऽनुभवन्ति नान्ये HariVi. 1.12; असौ ··· अन्वभूदानन्दम् YātrāPra. 2.85(6); हालिकोऽपि विष्णुश्रिया सह राज्यसौख्यान्यनुभवति KathāK. 45.23; 140.2; क्षितिसमुचितयोगक्षेमकृत्याय तस्मिन् प्रभवति रघुनाथक्षोणिपालावतंसे।··· सर्वभोगाननुभवति जनौघः संततानन्दधन्यः Raghunā. 3.59(?51); विवशहृदयमस्या विभ्रमानन्वभूवम् Jīvān. 68.5; अनुभविष्यसि प्रियसमागमम् AmṛUda. 2.3(1); वैदेहीकेलिकलाकुतूहलमनुभवामि MahāN. 8.37(2); त्वयान्वभूवं किल संगतानि ŚṛṅgāSar. 31; कदा वा संभोगश्रममनुभविष्यामि ŚṛṅgāSar. 113; संचयं च कलयन् स धनानामन्वभूत् सुखमसौ ललनाभिः ĀnandRa. 1.51; मङ्गाम्बामनुजवरौ महत्सुखं तौ पौलोमीवलमथनाविवान्वभूताम् ĀnandRa. 5.23; आत्मसंवेद्यम्। सुरतसुखमन्वभूवं विस्मृतसकलान्यवेदनः सुतनोः VasaTi. 31.2; (pass.) to be enjoyed (happiness etc.) निकुञ्जदेव्या यानि सुखान्यनुभूयन्ते तेषां प्रश्नं पुनरभिवदति SāmaraU. 250.16; 271.20; सुखानि चानुभूयन्ते MahāBhā. ii. 5.7; रम्भा नामाप्सरा देवी ···। सैषा योषिद्वरा राजन् ··· अनुभूयताम् HariVaṁ. 118.25; सततपरिचितो मनोऽभियोगादधिकरसः प्रथमात् समागमात्।··· अद्य मयानुभूयते Avimā. 5.4; शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला लक्ष्मीरित्यनुभूयते ŚatTrayī. 7; भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते KumāSaṁ. 2.45; पीयतामवगाह्यतां चोदकम् (v. l. स्वेच्छयोदकाद्याहारोऽनुभूयताम्) PañcT. 2.77 (16) (250.4); Hitopa. 1.151(7); वसुमती वसुमतीव मगधराजेन यथासुखमन्वभावि DaśKuC. 2.13; नियतमनया संकल्पनिर्मितः प्रियसमागमोऽनुभूयते MālaMā. 2.126; जन्तुभिश्चानुभूयन्ते स्वर्गे नानासुखानि च ŚivS. 1.26; विस्रम्भवद्भिरस्मिन् हि सुखमेवानुभूयते SaraKaṇṭhā 562.20; 651.3; वरं हि संसारः यत्र कियानपि तावत् सुखलेशोऽनुभूयते NyāyRa. 3.7 (*on* 0.6); अनुभूयते सुखम् ··· इत्यादौ धातुरेव सकर्मिकां क्रियां वक्ति, उपसर्गस्तु द्योतकः Pradī. ii. 440B. 16 (*on* ii. 2.19); विद्याधरसुखैश्वर्यं वर्यं किं नानुभूयते PariPar. 2.676; 8.72; मन्दारपुष्पशय्यासु सुखं तेनान्वभावि ŚāliC. 6.83; सुखं त्वननुभूतमनुभूयते PuruṣPa. 225.3; अनुभूयते आनन्दः चैत्रेण त्वया मया वा PrakriKau. ii. 427.4; SiddhāKau. 465A.5 (*on* iii. 1.66); अत्र स्नातमिहोपभुक्तममलं भूयो मृणालीदलं याभ्यां शश्वदिहान्वभूयत सुखं कल्लोलहिन्दोलजम् BhāvVi. 77; उपसर्गाणां द्योतकत्वमावश्यकम्। अन्यथा उपास्यते गुरुः, अनुभूयते सुखम् इत्यादौ गुर्वादेर्लेनाभिधानं न स्यात् RasGaṅ. 255.4; स्वप्नप्राप्ता श्रीरिव बुद्ध्वानेनानुभूयसे सुतनु ŚṛṅgāMañ. (A.) 24.24; (*caus.*) to cause to enjoy, i. e. to make happy त्वामहं सुखमनुभावयामि VetāPañ. (Jam.) 92.9; (*caus.* pass.) to cause to be enjoyed (happiness etc.) नाकल्प्स्यत् संनिधिस्थाणुः ···। अन्वभाविष्यतान्येन मैथिली चेत् पतिव्रता Bhaṭṭi. 21.11;

**3Cii** to experience, to undergo (suffering, grief etc.) यद्यत्कर्म करोति तत्तत्फलमनुभवति NāraPaU. 5.1; SaṁnyāU. 2.59; उष्णार्ताः। कलहं चैव कुर्वन्ति दुःखान्यनुभवन्ति च AVPari. 68(1). 18; परासुश्च सुतो दृष्टः शप्तश्चेष्टः सखा मया। ईदृशीमापदं को नु द्वितीयोऽनुभविष्यति MahāBhā. iii. 138.18; सापि च तत्र जीवन्मरणमनुभवति Avimā. 4.12(31); यदि कृतं त्रिदशैरिदमप्रियम्। अनुभवन्त्वचिरादमृताशिनः फलम् Abhiṣe. 3.4; परं स्वभाव एवैषो यत् परार्थविधित्सया। क्लेशाननुभवन्त्येव स्वयम् ŚatTrayī. 592; तिरश्चां संभवः स्वर्गे यथा न नरके तथा। न प्रेतानां यतस्तज्जं दुःखं नानुभवन्ति ते Viṁśa. 5; अभिलाषमुदीरितेन्द्रियः स्वसुतायामकरोत् प्रजापतिः। अथ तेन निगृह्य विक्रियामभिशप्तः फलमेतदन्वभूत् KumāSaṁ. 4.41; अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णम् Śāk. 5.6; SiṁhāDvā. 202.5; स्त्रीरत्नेषु ममोर्वशी प्रियतमा यूथे तवेयं वशा। सर्वं मामनु ते प्रियाविरहजां त्वं तु व्यथां मानुभूः Vikramo. 4.47; सर्वमाकुलितं त्वयैतत् (v.l. त्वद्दुर्मन्त्रविलसितान्यनुभवति स्वामी) PañcT. 1.129 (8) (143.6); 3.66 (8) (326.4); 4.13 (12) (382.5); स्वस्याविनयस्य फलमनुभव Mṛcch. 10.52 (14); उदयति सततं यदा शिखी चरति भचक्रमशेषमेव वा। अनुभवति पुराकृतं तदा फलमशुभं सचराचरं जगत् BṛSaṁ. 47.15; कर्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधो वा MudrāRā. 4.3; हा शङ्खचूडहतक ··· क्षणे क्षणे मरणादतिरिक्तं दुःखमनुभवसि Nāgā. 5.21 (27); अफलमेव दुःष्यन्तस्य कृते शकुन्तला दुर्वाससः शापमनुबभूव VāsaDa. 153.3; 290.2; नृशंसव्यापृतकाः यथायथमनुभवन्ति स्वदुर्नयानाम् (फलम्) AvantiKa. 236.5; 41.1; (अहम्) अयुतमपि यातना-

नामनुभवेयम् DaśKuC. 58.22; कष्टं दशाविपाकमनुभवत्यार्यो मारीचात् MahāvīC. 5.19(3); 5.174; कष्टां दशामनुभवामि AnargharRā. 4.6(3); उभयोर्वारणप्रेरणाभ्याम्। मध्ये त्रैशङ्कवीयामनुभवति दशां यत्र हालाहलोष्मा ŚivPāKeSt. 25; अवाप्तनरकासङ्गा मानुभूवन्महासुराः। क्रूरासिपत्त्रसंपातनिरर्गलकदर्थनाम् HarVi. 32.116; परार्थे यः पीडामनुभवति Dhvanyā. 145.2 (*on* 1.14) = BhallaŚ. 56 = ŚārṅgaPa. 1052 = Subhāṣi. 947; न्यक्कृतानि च वचांसि गुरूणां पुण्यधीर्यदनुजोऽपि निरस्तः। यज्जगन्ति मथितान्यभिमानात्तत्फलं प्रियतमेऽनुभवामि RāmC. (App. 2) 40.41; RāmC. 12.24; ज्वरेणानुभवाम्येतामवस्थामीदृशीम् BṛKathāŚloSam. 25.77; क्षणमेकं सा प्रसववेदनाव्यतिकरमन्वभूत् NalaCam. 3.23(5); जन्मान्तरे नरकातिथीभूतः स्वत एव जाल्मः कल्मषस्य सदृशं दशापाकमनुभविष्यति TilaMañ. 113.2; एतत्कुक्कुटमिथुनं महतीं दुःखपरंपरामनुबभूव YaśasCam. ii. 258.27; आत्मा ··· दुःखसहस्रबन्धमनुभवति TattvPradī.(A.) 14.7 (*on* 1.12); 93.3 (*on* 1.72); स पंचमहापातकैरुपपातकैर्युतो रौरवादिषु नरकेषु पच्यमानो दुष्कृतमनुभविष्यति EI. ii. 220.101; xii. 264.54; xxv. 63.86; iii. 302.69; यत्ने कृतेऽपि सुदृढे यदि कार्यं न सिध्यति। तदा नानुभवेद् दुःखम् BṛDharmaP. i. 7.31; तदीयां स्वच्छतां कुटिलिमानं चावलोक्य बालचन्द्रः स्वात्मनि खेदमनुभवति Loc. 2.18 (*on* 1.0); तन्नूनमिदानीं त्वमस्यैव कर्मणः फलमनुभव UdaySuKa. 69.14; कालं मनागनुभविष्यति कंचिदत्र पुत्रो वियोगमनया सह भार्यया ते KathāSaSāg. vi. 8.248; अनुभवत्वस्य दुर्नयपरिपाकस्य विवेकहतकः फलम् PraboCan. 5.5 (85.16); निजस्य दुर्विलसितस्य फलमनुभव KaumuMi. 2.13(3); तर्ह्यनुभवतु फलं नारदवैमुख्यस्य PārijāHa. 35(1); दिगन्तरस्थे भूपाले तस्मिंस्तत्कर्मकृत् किल। पुरं विधाय तन्नाम्ना तत्कोपफलमन्वभूत् RājTa.(Ka.) 4.186; 7.804; पाप पापाङ्ग कूज३ अङ्गोत्कूजानुभवसि फलं त्वं स्वयम् DvyāśraKā. 20.90; आयुधाघातवेदनम्। जिनदासोऽन्वभूत् PariPar. 1.275; पापं कृत्वा शरीरिणः। गच्छन्ति नरकेष्वेषु दुःखान्यनुभवन्ति च PariPar. 6.125; BrahmSūBh.(Ma.) 74B.10 (*on* iv. 4.15); अजयमेरवाणां यल्लोहघातैः करणीयमासीत्। तदन्वभूवन्बहवस्तुरुष्काः PṛthvīVi. 6.4; 'स चेद् व्याधीयीत ···' व्याधीयीत व्याधिमत्तामनुभवतीत्यर्थः SmṛtiCan. i. 122.18; कथं सोऽपि शिवोऽसत्यशिव इव संवृत्तो यः कालकूटमात्रादपि दारुणां विपदमनुभवति SamudraMa. 3.6(5); स यदनुभवति प्राग्विबाधापि दुःखम् TattvMu. 2.45; अत्र रणाय स्पृहयति नरसिंहक्षितिपतौ कति न दुरवस्थामन्वभवन् नरपतयः Ekāva. 8.27 (26) (264.18); राजापथ्यकारिणो ध्रुवं विकारमनुभवन्ति PuruṣPa. 11.9; 168.23; बाणः ··· दारिद्र्यमनुभवति BhojPra. 19.28; सुमनोवाटशाटान्तर्भवं शोणितवर्षणम्। इति दृष्ट्वा जनः सर्वः क्षते क्षारमिवान्वभूत् RājTa.(Śrī.) 2.121; धनुर्गुणटणत्कारश्रुत्यैव त्यक्तजीविताः। द्विषो नान्वभवँस्तस्य शरप्रहरणव्यथाम् HammīMaKā. 13.218; ते ··· केवलमर्जनरक्षणवियोगदुःखान्यनुभवन्ति Subhāṣi. 483; 732; 796; सर्वोऽपि लोकोऽहमस्मीति प्रत्येति दुःखं चानुभवति SiddhāBi. 2.3; तत् (वाक्यम्) ···। न त्वव्यवस्थितजयपराजयपर्यायप्राप्तिमदसमाप्यमानसमरसमबलनरपतिद्वयन्यायेन क्लेशानुवृत्तिमनुभवेत् ŚivārkaMaDī. i. 118.25 (*on* i. 1.2); अनुभवति वियोगं नात्र लोकः कदाचित् HariVi. 3.4; अहं पुराकृतं कर्म स्वयमेवानुभविष्यामि KathāK. 35.9; 40.16; कथमात्मनिमित्तमीदृशीमवस्थामनुभवति JānaPa. 3 27(1); 3.41(8); कुतः···निरन्तरनिरुद्धासंचारा पञ्जरबद्धशुकीव शोकमनुभवसि ŚṛṅgāSar. 39(3); मत्परिभवफलं स्वयमनुभवतु पापाशया MadaKeC. 107(7); AlaṅkāMañ. 144.10; किमर्थमेतादृशीमवस्थामनुभवसि VasaTi. 26.15; 27.1; (pass.) to be experienced, to be undergone (suffering, grief etc.) हा हतास्मि महाबाहो त्वयाद्य विधवा कृता। अशृण्वता मम वचस्त्वयेदमनुभूयते Rāmā. iv. 430*(2); हसद्भिर्यत्कृतं कर्म कलुषं कलुषात्मभिः। एतत्परिणते काले क्रोशद्भिरनुभूयते BuddhaC. 14.19; यत्रस्थैर्नारकैर्दुःखमसह्यमनुभूयते MārkP. 12.20; (नरके) तत्रानुभूयेत दुःखम् BrahmāṇḍP. iii. 2.190; वृद्धे ··· निमित्तेन केन दुरवस्थानुभूयते DaśKuC. 20.10; 97.13; अनुभाविष्यते शोको मैथिल्या Bhaṭṭi. 16.30; 22.20; अतो दुर्नीतेः फलमिदमनुभूयते Hitopa. 3.113(2); दुःखानि ह्यनुभूयन्ते ··· शरीरिभिः BṛKathāŚloSam. 20.347; जन्तुभिश्चानुभूयन्ते ···। नानाविधानि दुःखानि नरके ŚivS. 1.26; नास्माकमुक्तं करोषि तदिदमनुभूयतामसमसाध्यावगुण्ठितस्य फलमात्मनः स्वभावस्य UdaySuKa. 82.9; इयं सुन्दरसेनस्य तथा च श्रूयतां कथा। यथा मन्दारवत्यर्थे क्लेशस्तेनान्वभूयत KathāSaSāg. xii. 34.39; ĪśānŚiPa. i. 14.261; मित्रेणारिदशान्वभावि जगृहे बाणारिणा बाणता ŚrīKaC. 20.63; सद्भिरेव विबुधैरसत्समा कापि दुर्ग्रहदशान्वभूयत Yādavā. 17.68; यद्दीर्घिकासु ···। क्षणदास्वपि चक्राह्वैर्विरहो नानुभूयते MadhuVi. 1.60; किं वा तन्वि व्यसनमपि तद् यन्मया नान्वभावि BhramDū. 113; (*caus.*) to cause to experience or undergo (suffering etc.) अधर्मकारिणं तु फलमसदनुभावयति PramāVāBh. 36.24; अलं तया श्रिया या ··· व्यासङ्गपरंपराभिः शतशो दुःखमनुभावयति NītiVā. 24.83 (*but* comm. प्रकटयति); रे रे चपल चापलस्य फलमदूरविषयमनुभावयामि भवन्तम् UdaySuKa. 142.3; (परमेश्वरः) स एव ··· दुःखमनुभावयति NyāySu.(Ja.) 19A.12 (*on* i. 1.1); हरिचन्दनशीतलैर्मयूखैरनुलिम्पन्नपि काममङ्गमङ्गम्। अनुभावयति स्म तेन चन्द्रः···विषाग्निदाहम् Ragh. 15.21; (*caus.* pass.) to cause to be experienced or undergone (suffering etc.) ते ···। तद्दुःखमनुभाव्यन्ते क्रन्दन्तः करुणस्वरम् TriṣaŚaPuC. i. 1.566; i. 1.582; iii. 4.97; **3D** to attend, to participate in आ यज्ञमनुभवितुमागत इति। कथमनुभवामि PañcRā. 2.5(3); श्वो वयमुदयनोत्सवमनुभवामः PriyDa. 3.3(3); दम्पती तमिन्द्रपूजोत्सवमनुबभूवतुः AvantiKa. 156.15; अनुभवतु तपस्विनी वेणीसंहारमहोत्सवम् VeṇīSaṁ. 6.607; UpadeSā. 82.88; यया दीर्घायुषा प्रतापरुद्रमहाभिषेकमहोत्सवमनुभवितास्मि PratāYaBhū. 158.4; अनुबभूवुरहो नु महोत्सवं तमपि सिन्धुशया जलजन्तवः Gaṅgāva. 8.23; श्रीवजारतरायविजयानन्दरङ्गभूपालः ··· अभूतपूर्वं महान्तमुत्सवमनुबभूव ĀnandRa. 8.31(30); अहमप्यमुना शृङ्गारशेखरेण संभूय तस्या महोत्सवमनुभवामि VasaTi. 4.2; (pass.) to be attended, i.e. to be witnessed स संनिपातयामास महीपालान् ···। अनुभूयतामयं वीराः स्वयंवर इति MahāBhā. iii. 51.8; **3E** to realise (oneness with the Supreme) सा संवित्स्वयं कथमिवात्मभावमनुभवेत् BrahmSūBh. (Rā.) 39.8 (*on* i. 1.1); मुक्तात्मा स्वात्मशरीरकं परं ब्रह्म ··· अविभागेनैवानुभवति VedāntSā.(Rā.) 402.4 (*on* iv. 4.4); 413.2 (*on* iv. 4.22); प्रत्यगात्मा परं ब्रह्म स्वात्मनो विभक्तमनुभवति VedāntDī. 243.22 (*on* iv. 4.4); परिपूर्णमहंभावं प्रकटमनुभवति (मुक्तः) BrahmSūBh.(Śrī.) ii. 498.4 (*on* iv. 4.19); (pass.) to be realised सर्वत्रावस्थितं शान्तं चिद्ब्रह्मेत्यनुभूयते AnnaU. 5.21; 1.55; ब्रह्म न ह्यत्र किंचनानुभूयते NṛsiṁhoTāU. 9; श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वंपदेरितम्। एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ŚukaRaU. 3.6; प्रसंख्यानमतः कार्यं यावदात्मानुभूयते UpadeSā. 351.12; धावद्भिरयमत्युष्णैः प्राप्यते न क्वचिद् बहिः। सद्भिर्निर्वापितैस्त्वन्तः समन्तादनुभूयते RāmC. 9.12; बुद्ध्युत्पत्तावपि तथाविक्रियं ह्यनुभूयताम् TaiUBhāVā. 60.16 (2); अबाधितं यथा तत्त्वं स्वयमेवानुभूयते YogVā. iii. 7.41; PramāMī. 22.18 (*on* i. 1 29); Tattvodyo. 244B.5; एकाग्रेण चित्तेन निर्विघ्नमात्मानुभूयते JīvanVi. 108.14; 45.19; अनुभूयते स्वात्मा NyāySu.(Ja.) 442B.11 (*on* ii. 3.14); (*caus.*) to cause, i.e. to enable to realise युक्त्यपेक्षं वाक्यमनुभावयिष्यति ब्रह्मात्मत्वम् ··· सापि हि युक्तिः सकृत्प्रवृत्तैव स्वमर्थमनुभावयिष्यति BrahmSūBh.(Śaṅ.) 768.4 (*on* iv. 1.2); आत्यन्तिकसुखात्मिका मुक्तिर्मे स्यादिति काम्यमानत्वादात्मनः कामितत्वम्।··· तं ददाति ··· प्रकाशस्वरूपेण अनुभावयति LalitāTriBh. 299.9 (*on* 27); **4Ai** to occupy, i.e. to pervade प्राणो भूत्वा वायुराकाशमनुभवति JaimiUBr. iv. 12.6; एषा ते भास्वरी कीर्तिर्लोकानभिभविष्यति (v.l. अनुभविष्यति PW.) MahāBhā. iii. 131.29; यद्यूयं पितुरादेशमग्रहीष्ट मुदान्विताः। अथो वा उशती कीर्तिर्लोकाननुभविष्यति BhāgP. iv. 30.11; **4Aii** to occupy with, i.e. to govern इत्युक्त्वान्तर्दधुः सर्वे राजा राज्यं तदन्वभूत् MatsyaP. 24.21; त्वमनुभव यथेच्छं निःसपत्नां धरित्रीम् RāmaCam. 2.64; **4Aiii** to occupy, i.e. to pass through सूर्यस्तत्र किल राशिमनुभवति ŚaṅkaVi.(Ā.) 216.13; **4B** to hold, to encompass यथा वै द्वे वामलके द्वे वा कोले द्वौ वाक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनुभवति प्रजापतिर्हे ChāndoU. vii. 3.1; **5** to suffice for, to be sufficient (to produce) देवान्सृष्ट्वा तेभ्य एतदन्नपानं ससृज एतान्यज्ञान्। अग्निष्टोमं प्रथमम्। स एनान्नान्वभवत्। अथात्यग्निष्टोमम्। स एनान्नान्वभवत्। अथोक्थ्यम् ŚāṅkhāŚS. xv. 5.1; xv. 5.13; इमावपि चन्द्रसूर्यौ ··· आभयाप्याभां नानुभवतः, वर्णेनापि वर्णं तेजसापि तेजो नानुभवतः SaddhaPuṇ. 108.8; **6A** to follow, to be in succession, to appear in subsequent ritual तथास्यैतानि दश मध्यमान्यहान्यनतिरिच्यमानाः पशवोऽनुभवन्ति BaudhŚS. ii. 259.2; काश्चित् स्त्रियो ह्यक्षरमेकविंशतिस्सप्त भूत्वानुभवन्ति कर्मभिः NidāSū. 10.11 (1.6); 69.18 (4.6); 83 9 (5.3); 144.19 (8.9); 155.25 (9.3); गृहपतिं वानुसत्त्रिणोऽनुभवन्ति LāṭyāŚS. vi. 4.16; **6B** to appear or to be born subsequently तत्पुरोऽनेन विज्ञाता भवाः पञ्च स्वगोचराः।··· तदान्वभूदयं हस्ती सिद्धार्थो मलयोद्भवः BṛKathāK. 127.103; बहुना किमतीव भूतलेऽस्मिन् द्वितयं विस्मयनीयमन्वभावि Nalābhyu. 2.16; **7** to undertake, to perform भीममेवाविदुर्भीममविदन्वा बिडौजसम्। कृतार्थमागतं पौरा अन्वभूवंश्च मङ्गलम् DvyāśraKā. 9.63 (comm. चक्रुः); ज्येष्ठानुक्रमेण गमनम् अनुभवति VetāPañ.(Jam.) 112.8 [KośaKaTa. 2.779]

**अनुभू** (**anu-bhū-**) x.u. [DhātuPā. 10.207; 10.300] **A** to meditate, to contemplate तद् हृदयाकाशं प्राणेन सह वै क्रमात्। व्यक्तये श्रोत्रवृत्तौ तु प्रयातमनुभावयेत् PauṣkS. 27.496; तां शक्तिं ब्रह्मरन्ध्रेण प्रयान्तीमनुभावयेत् JayāS. 10.55 = PāraS. 3.177; 7.219; 25.31; एकैकशोऽङ्गानि धियानुभावयेत् पादादि यावद्धसितं गदाभृतः BhāgP. ii. 2.13; अहं राम रूपं ते स्थूलमेवानुभावये AdhyāRā. iii. 9.47; इदमप्राकृतं ब्रह्मशरीरं प्रकृतावपि। मोक्षं सूक्ष्मदृशां यच्छत्यनुभावय तां हृदि GopāKeCan. 147.13; **B** to think continuously or reflect on (चन्द्रापीडः) उपविष्टश्च तस्यां पुनः पुनस्तमेव मनसा महाश्वेतावृत्तान्तमन्वभावयत् Kād. 176.18; राजा त्वपराधालिङ्गितानां समवर्ती तत्फलमनुभावयति NītiVā. 28.2 (comm. तत्स्वयमेव संभावयति चिन्तयति); शङ्का ···। परोत्था तु

विरोधः …। अनुमानविरोधश्च TantrVā. 965.26 (*on* iii. 4.13); ब्रह्मैकत्वं ब्रुवतां प्रत्यक्षविरोधः स्यात् … तत्र ब्रह्मैकत्वं ब्रुवतामनुमानविरोधश्च BṛĀraUBh. 268.18 (*on* ii. 1.20); कार्यकरणसंघातधर्मत्वं ज्योतिष इति यदुक्तम्, तन्न, अनुमानविरोधात् BṛĀraUBh. 523.20 (*on* iv. 3.6); BṛĀraUBhVā. iv. 3.479; नित्यत्वेऽप्यागमदर्शनादनिश्चयादनुमानस्यैवात्र प्रामाण्यं, तथा चानुमानविरोध इति TātpaṬ.(Vā.) 271.4 (*on* i. 1.33); (तेषामश्रावणत्वादि विरुद्धमनुमानतः) अनुमानविरोधमुदाहरति तेषामिति NyāyRa. 365.14 (*on* 5(4). 60); ईश्वरस्यैवासिद्धेः। न चानुमानात्तत्सिद्धिः।… इत्यनुमानविरोधात् ViṣṇuTaNi. 3B. 9; विमतानि शरीराणि मद्भोगायतनानि शरीरत्वादित्याद्यनुमानविरोधस्तु भविष्यति TattvPrakā. 21A. 3 (*on* i. 1.18); विमतं मिथ्या दृश्यत्वात् … शुक्तिरजतवत् इत्यनुमानविरोधात् Vādā. 1.4; 64.1; ब्रह्मणस्सत्यत्वश्रुतिश्चानुमानविरोधादप्रमाणम् Nyāyāmṛ. 93A. 7; 99B. 6; निश्चितप्रामाण्यमेव प्रत्यक्षमितरबाधकं भवेत्, न चात्र प्रामाण्यं निश्चितम् … अनुमानविरोधात् AdvaiSi. 355.2; न केवलं क्रमवादिनोऽनुमानविरोधः, अपि त्वागमविरोधोऽपीत्याह JñānBiPra. 36.24; **1B** contradiction with inference मीमांसकप्रतिज्ञाते चोदनाप्रामाण्ये तत्सिद्धेनैव नित्यत्वेन वादी स्वयमनुमानविरोधमाह TātpaṬ.(U.) 40.20 (*on* 2.27); अनुमानविरोधोपन्यासार्थम् … एवमुक्तम् … तत्र सिद्धसाधनतयैव पक्षो दूषयितव्यः Śarka. 17.12; कार्यत्वप्रयुक्तमेव सकर्तृकत्वं तत्र तत्रोपलब्धमित्यत एवानुमानविरोधस्येष्टविघातकृतश्च न कश्चिदिहावसरः NyāyMañ. i. 183.4; i. 112.27; विमतं कर्तृव्यापारपूर्वकं, फलत्वात्, ग्रामप्राप्तिवत्, इत्यनुमानविरोधात् VivaPraSaṁ. 223.13; प्रत्यक्षश्रुत्या न स्मृतेर्मूलाकाङ्क्षा निवर्त्यते। यतो मूलोच्छेदादनुमानविरोधः स्यात् ŚāstrDī. 22.9 (*on* i. 3.2); आत्मा ज्ञानान्तराधीनप्रकाशः व्यवहार्यत्वात् घटवदित्याद्यनुमानविरोधात् MānaMe. 195.3; **2** one of the sixteen types of *vākyadoṣas* वाक्यार्थजा दोषास्तेषां वक्ष्यामि लक्षणम् … युक्तौचित्यप्रतिज्ञादिकृतो यस्त्विह कश्चन। अनुमानविरोधः स कविमुख्यैर्निगद्यते SaraKaṇṭhā. 46.8.

**अनुमानविरोधानुपपत्ति** (anumānavirodhānupapatti) *f.* untenability of contradiction with inference हेत्वभावेन कार्याभावप्रतिबद्धेन तदनुमानात्। सेयं प्रत्यक्षादीनामनुमानविरोधानुपपत्तिः Kāśi. ii. 123.6 (*on* 5(3).64)

**अनुमानविरोधाविरोधसंदेह** (anumānavirodhāvirodha-sandeha) *m.* doubt about the contradiction or non-contradiction through inference रूपादिरहितब्रह्मजगदुपादानत्ववादिसमन्वयस्य विज्ञानं नीलाद्याकारमित्यनुमानविरोधाविरोधसंदेहे … संगतिमाह VedāntKa. 284.19 (*on* ii. 2.28)

**अनुमानविरोधिन्** (anumāna-virodhin) *m.* type of (fallacious) *avayava* (*lit.* contradictory to inference) (विरोधी अवयवः) अनुष्णोऽग्निरिति प्रत्यक्षविरोधी घनमम्बरमित्यनुमानविरोधी PadārthaSaṁ. 234.5.

**अनुमानविरोधोक्त** (anumānavirodhokta) *adj.* stated in the (event of) contradiction through inference अनुमानविरोधोक्तैरेव च हेतुभिर्मुख्यसामानाधिकरण्यनिराकरणादसिद्धता निर्णेतव्या TantrVā. 968.18 (*on* iii. 4.13)

**अनुमानविलयापत्ति** (anumānavilayāpatti) *f.* undesired contingency of destruction of inference धूमोऽपि धूमध्वजस्यासत्त्वे विरोधादेव तद्गमक इत्यनुमानविलयापत्तेः TattvPradī.(Ci.) 274.12.

**अनुमानविवक्षा** (anumāna-vivakṣā) *f.* intention of stating syllogism अनुमानविवक्षयाह चैतन्यस्वभावता हीति ŚrutaPra. iA. 149.25 (*on* i. 1.1); वक्तुरनुमानविवक्षास्ति चेत्, तत्र प्रधानावयवो हेतुरवश्योपादेयः ŚrutaPra. iB. 178.24 (*on* i. 1.5)

**अनुमानविविक्त** (anumāna-vivikta) *adj.* different from inference इदमपरमनुमानविविक्तमर्थापत्तेरुदाहरणम् TātpaṬ.(U.) 398.19 (*on* 5(7).47)

**अनुमानविशेष** (anumāna-viśeṣa) *m.* **A** particular (form of) inference न चाप्यननुमेयत्वमागमार्थस्य शक्यते। लिङ्गं हि शब्द एवास्य धूमोऽग्नेरिव कथ्यते।… अनुमानविशेषोऽयमीदृग्धर्मस्य बोधकः ŚlokaVār. 5(5).44 (418.1); नन्वनुमानविशेषस्तावत्कश्चिदव्यपदेशकादेवोत्पद्यते NyāyVārPari. 640.11; येनानुमानविशेषेण प्रमाणेन मुख्यतोऽत्र प्रकृतिपुरुषौ विविच्य साधनीयौ SāṁkhyaPraBh. 50.10 (*on* 1.103); **B** variety or type of inference अनुमानविशेषाँस्तन्त्रान्तरे लक्षितान् स्मारयति SāṁkhyaTaKau. 139.1 (*on* 5); यच्च तर्को हि नामेत्यादि तदप्यनुमानविशेषस्यैव तर्कस्य … व्यापारसंज्ञाविशेषादिकथनमात्रम् NyāyPari. 328.6.

**अनुमानविशेषणार्थम्** (anumānaviśeṣaṇārtham) *adv.* for the sake of distinguishing inference (as a means of knowledge) तत्पूर्वकं त्रिविधमनुमानमिति।… अनुमानविशेषणार्थं सूत्रम् NyāyVār. 46.1 (*on* i. 1.5)

**अनुमानविशेषोत्प्रेक्षण** (anumānaviśeṣotprekṣaṇa) *n.* conceiving of a particular form of syllogism अनुमानविशेषोत्प्रेक्षणमेव निपुणधियां सिषाधयिषितस्य प्रामाणिकत्वानुमितिमन्तर्गतां सूचयति ŚatDū. 72.19.

**अनुमानविषय** (anumāna-viṣaya) *m.* **1Ai** object of inference विपर्ययोऽपि प्रत्यक्षानुमानविषय एव भवति PadārthaSaṁ. 177.9; अनुमानविषयेऽपि प्रत्यक्षानुमानविरोधदर्शनादनाश्वासप्रसङ्गः PramāVāSvopVṛ. 9.10; सोऽयम् (कालः) … अनुमानविषयः KalyāKā. 4.3; व्यवस्थितविषयं प्रत्यक्षं नानुमानविषये प्रवर्तते TātpaṬ.(Vā) 107.4 (*on* i. 1.3); भावना … निर्विचारागमानुमानविषयमेव गोचरयेत् TattvVai. 52.18 (*on* 1.49); व्यवस्थितविषयत्वात्प्रत्यक्षस्यानुमानविषये प्रवृत्तिस्तदा न स्यात् NyāyVārPari. 449.12; स्वतन्त्रगृहीतो धर्मी स्वतन्त्रस्मृतेन धर्मेण विशिष्टोऽनुमानविषयः NyāyRa. 422.15 (*on* 5(5).61); 466.16 (*on* 5(7).64); अनुमानविषयस्यातीतत्वमागामित्वं च संविन्न दर्शयति ŚrutaPra. iA. 138.31 (*on* i. 1.1); भेदपञ्चकं नानुमानविषयः AdvaiSi. 821.23; अनुमानविषये जगत्कर्तरि प्रवर्तमानस्य शास्त्रस्य न तथा किंचित्फलं दृश्यते SivārkaMaDī. i. 145.14 (*on* i. 1.3); **1Aii** object of inference (viz. *trairūpya*) अनुमानविषयेऽसंभवात् NyāyBi. 3.111 (comm. अनुमानस्य विषयः प्रमाणसिद्धं त्रैरूप्यम्); **1B** object of inferential knowledge, cf. **अनुमानविषयत्वाङ्गीकार**; **2** object of conjecture or guess व्युत्पत्तिशक्तिभ्यां निबन्धो यः स्खलद्गतेः। शब्दस्य सोऽपि विज्ञेयोऽनुमानविषयोऽन्यवत् VyaktiVi. 27.2; रसः …। नाप्यनुमानविषयः AlaṅkāSa. 91.10; 'तस्मिन्मणिव्रातमहान्धकारे' इति वक्ष्यमाणपद्ये तु बुबोधयिषितैवानुमितिरित्यस्त्यनुमानविषयः RasGaṅ. 631.18; *adj.* **A** which is the object of inference न केवलमनुमानविषयमेवेदं मन्थरस्य बाध्यत्वम् NyāyRa. 363.25 (*on* 5(4).58); **B** having the (same) object as that of inference, cf. **अनुमानविषयत्व B.**

**अनुमानविषयता** (anumānaviṣaya-tā) *f.* the state of being the object of inference अनेकधाभिन्न आगमः प्रत्यक्षानुमानविषयतायामेव व्यवतिष्ठते NyāyVār. 63.22 (*on* i. 1.8); क्वचित् प्रत्यक्षप्रसिद्धस्य क्वचित्संदेहादनुमानविषयता न त्वस्य तदस्ति SāṁkhyaTaPra. 156.4.

**अनुमानविषयत्व** (anumānaviṣaya-tva) *n.* **A** the state of being the object of inference परोक्षविषयत्वेनानुमानविषयत्वं दर्शयति TātpaṬ.(U.) 356.10 (*on* 5(5).28); 'एकदेशान्तरे' इत्यनेनापि एकदेशान्तरभूतस्यानुमानविषयत्वमित्युक्तम् PrakaPañ. 221.3; उभयनिरूपणीयप्रतियोगिविषयत्वात् अनुमानविषयत्वाच्च NyāyKuA. i. 98.2; रात्रिभोजनस्यानुमानविषयत्वात् TarkBhā.(Ke.) 50.12; **B** the state of having the (same) object as that of inference शब्दस्यापि अनुमानविषयत्वेन … अनुमानत्वम् SaptaPa. 155(45)

**अनुमानविषयत्वाङ्गीकार** (anumānaviṣayatvāṅgīkāra) *m.* acceptance of the state of being the object of inferential knowledge अनुमानविषयत्वाङ्गीकारे कथं विषयविषयिभावसंबन्धं विघटयसि ŚatDū. 103.1.

**अनुमानविषयत्वायोग** (anumānaviṣayatvāyoga) *m.* untenability of the state of being the object of inferential knowledge धर्मिणि साक्षादसति … अनुमानविषयत्वायोगात् कथं सत्त्वासत्त्वयोः साध्यत्वम् PramāMī. 47.8 (*on* i. 2.17)

**अनुमानविषयनित्यत्व** (anumānaviṣaya-nityatva) *n.* eternality of the object of inferential knowledge पूर्वोक्तदोषमुपजीव्य अनुमानविषयनित्यत्वप्रसक्तिः ŚrutaPra. iA. 139.9 (*on* i. 1.1)

**अनुमानविषयपरीक्षा** (anumānaviṣaya-parīkṣā) *f.* examination of the object of inference अनुमानलक्षणपरीक्षाद्वारेणानुमानलक्षणं परीक्ष्य संप्रत्यनुमानविषयपरीक्षयानुमानपरीक्षामवतारयति भाष्यकारः TātpaṬ.(Vā.) 403.12 (*on* ii. 1.39)

**अनुमानविषयभाव** (anumānaviṣaya-bhāva) *m.* the state of being the object of inferential knowledge यत्तावदनुमानविषयभावादुत्थितं तद्धर्मत्वम् Kāśi. iii. 181.23 (*on* 5(7).69)

**अनुमानविषयसिद्ध्यर्थम्** (anumānaviṣayasiddhyartham) *adv.* for the sake of the establishment of the object of inferential knowledge अनुमानविषयसिद्ध्यर्थमप्रत्यक्षतां दर्शयति Kāśi. iii. 113.20 (*on* 5(5).28)

**अनुमानविषयावलम्बन** (anumānaviṣayāvalambana) *n.* dependence on the object of inferential knowledge हेतुस्तत्रानैकान्तिकः शब्दे नास्तितां न साधयेत् … अनुमानविषयावलम्बनेनापि प्रवर्तते TārkiRa. 296.3.

**अनुमानविषयीकृत** (anumānaviṣayī-kṛta) *adj.* which is made the object of inferential knowledge शब्दः … पुरुषप्रणीतः प्रत्यक्षानुमानविषयीकृतार्थप्रतिपादनप्रवण एव भवति NyāyMañ. i. 375.15.

**अनुमानविषयीभूतश्रुति** (anumānaviṣayībhūta-śruti) *f.* Vedic passage which has become the object of inferential knowledge प्रत्यक्षानुमानविषयीभूतश्रुत्योः परस्परविरुद्धार्थकत्वाद् बाधो वक्तव्यः MayūMāli. 21.24 (*on* i. 3.2)

**अनुमानविहीन** (anumāna-vihīna) *adj.* devoid of, i.e. not being established through inference (श्रुतेः) कर्ता … अनुमानविहीनोऽपि सोऽस्तीति परिकल्प्यते TattvSaṁ. 2089.

**अनुमानवृत्त** (anumāna-vṛtta) *n.* procedure or nature of syllogism न भवता सम्यगनुमानवृत्तं व्यज्ञायि BrahmSūBh.(Bhā.) 9.4 (*on* i. 1.2)

**अनुमानवृत्तान्त** (anumāna-vṛttānta) *m.* procedure or nature of syllogism पक्षीकृताया एवानुभूतेस्सा[ध्यधर्मा]ध्यानान्वयस्य त्वयैवोक्तत्वादनुमानवृत्तान्तानभिज्ञत्वम् ŚatDū. 118.24.

**अनुमानवृत्ति** (anumāna-vṛtti) *f.* function, i. e. validity of inference न तर्हि सर्वत्रोपलब्धस्य विनाशस्यान्यथाभावशङ्कया मनसि खेद आधातव्यः।··· तथाभावे वा कथमनुमानवृत्तिर्दृष्टे न वैफल्यमश्नुवीत HetuBiṬ. 61.6.

**अनुमानवेद्य** (anumāna-vedya) *adj.* **1** to be known through inference कृत्यधीनसिद्धित्वमनुमानवेद्यम् NayaVi. 40.5 (*on* i. 1.2); अत्युत्कटतपःपापाभ्यां प्रत्यक्षत एव फलं दृश्यते ·· अतस्तत्कार्यकारणभावोऽनुमानवेद्यः TattvPrakā. 10B.4 (*on* i. 1.3); परोक्षस्त्वनुमानवेद्यः NyāySu.(Ja.) 76A.1 (*on* i. 1.1); **2** to be known through guess or conjecture श्वासाऽनुमानवेद्यः ··· तस्याः RasGaṅ. 565.7 = BhāmiVi. 2.85.

**अनुमानवेद्यता** (anumānavedya-tā) *f.* the state of being what is to be known through inference रूपादेर्विश्वस्यानुमानवेद्यतामङ्गीकुर्यात् NyāySu.(Ja.) 399B.1 (*on* ii. 2.7)

**अनुमानवेला** (anumāna-velā) *f.* time for inference न चापरिपूर्णं वाक्यं वाक्यान्तरमाकाङ्क्षति, येनानुमानवेलायां सामेन यजेतेत्ययमनुप्रविशेत् TantrVā. 503.7 (*on* ii. 2.17); घटोपलब्ध्यभावोऽनुपलब्धिः तस्याप्यभावस्यानुमानवेलायाम्··· अनुपलब्ध्यन्तरापेक्षा NyāyRa. 487.20 (*on* 5(8).39)

**अनुमानवेष** (anumāna-veṣa) *adj.* having the garb, i.e. form of inference प्रतिज्ञादृष्टान्तरूपेणानुमानवेषमेव चेदं वाक्यम् BrahmSūBh.(Rā.) 171.9 (*on* i. 1.5); *m.* garb, i.e. form of inference लौकिकवचसामनुमानवेषेण प्रामाण्यं शब्दप्रमाणावसरे वक्ष्यामः TantrRaha. 12.4.

**अनुमानवेषत्व** (anumānaveṣa-tva) *n.* the state of having the garb, i.e. form of inference प्रतिज्ञा ··· एकविज्ञानेन सर्वविज्ञानविषया, अतः अनुमानवेषत्वेऽपि न प्रधानकारणत्वसिद्धिरिति न वाच्यम् ŚrutaPra. iB. 176.10 (*on* i. 1.5)

**अनुमानवैधर्म्य** (anumāna-vaidharmya) *n.* distinction from inference न क्वचिदपि बोध्यबोधकभावातिरिक्तसंबन्धान्तरसिद्धिश्शब्दार्थयोरित्यनुमानवैधर्म्यमत्यन्तप्रसिद्धमेव NyāyKu. 9.1.

**अनुमानवैफल्यप्रसङ्ग** (anumānavaiphalya-prasaṅga) *m.* undesired occasion of the uselessness of inference स्वप्रतिपत्तौ हि पूर्वं पर्वतादेः शुद्धस्य धर्मिणो ग्रहणं न तु सिषाधयिषितहुतवहादिधर्मविशेषरूषितवपुषः, एवमभ्युपगमेऽनुमानवैफल्यप्रसङ्गात् NyāyMañ. ii. 133.3.

**अनुमानवैयर्थ्य** (anumāna-vaiyarthya) *n.* futility of inference संदिग्धत्वात् उपाधेः आवश्यकत्वात्। अदृष्टादेः ईश्वरप्रत्यक्षत्वेन तत्र साध्यस्य असंदिग्धत्वात् न - इति चेत्, तथा सति अनुमानवैयर्थ्यम् TarkSaṁ.(Ā.) 92.26; 24.7; विप्रतिपन्नं कार्यं सकर्तृकमिति सामान्यतः पक्षीकारात् न कश्चिद्दोष इति चेन्न ···अन्यत इत एव वा तत्सिद्धावनुमानवैयर्थ्यान्योन्याश्रयौ दुष्परिहरौ NyāySiA. 232.9; अनुभवानन्तरक्षणे स्मरणसंभवे अनुमानवैयर्थ्यात् VivaPraSaṁ. 73.1; 271.19; संसर्गज्ञानस्य पूर्वमेव भावादनुमानवैयर्थ्यम् Upask. 399.8 (*on* ix. 2.3); मिथ्यात्वस्य चादृश्यत्वेऽनुमानवैयर्थ्यम् Nyāyāmṛ. 42A.5; न हि यावदात्मस्वरूपमनुवर्तमानोऽनात्माप्रसिद्धोऽस्ति, तथा सत्यनुमानवैयर्थ्यात् AdvaiSi. 408.12.

**अनुमानवैयर्थ्यापत्ति** (anumānavaiyarthyāpatti) *f.* undesired contingency of the futility of inference वेदादेव जगत्कारणे ब्रह्मणि विज्ञाते सति अनुमानवैयर्थ्यापत्तेः VedāntKau. 16.5 (*on* i. 1.3)

**अनुमानवैलक्षण्य** (anumāna-vailakṣaṇya) *n.* distinction (of *arthāntaranyāsa*) from the figure of speech called *anumāna* अपूर्वत्वेन प्रतीतेरविद्यमानत्वादनुमानवैलक्षण्यम् Ekāva. 8.28(2) (266.5)

**अनुमानवैलक्षण्यार्थम्** (anumānavailakṣaṇyārtham) *adj.* for the sake of distinction (of *hetvalaṅkāra*) from the figure of speech called *anumāna* परप्रत्यायकं लिङ्गं हेतुः।··· परग्रहणमनुमानवैलक्षण्यार्थम्।··· लिङ्गेन परप्रत्यायनम् ··· हेत्वलकारः AlaṅkāRa. 79(1)

**अनुमानवैषम्य** (anumāna-vaiṣamya) *n.* **i** difference between inferences (by *aindravāyavam* and *hṛdayasyāvadyati*) द्रव्यदेवतासंयोगस्तु न कथंचिद् यागाद् विना सिध्यतीत्यनुमानवैषम्यम् TantrVā. 513.10 (*on* ii. 2.18); **ii** distinction from inference (अर्थापत्तेः) अतोऽनुमानवैषम्यम् YuktiSneha. 76.33 (*on* i. 1.5)

**अनुमानव्यतिरिक्त** (anumāna-vyatirikta) *adj.* different from guess or conjecture अनुमानव्यतिरिक्ते ध्वनने कर्तव्ये सामर्थ्यं शक्तिविशिष्टं समुचितसाकल्यम् Loc. 26.13 (*on* 1.4)

**अनुमानव्यतिरेक** (anumāna-vyatireka) *m.* difference or distinction from inference सौगताः ··· आगमस्यानुमानव्यतिरेकाद् बिभ्यतः पदाभेदविचारणायामेव क्लिष्टाः Kāśi. iii. 135.27 (*on* 5(5).111); NyāyRa. 433.15 (*on* 5(5).111); [Inst.] with the exclusion of inference विपर्ययोऽपि ···। प्रत्यक्षानुमानविषय एव भवतीति प्रत्यक्षानुमानव्यतिरेकेण प्रमाणान्तराभावात् NyāyKa. 178.3.

**अनुमानव्यतिरेकभीत** (anumānavyatireka-bhīta) *adj.* afraid of distinction from inference अनुमानव्यतिरेकभीताः क्लिष्टाः पदाभेदविचारणायाम् ŚlokaVār. 5(5).111 (433.5)

**अनुमानव्यतिरेकिन्** (anumāna-vyatirekin) *adj.* different from (the object of) inferential knowledge विषयाभावाच्च न प्रत्यक्षानुमानव्यतिरेकी विषयः शब्दस्यास्ति NyāyVār. 260.21 (*on* ii. 1.46)

**अनुमानव्यभिचार** (anumāna-vyabhicāra) *m.* (flaw of) deviation of inferential reasoning, i. e. falsity of inference नायमनुमानव्यभिचारः NyāyBh. 107.5 (*on* ii. 1.39); नानुमानाभासव्यभिचारेणानुमानव्यभिचारः शङ्कनीयः Bhām. 343.12 (*on* ii. 1.11)

**अनुमानव्यवच्छेदार्थम्** (anumānavyavacchedārtham) *adv.* for the sake of exclusion of inference शब्दविज्ञानात् सम्यगसंनिकृष्टार्थानुभव आगमः।··· अनुमानव्यवच्छेदार्थं शब्दविज्ञानादिति SarvaMaSaṁ. 7.1.

**अनुमानव्यवधानसापेक्षत्व** (anumānavyavadhānasāpekṣa-tva) *n.* [w. r. for **अनुमानाव्यवधानसापेक्षत्व**] ŚivārkaMaDī. i. 80.9 (*on* i. 1.1)

**अनुमानव्यवस्था** (anumāna-vyavasthā) *f.* rule about (employment of) syllogism न हि प्रयोजनानुसारिण्यनुमानव्यवस्था Kāśi. iii. 84.2 (*on* 5(4).138)

**अनुमानव्यवस्थान** (anumāna-vyavasthāna) *n.* limitation of inference (in its scope) अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् MīmāSū. i. 3.15; TantrVā. 181.9 (*on* i. 3.11)

**अनुमानव्यवस्थापन** (anumāna-vyavasthāpana) *n.* establishment of inference (of *vyāpaka*) नन्वेवमन्यतरासिद्धं व्याप्यं प्रसाध्यानुमानव्यवस्थापनमुच्छिन्नम् KhaṇḍanKhā. 1287.16.

**अनुमानव्यवहार** (anumāna-vyavahāra) *m.* **1A** employment of syllogism निरालम्बनत्वं नाम न किंचित् परमार्थतोऽस्ति। तथापि तत्सत्त्वं कल्पयित्वानुमानव्यवहारः क्रियते Kāśi. ii. 44.19 (*on* 5(2).39); साध्यादिभेदोऽनुमानव्यवहाराय कल्प्यते Kāśi. ii. 83.14 (*on* 5(2).172); iii. 56.26 (*on* 5(4).81); अनुमानव्यवहारे व्याप्तिलक्षणः संबन्धोऽङ्गम् YuktiSneha. 60.29 (*on* i. 1.5); 51.39 (*on* i. 1.5); **1B** usage as inference अनुमानेऽर्थापत्तिव्यवहारं न वारयामः। तत्रानुमानव्यवहारः कुतः NyāyKuA. ii(1). 230.1; **1C** practice of inference, cf. **अनुमानव्यवहारदर्शन 1**; **2** practice of guessing or conjecturing, cf. **अनुमानव्यवहारदर्शन 2**.

**अनुमानव्यवहारदर्शन** (anumānavyavahāra-darśana) *n.* **1** observation of the practice of inference विशेषः ···। स ह्येकदेशी प्रमातृविवक्षावशेन पृथगभिन्नो वैकदेशशब्दाभ्यामुपात्तो भवतु। उभयथानुमानव्यवहारदर्शनात् Kāśi. iii. 25.14 (*on* 5(4).25); **2** observation of the practice of guessing or conjecturing (यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदम्) यथेत्यनुमानव्यवहारदर्शनस्योक्तम् ManvaVi. 898.22 (*on* 8.44)

**अनुमानव्यवहारोच्छेदप्रसङ्ग** (anumānavyavahāroccheda-prasaṅga) *m.* occasion for extirpation or loss of the employment of inference (वाङ्मात्रासिद्धिमात्रेण व्यवहाराप्रकल्पनात्) अनुमानव्यवहारोच्छेदप्रसङ्गः TātpaṬ.(U.) 325.13 (*on* 5(4).82); लिङ्गभूतसामान्यग्रहणाय पुनरप्यपेक्षणादनवस्थापत्तेरनुमानव्यवहारोच्छेदप्रसङ्गः YuktiSneha. 71.25 (*on* i. 1.5)

**अनुमानव्यवहारोपलक्षणत्व** (anumānavyavahāropalakṣaṇa-tva) *n.* the state of being indicative of the employment of syllogism गम्यगमकत्वमेव कार्यकारणभावं मन्यते।··· अन्यस्मिन्नेव तु संबन्धे सति पश्चात् प्रसिद्ध्यन्तमेनमनुमानव्यवहारोपलक्षणत्वेनोपन्यस्यति TantrVā. 44.8 (*on* i. 2.26)

**अनुमानव्यसन** (anumāna-vyasana) *n.* addiction to or fondness for inference आद्ये यत्राप्यनुमानं प्रवर्तनीयं तत्रावश्योपस्थाप्यया अन्यथाभावबाधकभूतयार्थापत्त्यैव साध्यसिद्धेः शान्तमनुमानव्यसनेन KhaṇḍanKhā. 669.22.

**अनुमानव्यापार** (anumāna-vyāpāra) *m.* **1** operation or action of inferring सर्वस्यैवानुमानव्यापारस्य फलमियदेव यद् विवेकग्रहणम् NaiṣkaSi. 92.1; धर्मिणि सिद्धे सिद्धेन हेतुना स्मर्यमाणव्याप्तिकेन साध्यधर्मायोगव्यवच्छेदोऽनुमानव्यापारः PratyabhiVi. i. 386.3 (*on* i. 7.13); **2** operation or action of guessing or conjecturing (पक्षः) द्वितीयस्तु ··· जननानुमानव्यापाराभिप्रायेण दूषितः Loc. 26.15 (*on* 1.4)

**अनुमानव्यापारविषय** (anumānavyāpāra-viṣaya) *m.* object of

the operation or action of inference अनुमानव्यापारः, लक्षणया अनुमानव्यापारविषय इत्यर्थः Bhāsk. i. 386.12 (*on* i. 7.13)

**अनुमानव्याप्त** (anumāna-vyāpta) *adj.* pervaded by, i.e. known through inference असंबन्धाविशेषात् सर्वं सर्वस्माद् गम्येत। तथा च सर्वः परोक्षार्थप्रत्ययोऽनुमानव्याप्तः TātpaṬ.(Vā.) 412.10 (*on* ii. 1.48)

**अनुमानव्याप्ति** (anumāna-vyāpti) *f.* invariable concomitance or pervasion (which is the basis) of inference अनुमानव्याप्त्यादिग्राहकप्रमाणप्राबल्ये सति साध्यव्यापकत्वभङ्गात् NyāySu.(Ja.) 267B. 10 (*on* ii. 1.2) (Śeṣavākyārthacandrikā अनुमानमूलव्याप्त्यादिग्राहकप्रमाणस्य)

**अनुमानव्यायाम** (anumāna-vyāyāma) *m.* exercise, i.e. action of inferring सर्वस्यैवानुमानव्यापार(v.l. °व्यायाम)स्य फलमियदेव यद् विवेकग्रहणम् NaiṣkaSi. 92.1.

**अनुमानव्यावृत्ति** (anumāna-vyāvṛtti) *f.* exclusion of inferential knowledge एतस्य प्रत्यक्षाभासस्य व्यावृत्तिः सुप्रसिद्धेति तामुपेक्ष्यानुमानव्यावृत्तिमाह TātpaṬ.(Vā.) 150. 15 (*on* i. 1.4)

**अनुमानव्युत्पत्ति** (anumāna-vyutpatti) *f.* **A** analysis of (the concept of) inference अनुमानव्युत्पत्तिविषयं प्रकरण[व्यापारं प्रतिपाद]यितुं णिचा निर्दिशति HetuBiṬ. 3.15; न ह्यनुमानव्युत्पत्ति(त्ते?)रूर्ध्वमेव शब्दानन्तरप्रवृत्तिदर्शनमित्येव स्थापयितुं शक्यम् NītiMā. 58.23; **B** derivation or etymology of the term *anumāna* इदमनुमानव्युत्पत्तिपरं भाष्यं मितेन लिङ्गेन लिङ्गिनोऽर्थस्य पश्चान्मानमनुमानमिति TātpaṬ.(Vā.) 104.5 (*on* i. 1.2)

**अनुमानव्युत्पादन** (anumāna-vyutpādana) *n.* analysis of (the concept of) inference अनुमानादिव्युत्पत्त्यर्थानां च प्रकरणानां दर्शनात् किमस्यानुमा[नव्युत्पादनं प्र]योजनमन्यद् वा, न वा किंचिदपीत्येवंरूपश्च संशयः प्राक् प्रवर्तमानः केन निवार्येत HetuBiṬ. 2.22.

**अनुमानशङ्का** (anumāna-śaṅkā) *f.* **1A** doubt about (verbal cognition being) inferential cognition संजल्पनानुविद्धस्य प्रत्यक्षस्य शाब्दत्वाशङ्का शाब्दपरीक्षापर्वणि निराकर्तुमुचिता अनुमानशङ्केव सर्वस्य शाब्दस्य PrakaPañ. 136.6; यत्तु वाक्यार्थज्ञानं तदगृहीतसंबन्धैरेव पदार्थैरुपजायमानं नानुमानशङ्कामर्हति ŚāstrDi. 73.6 (*on* i. 1.5); **1B** doubt about syllogism, cf. **अनुमानशङ्कानिवृत्ति**; **2** doubt about (*vyañjanā* being) conjecture न चार्थशक्तिमूले व्यञ्जनेऽनुमानशङ्का PratāYaBhū. 56.2.

**अनुमानशङ्कानिवृत्ति** (anumānaśaṅkā-nivṛtti) *f.* cessation of the doubt about syllogism जन्माद्यस्य यतः शास्त्रप्रमाणकमित्येतावदिदं सूत्रं सदसंदिग्धमनुमानशङ्कानिवृत्तेः पृथक्करणं प्रपञ्चान्तःपातिनः शास्त्रस्यापि हेतुत्वेन सर्वज्ञत्वं सुसंपादम् PañcPā. 83.2 (*on* i. 1.3)

**अनुमानशत** (anumāna-śata) *n.* hundreds of inferences स्वसाक्षात्कृते आगमानुमानशतैरप्यनन्यथाभावस्य स्वसंवेदनात् AbhinBhā. i. 281.17 (*on* 6.31); Kāvyānu.(He.) 76.18; श्रुत्युक्तोऽर्थस्तु न केनापि वेदवचनेन विरुध्यते। न च शक्यश्चालयितुमनुमानशतैः VedāntKau. 21.16 (*on* i. 1.4)

**अनुमानशरीर** (anumāna-śarīra) *n.* **A** body, i.e. category of inference शब्दादीन्यनुमानशरीर एवान्तर्भवन्ति Kiraṇā. 289.20; 323.22; **B** body, i.e. structure of syllogism अनुभूतिर्न दृश्यधर्मवती दृशित्वात्, यद् दृश्यधर्मवत्, तन्न दृशिः, यथा घटः इति ह्यनुमानशरीरम् ŚrutaPra. iA. 142.25 (*on* i. 1.1)

**अनुमानशिक्षा** (anumāna-śikṣā) *f.* instruction, i.e. employment of syllogism अनुमानशिक्षा त्वेवं कर्तव्या। वेश्याः वर्णानुलोमान्तःपातिन्यो भवितुमर्हन्ति।··· मनुष्यजात्याक्रान्तत्वात् Subodhi. 107.19 (*on* 2.290)

**अनुमानश्रुति** (anumāna-śruti) *f.* Vedic text stating syllogism अनुमानश्रुतिस्तस्मादागात्तस्यैव सिद्धये BṛĀraUBhVā. iii. 8.129.

**अनुमानसंविद्** (anumāna-saṁvid) *f.* knowledge of inference यदि संवित्प्रत्यक्षतैवार्थप्रत्यक्षता भवेद्, अनुमेयादीनामप्यापद्येत। अनुमानसंविदोऽपि प्रत्यक्षत्वात् Kāśi. ii. 124.17 (*on* 5(3).64)

**अनुमानसंव्यवहार** (anumāna-saṁvyavahāra) *m.* employment of syllogism काचिदेव हि वासनोद्भूता किंचिल्लिङ्गाकारं विकल्पमाविर्भावयन्ती किंचिदेवानुमानसंव्यवहारं प्रवर्तयति Kāśi. iii. 93.17 (*on* 5(4).167)

**अनुमानसद्भाव** (anumāna-sadbhāva) *m.* presence, i.e. possibility of inference न हि वयमनुमानसद्भावमङ्गीकृत्यैव बाधकान्तराभावान्मिथ्यात्वस्यासिद्धिं ब्रूमः NyāyRa. 73.6 (*on* 2.91)

**अनुमानसमधिगमनीया** (anumāna-samadhigamanīyā) *adj.* (*f.*) perfectly knowable through inference कृत्यन्वयव्यतिरेकानुविधायितया कृतिसाध्यता तावदनुमानसमधिगमनीया NyāyMa. 188.2.

**अनुमानसमधिगम्य** (anumāna-samadhigamya) *adj.* (also used as noun) what is perfectly knowable through inference किं च अनुमानसमधिगम्ये एवं युक्तं वक्तुम् Śarka. 90.2; अनुमेयान्तरासंभवाद्विशेषणविशेष्यभूतौ धर्मधर्मिणावेवानुमानसमधिगम्यौ Kāśi. iii. 30.20 (*on* 5(4).33); अन्ये ··· अनुमानसमधिगम्यः (आत्मा) ··· इति ··· प्रतिपद्यन्ते ĀtmaSi. 3.8.

**अनुमानसमय** (anumāna-samaya) *m.* time for inference वृष्टिरनुमीयमाना पूरविशेषान्नातीता शक्यानुमातुम्, अनुमानसमये तदत्ययस्याशक्यनिश्चयत्वात् TātpaṬ.(Vā.) 175.18 (*on* i. 1.5)

**अनुमानसमानन्यायता** (anumānasamānanyāya-tā) *f.* the state of having the same basis as that of inferential knowledge ज्ञानस्य प्रामाण्यसमर्थनम् ···। तस्य चानुमानसमानन्यायतयानुमानप्रामाण्यसमर्थनानन्तरमेव समर्थनं करिष्यते NyāyVārPari. 111.9.

**अनुमानसमाश्रय** (anumāna-samāśraya) *m.* basis of inference स्वभावकार्यतासिद्धिरनुमानसमाश्रयात् BṛĀraUBhVā. iv. 3.776.

**अनुमानसमासार्थम्** (anumānasamāsārtham) *adv.* for the sake of brief explanation of inference अनुमानसमासार्थमनुमानमतः परम्। प्रमाणम् PramāSaṁ. 3.19.

**अनुमानसमीक्षित** (anumāna-samīkṣita) *adj.* examined, i.e. known through inference (प्रामाण्यम्) तज्ज्ञानपूर्वकं तर्क्यमनुमानसमीक्षितम् NyāyVi. 2.404.

**अनुमानसंबन्ध** (anumāna-sambandha) *m.* relationship of the inferential argument न च वाच्यमन्वयव्यतिरेकजत्वात् संबन्धपूर्वकत्वं न भिद्यते, अन्वयव्यतिरेकात्मकत्वादनुमानसंबन्धस्य Kāśi. iii. 116.11 (*on* 5(5).37)

**अनुमानसंभव** (anumāna-sambhava) *m.* **1** that which results from inference स्वप्नावस्थामध्ये दृष्टं श्रुतमनुमानसंभववार्ता इत्यादिकल्पना करोति DhyānBiU. 93 (16); **2A** possibility of inference (of an object) येषामपि देशभेदोऽवयवी दर्शनार्हः तेषामपि वियद्वर्तिनीं धूमलेखामभ्रंलिहमुपलभ्यानुपलब्धदेशानां नानुमानसंभवः TātpaṬ.(Vā.) 181.3 (*on* i. 1.5); तदसंभवेऽपि तादृशशङ्कत्वेन संदिग्धस्यानुमानसंभवात् GuruCandr. i. 303.22; दृश्यमात्रेऽनुमानसंभवान्न व्यभिचारप्रसक्तिः LaCandr. 121.10; विधेरेवानुमानसंभवात् BālamBha. i. 70.31 (*on* 1.14); **2B** possibility of syllogism पर्वतो वह्निमान् धूमादित्यनुमानसंभवात् TarkKau. 11.17; पृथिवीत्वम् अनित्यमात्रवृत्ति, पृथिवीमात्रवृत्तित्वात्, घटत्ववत् — इति अनुमानसंभवः स्यात् TarkSaṁ.(Ā.) 28.27.

**अनुमानसहभूत** (anumāna-sahabhūta) *adj.* associated with inference (प्रत्यक्षम्) यदि हि सवितर्कमिव श्रुतानुमानसहभूतं तदनुषक्तं स्याद्भवेत् संकीर्णम्। तयोस्तु बीजमेवैतत् TattvVai. 46.14 (*on* 1.43)

**अनुमानसहस्र** (anumāna-sahasra) *n.* thousands of inferences अवधारिते तु विनियोगे यद्यपि पश्चादनुमानसहस्रं भवति न तथापि कश्चिद्विप्रकर्षः TantrVā. 847.23 (*on* iii. 3.14); वह्न्यातपादिरूपतेजोधर्म एवौष्ण्यमित्यनन्यशरणे प्रत्यक्षेऽनुमानसहस्रेणापि न तत्कम्पनसंभवः NyāyPari. 300.5; जगत्कर्तापि वेदादेव ज्ञातुं शक्यो न त्वनुमानसहस्रेण VedāntKau. 16.12 (*on* i. 1.3)

**अनुमानसहिता** (anumāna-sahitā) *adj.* (*f.*) accompanied by inferential knowledge अर्थस्य ··· श्रेयोहेतुभावानुमानसहिता विनिश्चितिः प्रवृत्तिहेतुः TātpaṬ.(Vā.) 11.8 (*on* i.1.1)

**अनुमानसादृश्य** (anumāna-sādṛśya) *n.* similarity with inference अनुमानसादृश्यमुपमानस्यास्ति TātpaṬ.(Vā.) 106.8 (*on* i. 1.3)

**अनुमानसाध्य** (anumāna-sādhya) *adj.* which is to be proved through inference परमाप्तैरयमुक्तोऽर्थ इति प्रत्येतव्यो नार्थोऽनुमानसाध्य इत्यभिप्रायः Sphuṭā. ii. 39.19 (*on* 2.22); संसर्गवत्त्वं पदानां तज्ज्ञानजनकत्वं नानुमानसाध्यं भवितुमर्हति TātpaṬ.(Vā.) 415.25 (*on* ii. 1.52); अनुमानसाध्ये हि प्रामाण्ये दृष्टान्तापेक्षा न तु तत्तथा NyāyRa. 70.12 (*on* 2.81); (अनुभवविरोधः) न चासावस्तिमिथ्यात्वापरपर्यायं बाध्यत्वं ह्यनुमानसाध्यं न च तदभावः प्रत्यक्षेण वेद्यः NyāySu.(Ja.) 405A.12 (*on* ii. 2.8)

**अनुमानसाध्यप्रामाण्य** (anumānasādhya-prāmāṇya) *adj.* whose validity is to be proved through inference नानुमानसाध्यप्रामाण्यानि प्रमाणानि Kāśi. i. 103.22 (*on* 2.81)

**अनुमानसापेक्ष** (anumāna-sāpekṣa) *adj.* expectant of or dependent on inference व्युत्पत्तिकालेऽनुमानसापेक्षस्यापि वाक्यार्थप्रतिपादनकालेऽनपेक्षस्य शास्त्रस्यैव बलीयस्त्वम् NyāyKu. 87.20; द्युभ्वाद्यायतनत्वं प्रत्यक्षमात्रापेक्षानुमानप्रापितमेवानुवदितुं युक्तं न तु प्रत्यक्षानुमानसापेक्षशब्दप्रापितमित्युक्तं तदयुक्तम् ŚivārkaMaDī. i. 403.24 (*on* i. 3.3)

**अनुमानसामग्री** (anumāna-sāmagrī) *f.* totality of causes of inference घटत एवानुमानसामग्रीत्युपमानमनुमानान्न भिद्यते PrakaPañ. 270.9; 273.9; सत्यप्यनुमानसामग्री नास्यां कल्पनायां व्यापृता NayaVi. 153.3 (*on* i. 1.5); किं व्याप्तिपक्षधर्मतावदप्युपयोगे सत्येव लिङ्गमनुमापकमित्येतावत्यनुमानसामग्री NyāySu.(Ja.) 162B.10 (*on* i. 2.2); संपन्नायां ह्यनुमानसामग्र्यां प्रत्यनुमानसामग्री

सत्प्रतिपक्षरूपा सफला GuruCandr. ii. 76.16; LaCandr. 464.30.

**अनुमानसामग्रीवैलक्षण्य** (anumānasāmagrī-vailakṣaṇya) *n.* distinction from the totality of causes of inference अनुमानसामग्रीवैलक्षण्याच्छब्दो नानुमानम् NyāyKa. 214.13.

**अनुमानसामर्थ्य** (anumāna-sāmarthya) *n.* capacity of inferential argument व्याप्तिस्मरणं पक्षधर्मताज्ञानमित्येतावदेव ह्यनुमानसामर्थ्यम् NyāySu.(Ja.) 261A.7 (*on* ii. 1.2)

**अनुमानसामान्य** (anumāna-sāmānya) *n.* inference in general सामान्यलक्षणपूर्वकत्वाद्विशेषलक्षणस्यानुमानसामान्यं तावल्लक्षयति SāṁkhyaTaKau. 129.2 (*on* 5); 136.5 (*on* 5)

**अनुमानसिद्ध** (anumāna-siddha) *adj.* [*f.* -ā] established or proved through inference प्रधानमचेतनं जगदुपादानकारणमनुमानसिद्धमनुवदन्त्युपनिषद इति सांख्याः Bhām. 120.12 (*on* i. 1.5); VedāntKau. 182.20 (*on* ii. 2.8); अग्न्यादौ सिद्धा शक्तिर्भावान्तरेष्वपि कार्यकरेष्वनुमानसिद्धा NayaVi. 136.5 (*on* i. 1.5); केचित् … बाह्यान् … चाभ्यन्तरानर्थान् प्रत्यक्षानुमानसिद्धानभ्युपयन्ति BrahmSūBh.(Rā.) 483.20 (*on* ii. 2.17); सर्वेश्वरोऽनुमानसिद्धः VedāntDī. 12.18 (*on* i. 1.3); अनुमानसिद्धेश्वराच्च भेदोऽनुभवत एव सिद्धो जीवस्य ViṣṇuTaNi. 4A.3; NyāySiA. 235.15; ŚivākarMaDī. i. 150.18 (*on* i. 1.3); कार्यमिथ्यात्वं कारणसत्यत्वं चानुमानसिद्धं श्रुत्या दृष्टान्तीकर्तुमयुक्तम् VedāntKa. 237.6 (*on* ii. 1.14); (ईश्वरः) निमित्ततयैवानुमानसिद्धः पक्षीकृत इति [न विरोध] इति चेन्न, तस्यानुमातुमशक्यत्वात् NyāySiA. 230.5; संख्यादयश्च प्रत्यक्षानुमानसिद्धाः SarvaDaKau. 23.16; अनित्यत्वानुमानेन स्वधर्मिसिद्धये परमाणवोऽनुमानसिद्धा अपेक्षणीयाः SarvaDaKau. 48.16; अनुमानसिद्धक्षित्यादिकर्त्रैक्यं तु श्रुत्यावगंस्यते इत्यनुशयानं प्रति तथापि नानुमानतस्त्वदभिमतेश्वरसिद्धिरिति ŚivārkaMaDī. i. 149.4 (*on* i. 1.3); 'संकल्पादेवे'त्यवधारणमप्यनुमानसिद्धस्य व्यापारान्तरस्य न व्यवच्छेदकम् ŚivārkaMaDī. ii. 486.18 (*on* iv. 4.8); जातिर्गोत्वादिः … प्रत्यक्षसिद्धा गवादिपदानामभिधेया । अनुमानसिद्धा च RasGaṅ. 182.7.

**अनुमानसिद्धत्व** (anumānasiddha-tva) *n.* the state of being established or proved through inference नित्ययोरात्माकाशयोः … न चाजसंयोगो नास्ति, तस्यानुमानसिद्धत्वात् Bhām. 408.6 (*on* ii. 2.17); (बुद्धौ) तस्यामसिद्धास्त इति चेन्न । अनुमानसिद्धत्वात् ĀtmaTaVi. 629.17; 825.9; जगत्कर्तुरनुमानसिद्धत्वान्न वेदान्तप्रमाणकं ब्रह्म NītiMā. 10.15; प्रत्यक्षानुमानसिद्धत्वे च भेदस्य तद्विरोधादेवाप्रामाण्यमभेदागमस्य ViṣṇuTaNi. 3B.10; VivaPraSaṁ. 177.7; मुक्तो न वृद्ध्यादिमान् । तत्कारणशून्यत्वादित्यनुमानसिद्धत्वाच्च TattvPrakā. 223B.7 (*on* iv. 4.21); 155A.10 (*on* iii. 2.18); ईश्वरस्य … अनुमानसिद्धत्वे तु तत्सिद्धेश्वरपक्षीकरणेनोन्मिषेदेव (अनुमानम्) ŚivārkaMaDī. i. 150.27 (*on* i. 1.3)

**अनुमानसिद्धत्वाभिमान** (anumānasiddhatvābhimāna) *n.* (erroneous) conception of the state of being established or proved through inference भेदमिथ्यात्वस्यानुमानसिद्धत्वाभिमानाच्छास्त्रस्य निर्विषयत्वं स्यात् ŚrutaPra. iB. 168.9 (*on* i. 1.4)

**अनुमानसिद्धप्रामाण्यकत्व** (anumānasiddhaprāmāṇyaka-tva) *n.* the state of having, i.e. referring to the validity established or proved through inference अनुमानसिद्धप्रामाण्यकत्वेनानुमानप्रधानत्वेन च सर्वज्ञाभिमतस्य वाक्यमेव सर्वज्ञानुमोच्यते NyāySu.(Ja.) 325A.10 (*on* ii. 2.1)

**अनुमानसिद्धब्रह्मविषयत्व** (anumānasiddabrahmaviṣaya-tva) *adj.* the state of referring to the Brahman which is proved through inference जगत्कारणे ब्रह्मणि शास्त्रं प्रमाणमुत नेति संशयः । नैतत्प्रमाणमिति पूर्वपक्षः । कुतः । अनुमानसिद्धब्रह्मविषयत्वात् VedāntDī. 12.14 (*on* i. 1.3)

**अनुमानसिद्धसंवाद** (anumānasiddha-saṁvāda) *adj.* having conformity with what is established or proved through inference प्रत्यक्षानुमानसिद्धसंवादं शास्त्रम् PramāMī. 12.15 (*on* i. 1.16)

**अनुमानसिद्धानुवादित्व** (anumānasiddhānuvādi-tva) *n.* the state of being repetitive of what is proved or established through inference सांख्यानां श्रुतिस्मृत्योरनुमानसिद्धानुवादित्वेन तुल्यता VedāntKa. 196.16 (*on* i. 4.1)

**अनुमानसिद्धानुवादिन्** (anumānasiddhānuvādin) *adj.* repetitive of what is proved or established through inference 'अनुमानसिद्धानुवादिषु वेदान्तेषु कथमीक्षतिश्रवणाद् ब्रह्मनिर्णयः VedāntKa. 102.24 (*on* i. 1.22)

**अनुमानसिद्धार्थ** (anumānasiddhārtha) *m.* object established or proved through inference अन्यथा जगज्जन्मस्थितिलयकारणत्वश्रुतेरनुमानसिद्धार्थानुवादकत्वपूर्वपक्षानिर्वाहात् ŚivārkaMaDī. i. 141.23 (*on* i. 1.3); i. 146.20 (*on* i. 1.3)

**अनुमानसिद्धि** (anumāna-siddhi) *f.* **i** establishment of inference (as a means of knowledge) सिद्धे तर्कस्याङ्गत्वेऽनुमानसिद्धिः, तत्सिद्धौ च तस्य तर्कोऽङ्गं सिध्यति PrakaVi 571.7; **ii** establishment of inference (in general) व्यवहारदृष्ट्या तदभावेऽपि … प्रत्ययः, इति चेत् … स दोषस्तदवस्थः । तस्मान्नानुमानसिद्धिः VivaPraSaṁ. 11.20; परसिद्धौ अनुमानसिद्धिः अनुमानसिद्धौ च संतानान्तरसिद्ध्या परसिद्धिरिति इतरेतराश्रयाख्यो दोषः Bhāsk. i. 218.15 (*on* i. 5.5)

**अनुमानस्थिति** (anumāna-sthiti) *f.* presence or existence of inference दृष्टेऽतीचारशङ्का न भवति, यदि सा क्वापि देशान्तरादौ, सिद्धा तत्रानुमानस्थिति TattvMu. 4.42.

**अनुमानस्मरणादिसरणि** (anumānasmaraṇādi-saraṇi) *f.* steps such as guess, recollection etc. लौकिकेन कार्यकारणानुमानादिना संस्कृतहृदयो विभावादिकं प्रतिपद्यमान एव न ताटस्थ्येन प्रतिपद्यते। अपि तु … अनुमानस्मरणादिसरणिमनारुह्यैव तन्मयीभवनोचितचर्वणाप्राणतया Loc. 57.3 (*on* 1.21)

**अनुमानस्मृत्यादि** (anumānasmṛty-ādi) *adj.* **1** inference, recollection etc. प्रतिग्रहणेन चेन्द्रियार्थसंनिकर्षसूचनादनुमानस्मृत्यादयः पराकृता भवन्ति SāṁkhyaTaKau. 123.1 (*on* 5); **2** conjecture, remembrance etc. लौकिकेनानुमानेन संस्कृतः प्रमदादिना (दि न) ताटस्थ्येन प्रतिपद्यते।… अनुमानस्मृत्यादिसोपानमनारुह्येव तन्मयीभवनोचितचर्वणाप्राणतया AbhinBhā. i. 284.22 (*on* 6.31); Kāvyānu.(He.) 78.10.

**अनुमानस्वरूप** (anumāna-svarūpa) *n.* form or nature of inference तत्रानुमानस्वरूपं ब्रूमहे NyāyMañ. i. 101.2; i. 112.16; सूत्रमुपन्यस्यतां स्मृतिमुदाहृत्यानुमानस्वरूपं च सूचयति TattvPrakā. 145A.1 (*on* iii. 1.20); NyāyPari. 325.13.

**अनुमानस्वरूपाक्षेप** (anumānasvarūpākṣepa) *m.* objection to (the validity of) the nature of inference अनुमानप्रामाण्यसमर्थनम् अत्राभिधीयते, किमयमनुमानस्वरूपाक्षेप एव क्रियते … तत्रानुमानस्वरूपं चाशक्यनिह्नवमेव सर्वलोकप्रसिद्धत्वात् NyāyMañ. i. 109.31.

**अनुमानस्वीकार** (anumāna-svīkāra) *m.* acceptance of inference (as a means of knowledge) तथा च सुतरामनुमानस्वीकारः NyāyKuA. i. 175.4.

**अनुमानहेतुत्व** (anumānahetu-tva) *n.* the state of being a cause of inference, causality of inference लिङ्गवल्लिङ्गविशेषणस्यापि ज्ञावमानस्यैवानुमानहेतुत्वम् NyāyKa. 96.25.

**अनुमानाकार** (anumānākāra) *adj.* **A** having the form of sygism न चानुमानाकारमेतद्वाक्यम् VedāntDī. 15.5 (*on* i. 1.1); **B** having the form of inference कार्यकारणानन्यत्वफलभूतमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं तदुत्तम्भकम् । अनुमानाकारप्रतीतिश्चान्यो हेतुः ŚrutaPra. iB. 176.16 (*on* i. 1.5)

**अनुमानाकारता** (anumānākāra-tā) *f.* the state of (something) having the form of syllogism किमत्रेक्षणं गौणम् – उत मुख्यमिति, तदर्थं किमनुमानाकारता, गौणेक्षणसाहचर्यं च विद्यते ŚrutaPra. iB. 174.15 (*on* i. 1.5)

**अनुमानाकारताप्रतिक्षेप** (anumānākāratā-pratikṣepa) *m.* rejection of the state of (something) having the form of syllogism ईक्षणेनागौणेन सतः प्रधानवैलक्षण्ये साधिते दृष्टान्तोक्तेः संभवार्थतयाप्युपपत्तेरनुमानाकारताप्रतिक्षेपोऽभिप्रेतः ŚrutaPra. ii. 450.6 (*on* iii. 2.29)

**अनुमानाकारप्रतीति** (anumānākāra-pratīti) *f.* knowledge in the form of inference कार्यकारणानन्यत्वफलभूतमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं तदुत्तम्भकम्। अनुमानाकारप्रतीतिश्चान्यो हेतुः ŚrutaPra. iB. 176.16 (*on* i. 1.5)

**अनुमानाकारवाक्य** (anumānākāra-vākya) *n.* sentence in the form of a syllogism प्रधानमिति पूर्वपक्षः । कुतः । प्रतिज्ञादृष्टान्तान्वयेनानुमानाकारवाक्यवेद्यत्वात् VedāntDī. 14.15 (*on* i. 1.5)

**अनुमानाकुशल** (anumānākuśala) *adj.* (used as noun) not skilful in inferring न चानुमानाकुशलं प्रति धर्मादिसत्त्वबोधकत्वाद् विश्वसत्त्वश्रुतिर्नानुवाद इति वाच्यम् GuruCandr. i. 491.18.

**अनुमानाकौशल** (anumānākauśala) *n.* absence of skilfulness in (the matter of) inference येषामनुमानाकौशलेन विरुद्धतर्काभासेन वा अनुमाने भ्रमत्वशङ्का, तेषां तच्छून्या ब्रह्मसत्त्वादिधीरुक्तश्रुतिभ्यामेवेति तयोरनुवादकता GuruCandr. i. 469.12; न च … असिद्ध्यादेर्दोषत्वं संभाव्यमिति – वाच्यम्, अनुमानाकौशलेन सभाक्षोभादिना वा अन्यथापि हेतोः प्रयोगसंभवात् LaCandr. 28.17.

**अनुमानागमगम्य** (anumānāgama-gamya) *adj.* comprehensible through inference and scriptures द्रष्टव्ये च वस्तुनि विचिकित्सोपजायते कियत् पारमार्थिकं कियदौपाधिकमिति नानुमानागमगम्ये BrahmSūBh.(Bhā.) 4.29 (*on* i. 1.1)

**अनुमानागमजभेद** ( anumānāgamaja-bheda ) *m.* distinction arising from inference and scripture द्वितीयमपि केवलं प्रत्यक्षानुमानागमजभेदात् त्रिविधमेव (ज्ञानम्) NyāySu.(Ja.) 250A.1 (*on* ii. 1.2)

**अनुमानागमज्ञान** ( anumānāgama-jñāna ) *n.* knowledge (resulting) from inference and scripture अनुमानागमज्ञानं तु] परोक्षार्थविषयत्वान्मानसम् NyāyMañ. ii. 69.2.

**अनुमानागमप्रामाण्य** ( anumānāgama-prāmāṇya ) *n.* validity of inference and scripture जगत्सत्यत्वग्राहिप्रत्यक्षस्य वर्तमानमात्रग्राहित्वे अनुमानागमप्रामाण्यग्राहिणोऽपि प्रत्यक्षत्वाविशेषादुत्तरक्षणे प्रामाण्यं न सेत्स्यति PramāLa. 236A.11; आद्ये (पक्षे) अतीतानागतविषयानुमानागमप्रामाण्यप्रच्युतिः NyāySu. (Ja.) 251B.1 (*on* ii. 1.2)

**अनुमानागमबाधक** ( anumānāgama-bādhaka ) *adj.* which contradicts inference and scripture प्रत्यक्षमेव प्रबलमनुमानागमबाधकम् AdvaiSi. 355.3.

**अनुमानागमभिदा** ( anumānāgama-bhidā ) *f.* distinction as inference and scripture परोक्षस्यैकस्य प्रमाणस्य विभागतः। अनुमानागमभिदा कथं नाभ्युपगम्यते NyāyPari. 495.20.

**अनुमानागमविप्रतिपत्ति** ( anumānāgama-vipratipatti ) *f.* contradiction through inference and scripture (संशयः) अनुमानागमविप्रतिपत्तेर्यथा किं परमाणूपादानकं जगदुत ब्रह्मोपादानकमिति NyāyPari. 61.8.

**अनुमानागमविरुद्ध** ( anumānāgama-viruddha ) *adj.* contradicted through inference and scripture दृष्टसाधर्म्यसंभवे तद्वैधर्म्यकल्पनमनुमानागमविरुद्धम् Bhām. 250.12 (*on* i. 3.30)

**अनुमानागमविरुद्धत्व** ( anumānāgamaviruddha-tva ) *n.* the state of being what is contradicted through inference and scripture प्रत्यक्षानुमानागमविरुद्धत्वादभेदविषयत्वप्रतीयमानान्यपि वाक्यानि सादृश्याद्यर्थान्येव योजनीयानि Tattvodyo. 245A.1.

**अनुमानागमविरोध** ( anumānāgama-virodha ) *m.* contradiction through inference and scripture अप्रयोजकहेतुप्रयोगे प्रत्यक्षानुमानागमविरोधादयः प्रतिज्ञादोषाः TātpaṬ.(U.) 309.21 (*on* 5(4).15); सर्वथा विशेषे प्रत्यक्षादिविरोधः। अनित्यत्वेनाविशेषे अनुमानागमविरोधः NyāySā. 21.8; TātpaṬ.(Vā.) 347.3 (*on* i. 2.9); चन्द्रतारकादिपरिमाणप्रत्यक्षे अनुमानागमविरोधेन तस्याप्रामाण्यदर्शनात् AdvaiSi. 355.6.

**अनुमानागमविरोधित्व** ( anumānāgamavirodhi-tva ) *n.* the state of being what is contradictory to inference and scripture ते ··· मिथ्यावादाभवन्ति प्रत्यक्षानुमानागमविरोधित्वात् NyāyVār. 486.19 (*on* iv. 1.43)

**अनुमानागमविषय** ( anumānāgama-viṣaya ) *m.* object of inference and scripture बुद्ध्यादिभिश्चात्मलिङ्गैर्निरुपाख्यमीश्वरं प्रत्यक्षानुमानागमविषयातीतं कः शक्त उपपादयितुम् NyāyBh. 253.4 (*on* iv. 1.21); अनुमानागमविषयात् प्रत्यक्षविषयं व्यवच्छिनत्ति TattvVai. 12.8 (*on* 1.7)

**अनुमानागमसिद्ध** ( anumānāgama-siddha ) *m.* established or proved through inference and scripture ननु वेदस्यापि सकर्तृकत्वमनुमानागमसिद्धम् NyāySu.(Ja.) 83B.9 (*on* i. 1.1)

**अनुमानागमागम्या** ( anumānāgamāgamyā ) *adj.* (*f.*) not knowable through inference and scripture देवताः ··· अनुमानागमागम्याः सन्ति चान्याः सहस्रशः BhaviP. 90B.17 (i. 48.19)

**अनुमानागमादि** ( anumānāgamādi ) *adj.* inference, scripture etc. अनुमानागमाद्यशेषप्रमाणमूलभूतेन प्रत्यक्षेणैव ह्येनं प्रतिपद्यामहे ĀtmaSi. 41.24.

**अनुमानागमादिज्ञान** ( anumānāgamādi-jñāna ) *n.* knowledge (resulting) from inference, scripture etc. न चानुमानागमादिज्ञानेषु साध्याव्याप्तिः शङ्कनीया VivaPraSaṁ. 33.2.

**अनुमानागमादिदिश्** ( anumānāgamādi-diś ) *f.* [Inst.] by means of inference, scripture etc. संसारिणामप्यनुमानागमादिदिशा प्रमेयमेव PratyabhiVi. ii. 240.4 (*on* iii. 1.10)

**अनुमानागमादिप्रसर** ( anumānāgamādi-prasara ) *m.* use of inference, scripture etc. 'पीतः शङ्ख' इत्यादिप्रत्यक्षं प्राथमिकार्थाभावनिश्चयादेव बाधितमिति पश्चादनुमानागमादिप्रसर इति न ताभ्यां तद्बाधः AdvaiSi. 390.25.

**अनुमानागमानुभूत** (anumānāgamānubhūta) *adj.* known through inference and scripture प्रत्यक्षानुमानागमानुभूतपदार्थविषया संप्रमोषस्वभावा स्मृतिः YaśasCam. ii. 417.18.

**अनुमानागमापेक्षित** ( anumānāgamāpekṣita ) *adj.* required for inference and scripture प्रत्यक्षस्य जात्या प्राबल्याभावेऽपि उपजीव्यत्वेन प्राबल्यम्, उपजीव्यत्वं चानुमानागमापेक्षिताशेषार्थग्राहकतया AdvaiSi. 363.2.

**अनुमानागमाभासजन्या** ( anumānāgamābhāsa-janyā ) *adj.* (*f.*) produced through the false knowledge derived from inference and scripture देहात्मत्वप्रतीतिः ··· अनुमानागमाभासजन्यैव NyāySu.(Ja.) 489A.3 (*on* iii. 2.1)

**अनुमानागमाविरोध** ( anumānāgamāvirodha ) *m.* non-contradiction through inference and scripture अक्षस्य तु प्रबलस्य प्रामाण्यमनुमानागमाविरोधापेक्षं न Nyāyāmṛ. 99B.8.

**अनुमानागम्य** ( anumānāgamya ) *adj.* not knowable through inference यदा त्वेष एतस्मिन्नदृश्ये प्रत्यक्षागम्ये अनात्म्ये आत्मसंबन्धिलिङ्गरहिते अनुमानागम्ये ··· शरणागतिं विन्दते अथ सोऽभयं संसारभयनिवृत्तिं प्राप्नोति ŚivārkaMaDī. ii. 228.31 (*on* iii. 2.4)

**अनुमानागोचर** ( anumānāgocara ) *m.* not the object of inference अदेश्यमग्राह्यम् – प्रत्यक्षागोचरोऽनुमानागोचरः ŚrutaPra. iA. 76.24 (*on* i. 1.1)

**अनुमानाङ्ग** ( anumānāṅga ) *n.* subsidiary to inference तादात्म्यतदुत्पत्तिलक्षणः संबन्धोऽनुमानाङ्गम् TātpaṬ.(U.) 305.18 (*on* 5(4).3); नियमश्चानुमानाङ्गं गृहीतः प्रतिपद्यते NyāyMañ. i. 109.13; भवति हि मनोऽनुमानाङ्गम् TattvBi. 73.1; अनुमानाङ्गमविनाभाव एवाश्रितो भवेत् Kāśi. iii. 228.21 (*on* 5(10).16); तादात्म्यं चानुमानाङ्गमुक्तम् NyāyKa. 76.15; संबन्धनियमस्मृतिरनुमानाङ्गम् NayaVi. 150.4 (*on* i. 1.5); केचिदविनाभावं तादात्म्यतदुत्पत्तिनिबन्धनमनुमानाङ्गमाहुः TātpaṬ.(Vā.) 158.12 (*on* i. 1.5); अथानियतत्वान्नायं प्रसङ्गः तर्हि नियम एवानुमानाङ्गं न कार्यकारणभावादि NyāyRaMā. 56.20; नियमलक्षणः संबन्धोऽनुमानाङ्गम् NyāySu.(So.) 84.30 (*on* i. 2.26); लिङ्गधर्मिणावपि सिद्धावनुमानाङ्गं भवतः TārkiRa. 266.10; कथं साध्यसाधने एवानुमानाङ्गमुक्ते न दृष्टान्तः PramāMī. 47.22 (*on* i. 2.18); TattvPradī.(Ci.) 253.1; NyāyPari. 124.1; संशययोग्यतैवानुमानाङ्गं संशयस्य तदानीं विनाशात् TattvCin. ii(1). 578.2; व्याप्तिरेवानुमानाङ्गं न पक्षधर्मता NyāySu.(Ja.) 259B.7 (*on* ii. 1.2); 534B.12 (*on* iii. 3.1); वैधर्म्यदृष्टान्तोऽपि नानुमानाङ्गम् TantrRaha. 11.24; YuktiSneha. 61.31 (*on* i. 1.5)

**अनुमानाङ्गता** ( anumānāṅga-tā ) *f.* the state of being subsidiary to inference फलवद् व्यवहारहेतुतामनुमानाङ्गतया बिभर्ति यः। अनुमानिरपेक्ष एव वा किल दृष्टे विषयेऽर्थसंशयः NyāyMañ. ii. 125.25; ननु दृष्टान्तोऽप्यनुमानाङ्गतया प्रतीतः PramāMī. 47.22 (*on* i. 2.18)

**अनुमानाङ्गत्व** ( anumānāṅga-tva ) *n.* the state of being subsidiary to inference अस्तु दृष्टान्तस्यानुमानाङ्गत्वे संभवप्रदर्शनार्थत्वे च साधारण्यम् ŚrutaPra. iB. 178.30 (*on* i. 1.5); निरुपाधिकत्वविशिष्टस्यैव च संबन्धस्यानुमानाङ्गत्वं न धूमाग्निसंबन्धमात्रस्य MānaMe. 34.2; पराजयहेतुर्निग्रहस्थानमित्येशामनुमानाङ्गत्वादनुमानेऽन्तर्भावः YatīndraDī. 25.1.

**अनुमानाङ्गभूत** ( anumānāṅgabhūta ) *adj.* [*f.* -ā ] which has become subsidiary to inference तस्माद् वक्तव्योऽनुमानाङ्गभूतः संबन्धः Kāśi. iii. 9.6 (*on* 5(4).3½); काणादा ह्यस्येदं कार्यं कारणं संयोगिसमवायि एकार्थसमवायिविरोधि चेति लैङ्गिकमित्यनुमानाङ्गभूताविनाभावोपाधित्वेन कार्यकारणभावादिच्छन्ति NyāySu.(So.) 85.28 (*on* i. 2.26); तर्कः। स चानुमानाङ्गभूत इत्यपि परस्पराश्रयग्रस्तम् PrakaVi. 571.6; न्यायोऽनुमानाङ्गभूता व्याप्तिः NyāySu.(Ja.) 91A.9 (*on* i. 1.1); तादात्म्यतदुत्पत्ती एवानुमानाङ्गभूतौ संबन्धौ NyāySu.(Ja.) 259B.1 (*on* iii. 1.2); अनुमानाङ्गभूत एव संबन्धो व्याप्तिः MānaMe. 34.1.

**अनुमानाङ्गभूतत्व** (anumānāṅgabhūta-tva) *n.* the state of being that which has become subsidiary to inference विधिरूपप्रवृत्तिर्वा, शब्दोऽपोहेन वर्तते। अनुमानाङ्गभूतत्वाद् यथैव प्रतिषेधकः ŚlokaVār. 5(13).174 (613.6)

**अनुमानाङ्गवैकल्य** ( anumānāṅga-vaikalya ) *n.* deficiency, i. e. absence of what is subsidiary to inference अनुमानाङ्गवैकल्यात्मनो दोषस्योद्भावनपर्यवसानात् KhaṇḍanKhā. 828.11.

**अनुमानाङ्गव्याप्ति** ( anumānāṅga-vyāpti ) *f.* invariable concomitance which is subsidiary to inference अनुमानाङ्गव्याप्तिदूषकतयानुमानदोषत्वमस्तु NyāySu.(Ja.) 265A.5 (*on* ii. 1.2)

**अनुमानाङ्गसंबन्ध** ( anumānāṅga-sambandha ) *m.* relation, i.e. invariable concomitance which is subsidiary to inference व्याख्येयमनुमानाङ्गसंबन्धावधारणे प्रमाणम् Kāśi. iii. 15.25 (*on* 5(4).12); अथानुमानाङ्गसंबन्धपूर्वकत्वं तदसिद्धम् Kāśi. iii. 135.21 (*on* 5(5).110)

**अनुमानातिरिक्त** ( anumānātirikta ) *adj.* **A** distinct from inference (विकल्पस्य) प्रमाणत्वे प्रत्यक्षानुमानातिरिक्तं प्रमाणान्तरं तितिक्षितव्यम् PramāMī. 37.10 (*on* i. 2.5); **B** distinct from inferential knowledge अनुमानातिरिक्तं पक्षलिङ्गपरामर्शाद्यदृष्टेः पदवाक्यतत्संबन्धादीनां च विशिष्टवाक्यार्थप्रत्यसिद्धव्याप्तिकत्वेनालिङ्गत्वात् NyāyPari. 363.5.

**अनुमानात्मक** ( anumānātma-ka ) *adj.* [*f.* -ikā] **A** of the nature

of inferential knowledge जानत एव मधुरां पित्तदुष्टजिह्वस्य 'तिक्ता' इत्यन्वयधी- रनुमानात्मिका बाधिते न स्यात् NayaVi. 273.8 (*on* i. 1.24); 'वायुपरमाणवोऽ- नीलरूपाः, सलिलपरमाणवो गन्धशून्याः' इत्यादिष्वनुमानात्मिका तदेकविषया बुद्धिः TantrRaha. 16.2; **B** of the nature of inference (as a means of knowledge) (धर्म इव ब्रह्मण्यनपेक्ष आगमो भवितुमर्हति) अनुमानात्मकत्वस्या- गोचरत्वात् ब्रह्मणः PrakaVi. 394.15; नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यः BrahmSūBh.(Ma.) 14B.7 (*on* i. 3.3)

**अनुमानात्मकत्व** (anumānātmaka-tva) *n.* the state of being of the nature of inference (तर्कस्य) तस्यानुमानात्मकत्वेऽपि प्रमाणानुग्राहकत्वा- तिशयवत्त्वज्ञापनाय पृथगुक्तिः NyāySu.(Ja.) 91A.9 (*on* i. 1.1)

**अनुमानात्मता** (anumānātma-tā) *f.* the state of being of the nature of inference सर्वप्रपञ्चमिथ्यात्वं मिथ्या चेद् व्याहतं भवेत्। अनाश्रयस्यैव- मादेरनुमानात्मता कथम् NyāyPari. 333.4.

**अनुमानात्मत्व** (anumānātma-tva) *n.* the state of being of the nature of inference वेदप्रामाण्यवादित्वेऽपि तस्यानुमानात्मत्वोररीकरणात् ··· कणादस्य मतमवतार्यते SarvaMaSaṁ. 22.15.

**अनुमानादि** (anumānādi) *adj.* **1A** inference etc. (as means of knowledge) सिद्धं चानुमानादिषु प्रमाणत्वमनुभूतेः Bṛha. 103.5 (*on* i. 1.5); 178.10 (*on* i. 1.5); 254.7 (*on* i. 1.5); किमर्थं चानुमानादेर्लक्षणं नात्र कथ्यते ŚlokaVār. 4.2 (134.2); 4.87 (161.3); 5(4).1 (345.6); निदानं श्रूयते नापि प्रत्यक्षानुमानादिभिर्गम्यते TantrVā. 1001.20 (*on* iii. 4.29); 'नान्यलिङ्गचनेन्द्रियम्' इत्यनेनानुमानादीनामप्रतिषेधात् 'चोदनैव' इत्यवधारणमनु- पपन्नम् TātpaṬ.(U.) 36.9 (*on* 2.15); नायमर्थः प्रत्यक्षस्य गोचरः ··· नानुमाना- दीनाम् BrahmSūBh.(Śaṅ.) 295.15 (*on* ii. 1.6); 304.2 (*on* ii. 1.11); न खलु प्रत्यक्षैकशरणाः पदार्थाः अनुमानादिभिरेषामुपलम्भः संभवत्येव NyāyMañ. ii. 50.22; अनुमानादेस्त्वसामर्थ्यमतिप्रसिद्धम् BālaKrī. i. 14.4 (*on* 1.7); अनुमानादीनि तदात्वे यद्यप्यसन्तमर्थमवगमयन्ति ManuBh. i. 63.7 (*on* 2.6); ii. 108.10 (*on* 8.74); वेदार्थस्य वर्णानां च लिङ्गादिद्वारत्वानुपपत्तेरनुमानादेरप्य- निमित्तता NayaVi. 67.7 (*on* i. 1.4); 84.7 (*on* i. 1.5); कैव कथा तद्गोचर- व्याप्त्युपजीविनो वराकस्यानुमानादेः PramāMā. 12.14; अनुमानादेरपि प्रत्यक्षत्व- प्रसङ्गः NyāyKuA. ii(1). 197.8; न चानुमानादीनामागमं विना प्रामाण्यं धर्मादिषु VisnuTaNi. 2B.5; 4A.1; न चात्र निर्विकल्पकप्रमाणादेव सद्धीः सिध्यति, अनुमानादौ सविकल्पकबुद्धेरेव प्रथमत्वात् TarkSaṁ.(Ā.) 9.24; न वयमनुमाना- दिना जगत्कारणं साधयामः VedāntKau. 143.12 (*on* i. 4.23); (वेदबाह्याः श्रुतयः) प्रमाणाभासान्यनुमानादीनि ऐहिकलौकिकभोगादिकफलसाधनत्वे दृश्यमानेऽपि निष्फलाः ManvaVi. 1523.31 (*on* 12.95); अनुमानादेर्वेदोपजीवकत्वात् Tattv- Cin. iv(1). 364.1; प्रत्यक्षैकप्रमाणवादितयानुमानादेरनङ्गीकारेण प्रामाण्याभावात् SarvaDaSaṁ. 1.28; 1.66; अक्षमूलोऽनुमानादिस्तेन विध्येकमेयता NyāyMāVi. 17.12 (*on* i. 1.4); समवायिनि घटादौ ··· प्रत्यक्षाभावेनानुमानादेरप्यभावात् SarvaDaKau. 32.20; नन्वनुमानाद्यपि न धर्मे निमित्तं प्रत्यक्षपूर्वकत्वादित्यनुपपन्नम् YuktiSneha. 37.11 (*on* i. 1.4); अनुमानादिना वा चैत्रात्मादिकं ज्ञातवता मैत्रेण ··· अनुभवात् Nyāyāmṛ. 569A.5; प्रमाणाभासाः ··· ईश्वरादिसाधकान्यनुमानादीनि ŚivārkaMaDī. i. 97.23 (*on* i. 1.1); अनुमानादेस्तत्र सुतरामप्रवृत्तेः BhāṭṭDī. i. 3.20 (*on* i. 1.2); i. 5.16 (*on* i. 1.3); युक्तौ अनुमानादितत्सहकारितर्केषु GuruCandr. iii. 11.15; LaCandr. 577.39; ŚaktiVā. 196.21; अनुमाना- दिना ज्ञातः पुरुषः पुरुषान्तरः BṛBrahmaS. i. 3.87; शास्त्रमेवेह प्राधान्येन गमकं न त्वनुमानादि LalitāSaBh. 147.8 (*on* 188); **1B** (the word) *anumāna* etc. अनुमानादिपदेष्वप्यव्यभिचारिपदमुपादेयं स्यात् TātpaṬ.(Vā.) 130.25 (*on* i. 1.4); न ह्यनुमानादिशब्दाभिधेयं ज्ञानं स्वतन्त्रं ब्रूमः PrakaVi. 311.18; **1C** inferential knowledge etc. भविष्यत्संवित्प्रागभावस्य ग्रहणं योग्यानुपलब्ध्या जायते। अतीतस्य तु स्मरणानुमानादिना ŚatDū. 114.3; प्रायः पुरुषेण भवितव्यमिति पुरुष एवेत्यभिप्रायश्चेति यथोचितं प्रत्यक्षानुमानादिष्वनुप्रवेशः NyāyPari. 68.4; न ह्यनुमानादिषु वेद्यांशे तात्कालिको व्यवहारो दृश्यते TantrRaha. 9.1; नन्वनुमाना- दिभिरावरणं निवर्तते न वा SiddhāBi. 64.5; **1D** inferential argument etc., cf. **अनुमानादिरूप**; **2** conjecture or guess etc. न च शब्दानु- मानादिभ्यः तत्प्रतीतौ लोकस्य सरसता प्रयुक्ता AbhinBhā. i. 276.22 (*on* 6.31); नासौ स्मरणानुमानादिना खलीकारपात्रीकर्तव्यः Loc. 56.28 (*on* 1.21); न च शब्दानुमानादिभ्यस्तत्प्रतीतौ ताटस्थ्यमेव भवेत् Kāvyānu.(He.) 73.14.

**अनुमानादिक** (anumānādi-ka) *adj.* inference etc. (as means of knowledge) तत्पूर्वकत्वाच्चानुमानादिकमपि न प्रमाणम् ŚāstrDī. 16.21 (*on* i. 1.2); न चानुमानादिकस्य सिद्धिरस्ति NyāyKu. 15.1.

**अनुमानादिकुशल** (anumānādi-kuśala) *adj.* expert in inference etc. अनुमानादिकुशलः तर्की अयमूहापोहबुद्धियुक्तः ManuBh. ii. 488.4 (*on* 12.111)

**अनुमानादिकोविद** (anumānādi-kovida) *adj.* proficient in inference etc. विविदुः सौविदाश्चैवमनुमानादिकोविदाः PariPar. 3 251.

**अनुमानादिगम्य** (anumānādi-gamya) *adj.* knowable through inference etc. न ह्यङ्गाङ्गिभावः प्रत्यक्षानुमानादिगम्यः TantrVā. 419.10 (*on* ii. 1.34); अनयोर्भेदः ··· नाप्यनुमानादिगम्यः, तत्संबद्धलिङ्गाद्यभावात् IṣṭaSi. 111.12; असाधारणं हि सौगतानामपि अविकल्पत्वान्नानुमानादिगम्यम् NyāyRa. 165.19 (*on* 4.99); उक्तलक्षणं ब्रह्मानुमानादिगम्यमुत वेदप्रमाणकमिति संशये VedāntKau. 15.5 (*on* i. 1.3); अनुमानादिगम्यश्चेल्लिङ्गादिः किं न दृश्यते Māna- Me. 41.8; (used as noun) what is knowable through inference etc. अनयैव दिशा अनुमानादिगम्येष्वपि ··· विचारयितव्यम् TantrVā. 862.8 (*on* iii. 3.14)

**अनुमानादिगम्यत्व** (anumānādigamya-tva) *n.* the state of being knowable through inference etc. अतीतानागतानाम् ··· ज्ञानानामप्यनु- मानादिगम्यत्वदर्शनात् NyāyKu. 61.6.

**अनुमानादिगम्यवेद** (anumānādigamya-veda) *m.* Vedic Saṁhitās knowable through inference etc. तथासति अनुमानादिगम्यवेदस्य ब्राह्मणत्वा- भावादेतद्ब्राह्मणान्येव पञ्च हवींषि MayūMāli. 114.10 (*on* ii. 1.9)

**अनुमानादिगोचर** (anumānādi-gocara) *m.* object of inference etc. प्रत्यक्षेण च बाधायामनुमानादिगोचरे। नानुमानादिमानं स्याद् बाधातस्तैमिरा- दिवत् TattvSaṁ. 459.

**अनुमानादिजन्मन्** (anumānādi-janman) *n.* coming into being of inference etc. अनागतेन दृष्टं च प्रत्यक्षस्य मनागपि। सामर्थ्यं नानुमानादिजन्म लिङ्गादिभिर्विना TattvSaṁ. 3174.

**अनुमानादिजन्य** (anumānādi-janya) *adj.* arising or resulting from inference etc. प्रमाणफलम् ··· नानुमानादिजन्यं तद्वैलक्षण्यात् NyāyMañ. i. 73.25; अनुमानादिजन्योऽप्यभूदिति वा भवतीति वा भविष्यतीति वोदेति NyāySu. (Ja.) 214A.9 (*on* i. 4.6); अनुमानादिजन्यातीन्द्रियाभावानुभवहेतौ ··· अजन्यान्तं पदम् VedāntPari. 244.1.

**अनुमानादिजन्यज्ञान** (anumānādijanya-jñāna) *n.* knowledge arising from inference etc. नन्वनुमेयादिषु विषयेष्वकारकेष्वव्यञ्जकेषु च सत्सु कथमनुमानादिजन्यज्ञानस्य तद्विषयाकारता VivaPraSaṁ. 103.13.

**अनुमानादिजन्यत्व** (anumānādijanya-tva) *n.* the state of being arisen from inference etc. क्वचिदिन्द्रियजन्यत्वे क्वचिदनुमानादिजन्यत्वेऽपि ··· तदुपपत्तेः KhaṇḍanKhā. 680.1.

**अनुमानादिजन्याभावधी** (anumānādijanyābhāva-dhī) *f.* knowledge of the absence arising from inference etc. प्रमेयभेदं विना प्रत्यक्षा- नुमानादिजन्याभावधीवद्वैलक्षण्यायोगात् BhedaDhi. 97.8.

**अनुमानादिजाति** (anumānādi-jāti) *f.* generality of inference etc., i.e. inference etc. in general प्रत्यक्षजातेरिदं लक्षणं तस्याश्च प्रतियोगिन्य- नुमानादिजातिः NyāyVārPari. 640.14.

**अनुमानादिज्ञान** (anumānādi-jñāna) *n.* knowledge such as inference etc. यत्तु समानमनुमानादिज्ञानस्य न तन्निवर्तते NyāyBh. 12.12 (*on* i. 1.4); परोक्षविषयस्यानुमानादिज्ञानस्य व्यवच्छेदार्थम् ··· न प्रत्यक्षता प्रसज्यते Nyāy- Mañ. i. 68.7; अनुमानादिज्ञानमात्मनि प्रत्यक्षं न भवेत्, नहि तत् सत्संप्रयोगजम् TātpaṬ.(Vā.) 155.17 (*on* i. 1.4)

**अनुमानादिज्ञानपर** (anumānādijñāna-para) *adj.* intended to refer to inferential knowledge etc. ज्ञातिशब्दश्चात्रानुमानादिज्ञानपरः चक्षु- रादिज्ञानानां स्वशब्दैरुक्तत्वात् ŚāstrDī. 128.14 (*on* i. 1.5)

**अनुमानादितस्** (anumānādi-tas) *adv.* on account of inference etc. कर्मत्वाद्युपस्थापकविभक्तिप्रकृतिभूतपश्वादिपदाद् यत्र न गोत्वाद्यवच्छिन्नोपस्थितिरपि तु निराकाङ्क्षपदान्तरादनुमानादितो वा ŚaktiVā. 219.2.

**अनुमानादित्रयव्यवच्छेद** (anumānāditraya-vyavaccheda) *m.* exclusion of the triad beginning with inference इन्द्रियापोद्यत्वेन च साक्षा- त्कारित्वे लब्धे क्षिप्तं तेनानुमानादित्रयव्यवच्छेदः Kiraṇā. 277.6.

**अनुमानादिदूष्य** (anumānādi-dūṣya) *n.* flaw in syllogism etc. दृष्टान्तस्य साध्यवैकल्यात्। एवमन्यान्यप्यनुमानादिदूष्याणि Nyāyāmṛ. 605B.8.

**अनुमानादिधी** (anumānādi-dhī) *f.* knowledge such as inference etc. लिङ्गाद्यभावतश्चापि नानुमानादिधीरियम् ŚlokaVār. 4.138 (177.3)

**अनुमानादिनिर्मूलन** (anumānādi-nirmūlana) *n.* uprooting, i.e. loss of inference etc. कश्चायं विसंवादः ··· अनर्थविषयत्वम् ··· न ··· अनुमानादि- निर्मूलनात् ŚatDū. 190.27.

**अनुमानादिनिश्चित** (anumānādi-niścita) *adj.* ascertained through inference etc. अनुमानादिनिश्चित इव चन्द्रादौ भेदप्रतिभासानिवृत्तेः IṣṭaSi. 74.5; अनुमानादिनिश्चितार्थोपदेशिनोऽप्याप्तत्वानपायात् NyāyMañ. i. 138.17.

**अनुमानादिनिषेध** (anumānādi-niṣedha) *m.* negation, i.e. refutation of inference etc. (as means of knowledge) श्रौत एव वा परमनुमानादिनिषेध इत्याह — नान्यदित्यर्थेन TātpaṬ.(U.) 36.12 (*on* 2.15)

**अनुमानादिनिष्ठ** (anumānādi-niṣṭha) *adj.* present or existent in inference etc. प्रत्यक्षानुमानादिनिष्ठस्यैकतायां(? त्वस्य) बाधितत्वेन।विवक्षितत्वात्प्रमाणपदस्य बहुवचनान्तता VyutpaVā. 25.6.

**अनुमानादिपरिच्छिन्न** (anumānādi-paricchinna) *adj.* distinguished, i.e. ascertained through inference etc. अनुमानादिपरिच्छिन्नेऽर्थे आकाङ्क्षानिवृत्तिः NyāyVārPari. 451.2.

**अनुमानादिपूर्वक** (anumānādipūrva-ka) *adj.* [*f.* -ikā] preceded by, i.e. based on inference etc. अर्थापत्तिः … चक्षुर्दृष्टिवचनत्वे चार्थापत्तिद्वयोपादानेनानुमानादिपूर्विका नोपात्ता स्यात् TātpaṬ.(U.) 387.11 (*on* 5(7).1); अर्थापत्तिर्न स्यात्, उत्तरस्मिन्ननुमानादिपूर्विका Kāśi. iii. 160.25 (*on* 5(7).2); अनुमानादिपूर्वकं चानुमानं न प्रत्यक्षपूर्वकमिति नानुमानं स्यादनुमानलक्षणेनाव्यापनात् TātpaṬ (Vā.) 156.23 (*on* i. 1.5); अर्थापत्तिः … प्रथमद्वितीयकल्पयोरनुमानादिपूर्विका नोक्ता स्यात् NyāyRa. 451.9 (*on* 5(7).2)

**अनुमानादिप्रभव** (anumānādi-prabhava) *adj.* arising from inference etc. रजतज्ञानम् … नेदमिन्द्रियजम्। न च … अनुमानादिप्रभवमिति शक्यते वक्तुम् NyāySu.(Ja.) 44A.9 (*on* i. 1.1)

**अनुमानादिप्रमाण** (anumānādi-pramāṇa) *m.* means of knowledge, viz. inference etc. परबुद्धेः अतीन्द्रियार्थनिषेधस्य च सिद्धिर्नानुमानादिप्रमाणं विना PramāMī. 7.27 (*on* i. 1.11)

**अनुमानादिप्रमाणसिद्ध** (anumānādipramāṇa-siddha) *adj.* proved through means of knowledge, viz. inference etc. तदपि शास्त्रानुमानादिप्रमाणसिद्धैः स्वयंप्रकाशत्वनित्यत्वादिधर्मैः … अनेकान्तिकम् ĀtmaSi. 24.15.

**अनुमानादिप्रमाणान्तर** (anumānādi-pramāṇāntara) *n.* another means of knowledge, viz. inference etc. वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिः, नानुमानादिप्रमाणान्तरनिर्वृत्ता BrahmSūBh.(Śaṅ.) 11.4 (*on* i. 1.2); प्रत्यक्षप्रमाणस्यानुमानादिप्रमाणान्तरानङ्गीकारेऽकिंचित्करत्वप्रदर्शनेन तेषां प्रज्ञायाः प्रमादमादर्शयति SyādvāMañ. 20(3); न ह्यनुमानादिप्रमाणान्तरनिर्णेतॄणां वैशेषिकादीनां ब्रह्मावगतिर्दृश्यते VivaPraSaṁ. 269.8.

**अनुमानादिप्रमाणावेद्यता** (anumānādipramāṇāvedyatā) *f.* the state of not being knowable through means of knowledge, viz. inference etc. अनुमानादिप्रमाणावेद्यतया … तुरीया वृत्तिरुपास्यैव SāhiDa. 270.8.

**अनुमानादिप्रमिति** (anumānādi-pramiti) *f.* valid knowledge, viz inference etc. अस्मिन्नपि लक्षणेऽनुमानादिप्रमितिः स्वात्मनि प्रमातरि च न प्रत्यक्षा स्यात् PrakaPañ. 137.5.

**अनुमानादिप्रमेय** (anumānādi-prameya) *n.* object of valid knowledge, viz. inference etc. तदनेन प्रकारेणानुमानादिप्रमेयस्यैव प्रत्यक्षग्रहणापेक्षा दर्शिता भवति NyāyRa. 164.14 (*on* 4.96)

**अनुमानादिप्रवृत्ति** (anumānādi-pravṛtti) *f.* operation of inference etc प्रत्यक्षगृहीते एवार्थेऽनुमानादिप्रवृत्तिः NyāyRa. 164.10 (*on* 4.96)

**अनुमानादिप्रवृत्तिकाल** (anumānādipravṛtti-kāla) *m.* time for the operation of inference etc. यद्यनुमानादिप्रवृत्तिकाले न प्रत्यक्षं प्रवर्तते, तदा सोऽर्थोऽक्षस्य न गोचरो भवति Kāśi. i. 242.16 (*on* 4.91)

**अनुमानादिप्रसक्तभेद** (anumānādiprasakta-bheda) *m.* distinction ensued from inference etc. भेदनिषेधश्रुतिस्तु अनुमानादिप्रसक्तभेदनिषेधपरा AdvaiSi. 810.13.

**अनुमानादिप्रामाण्य** (anumānādi-prāmāṇya) *n.* validity of inference etc. न चानुभूतिरेव प्रमाणम्। स्मृत्यादावव्याप्तेः वेदानुमानादिप्रामाण्यप्रसिद्धेश्च PramāLa. 3A.1; रेतोधात्वादि अतीन्द्रियार्थसत्त्वेऽनुमानादिप्रामाण्ये च प्रमाणं प्रमापकमिति निश्चयः TattvPrakā. 10A.7 (*on* i. 1.3)

**अनुमानादिप्रामाण्यानभ्युपगम** (anumānādiprāmāṇyānabhyupagama) *m* non-acceptance, i.e. rejection of the validity of inference etc. यस्त्वनुमानादिप्रामाण्यानभ्युपगमात् सर्वमिदमनर्थकमिति NyāyKu. 112.20.

**अनुमानादिबल** (anumānādi-bala) *n.* [Inst.] by the force of inference etc. ज्ञानेच्छाकृतिमत्व(? त्व)रूपकर्तृताया अनुमानादिबलेन सिद्धौ … नित्यत्वस्यापि सिद्धिस्वीकारात् GuruCandr. ii. 84.9.

**अनुमानादिबाधा** (anumānādi-bādhā) *f.* contradiction through inference etc. अतः प्रत्यक्षबाधस्य एवंप्रकारत्वादनुमानादिबाधा अप्येवंप्रकारा एव द्रष्टव्याः IṣṭaSi. 121.12.

**अनुमानादिबुद्धि** (anumānādi-buddhi) *f.* knowledge, viz. inference etc. अभिप्रेत्योच्यते … अनुमानादिबुद्धिम्, तस्यामपि स्वलक्षणाप्रतिभासनात् कुतो द्वयात्मकत्वम् HetuBiṬ. 31.3.

**अनुमानादिभाव** (anumānādi-bhāva) *m.* nature of inferential knowledge etc. असति च लिङ्गाद्युपलम्भे जायमानस्यानुमानादिभावो न शङ्कितुमपि शक्यः NyāyMa. 61.5.

**अनुमानादिमान** (anumānādi-māna) *n.* means of knowledge, viz. inference etc. अनुमानादिमानस्य प्रातिभासिकत्वेऽपि व्यावहारिकमानत्वायोगात् TarkSaṁ.(Ā.) 140.11.

**अनुमानादिरूप** (anumānādi-rūpa) *adj.* of the form of inferential argument or probans etc. यद्यपि … ईश्वरप्रणीतत्वादिस्मरणम् … अपि तु अनुमानादिरूपन्यायाभासमूलमेव MīmāKau. i. 88.16 (*on* i. 3.12)

**अनुमानादिलक्षण** (anumānādi-lakṣaṇa) *n.* definition of inference etc. प्रत्यक्षलक्षणोक्तिश्च नानुमानादिलक्षणात् ŚlokaVār. 4.5 (134.7); दिगुपदर्शनद्वारानुमानादिलक्षणान्यपि सूत्रितानि NayaVi. 115.2 (*on* i. 1.5); सूत्रस्य सूचनात्मकत्वेन प्रत्यक्षेणानुमानादिलक्षणस्य सूचितत्वात् YuktiSneha. 59.34 (*on* i. 1.5)

**अनुमानादिलक्षणप्रदर्शन** (anumānādilakṣaṇa-pradarśana) *n.* pointing, i.e. statement about definition of inference etc. इदानीं तुल्यप्रयोजनत्वात् अनुमानादिलक्षणप्रदर्शनार्थत्वाच्च प्रत्यक्षसूत्रस्य अनुमानलक्षणं तावदाह भाष्यकारः TātpaṬ.(U.) 303.6 (*on* 5(4).1); YuktiSneha. 59.35 (*on* i. 1.5)

**अनुमानादिलिङ्ग** (anumānādi-liṅga) *n.* indicatory mark such as inference etc. पूर्वत्रानुमानादिलिङ्गेन … सूर्यादेरगोचरो ब्रह्मेत्युक्तम् PrakaVi. 265.19.

**अनुमानादिवत्** (anumānādi-vat) *adv.* like inference etc. न हि शाब्दानुमानादिवत् प्रत्यक्षम् … प्रमाणान्तरमपेक्षते PramāMī. 10.8 (*on* i. 1.14)

**अनुमानादिविकल्प** (anumānādi-vikalpa) *m.* determinate knowledge, viz. inferential knowledge etc. अन्यथानुमानादिविकल्पानामनुत्पादनप्रसङ्गः NyāyKuA. ii. 25.4; अक्षासंबद्धविषये अनुमानादिविकल्पेऽप्यात्मादेः साधारणत्वात् NyāyRa. 174.18 (*on* 4.129); कथमनुमानादिविकल्पास्ते प्रमाणं भवेयुः ŚatDū. 190.11.

**अनुमानादिविकल्पदर्शन** (anumānādivikalpa-darśana) *n.* observation of determinate knowledge, viz. inferential knowledge etc. अशब्दज्ञानमप्यनुमानादिविकल्पदर्शनान्न तत्र शब्दापेक्षास्ति Kāśi. iii. 185.3 (*on* 5(7).78)

**अनुमानादिविरोध** (anumānādi-virodha) *m.* contradiction with inference etc. अनुमानादिविरोधेनासद्वैलक्षण्यपरेत्यापातात् Nyāyāmṛ. 54A.5.

**अनुमानादिविलक्षण** (anumānādi-vilakṣaṇa) *adj.* distinct from inference etc. अनुमानादिविलक्षणः … अध्यवसायः प्रत्यक्षम् PramāMī. 24.20 (*on* i 1.29); तदपि संप्रतिपन्नसामयिकद्वारानुमानादिविलक्षणसंबन्धविशेषख्यापनार्थमिति योज्यम् NyāyPari. 20.3.

**अनुमानादिविलोप** (anumānādi-vilopa) *m.* loss of inference etc. अनुमानादिविलोप इति चेत् — नेदमनिष्टम् NyāyKuA. i. 165.5.

**अनुमानादिविषय** (anumānādi-viṣaya) *m.* object of inferential knowledge etc. अन्यकालान्यपुरुषगता तु स्मृत्यनुमानादिविषयः संसारिणाम् NyāySiA. 238.1.

**अनुमानादिविषयत्व** (anumānādiviṣaya-tva) *n* the state of being an object of inferential knowledge etc. वेदार्थस्यानुमानादिविषयत्वेऽपि अनुमानादेर्वेदोपजीवकत्वात् TattvCin. iv(1). 364.1.

**अनुमानादिवेद्य** (anumānādi-vedya) *adj.* knowable through inference etc. ब्रह्मानुमानादिवेद्यमिति कोऽनुन्मत्तो ब्रूयात् VedāntKau. 16.22 (*on* i. 1.3); अन्यथानुमानादिवेद्यस्य ग्रहणं न स्यात् Bhāsk. ii. 157.12 (*on* ii. 4.4)

**अनुमानादिवेद्यत्व** (anumānādivedya-tva) *n.* the state of being knowable through inference etc. अनुमानादिवेद्यत्वे च लिङ्गाद्यनुपपत्तेः KhaṇḍanKhā. 615.20.

**अनुमानादिव्यवच्छेद** (anumānādi-vyavaccheda) *m.* **A** distinction, i.e. exclusion from inference etc. (प्रत्यक्षस्य) इन्द्रियार्थसंनिकर्षोत्पन्नपदोपादानमन्तरेण नानुमानादिव्यवच्छेद उपपद्यते NyāyMañ. i. 100.23; **B** distinction, i.e. exclusion from inferential knowledge etc. स्वकालावच्छिन्नार्थबोधत्वं साक्षात्त्वमित्यपि न। स्वार्थाविवेचनात्। कथं चानुमानादिव्यवच्छेदः KhaṇḍanKhā. 597.17.

**अनुमानादिव्यवच्छेदक** (anumānādi-vyavacchedaka) *adj.* what distinguishes, i.e. excludes (perception from) inference etc. अपि तु प्रत्यक्षस्य प्रमाणस्य यदसाधारणमनुमानादिव्यच्छेदकं तदुक्तम् NyāyVār. 204.16 (*on* ii. 1.20)

**अनुमानादिव्यवच्छेद्य** (anumānādi-vyavacchedya) *adj.* to be distinguished, i.e. excluded such as inference etc. अनुमानादिव्यवच्छेद्य-त्तदसाधारणकारणाजनिता धीः साक्षादिति चेन्न KhaṇḍanKhā. 617.20 (Vidyāsāgarī अनुमानादीनि … तान्येव व्यवच्छेद्यानि)

**अनुमानादिव्यवहार** (anumānādi-vyavahāra) *m.* operation of inference etc. पूर्वोत्तरक्षणवर्तिनामात्मनां पर्वतादीनां च कार्यकारणभावादुपपन्नोऽनुमानादिव्यवहारः NyāySu.(Ja.) 396B.13 (*on* ii. 2 7)

**अनुमानादिव्यापन** (anumānādi-vyāpana) *n.* pervasion of inference etc. स्वेन रूपेण वस्तुनो भानमिति चेन्न। अनुमानादिव्यापनात् KhaṇḍanKhā. 601.25.

**अनुमानादिव्याप्ति** (anumānādi-vyāpti) *f.* pervasion of inference etc. सविशेषत्वस्योपलक्षणत्वेऽनुमानादिव्याप्तिः KhaṇḍanKhā. 578.15.

**अनुमानादिव्यावहारिकमान** (anumānādi-vyāvahārikamāna) *n.* ordinary communicative means of knowledge, viz. inference etc. जीवभेदानामनुमानादिव्यावहारिकमानसिद्धत्वस्येष्टत्वात् TattvPradī.(Ci.) 386.5; जीवभेदस्य अनुमानादिव्यावहारिकमानगम्यत्वं इष्टम् TarkSaṁ.(Ā.) 140.10.

**अनुमानादिव्यावृत्ति** (anumānādi-vyāvṛtti) *f.* exclusion of inference etc. विशेषेण बाधादनुमानादिव्यावृत्तिः NyāyMañ. i. 100.19.

**अनुमानादिव्यावृत्त्यर्थम्** (anumānādivyāvṛtyartham) *adv.* for the sake of exclusion of inference etc. साक्षात्कारिप्रमाकरणं प्रत्यक्षम्। अनुमानादिव्यावृत्त्यर्थं साक्षात्कारीति YatīndraDī. 5.1.

**अनुमानादिव्युत्पत्त्यर्थ** (anumānādivyutpatty-artha) *adj.* meant for the explanation or elaboration of inference etc. अनुमानादिव्युत्पत्त्यर्थानाम् … दर्शनात् किमस्यानुमा[नव्युत्पादनं प्र]योजनमन्यद् वा, न वा किंचिदपीत्येवंरूपश्च संशयः प्राक् प्रवर्तमानः केन निवार्येत (? निवार्यते) HetuBiṬ. 2 21.

**अनुमानादिव्युदास** (anumānādi-vyudāsa) *m.* exclusion of inference etc. एतेनानुमानादिव्युदासोऽपि प्रत्युक्तः NyāyVār. 43.2 (*on* i. 1.4)

**अनुमानादिव्युदासार्थम्** (anumānādivyudāsārtham) *adv.* for the sake of exclusion of inference etc. अनुमानादिव्युदासार्थं ह्ययोगव्यवच्छेदः NyāyVārPari. 641.11.

**अनुमानादिशक्तिप्रसक्ति** (anumānādiśakti-prasakti) *f.* undesired occasion of the capacity of inference etc. अनुमानादिशक्तिप्रसक्तेरनिवारितत्वात् Kāśi. i. 64.10 (*on* 2.15)

**अनुमानादिसंविद्** (anumānādi-saṁvid) *f.* knowledge, viz. inferential knowledge etc. नित्यत्वप्रसङ्गात्। एवमनुमानादिसंविदोऽपि ĀtmaSi. 23.5; अनुमानादिसंविदां स्वात्मात्मनोरप्रत्यक्षत्वप्रसङ्गात् TārkiRa. 32.1; 38.7; अनुमानादिसंविदाम् अतीतानागतविषयत्वसंभवात् ŚrutaPra. iA. 138.25 (*on* i. 1.1); एवं वर्तमानतया वस्तु गृह्णन्तीष्वनुमानादिसंवित्स्वपि विषयनित्यत्वप्रसङ्गः समानः ŚatDū. 216.29.

**अनुमानादिसापेक्षत्व** (anumānādi-sāpekṣatva) *n.* expectancy for inference etc. वेदस्यैव व्युत्पत्त्यादावनुमानादिसापेक्षत्वेन वैपरीत्यात् ŚatDū. 222.10.

**अनुमानादिसाम्य** (anumānādi-sāmya) *n.* similarity with conjecture or guess etc. नासौ स्मरणानुमानादिना (v.l. स्मरणानुमानादिसाम्येन) खलीकारपात्रीकर्तव्यः Loc. 56.28 (*on* 1.21)

**अनुमानादिसिद्ध** (anumānādi-siddha) *adj.* established or proved through inference etc. भवन्मते ईश्वरो वेदप्रोक्तः उतानुमानादिसिद्धः VedāntKau. 187.22 (*on* ii. 2.12); विरोधसिद्धावनुमानादिसिद्धपरप्रतियोगिकभेदस्य स्वात्मनि प्रत्यक्षतया प्रत्यक्षबाधोऽपि सिद्धः ŚatDū. 149.24; तत्तत्कर्माशयवशाद्भोगतत्साधनतदुपादानादिविशेषज्ञः कर्तानुमानादिसिद्धः SarvaDaSaṁ. 7.42; सार्वज्ञ्यादिकमनुमानादिसिद्धम् AdvaiSi. 726.12; धर्मादेरनुमानादिसिद्धं सत्त्वम् GuruCandr. i. 491.16.

**अनुमानाद्य** (anumānādya) *adj.* inference etc. यः प्रत्यक्षानुमानाद्यैः प्रमाणैर्नोपलभ्यते PrabhāC. 55.24.

**अनुमानाद्यगृहीत** (anumānādy-agṛhīta) *adj.* not grasped through inference etc. प्रत्यक्षस्य प्राबल्यमनुमानाद्यगृहीतरेखोपरेखादिग्राहकत्वात् AdvaiSi. 355.12.

**अनुमानाद्यगोचरता** (anumānādyagocara-tā) *f.* the state of not being the object of inferential knowledge etc. अवेद्यत्वेऽनुमानाद्यगोचरतया कथानवतारप्रसङ्गस्य दर्शितत्वात् TattvPradī.(Ci.) 5.13.

**अनुमानाद्यगोचरत्व** (anumānādyagocara-tva) *n.* the state of not being the object of inferential knowledge etc. उपास्यस्य च ब्रह्मणोऽनन्तविशेषस्यानुमानाद्यगोचरत्वात् ŚatDū. 222.6; ब्रह्मण औपनिषदत्वश्रुत्यानुमानाद्यगोचरत्वात् Nyāyāmṛ. 621A.13.

**अनुमानाद्यतिरेक** (anumānādy-atireka) *m.* [Inst.] due to difference from inference etc. अनुमानाद्यतिरेकेण विशेषप्रतिभासनम्। तद्वैशद्यं मतं बुद्धेः Laghīya. 1.4.

**अनुमानाद्यनन्तर्भाव** (anumānādy-anantarbhāva) *m.* non-inclusion in inference etc. न च स्मृतिहेतोः संस्कारस्य महर्षिभिः प्रमाणत्वेनापरिसंख्यानात्।… सत्तामात्रेण बोधकत्वेनानुमानाद्यनन्तर्भावाच्च TārkiRa. 45.1.

**अनुमानाद्यनवतार** (anumānādy-anavatāra) *m.* absence of rise, i.e. operation of inference etc. मिथ्यात्वं बाधकज्ञानेन नियमतो गृह्यत इति वक्तुमशक्यम् … चक्षुरादिमानायोग्यत्वादनुमानाद्यनवतारेऽपि बाधबुद्ध्युदयात् LaCandr. 133.15.

**अनुमानाद्यनिमित्तत्व** (anumānādyanimitta-tva) *n* the state of not having inference etc. as the cause (of *dharma*) अनुमानाद्यनिमित्तत्वे हेत्वनभिधानादपरितुष्यन् समाधानान्तरमाह Kāśi. i. 243.22 (*on* 4.96)

**अनुमानाद्यनिवर्तित** (anumānādy-anivartita) *m.* not removed by means of inference etc. प्रत्यक्षस्य प्राबल्यम् … अनुमानाद्यनिवर्तितदिङ्मोहादिनिवर्तकत्वात् AdvaiSi. 355.13.

**अनुमानाद्यनुत्थान** (anumānādy-anutthāna) *n.* absence of the emergence of inference etc. तेषां बलवत्प्रत्यक्षविरोधादनुमानाद्यनुत्थानात् MānaMe. 151.6.

**अनुमानाद्यन्तराद्यपेक्षा** (anumānādyantarādy-apekṣā) *f.* expectancy for another inference etc. क्वचिदनुमानादावनुमानाद्यन्तराद्यपेक्षायामप्यनुमानत्वप्रयुक्तापेक्षाभावादनैकान्तिकत्वपरिहारो द्रष्टव्यः NyāyKu. 77.2.

**अनुमानाद्यपेक्षा** (anumānādy-apekṣā) *f.* expectancy for inference etc. उपाध्यभावोऽपि दुरवगमः। उपाधीनाम् … अप्रत्यक्षाणामभावस्याप्रत्यक्षतयानुमानाद्यपेक्षायामुक्तदूषणानतिवृत्तेः SarvaDaSaṁ. 1.92; [Inst.] with regard to inference etc. अनुमानाद्यपेक्षया प्रत्यक्षस्य तत्त्वेन प्राबल्यं तु न कुत्राप्युक्तम् GuruCandr. i. 299.13.

**अनुमानाद्यभाव** (anumānādy-abhāva) *m.* **A** absence of inference etc. स पुनरयं संबन्धो दुरवसेयः अप्रत्यक्षत्वात् अनुमानाद्यभावाच्च Śarka. 86.12; शब्दे निमित्तेऽप्यनुमानाद्यभावात् NayaVi. 68.2 (*on* i. 1.4); 272.11 (*on* i. 1.24); **B** absence of inferential knowledge etc. अनुमानाद्येकविषयाणां भावानामनुमानाद्यभावेऽभावो दृश्यते PrakaPañ. 287.13.

**अनुमानाद्यर्थ** (anumānādy-artha) *m.* [Inst.] in the sense of the inferential argument or probans etc. विद्यमानमुपलम्भनं यस्य इत्यनुमानाद्यर्थेन सूत्रितत्वात् NayaVi. 67.8 (*on* i. 1.4)

**अनुमानाद्यवकाश** (anumānādy-avakāśa) *m.* occasion for, i.e. possibility of (the establishment of) inference etc. तस्मादविनाभावस्य दुर्बोधतया नानुमानाद्यवकाशः SarvaDaSaṁ. 1.100.

**अनुमानाद्यवगता** (anumānādy-avagatā) *adj.* (*f.*) known through inference etc. प्रतीतिबलादेव यथासंभवं प्रत्यक्षानुमानाद्यवगतायाः (जातेः) सहकारित्वकल्पनं नायुक्तम् NyāySu.(So.) 12.7 (*on* i. 2.2)

**अनुमानाद्यविषयत्व** (anumānādyaviṣaya-tva) *n.* the state of not being an object of inferential knowledge etc. एवमुपपादितमनुमानाद्यविषयत्वं सौगतान् प्रति प्रयोगेण दर्शयति NyāyRa. 165.17 (*on* 4.99)

**अनुमानाद्यवेद्य** (anumānādy-avedya) *adj.* not knowable through inference etc. अद्रेश्यमग्राह्यम् — इन्द्रियाद्दृश्यमनुमानाद्यवेद्यम् ŚrutaPra. iB. 323.30 (*on* i. 2.22)

**अनुमानाद्यव्यभिचार** (anumānādy-avyabhicāra) *m.* non-deviation of inference etc. (from its object) प्रत्यक्षाव्यभिचार एवानुमानाद्यव्यभिचारे कारणम् TātpaṬ.(Vā.) 131.23 (*on* i. 1.4)

**अनुमानाद्यात्मिका** (anumānādyātm-ikā) *adj.* (*f.*) of the nature of inferential knowledge etc. न प्रत्यक्षरूपैव तदेकविषया बुद्धिरभावरूपेष्यते, किन्त्वनुमानाद्यात्मिकापि PrakaPañ. 290.13.

**अनुमानाद्युच्छेदप्रसङ्ग** (anumānādyuccheda-prasaṅga) *m.* undesired occasion of the loss of inference etc. तदपि चार्वाकसौहार्दम्, अनुमानाद्युच्छेदप्रसङ्गात् ŚatDū. 81.2.

**अनुमानाद्युच्छेदापत्ति** (anumānādyucchedāpatti) *f.* undesired contingency of the loss of inference etc. ज्ञानस्य प्रत्यासत्तित्वे तत एव वह्न्यादेः प्रत्यक्षत्वापत्तौ अनुमानाद्युच्छेदापत्तेः VedāntPari. 109.1.

**अनुमानाद्येकविषय** (anumānādy-ekaviṣaya) *adj.* which is the only object of inferential knowledge etc. अनुमानाद्येकविषयाणां भावानामनुमानाद्यभावेऽभावो दृश्यते PrakaPañ. 287.12.

**अनुमानाधिकार** (anumānādhikāra) *m.* name of a section (dealing with inference) वक्ष्यते ह्यनुमानाधिकारे यथानौपाधिकः संबन्धो हेतुसाध्ययोरनु-

मानाङ्गम् TātpaṬ.(Vā.) 43.25 (*on* i. 1.1); अतिप्रसङ्गादतिव्याप्तेरित्यनुमानाधिकारे वक्ष्यते NyāyVārPari. 260.11.

**अनुमानाधिगत** (anumānādhigata) *adj.* known through inference यदि ह्यनुमानाधिगतोऽर्थः प्रत्यक्षागमाभ्यामनुसंधीयते NyāyVār. 14.22 (*on* i. 1.1)

**अनुमानाधीन** (anumānādhīna) *adj.* dependent or based on inference मननमनुमानाधीनम् SarvaDaSaṁ. 10.10.

**अनुमानाधीनज्ञानत्व** (anumānādhīnajñāna-tva) *n.* the state of being knowledge which is dependent or based on inference अयोग्योपाधिव्यतिरेकस्यानुमानाधीनज्ञानत्वेनानवस्थापातात् TattvCin. ii(1). 189.1.

**अनुमानाधीनत्व** (anumānādhīna-tva) *n.* the state of being dependent or based on inference तस्यां चानुमानाधीनत्वादित्यादयो हि कस्यचित् समुल्लापाः संभवन्ति NyāyKu. 88.7.

**अनुमानाधीनव्युत्पत्ति** (anumānādhīna-vyutpatti) *f.* explanation or elaboration dependent or based on inference शास्त्रं प्रत्यक्षानुमानाधीनव्युत्पत्त्यपेक्षस्येदानीं लक्षणमुच्यते NayaVi. 141.1 (*on* i. 1.5)

**अनुमानाध्याय** (anumānādhyāya) *m.* name of a chapter (dealing with inference) न्यायपरिशुद्धावनुमानाध्याये प्रथमं प्रतिबन्धाद्याह्निकम् NyāyPari. 154.5.

**अनुमानानङ्गत्व** (anumānānaṅga-tva) *n.* the state of not being the subsidiary or secondary cause of inference व्यतिरेकव्याप्तेरनुमानानङ्गत्वात् NyāySu.(Ja.) 260A.9 (*on* ii. 1.2)

**अनुमानानङ्गभूत** (anumānānaṅgabhūta) *adj.* which has not become the subsidiary or secondary cause of inference संबन्धविकल्पाननुमानानङ्गभूतान्प्रतिक्षिपति TātpaṬ.(Vā.) 158.10 (*on* i. 1.5)

**अनुमानानतिरेक** (anumānānatireka) *m.* absence of difference from inference शब्दोऽपि न बाधकमनुमानानतिरेकादिति वैशेषिकादयः NyāyKuA. ii(1). 204.2; न चार्थापत्त्या। तदभावात्। अनुमानानतिरेकाच्च NyāySu.(Ja.) 275B.3 (*on* ii. 1.2)

**अनुमानानधिगत** (anumānānadhigata) *adj.* not known through inference प्रत्यक्षानुमानानधिगतवस्तुतत्त्वान्वाख्यानं शास्त्रधर्मः, तस्य विषयः प्रत्यक्षानुमानानधिगतवस्तुतत्त्व आध्यात्मिकशक्तिसंपद्युक्तोऽन्तेवासी NyāyVār. 2.3 (*on* i. 1.1)

**अनुमानाननुगृहीत** (anumānānanugṛhīta) *adj.* [*f.* -ā] not supported by inference आगमेन अनुमानाननुगृहीतेनैव वस्तुनिर्धारणसिद्धेः वृथा अनुमानक(ल्पना) TarkSaṁ.(Ā.) 5.20; कर्मैकप्राप्यत्वात्कृष्यादिवदित्यनुमानाननुगृहीतायाः … श्रुतेः प्राबल्यात् VedāntKau. 21.11 (*on* i. 1.4); नापि 'हिरण्यदा अमृतत्वं भजन्ते' इत्यादिश्रुत्यन्तरेषु फलनित्यत्वं सुसंपादम्, अत्राप्यनुमानाननुगृहीतया सामान्यश्रुत्या विरोधस्य तादवस्थ्यात् VivaPraSaṁ. 220.18.

**अनुमानानन्तरम्** (anumānānantaram) *adv.* immediately after the inference अनुमानसादृश्यमुपमानस्यास्तीति अनुमानानन्तरमुद्देशः TātpaṬ.(Vā.) 106.9 (*on* i. 1.2)

**अनुमानानपेक्षण** (anumānānapekṣaṇa) *n.* absence of expectancy for inference अज्ञातकरणतया ज्ञानजननार्थमनुमानानपेक्षणात् AdvaiSi. 363.10.

**अनुमानानपेक्षा** (anumānānapekṣā) *f.* absence of expectancy for inference न चात्यन्तमनुमानानपेक्षा तद्व्यतिरेकेण संशयानपोहात् PrakaVi. 122.23.

**अनुमानानभ्युपगम** (anumānānabhyupagama) *m.* absence of admittance of inference (as a means of knowledge) अनुमानानभ्युपगमे शब्दार्थसंबन्धग्रहणायोगात् ŚrutaPra. iA. 134.19 (*on* i. 1.1)

**अनुमानानर्थक्य** (anumānānarthakya) *n.* futility of inference प्रत्यक्षत्वे तस्य अनुमानानर्थक्यम् TarkSaṁ.(Ā.) 25.10.

**अनुमानानवकाश** (anumānānavakāśa) *m.* absence of occasion for (the application of) inference इष्टसाधनतैकार्थसमवायिकर्तव्यत्वाभिधानादनुमानानवकाशः NyāyKuA. ii(2). 94.7; ii(1). 212.3; प्रत्यक्षतस्तत्सिद्धौ त्वनुमानानवकाशात् NyāyVārPari. 331.6; प्रत्यक्षग्राह्येऽर्थेऽनुमानानवकाशात् NyāySu.(Ja.) 476B.4 (*on* iii. 2.1)

**अनुमानानवकाशव्युत्पादन** (anumānānavakāśa-vyutpādana) *n.* explanation of the absence of occasion for (the application of) inference जगत्कारणे अनुमानानवकाशव्युत्पादनं व्याहतम् NyāySu.(Ja.) 111B.8 (*on* i. 1.3)

**अनुमानानवतार** (anumānānavatāra) *m.* absence of rise, i.e. non-operation of inference न चात्रापि तर्कितैवानुमानप्रवृत्तिः। न तु वास्तवी। झटिति प्रवृत्तेन प्रत्यक्षशास्त्रेणेश्वरसिद्धौ सिद्धसाधनेनानुमानानवतारादिति वाच्यम् ŚivārkaMaDī. i. 143.22 (*on* i. 1.3); अनुमानाभावात् पक्षे साध्यनिश्चयेनानुमानानवतारात् LaCandr. 831.35.

**अनुमानानुकूलता** (anumānānukūla-tā) *f.* the state of being conducive to inference असाधारण्यस्य व्याप्त्यपरपर्यायस्यानुमानानुकूलतया व्यक्तिप्रतिकूलत्वाच्च RasGaṅ. 16.12.

**अनुमानानुगुणत्व** (anumānānuguṇa-tva) *n.* the state of being conformable to inference, i.e. the state of referring to the same objects as that of inference आगमस्यानुमानानुगुणत्वात् एकस्योभयकारणत्वस्य दृष्टान्ताभावेनानुमातुमशक्यत्वात् PrakaVi. 37.24.

**अनुमानानुगृहीत** (anumānānugṛhīta) *adj.* [*f.* -ā] **A** supported by syllogism आकाशो विकाराज्जायते कार्यत्वात्, वायुवत् इत्यनुमानानुगृहीतजन्मश्रुतेः प्रामाण्यादस्ति विरोधः PrakaVi. 598.21; **B** supported by inference अनुमानानुगृहीतश्रुत्युपस्थापितेश्वरपदार्थबाधकल्पनाद्वरं कर्मणो नैरपेक्ष्यधर्मबाधकल्पनम् PrakaVi. 803.21; अनुमानानुगृहीतयाभिनिष्पत्तिश्रुत्यागन्तुकं मोक्षरूपमित्याह PrakaVi. 1090.19.

**अनुमानानुगृहीतप्रत्यक्ष** (anumānānugṛhīta-pratyakṣa) *n.* perception supported by inference अनुमानानुगृहीतप्रत्यक्षेण गृह्यमाणं रजतं चिरस्थायीति गृह्यते VedāntKa. 363.12 (*on* iii. 2.1)

**अनुमानानुग्राहक** (anumānānugrāhaka) *adj.* which supports syllogism अनुमानानुग्राहकं तर्कं निराकृत्येदानीमीश्वरो न सुखी निर्दुःखत्वात्। घटवदित्यनुमानमपि दूषयति NyāySu.(Ja.) 385B.12 (*on* ii. 2.7)

**अनुमानानुत्थान** (anumānānutthāna) *n.* absence of rise, i.e. non-operation of inference न चेदमनुमानम्। समन्याप्यस्य संबन्धरूपत्वाभावात्। असंबन्धे चानुमानानुत्थानात् AlaṅkāSa. 157.2.

**अनुमानानुदय** (anumānānudaya) *m.* absence of rise, i.e. non-operation of inference न प्रत्यक्षस्यानुमानता।…एकदेशग्रहणाभावेनानुमानानुदयात् TātpaṬ.(Vā.) 380.1 (*on* ii. 1.31); KhaṇḍanKhā. 730.21; वह्न्यावसत्यनुष्णत्वे द्रव्यत्वस्य दर्शनात् तेन संबन्धनियमाभावादनुमानानुदयः PrakaPañ. 210.3; आत्मनोऽर्थज्ञानम् … आनुमानिकं स्यात्। तथा च लिङ्गापरिज्ञानेऽनुमानानुदयात PramāMī. 16.24 (*on* i. 1.21); अनभ्युपगमे हेतोराश्रयासिद्धेरनुमानानुदयात TattvPradī.(Ci.) 63.3; आगमविरोधेऽनुमानानुदयात् TantrRaha. 59.6.

**अनुमानानुपपत्ति** (anumānānupapatti) *f.* **A** untenability of inference °प्राप्तत्वादनुमानानुपपत्तिः यत् खलूपलब्धिलक्षणप्राप्तं नोपलभ्यते तन्नास्ति यथा घटादि NyāyVār. 379.17 (*on* iii. 1.33); BhāṭṭDī. i. 37.8 (*on* i. 3.1); **B** untenability of syllogism रूप्यज्ञानवच्छुक्तिज्ञानस्याप्यबोधकत्वमबाधकत्वं चानिर्वचनीयत्वादित्यनुमानानुपपत्तेः IṣṭaSi. 81.15; **C** untenability of inferential knowledge अर्थपक्षकानुमाने च योग्यताया हेतुतया लिङ्गस्य निश्चितस्यैव निश्चायकतया योग्यतासंशयेऽनुमानानुपपत्त्या प्रवृत्त्याद्यनुपपत्तिः BhāṭṭCin. i. 49.9 (*on* i. 1.4)

**अनुमानानुपयुक्त** (anumānānupayukta) *adj.* not conducive to inference उक्तशब्दस्वभावोऽनुमानानुपयुक्तः GuruCandr. i. 411.17.

**अनुमानानुपयोग** (anumānānupayoga) *m.* **A** futility of inference तस्य परमाण्वादौ अपि तद्भेदानुमतेः अनुमानानुपयोगात् TarkSaṁ.(Ā.) 25.3; **B** absence of scope for inference 'यो यो धूमवान् स शुक्लवह्निमा'-नित्यादिवाक्यस्यानुमानानुपयोगात् LaCandr. 718.32.

**अनुमानानुपस्थान** (anumānānupasthāna) *n.* absence of recollection of syllogism धर्मिदृष्टान्तयोः असंप्रतिपन्नत्वात् अनुमानानु(प)स्थानात् TarkSaṁ.(Ā.) 78.10.

**अनुमानानुमान** (anumānānumāna) *n.* inference per inference, inference through inference अनुमानानुमानादेर्न चाप्यस्तीह संभवः ŚlokaVār. 4.97 (164.3)

**अनुमानानुमेयता** (anumānānumeya-tā) *f.* the state of being the inference and the inferable, the state of being probans and probandum द्वितीयानामपि सत्यसंबन्धे परस्परव्यभिचारेण व्याप्यव्यापकभावाभावान्नानुमानानुमेयता NyāySu.(Ja.) 260B.10 (*on* ii. 1.2)

**अनुमानानुमेयत्व** (anumānānumeya-tva) *n.* the state of being the inference and the inferable, the state of being probans and probandum तृतीयेष्वपरेषां व्याप्यतयापरेषां व्यापकतयास्त्यनुमानानुमेयत्वम् NyāySu.(Ja.) 260B.10 (*on* ii. 1.2)

**अनुमानानुमेयभाव** (anumānānumeya-bhāva) *m.* the state of being the inference and the inferable, the state of being probans and probandum आद्यानां परस्परसंबन्ध एव नास्तीति नानुमानानुमेयभावः NyāySu.(Ja.) 260B.9 (*on* ii. 1.2)

**अनुमानानुमेयव्यवहार** (anumānānumeya-vyavahāra) *m.* usage

of the inference and the inferable usage of probans and probandum अनुमानानुमेयव्यवहारस्य प्रतिसंबन्धिरूपत्वात् तस्य चात्र संबन्ध्यन्तरमन्तरेणानुपपत्तिः TātpaṬ.(U.) 305.5 (*on* 5(4).2); कथं काल्पनिकमेव धर्मधर्मिविभागमाश्रित्यानु- मानानुमेयव्यवहारः PrakaPañ. 201.12; NyāyRa. 258.12 (*on* 5(2).168); सर्व संसारावस्थायामनुमानानुमेयव्यवहारः Kāśi. ii. 78.20 (*on* 5(2).155); सर्व एवायमनुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिभावेन न बहिःसदसत्त्वमपेक्षते इत्यादि- वचनात् SyādvāMañ. 17(10)

**अनुमानानुमेयादिसंबन्ध** (anumānānumeyādi-sambandha) *m.* relation (of concomitance) between inference and inferable etc. उक्तपरंपरासंबन्धसाधारणस्य प्रमाणप्रमेयसंबन्धत्वस्यैकस्याभावेनेन्द्रियविषयसंबन्धदृष्टान्तेन नानुमानानुमेयादिसंबन्धस्य हेतुत्वं युक्तम् LaCandr. 672.39.

**अनुमानानुमेयार्थव्यवहार** (anumānānumeyārtha-vyavahāra) *m.* usage, i.e. distinction of inference and the object to be inferred अनु- मानानुमेयार्थव्यवहारस्थितिस्त्वियम्। भेदं प्रत्ययसंसिद्धमवलम्ब्यावकल्पते PramāVār. 4.183.

**अनुमानानुरोधतस्** (anumānānurodha-tas) *adv.* in accordance with inference आत्मनो दोषसंबन्धम् आत्मज्ञः संनिवर्तयेत्। अन्त[ः]ज्योतिः स्वतःसिद्धमनुमानानुरोधतः PramāSaṁ. 3.67.

**अनुमानानुवर्तिन्** (anumānānuvartin) *adj.* which follows, i.e. is based on inference प्रत्यक्षेणाबलीयसा। संरक्ष्यमाणभेदास्तेनानुमानानुवर्तिनः SaṁviSi. 97.16.

**अनुमानानुसरण** (anumānānusaraṇa) *n.* following, i.e. dependence on inference श्रुतीनां परस्परविरोधावबोधकत्वभ्रमे तद्व्युदासेन तात्पर्य- निर्णयायानुमानानुसरणम् VedāntKa. 332.2 (*on* ii. 4.5)

**अनुमानानुसारिणी** (anumānānusāriṇī) *adj.* (*f.*) which follows, i.e. is based on inference अनुमानानुसारिणी च निश्चयावगतिः BālaKrī. i. 228.16 (*on* 2.74)

**अनुमानान्तःपातिता** (anumānāntaḥpāti-tā) *f.* the state of being what is included in (the category of) inference शब्दज्ञानं व्याप्त्यनपेक्ष- मेवार्थज्ञानजनकमिति चेत्, न, त्वन्मते शब्दस्यानुमानान्तःपातितया तत्रापि व्याप्त्य- पेक्षत्वात् VivaPraSaṁ. 240.13.

**अनुमानान्तर** (anumānāntara) *n.* **A** another inference (as a means of knowledge) तस्य चाप्यनुमानत्वाद् भवेल्लिङ्गेन चोद्भवः। अनुमानान्तरादेव ŚlokaVār. 5(4).152 (394.12); नैतदेवम्, अन्यस्यापि सम्यक्त्वसाधनस्यानु- मानान्तरस्य भावात् TātpaṬ.(U.) 91.10 (*on* 2.183); NyāyMañ. i. 229.11; शीघ्रभाव्यनुमानमनुमानान्तरस्य विषयमपहरद् बाधकतां प्रतिपद्यते PrakaPañ. 211.10; संभाव्यमानान्यप्यनुमानान्तराणि परस्तादुपन्यस्य निरस्यन्ते ĀgaPrā. 31.11; अनुमानान्तरं तु स्वप्रामाण्यव्युत्पादकमपेक्षते NyāyVārPari. 352.9; न प्रत्यक्षस्यानुमानता।... एकदेशग्रहणाभावेनानुमानानुदयात्। अनुमानान्तरेण वा तद्- ग्रहणे अनवस्थापातात् TātpaṬ.(Vā.) 380.2 (*on* ii. 1.31); प्रकृतमेवानुमानं व्याप्तिग्राहकम्, अनुमानान्तरं वा PramāMī. 37.1 (*on* i. 2.5); 54.11 (*on* ii. 1.16); अस्यानुमानस्य मिथ्यात्वं किमनुमानान्तरेण सिध्यति किं वा स्वेनैव TattvPradī.(Ci.) 48.1; **B** another syllogism यत्र यत्रैवंशब्दप्रयोगस्तत्र तत्र तद्धर्मयोग इत्यनुमानान्तरं कथम् Loc. 17.23 (*on* 1.4); एवमनुमानान्तराण्यपि करणभेदादिपक्षीकारेण भाव्यानि ŚatDū. 146.28; तदनुमानान्तरं भविष्यति इति चेन्न। तस्य हेतुशरीराप्रवेशिनोऽपि दृष्टान्तोपदर्शनादिना सार्थक्योपपत्तेः NyāySu. (Ja.) 5B.35 (*on* i. 1.1); **C** another inference as *satpratipakṣa* समान- बलमनुमानान्तरं प्रतिपक्षः TarkBhā.(Ke.) 92.1.

**अनुमानान्तरपरिपन्थिन्** (anumānāntara-paripanthin) *adj.* which opposes, i.e. supersedes another inference न तावदनुमानम् अनुमानान्तर- परिपन्थि कथयितुमुचितम् NyāyMañ. i. 215.23.

**अनुमानान्तरसव्यपेक्षत्व** (anumānāntarasavyapekṣa-tva) *n.* the state of being expectant of another inference अनुमानेन च शब्दादीनां प्रामाण्यावधारणे तस्याप्यनुमानान्तरसव्यपेक्षत्वे सत्यनवस्था TātpaṬ.(U.) 66.20 (*on* 2.81)

**अनुमानान्तरसाध्यता** (anumānāntarasādhya-tā) *f.* the state of being what is to be established through another inference अनुप- लब्धेरपि निषेधरूपतयानुमानान्तरसाध्यतायामनवस्थानात् NyāyVārPari. 331.4.

**अनुमानान्तरसिद्धत्व** (anumānāntarasiddha-tva) *n.* the state of being established through another inference नाप्यनुमानेनान्वयग्रहः प्रामाण्यस्य क्वचिदप्यसिद्धेः, सिद्धौ वा किमनुमानेन, अनुमानान्तरसिद्धत्वेऽनवस्थैव NyāyVārPari. 56.1.

**अनुमानान्तराधीन** (anumānāntarādhīna) *adj.* dependent on another inference (अङ्कुरस्य) तस्यापि पक्षत्वे प्रतिज्ञान्तरापत्तिः। अनुमानान्तरा- धीनतत्साध्यानुमित्यनन्तरं च पक्षेऽनुमिताावितरेतराश्रयान्नैकमप्यनुमानं स्यात् Tattv- Cin. ii(2). 4.12.

**अनुमानान्तरानपेक्षत्व** (anumānāntarānapekṣa-tva) *n.* the state of not being expectant of another inference परस्परसमभिव्याहारानुग्रहा- पेक्षत्वादभिधानस्यानुमानेऽनुमानान्तरानपेक्षत्वात् NyāyKu. 11.6.

**अनुमानान्तरापेक्षण** (anumānāntarāpekṣaṇa) *n.* expectancy of another inference तस्य तस्यानुमानस्य मिथ्यात्वसाधनेऽनुमानान्तरापेक्षणात् Tattv- Pradī.(Ci.) 48.2.

**अनुमानान्तरापेक्षत्व** (anumānāntarāpekṣa-tva) *n.* the state of being expectant of another inference अनुमानापेक्षत्वे सत्यनुमानस्याप्यनु- मानान्तरापेक्षत्वात्सैवानवस्था स्यात् NyāyRa. 70.13 (*on* 2.81)

**अनुमानान्तरापेक्षा** (anumānāntarāpekṣā) *f.* expectancy for another inference अनुमानान्तरापेक्षायामनवस्था Kāśi. i. 103.25 (*on* 2.81)

**अनुमानान्तर्गत** (anumānāntargata) *adj.* included in (the category of) inference (as a means of knowledge) अनुमानान्तर्गतस्य च तल्लक्षणे- नैव लक्षितत्वात् पृथग्लक्षणमवचनीयम् TātpaṬ.(U.) 359.18 (*on* 5(5).43); वैशेषिकास्तु शब्दोऽनुमानान्तर्गतः ... इत्याहुः BhāṭṭCin. i. 48.19 (*on* i. 1.4)

**अनुमानान्तर्गतता** (anumānāntargata-tā) *f.* the state of being what is included in inference (as a means of knowledge) अर्थापत्त्युपमान- योस्त्वनुमानान्तर्गततया तद्दूषणेनैव गतार्थत्वम् SyādvāMañ. 11(52)

**अनुमानान्तर्गतत्व** (anumānāntargata-tva) *n.* the state of being what is included in inference (as a means of knowledge) एवमनुमानान्त- र्गतत्वेऽपि पदस्य न काचित् क्षतिः Kāśi. iii. 134.24 (*on* 5(5).108)

**अनुमानान्तर्गति** (anumānāntargati) *f.* inclusion in inference (as a means of knowledge) सूत्रकारेण प्रथममनुमानान्तर्गतिः परीक्षिता TātpaṬ. (Vā.) 411.24 (*on* ii. 1.48); जीवतो देवदत्तस्य गृहेऽदर्शनेनादृष्टबहिर्भावकल्पना। तेन नानुमानान्तर्गतिरिति जीर्णाः BhāṭṭCin. i. 46.16 (*on* i. 1.4)

**अनुमानान्तर्भाव** (anumānāntarbhāva) *m.* **1** inclusion in inference (as a means of knowledge) येऽस्यानुमानान्तर्भावमिच्छन्ति तान् प्रत्याह Kāśi. iii. 153.15 (*on* 5(6).43); NyāyRa. 447.7 (*on* 5(6).43); YuktiSneha. 75.30 (*on* i. 1.5); सादृश्यस्थितिस्तु उपमानवादे।... कॢप्तसंनिकर्षैरेव चानुमानान्त- र्भावात् सादृश्यधीसिद्धिः NayaVi. 71.1 (*on* i. 1.4); अर्थापत्तिसंभवयोरनुमानान्त- र्भावात् TārkiRa. 96.2; संकेताधीनमिति शब्दस्याप्यनुमानान्तर्भावः NyāyKu. 4.10; संशयकरणिकाया विरोधकरणिकायाश्चानुमानान्तर्भाव ऊहनीयः Upask. 406.3 (*on* ix. 2.5); अनुमानान्तर्भावे हि वक्तृज्ञानविषयतया संसर्गसिद्धिः स्यात् Sarva- DaKau. 66.22; उपमानार्थापत्त्यादेश्चानुमानान्तर्भावः ManvaMu. 521.25 (*on* 12.105); व्यवहारप्रसिद्धसामानाधिकरण्यविवरणानामनुमानान्तर्भावः BhāṭṭCin. i. 56.23 (*on* i. 1.4); i. 46.13 (*on* i. 1.4); **2** inclusion in *anumāna* (as a figure of speech) यश्चासावाश्रयो भिन्नः सोऽर्थ एवेति तद्व्यापारस्यानु- मानान्तर्भावोऽभ्युपगन्तव्यः VyaktiVi. 23.27; 118.11; व्यक्तिविवेककारः ... व्यञ्जनस्यानुमानान्तर्भावमाख्यत् AlaṅkāSa. 12.7.

**अनुमानान्तर्भावप्रतिक्षेप** (anumānāntarbhāva-pratikṣepa) *m.* refutation of inclusion in inference उपमानाख्यप्रमाणान्तरसमर्थनं तु न्यायैक- देशिभिरेवोपमानस्यानुमानान्तर्भावप्रतिक्षेपमात्रपरतया निर्व्यूढम् NyāyPari. 19.6.

**अनुमानान्तर्भाववादिन्** (anumānāntarbhāva-vādin) *adj.* expounder of the inclusion (of the word) in inference (as a means of knowledge) ज्ञाप्यज्ञापकभावस्तु ... (शब्दस्य) अनुमानान्तर्भाववादिभिर्नेष्यते NyāyKuA. ii(1). 204.7.

**अनुमानान्तर्भावाभिप्राय** (anumānāntarbhāvābhiprāya) *m.* intention of the inclusion (of the word) in inference (पुरुषोक्तेः) इतर- स्त्वनुमानान्तर्भावाभिप्रायेणाह — वक्तृबुद्धेरिति Kāśi. iii. 117.16 (*on* 5(5).39)

**अनुमानान्तर्भावाभ्युपगम** (anumānāntarbhāvābhyupagama) *m.* **1** acceptance of inclusion in inference (as a means of knowledge) प्रतीयमानोऽनुमेय एव भवितुमर्हति अर्थापत्तेरनुमानान्तर्भावाभ्युपगमादित्युक्तम् Vyakti- Vi. 24.17; **2** acceptance of inclusion (of *dhvani*) in *anumāna* (as a figure of speech) तदेवं सर्वस्यैव ध्वनेरनुमानान्तर्भावाभ्युपगमः श्रेयानिति VyaktiVi. 137.5.

**अनुमानान्तर्भूत** (anumānāntarbhūta) *adj.* [*f.*-ā] **1** which is included in inference (as a means of knowledge) तदिदं शब्दमनुमानान्तर्भूतं शाक्यवैशेषिकाः प्रतिपन्नाः NyāyRa. 409.21 (*on* 5(5).15); **2** which is included in *anumāna* (as a figure of speech) भक्तिः पदार्थवाक्यार्थरूपत्वाद् द्विविधा मता। तद्बुद्धिश्चानुमानान्तर्भूता यदुपपादिता VyaktiVi. 36.22.

**अनुमानान्तर्भूतत्व** (anumānāntarbhūta-tva) *n.* **1** the state of being included in inference (as a means of knowledge) दृश्यानुपलब्धे-

रनुपलब्धिश्चानुमानभूतत्वात् (v. l. अनुमानान्तर्भूतत्वात्) NyāyKa. 208.24; **2** the state of being included in *anumāna* (as a figure of speech) अनुमानमेवेदमिति। न तु सूक्ष्मम्, अनुमानान्तर्भूतत्वात् सूक्ष्मस्य Kāvyānu. (He.) 342.14.

**अनुमानान्यता** (anumānānya-tā) *f.* the state of being different from inference अनुमानान्यतायामप्येष न स्यादनाश्रयः NyāyPari. 333.2.

**अनुमानापतित** (anumānāpatita) *adj.* which has fallen into (the sphere of), i.e. which is obtained through inference क्षणिकानां च बुद्धिशब्दार्चिषां दृष्ट आकस्मिको विनाशः तदेवमनुमानापतितो धर्मः स्वरूपविपर्ययः Sphuṭā. iv. 3.10 (*on* 4.3)

**अनुमानापत्ति** (anumānāpatti) *f.* inference (itself) as assumption कार्यतस्तर्हीदं कारणानुमानमुपन्यस्तम्। कथं तर्हि 'अर्थापत्त्या' इति। अर्थादनुमानापत्तिरित्यर्थः Bṛha. 186.8 (*on* i. 1.5) (comm. आपत्तिः कल्पना अनुमानं चासावापत्तिश्चेत्यनुमानापत्तिः)

**अनुमानापरपर्यायप्रधान** (anumānāparaparyāya-pradhāna) *n.* primordial matter as another synonym of (the object of) inference जीवस्यानुमानापरपर्यायप्रधानापेक्षा स्यात् VedāntKau. 33.8 (*on* i. 1.19)

**अनुमानापरपर्यायोपपत्ति** (anumānāparaparyāyopapatti) *f.* possibility of being another synonym of inference उपक्रमादीनामनुमानापरपर्या(याया उप)योपपत्तेः पृथक्त्वेनोक्तिः NyāySu.(Ja.) 477A.8 (*on* iii. 2.1)

**अनुमानापरिच्छिन्नविषयता** (anumānāparicchinnaviṣaya-tā) *f.* the state of having the object not ascertained through inference यद्यनुमानापरिच्छिन्नविषयतया भेदोऽभिधीयते, तर्हि पुंवाक्यानामनागमत्वम् Kāśi. iii. 117.4 (*on* 5(5).39)

**अनुमानापरित्याग** (anumānāparityāga) *m.* non-abandonment, i.e. inclusion of inference अनुमानापरित्यागेनैव वैलक्षण्यमात्रमेतत् TātpaṬ. (U.) 354.14 (*on* 5(5).17)

**अनुमानापर्यवसायित्व** (anumānāparyavasāyi-tva) *n.* the state of being what does not culminate into inference (ईश्वरो न सर्वज्ञ इत्यादेर्भ्रान्तवाक्यत्वेन दुर्बलत्वात्) दुर्बलत्वात् अनुमानापर्यवसायित्वात् LaCandr. 831.36.

**अनुमानापलाप** (anumānāpalāpa) *m.* denial or rejection of inference अनुमानापलापे तु प्रत्यक्षादपि दुर्लभा लोकयात्रा NyāyMañ. i. 110.3.

**अनुमानापेक्षत्व** (anumānāpekṣa-tva) *n.* the state of being expectant of inference अनुमानापेक्षत्वे सत्यनुमानस्याप्यनुमानान्तरापेक्षत्वात्सैवानवस्था स्यात् NyāyRa. 70.13 (*on* 2.81); 399.14 (*on* 5(4).166)

**अनुमानापेक्षा** (anumānāpekṣā) *f.* expectancy for inference कामाच्च नानुमानापेक्षा BrahmSū. i. 1.18; श्रुतिषु संकल्पो हिरण्यगर्भस्य जगत्सृष्टौ श्रूयते। तथापि तस्य जगत्कारणत्वे अनुमानापेक्षा युक्त्यपेक्षा नास्ति BrahmSūBh. (Śrī.) i. 240.4 (*on* i. 1.19); पुरुषे तु यद्यप्यनुमानापेक्षा नास्ति सर्वसंमतत्वात् तथापि प्रकृत्यादिविवेके सामान्यतो दृष्टमेवापेक्ष्यते SāṁkhyaPraBh. 50.29 (*on* 1.103)

**अनुमानाप्रमाणता** (anumānāpramāṇatā) *f.* invalidity of inference (as a means of knowledge) प्रत्यक्षेऽपि यथा देशे स्मर्यमाणेऽपि पावके। विशिष्टविषयत्वेन नानुमानाप्रमाणता TattvSaṁ. 1537; ŚlokaVār. 5(6).39 (445.5); नास्तिक्यमात्मनः। ख्याप्यते स्म जडत्वं वा नानुमानाप्रमाणता NyāyMañ. i. 113.15.

**अनुमानाप्रमाणत्व** (anumānāpramāṇatva) *n.* invalidity of inference (as a means of knowledge) रोधोपघातसादृश्यव्यभिचारनिबन्धनम्। अनुमानाप्रमाणत्वमतो वक्तुमसांप्रतम् NyāyMañ. i. 118.39; अनुमानाप्रमाणत्वं न प्रत्यक्षेण साध्यते BṛĀraUBhVā. iv. 3.244; अनुमानाप्रमाणत्वं नाध्यक्षेणैव गम्यते NyāyPari. 94.1.

**अनुमानाप्रयोगव्यवच्छेद** (anumānāprayoga-vyavaccheda) *m.* exclusion of the non-employment of syllogism (किंचित्तु त्यजता दत्ता सैव द्वारद्वयश्रुतेः) तुशब्दादनुमानाप्रयोगव्यवच्छेदः GuruCandr. ii. 243.14.

**अनुमानाप्रवृत्ति** (anumānāpravṛtti) *f.* non-operation or non-function of inference अर्थप्रकाशलक्षणस्य च फलस्य तदानीमसत्त्वादनुमानाप्रवृत्तेः SphoṭSi. 106.2; रूपादिष्वाश्रयव्यतिरेकानुपलब्धेर्गन्धस्याप्ययुक्त आश्रयव्यतिरेक इति चेत् न, प्रत्यक्षत्वादनुमानाप्रवृत्तेः BrahmSūBh.(Śaṅ.) 458.3 (*on* ii. 3.26); कथंता तु निरूप्यते स्वतः परतो वेति।… तत्र न प्रथमः स्वसंवेदनस्यासिद्धेः, प्रकाशत्वस्यासाधारणत्वात्, शब्दसाम्येनानुमानाप्रवृत्तेः ĀtmaTaVi. 676.2; (केवलज्ञानम्) न चानुमानं तद्बाधकं संभवति, धर्मिग्रहणमन्तरेणानुमानाप्रवृत्तेः PramāMī. 14.21 (*on* i. 1.17); ईश्वरेऽपि शास्त्रस्यानुवादत्वमपि तत्रांशे नाशङ्कनीयमेव, यत्रानुमानाप्रवृत्तिः NyāyKu. 87.5; प्रत्यक्षस्य कस्यचिदर्थस्याभावे व्याप्तिसंवेदनस्यानाभावेनानुमानाप्रवृत्तेश्चेति यैः पर्यनुयुक्तं ते वैभाषिकाः ŚivārkaMaDī. ii. 80.26 (*on* ii. 2.17); पक्षसाध्यहेतुसपक्षाद्यभेदभ्रमे सति सिद्धसाधनादिनानुमानाप्रवृत्त्या तदभेदज्ञानविघटनाय तद्भेदज्ञानस्यापेक्षितत्वात् SiddhāLeSaṁ. 232.7.

**अनुमानाप्रसर** (anumānāprasara) *m.* non-appearance, i.e. non-operation of inference शुद्धचैतन्ये धर्मानधिकरणतयानुमानाप्रसरः AdvaiSi. 814.5; श्रुतसंख्यासत्त्वे कारणाभावस्यासिद्धत्वेन अनुमानाप्रसरात् BhaṭṭDī. i. 124.17 (*on* ii. 2.7)

**अनुमानाप्रामाण्य** (anumānāprāmāṇya) *n.* invalidity of inference (as a means of knowledge) सिद्धेऽनुमानाप्रामाण्ये प्रत्यक्षस्य प्रामाण्यम् TātpaṬ.(U.) 194.12 (*on* 5(1).10); तस्यां (प्रत्यभिज्ञायाम्) च प्रमाणीभूतायां व्याप्तिवैधुर्यादनुमानाप्रामाण्यम् NyāyMañ. ii. 21.7; अनुमानाप्रामाण्ये प्रत्यक्षस्याप्यप्रमाणत्वापत्तेः TattvCin. ii(1). 24.1; अनुमानाप्रामाण्ये सकललोकव्यवहारोच्छेदप्रसङ्गात् NyāySu.(Ja.) 77A.3 (*on* i. 1.1)

**अनुमानाप्रामाण्यप्रतिपादक** (anumānāprāmāṇya-pratipādaka) *adj.* stating the invalidity of inference न हि व्यभिचारलक्षणस्यानुमानाप्रामाण्यप्रतिपादकस्यानुमानस्य व्यभिचारे किंचित्प्रमाणमस्ति TātpaṬ.(Vā.) 403.7 (*on* ii. 1.37)

**अनुमानाप्रामाण्यप्रसङ्ग** (anumānāprāmāṇya-prasaṅga) *m.* undesired occasion of the invalidity of inference सविकल्पकानङ्गीकारे निर्विकल्पके मानाभावात् तदपि न स्यात्। अनुमानाप्रामाण्यप्रसङ्गाच्च SarvaDaKau. 40.24.

**अनुमानाप्रामाण्यवादिन्** (anumānāprāmāṇya-vādin) *adj.* who propounds the invalidity of inference अतीन्द्रियोपाधिशङ्कायां कथं साध्यनिश्चयः। मैवम्। अनुमानाप्रामाण्यवादिभिरतीन्द्रियस्य शङ्कितुमशक्यत्वात् NyāyPari. 113.4.

**अनुमानाबहिर्भूत** (anumānābahirbhūta) *adj.* which has not been outside (the range of) inference, which is non-distinct from, i.e. identical with inference विषयभेदस्य दर्शनार्थं पृथक्कृतः। अनुमानाबहिर्भूतोऽप्यभ्युपायः प्रबाधनात् PramāVār. 4.102; बाधनाभ्युपगमात् आगमोऽनुमानाबहिर्भूतोऽपि पृथक्कृतोऽनुमानात् PramāVāBh. 526.12.

**अनुमानाभाव** (anumānābhāva) *m.* absence of inference अमुं राशिं सूर्यो गतो न वेति चिन्त्यमाने गणितकुशलेन गणितानुमानाभावान्न गत इत्यवगते भ्रान्तो गत इति वदति। तत्रानुमानाभावविरोधः Kāśi. iii. 52.17 (*on* 5(4).69)

**अनुमानाभास** (anumānābhāsa) *m., n.* **A** fallacious reasoning or probans पिण्डादिगतानां मृदाद्यवयवानामेव घटादौ प्रत्यक्षत्वेऽनुमानाभासात्सादृश्यादिकल्पनानुपपत्तेः BṛĀraUBh. 15.13 (*on* i. 2.1); प्रत्यक्षविशेषद्वयपूर्वकत्वमनुमानाभासेष्वपि सव्यभिचारविरुद्धादिषु संभवति NyāyMañ. i. 114.8; रूपत्रयासंपत्तेरेव तदनुमानाभासमिति व्यवहर्तव्यम् NyāyVārPari. 257.4; अनुमानाभासो यथा। बाष्पादिषु धूमत्वाध्यारोपेण धूमवत्त्वात् पर्वतोऽग्निमानित्यादि NyāyPari. 271.2; यावन्तोऽनुमानाभासाः परपरिगणितास्तावद्भेदतां निवर्तयितुमेव शम् NyāySu.(Ja.) 264B.6 (*on* ii. 1.2); Vādā. 153.7; Nyāyāmṛ. 138B.6; न च चार्वाकादेरनुमानाभासाज्जाते देहात्मैक्यभ्रमे प्रत्यक्षत्वाभिमान इति वाच्यम् AdvaiSi. 617.16; न त्वेकस्मिन्नेव विषये भूयसां प्रमाणानामनुरोधेन स्वल्पप्रमाणबाध इति सर्वत्रैव शब्दानुमानाभासानां भूयसां संभवात् GuruCandr. i. 280.14; **B** fallacious inference प्रत्यक्षेणानुमानेन वाभ्युपगतं प्रतिपन्नं तद्विरोध्यनुमानाभासः Kiraṇā. 337.12.

**अनुमानाभासता** (anumānābhāsa-tā) *f.* the state of being a fallacious reasoning or probans अनुष्णोऽग्निरवयवी कृतकत्वाद् घटवद् इति।… रूपत्रयसंपन्नमेतत्कृतकत्वं न वा। न चेत्तत एव तर्हि तदनुमानाभासतामेति कृतं प्रत्यक्षविरोधेन TātpaṬ (Vā.) 43.5 (*on* i. 1.1)

**अनुमानाभासत्व** (anumānābhāsa-tva) *n.* the state of being a fallacious reasoning or probans 'सहोपलम्भनियमादभेदो नीलतद्धियोः' इति। तदनुपपन्नम्, परस्परविलक्षणत्रितयप्रतिभासेनानुमानाभासत्वे सति बाधकाभावात् TātpaṬ.(U.) 240.23 (*on* 5(3).4); इदानीमनुमानाभासत्वमस्य किंकृतमिति चिन्त्यताम् NyāyMañ. ii. 165.31; वाक्यत्वादीनामनुमानाभासत्वोपपादने कृतमपूर्वार्थित्वेनात्र तदुपपादकेन Bhām. 79.9 (*on* i. 1.4); भिन्नयोर्नीलपीतयोः … अनुमानेन तयोरभेदसिद्धिरिति चेत् न। संदिग्धानैकान्तिकत्वेनास्यानुमानाभासत्वात् SyādvāMañ. 16(286)

**अनुमानाभासप्रसङ्ग** (anumānābhāsa-prasaṅga) *m.* undesired occasion for a fallacious reasoning or probans सम्यक् प्रवृत्ते च प्रतिबन्धग्राहिणि प्रत्यक्षे व्याप्तिविप्लवाभावान्नानुमानाभासप्रसङ्गः NyāyMañ. i. 114.11.

**अनुमानाभासबाध** (anumānābhāsa-bādha) *m.* contradiction with fallacious reasoning or probans प्रत्यक्षेणानुमानाभासबाधो न स्यात् KhaṇḍanKhā. 933.4.

**अनुमानाभासमूल** (anumānābhāsa-mūla) *adj.* rooted in, i.e.

based on fallacious reasoning or probans स्मृत्याभासः …। अनुमानाभासमूलो यथा । कलधौतमिति परिगृहीतरक्षितकम्बुशकलस्यास्ति मे तदङ्गुलीयकार्हद्रव्यमिति NyāyPari. 356.3.

**अनुमानाभासवत्** (anumānābhāsa-vat) *adv.* like fallacious inference आहार्यलिङ्गजन्यत्वाच्चानुमानाभासवन्नास्यानुमानत्वमारोपितविषयत्वाच्च Nyāy-Pari. 325.15.

**अनुमानाभासव्यभिचार** (anumānābhāsa-vyabhicāra) *m.* deviation of the fallacious reasoning or probans (from probandum) नानुमानाभासव्यभिचारेणानुमानव्यभिचारः शङ्कनीयः Bhām. 343.11 (*on* ii. 1.11)

**अनुमानाभाससंकर** (anumānābhāsa-saṅkara) *m.* cross-connection with fallacious reasoning or probans अनुमानाभाससंकरेण प्रमाणमप्रमाणीभवति Kāśi. ii. 3.14 (*on* 5(1). 7)

**अनुमानाभासादि** (anumānābhāsādi) *adj.* fallacious reasoning or probans etc. असमानजातीयानि चानुमानाभासादीनि यथा क्षणिकत्वादिषु साध्येषु सत्त्वादीनि TātpaṬ.(Vā.) 156.19 (*on* i. 1.5)

**अनुमानाभासादिजन्य** (anumānābhāsādi-janya) *adj.* produced through fallacious reasoning or probans etc. चार्वाकादेस्त्वनुमानाभासादिजन्येऽपि देहात्मभ्रमे धर्माद्यभावभ्रम इव प्रत्यक्षत्वाभिमानः Nyāyāmṛ. 402B.8.

**अनुमानाभासान्तर्भावपक्ष** (anumānābhāsāntarbhāva-pakṣa) *m.* view which maintains the inclusion (of *tarkābhāsa*) in fallacious reasoning or probans एते च तर्काभासा अनुमानाभासान्तर्भावपक्षेऽपि प्रावादुकैः पृथगुद्भावयितुमुचिताः NyāyPari. 350.2.

**अनुमानाभिप्राय** (anumānābhiprāya) *adj.* intended for (establishing) inference तदेवं सूत्रमर्थापत्त्यभिप्रायमिति वर्णितं, शक्यते त्वनुमानाभिप्रायमपि वर्णयितुम् NyāyRa. 809.11 (*on* 6.309); *m.* [Inst.] with the intention of (expressing) inference स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वादिति पूर्वोक्तः प्रयोगस्संभावनामात्रपरः नानुमानाभिप्रायेण प्रयुज्यते NyāyKu. 77.7.

**अनुमानाभिमान** (anumānābhimāna) *m.* erroneous cognition (of the nature) of inference अननुमाने तु खल्वयमनुमानाभिमानः NyāyBh. 107.5 (*on* ii. 1.39)

**अनुमानाभेद** (anumānābheda) *m.* non-distinction from, i. e. identity with inference स्वाभाविकसंबन्धाभावादनुमानाभेदायाविनाभावसिद्ध्यर्थं स्वाभाविकसंबन्धाभिधानमयुक्तमिति सिद्धम् TātpaṬ.(Vā.) 419.21 (*on* ii. 1.55)

**अनुमानाभ्युपगम** (anumānābhyupagama) *m.* admittance of inference प्रमातृप्रमेययोः क्षणिकत्वं वदद्भिर्व्याप्त्यवधारणतत्स्मरणपूर्वकानुमानाभ्युपगमोऽपि दुःशकः BrahmSūBh.(Rā.) 491.8 (*on* ii. 2.24)

**अनुमानायोग** (anumānāyoga) *m.* untenability, i.e. impossibility of inference आसंसारमनाम्नातस्य च वेदत्वव्याघातेनानुमानायोगात् Nyāy-KuA i. 128.3.

**अनुमानार्थ** (anumānārtha) *m.* (etymological) sense of inference तदिदमन्तिमं प्रत्यक्षं पूर्वाभ्यां प्रत्यक्षाभ्यां स्मृत्या चानुगृह्यमाणं परामर्शरूपमनुमानं भवति। कः पुनरनुमानार्थः NyāyVār. 46.12 (*on* i. 1.5)

**अनुमानार्थनिश्चय** (anumānārtha-niścaya) *m.* ascertainment of the meaning of inference प्रमाणस्यागौणत्वादनुमानार्थनिश्चयो दुर्लभः Nyāy-Mañ. i. 108.10.

**अनुमानार्थान्तरन्यासविषय** (anumānārthāntaranyāsa-viṣaya) *m.* scope for or context of figures of speech, such as *anumāna* and *arthāntaranyāsa* अनुमानार्थान्तरन्यासविषये हेत्वलंकारो नेति तावत्सर्वसंमतम् RasGaṅ. 632.15.

**अनुमानार्थापत्तिव्यतिरेक** (anumānārthāpatti-vyatireka) *m.* [Inst.] with the exception of inference and presumption न कश्चिदन्योन्यसंबन्धबोधकत्वमनुमानार्थापत्तिव्यतिरेकेण प्रतीतम् PrakaPañ. 393.11.

**अनुमानार्थापत्त्यात्मक** (anumānārthāpattyātma-ka) *adj.* of the form of inference and presumption स्मृत्योर्वेदमूलयोर्विरोधे तत्प्रामाण्यनिर्वाहाय भिन्नविषयव्यवस्थापकोऽनुमानार्थापत्त्यात्मको न्यायोऽपेक्षणीयत्वाद् बलवान् Aparā. 626.9 (*on* 2.21)

**अनुमानार्थापत्त्युपबृंहिता** (anumānārthāpatty-upabṛṁhitā) *adj.* (*f.*) supported by inference and presumption कर्मफलस्य क्षयित्वं ब्रह्मज्ञानफलस्य चाक्षयित्वं परीक्ष्य लोकान् … इत्यादिश्रुतिभिरनुमानार्थापत्त्युपबृंहिताभिः प्रत्यपादि SarvaDaSaṁ. 4.288.

**अनुमानार्थिन्** (anumānārth-in) *adj.* desirous of (applying) inference भूयोऽग्निसाहित्यं व्यभिचारादर्शनमित्येतावदेवानुमानार्थिभिरभ्यर्थनीयम् ŚāstrDī. 62.6 (*on* i. 1.5)

**अनुमानार्ह** (anumānārha) *adj.* capable of (knowing through) inference कर्तृस्मृतिः साक्षान्नास्ति। मानान्तरावेद्ये चार्थे नानुमानार्हः कर्ता Naya-Vi. 279.3 (*on* i. 1.27)

**अनुमानालंकार** (anumānālaṅkāra) *m.* figure of speech called *anumāna* न हि सर्वथैव प्रस्तुतानन्वय्यप्रस्तुताभिधानं युज्यते ।… नाप्यनुमानालंकार इव प्रस्तुतप्रतीतिजनकतया तद्वदिह व्याप्तिपक्षधर्मताद्यभावात् Kuval 123 (9); नानुमानालंकारस्यात्र विषयः RasGaṅ. 631.12; 640.4; न चानुमानालंकार इव प्रस्तुतप्रतीतिजनकतयोपयोगोऽस्त्विति वाच्यम् AlaṅkāMañ. 169.6; 224.7.

**अनुमानालंकारलक्षण** (anumānālaṅkāra-lakṣaṇa) *n.* definition of the figure of speech called *anumāna* न चात्र … अनुमानालंकृतिः शक्यनिरूपणेति वाच्यम्। व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानस्यैवानुमानालंकारलक्षणवाक्यगतेनानुमितिपदेन ग्रहणात् RasGaṅ. 697.10.

**अनुमानालंकारविषय** (anumānālaṅkāra-viṣaya) *m.* scope for or context of the figure of speech called *anumāna* अनुमानालंकारविषये सुमनोमार्गणत्वेन मन्मथत्वव्याप्तिलिङ्गेन राज्ञि मन्मथत्वमवधृतम् CitraMī. 75.10.

**अनुमानालंकृति** (anumānālaṅkṛti) *f.* figure of speech called *anumāna* काव्यलिङ्गज्ञानजानुमितिः …। श्रोतुः केवलं कारणवशाज्जायत इति नास्त्येवात्र जायमानायामप्यनुमितावनुमानालंकृतेर्विषयः RasGaṅ. 631.17; 697.9.

**अनुमानालम्बन** (anumānālambana) *n.* support or basis of inference एकैव धूमवत्ता एकैव वह्निमत्ता न सा पर्वतसंबन्धिनी गृहीतातः सैवानुमानालम्बनम् TattvPradī.(Ci.) 240.2.

**अनुमानावकाश** (anumānāvakāśa) *m.* occasion for (the application of) inference सर्वज्ञानकारणाभावात् छिन्नं पूर्वविज्ञानं स्मृतिमूलतया असंभावितमिति वैपरीत्यपरिच्छेदाद् नानुमानावकाशः Kāśi i. 131.17 (*on* 2.133); (देवदत्तस्य) केवलगृहाभावोऽपि न लिङ्गम्। मृतजनिष्यमाणयोर्व्यभिचारात्। अतोऽत्र नानुमानावकाशः TantrRaha. 13.1.

**अनुमानावगत** (anumānāvagata) *adj.* known through inference अनुमानावगतप्रत्यक्षबाध एव शक्यो दर्शयितुम् Kāśi. iii. 50.19 (*on* 5(4). 68); प्रत्यक्षानुमानावगतवस्तुतत्त्वान्वाख्यानं शास्त्रम् NyāyKa. 237.9.

**अनुमानावगम्य** (anumānāvagamya) *adj.* knowable through inference ज्ञानम् … नानुमानावगम्यं तत् ŚlokaVār. 5(12). 31 (553.3); अनुमानावगम्यरूपविपरीतरूपेण परिच्छिन्ने तद्विपरीतरूपे न प्रमाणापेक्षा NyāyRa. 363.22 (*on* 5(4). 58)

**अनुमानावतार** (anumānāvatāra) *m.* emergence, i.e. operation of inference वेदेऽप्यपौरुषेयत्वनिश्चयात् पश्चादनुमानावतारः NyāyKuA. ii(1). 215.6.

**अनुमानावतारसंभव** (anumānāvatāra-sambhava) *m.* possibility of emergence, i.e. operation of inference प्रत्यक्षशास्त्रेणेश्वरसिद्धौ सिद्धसाधने नानुमानानवतारादिति वाच्यम्। सिद्धेरप्यनुमित्सयानुमानावतारसंभवात् Śivārka-MaDī. i. 143.22 (*on* i. 1.3)

**अनुमानावतारासंभव** (anumānāvatārāsambhava) *m.* impossibility of emergence, i.e operation of inference केवलान्वयिसाध्यकमनुमानमेव नास्ति, तस्य केवलान्वयिग्रहदशायाम् … अनुमानावतारासंभवात् MaṇiKa. 40.15.

**अनुमानावयव** (anumānāvayava) *m.* part or member of syllogism (viz. *pratijñā*, *hetu*, *udāharaṇa*, *upanaya* and *nigamana*) अनुमानावयवाः प्रतिज्ञादयः PramāMī. 49.17 (*on* ii. 1.2)

**अनुमानावलम्ब** (anumānāvalamba) *adj.* dependent, i. e. based on inference शैवादीनामनुमानावलम्बं नेमं पक्षं निगमान्ताः क्षमन्ते NayaMañ. II. ii. 7.14.

**अनुमानावष्टम्भ** (anumānāvaṣṭambha) *m.* [Inst.] on the basis of inference हरहिरण्यगर्भादिचेतनेषु प्रधानाद्यचेतनेषु च पाशुपताद्यागमानुमानावष्टम्भेनातिव्याप्तिमाशङ्क्यात्र परिहरति भगवान्सूत्रकारः NyāySu.(Ja.) 107B. 10 (*on* i. 1.3)

**अनुमानावसर** (anumānāvasara) *m.* **A** occasion for (operation of) inference अनुमानावसरे च 'व्याहरति अयम्' इति विच्छेदजीवित इति अन्यस्य व्याप्तिः गृहीता अन्यश्च आभासः कथम् इदानीं हेतुः स्यात् PratyabhiVi. i. 217.2 (*on* i. 5.5); **B** occasion for (the description of) inferential argument सामान्यप्रत्यासत्त्या व्यक्तयः प्रतिभान्तीति निरस्तमनुमानावसरे KhaṇḍanKhā. 970.4.

**अनुमानावसेया** (anumānāvaseyā) *adj.* (*f.*) to be ascertained through inference न च (घटविविक्तता) भिन्नाप्यक्षानुमानावसेयेति वक्ष्यामः TātpaṬ.(U.) 409.18 (*on* 5(8). 2)

**अनुमानावसेयार्थाधिगति** (anumānāvaseyārthādhigati) *f.* knowledge of the object which is to be ascertained through inference अतिरेकेऽपि (अर्थापत्त्या) तयानुमानावसेयार्थाधिगतेरनुमानस्यानुदयप्रसङ्गात् TattvPradī.(Ci.) 244.10.

**अनुमानाविर्भावशङ्का** (anumānāvirbhāva-śaṅkā) *f.* doubt about the appearance of the figure of speech called *anumāna* न च कार्यात् कारणप्रतीतावनुमानाविर्भावशङ्का PratāYaBhū. 444.1.

**अनुमानाविषय** (anumānāviṣaya) *m.* other than the object of inference कः पुनरस्यानुमानस्य विरोधः अनुमानाविषये प्रयोगः NyāyVār. 15.5 (*on* i. 1.1); NyāyVārPari. 260.7; यतः कुतश्चित् भेदसाधने त्वनुमानाविषये लब्धावकाशा श्रुतिरभेदं बोधयिष्यति AdvaiSi. 517.9.

**अनुमानाविषयत्व** (anumānāviṣaya-tva) *n.* the state of being other than the object of inference अनुमानाविषयत्वेऽन्यदपि कारणमुच्यते NaiṣkaSi. 136.3; न लिङ्गादिन्द्रियगम्याद् धूमादग्नेरिव ग्रहणं यस्येतीन्द्रियप्रत्यक्षपूर्वकानुमानाविषयत्वस्य TattvPradī.(A) 234.5 (*on* 2.80); वार्त्तिके पराभिमतापक्षधर्मत्वमेव स्फुटमपक्षस्यैवानुमानाविषयत्वात् NyāyVārPari. 260.8.

**अनुमानावेद्यत्व** (anumānāvedya-tva) *n.* the state of not being knowable through inference जगत्कारणस्यानुमानावेद्यत्वं श्रुतिभिरपि सिद्धम् NyāySu.(Ja.) 110B.6 (*on* i. 1.3)

**अनुमानाव्यतिरेक** (anumānāvyatireka) *m.* non-difference from, i.e. identity with inference नाप्यर्थापत्तिः अनुमानाव्यतिरेकात् KhaṇḍanKhā. 667.13; TattvPradī.(Ci.) 261.1.

**अनुमानाव्यतिरेकित्व** (anumānāvyatireki-tva) *n.* the state of being non-different from, i.e. identical with inference शब्दादीनामनुमानेऽन्तर्भावोऽनुमानाव्यतिरेकित्वं समानविधित्वात् NyāyKa. 213.21.

**अनुमानाव्यवधानसापेक्षत्व** (anumānāvyavadhāna-sāpekṣatva) *n.* (syntactical) expectancy for the immediate occurrence of the word *anumāna* स इति शब्दस्य वह्निज्ञापने अनुमानाव्यवधानसापेक्षत्वेऽपि … लिङ्गसमर्पकशब्दस्यापि लिङ्गिनि श्रुतित्वप्रसङ्गात् ŚivārkaMaDī. i. 80.9 (*on* i. 1.1)

**अनुमानाशङ्का** (anumānāśaṅkā) *f.* **A** doubt about syllogism सामग्रीभेदादनुमानाशङ्कापि नास्ति PrakaPañ. 264.13; सूत्रे शास्त्रोपादानाभावादनुमानाशङ्कायां यतः … कारणाज्जगतो जन्मादि भवति तद् ब्रह्मेति वाक्यशेष इत्यस्योपकारस्याप्रमाणत्वप्रसङ्गः PañcPā. 82.22 (*on* i. 1.3); **B** doubt about inference यदि चाभावबुद्धिरेव प्रमाणं स्यात्ततः स्यादपि कथंचिदनुमानाशङ्का NyāyRa. 488.15 (*on* 5(8).40)

**अनुमानाश्रय** (anumānāśraya) *m.* basis, i.e. cause of inference अनुमानाश्रयो लिङ्गमविनाभावलक्षणम् PramāVār. 2.285; *adj.* **Ai** having inference, as the basis, i.e. cause, cf. **अनुमानाश्रयत्व Ai**; **B** having inference as the basis, i.e. substratum, cf. **अनुमानाश्रयत्व Aii.**

**अनुमानाश्रयता** (anumānāśraya-tā) *f.* the state of being the basis, i.e. cause of inference अनुमानात्कोऽपरो न्यायो येनानुमानाश्रयतामुक्त्वापि न्यायाश्रयतां दृष्टान्तस्य पृथगाह भाष्यकारः NyāyVārPari. 294.9.

**अनुमानाश्रयत्व** (anumānāśraya-tva) *n.* **Ai** the state of having inference as the basis, i.e. cause अर्थानर्थविवेचनस्यानुमानाश्रयत्वात्तद्विप्रतिपत्तेस्तद्व्यवस्थापनायाह PramāVāSvopVṛ. 1.12; कस्यानुमानाश्रयत्वादिति विशेषापेक्षायाम् … परोक्षार्थप्रतिपत्तिशब्दसंबन्धे स्त्रीत्वं गम्यते HetuBiṬ. 4.2; **Aii** the state of having inference as the basis, i.e. substratum वक्तृदोषाणां कथमर्थवचनदोषेषु … अनुप्रवेशः …। तथाप्यनुपपत्तिरेव ।… निग्रहस्थानानां च नियमेनानुमानाश्रयत्वाभावात् NyāySu.(Ja.) 270A.5 (*on* ii. 1.2); **B** the state of being the basis, i.e. cause of inference अनुमानाश्रयत्वं दृष्टान्तस्यासंगतं लिङ्गस्य पक्षाश्रयत्वात् ज्ञानस्य चात्माश्रयत्वात् NyāyVārPari. 294.15.

**अनुमानासंभव** (anumānāsambhava) *m.* impossibility of (the operation of) inference श्रुतौ दृश्यमानायामनुमानासंभवाद्भङ्गुरत्वम् TantrVā. 863.23 (*on* iii. 3.14); योग्यानुपलब्धिनिरस्तस्य कर्तुरनुमानासंभवात् … अपौरुषेया वेदाः ŚāstrDī. 19.10 (*on* i. 1.2); (विज्ञानस्य) अनुमेयत्वे तु बाह्यार्थं विनानुमानासंभवाद् बाह्यार्थसिद्धिः ŚāstrDī. 52.9 (*on* i. 1.5); अप्रतीतगवयगवान्तरसामान्यस्यादृष्टान्तानुमानासंभवात् गवयेनानेन सदृशी सा गौरिति मितिरुपमितिरित्यपि व्युदस्तम् KhaṇḍanKhā. 746.8; प्रमाणासंभवो न्यायरत्नमालायां प्रपञ्चितः … हन्त तर्ह्यनुमानासंभव एव YuktiSneha. 62.22 (*on* i. 1.5); 157.19 (*on* i. 1.7); स्मृत्यनुमितलिङ्गाद्यनुमीयमानश्रुतेर्विषयापहारेण बाधादनुमानासंभवान्नैतासां स्मृतीनां स्वार्थप्रमापकत्वम् VīraMi.(Saṁskāra.) 716.6.

**अनुमानासाध्य** (anumānāsādhya) *adj.* not to be proved or established through inference इदं तु प्रत्यक्षानुमानासाध्यप्रमासाधकत्वात् प्रमाणान्तरमुपमानमस्ति TarkBhā.(Ke.) 47.9.

**अनुमानासामर्थ्य** (anumānāsāmarthya) *n.* lack of competence of inference (ईश्वरस्य शास्त्रप्रतिपादने) अत्रैके वदन्ति – अनुमानासामर्थ्य(र्थ्यात्) तन्निरास इति NyāyKu. 87.9.

**अनुमानासिद्ध** (anumānāsiddha) *adj.* not proved through inference अनुमानासिद्धमप्यागमात् सिध्यति SāṁkhyaPraBh. 29.24 (*on* 1.60)

**अनुमानासिद्धि** (anumānāsiddhi) *f.* non-establishment, i.e. non-operation of inference साध्यहेतुदृष्टान्तानामपि प्रामाणिकत्वे दृश्यत्वहेतोस्तत्रानैकान्तिकता, अप्रामाणिकत्वे वा साध्यसाधनाद्यभावादनुमानासिद्धिः TattvPradī (Ci.) 35.11; नभोनैल्येनानुमानं बाधकं, सविधे नभसि नैल्यसत्त्वेऽपि तस्य नीहारावगुण्ठनस्येव सामीप्यदोषादग्रहसंभवादुक्तकर्कानवतारेणानुमानासिद्धेः GuruCandr. i. 354.13.

**अनुमानित** (anu-mānita) *adj.* **A** made to agree, acquiesced पित्रा ते मुनिभिश्चैव ततोऽहमनुमानितः MahāBhā. xii. 306.20; **B** caused to consent तेन … द्विजाः ।… धर्मवन्तोऽनुमानिताः PadmP. i. 62.18.

**अनुमानितवह्निसाक्षात्कार** (anumānitavahni-sākṣātkāra) *m.* [w.r. for **अनुमितवह्निसाक्षात्कार**] Bhām. 704.21 (*on* iv. 1.1-2)

**अनुमानिता** (anumāni-tā) *f.* the state of being what is proved or established through inference प्राक् स चेत्पक्षधर्मत्वाद् गृहीतः किं ततः परम् । पक्षधर्मादिभिर्ज्ञातैर्येन स्यादनुमानिता ŚlokaVār. 5(5).84 (427.8)

**अनुमानिरपेक्ष** (anumā-nirapekṣa) *adj.* independent of inference अनुमानिरपेक्ष एव वा किल दृष्टे विषयेऽर्थसंशयः NyāyMañ. ii. 125.26.

**अनुमानिर्दोषत्वाध्यवसाय** (anumānirdoṣatvādhyavasāya) *m.* ascertainment of the faultlessness of inference भेदादिवाक्यानामेव प्रामाण्यं स्यात् ।… व्यभिचारश्चेदागमार्थानुमानिर्दोषत्वाध्यवसाये च समः PramāLa. 2B.2.

**अनुमानीकृ** (anumānī-kṛ-) VIII. P. to make, i.e. to treat as inferential knowledge तार्किकास्तु … गोगतसादृश्यज्ञानमनुमानीकुर्वन्ति MānaMe. 110.7.

**अनुमानीय** (anumān-īya) *adj.* belonging to (the class of) inference कथं वायौ वर्णसद्भावः । श्रद्धानीय एषोऽर्थो नानुमानीयः AbhidhKoBh. 53.15 (*on* 2.22)

**अनुमानैकगम्य** (anumānaika-gamya) *adj.* knowable through inference alone तार्किकाः पुनरस्मदादीनामनुमानैकगम्यान् … परमाणूनाद्रियन्ते MānaMe. 163.7; अनुमानैकगम्योऽत्र पुरुषो मतः Vidvanmo. 6.20.

**अनुमानैकगम्यत्व** (anumānaikagamya-tva) *n.* the state of being knowable through inference alone ये तु शाक्याः सामान्यस्य प्रत्यक्षग्राह्यतामनिच्छन्तोऽनुमानैकगम्यत्वं मन्यन्ते, तन्मतेऽनुमानोच्छित्तिरेव स्यात् NyāyRa. 394.16 (*on* 5(4).148)

**अनुमानैकगोचर** (anumānaika-gocara) *m.* object of inference alone सुकरः संगतिग्रहः । तस्यैवमनुमेयत्वे कथं शब्दैकगोचरः । तस्यापि शब्दपूर्वत्वादनुमानैकगोचरः BrahmSi. 104.13.

**अनुमानैकचक्षुस्** (anumānaika-cakṣus) *adj.* who has inference alone as the eye, i.e. who admits inference alone as the means of knowledge अनादृत्य श्रुतिं मोहादतो बौद्धास्तमस्विनः । आपेदिरे निरात्मत्वमनुमानैकचक्षुषः NaiṣkaSi. 128.2; PañcDa. 2.31.

**अनुमानैकदेशविरुद्ध** (anumānaikadeśa-viruddha) *m.* name of *kālātyayāpadiṣṭa hetvābhāsa* (*lit.* contradictory to a part of syllogism) अनुमानैकदेशविरुद्धो यथा । नित्याश्रयाः द्रवत्वरूपरसगन्धस्पर्शा नित्याः अप्रदेशवृत्तिसमानजात्यारम्भकत्वे सति परमाणुवृत्तित्वात् तद्गतैकत्ववदिति NyāySā. 11.14.

**अनुमानैकयोगक्षेम** (anumānaika-yogakṣema) *adj.* having the support of, i.e. being equivalent to inference alone नन्वभिप्रायविषयं यद् व्यञ्जकत्वमनुमानैकयोगक्षेमं तच्चेन्न प्रयोजनं ध्वनिव्यवहारस्य Loc. 203.26 (*on* 3.33)

**अनुमानैकरुचि** (anumānaika-ruci) *adj.* who has liking for inference alone अनुमानैकरुचिं प्रति तदप्युच्यते VivaPraSaṁ. 21.1.

**अनुमानैकवर्त्मन्** (anumānaika-vartman) *n.* [Inst.] through the path of inference alone रवीन्द्वादिपदार्थेभ्यो ह्यनुमानैकवर्त्मना । स्वार्थं विज्ञापयिष्यामि BṛĀraUBhVā. iv. 3.44.

**अनुमानैकविषय** (anumānaika-viṣaya) *m.* object of inference alone बौद्धानामेव तु सामान्यमनुमानैकविषयं मन्वानानामनवस्था प्रसज्यते Kāśi. iii. 89.13 (*on* 5(4).149)

**अनुमानैकशरण** (anumānaika-śaraṇa) *adj.* having inference alone as the resort गतिरूर्ध्वा च दुःखेनागतित्वाल्लौकिकी यथा । इत्युक्ते चानुमानैकशरणस्य किमुत्तरम् AnuVyā. 68A.4 (*on* 4.2); अनुमानैकशरणस्य शुष्कतार्किकस्य

… कर्मपारवश्यादिकमपि साध्येऽन्तर्भाव्य ŚivārkaMaDī. i. 149.15 (*on* i. 1.3)

**अनुमानैकसमधिगम्य** (anumānaika-samadhigamya) *adj.* knowable through inference alone अनुमानैकसमधिगम्ये तु सामान्ये लिङ्गस्य … सामान्यरूपत्वे सत्यनुमेयत्वेनानवस्थानादनुमानव्यवहारोच्छेदप्रसङ्गः TātpaṬ.(U.) 341.21 (*on* 5(4).149); YuktiSneha. 71.24 (*on* i. 1.5)

**अनुमानैकसिद्धत्व** (anumānaikasiddha-tva) *n.* the state of being what is established through inference alone अनुमानैकसिद्धत्वाद्भिन्नाभिन्नात्मवस्तुनः। आगमेनात्र किं कार्यम् BṛĀraUBhVā. i. 6.52.

**अनुमानैकेक्षण** (anumānaikekṣaṇa) *adj.* having inference alone as the eye, i.e. who admits inference alone as the means of knowledge यतिशेखरोद्धृतनिषद्भाष्यम् … केचित् … खण्डयितुं प्रयत्नमनुमानैकेक्षणा विक्षमाश्चक्रुः ŚaṅkaDigVi.(Mā.) 6.97.

**अनुमानोक्त** (anumānokta) *adj.* stated (as necessary prerequisite) with respect to inference उपमानेन साधर्म्यमात्रानुमानेन वा सर्वधर्मप्राप्तिरनुमानोक्तव्याप्यव्यापकभावनिरपेक्षायुक्ता TantrVā. 546.17 (*on* ii. 2.25)

**अनुमानोक्तदूषण** (anumānokta-dūṣaṇa) *n.* defect stated regarding inference सामान्यादनुमानोक्तदूषणं तद्विशेषतः। प्रत्यक्षत्वं प्रसज्येत ŚivDṛ. 5.72.

**अनुमानोक्ति** (anumānokti) *f.* inferential argument or reasoning ऊहस्तर्कोऽनुमानोक्तिः AbhidhāRaMā. 1.10.

**अनुमानोच्छित्ति** (anumānocchitti) *f.* loss or destruction of inference ये तु शाक्याः सामान्यस्य प्रत्यक्षग्राह्यतामनिच्छन्तोऽनुमानैकगम्यत्वं मन्यन्ते, तन्मतेऽनुमानोच्छित्तिरेव स्यात् NyāyRa. 394.17 (*on* 5(4).148)

**अनुमानोच्छेद** (anumānoccheda) *m.* **A** loss of syllogism धर्मिणि विकल्प्यमानेऽनुमानोच्छेदः TātpaṬ.(U.) 205.22 (*on* 5(2).48); अनुमानोच्छेदः प्रसज्येत अनित्यः शब्दः कृतकत्वाद् घटादिवदिति दृष्टान्तधर्माः सर्वे शब्दे प्रसज्येरन् BrahmSūBh.(Bhā.) 9.2 (*on* i. 1.2); सर्वे … विपक्षा एव जाता इति पक्षवृत्तयो हेतव इदानीं विपक्षगामिनो भवेयुरित्यनुमानोच्छेदः NyāyMañ. i. 181.13; न च ग्रहणस्मरणयोर्विशिष्टस्य ज्ञानस्य वा पक्षत्वे बाध आश्रयसिद्धिर्वा, उभयसिद्धेन शुक्तिनिष्ठप्रवृत्तिहेतुत्वेन पक्षत्वात्। अन्यथा साध्यतदभाववतः पक्षत्वेनानुमानोच्छेदः TattvCin. i. 446.1; **B** loss or destruction of inference लिङ्गस्य … तद्विज्ञानान्तरं प्रत्यक्षानुमानव्यतिरिक्तं प्रमाणमप्रमाणं वाभ्युपगम्येत। तत्र प्रमाणपक्षे तावद् दूषणमाह … एवमप्यनुमानोच्छेद एव TātpaṬ.(U.) 342.16 (*on* 5(4).155); सदनुमानेऽप्यसंसर्गाग्रहादेव संसर्गव्यवहारोपपत्तेरनुमानोच्छेदः TattvPradī.(Ci.) 64.4.

**अनुमानोच्छेदप्रसङ्ग** (anumānoccheda-prasaṅga) *m.* undesired occasion of the loss of syllogism विपर्यये तु न विपक्षतामतिवर्तते, न च क्रमद्वययोगित्वं रूपद्वयरहितत्वं वा वस्तुनः समस्तीति, तदयुक्तम् अनुमानोच्छेदप्रसङ्गात् NyāyMañ. i. 103.1; घटादिकार्यमनीश्वरेण … निर्मितं दृष्टमिति तथाविधमेव चेतनं कर्तारं साधयन्नयं कार्यत्वहेतुः … विरुद्धः स्यात्। न चैतावता सर्वानुमानोच्छेदप्रसङ्गः BrahmSūBh.(Rā.) 139.8 (*on* i. 1.3)

**अनुमानोच्छेदापादन** (anumānocchedāpādana) *n.* act of causing the loss or destruction of inference अनवस्थामपि प्रसञ्जयतामस्माकमनुमानोच्छेदापादनमभिमतम् Kāśi. iii. 90.13 (*on* 5(4).155)

**अनुमानोत्तरकालत्व** (anumānottarakāla-tva) *n.* the state of being what belongs to the period subsequent to inference तदनुमापकतया तु तद्धर्मत्वमनुमानोत्तरकालत्वान्नानुमानाङ्गम् NyāyRa. 467.17 (*on* 5(7).69)

**अनुमानोत्तरकालीनत्व** (anumānottarakālīna-tva) *n.* the state of being what belongs to the period subsequent to inference गम्यगमकत्वमेव कार्यकारणभावं मन्यते। ननु सोऽप्यनुमानोत्तरकालीनत्वादनङ्गम् TantrVā. 44.6 (*on* i. 2.26)

**अनुमानोत्थान** (anumānotthāna) *n.* emergence or rise of inference प्रपञ्चप्रतिभासस्य मिथ्यात्वात् युक्तमनुमानोत्थानम् MānaMe. 305.3.

**अनुमानोत्थानासंभव** (anumānotthānāsambhava) *m.* impossibility of the emergence or rise of inference (आभासस्य) तस्य भ्रान्तित्वे सर्वाभावप्रसङ्गादाश्रयासिद्धिः। प्रमाणत्वे चाभेदविषयेण तेन विरोधादनुमानोत्थानासंभवः VedāntKa. 270.19 (*on* ii. 2.17)

**अनुमानोत्थाप्या** (anumānotthāpyā) *adj.* (*f.*) arousable through inference त्रिविधा हि पुंसां चित्तवृत्तयः। अनुभव इच्छा प्रयत्नश्चेति।… इच्छा तु पुरुषार्थे स्वरसोत्थिता, तत्साधने तथा, अनुमानोत्थाप्या च NyāyVārPari. 37.4.

**अनुमानोत्पत्ति** (anumānotpatti) *f.* **A** rise, i.e. operation of inference संयोगसमवायैकार्थसमवायास्तु नानुमानोत्पत्तौ कारणम्। न हि कमण्डलुना च्छत्रानुमानम्। नापि रूपादेः पृथिव्यनुमानम् PrakaPañ. 20.3; धूमादिर्हि प्रमेयस्य पर्वतादेर्धर्मतयानुमानोत्पत्तेः प्रागवगतः पक्षधर्मो भवति Kāśi. iii. 153.17 (*on* 5(6).43); अनवगतेऽपि सर्वत्रान्वये एवंतश्च व्यतिरेके बहुशः साहित्यावगममात्रादेव व्यभिचारादर्शनसनाथादनुमानोत्पत्तिरङ्गीकर्तव्या NyāyRa. 388.23 (*on* 5(4).132); स्वयमनुसंहितया सामग्र्या अनुमानोत्पत्तिः स्वार्थम् TantrRaha. 11.17; **B** rise of inferential knowledge सामान्यतोऽपि संबन्धनियमावगमो भवत्येवानुमानोत्पत्तौ निमित्तम् PrakaPañ. 214.14; **C** rise or emergence of syllogism निर्विकल्पिकापि प्रतीतिः न प्राथमिकप्रतियोग्याद्यवभासमन्तरेण भेदाध्यवसायिनी प्रत्यक्षत्वात् सविकल्पकवद् इत्यप्रत्यूहमनुमानोत्पत्तेः NyāyMa. 52.7.

**अनुमानोत्पत्तिनिषेध** (anumānotpatti-niṣedha) *m.* prevention of the rise, i.e. operation of inference सामान्यविषयं प्रत्यक्षं विशेषविषयं चानुमानमित्यविरोधान्न प्रत्यक्षेणानुमानोत्पत्तिनिषेधः NyāyKa. 81.11.

**अनुमानोत्पत्तिप्रतिबन्ध** (anumānotpatti-pratibandha) *m.* obstruction to the rise, i.e. operation of inference किं भेदेऽपि सादृश्येन भेदाग्रहणादेवंविधा प्रतीतिस्ताभेदे वेति शङ्कोदयाद् बाधितविषयत्वं संदिग्धमिति नानुमानोत्पत्तिप्रतिबन्धः PrakaPañ. 213.1.

**अनुमानोत्पत्तिसामग्री** (anumānotpatti-sāmagrī) *f.* totality of causes of the rise, i.e. operation of inference अनुमानोत्पत्तिसामग्रीप्रतिपादनेनैव तत्प्रतिपादकवाक्यस्वरूपमपि सूचितमेव PrakaPañ. 220.6.

**अनुमानोत्पाद** (anumānotpāda) *m.* **A** rise of inferential knowledge यदा विभागात् पूर्वसंयोगनाशस्तदा परामर्शादवश्यंभाविपटविशिष्टेयं क्रियेत्यनुमानोत्पाद इत्येकः कालः TātpaṬ.(Vā.) 175.8 (*on* i. 1.5); **B** rise, i.e. operation of inference, cf. **अनुमानोत्पादसामग्री.**

**अनुमानोत्पादकसामग्री** (anumānotpādaka-sāmagrī) *f.* totality of causes which gives rise to (the operation of) inference द्वेधानुमानमुत्पद्यते स्वयमनुसंहितयानुमानोत्पादकसामग्र्या, परप्रयुक्तवाक्योद्बोधितया वा PrakaPañ. 220.5.

**अनुमानोत्पादसामग्री** (anumānotpāda-sāmagrī) *f.* totality of causes of the rise, i.e. operation of inference अबाधितविषयताप्यनुमानोत्पादसामग्री न च कारणाभावे कार्यमुत्पत्तुमर्हति Bhām. 452.2 (*on* ii. 2.29)

**अनुमानोदय** (anumānodaya) *m.* **A** rise, i.e. operation of inference द्रव्यत्वस्य च वह्निनिरपेक्षं सर्वत्रानुष्णत्वेन सह संबन्धनियमावधारणं जातमिति, तद्बलेनानुमानोदये … संबन्धनियमभङ्गो नात्मानं लभते PrakaPañ. 210.8; 371.8; भूतभविष्यन्त्योरपि वृष्ट्योरनुमानोदये कारणभावात् Kāśi. ii. 66.24 (*on* 5(2).115); iii. 83.28 (*on* 5(4).138); अनुमानोदयस्तु प्रवृत्तित्वसामान्यस्य फलवत्त्वसामान्येनाविनाभावात् NyāyKa. 212.20; कथंचिदेककालाश्रिततया चानुमानोदयादेककालादिसंबन्ध एककालाद्याश्रिततापि मता NayaVi. 127.5 (*on* i. 1.5); अगृहीते च देशकालाव्यभिचारे कथमनुमानोदयः NyāyRaMā. 64.22; 68.20; गृहीतविस्मृतव्याप्तेरपि पुंसोऽनुमानोदयेन व्याप्तिस्मृतेरप्यनुमितिहेतुत्वात् TarkBhā.(Ke.) 39.4; **B** rise of inferential knowledge क्षणभङ्गसाधनमेतस्याः (प्रतीतेः) बाधकमिति चेत् प्रत्यक्षबाधे सत्यबाधितविषयत्वादनुमानोदयः NyāyKa. 81.9; सिद्धमनुमानम् … तद्व्यतिरेकेणापि सुखमनुमानोदयात् Kiraṇā. 330.28; अनुमानोदयाश्च (याच्च ?)। कथमपरथा चार्वाकपरिपाटी पराक्रियेत।… अनुमानमिति प्रमाणान्तरमाश्रयणीयम् NyāyKu. 131.13; **C** rise or emergence of syllogism न च ब्रह्मशब्दवाच्यं वस्तुत्वात् घटवदित्यनुमानोदयः ŚatDū. 185.8.

**अनुमानोदयकारण** (anumānodaya-kāraṇa) *n.* cause of the rise, i.e. operation of inference संबन्धनियमस्मरणमनुमानोदयकारणम् PrakaPañ. 270.11.

**अनुमानोदयनिदानभाव** (anumānodaya-nidānabhāva) *m.* nature of being the cause of the rise, i.e. operation of inference हेतुमत्तयाप्यनवधारणेऽनुमानोदयनिदानभावासंभवात् KhaṇḍanKhā. 728.17.

**अनुमानोदयबान्धव** (anumānodaya-bāndhava) *m.* cause of (*lit.* relation to) the rise, i.e. operation of inference वास्तवं तादात्म्यं नास्ति कल्पनासमारोपितं तावदस्त्येव तदेवानुमानोदयबान्धवं समर्थितवन्तो यूयम् NyāyKa. 208.21.

**अनुमानोदयविरोध** (anumānodaya-virodha) *m.* contradiction or opposition to the rise, i.e. operation of inference वह्नावुष्णत्वप्रतीतिरन्यथा संभावयितुमशक्येति, निश्चितं बाधितविषयत्वम्। अतस्तत्र युक्त एवानुमानोदयविरोधः PrakaPañ. 213.4; न प्रत्यक्षेणानुमानोदयविरोधः PrakaPañ. 371.14.

**अनुमानोदयान्यथानुपपत्ति** (anumānodayānyathānupapatti) *f.* lack of any other alternative to the rise, i.e. operation of inference अनुमानोदयान्यथानुपपत्तिरपि नात्र भेदं साधयितुमर्हति NyāyKu. 136.14.

**अनुमानोपजीवन** (anumānopajīvana) *n.* dependence on inference अनुमानजालेन बाधिताः सर्वे एव वेदान्ताः कथमीश्वरे प्रमाणं भवेयुः। न चैषामागमबाधो वाच्यः, आगमस्यैवानुमानोपजीवने … बाध्यत्वात् NyāyKu. 87.20.

**अनुमानोपजीविन्** (anumānopajīv-in) *adj.* depending on infe-

rence आगमस्यैवानुमानोपजीवने( विनो ) बाध्यत्वात् NyāyKu. 87.20.

**अनुमानोपजीव्य** (anumānopajīvya) *adj.* (used as noun) that on which inference depends, i.e. cause conducive to inference पर्वतेतरत्वादीनामपि व्याप्तिरस्ति चेत्। अनुमानोपजीव्येन बाधादव्याप्तौ स्वयं दुष्टत्वात् TattvPrakā. 54B.11 (*on* i. 3.28)

**अनुमानोपजीव्यत्व** (anumānopajīvya-tva) *n.* the state of being that on which inference depends, i.e. being the cause conducive to inference प्रत्यक्षाभावेनानुमानस्याप्यभावः सिद्ध एव। प्रत्यक्षस्यानुमानोपजीव्यत्वात् NyāySu.(Ja.) 402A.7 (*on* ii. 2.8)

**अनुमानोपदेशकौशल** (anumānopadeśa-kauśala) *n.* skill in instruction about the (employment of) syllogism सांख्यार्हतानां तावत्क्षपणकानां कीदृशमनुमानोपदेशकौशलं क्रियदेव तत्तेन वेदप्रामाण्यं रक्ष्यते NyāyMañ. i. 4.13.

**अनुमानोपदेशसाध्य** (anumānopadeśa-sādhya) *adj.* to be acquired through the statement, i.e. employment of syllogism रागद्वेषाभ्यां चेष्टानिष्टसाधनत्वज्ञानम्। ·· न च तज्ज्ञानं प्रत्यक्षसाध्यम्।··· किंत्वनुमानोपदेशसाध्यमेव NyāySu.(Ja.) 490B.5 (*on* iii. 2.1)

**अनुमानोपन्यास** (anumānopanyāsa) *m.* **A** mention, i.e. exposition of inference (as a means of knowledge) परस्यापि प्रतिपत्तौ प्रत्यक्षमेव प्रमाणम् – इति मतम्, अनुमानोपन्यासोऽनर्थकः Bṛha. 227.7 (*on* i. 1.5); यद्यपि ··· अनुमानादीनामीदृशेऽप्यर्थेष्वसामर्थ्यं स्थापितं तथापि वेदार्थनिर्णये तेषां कारणत्वानिषेधात् तदर्थनिर्णयार्थमनुमानोपन्यासः TantrVā. 545.16 (*on* ii. 2.25); आगमैकविषयो धर्माधर्मयोरनुमानोपन्यासो न युक्तः NyāyRa. 120.18 (*on* 2.242); श्रुतावनुमानोपन्यासस्य गतिः ··· प्रदर्शितैव ŚivārkaMaDī. i. 192.23 (*on* i. 1.5); **B** statement, i.e. employment of syllogism (हेतुः) अनैकान्तिकत्वादिदोषाणामनुमानगम्य एवायमर्थो न भवति। अतोऽत्रानुमानोपन्यासो वृथैव कृतः Śarka. 77.17; इन्द्रियाणि प्रपञ्चमात्रं गृह्णन्ति न तत्कारणम्। यदि तद्ग्रहणमपि स्यान्नानुमानोपन्यासेन कृत्यमस्ति PañcPā. 80.20 (*on* i. 2.2); कुतश्च ज्ञानमतीन्द्रियम्, इन्द्रियेणानुपलभ्यमानत्वादिति चेत्। न। अनुमानोपन्यासे( न पक्षे ) साध्याविशिष्टत्वात् NyāyKuA. ii(2). 16.7.

**अनुमानोपन्यासपर** (anumānopanyāsa-para) *adj.* intended for the exposition of inference (as a means of knowledge) नेदं भाष्यमाकाशसद्भावे प्रत्यक्षप्रमाणोपन्यासपरं नाप्यनुमानोपन्यासपरम् ŚivārkaMaDī. ii. 87.17 (*on* ii. 2.23)

**अनुमानोपन्यासार्थम्** (anumānopanyāsārtham) *adv.* for the sake of the statement, i.e. employment of syllogism जन्मादिसूत्रं नानुमानोपन्यासार्थम् BrahmSūBh.(Śaṅ.) 12.15 (*on* i. 1.2); ब्रह्मणः सिद्धवस्तुत्वेन घटादिवन्मानान्तरगोचरत्वात् जन्मादिसूत्रमनुमानोपन्यासार्थमेव VivaPraSaṁ. 271.15.

**अनुमानोपपत्ति** (anumānopapatti) *f.* **1A** tenability of syllogism अर्थस्तु विषय एवेति नानुमानोपपत्तिः NyāyRa. 120.11 (*on* 2.240); **1B** tenability of (being the object of) inferential knowledge स्मृतौ विपरिवर्तमानस्य बहिर्देशविशिष्टतयानुमानोपपत्तेः NyāyRa. 455.9 (*on* 5(7).18); सौषुप्तिकज्ञानाभावानुमानेऽपि कानुपपत्तिः। पक्षाप्रतीतेर्नेति चेन्न। तस्याप्यनुमानोपपत्तेः NyāySu.(Ja.) 63B.9 (*on* i. 1.1); **2** name of a subsection in the Advaitasiddhi (*lit.* tenability of inference) अथ अज्ञानवादे अनुमानोपपत्तिः LaCandr. 567.29.

**अनुमानोपमा** (anumānopamā) *f.* similarity (of the Veda) with inference यथार्थापत्तिरेवं नानुमानोपमेष्यते ŚlokaVār. 4.110 (167.7)

**अनुमानोपमानसंबन्धिन्** (anumānopamāna-sambandhin) *adj.* referring to inference and analogy अनुमानोपमानसंबन्धिप्रयोगद्वयमाह TātpaṬ.(U.) 144.21 (*on* 4.99)

**अनुमानोपयुक्त** (anumānopayukta) *adj.* useful for inference (शब्दस्वभावोपन्यासस्यानुमाने अनुपयोगात्) उक्तशब्दस्वभावोपन्यासो नानुमानोपयुक्तः LaCandr. 408.40.

**अनुमानोपयोगिन्** (anumānopayogin) *adj.* useful for inference न ··· संबन्धः सत्तामात्रोपयोगीति वाच्यम् ···। तस्मान्नाननुभूतः स्वलक्षणसंबन्धोऽनुमानोपयोगी Śarka. 12.18; (द्वितीयलिङ्गदर्शनम्) न च तदनुमानोपयोगि तस्मादुपनयार्थो न द्वितीयलिङ्गदर्शनविषयः Kiraṇā. 297.10.

**अनुमानोपायभूत** (anumānopāyabhūta) *adj.* which has become a means of syllogism पक्षहेतुदृष्टान्ता अनुमानोपायभूताः परस्परं भिन्ना अभिन्ना वा SyādvāMañ. 13(148)

**अनुमान्तर्गत** (anumāntargata) *adj.* included in the inference अर्थापत्त्युपमाभावा अनुमान्तर्गताः क्वचित् AnuVyā. 39B.2 (*on* iii. 2.1)

**अनुमान्य** (anumān-ya) *ger.* **1A** having praised or honoured **B** having requested **Ci** having consented (to give in marriage) **ii** having allowed, approved or assented **iii** having permitted (to leave) **D** having considered or accepted **2Ai** having made to consent, having asked for consent **ii** having made to permit, having asked for permission (to leave) **iii** having made to permit, having asked for permission (to do something) **B** having made to agree **1A** having praised or honoured पशुना यक्ष्यमाणः ···। प्रोक्ष्यानुमान्योपपाद्य ··· प्रक्रममाणमन्वारभन्ते MānGS. ii. 4.3 (comm. (Add) प्रोक्षणमनुमानयति स्तौतीत्यर्थः); (दशम्याम्) ब्रह्मणे चाहुतिं पूर्वं, पितॄननुमान्य च तदहरेव नामकरणं कुर्यात् ŚaṅkhaLiDS. 21; जनमेजयः। पूजयामास तमृषिमनुमान्य पुनः पुनः MahāBhā. xv. 43.17; संपूज्य गरुडं वासुदेवोऽनुमान्य च। सखिवच्चोपगृह्यैनमनुजज्ञे गृहं प्रति HariVaṁ. 95.1; 115.14; आचार्यं यथाशक्ति अनुमान्य तोषयित्वा स्वगृहं प्रति परावर्त्यागच्छति BālamBhā. ii. 292.31 (*on* 2.184); **1B** having requested (नान्दीश्राद्धे) ब्राह्मणान् भोजयेत् ··· उच्छिष्टं शोधयित्वाचान्ताननुमान्य पुण्याहं वाचयित्वा ··· प्रतिसरां बध्नाति VaikhāGS. 2.2; धृतराष्ट्रस्ततो भीष्ममनुमान्य प्रसाद्य च।··· अब्रवीत् MahāBhā. v. 21 18; अनुमान्य द्विजान् सर्वान्पुनः पुनरुदारधीः। ·· मातुर्मते स्थितो विद्वान् जयां प्राह गणेश्वरः BrahmP. 74.56; **1Ci** having consented (to give in marriage) वाचानुमान्याग्निकार्यं स्वयं कृत्वा यत्कन्यामर्हयित्वा दद्यात् स प्राजापत्यो भवति VaikhāGS. 3.1; **1Cii** having allowed, approved or assented तद्वचनं श्रुत्वा राज्ञस्तमनुमान्य च। संजयो बाढमित्युक्त्वा प्राद्रवत्काम्यकं वनम् MahāBhā. iii. 7.10; कुमारस्तान् वृद्धान् जाम्बवत्प्रमुखान् कपीन्। अनुमान्य ददौ तेषां निसर्गं (v.l. विसर्गं) मधुभक्षणे Rāmā. v. 59.12; अहं तु सत्रपा यदि मा दा (स्व ? स्य) मेवाचरन्तीमिच्छस्यवस्थितास्मि त्वदादेश इत्यनुमान्य (त ?) तदनुगता AvantiKa. 188.11; तद्वाक्यमोमिति पुरंदरसूनुसूनोः न्यूनातिरेकरहितं मुदितोऽनुमान्य।··· आपृच्छ्य स प्लवगवर्गमगात् RāmC. 14.119; पुरा सुराणामनुमान्य भद्रे नेतीति वाणी न सुखं ममैति BrahmP. 110.32; 123.30; तदम्बां च यथादेशकारिणीमनुमान्य च। पूर्णचन्द्रम् ··· प्रभवः समदीक्षयन् PrabhāC. 172.5; **1Ciii** having permitted (to leave) प्रकृतीनां तु तद् वाक्यम् ···। श्रुत्वा युधिष्ठिरो राजाथोत्तरं प्रत्यभाषत।··· अनुगम्य (v.l. अनुमान्य) च राजानं यथेष्टं गम्यतामिति MahāBhā. xii. 41.8; ततोऽनुमान्य नृपतीन् निजराज्याय सानुगान्। अनुजज्ञे नरपतिः समस्ताननुयायिनः BrahmāṇḍP. ii. 49.8; **1D** having considered or accepted मध्येऽभवत्तदा ब्रह्मा ···। महेश्वरोऽनुमान्यैव तमयोजयत् SkandP. v(1.) 2.8; (कृष्णः) संतोष्य मालाकारमनुमान्य च तदीयसन्मानम् ··· मधुरामधिवसति स्म ĀnandRa. 1.30(10); **2Ai** having made to consent, having asked for consent प्रयच्छन्त्यपरे कन्यां मिथुनेन गवामपि।··· बलेनान्येऽनुमान्य च MahāBhā. i. 95.9; अनुमान्य तदा तारां सुग्रीवेण समागतः। निजघान च तत्रैनं शरेणैकेन राघवः Rāmā. i. 103*(1); सोऽहं विश्रमनिच्छामि पुत्रं कृत्वा प्रजाहिते। ··· अनुमान्य द्विजर्षभान् Rāmā. ii. 2.8; ArthŚā. iii. 192.3 (13.3); अनुमान्य ··· कथमप्यवशं श्वशुरं शठः। तं दुहित्रेकसंतानं गृहीत्वा ताम् ···। सः ··· प्रस्थितवान् KathāSaSāg. xii. 10.24; **2Aii** having made to permit, having asked for permission (to leave) अनुमान्य च गाङ्गेयम् ··· युद्धाय निर्जग्मुः क्षत्रियाः MahāBhā. vii. 1.17;; अनुमान्य वसिष्ठम् ··· महामात्यः प्रययौ Rāmā. i. 10.13; गृहीतशिल्पः समये कृत्वाचार्यप्रदक्षिणाम्।··· अनुमान्यैनमन्तेवासी निवर्तते NāraSm 144.20 (comm. अनुज्ञां वाच्य); सोऽनुमान्य हिमवन्तमात्मभूः ···। तत्र तत्र विजहार KumāSaṁ 8.21; देवाः ··· जग्मुः ··· अनुमान्य तपस्विनीम् MārkP. 16.90; AvantiKa. 191.7; मुनयः ···। भगवन्तम् ··· प्रणिपत्यानुमान्य च। प्रतिजग्मुः BhāgP. iii. 16.28; भगवन्तं प्रणम्याथ राजानमनुमान्य च। शतमन्युस्तिरोऽधत्त TriṣaŚaPuC. i. 6.222; **2Aiii** having made to permit, having asked for permission (to do something) अर्जुनः ···। विव्याध च रणे द्रोणमनुमान्य MahāBhā. vii. 66.10; अभिवाद्य पितामहम्। अनुमान्य गुरून् सर्वान् पर्यपृच्छद् युधिष्ठिरः MahāBhā. xii. 56.1; तान् हरिवृद्धान् ···। अनुमान्याङ्गदः ··· अब्रवीत् Rāmā. iv. 63.15; यदि शुद्धसमाचारा (सीता) ···। करोत्विहात्मनः शुद्धिमनुमान्य महामुनिम् Rāmā. vii. 95.4; अनुमान्य महादेवं प्रजानां पतयस्तदा। ऊचुर्दक्षम् VāyuP. i. 25.88; पित्रोराराधनं कार्यम् ···। अनुमान्य द्विजान् पूर्वमग्नौ कुर्याद् यथाविधि BrahmāṇḍP. ii. 19.47; अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य च। तदन्नं विकिरेद् भूमौ YājñaSm. 1.241; सोऽनुमान्य निजावासेऽनैषीत् सगरचक्रिणम् TriṣaŚaPuC. ii. 4.332; (दानवाः) अनुमान्य योधमुख्यान्, आमन्त्र्य गुरुजनम् ··· बोधयामासुः ··· अमृताशनान् NīlaVi. 15.14; **2B** having made to agree अनुमान्य रणे भीष्मं शस्त्रं न्यासय भारत MahāBhā. vi. 93.12; स ममाहारसंरोधात् पीडितः ···। अनुमान्य ··· अब्रवीत् Rāmā. iv. 58.12.

**¹अनुमान्य** (anu-mānya) *adj.* **1** to be respected अनुमान्यं च

पाल्यं च भक्तं च भज मां विभो MahāBhā. v. 52*(2); अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धः MahāBhā. xiii. 107.46; अनुमान्यः प्रसाद्यश्च शुल्कदो देववत् BhaviP. 766A.10 (iv. 111.25); PadmP. v. 23.107; **2A** to be accepted पुत्रस्यानृतमप्येतदनु- मान्यं त्वया मम PadmP.(Ra.) 11.61; EI. i. 188.15; **2B** to be approved यदि मूढत्वं न त्यजेत् कोऽपि सर्वथा। मिश्रत्वेनानुमान्योऽसौ YaśasCam. ii. 282.23.

²**अनुमान्य** (anumān-ya) *adj.* to be inferred आत्मप्रत्ययकारी सारनूनं (न लूनं ?) चापि(प्य ?) हेतुकम्। भावग्राह्यमनुमान्यं चिन्तयन्न प्रमुह्यते VāyuP. ii. 40.119.

**अनुमान्यता** (anu-mānyatā) *f.* subsequent permission परि- ग्रहपरित्यागो भुक्तिमात्रानुमान्यता। तद्धानौ च वदन्त्येतानि YaśasCam. ii. 410.13.

**अनुमान्या** (anumānyā) *f.* name of one of the four types of alms what is to be accepted अनुमान्या समुद्देश्य(?श्या) त्रिशुद्धा भ्रामरी तथा। भिक्षा चतुर्विधा ज्ञेया YaśasCam. ii. 413.7.

**अनुमापक** (anu-māpaka) *adj.* [*f.* -ikā] **1A** (*linga* or *lingajñāna*) which causes or leads to inferential knowledge यदनुमेयेन संबद्धं प्रसिद्धं च तदन्विते। तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् PadārthaSaṁ. 200.20 (NyāyKa. अनुमेयस्य ज्ञापकम्); (प्राग्गोगतं हि सादृश्यं न) धर्मित्वेन गृह्यते। गवये गृह्यमाणं च न गवामनुमापकम् TattvSaṁ. 1540; ŚlokaVār. 5(6).44 (447.1); न वानुमानमन्यस्मिन्नष्टकाश्रुतिकल्पने। न हि स्मृतिस्तया व्याप्ता दृष्टान्यद् वानुमापकम् TantrVā. 70.9 (*on* i. 3.1); भूतं वर्षणकर्माभूतस्य वाय्वभ्रसंयोगस्यानु- मापकम् PrakaPañ. 202.6; सर्वभूतेषु लक्षितः स्वात्मना हरिः। दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः BhāgP. ii. 2.35; अन्तरङ्गशुद्धरूपानुमापकबहिरङ्गशुद्धरूपत्वात् रूपविशिष्टम् TattvPradī.(A.) 276.3 (*on* 3.3); एकदेशदर्शनं खलु अनुमापकं न त्वनेकदेशदर्शनम् Bhām. 17.19 (*on* i. 1.1); स्थूलं विभक्तमविभागस्यानुमापकं लिङ्गमस्ति NyāyRa. 82.7 (*on* 2.118); 350.3 (*on* 5(4).12); 467.18 (*on* 5(7).70); अहंकारादीनि लिङ्गान्यात्मनोऽनुमापकानि दृश्यन्ते Aparā. 1013.11 (*on* 3.174); कारणं कार्यस्यानुमापकमित्यनिष्टमापद्येत PramāMī. 45.1 (*on* i. 2.12); प्रतिक्षणमुत्पत्तौ सत्यां युगपदनेकदीपानुपलम्भात् विनाशोऽपि सिद्धः। प्रतिक्षण- विनाशस्य पृथगनुमापकमुच्यते ŚrutaPra. iA. 153.20 (*on* i. 1.1); भावभेदप्रयुक्ता तु चेष्टा (शब्दस्य) तस्यानुमापिका NyāyKu. 8.18; 9.4; पर्वतगतमात्रस्य पुंसो यद् धूमज्ञानं तत् कथं नाग्नेरनुमापकम् TarkBhā.(Ke.) 39.2; स्मृत्युक्तम् … अस्यार्थस्यानुमापकं भवति TattvPrakā. 39A.2 (*on* i. 2.25); NyāySu.(Ja.) 162A.6 (*on* i. 2.2); अस्मदादिविशिष्टानां लिङ्गमनुमापकम् Upask. 94.7 (*on* ii. 1.19); (पदार्थस्य) बुद्ध्याकारोऽनुमापकः SarvaDaKau. 4.14; अनुमानमनुमापकं निश्चायकं स्यात् VedāntKau. 71.19 (*on* i. 2.26); (लौकिकं पदम्) न हि धूम- वदविनाभावबलेनैवानुमापकम् TantrRaha. 37.22; न लौकिकम् … प्रत्यक्षं बाधते लिङ्गं मिथ्यात्वस्यानुमापकम् AdvaiSi. 351.5; यागस्यानुमापकम् … लिङ्गं प्रामाणि- कम् ŚivārkaMaDī. i. 31.16 (*on* i. 1.1); सत्यपि स्मरणरूपेऽनुमापके न मूल- श्रुत्यनुमित्युदयः MīmāKau. i. 14.16 (*on* i. 3.3); अनुमापक एव ज्ञापकं तृतीयां विधाय धूमेनाग्निमानित्युदाहृतम् GuruCandr. i. 367.10; पुरुषवचनानि तु वक्त्रभि- प्रायानुमापकान्येव MānaMe. 103.3; कर्त्रधिष्ठितानामेव करणत्वात्तस्य लिङ्गमनुमाप- कम् LaŚabdeŚe. ii. 345.2; तस्य (शब्दसाधुत्वस्य) च शिष्टप्रयोगकोशव्याकरणाद्यनु- मापकम् VaiyāSiMañ. 76.20; **1B** which causes or leads to inference, cf. **अनुविधेयपुरुषाभिप्रायानुमापक**; **2** which causes or leads to conjecture or guess विध्यादावपि वाच्ये सिंहसद्भावादि निषेधादेरनुमापकम्। न तु व्यञ्जकम् Kāvyānu.(He.) 35.25; मुखरागं मनोवृत्तेर्दारौज्ज्वल्यं गृहश्रियः। भर्तुः स्वभावस्या- चारो योषितामनुमापकः RājTa.(Ka.) 8.3183; विकृतयः … भङ्गस्यानुमापिकाः VīraMi. 423.2 (*on* 2.16); **3** which indicates or marks (as a sign) प्रयोजनभूतं कारणभूताया योगसिद्धेर्लक्षणमनुमापकम् VīraMi. 903.2 (*on* 3.203)

**अनुमापकता** (anumāpaka-tā) *f.* the state of being that which causes or leads to inferential knowledge लिङ्गस्यानुमापकतयार्थबोधकत्वात् TattvPrakā. 52A.11 (*on* i. 3.24); (ब्रह्मणि … हेतुं प्रति व्यावर्तकतया … परमार्थसत्त्वं क्लृप्तम्) व्यावर्तकतया अनुमापकतया LaCandr. 404.27.

**अनुमापकत्व** (anumāpaka-tva) *n.* **1** the state of being that which causes or leads to inferential knowledge न ह्यत्र व्यवस्थामुपलभामहे। सर्वेषामप्यनुमापकत्वात् Kāśi. iii. 11.8 (*on* 5(4).10); संभवति साहित्यावगमः, तस्मिंश्च सति व्यतिरेकादर्शनात् सिध्यत्यनुमापकत्वम् NyāyRa. 461.10 (*on* 5(7).42); व्याप्तिबलेन पक्षे प्रसज्यमानानां येषां प्रमाणान्तरेण न प्रतिहतिर्भवति, तेषामेवानुमापकत्वाल्लिङ्गस्य NītiMā. 11.7; श्रुतेरनुमापकत्वात् स्मृतिर्लिङ्गशब्देनोच्यते ŚrutaPra. ii. 557.28 (*on* iii. 4.39); iA. 179.2 (*on* i. 1.1); अनुमापकत्वाद् धूमोऽग्नेर्लिङ्गम् TarkBhā.(Ke.) 37.1; तस्य (फलस्य) पक्षासंबन्धिनोऽनुमापकत्वं कथम् NyāySu.(Ja.) 108A.1 (*on* i. 1.3); (दृश्यते) संराधकस्य स्वानुभवो ध्रुवादीनामनुमापकत्वम् AṇuBh. 197.4 (*on* iii. 2.24); स्थूलसूक्ष्मधूमयोर्वह्न्यनु- मापकत्वे विशेषाभावात् MayūMāli. 235.13 (*on* iii. 3.3); **2** the state of being that which causes or leads to conjecture or guess अनुभावस्तु स्वनिष्ठ एव गमकः। तस्यानुमापकत्वेन पक्षवृत्तित्वादिनियमात् RasTa. 40.1.

**अनुमापकत्वव्यापार** (anumāpakatva-vyāpāra) *m.* operation of the state of being that which causes or leads to conjecture or guess तस्यैव शब्दस्य व्याप्तिस्मृत्यादिसहकृतस्य विवक्षावगतावनुमापकत्वव्यापारः Loc. 18.16 (*on* 1.4)

**अनुमापकत्वाङ्गीकार** (anumāpakatvāṅgīkāra) *m.* acceptance of the state of being that which causes or leads to inferential know- ledge स्मृत्यन्तरस्यानुमापकत्वाङ्गीकारे अनवस्थानादन्धपरंपरापत्तिः MīmāKau. i. 4.17 (*on* i. 3.1)

**अनुमापकत्वाभाव** (anumāpakatvābhāva) *m.* absence of the state of being that which causes inferential knowledge केवलान्वयि- व्यतिरेकिहेत्वोः पञ्चरूपोपपन्नत्वाभावेनानुमापकत्वाभावात् BhāṭṭCin. i. 24.25 (*on* i. 1.4)

**अनुमापकत्वोदाहरण** (anumāpakatvodāharaṇa) *n.* example of the state of being that which causes inferential knowledge नापि रूपाद्रसानुमानम्। यच्च विरुद्धस्यानुमापकत्वोदाहरणम्। यथाभूतं वर्षणकर्माभूतस्य वाय्वभ्रसंयोगस्यानुमापकम् PrakaPañ. 202.5.

**अनुमापकपूषसंबन्ध** (anumāpaka-pūṣasambandha) *m.* correla- tion, i. e. invariable concomitance of (the word) *pūṣan* (with its meaning 'deity Pūṣan') which causes inferential knowledge अनु- मापकपूषसंबन्धेन प्रसिद्धपूषदेवत्ययागत्वोपस्थितिरपि सुलभैव BhāṭṭDī. i. 283.10 (*on* iii. 3.13)

**अनुमापकभूयस्त्व** (anumāpaka-bhūyastva) *n.* abundance of that which causes inferential knowledge न चानुमापकभूयस्त्वमनुमितावु- पयुज्यते MayūMāli. 235.13 (*on* iii. 3.3)

**अनुमापकरूपोपलक्षण** (anumāpakarūpopalakṣaṇa) *n.* adventi- tious qualifier in the form of that which causes inferential know- ledge अनुमापकरूपोपलक्षण एव तृतीया उक्तसूत्रेण विधीयते GuruCandr. i. 367.7.

**अनुमापकलिङ्ग** (anumāpaka-linga) *n.* reasoning or probans which causes inferential knowledge न ह्यनुमापकलिङ्गसंभवे सत्यसदिति शक्यं वक्तुम् BālaKrī. i. 21.5 (*on* 1.7)

**अनुमापकानुमेयविभाग** (anumāpakānumeya-vibhāga) *m.* dis- tinction between that which causes inferential knowledge and the object of inferential knowledge प्रतिबिम्बप्रतिभासस्य सत्यस्यैवानुमापकत्वात्। परमार्थतस्तु तत्र नानुमापकानुमेयविभागः ŚrutaPra. iA. 173.21 (*on* i. 1.1)

**अनुमापत्ति** (anumāpatti) *f.* undesired contingency of becoming an inference अस्तु वा जीवतो गृहाभावस्य बहिर्भावं विनानुपपत्तिः, सा तु व्याप्तित एवेत्यनुमापत्तिः NayaVi. 154.7 (*on* i. 1.5)

**अनुमापयत्** (anu-māpayat) *adj.* [*f.* -ntī] **1** causing to infer, leading to inference श्रुतिमनुमापयदस्य वैश्वानरशब्दस्य परमेश्वरपरत्वे अनुमानं लिङ्गं गमकं स्यात् BrahmSūBh.(Śaṅ.) 133.10 (*on* i. 2.25); स स्वकारणं पूर्वरूपक्षणमनुमापयन् यादृशा तेन जनितस्तादृशमेवानुमापयति TātpaṬ.(Vā.) 162.3 (*on* i. 1.5); अनित्यत्वं कृतकतामनुमापयदपि व्याप्यरूपेणानुमापकं न व्यापकरूपेण NyāyRa. 349.12 (*on* 5(4).8); मूलभूतवेदमनुमापयन्त्यः स्मृतयः प्रमाणम् VedāntKa. 232.4 (*on* ii. 1.3); चोदकवाक्यमनुमापयता लिङ्गेन धर्मविशेषा नियम्यन्ते NyāyMāVi. 395.3 (*on* viii. 1.2); स्मृत्यादयस्तु श्रुतिमनुमापयन्तोऽपि तामननुगृह्णन्त एव धर्मे प्रमाणम् VīraMi. 21.14 (*on* 1.7); स्मृतिवाक्यं हि कार्यतया स्वकारणमनुमापयत् वाक्यरचनायामर्थज्ञानं कारणम् MayūMāli. 19.2B (*on* i. 3.1); **2** causing to conjecture or guess (विभावानुभावव्यभि- चारिणः) रत्यादीनां भावानां कारणकार्यसहकारिभूतास्ताननुमापयन्त एव रसादीन् निष्पादयन्ति VyaktiVi. 119.9; त्रिवलिलेखाभिरप्रत्यक्षदर्शनमुदरदेशमिवानुमापय- न्तीभिः … विलासिनीभिः समाकुलम् … तिलकमञ्जरीमन्दिरमपश्यम् TilaMañ. 371.15; दृष्टवती चान्यतो गैरिकरागलोहितमृदा रक्तपातमनुमापयन्तम् … दशकण्ठ- सूनोरक्षस्य वधप्रवेशं क्रीडागिरेः परिसरम् UdaySuKa. 110.2; **3** making, i.e. assisting to assume ownership deed भुक्तिः … स्वत्वहेतुभूतक्रियादिक- मव्यभिचारादनुमापयन्ती … प्रमाणमेव Mitā. 147.5 (*on* 2.22)

**अनुमापयितुम्** (anu-māpayitum) *inf.* **1** to cause to infer, to lead to inference लिङ्गं फलस्य … स्वरूपसत्तामात्रमनुमापयितुमुत्सहते NyāyMañ. i. 155.26; न च तटस्थरजतस्मृतिः इदंकारास्पदस्योपकारहेतुभावमनुमापयितुमर्हति Bhām. 17.18 (*on* i.1.1); स्थायिनोऽपि भावस्य क्रमेणार्थक्रियाकारणमिति विपक्षे

बाधकप्रमाणाभावादनियता क्षणिकत्वेन सत्ता नालं तदनुमापयितुम् ŚāstrDī. 145.6 (*on* i. 1.6); **2** to cause or lead to conjecture धूमो हि वह्नेरात्मज इति कृत्वा आत्मनो जनकमेनमनुमापयितुमीष्टे Ekāva. 1.13(80) (35.3)

**अनुमापित** (anu-māpita) *adj.* **1** caused to infer (आत्मा) फलेन व्यक्तेन … विप्रतिपन्नं प्रत्यनुमापितः TattvVai. 47.17 (*on* 1.43); विवेकेनानुमापितौ प्रकृतिपुरुषौ SāṁkhyaPraBh. 52.17 (*on* 1.107); 1.33 (*on* 1.0); **2** caused to conjecture or guess गन्धानि(त्?) कुसुमानि तेभ्यः पादपाः, तेभ्योऽपि मार्गमनुमापितम् AbhinBhā. iii. 50.8 (*on* 19.85)

**अनुमापूर्विका** (anumāpūrv-ikā) *adj.* (*f.*) preceded by inference प्रत्यभिज्ञया पूर्वस्थितेऽर्थे अकृतान्तरसाधर्म्यबाधान्नियतविषयतानुमा, प्रत्यक्षपूर्विकानुमापूर्विकाया बलीयसी NayaVi. 235.6 (*on* i. 1.7)

**अनुमाप्तोक्त्यादि** (anumāptokty-ādi) *adj.* inference, speech of a trustworthy person, etc. न च भानानिवृत्तेर्भेदस्याबाधिका अनुमा, अनुमाप्तोक्त्यादिबाधितभेदस्यापि द्विचन्द्रादेर्भेदस्फुरणदृष्टेः IṣṭaSi. 344.19.

**अनुमाप्रतिभास** (anumā-pratibhāsa) *m.* appearance in inferential knowledge अनुमाप्रतिभासेन स्पष्टः साधारणोऽप्ययम् । स्पष्टं हुताशनादीनां रूपं तेन समं न हि TattvSaṁ. 2056.

**अनुमाफललोपन** (anumāphala-lopana) *n.* loss or cessation of the fruit of inference (तद्व्याप्तिग्राहकं प्रमाणम्) नार्थापत्तिरनन्यत्वादनुमाफललोपनात् TattvPradī.(Ci.) 244.4.

**अनुमाबल** (anumā-bala) *n.* [Abl.] on account of the force of inference अन्यः प्रमान्तरास्तित्वं साधयत्यनुमाबलात् TattvSaṁ. 1584.

**अनुमाबाध** (anumā-bādha) *m.* contradiction through inference न च क्षणिकेऽपि शब्दे … अभेदभ्रमादर्थधीरित्येवमपि परार्थमुच्चारणमितीतरयापि हेतुसिद्धिरिति, यतस्तद्ग्रहे न प्रत्यक्षबाधो नानुमाबाध इत्युक्तम् NayaVi. 243.5 (*on* i. 1.8)

**अनुमाभासता** (anumābhāsa-tā) *f.* the state of being misapprehension of inferential knowledge 'तिक्तः' इत्यनुमाभासता पश्चाद्बाधात् NayaVi. 274.3 (*on* i. 1.25)

**अनुमाभासोदय** (anumābhāsodaya) *m.* rise or emergence of misapprehension of inferential knowledge 'तिक्तः' इत्यनुमाभासता पश्चाद्बाधात्, न तु प्रत्यक्षबाधितेऽनुमाभासोदयः NayaVi. 274.3 (*on* i. 1.25)

**अनुमाभिन्न** (anumā-bhinna) *adj.* different from the inference अन्यः प्रमान्तरास्तित्वं साधयत्यनुमाबलात् । प्रत्यक्षमनुमाभिन्नप्रमाणान्तरसंगतम् TāttvSaṁ. 1584.

**अनुमामात्र** (anumā-mātra) *n.* mere inference व्यापकनिवृत्तिव्याप्याभावयोः पूर्वबुद्ध्योर्न व्याप्तिधीरिति नानुमामात्रादभावधीः NayaVi. 167.4 (*on* i. 1.5)

**अनुमामात्रमानक** (anumāmātramāna-ka) *adj.* who has, i.e. admits inference alone as the means of valid knowledge यथेत्युक्ते वदेत् किं स योऽनुमामात्रमानकः AnuVyā. 69A.7 (*on* 4.2)

**अनुमामानिन्** (anumā-mānin) *adj.* who thinks highly of, i.e. who recognises inference (alone) ब्रह्मणोऽन्यत आधिक्ययुक्तः कालो विवादवान् । कालो ह्ययं यथेत्यादि मानुमामानिनो भवेत् AnuVyā. 58A.10 (*on* 3.4); अनुमामानिनोऽनुमायां बहुमानवतः NyāySu.(Ja.) 585A.4 (*on* iii. 4.5)

**अनुमाय** (anumā-ya) *ger.* **1** having inferred, having known through inference नैवेदमादित्यगत्यनुमानं साक्षात् किं तर्हि देशान्तरप्राप्तिमनुमाय तया गत्यनुमानमित्यदोषः NyāyVār. 51.2 (*on* i. 1.5); एकस्मिन् विज्ञानेऽर्थग्रहणोत्तरकालं प्रामाण्यमवगम्य ज्ञानान्तरे तथाविधकारणदर्शनात् प्रामाण्यमनुमाय ततः प्रवर्तत इति चेन्न TātpaṬ.(U.) 56.21 (*on* 2.49); प्रवर्तकोत्थाननिबन्धने ततः समीरितोपायविशेषवस्तुनि । गिरोऽनुमाय प्रतिपत्तिहेतुतां विशेषसिद्धौ तु समीहते पुनः SaṁkṣeŚā. 1.366 (i. 271.4); 1.496 (i. 357.18); कथम् … वाक्यानां प्रवृत्तिसामर्थ्यात् प्रामाण्यमनुमाय … तत्प्रणीतानां वाक्यानामप्रामाण्ये कारणाभावात् प्रामाण्यमनुमीयते NyāySā. 29.6; बालः प्रयोज्यवृद्धस्य विशिष्टार्थव्यवहारदर्शनेन तद्विषयां बुद्धिमनुमाय शब्दानन्तरभावितया शब्दकारणतां तावदवधारयति Kāśi. iii. 225.24 (*on* 5(10).12-13½); आप्तवाक्यान्मानान्तरं वाक्यार्थविषयमनुमाय मानान्तरवेद्यार्थतां पश्यतां न मानान्तरवेद्यत्वेऽपि शक्तिधीः NayaVi. 81.10 (*on* i.1.5); रजतत्वं समारोप्य तज्जातीयस्योपकारहेतुभावमनुचिन्त्य तज्जातीयतयेदंकारास्पदे रजते तमनुमाय तदर्थी प्रवर्तते इत्यानुपूर्व्यं सिद्धम् Bhām. 17.16 (*on* i. 1.0); 82.23 (*on* i. 1.4); अनुमाय खल्वयं तथाभावं तदुपादित्सुः समीहमानस्तदुपादत्ते TātpaṬ. (Vā.) 102.24 (*on* i. 1.3); प्रवृत्तिकार्यसंदर्शनादेव हि प्रवर्तकबोधमनुमाय … तत्र शब्दशक्तिं बालाः समाकलयन्ति NyāyMa. 179.10; शब्देन कर्तव्यता प्रतीयत इति चेन्न … शिष्टाचारत्वेनैव कर्तव्यतामनुमाय तया मूलशब्दानुमानम् NyāyKuA. i. 130.1; 'देवदत्त गामानय' इत्याद्युत्तमवृद्धवाक्यप्रयोगाद्देशाद्देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति … तच्चेष्टयानुमाय … बालस्तत्र व्युत्पद्यते KāvyPra. 221.3; लिङादियुक्तेषु वाक्येषु बालः प्रयोज्यपुरुषस्य प्रवृत्तिदर्शनात् प्रवृत्तिहेतुविज्ञानमनुमाय तत्र च शब्दसमूहस्य शक्तिमवधारयति NītiMā. 58.18; MayūMāli. 447.7 (*on* vi. 1.1); व्यवहारमात्रस्य … श्रोतुः प्रवृत्त्यापि संसृष्टप्रत्ययमनुमाय संगतिसंवेदनासंभवेन वेदप्रामाण्योच्छेदप्रसङ्गात् PrakaVi. 8.22; बालेन स्वस्यैकस्मृत्यारूढवर्णानां मध्यमवृद्धं प्रत्येकार्थधीहेतुतामनुमायैकपदत्वाध्यवसायान्नेतरेतराश्रयम् VedāntKa. 172.8 (*on* i. 3.28); VivaPraSaṁ. 37.13; प्रत्येकं व्युत्पादितानां प्रयोज्यवृद्धज्ञानोत्पत्तिमनुमाय व्यवहारे वा संबन्धावधारणम् NyāyKu. 8.22; कथमिव तूष्णीकतैवास्य श्रेयसी यावता चेष्टाविशेषादिना प्रतिपाद्यस्याभिप्रायमनुमाय सुकरमेवानेन वचनोच्चारणम् SyādvāMañ. 20(19); यत्तु कश्चिद् धूमादग्निमनुमाय परं बोधयितुं पञ्चावयवं वाक्यं प्रयुङ्क्ते तत्परार्थानुमानम् TarkBhā (Ke.) 40.1; TarkKau. 12.25; TarkSaṁ. (A.) 37.17; आचार्यस्य ज्ञानवत्तामनुमाय तदुपसत्त्यादि च क्रियते इति भाष्यं शिष्यस्य … अन्यथाज्ञानाज्ञानादिकमनुमाय तस्मै तत्त्वमुपदिश्यत इत्यस्योपलक्षणम् ŚatDū. 110.4; ब्रूहि त्वमेकमनुमाय पुनर्न वाच्यम् ŚaṅkaDigVi.(Mā.) 3.33; मुखविकासादिलिङ्गाद्धर्षहेतुं प्रसिद्धार्थमनुमाय यत्र शब्दस्य संगतिग्रहः … तत्रावश्यम् … प्रामाण्यमाश्रीयते SarvaDaSaṁ. 16.278; 'पुत्रस्ते जातः' इति वार्ताहरव्याहारजन्यं श्रोतुर्हर्षमनुमाय हर्षहेतौ पुत्रजन्मनि संगतिं प्रतिपद्यते NyāyMāVi. 16.2 (*on* i. 1.1); NyāySu.(Ja.) 71A.5 (*on* i. 1.1); ŚivārkaMaDī. i. 173.16 (*on* i. 1.4); दृष्टं दृष्टिः प्रत्यक्षमिति यावत् । तत्सिद्धं दृष्टगं फलेन तु तद् वाक्यस्य प्रामाण्यमनुमायेति शेषः NyāySu.(Ja.) 107B.13 (*on* i. 1.3); 417A.2 (*on* ii. 2.10); देशान्तरप्राप्तलिङ्गकेनानुमानेनादित्ये गतिमनुमाय तदन्यथानुपपत्त्या गमने शक्तिरप्यस्तीति यद् विज्ञानं सानुमानपूर्विकार्थापत्तिः YuktiSneha. 76.15 (*on* i. 1.5); न चेदानींतनेनेन्द्रियप्रसादेन पूर्वकालीनं तदुपरममनुमाय सामग्रीविरहानुमानम् AdvaiSi. 557.10; गिरापदनिवृत्त्या तत्कार्यस्य साधनापेक्षत्वावगमात् तत्कार्यवान्निपद्मनुमाय … गिरापदकार्यापत्तिरिरापदस्यावसीयते ŚivārkaMaDī. i. 75.20 (*on* i. 1.0); i. 155.33 (*on* i. 1.3); न च तत्रादेशेन स्थानिनमनुमाय तेन पदार्थोपस्थितिः MīmāKau. i. 119.16 (*on* i. 3.24); iii(1). 18.13 (*on* i. 2.7); स्मृतिवाक्यादर्थं जानानो हि पुरुषः प्रथमं वक्तृज्ञानमनुमाय … ज्ञेयभूतार्थमेवानुमिनोति MayūMāli. 20.2 (*on* i. 3.1); 34.6 (*on* i. 3.5); प्रयोज्यप्रयोजकवृद्धव्यवहारं पश्यता बालेन … तस्य ज्ञानमनुमाय … शब्दमेव कारणत्वेन गृहीत्वा VaiyāSiMañ. 21.15; अनेकधा सूर्योदयेन प्राचीमनुमायापीयं दक्षिणेति मुह्यन्तो दृश्यन्ते SarvaDaKau. 128.26; **2A** having conjectured or guessed पुरुषान्तरस्थमनुष्ठानं दृष्ट्वा तदनुपपत्त्या कारणमनुमाय ततोऽनुष्ठानप्रवृत्तेरदोषः BālaKrī. i. 21.20 (*on* 1.7); गार्ग्योऽनुमाय राज्ञोऽथ प्रावीण्यं ब्रह्मवेदने । उपायानीत्युवाचेमम् BṛĀraUBhVā. ii. 1.91; अपश्यं मण्डलं गवाम् । अनुमाय ततस्तेन वसन्तं देशमन्तिके ।… क्षणेनारण्यमत्यजम् BṛKathāŚloSaṁ. 16.6; 20.31; विद्वत्सहस्रमुपलभ्य हि लोकिगुण्ड्यां भास्वत्सहस्रमिदमित्यनुमाय भासा । प्राभाकरीं प्रहितवानिह वृत्तिमर्हां EI. xv. 355.66; परिविष्टान्नेषु यन्निरवशेषतया भुक्तं यच्च भोक्तुं पुनःपुनर्गृह्यते तत्तस्येष्टमित्यनुमाय तदानीय … देयम् SmṛtiCan. v. 353.4; जननीव्यतिरिक्तानां पितृपत्नीनाम् … पित्रादिपत्नीत्वेन (पार्वणे) सहभावः … नित्यमधिकारान्तरमनुमाय प्रवर्तते CaturCin. iii(1). 100.16; उक्तं चेदं भगवदागमनसमयमनुमाय पुनः सर्वैरद्वैतप्रमुखैः सह मयात्रागन्तव्यम् CaitaCa. 186.5(8); तम् … आद्यं पुमांसमनुमाय निहन्तुमेनम् । प्राक्प्रेषिताः … नाद्यापि हन्त विनिवर्तितुमुत्सहन्ते KaṁVa. 2.4; संधिविग्रहतत्त्वज्ञस्त्वनुमान (v.l. °माय) विभागवित् NītiPra. 1.48; **2B** having guessed through calculation सूर्यपरिवेषे तत्फलं गणितेनानुमाय वक्तव्यम् AdbhuSāg. 292.17.

**अनुमायत्न** (anumā-yatna) *m.* effort for inferring यतो विप्रतिपद्यन्ते त्वन्तर्यामिणि वादिनः । तत्सिद्धयेऽनुमायत्नः क्रियतेऽतः परोक्तिभिः BṛĀraUBhVā. iii. 8.127.

**अनुमारक्षणतूर्यडम्बर** (anumārakṣaṇa-tūryaḍambara) *m.* great noise of musical instruments produced after the (very) moment of killing कर्णपथं समागतः। अनुमारक्षणरोदनारवः (v.l. °क्षणतूर्यडम्बरः) RāmC. 33.18.

**अनुमारक्षणरोदनारव** (anumārakṣaṇa-rodanārava) *m.* noise of crying produced after the (very) moment of killing कर्णपथं समागतः । … अनुमारक्षणरोदनारवः RāmC. 33.18.

**अनुमारमहारव** (anumāra-mahārava) *m.* great noise produced after the killing उन्मूर्छति भटस्त्रीणामनुमारमहारवे ।… जगाम राघवाभ्याशं शान्तवेगो विभीषणः RāmC. (App. 1) 40.10.

**अनुमाररव** (anumāra-rava) *m.* noise produced after the killing प्रयालयं तदनु वीरपरिग्रहाणां जज्ञेऽनुमाररवतूर्यरवोर्मिरुच्चैः RāmC. 36.60.

**अनुमारिपु** (anumā-ripu) *m.* enemy of, i.e. contradiction to inferential knowledge (प्रमा) बौद्धाभ्यामपराभ्यां तु तत्राप्युक्तानुमारिपुः AnuVyā. 69B.7 (*on* 4.2) (NyāySu.(Ja.) उक्ता उक्तसरूपा अनुमारिपुर्विरोधिनी)

**अनुमारुतम्** (anumārutam) *adv.* along (the direction of) the

wind अखण्डक्षे सुलग्नादौ चुल्लीं कृत्वानुमारुतम्। तत्रेष्टकास्ताः संदध्यात् ĪśānŚiPa. ii. 33 41; ŚilpaRa. i. 14.51.

**अनुमार्ग्** (anu-mārg-) I.P. to strive after, i.e. to look for व्युत्थायानर्थनिःसारसाधनान्यनुमार्गेति BṛĀraUBhVā. i. 4.11.

**अनुमार्ग** (anu-mārga) *m.* **1Ai** pursuit of (religious) path सर्वधर्मप्रतिपत्तिमुत्थितः सर्वमार्गअनुमार्गसुस्थितः। बुद्धपुत्र प्रणिधानसुस्थितः GaṇḍVyū. 392.2 [DBHS.]; **1Aii** [Loc.] through or along the same path कन्यका तत्र निममज्ज सपादपा। तद् दृष्ट्वानुमार्गेऽस्याः स राजात्मानमक्षिपत् KathāSaSāg. xii. 19.85; [Inst.] रणात् पलायनं चक्रे सुमाली …। तद्वधार्थं गतं शक्रमनुमार्गेण गत्वरम्। उवाच … सोमः PadmP.(Ra.) 7.91; 73.128; कार्तवीर्यो महावीर्यस्त्वया भेत्तुं न शक्यते। यदि तस्यानुमार्गेण त्वं गच्छसि … परशुं च महाविद्यां गृहीत्वा याहि तं प्रति BṛKathāK. 122.18; KathāSaSāg. xii. 19.104; **1Aiii** [Inst.] through or along the subway or short-cut underneath गोविन्देन परिज्ञाय सुभद्राप्रसवं पुनः। अनुमार्गेण संप्राप्य दृष्टा सा BṛKathāK. 121.16; **1Aiv** each path, cf. **अनुमार्गप्रधावित**; **1B** [Inst.] in due course, in proper manner अनुमार्गेण कार्येषु अन्यस्मिन्वचनान्मम। दद्यास्त्वमिति यो दत्तः स इहान्वाधिरुच्यते KātySm. 611; यद्यद् विनिर्मितं कर्म येन येनान्यकर्मणि। तस्य तस्यानुमार्गेण तदिहागत्य तिष्ठति VarāṅgaC. 15.82; **2** (Arch.) small joist (parallel beam to support floor, ceiling etc.) कायश्चाप्यनुकायश्च प्रासादाङ्गं द्विधा स्मृतम्।… अनुमार्गाश्च कायः स्यात् ĪśānŚiPa. ii. 30.37; ŚilpaRa. i. 16.116; जयन्त्यश्चानुमार्गः स्याद् दण्डार्धबहलश्रितः ĪśānŚiPa. ii. 31.84; ii. 31.94; ऊर्ध्वदण्डाग्रविपुलमनुमार्गं च कारयेत् ĪśānŚiPa. ii. 32.97; स्वार्धाक्रान्ता जयन्तीस्तदुपरि सुसमीकृत्य कृत्वानुमार्गं निश्छिद्रं छादयेत् TantrSa. 2.46; ŚilpaRa. i. 29.31; *n.* small joist तुला द्वारानुयाता हि जयन्ती तिर्यगागता। अनुमार्गं तदूर्ध्वे तु द्वारस्यानुगतं शुभम् MayaMa. 16.43; 16.45; *adj.* following along, DBHS.

**अनुमार्गक** (anumārga-ka) *n.* (Arch.) small joist तुलाविस्तारतारोच्चा जयन्ती स्यात् तुलोपरि। अर्धदण्डेन तत्रोच्चा जयन्त्यूर्ध्वेऽनुमार्गकम् MayaMa. 16.40; *m.* (?) small joist वंशानुगा जयन्त्यः स्युस्तुलावदनुमार्गकाः ĪśānŚiPa. ii. 31.86.

**अनुमार्गका** (anumārga-kā) *f.* (?) small joist वंशानुगा जयन्त्यः स्युस्तुलावदनुमार्गकाः ĪśānŚiPa. ii. 31.86.

**अनुमार्गग** (anumārga-ga) *adj.* going along the same path राजा … शूद्रकः। निवारयामास च तांश्चारांस्तस्यानुमार्गगान् KathāSaSāg. xii. 11.21.

**अनुमार्गण** (anu-mārgaṇa) *n.* searching, looking for यत्र ब्राह्मणस्य … विविक्ते देशे अन्वेषणा अनुमार्गणं भवति, तत् तत्र एनं रैक्वम् … गच्छ ChāndoUBh. 208.7 (*on* iv. 1.7)

**अनुमार्गतस्** (anumārga-tas) *adv.* through or along the same path प्रयाणमकरोच्चक्री चक्ररत्नानुमार्गतः MahāP. 28.1.

**अनुमार्गप्रधावित** (anumārga-pradhāvita) *adj.* **i** who has gone or run after through the same path आन्तरप्रतीहाराणामनुमार्गप्रधावितानेकार्थिजनसहस्राणामनुयायिनः पुरुषानश्रान्तैः पुनः पुनः पृच्छद्भिः … आसेव्यमानम् … राजद्वारमगात् HarṣaC. 97.2; **ii** rushed on each path समरकेतुः … पादपमूलमगमत्। अन्वपालयच्च क्षितिपालसूनोर्व्यावर्तनार्थमनुमार्गप्रधावितानापतिष्यतो हास्तिपकपुरुषान् TilaMañ. 188.19.

**अनुमार्गम्** (anumārgam) *adv.* **A** through or along the path (शुक्रः) त्वरमाणोऽनुमार्गं स निश्चक्राम पुरोत्तमात् MahāBhā. i. 737*; दर्शयांचक्रुरत्यर्थं जनाः केचित् पुरे यथा। सेनानिवेशान् विविधाननुमार्गं विधानतः। कुर्वन्तः Rāmā. ii. 1868* (1); तस्यानुमार्गं विशति तद्वै घोरं रिपुत्रयम् MārkP. 3.66; असावनुमार्गं रिपोर्गतः PadmP.(Ra.) 7.93, 102.145; एषानुमार्गमिह पर्यटनप्रयासभूरिश्रमाम्बुभरधौतशरीरयष्टिः।… मदनस्य हस्तभल्लीव … हन्त हृदि प्रविष्टा UdaySuKa. 88.26; तवानुमार्गं व्रजतो भवान्तरे शठैर्धनैः पञ्चपदी न पूरिता Subhāṣi. 489; **B** along the (possible) course नष्टं कथंचिदनुमार्गमुदीरितेषु। स्थानेषु शल्यमचिरेण गतिं करोति SuśruS. ii. 10.14 (Nyāyacandrikā मार्गं लक्षीकृत्य); RugVi. 45.5.

**अनुमार्गलग्न** (anumārga-lagna) *adj.* **A** clinging, i.e. following closely along the way अनुमार्गलग्नैरनतिदूरवर्तिभिः … परिवृतम् … नाविकयुवानमद्राक्षम् TilaMañ. 126.4; कपिः … अनुमार्गलग्नैश्च कुमारकेसरिप्रभृतिभिः स्तोकान्तरमनुसृत्य … स्थितैस्समुज्झितम् … नरेन्द्रमतिदूरमाचकर्ष UdaySuKa. 127.24; **B** clinging, i.e. associated along the course अन्विष्य नूनमचिरादनुमार्गलग्नैराबध्यतेऽत्र सुखदुःखशतैः UdaySuKa. 38.8.

**अनुमार्गागत** (anumārgāgata) *adj.* [*f.*-ā] **A** which has come on the way सोऽनुगम्यमानस्तेन तुरंगमेणानुमार्गागतं महच्छ्वभ्रं गोष्पदमिव जवेन लङ्घयित्वा प्रदुद्राव JātaMā. 163.5 (25.1(9)); मूलोत्खातानुमार्गागतगिरिगुरवस्तार्क्ष्यपक्षाग्रवाताः BhallaŚ. 89; **B** coming behind on the (same) path अनुमार्गागतया … अनुगम्यमानं कन्यकया कैलासनामानं कञ्चुकिनमायान्तमपश्यत Kād. 100.14.

**अनुमार्ग्यमाण** (anu-mārgyamāṇa) *adj.* (used in primitive sense) being sought after or pursued तमाश्रमपदं प्राप्ता दस्यवो लोप्त्रहारिणः। अनुसार्यमाणा (v. l. अनुमार्ग्यमाणा) बहुभी रक्षिभिः …। ते तस्यावसथे लोप्त्रं निदधुः MahāBhā. i. 101.4.

**अनुमार्जत्** (anu-mārjat) *adj.* considering, pondering thoroughly सुधनः श्रेष्ठिदारकः … तं बोधिसत्त्वसमाधिनयमनुमार्जन् … अवोचत् GaṇḍVyū. 51.3; 68.6 [DBHS.]

**अनुमार्जन** (anu-mārjana) *n.* **1** name of a treatise (dealing with grammatical corrections) इमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः … सानुमार्जनाः GopBr. i. 2.10 (44.4); **2A** rubbing along नन्दगोपपुत्रः … मदनिकां नाम कुब्जिकां दृष्ट्वा तस्या हस्ताद् गन्धमादाय … तेनैव हस्तेन कुब्जस्यानुमार्जनेन विगतकुब्जभावां तां कृत्वा BālC. 5.2(7); णिच् … लोम्नोऽनुमार्जने SaraKaṇṭhā (Gr.) i. 3.49; **2B** rubbing after (for good qualities) परिमार्जनं दोषापनयनम् …। अनुमार्जनं प्रीतिगुणाधानं यथार्हपूजनात् BhārBhāDī. *on* xii. 82.21; **3** cleansing, purification प्रागनुमार्जनाद् वेदेः सकाशाद् वेदिपुरीषमपसार्यान्यत्पुरीषमानीय वेदिमध्ये प्रक्षेपणीयम् comm. *on* KātyŚS. ii. 6.11; एकेन छेदनं प्रकाश्यते अन्येनानुमार्जनमित्यर्थभेदान्मन्त्रभेदः ŚāstrDī. 118.1 (*on* ii. 1.15)

**अनुमार्दव** (anu-mārdava) *n.* kindness, compassion हतप्रवीरस्य रणे तु रक्षसः। कथंचिदापादयते च मार्दवम् (v. l. सादयतेऽनुमार्दवम्) Rāmā. v. 907*.

[1]**अनुमार्धविग्रह** (anumārdhavigraha) *adj.* having knowledge (*lit.* inferential knowledge) as half of the body नमामि … अनुमार्धविग्रहम्।… अपूर्वशंकरम् PañcPā. 1.5 (*on* i. 1.0)

[2]**अनुमार्धविग्रह** (an-umārdhavigraha) *adj.* other than the one (Śaṅkara) who has Umā as the half of (his) body, PañcPā. 1.5 (*on* i. 1.0)

**अनुमालक्षणाज्ञान** (anumālakṣaṇājñāna) *n.* ignorance concerning the real characteristic of inference धर्मिभेदविकल्पेन याश्रयासिद्धिरुच्यते। सोऽनुमालक्षणाज्ञानाद्धर्मित्वं भासिनो यतः TattvSaṁ. 2737.

**अनुमालिनीतीरम्** (anumālinītīram) *adv.* on the bank of the river Mālinī एषः … कण्वस्य … अनुमालिनीतीरमाश्रमो दृश्यते Śāk. 1.11(6)

**अनुमावत्** (anumā-vat) *adv.* like the inferential knowledge रूप्यधीरनुमावदमेयजा, आपरोक्ष्यं च दोषजत्वादिति चेत् – सा अनुमावत्सार्था युक्ता IṣṭaSi. 288.13.

**अनुमावर्त्मन्** (anumā-vartman) *n.* [Inst.] through the path of inference अनुमावर्त्मना ज्योतिः साक्षान्नः प्रत्यपीपदत् BṛĀraUBhVā. iv. 3.32.

**अनुमावसर** (anumāvasara) *m.* occasion or scope for inference न तं विना किंचित्स्मर्तुं द्रष्टुमथापि वा। शक्यं तन्नित्यसिद्धेर्हि नानुमावसरो भवेत् AnuVyā. 16B.8 (*on* 1.4)

**अनुमावसिति** (anumāvasiti) *f.* termination, i.e. conclusion of syllogism न पञ्चावयवोक्तौ च विवादावसितिर्भवेत्।… लिङ्गोक्तावपि चैवं स्यादनुमावसितिर्ध्रुवा AnuVyā. 19A.4 (*on* 2.1)

**अनुमाविशेष** (anumā-viśeṣa) *m.* variety of inference अर्थापत्त्युपमे अनुमाविशेषः PramāLa. 1B.8.

**अनुमाविषय** (anumā-viṣaya) *m.* object of inferential knowledge अनुमाविषये नेष्टं परीक्षितपरिग्रहात्। वाच्यप्रामाण्यमस्मिन् हि नानुमानं प्रवर्तते PramāVār. 4.2.

**अनुमाविषयोत्थ** (anumāviṣayottha) *adj.* arisen, i.e. derived from what is the object of inferential knowledge अनुमाविषयोत्थं तु धर्मत्वं निष्फलं भवेत् ŚlokaVār. 5(7). 69 (467.6)

**अनुमावृत्ति** (anumā-vṛtti) *f.* occurrence of inference अभ्यस्तलक्षणानां च सम्यग्लिङ्गविनिश्चये। अनुमावृत्तिरन्या तु नानुमेत्यभिधीयते TattvSaṁ. 1475.

**अनुमाव्यभिचार** (anumā-vyabhicāra) *m.* deviation, i.e. failure of inference पुंवाक्यमव्यभिचारि, लिङ्गाभासादनुमाव्यभिचाराभिमानः — इति न प्रतिज्ञा दुष्टा NayaVi. 55.5 (*on* i. 1.2)

**अनुमाश्रिति** (anumāśriti) *f.* resorting to, i.e. dependence on inference दग्धृत्वादिस्वभावोऽग्नेः शक्तिश्चेद्भवतोच्यते। प्रत्यक्षात्तदसंसिद्धेर्विरोधस्तेऽनुमाश्रितेः BṛĀraUBhVā. iv. 3.257.

**अनुमाष** (anumāṣa) (Gr.) [listed in the *parimukhādigaṇa* परिमुखे भवम्, पारिमुख्यम्। परिमुख … अनुमाष अनुयव JaineVyā. 198.9 (*on* iii. 3.34); KāśiVṛ. *on* iv. 3.59]

**अनुमाषम्** (anumāṣam) *adv.* [SaraKaṇṭhā.(Gr.) iv. 3.160] like a kidney-bean or in a kidneybean परिमुखं भवः परिमुख्यः । परिमुखम् ··· अनुमाषम् CāndraVṛ. *on* iii. 3.23.

**अनुमास** (anu-māsa) *m.* subsequuent month मासश्चानुमासश्च, तयोर्भवं मासानुमासिकम् ManuBh. i. 260.24 (*on* 3.112); CaturCin. iii(1). 171.9; ManvaMu. 110.24 (*on* 3.122)

**अनुमासनव्यघटना** (anumāsa-navyaghaṭanā) *f.* newer formation in every month अङ्कहरिणः ···। मा भाङ्क्षीदनुमासनव्यघटनानिःसन्धिबन्धं वपुः शीतांशोः AnarghaRā. 7.64.

**अनुमासभिन्न** (anumāsa-bhinna) *adj.* different, i.e. new in every month राजा द्विजानामनुमासभिन्नः पूर्णां तनूकृत्य तनूं तपोभिः । कुहूषु दृश्येतरतां किमेत्य सायुज्यमाप्नोति भवन्मुखस्य NaiṣC. 8.37; 10.62.

**अनुमासम्** (anumāsam) *adv.* every month, month after month अयं पुण्यशाला प्राचिनी ··· अक्षयनीवि दिन्न[ा] तु (प) तो वृ[द्धि] तो मासानुमासं शुद्धस्य चतुर्दिशि पुण्यश[ला]यां ब्राह्मणशतं परिविषितव्यम् EI. xxi. 60.4; (श्राद्धम्) अनेन विधिना सर्वमनुमासं समाचरेत् MatsyaP. 18.12; PadmP. v. 10.12; VīraMi.(Samaya.) 201.5; मिथुनानि ···। अष्टौ षड् वाप्यथ पुनश्चानुमासं समर्चयेत् MatsyaP. 62.32; अनुमासं च चातुर्मास्यी विधिः स्मृतः AgniP. 190.5; पञ्चगव्येनानुमासम् ···। स्नापयित्वार्चयेद् गौरीम् BhaviP. 648B.25 (iv. 25.17)

**अनुमासिक** (anumās-ika) *adj.* **i** pertaining to every month, monthly पितृयज्ञं तु निर्वर्त्य विप्रश्चेन्दुक्षयेऽग्निमान् । पिण्डान्वाहार्यकं श्राद्धं कुर्यान् मासानुमासिकम् ManuSm. 3.122; GobhiSm. 2.98; ManuBh. i. 260.24 (*on* 3.112); मासानुमासात्तु कर्तव्यात्पिण्डपितृयज्ञादनुमासिकं मासि मासि कार्यम् ManvaVi. 353.29 (*on* 3.122); उक्तवचने एकोद्दिष्टग्रहणादेकोद्दिष्टरूपेष्वेव मासिकेषु दिनान्तरकालविधानं न पार्वणरूपेष्वनुमासिकेषु VīraMi.(Samaya.) 196.6; अनुमासिके वार्षिके चाशौचरुद्धे शुद्धिकालादय उत्तरमासस्थतत्तिथिभिन्नाश्चत्वार एव पक्षाः BālamBha. i. 547.4 (*on* 1.249); **ii** (used as noun) that which pertains to each and every month, cf. **अनुमासिकपर.**

**अनुमासिकपर** (anumāsika-para) *adj.* intended to (justify) that (*śrāddha*) which pertains to every month अत्यक्तद्वितीयपक्षश्च मासिकपरो न त्वनुमासिकपरोऽपि (आशयः) BālamBha. i. 547.9 (*on* 1.249)

**अनुमासिकविषयक** (anumāsikaviṣaya-ka) *adj.* referring to that (*śrāddha*) which pertains to every month मासिकाब्दे त्वित्युक्तवचनं तु अनुमासिकविषयकम् BālamBha. i. 547.3 (*on* 1.249)

**अनुमासिकादि** (anumāsikādi) *adj.* that which pertains to every month etc. तथैवैकोद्दिष्टं प्रकृतित्वेन विधायानुमासिकादीनां विकृतित्वेनाभिधानम् VīraMi.(Samaya.) 201.6.

**अनुमासिद्धि** (anumā-siddhi) *f.* establishment of inference स्वभावकार्यतासिद्धिरनुमानसमाश्रयात् । ताभ्यां चाप्यनुमासिद्धिरेवमन्योन्यसंश्रयः BṛĀraUBhVā. iv. 3.776.

**अनुमास्थिति** (anumā-sthiti) *f.* occurrence, i.e. possibility of inference अस्वाप्सं सुखमित्याद्यौ कालांशेऽनुमास्थितिः NyāySiA. 213.23.

**अनुमास्यमान** (anu-māsyamāna) *adj.* which is going to be inferred द्रव्यदेवतासंयोगेन यागोऽनुमीयते । तत्र संस्कारवाक्यप्रवृत्तिवेलायां पयसोऽनुमास्यमानयागापूर्वार्थत्वानवगतेः VidhiRa. 29 (150.13)

**अनुमाहति** (anumāhati) *f.* destruction of, i.e. contrareity to inference न बुद्धो धर्मदर्शी स्यात् पुंस्त्वादित्यनुमाहतिः AnuVyā. 4A.2 (*on* i. 1.1)

**अनुमि** (anu-mi-) v. u. **1** to conjecture, to guess ब्रवीह्यतिमतिं त्वां हि वाक्यैरनुमिमीमहे (v.l. °मिनोमि ते) MahāBhā. iii. 177.15; अस्माद्वाक्यादयमर्थोऽधिगत इति तदभिमुखानुसरणरूपया चेष्टयानुमिनोति Ekāva. 1.13(98) (38.7); अनुमितित्वं च अनुमिनोमीति मानससाक्षात्कारसाक्षिको जातिविशेषः RasGaṅ. 640.6; यद् भवाननुमिनोति तदेव तत्त्वम् RasSa. 182(4); **2A** to employ syllogism तं दृष्टान्तं उपलभमानः शब्देऽप्यनुमिनोति शब्दोऽप्युत्पत्तिधर्मकत्वादनित्यः स्थाल्यादिवदिति NyāyBh. 48.7 (*on* i. 1.36); अनुपलब्ध्या श्रोतानुमिनोति नासीत्तत्र चैत्र इति TattvCin. i. 681.3; iv(1). 488.6; **2B** to infer, to know through inference शिरसा पादेन गामनुमिन्वन्ति NyāyBh. 156.4 (*on* ii. 2.68); इत एव ते योगशक्तिदर्शनात् अनुमिनोमि GītāBh.(Śaṅ.) 310.4 (*on* 11.18); औत्पानया प्रसिद्ध्या तु कार्यलिङ्गैश्च कारणम् । सदानुमिन्वते सांख्याः BṛĀraUBhVā. i. 4.107; iii. 6.28; आत्मानमात्मनात्मैव लिङ्गादनुमिनोति हि । तत्र नूनमुपेतव्या कर्तृता कर्मतास्य च NyāyMañ. ii. 7.7; न हि प्रत्यक्षेण करिणि दृष्टेऽपि चीत्कारेण तमनुमिन्वते प्रेक्षावन्तः TātpaṬ.(Vā.) 40.14 (*on* i. 1.1); ĀtmaTaVi. 344.17; यस्तु तं नाकलयेत् स कार्यसामान्येन कारणमात्रमनुमिनुयात् NyāyKuA. i. 18.4; पुरुषः ··· नरेन्द्रभवनमालोक्यावयवसंनिवेशविशेषेण तस्य कार्यत्वं निश्चित्य ··· कर्तुस्तज्ज्ञानशक्तिवैचित्र्यमनुमिनोति BrahmSūBh. (Rā.) 140.8 (*on* i. 1.3); VedāntSā.(Rā.) 180.1 (*on* ii. 2.25); VedāntDī. 108.16 (*on* ii. 2.26); BrahmSūBh.(Śrī.) ii. 92.4 (*on* ii. 2.25); पर्वते ··· धूमं प्रतीत्य ततो वह्निमनुमिनोति KhaṇḍanKhā. 142.22; यदि च यत्किंचिद् विपक्षे बाधकमित्यभिमानमात्रेण परिगृह्यानुमिनोषि, तदा ज्योतिष्टोमादिवाक्येऽपि भवादृशः कोऽपि तथा तदभिमत्यानुमिनुयादेव ŚatDū. 72.17; NyāyPari. 155.5; न ह्यज्ञानस्य ··· तन्निवर्तकमभ्युपैति । किं त्वनादित्वेन तदभावमप्यनुमिनोति NyāySu.(Ja.) 20A.4 (*on* i. 1.1); 68A.12 (*on* i. 1.1); 218A.4 (*on* i. 4.6); 244B.10 (*on* ii. 1.2); वेदादिनिरपेक्षस्त्वमेवमनुमिमीषे तदैवमपि कस्मान्नानुमिनुयाः NyāySu.(Ja.) 623A.9 (*on* iv. 2.1); ज्ञानं तावदनुमिनोति तटस्थो बालः Upask. 338.4 (*on* vii. 2.20); SarvaDaKau. 43.23; 114.24; श्वैत्यस्यानुमिताश्रयस्य च श्रावनसमानाश्रयत्वमनुमिनोति TantrRaha. 28.2; तथा चानुभवः पर्वतं पश्यामि वह्निमनुमिनोमीति VedāntPari. 57.1; वह्न्यादिपक्षकानुमितिपरस्य वह्निमनुमिनोमीत्यादिवाक्यस्य न प्रामाण्यम् VyutpaVā. 134.23; 163.1.

**अनुमित** (anu-mita) *n.* inference (as a means of knowledge) सूक्ष्मो हि भावोऽनुमितेन गम्यः MahāBh. ii. 124.13 (*on* iii. 2.123); *adj.* [*f.* -ā] **1A** (also used as noun) what is inferred दृष्टानुमितानां हि नियोगाप्रतिषेधानुपपत्तिः NyāySū. iii. 1.51; बाधाभ्युपेतप्रत्यक्षप्रतीतानुमितैः समम् ।··· वर्णेभ्यो भेदः स्फोटेन चिन्तितः PramāVār. 1.270; श्रुतानुमितयोः श्रुतसंबन्धस्य बलीयस्त्वात् ManuBh. i. 321.1 (*on* 3.231); PariVṛ.(Sī.) 174.23; PariVṛ.(Nī.) 40.20; अनुमितस्य चागमेनान्वाख्यानात् ··· अनुमानं लक्षयति TattvVai. 12.19 (*on* 1.7); दृष्टं श्रुतं चानुमितं स्वानुभूतं यथार्थतः । कथनं सत्यमित्युक्तम LiṅgaP. i. 8.13; विश्वं प्रत्यक्षं त्यक्त्वा तयोर्योऽनुमितं वदेत् AnuVyā. 29B.9 (*on* 2.2); NyāyKu. 78.8; Upask. 392.4 (*on* ix. 2.1); प्रत्यक्षानुमितयोः प्रत्यक्षं बलीयः PariVṛ.(Sī.) 175.12; Nyāyāmṛ. 628A.3; न चानुमितस्याप्युत्तरकालं श्रुतेन बाधः MīmāKau. iii(1). 235.12 (*on* ii. 2.20); **1B** inferred, known through inference देशान्तरप्राप्त्या अनुमितया गतिरनुमीयते NyāyVār. 51.7 (*on* i. 1.5); Upask. 58.3 (*on* i. 2.5); यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरैरन्यथैवोपपाद्यते VākyaPa. 1.34 = TattvSaṁ. 1462; आप्तेन दृष्टोऽनुमितो वार्थः परत्र स्वबोधसंक्रान्तये शब्देनोपदिश्यते YogBh. 13.1 (*on* 1.7); कार्यानुमितस्य हेतोस्तदभावे सत्ताप्रमाणाभावात् BhāvanāVi. 58.1; यत्र चानुमितं लिङ्गं सूर्यगत्यादि लिङ्गि च ŚlokaVā. 4.90 (162.3); 5(4).170 (400.6); (शाखाप्रसारयोः) प्रकरण एव साहित्यं नानुमिते यागे ṬupṬ. 24.6 (*on* iv. 2.11); औष्ण्यघोषाभ्यामनुमिते कौक्षेये कार्ये ··· कार्यज्योतिरेव BrahmSūBh.(Śaṅ.) 77.10 (*on* i. 1.24); स एवाप्रतिरूपवदनेनानुमितः BṛĀraUBh. 46.8 (*on* i. 3.6); शून्यमेवेति ···। हेतुनानुमितं केन कथं ज्ञानं त्वयोच्यताम् SarvaVeSāSaṁ. 595; धरादिजगद्रचनाबलादनुमितोऽनवखण्डितशक्तिकः SaṁkṣeŚā. 3.264 (ii. 301.17); भवति हि यथायथं दृष्टानुमितश्रुतेभ्यः कर्मफलेभ्यः पुंविशेषेषु वैदिककर्मानुमानम् Kāśi. iii. 12.25 (*on* 5(4).12); अन्वयज्ञाने अनुमिते तदुपदर्शितोऽर्थो न शब्दमाकाङ्क्षति ĀgaPrā. 38.16; यदेव द्रव्यं स्पर्शेनानुमितं तदेव शब्दादिभिरप्यनुमीयते NyāyKa. 47.3; वाक्यत्वादिना लिङ्गेन वेदानामपि पौरुषेयत्वमनुमितम् Bhām. 79.8 (*on* i. 1.4); SāṁkhyaTaKau. 56.2 (*on* 2); 312.11 (*on* 17); प्रयोगाद् वानुमितः यो यत्रासति वृत्त्यन्तरे वृद्धैः प्रयुज्यते NyāyKuA. ii(1). 198.4; अनुमानविकल्पात्मनापि प्रकाशेन यदि अनाविष्टो नीलादिः अर्थः तत् न अनुमित एव स्यात् PratyabhiVi. i. 235.3 (*on* i. 5.9); अनुमितमप्यर्थं पश्चादनुवदद् वाक्यं वाचकं शक्तं स्यात् NyāyRaMā. 92.8; न तावदनुमितयापि गत्या तत्कारणमनुमातुं शक्यम् NyāyRa. 164.18 (*on* 4.97); पृथग्वाक्यैः समिदादिभिरनुमितयज्युद्देशकशब्दयुक्तैरङ्गानि विधीयन्ते ŚāstrDī. 524.4 (*on* vii. 1.1); कार्यत्वेनानुमितेऽपि विषये ज्ञानशक्ती कार्यानुमेये BrahmSūBh.(Rā.) 140.3 (*on* i. 1.3); गुणानामुत्कर्षापकर्षरूपाङ्गाङ्गिभावेन जगत्प्रवृत्तिरनुमिता VedāntDī. 100.5 (*on* ii. 2.6); अधिकरणमपि दृष्टमनुमितं स्मृतं वा Kiraṇā. 19.5; 289.18; शब्देनानुमितं लक्ष्यं परापरमुदाहृतम् Mānaso. iv. 1.151; PramāMī. 44.27 (*on* i. 2.12); मन्वादिस्मृतीनां वेदमूलत्वेऽनुमिते तुल्यन्यायतया आपतितं वेदमूलत्वं को वारयेत् ŚrutaPra. ii. 57.26 (*on* i. 3.25); गुणाभावात्प्रामाण्याभावेऽनुमिते च पारिशेष्यात् अप्रामाण्यमेव वेदस्य स्यात् NyāyKu. 21.16; मयेत्यनुमितं तावत् घटभङ्गाद् यथामिलत् । मृत्स्ना ··· तथास्या मिलितः सुतः PārśvC. 8.340; प्राधानिके जगत्कारणेऽनुमिते तु तादृशेन तर्केण सत्प्रतिपक्षसंभवात VedāntPāSau. 157.7 (*on* ii. 1.11); एकेन तर्ककुशलेनानुमितोऽर्थोऽन्येन प्रतिषिध्यते VedāntKau. 157.13 (*on* ii. 1.11); भिद्यते न स आत्मा ··· अनुमितपरसुखदुःखाद्यनाधारतया स्वस्य प्रत्यक्षसिद्धत्वात् NyāyPari. 310.8; 495.22; तदभावश्च संसर्गग्रह एवेति भ्रमाभावेऽनुमीयमाने संसर्गज्ञानमेवानुमितम् TattvCin. iv(1). 132.2; सामान्यतोऽनुमितोऽपि वेदार्थो नाग्निहोत्रादिविशेषाकारेण प्रतिपन्नः VivaPraSaṁ. 177.8; न मा स्मार्तोष्टकाङ्गत्वाद् यां जना इति मन्त्रगीः । तन्न स्मृतेर्मूलवेदेऽनुमिते मात्वसंभवात् NyāyMāVi. 28.6 (*on* i. 3.1); मुखविकासादिना स्वविरुद्धसुखाद्यनुमानेऽन्यत्वमप्यनुमितं भवति ŚatDū. 147.21; ऐहिकसुखस्पृहायुक्तो हि तद्-

दृष्टान्तेनानुमित आमुष्मिके सुखे रागवान्भवति JīvanVi. 162.9; प्राचीनपक्षादन्यथानुमितमिति चेन्न TattvPrakā. 97A.3 (*on* ii. 2.9); नानित्यतयानुमितः शब्दः तीव्रादिधर्मोपेतत्वेन पुनस्तथानुमीयमानो नित्यो भवति NyāySu.(Ja.) 80A.6 (*on* i. 1.1); अनुमितमात्मानम् ··· स्थिरत्वेन साधयति Upask. 163.8 (*on* iii. 1.18); 306.2 (*on* vii. 1.22); पीनो देवदत्तो दिवा न भुङ्क्ते इत्यनेन वाक्येन पीनत्वमनुमितम् Upask. 406.6 (*on* ix. 2.5); कर्म न निर्विकल्पगोचरम्। तस्य नित्यानुमेयत्वात्। ··· अनुमिते तस्मिन् पश्चाद्विशिष्टप्रतीतिसंभवः TantrRaha. 69.11; 27.22; (अग्निर्हिमस्य भेषज)मिति श्रुतेरनुमितहिमनिवारणशक्त्यनुवादित्ववदनुमितासत्यमिथ्यात्वानुवादित्वोपपत्तेः Nyāyāmṛ. 122B.4; वेदो धर्मप्रमाणं, स कश्चित्प्रत्यक्षः कश्चित्स्मृत्यानुमित इत्येवं तात्पर्यं न तु प्रमाणपरिगणने ManvaMu. 35.17 (*on* 2.12); अनुमितेऽप्यर्थे प्रवर्तमानं प्रमाणं स्यात् YuktiSneha. 45.32 (*on* i.1.5); अनुमितेऽपि वह्न्यादौ नास्तीति प्रतीत्यनुदयात् SiddhāBi. 65.6; अस्माभिरनुमितैव व्यवस्था मुमुक्षुभिरुपादेया SāṁkhyaPraBh. 35.7 (*on* 1.65); द्रव्यदेवतासंबन्धरूपं लिङ्गम् ··· याग एव तेनानुमितः स्यात् ŚivārkaMaDī. i. 31.17 (*on* i. 1.1); विवरणे अभावपूर्वकत्वमेवानुमितं न त्वभावजन्यत्वमिति GuruCandr. i. 51.1; मन्त्रब्राह्मणात्मके वेदस्य द्वैराश्ये निरूपिते प्रसङ्गात्प्रत्यक्षपठित एव वेदे द्वैराश्यं न त्वनुमिते MīmāKau. iii(2). 110.13 (*on* ii. 1.35); यत्तु परिमाणात् समन्वयात् शक्तितश्चेत्यादिसूत्रैः प्रधानं जगत्कारणमनुमितं तन्निरस्यं भवति GoviBh. 114.10 (*on* ii. 2.1); **2** conjectured, guessed विभावितं त्वया(त्मीयमन्वयागतं मन्त्रित्वमनेना)नुष्ठानेन। नूनं तव पिताप्येवंलक्षणः (v. l. अनुष्ठानेनानुमितः पितापि सदृशीकृतः) PañcT. 1.148(2) (149.13); पुंस्त्रीनपुंसकाख्ये दृष्टेऽनुमिते पुरःस्थिते स्पृष्टे। तज्जन्म भवति BṛSaṁ. 51.36; BālaKrī. i. 11.27 (*on* 1.4); कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च BhāgP. iii. 11.3; Loc. 28.13 (*on* 1.3); नानुमितो हेत्वाद्यैः स्वदतेऽनुमितो यथा विभावाद्यैः VyaktiVi. 14.12; अद्यैष कस्यापि मया शुभस्य त्वद्दर्शनेनानुमितो विपाकः NavaSāC. 9.4; दृष्टवानसि कुत्रापि शिवो ह्यनुमितोऽपि वा BṛDharmaP. i. 33.46; Hastyāyur. 705.14 (4.35); EI. xix. 281.21; वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान् KāvyPra. 678.2; SubhāRaK. 4.7; SaduktiKa. 65.29; Mahimna. (App.) 11; Kuval. 121.1(17); उद्धूतपांशुपटलानुमितप्रबन्धधावत्खुराग्रचयचुम्बितभागाः ··· वाहाः PraboCan. 4.26 (79.5); असौ राजकुले कापि लब्धजन्मा ··· अस्य गुणैरनुमितं मया PāṇḍaC. 3.477; क्रोधानलः ··· शोणत्वेन च नेत्राणां जनैरनुमितः SamarāSaṁ. 7.455; CaturJiSta. 22; पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते SāhiDa. 176.8; सामान्यकुलजोऽप्येष निःसारोऽनुमितो जनैः RājTa.(Śrī.) 3.322; CaitaCa. 107.18(4); पद्मिनीपरिमलालिपाटच्चरैः ··· अनुमितो दिनेशोदयः RasGaṅ. 600.13; AlaṅkāMañ. 237.5; एवमनुमितं कुसुमसौरभेण VasaTi. 44.6; SundaŚ. 72; **3** measured, cf. **अनुमितकोशत्व.**

**अनुमितकथंभाव** (anumita-kathambhāva) *adj.* whose manner of performance is inferred अग्नीषोमीयः ··· तत इहानीतः सन्ननन्यप्रयोजनान् धर्मान् साकाङ्क्षान् पश्यन्ननुमितकथंभावः संबध्यते TantrVā. 1101.4 (*on* iii. 6.25)

**अनुमितकारणभाव** (anumita-kāraṇabhāva) *adj.* (used as noun) one whose causality is inferred (कारणस्य) सिद्धकारणभावस्य न वैयर्थ्यमिति चेत्। अनुमितकारणभावस्याप्येवम्, प्रमाणसिद्धत्वाविशेषात् ĀtmaTaVi. 873.11.

**अनुमितकार्यान्वितज्ञान** (anumita-kāryānvitajñāna) *n.* inferred knowledge (of *kāraka*) as associated with activity (बालः) प्रवृत्तिसामान्येनानुमितकार्यान्वितज्ञाने ··· अन्वितज्ञानमात्रे शक्तिं कल्पयति TattvCin. iv(2). 485.2.

**अनुमितकुचकाठिन्या** (anumita-kucakāṭhinyā) *adj.* (*f.*) hardness, i.e. firmness of whose breasts is conjectured अनुमितकुचकाठिन्यामधिवक्षःपीठमङ्गजन्मरिपोः। (कामाक्षीम्) ··· भजे ताम् MūkaPañ. 4.54.

**अनुमितकोशत्व** (anumitakośa-tva) *n.* the state of having, i.e. receiving measured provision मठेऽनुमितकोशत्वं तत्तद्राजाश्रयाद् गते। कुलोद्वहो विहितवान् सिंहदेवो व्यवस्थितिम् RājTa.(Ka.) 8.3317.

**अनुमितक्रियापद** (anumita-kriyāpada) *adj.* whose verb is inferred अनुमितक्रियापदाद् वाक्यादेव तत्रापि विशिष्टार्थप्रत्ययः Kāśi. iii. 123.11 (*on* 5(5).57)

**अनुमितघटी** (anumita-ghaṭī) *f.* *ghaṭī* (a particular measure of time = 24 minutes) which is counted or measured (कालः) निशि प्रयातः। चेत् ग्लावोऽनुमितघटीष्वतोऽल्पपुष्टं द्विघ्नं तत्समपलयुग्वियुक् स्फुटः सः GrahaLā. 10.6.

**अनुमितचन्द्रोदयसमयपरिमाण** (anumita-candrodayasamayaparimāṇa) *adj.* who has conjectured the duration of time of the moon-rise उन्मीलितनयनः ··· इन्दुपादैरनुमितचन्द्रोदयसमयपरिमाणः साशं च साशङ्कं च ··· तिमिरपटलं शिरसा धारयन्तीम् ··· तामेव कान्तामपश्यम् Mukundā. 186(4)

**अनुमितज्ञानावलम्बनत्व** (anumitajñānāvalambana-tva) *n.* the state of being what is dependent on the knowledge which is inferred अनुमितज्ञानावलम्बनत्वे चाज्ञासिषमित्येव प्रतिभासः स्यात् ĀtmaSi. 44.10.

**अनुमिततद्विधर्मगमनसाधन** (anumita-tadvidharmagamanasādhana) *adj.* whose that distinct characteristic as means of going is inferred (सूर्यः) अयं चानुमिततद्विधर्मगमनसाधनोऽपि तथैव न गन्तुमर्हतीति वितर्कः Kāśi. iii. 163.15 (*on* 5(7).3)

**अनुमिततद्विधर्मसाधन** (anumita-tadvidharmasādhana) *adj.* whose that distinct characteristic as means (of going) is inferred (सूर्यः) अयं तु अनुमिततद्विधर्मसाधनोऽपि तथैव गन्तुमर्हतीति वितर्कः TātpaṬ.(U.) 388.9 (*on* 5(7).3)

**अनुमिततृतीयान्त** (anumita-tṛtīyānta) *adj.* whose instrumental case-ending is inferred, i.e. supplied तृतीयानुवृत्त्यैव इवयोगेऽस्मादेव ज्ञापकादनुमिततृतीयान्ताद् वतौ सिद्धे तत्रेति सप्तमीनिर्देशो ज्ञापयति Pradī. iv. 291A.33 (*on* v. 1.116)

**अनुमितत्व** (anumita-tva) *n.* **1** the state of being what is inferred अन्योऽप्यल्पमतिः शाखाचतुष्पञ्चगतं वसु। जानन्ननुमितत्वेन ब्रूयात्तस्य (बादरायणस्य) प्रसादतः AnuVyā. 47B.5 (*on* 3.3); चैतन्याविषयस्याप्यापरोक्ष्यम् ··· उपपन्नम्।··· स्मृत्याद्यनिष्ठेनानुभावादिगतेन विशेषेण तद्विषयस्यानुभूतत्वानुमितत्वादिवच्च Nyāyāmṛ. 63A.8; SāṁkhyaPraBh. 110.20 (*on* 4.4); आकाशादौ ··· श्रुतिसिद्धजन्यत्वेनानुमितत्वात् AdvaiSi. 316.1; MīmāKau. iii(2). 233.20 (*on* ii. 2.20); **11** the state of being what is inferred, i.e. known through the context अनुमितत्वं प्रकरणप्राप्तत्वम् PariVṛ.(Nī.) 41.1.

**अनुमितपतन** (anumita-patana) *adj.* whose fall, i.e. hitting of the target is conjectured बाणः ··· न हि विहरत्यन्तरे कुण्ठवेगो मर्मच्छेदप्रवृत्तैरनुमितपतनस्तारचीत्कारभारैः KirātāVyā. 34.

**अनुमितपथिकविश्राम** (anumita-pathikaviśrāma) *adj.* wherein the resting of travellers is conjectured इष्टकास्थितशुष्कपल्लवविष्टरानुमितपथिकविश्रामैः ··· जरत्कान्तारकूपैरसुलभसलिलतयानभिलषितोद्देशया ··· अटव्या ··· गत्वा ··· रक्तध्वजं दूरत एव ददर्श चन्द्रापीडः Kād. 223.14.

**अनुमितपदजन्यत्व** (anumitapadajanya-tva) *n.* the state of being produced through the inferred, i.e. supplied word न च पार्ष्ठिकबोधस्य ··· व्युत्पत्त्यन्तरकल्पनातादवस्थम्, पार्ष्ठिकबोधस्य योग्यतत्तत्समस्तपदकल्पनयानुमितपदजन्यत्वेन व्युत्पत्त्यन्तरकल्पनानापत्तेः MīmāKau. iii(2). 39.19 (*on* ii. 1.5)

**अनुमितपरमार्थक** (anumitaparamārtha-ka) *adj.* who has conjectured the highest purpose अनुमितपरमार्थकेनार्यकाख्येन प्रजोपकारहेतोः कल्पितस्वकायस्तेनैव ··· राजान्तःपुरेष्वरमत AvantiKa. 183.6.

**अनुमितपूर्वपक्ष** (anumita-pūrvapakṣa) *adj.* wherein the *prima facie* view is inferred द्वयोरप्यधिकरणयोरनुमितपूर्वपक्षयोरुत्तरपक्षसूत्रद्वयमेतत् TantrVā. 280.13 (*on* i. 4.11)

**अनुमितप्रतिपत्ति** (anumita-pratipatti) *f.* knowledge of what is inferred अनुमितप्रतिपत्तेरेव धारणप्रयोजकत्वादिकल्पनादोषो 'नानुमिते ह्यसौ' इति न्यायात् BhaṭṭDī. ii. 100.15 (*on* iv. 1.13)

**अनुमितप्रत्यक्षबाध** (anumitapratyakṣa-bādha) *m.* contradiction (of *arthāpatti*) through inferred perception अनुमितप्रत्यक्षबाधस्तु यत्राप्तमुखे चेष्टाविशेषादर्शनेन तदवगततिक्तादिरसनिवारणं प्रतिज्ञायते, मुखवैरूप्येण हि तस्य तिक्तानुभवोऽनुमीयते Kāśi. iii. 50.7 (*on* 5(4). 67)

**अनुमितप्रामाण्य** (anumita-prāmāṇya) *adj.* whose authority is inferred अनुमितप्रामाण्येन शैवागमेन शिवस्य जगज्जन्मादिकारणत्वस्याभिधानान्नेदं लक्षणं विष्णोरुपपद्यते NyāySu.(Ja.) 108A.8 (*on* i. 1.3)

**अनुमितभावितवह्नि** (anumitabhāvita-vahni) *m.* fire which is either inferred or understood न चानुमितभावितवह्निसाक्षात्कारवत् प्रतिभात्वेनास्याप्रामाण्यम् (ब्रह्मणः) Bhām. 42.13 (*on* i. 1.0)

**अनुमितभाविलिङ्गक** (anumitabhāviliṅga-ka) *adj.* having, i.e. based on a future probans which is inferred असाधारणकारणगिरा कारणमभिमतमिति चेन्न। अनुमितभाविलिङ्गकभाविलिङ्ग्यनुमितावसतो लिङ्गस्य करणत्वासंभवेन ज्ञायमानकरणकत्वाभावात् KhaṇḍanKhā. 589.13.

**अनुमितमरणप्रत्यासत्ति** (anumita-maraṇapratyāsatti) *adj.* who has inferred the proximity of death (to oneself) जातमात्र एव हि बालको मारकवस्तुदर्शनाद् वेपमानः कम्पविशेषादनुमितमरणप्रत्यासत्तिस्ततो बिभ्यदुपलभ्यते TattvVai. 66.10 (*on* 2.9)

**अनुमितमाधुर्य** (anumita-mādhurya) *n.* sweetness which is inferred इतरे स्पष्टताहेतुमाचख्युर्वृत्तिनिर्गमम्। न चानुमितमाधुर्यं स्पष्टमास्वादितं यथा VedāntSiSūMañ. 1.117.

**अनुमितमूलत्व** (anumitamūla-tva) *n.* the state of being what is rooted in, i.e. based on the inferred श्रुतस्य पृथगनुपादानं तस्य दृष्टानुमितमूलत्वेन ताभ्यामेव चरितार्थत्वात् TattvVai. 13.7 (*on* 1.7)

**अनुमितयाग** (anumita-yāga) *m.* sacrifice which is inferred कथमत्र … ऐन्द्रवायवादिवाक्येभ्य एव द्रव्यदेवतासंबन्धाभिधानात्तद्वारानुमितयागा विधीयन्ते VedāntKa. 367.25 (*on* iii. 2.2); MayūMāli. 544.22 (*on* vii. 3.14)

**अनुमितयागविधान** (anumitayāga-vidhāna) *n.* prescription of the sacrifice which is guessed द्रव्यदेवतासंबन्धेनानुमितयागविधानवत् … अनुमितान्तरालदेशविधानम् LaCandr. 700.14.

**अनुमितलक्षितप्रापण** (anumitalakṣita-prāpaṇa) *n.* obtainment, i.e. knowledge of what is indicated through the inferred (*prakṛti*) विकृतिर्ह्युपकाराकाङ्क्षिगा(?णी) क्लृप्तोपकारान् पदार्थाननुमितलक्षितप्रापणेन गृह्णाति ṬupṬ. 42.11 (*on* iv. 4.7)

**अनुमितवचन** (anumita-vacana) *n.* expression which is inferred सप्तमे … इत्यादिप्रत्यक्षवचनेन … अनुमितवचनेन च सामान्यतोऽतिदेशः NyāyMāVi. 5.14 (*on* i. 1.0); MayuMāli. 548.3 (*on* vii. 4.1)

**अनुमितवचनातिदेश** (anumitavacanātideśa) *m.* transference (from *prakṛti* to *vikṛti*) through inferred words अतिदेशो द्विविधः …। आद्योऽपि द्विविधः प्रत्यक्षवचनातिदेशोऽनुमितवचनातिदेशश्च BhaṭṭDī. ii. 340.8 (*on* vii. 1.1)

**अनुमितवत्** (anumita-va(n)t) *adj.* (predi.) who has inferred न ह्ययं कचिदपि तज्जातीयत्वेन प्रामाण्यं नानुमितवान् NyāyVārPari. 103.5.

**अनुमितवह्निसाक्षात्कारवत्** (anumitavahnisākṣātkāra-vat) *adv.* like the direct perception of fire which is inferred न ब्रह्मसाक्षात्कारः … चित्तमेव ब्रह्मणि साक्षात्कारवतीं बुद्धिवृत्तिं समाधत्ते। सा च नानुमानित(v.l. नानुमित)वह्निसाक्षात्कारवत् प्रातिभत्वेनाप्रमाणम् Bhām. 704.21 (*on* iv. 1.1)

**अनुमितवाक्य** (anumita-vākya) *n.* sentence or statement which is inferred त्रयो यागाः …। तेषु द्वादशाहिकीतिकर्तव्यता युक्ता। कुतः। अनुमितवाक्येन तत्प्रापणात् NyāyMāVi. 392.20 (*on* vii. 4.3); न च विशिष्टोद्देशः अनुमितवाक्ये तस्यादोषत्वात् BhaṭṭCan. 88.6 (*on* xv. 3.3)

**अनुमितवाक्यत्व** (anumitavākya-tva) *n.* the state of being the sentence or statement which is inferred अनुमितवाक्यत्वाच्च न विशिष्टोद्देशः BhaṭṭDī. i. 310.2 (*on* iii. 4.6)

**अनुमितवाचकभाव** (anumita-vācakabhāva) *adj.* whose denotative nature is conjectured शब्दः … असाधुरपि यावत् तद्वशादनुमितवाचकभावोऽभिमतमर्थमभिदधात्येव VyaktiVi. 120.26.

**अनुमितविधि** (anumita-vidhi) *m.* injunctive statement which is inferred प्रसञ्जकेनोपजीव्येनानुमितविधिना प्रत्यक्षनिषेधेन च समानबलतया 'चतुस्त्रिंशत्–' इत्ययं मन्त्रोऽश्वस्याध्रिगुप्रैषे विकल्प्यते NyāyMāVi. 468.9 (*on* ix. 4.2)

**अनुमितविशेष** (anumita-viśeṣa) *adj.* whose particularity is conjectured यत्र प्रकरणादिप्रतिपत्त्यानुमितविशेषो वाच्योऽर्थः प्रतीयमानस्यार्थस्य लिङ्गभावमुपयाति सोऽप्यनुमानस्यैव मार्गः VyaktiVi. 130.22.

**अनुमितवृष्टि** (anumita-vṛṣṭi) *adj.* who has inferred (the advent of) rain पिपीलिकाण्डसंचारचेष्टानुमितवृष्टयः। भवन्ति पथिकाः पर्णकुटीरकरणोद्यताः NyāyMañ. i. 107.10.

**अनुमितवेदमूलकत्व** (anumitavedamūlaka-tva) *n.* the state of having an inferred Vedic text as the basis स्मार्ताचाराणामप्यनुमितवेदमूलकत्वेन (ते) वैदिकत्वाविशेषादुपनीतेनैव कर्तव्याः ŚivārkaMaDī. i. 489.18 (*on* i. 3.39); अस्माभिरनुमितवेदमूलकत्वानङ्गीकारात् प्रत्यक्षवेदविहितत्वमपि लौकिकसाधारणमिति शङ्कते MayūMāli. 547.3 (*on* vii. 4.1)

**अनुमितशब्द** (anumita-śabda) *m.* word which is inferred ममापि श्रुतशाब्दबोधे लघुव्युत्पत्तितो वृत्ते पश्चादेव … पार्ष्टिको बोधोऽनुमितशब्दादनुमानाद्वेति न कश्चिद्विरोधः MīmāKau. iii(2). 42.21 (*on* ii. 1.5)

**अनुमितशस्त्रग्रहण** (anumita-śastragrahaṇa) *adj.* whose wielding of arms is permitted 'वैणवीं धारयेद् यष्टिम्' इति विधानादनुमितशस्त्रग्रहणाः श्रोत्रियाः ManuBh. ii. 216.17 (*on* 8.348)

**अनुमितश्रुति** (anumita-śruti) *f.* Vedic statement which is inferred स्मृतिभिर्मूलश्रुत्यनुमानात् प्रत्यक्षानुमितश्रुत्योश्च … मानम् VedāntKa. 229.9 (*on* ii. 1.1); NyāyMāVi. 29.1 (*on* i. 3.3); अनुमितश्रुतेरपि प्रत्यक्षश्रुतिबाधकत्वपत्तेः GuruCandr. i. 301.23; अनुमितश्रुतीनामेव च तदा धर्मप्रमाजनकत्वोपपत्तेः MīmāKau. iii(1). 9.25 (*on* i. 3.2); iii(1). 93.16 (*on* i. 3.14)

**अनुमितश्रुतिजनितज्ञान** (anumitaśrutijanita-jñāna) *n.* knowledge produced from the inferred Vedic statement विधेयप्रतिषेध्ययोः … उभयोः प्रामाण्याङ्गीकरणेन प्रयोगान्तरे चोभयानुग्रहः स्यादित्येवं विकल्पाश्रयणेऽप्यत्यन्तविरोधाभावात्प्रत्यक्षानुमितश्रुतिजनितज्ञानयोश्च … उभयप्रामाण्यमुपपत्स्यते TantrVā. 82.21 (*on* i. 3.3)



**अनुमितश्रुतिमूलत्व** (anumitaśrutimūla-tva) *n.* the state of having the inferred Vedic statement as the basis नह्येकस्या एव स्मृतेः प्रत्यक्षश्रुत्यर्थापरिग्रहकालेऽनुमितश्रुतिमूलत्वं तत्परिग्रहाश्रयणे तु भ्रान्त्यादिमूलत्वमिति विरुद्धावधारणावकल्पते TantrVā. 94.6 (*on* i. 3.3); 162.10 (*on* i. 3.10)

**अनुमितश्रुत्यपेक्षा** (anumitaśruty-apekṣā) *f.* [Inst.] in comparison with the inferred Vedic statement अनुमितश्रुत्यपेक्षया प्राबल्यं प्रत्यक्षविषयश्रुतित्वेन प्रकृते कथम् GuruCandr. i. 302.10.

**अनुमितसत्त्व** (anumita-sattva) *adj.* whose existence is inferred or supplied (शब्दाः) उत्तरं तु शास्त्रदृष्ट्या प्रकृतिप्रत्ययादिसद्भावादनुमितसत्त्वाः Pradī. i. 69A.10 (*on* i. 1.0)

**अनुमितसामर्थ्याभिधान** (anumita-sāmarthyābhidhāna) *adj.* which is denotative of the capacity which is inferred (पदानि) शिष्टानि … दृश्यमानैकवाक्यतान्यथानुपपत्त्यानुमितसामर्थ्याभिधानानि सन्ति TantrVā. 848.15 (*on* iii. 3.14)

**अनुमितहिम** (anumita-hima) *m.* cold which is inferred (falsely) मिथ्यात्वश्रुतेः (अग्निर्हिमस्य भेषज) मिति श्रुतेरनुमितहिमनिवारणशक्त्यनुवादित्ववदनुमितासत्यमिथ्यात्वानुवादित्वोपपत्तेः Nyāyāmṛ. 122B.4.

**अनुमितात्मक** (anumitātma-ka) *adj.* of the nature of being what is inferred निमित्तभूताः साधुत्वे शास्त्रादनुमितात्मकाः। केचित् पदार्था वक्ष्यन्ते VākyaPa. 3(4).2.

**अनुमितात्मास्तित्व** (anumitātmāstitva) *adj.* who has inferred the (separate) existence of the soul (क्षेत्रज्ञः) यथाप्रसिद्धितस्तु विधिप्रतिषेधशास्त्रश्रवणान्यथानुपपत्त्या अनुमितात्मास्तित्वः आत्मविशेषानभिज्ञः कर्मफलसंजाततृष्णः श्रद्दधानतया च प्रवर्तते GītāBh.(Śaṅ.) 366.13 (*on* 13.2)

**अनुमितानुमा** (anumitānumā) *f.* inference preceded by, i.e. based on (middle term) which is inferred प्रत्यभिज्ञया … नियनविषयतानुमा, प्रत्यक्षपूर्विकानुमापूर्विकाया बलीयसी। न च तद्ग्रहो भ्रमः, अनुमितानुमया भेदासिद्धेः NayaVi. 235.7 (*on* i. 1.7)

**अनुमितानुमान** (anumitānumāna) *n.* inference precede by, i.e. based on (middle term) which is inferred दर्शनार्थादर्थापत्तिर्विरोध्येव श्रवणादनुमितानुमानम् PadārthaSaṁ. 223.1; अनुमितानुमानेन लिङ्गलिङ्गिनोरुभयोरपि प्रत्यक्षाविषयत्वान्नास्ति प्रत्यक्षपूर्वकत्वम् TātpaṬ.(U.) 142.22 (*on* 4.90); 345.20 (*on* 5(4).170); दर्शनशब्द उपलब्धिवचनो न चाक्षुषप्रतीतिवचनोऽनुमितानुमानस्यापि संभवात् NyāyKa. 200.6; यच्चानुमितानुमानं न प्रत्यक्षपूर्वकमित्युक्तं तदप्ययुक्तम् Kāśi. i. 244.13 (*on* 4.97); धूमानुमितादेव वह्नेरुष्णत्वेऽनुमिते तद्विपरीतपक्षोऽनुमितानुमानेन बाध्यते Kāśi. iii. 50.28 (*on* 5(4).68); न चानुमितानुमानमपि धर्मे संभवति NyāyRa. 164.16 (*on* 4.97); अनुमितानुमानादौ परामर्शस्यालिङ्गजत्वेन तद्व्यापारवत्वा(?त्त्वा)नुपपत्तेः KhaṇḍanKhā. 517.18; साध्यव्यापकोत्कर्षः, तथाप्यनुमितानुमान इव प्रथमसाध्यस्य स्थैर्यमेव NyāyKu. 91.2; (शिष्टः) स एव वेदानुमापकोऽस्तु किमनुमितानुमानेन TattvCin. i. 111.3; iv(1). 143.4; श्रुतार्थापत्तिरप्यनुमितानुमानम् Upask. 406.5 (*on* ix. 2.5)

**अनुमितानुमिति** (anumitānumiti) *f.* conjecture based on what is conjectured 'गच्छ गच्छसि चेत् कान्ते' त्यत्र तु जन्मना मृत्यनुमितिः। प्रियामृतिहेतुत्वाच्च गमनं न कार्यमित्यनुमितानुमितिरेव न तु वाक्ये लक्षणा Nyāyāmṛ. 461A.6.

**अनुमितानुमेय** (anumitānumeya) *adj.* conjecturable based on what is conjectured यच्च तदनुमितं धर्मान्तरं तत् सर्वसहत्वस्योपात्तस्य साधनं न रामत्वमेवेत्यनुमितानुमेयं तत् VyaktiVi. 118.9; 9.27.

**अनुमितान्तरालदेश** (anumitāntarāladeśa) *m.* intermediate region which is guessed आग्नेयोऽष्टाकपाल इत्यादौ द्रव्यदेवतासंबन्धेनानुमितयागविधानवत् यूपमानाद्युद्देशेनानुमितान्तरालदेशविधानम् LaCandr. 700.15.

**अनुमिताभिधान** (anumitābhidhāna) *n.* reference to or mention of what is inferred काममनुमीयतां तथापि कथं विधेयमित्याशङ्क्य द्रव्यदेवतासंबन्धानुमितयागवदनुमिताभिधानं विधेयमित्याह MayūMāli. 544.22 (*on* vii. 3.14)

**अनुमिताभिमतार्थसिद्धि** (anumitābhimatārthasiddhi) *adj.* who has guessed, i.e. known the fulfilment of the desired object सुमते रघुवंशकेतुराकर्ण्य वाक्यमुचितार्थविलासगर्भम्। तत्याज खेदमभिगर्जति वारिवाहे बर्ही यथा त्वनुमिताभिमतार्थसिद्धिः YogVā. i. 11.38.

**अनुमितार्थ** (anumitārtha) *adj.* who has inferred the fact यस्मा–

गमस्याश्रद्धेयार्थो वक्ता, यथा यान्येव दश दाडिमानि तानि षडपूपा भविष्यन्तीति, न दृष्टानुमितार्थो यथा चैत्यं वन्देत स्वर्गकाम इति स आगमः प्लवते TattvVai. 13.11 (*on* 1.7); *m.* object which is inferred, i.e. known through inference स्वयमनुमितार्थे परस्याप्यनुमानबुद्धिर्येन वाक्येनोत्पद्यते तद् वाक्यं साधनमित्युच्यते NyāyRa. 361.18 (*on* 5(4). 53); NyāySu.(Ja.) 187B. 3 (*on* i. 4.2)

**अनुमितार्थबोधकत्व** (anumitārthabodhaka-tva) *n.* the state of being a conveyor of the referent which is (already) inferred वाक्यार्थे निश्चिते सति पश्चात्तदेव वाक्यमुद्बुद्धशक्तिकं सत्तस्यार्थस्य वाचकम्। तस्यां दशायामनुमितार्थबोधकत्वादनुवादकमेव TantrRaha. 37.11.

**अनुमिताश्रय** (anumitāśraya) *adj.* whose locus is inferred श्वैत्यस्यानुमिताश्रयस्य च धावनसमानाश्रयत्वमनुमिनोति चेत्, श्वेतोऽश्वो धावतीति धीरन्यथा नेति यत्किंचिदेतत् TantrRaha. 28.2.

**अनुमिताश्वाश्रयत्व** (anumitāśvāśraya-tva) *n.* the state of having an inferred horse as locus श्वैत्यस्य अनुमिताश्वाश्रयत्वमध्यवस्यति तदाप्यश्वादन्यत्र न संभावितमिति परिशेषादेव श्वेतोऽश्व इति धीः TantrRaha. 27.30.

**अनुमितासत्यमिथ्यात्व** (anumitāsatya-mithyātva) *n.* falsity of the unreality which is inferred मिथ्यात्वश्रुतेः (अग्निर्हिमस्य भेषज)मिति श्रुतेरनुमितहिमनिवारणशक्त्यनुवादित्ववदनुमितासत्यमिथ्यात्वानुवादित्वोपपत्तेः Nyāyāmṛ. 122B.4.

**अनुमितास्तित्व** (anumitāstitva) *n.* existence which is inferred पुरुषोऽपि सूक्ष्मः तस्याधुनानुमितास्तित्वं प्रतिक्रि(? ज्ञा)यते SāṁkhyaKāBh. 13.4 (*on* 17)

**अनुमिति** (anu-miti) *f.* **1A** syllogism **B** inference as a means of knowledge **C** inferential knowledge (sometimes defined as produced from *liṅgaparāmarśa*) **2A** conjecture, guess **B** conjecture as *īrṣyāmāna* **3** name of a character in an allegorical play **4** means of establishing ownership **1A** syllogism अन्यथानुमितौ च ज्ञशक्तिवियोगात् BrahmSū. ii. 2.9; अन्यथा प्रकारान्तरेणानुमितावनुमाने क्रियमाणे साम्यावस्थितानामपि वैषम्यं भवति BrahmSūBh.(Bhā.) 112.14 (*on* ii. 2.9); दूषितप्रकारातिरिक्तप्रकारान्तरेण प्रधानानुमितौ BrahmSūBh.(Rā.) 475.11 (*on* ii. 2.7); VedāntKau. 183.13 (*on* ii. 2.9); VedāntPāSau. 183.10 (*on* ii. 2.9); **1B** inference as a means of knowledge वस्तुभेदे प्रसिद्धस्य शब्दसाम्यादभेदिनः। न युक्तानुमितिः पाण्डुद्रव्यादिवद् हुताशने PramāVār. 2.12; नियोगं शब्दतो बुद्ध्वा योऽपि श्रोता प्रवर्तते। तस्याप्यनुमितेरेव शब्दार्थप्रत्ययो भवेत् BṛĀraUBhVā. (Sambandha.) 738; पक्षवृत्तित्वे सत्यनुमितिविरोधिसंबन्धाव्यावृत्तिरनैकान्तिकः TattvCin. ii(1). 801.3; ii(1). 816.2; अनुमितेः प्रामाण्यमन्ययानुमित्या, तस्या अप्यन्ययेत्यनवस्था स्यात् SarvaDaKau. 120.17; यदा अनुमितिरनुमानमिति व्युत्पत्त्या साध्यज्ञानं प्रमाणं तदा तदनन्तरभाविनी हानादिबुद्धिः फलम् TantrRaha. 12.1; अनुमितेऽपि (v. l. °तेरपि) वह्न्यादौ नास्तीति प्रतीत्यनुदयात् SiddhāBi. 65.6; **1C** inferential knowledge (sometimes defined as produced from *liṅgaparāmarśa*) पूर्वापरादिबुद्धिभ्यो दिगेवमनुमीयते। क्रमेण ज्ञानजात्या च मनसोऽनुमितिर्मता TattvSaṁ. 625; भक्तिश्च शिवभक्तेषु श्रद्धा तच्छासके विधौ। अनेनानुमितिः शिष्टहेतोः स्थूलधियामपि MṛgendraT. i. 5.5; अनुमितेरर्थविषयत्वनिराकृतिः। प्रतिभासभिदायाः किमेकस्यानेकतो ग्रहात् NyāyVi. 2.183; बाधो भवत्यनुमितेर्व्यवधानयोगात् SaṁkṣeŚā. 2.123 (ii. 77.6); अनुमितिरनुमानमिति, प्रमितिः प्रमाणमिति भावव्युत्पत्तिराश्रीयते PrakaPañ. 228.7; अनुमितिरनुमानम् Kiraṇā. 289.11; 327.9; प्रमापि द्विविधा प्रत्यक्षम् अनुमितिश्च SaptaPa. 32(11); अथानुमितिमभ्युपैपि KhaṇḍanKhā. 162.9; 523.19; अनुव्यवसायानुमित्युपमितीनां स्वतःप्रमात्वस्य परैरप्यङ्गीकारात् TattvPradī.(Ci.) 117.4; अविनाभावजनितसम्यक्परोक्षानुभवः अनुमितिः तत्साधनमनुमानम् TarkSaṁ.(Ā.) 91.17; अनुमितिं प्रति करणत्वात्। अग्न्यादिज्ञानमनुमितिः। तत्करणं धूमादिज्ञानम् TarkBhā.(Ke.) 36.14; अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यं न्यायः TattvCin. ii(1). 691.2; ii(1). 698.1; व्याप्तिधीजन्यं ज्ञानमनुमितिः VedāntRaMañ. 1.4 (60.25); प्रत्यक्षं त्वत्र साक्षात् प्रतिपत्, अनुमितिर्व्याप्यतो व्यापके धीः TattvMu. 4.31; फलप्रामाण्यपक्षेऽनुमितिरनुमेति भावसाधनोऽनुमाशब्दः NyāySu.(Ja.) 259A.3 (*on* ii. 1.2); 261A.9 (*on* ii. 1.2); लिङ्गज्ञानजन्यं लिङ्गिज्ञानमनुमितिः TarkKau. 11.4; 15.15; यत्र धूमादेरतीतत्वमनागतत्वं वा तत्र कथमनुमितिरिति चेन्न Upask. 392.10 (*on* ix. 2.1); 66.17 (*on* ii. 1.1); रजतांशस्तु कथं स्मृतिः ... नाप्यनुमितिः। लिङ्गाभावात् TantrRaha. 3.12; उक्तं हि विवरणे। अज्ञानस्य ... ज्ञानेन निवृत्तिबाध इति। अनुमितिं प्रति मनसो मनस्त्वेन हेतुत्वेऽपि ... ज्ञानत्वेनानिवर्तकत्वात् Nyāyāmṛ. 19A.6; 619A.8; अनुमितिस्तु पौरुषेयो बोधः SāṁkhyaPraBh. 49.39 (*on* 1.100); अनुभूतिश्चतुर्विधा। प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे BhāṣāPa. 52; TarkSaṁ.(A.) 24.21; न च महानसीयधूमेन्द्रियसंयोगेन तत्रैव व्याप्तिग्रहे पर्वतीयधूमादनुमितिर्न स्यात् AdvaiSi. 338.1; एकमेव कर्तारं विषयीकुर्वाणानुमितिर्भवति उतैकत्वविशेषितं कर्तारं विषयीकुर्वाणा ŚivārkaMaDī. i. 147.20 (*on* i. 1.3); ii. 91.7 (*on* ii. 2.24); अननुभवेऽपि संस्कारं संनिकर्षं परिकल्प्य इन्द्रियसंनिकर्षजन्यतया तत्र काल्पनिकापरोक्ष्याभ्युपगमे अनुमित्यादावपि लिङ्गज्ञानादिकं संनिकर्षं परिकल्प्य तदङ्गीकारापत्तेः SiddhāLeSaṁ. 220.5; 221.3; अनुमित्यनङ्गत्वे अनुमितिं प्रत्युक्तरीत्या प्रयोजकत्वाभावे GuruCandr. i. 3.4; LaCandr. 27.23; 672.40; कथमज्ञानादीनामध्यस्ततया प्रतीतिः। न तावदपरोक्षा, इन्द्रियाजन्यत्वात्। नाप्यनुमितिः, लिङ्गाद्यननुसंधानेऽपि भावात् SiddhāTa. 5.19; अनुमितिकरणमनुमानम्। अनुमितिश्च व्याप्तिज्ञानत्वेन व्याप्तिज्ञानजन्या VedāntPari. 143.2; प्रमा ... चतुर्विधा, प्रत्यक्षानुमित्युपमितिशाब्दभेदात् Tarkāmṛ. 15.8; व्याप्यस्य व्याप्यत्वानुसंधानाद्व्यापकविशेषप्रमितिरनुमितिः YatīndraDī. 18.3; घटो न घट इत्याद्यनुमितेः ... वारणाय ... घटत्वादिभेदस्य हेतुत्वान्तरकल्पनमनादेयमेव VyutpaVā. 57.12; परामर्शजन्यं ज्ञानमनुमितिः TarkSaṁ.(A.) 34.9; ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्। अनुमित्युपमितिशाब्दबोधार्थापत्तिस्मृतीनां ज्ञानकरणकत्वात् BhāṭṭCin. i. 15.17 (*on* i. 1.4); i. 49.29 (*on* i. 1.4); स्वव्यापारस्यापि वर्तमानदशायां व्यासङ्गादिना स्वयमप्रतिसंधानेऽपि ततः कार्येणानुमितौ भवत्येव लिट् VaiyāBhū. 75.17 (*on* 22); 87.17 (*on* 22); 277.27 (*on* 65); गुणः ... अनुमितौ सल्लिङ्गपरामर्शः MaṇiKa. 10.1; व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः MaṇiKa. 30.2; **2A** conjecture, guess आगमदुष्टाभ्यामनुमित्या च तत्त्वतः। स्त्रीणां विदित्वाभिप्रायं वर्तेताशु यथोचितम् BhaviP. 29A.29 (i. 8.55); केवलमुपायवैलक्षण्यान्नामान्तरं प्रतिपद्यतां दर्शनानुमितिश्रुत्युपमितिप्रतिभानादिनामान्तरवत् Kāvyānu.(He.) 73.27; नृणां पश्यत्यस्य क्वचन विशिखान् किं तु पतितद्विषद्वक्षःश्वभ्रैरनुमितिरमून् गोचरयति NaiṣC. 12.49; Subhāṣi. 2523; स चन्द्र एवेत्यनुमितिरेवेयम् SāhiDa. 267.5; शब्ददोषकष्टस्यान्वयबोधविरोधिता, अस्य तु तस्मिन्नपि रसहानिरिति विशेषः। अनैकान्तिकबाधयोरिवानुमितौ AlaṅkāŚe. 22.4(4); विभावादिभिः कृत्रिमैरप्यकृत्रिमतया गृहीतैः संयोगादनुमानाद्रसस्य रत्यादेर्निष्पत्तिरनुमितिः RasGaṅ. 35.8; 640.8; प्रमाणालंकारविवेचनम्।... प्रमाणालंकृतिस्तत्र चतुर्धा सा प्रकीर्तिता। प्रमा प्रत्यक्षमनुमितिरुपमितिः शाब्दं च AlaṅkāMañ. 222.13; **2B** conjecture as *īrṣyāmāna* भोगाङ्कगोत्रस्खलनोत्स्वप्नैरनुमितिस्त्रिधा RasāSu. 181.17 (2.205); 181.8(2.204); पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते। ईर्ष्यामानो भवेत्स्त्रीणां तत्र त्वनुमितिस्त्रिधा SāhiDa. 176.8; **3** name of a character in an allegorical play अस्तु भगवत्याः श्रुतेरपत्यकृतिका पक्षतापरामर्षयोरपत्यमनुमितिर्नाम AmṛUda. 1.27(9); 2.19(4); 2.28(5); **4** means of establishing ownership, cf. **अनुमितिसामग्री** [ŚabdaRaSaK. 227.14 gives *anumiti* as the meaning of *anumā*]

**अनुमितिकरण** (anumiti-karaṇa) *n.* **1** efficient cause or means of inferential knowledge यत्किंचित्तज्जनकं तदेव तत्रानुमितिकरणमास्तामिति चेन्न KhaṇḍaKhā. 497.25; अनुमितिकरणमिति चेत्, तर्हि ... सम्यगविनाभावेन — इत्यादिविशेषणवैयर्थ्यम् TarkSaṁ (Ā.) 93 16; अनुमितिकरणमनुमानम् TarkKau. 10.24; VedāntPari. 143.3; Tarkāmṛ. 17.1; TarkSaṁ.(A.) 34.9; लिङ्गमेवानुमितिकरणम् Upask. 392.8 (*on* ix. 2.1); SiddhāMu. 8.17 (*on* 15); 36.1 (*on* 67); अनुमितिकरणं च व्याप्तिज्ञानम् VedāntPari. 144.1; **2** efficient cause or means of conjecture or guess अथानुमानालंकारः — अनुमितिकरणमनुमानम् RasGaṅ. 640.5.

**अनुमितिकरणता** (anumitikaraṇa-tā) *f.* **1** the state of being the efficient cause or means of conjecture or guess नासावुत्पादकता अनुमितिकरणताया अतिशेते RasGaṅ. 633.5; **2** the state of being efficient cause or means of inferential knowledge लिङ्गज्ञानस्यानुमितिकरणतामते धूमेन वह्निमनुमिनोतीत्यादौ धूमादिपदं तज्ज्ञानपरम् VyutpaVā. 163.1.

**अनुमितिकरणत्व** (anumitikaraṇa-tva) *n.* **1** the state of being the efficient cause or means of inferential knowledge यत्किंचित्तज्जनकं तदेव तत्रानुमितिकरणमास्तामिति चेन्न। तथेन्द्रियादेरनुमितिकरणत्वापत्तेः KhaṇḍanKhā. 498.1; **2** the state of being the efficient cause or means of conjecture or guess अनुमितिकरणत्वेन सामान्यविशेषभावाभ्यां चानालिङ्गितः प्रकृतार्थोपपादकत्वेन विवक्षितोऽर्थः काव्यलिङ्गम् RasGaṅ. 628.5.

**अनुमितिकारण** (anumiti-kāraṇa) *n.* cause of inferential knowledge भावादननुमानेऽपि न चानुमितिकारणम्। द्वैरूप्यमिव लिङ्गस्य त्रैरूप्यं नास्त्यतोऽनुमा TattvSaṁ. 1458; अनुमितिकारणतृतीयलिङ्गपरामर्शजनकावयवत्वमुपनयत्वम् TattvCin. ii(1). 749.1; अक्षेणानुमितिकारणस्य पक्षसाध्यहेतुव्याप्त्यादेः ... ग्राह्यत्वात् Nyāyāmṛ. 104B. 7; प्रतिबिम्बादिरूपलिङ्गज्ञानमनुमितिकारणम् LaCandr. 445.40.

**अनुमितिकारणता** (anumitikāraṇa-tā) *f.* the state of being the cause of inferential knowledge पक्षे लिङ्गज्ञानस्यानुमितिकारणतां गृह्णतः प्रमाणस्यानुग्राहको लाघवतर्कः ŚivārkaMaDī. i. 147.27 (*on* i. 1.3);

जनकज्ञानविषयधूमादेश्चानुमितिकारणतावच्छेदकतया प्रयोजकत्वमक्षतमेव VyutpaVā. 163.11; सर्वेषु परामर्शेष्वनुमितिकारणतावच्छेदकतया परामर्शत्वं जातिः BhaṭṭCin. i. 29.5 (*on* i. 1.4)

**अनुमितिकारणत्व** (anumitikāraṇa-tva) *n.* the state of being the cause of inferential knowledge पक्षधर्मता त्वदिष्टा केवलं सिद्धसाधनपरिहारायानुमितिकारणत्वेनैष्टव्या KhaṇḍanKhā. 642.12.

**अनुमितिकारणसंस्कार** (anumitikāraṇa-saṁskāra) *m.* impression as the cause of inferential knowledge न च संस्कारस्याप्यनुमितिजनकत्वे न्यायप्रयोगस्थले उपाध्युद्भावनं नियमतो न स्यात्, तत्कार्यस्य व्यभिचारज्ञानस्यानुमितिकारणसंस्काराप्रतिबन्धकत्वादिति वाच्यम् LaCandr. 339.34.

**अनुमितिकारणीभूत** (anumitikāraṇī-bhūta) *adj.* which has become the cause of inferential knowledge अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम् … हेत्वाभासत्वम् TattvCin. ii(1).763.1; BhaṭṭCin. i. 31.18 (*on* i. 1.4); TattvCin. ii(1).725.3; नापि संबन्धमात्रं व्याप्तिः … अनुमितिकारणीभूतज्ञानविषयव्याप्तेरेव निरूपयितुमुचितत्वात् Upask. 150.17 (*on* iii. 1.14); BhaṭṭCin i. 26.26 (*on* i. 1.4)

**अनुमितिकाल** (anumiti-kāla) *m.* **A** time of inference संबन्धस्य प्रत्यक्षतोक्ता पूर्वं, न त्वनुमितिकाले TātpaṬ.(Vā.) 195.4 (*on* i. 1.5); **B** time of inferential knowledge न चानुमितिकाले तदनुभवोऽस्ति TarkSaṁ.(Ā.) 90.19; अनुमितिकाले सतः पक्षतावच्छेदकस्य समकालत्वं साध्ये भाति GuruCandr. i. 23.15; ii. 37.4.

**अनुमितिक्रियाव्याप्त** (anumitikriyā-vyāpta) *adj.* pervaded by the action of inferring यल्लिङ्गमनुमेयेन संबद्धम् अनुमितिक्रियाव्याप्तमिष्टं तत्साधर्म्यविशिष्टेन धर्मिणा यत्संबद्धसंयुक्तं समवेतं विशेषणीभूतं च तस्मिन् वर्तते Kiraṇā. 290.13.

**अनुमितिक्रियाहेतु** (anumitikriyā-hetu) *m.* cause of the act of inferring लिङ्गपरामर्शोऽनुमितिक्रियाहेतुरितीन्द्रियकरणिकानुमितिः प्राप्ता KhaṇḍanKhā. 523.19.

**अनुमितिगम्य** (anumiti-gamya) *adj.* knowable through inference गवयगतसादृश्यप्रतियोगित्वम् … नानुमितिगम्यं तल्लिङ्गस्यापि तद्गतत्वेनाप्रत्यक्षस्य लिङ्गान्तरगम्यत्वेनानवस्थानात् TattvCin. iii. 47.2.

**अनुमितिगोचरेच्छा** (anumitigocarecchā) *f.* desire referring to inference सिषाधयिषा तु तत्पक्षसाध्यकानुमितिगोचरेच्छा MaṇiKa. 38.7.

**अनुमितिजनकता** (anumitijanaka-tā) *f.* the state of being the producer of the inferential knowledge अनुमितिजनकतावच्छेदकजातेः … विशेषहेतुतायां निश्चयत्वाप्रवेशस्य तुल्यत्वात् BhaṭṭCin. i. 29.17 (*on* i. 1.4); समूहालम्बनात्मकपरामर्शेऽनुमितिजनकतावच्छेदकजातिर्न कल्प्यते BhaṭṭCin. i. 29.21 (*on* i. 1.4); i. 30.18 (*on* i.1.4)

**अनुमितिजनकत्व** (anumitijanaka-tva) *n.* the state of being the producer of inferential knowledge संस्कारस्याप्यनुमितिजनकत्वे न्यायप्रयोगस्थले उपाध्युद्भावनं नियमतो न स्यात् LaCandr. 339.33.

**अनुमितिजनकत्वासंभव** (anumitijanakatvāsambhava) *m.* impossibility of the state of being the producer of inferential knowledge न च स्मृतिरूपपरामर्शस्थले अनुमित्यजनकसंस्कारव्यवहितस्य पूर्वानुभवरूपपरामर्शजनकज्ञानस्यानुमितिजनकत्वासंभवः ŚivārkaMaDī. i. 166.12 (*on* i. 1.4)

**अनुमितिजनकपरामर्श** (anumitijanaka-parāmarśa) *m.* consideration of (*hetu*) which produces inferential knowledge प्रतिवादिनं प्रत्यसिद्धो हेतुर्न प्रयोक्तव्यः, तत्र तस्यानुमितिजनकपरामर्शासंभवात् LaCandr. 249.14.

**अनुमितिजनकपरामर्शीय** (anumitijanakaparāmarś-īya) *adj.* belonging to the consideration of (*liṅga*) which produces inferential knowledge (द्रव्यत्वादिलिङ्गकपर्वतो वह्निमानित्याद्यनुमितौ द्रव्यत्वादिव्यापकत्वाद्यभावादिति चेन्न) अनुमितिपरामर्शयोः … अनुमितिविधेये तादृशविषयत्वस्यानुमितिजनकपरामर्शीयस्य सत्त्वानियमेऽपि अनुमातृपुरुषीयसंशयादिपुरुषान्तरीयस्मरणादिरूपज्ञानान्तरीयस्य नियमेन सत्त्वात् LaCandr. 672.34.

**अनुमितिजन्यत्व** (anumitijanya-tva) *n.* the state of being what is produced by, i.e. established through inference घटादावनुमितिजन्यत्वदर्शनादीश्वरे अनुमितिरपि सिध्येत TattvCin. ii(2). 31.4.

**अनुमितिज्ञान** (anumiti-jñāna) *n.* knowledge, viz. inferential knowledge भवति निरस्तसमस्तव्यभिचारशङ्कमनुमितिज्ञानम् NyāyVārPari. 112.2; कार्यमनुमितिज्ञानं ज्ञाप्यमनुमेयं हेतुश्च लिङ्गं तज्ज्ञानं वा TārkiRa. 269.9; अस्त्यत्र पर्वतेऽग्निरित्यनुमितिज्ञानमुत्पद्यते TarkBhā.(Ke.) 38.12.

**अनुमितिज्ञानहेतु** (anumitijñāna-hetu) *m.* cause of knowledge, viz. inferential knowledge अनुमितिज्ञानहेतूनां पक्षहेतुदृष्टान्तानां सिद्धानामपि कारणान्तरं वाच्यम् TārkiRa. 274.6.

**अनुमितितत्करणान्यतरप्रतिबन्धक** (anumititatkaraṇānyatara-pratibandhaka) *adj.* which obstructs either the inferential knowledge or its efficient cause अनुमितितत्करणान्यतरप्रतिबन्धकज्ञानविषयधर्मो हेत्वाभासत्वोपाधिः TarkKau. 13.11.

**अनुमितितत्करणान्यतरविरोधित्व** (anumititatkaraṇānyataravirodhi-tva) *n.* the state of being contradictory to either the inferential knowledge or its efficient cause अनुमितिविरोधित्वं च अनुमितितत्करणान्यतरविरोधित्वम् SiddhāMu. 41.21 (*on* 71)

**अनुमितितथात्व** (anumiti-tathātva) *n.* thatness or suchness of the inferential knowledge नापि लिङ्गं प्रमानुमितौ (हेतुः), परामर्शोऽनुमितिमात्रे हेतुः तद्विशेषप्रमात्वाप्रमात्वाभ्यामेवानुमितितथात्वात् TattvCin. ii(1). 516.2.

**अनुमितित्व** (anumiti-tva) *n.* **1** the state of being inferential knowledge अनुमितिकरणमनुमानम्, अनुमितित्वं जातिः Tarkāmṛ. 17.1; तार्किकादिमते तु घटत्वीयकर्मतांशे अनुमित्यादिरूपस्य … अस्वीकारात् … तत्कार्यता। … अनुमितित्वशाब्दत्वादिजातिस्वीकारेण … शाब्दबोधादौ प्रतिबन्धकत्वस्वीकारात् LaCandr. 669.30; अनुमिनोमीत्यनुव्यवसायसिद्धस्यानुमितित्वस्य प्रत्यक्षत्वसामानाधिकरण्ये मानाभावात् MaṇiKa. 30.4; 'शाब्दयामि' इत्यनुव्यवसायान्न स्मृतित्वमनुमितित्वं वा तज्जन्यप्रत्ययस्य VaiyāSiMañ. 60.3; **2** the state of being conjecture or guess अनुमितिकरणमनुमानम्। अनुमितिश्चानुमितित्ववती अनुमितित्वं चानुमिनोमीति मानससाक्षात्कारसाक्षिको जातिविशेषः RasGaṅ. 640.6.

**अनुमितित्वजातिमती** (anumititvajāti-matī) *adj.* (*f.*) possessing the generic property as the state of being inferential knowledge अनुमितित्वजातिमती अनुमितिः BhaṭṭCin. i. 24.13 (*on* i. 1.4)

**अनुमितित्वजातियुक्ता** (anumititvajāti-yuktā) *adj.* (*f.*) possessed of the generic property as the state of being conjecture or guess अनुमानालंकारे गैव गतार्थत्वादनयोरलंकारान्तरत्वायोगात् …। अस्तु वानुमितित्वजातियुक्तैवानुमितिः RasGaṅ. 697.15.

**अनुमितित्वजातिसिद्धि** (anumititvajāti-siddhi) *f.* establishment of the generic property as the state of being inferential knowledge न चानुमिनोमीत्यनुव्यवसायेनानुमितित्वजातिसिद्ध्या तद्विशिष्टस्य (अनुमितिज्ञानस्य) परामर्शजन्यत्वमावश्यकम् GuruCandr. i. 227.17.

**अनुमितित्वभिन्न** (anumititva-bhinna) *adj.* different from the state of being inferential knowledge अनुमितित्वभिन्नप्रमितिविभाजकधर्माविषयकेतिकरणात् अनुमितौ प्रत्यक्षत्वभ्रमदशायां पर्वतो वह्निमानिति प्रत्यक्षं जायतामितीच्छायाः न संग्रहः BhaṭṭCin. i. 28.13 (*on* i. 1.4)

**अनुमितित्ववती** (anumititva-vatī) *adj.* (*f.*) possessing (the generic property of) the state of being conjecture or guess अथानुमानालंकारः … अनुमितिकरणमनुमानम्। अनुमितिश्चानुमितित्ववती RasGaṅ. 640.6.

**अनुमितित्वव्याप्य** (anumititva-vyāpya) *adj.* pervaded by the state of being inferential knowledge शाब्दप्रमितित्वमनुमितित्वव्याप्यमिति वैशेषिकाः MaṇiKa. 68.10.

**अनुमितित्वादि** (anumititvādi) *adj.* the state of being inferential knowledge etc. तत्संबन्धस्य व्यापारत्वाच्च तादृशानामनुमितित्वादीनां प्रत्यक्षे अभावाल्लक्षणसंगतिः BhaṭṭCin. i. 15.23 (*on* i. 1.4)

**अनुमितित्वादिक** (anumititvādi-ka) *adj.* the state of being inferential knowledge etc. अनुमितित्वादिकं व्याप्त्यादिधीजन्यज्ञानत्वादिकम्, न तु जातिरूपम् LaCandr. 405.29.

**अनुमितित्वादिवत्** (anumititvādi-vat) *adv.* like the state of being inferential knowledge etc. चैतन्यधर्म एवापरोक्ष्यं, न त्वनुमितित्वादिवत् अन्तःकरणवृत्तिधर्मः SiddhāLeSaṁ. 403.3.

**अनुमितित्वासंभव** (anumititvāsambhava) *m.* impossibility of the state of being inferential knowledge पदमात्रात्पदार्थप्रत्ययस्य जायमानस्यानुमितित्वासंभवः VaiyāSiMañ. 59.30.

**अनुमितित्वासिद्धि** (anumititvāsiddhi) *f.* non-establishment of the state of being inference न च तृणारणिमणिन्यायेनानुमितिविशेषे तद्धेतुत्वमिति वाच्यम्। व्यतिरेकिसाध्येऽनुमितित्वासिद्धेः उभयसिद्धक्लृप्ततत्कारणस्याभावात् TattvCin. ii(1). 587.2.

**अनुमितिदर्शन** (anumiti-darśana) *n.* **A** knowledge of (the form of) inferential knowledge साध्यधर्मिणि अन्यतरधर्मदर्शनेन साधनधर्मदर्शनेनान्यतरस्य साध्यधर्मस्यानुमानमनुमितिदर्शनम् TātpaṬ.(Vā.) 179.22 (*on* i. 1.5); **B** observation of inferential knowledge यत्र 'पर्वतो धूमवान्' इति प्रत्यक्षं ततो 'धूमो वह्निव्याप्यः' इति स्मरणं, तत्र ज्ञानद्वयादेवानुमितिदर्शनात् SiddhāMu. 36.12 (*on* 68); पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदे-

-नानुमितिदर्शनात् SiddhāMu. 40.21 (*on* 70)

**अनुमितिदोष** (anumiti-doṣa) *m.* defect in inference न च व्याप्ति-पक्षधर्मते तत्रमिति च विद्यायान्यत्तदुत्पत्तिकारणमस्ति व्यतिरेकोपदर्शनयोग्यं तस्मादनु-मितिदोषप्रतीतिकारणत्वम् KhaṇḍanKhā. 821.17.

**अनुमितिद्वार** (anumiti-dvār) *f.* [Inst.] through inferential knowledge अप्रातिभासिकत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वनिश्चयस्यानुमिति-द्वारोक्तश्रुतितात्पर्यविषयत्वसंभवात् LaCandr. 113.2.

**अनुमितिनिमित्तत्व** (anumitinimitta-tva) *n.* the state of being the instrumental cause of inferential knowledge दाहपाककारित्वादुपादेयो वह्निरिति ज्ञानमनुमानस्य फलं, ततश्च तत्पूर्वकत्वमपि सिद्धं भवतीति भावः।··· तत्पूर्व-कत्वानुमितिनिमित्तत्वसमानधर्मदर्शनात् संशयः TātpaṬ.(Va.) 170.9 (*on* i. 1.5)

**अनुमितिनिरूपण** (anumiti-nirūpaṇa) *n.* name of a section of the Tattvacintāmaṇi (dealing with the analysis of inferential knowledge) इति ··· तत्त्वचिन्तामणौ अनुमानखण्डेऽनुमितिनिरूपणम् TattvCin. ii(1). 24.6.

**अनुमितिपक्ष** (anumiti-pakṣa) *m.* view which propounds conjecture or guess सर्वस्यैव ध्वनेरनुमानान्तर्भावाभ्युपगमः श्रेयानिति।··· यार्थान्त-राभिव्यक्तौ वः सामग्रीष्टा निबन्धनम्। सैवानुमितिपक्षे नो गमकत्वेन संमता VyaktiVi. 137.8.

**अनुमितिपरत्व** (anumitipara-tva) *n.* the state of being what refers to inferential knowledge अनुमानशब्दस्यानुमितिपरत्वे, कस्येत्यपेक्षायां प्रधानस्येति धर्मिवाचिषष्ठयन्तपदाध्याहारप्रसङ्गात् ŚrutaPra. ii. 279.26 (*on* ii. 2.1)

**अनुमितिपरंपरा** (anumiti-paramparā) *f.* series of inferential knowledges यत् सत् तत् क्षणिकमित्यादिक्षणिकत्वसाधकानुमानादपि परमाणोरनित्यता, तथा चैतावती चेदनुमितिपरंपरा तदा कथमुच्यते परमाणुर्नित्य इति Upask. 197.7 (*on* ii. 1.5); समुदाय एव लक्षणा।··· नात्रानुमितिपरंपरा, न वा प्रत्येकपदे लक्षणा AdvaiSi. 698.12.

**अनुमितिपरामर्शकार्यकारणभावविचार** (anumitiparāmarśakārya-kāraṇabhāvavicāra) *m.* title of a work, pw.

**अनुमितिपरामर्शवाद** (anumitiparāmarśavāda) *m.* title of a work, pw.

**अनुमितिपरामर्शविचार** (anumitiparāmarśavicāra) *m.* title of a work, pw.

**अनुमितिपूर्व** (anumiti-pūrva) *adj.* prior to inferential knowledge न च घटमहं जानामीति वर्तमानप्रत्ययो न स्यात् घटज्ञानस्यानुमितिपूर्वतृतीयक्षणे विनाशादिति वाच्यम् TattvCin. i. 743.10; भाविना भूतेन वा यदाकदाचिद्विद्यमाने-नापि लिङ्गेन परामर्शप्रमात्वसंभवात्रानुमितिपूर्वसमये तत्प्रमात्वानुरोधेन लिङ्गस्य सत्त्वं कारणत्वं वा TattvCin. ii(1). 548.2; साध्यस्यानुमितिपूर्वकालापेक्षया अनुमिति-काले विशेषाभावः GuruCandr. i. 166.14.

**अनुमितिप्रतिकूल** (anumiti-pratikūla) *adj.* [*f.* -ā] **1** contrary to inference मिथ्यात्वहेतौ तु घटधीवत् व्याप्तिधीरपि स्वार्थसत्त्वग्राहितयानुमितिप्रतिकूलैव Nyāyāmṛ. 129B.6; **2** contrary to conjecture or guess एकत्रानैकान्ति-कत्वस्येव बहुष्वनैकान्तिकताया अपि ज्ञाताया अनुमितिप्रतिकूलत्वाद्व्यक्त्यप्रतिकूलत्वाच्च RasGaṅ. 17.2.

**अनुमितिप्रतिबन्ध** (anumiti-pratibandha) *m.* obstruction to (the origination of) inferential knowledge साध्यवत्साध्याभावसाधकतयानुमिति-प्रतिबन्धो दूषकताबीजम् BhāṭṭCin. i. 32.4 (*on* i. 1.4); बाधनिश्चयाभावेऽपि बाधसंदेहादनुमितिप्रतिबन्धः स्यात् MayūMāli. 25.18 (*on* i. 3.3)

**अनुमितिप्रतिबन्धक** (anumitipratibandha-ka) *adj.* **A** which obstructs (the origination of) inferential knowledge शब्दत्वं हि सपक्षाद् गगनादेर्विपक्षाच्च घटादेर्व्यावृत्तं पक्षे शब्दे च वर्तत इत्यसाधारणम्। एतज्ज्ञानं च साक्षादनुमितिप्रतिबन्धकम् TarkKau. 13.21; संदेहोऽप्यनुमितिप्रतिबन्धकः Upask. 159.18 (*on* iii. 1.17); बाधनिश्चयो ह्यनुमितिप्रतिबन्धकः MayūMāli. 25.14 (*on* i.3.3); **B** which obstructs inference, cf. **अनुमितिप्रतिबन्धकता.**

**अनुमितिप्रतिबन्धकज्ञान** (anumitipratibandhaka-jñāna) *n.* knowledge which obstructs (the origination of) inferential knowledge अनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमुपाधित्वमिह निरूप्यम् TattvCin. ii(1). 371.1; ii(1). 996.3.

**अनुमितिप्रतिबन्धकता** (anumitipratibandhaka-tā) *f.* the state of being what obstructs inference बाधितादावपि लिङ्गत्वभ्रमात् पक्षे साध्य-प्रत्ययजनकत्वमिति न प्रतियोग्यसिद्ध्या साध्याप्रसिद्धिः। यद्वानुमितिप्रतिबन्धकताव-च्छेदकरूपवत्त्वमसाधकत्वम् TattvCin. ii(1). 994.4.

**अनुमितिप्रतिबन्धकत्व** (anumitipratibandhaka-tva) *n.* the state of being what obstructs inferential knowledge अनुमितिकारणीभूताभाव-प्रतियोगियथार्थज्ञानविषयत्वं, यद्विषयत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वम् Tattv-Cin. ii(1). 763.2; व्याप्तिनिश्चये प्रामाण्यसंशयव्यतिरेकनिश्चययोरनुमितिप्रतिबन्धक-त्वेऽपि तत्प्रामाण्यनिश्चयस्यानुमितिहेतुत्वाभावेन तत्र व्यभिचारात् ŚivārkaMaDī. i. 56.14 (*on* i. 1.1); हेतुनिष्ठो दोषो हेत्वाभासः। यादृशविशिष्टविषयत्वेन यथार्थ-ज्ञानस्यानुमितिप्रतिबन्धकत्वं तत्त्वमिति यावत् BhāṭṭCin. i. 31.22 (*on* i. 1.4)

**अनुमितिप्रतिबन्धकप्रमा** (anumitipratibandhaka-pramā) *f.* valid knowledge which obstructs (the origination of) inferential knowledge अनुमितिप्रतिबन्धकप्रमाविषयत्वमसाधकत्वं सद्धेतौ TattvCin. ii(1). 988.10.

**अनुमितिप्रतिबन्धमात्र** (anumitipratibandha-mātra) *n.* mere obstruction to (the origination of) inferential knowledge 'वह्न्यभाव-व्याप्यपाषाणमयत्ववान्' इति परामर्शकाले वह्निव्याप्यधूमस्य नाभासत्वम्। भ्रमादनु-मितिप्रतिबन्धमात्रम् SiddhāMu. 41.13 (*on* 71)

**अनुमितिप्रमा** (anumiti-pramā) *f.* valid knowledge, viz. inferential knowledge ज्ञायमानकरणजन्यस्तत्त्वानुभवोऽनुमितिप्रमा SaptaPa. 143 (40)

**अनुमितिप्रमाकरण** (anumitipramā-karaṇa) *n.* efficient cause or means of valid knowledge, viz. inferential knowledge अनुमानं निरूप्यते। अनुमितिकरणम् (v. l. अनुमितिप्रमाकरणम्) अनुमानम् TarkKau. 10.24.

**अनुमितिप्रमातस्** (anumitipramā-tas) *adv.* from the valid knowledge, viz. inferential knowledge न चानुमितिप्रमातः शाब्दप्रमाया भेदे ··· अनुमितिवारणाय शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पने गौरवमिति वाच्यम् BhāṭṭCin. i. 49.24 (*on* i.1.4)

**अनुमितिप्रमादर्शन** (anumitipramā-darśana) *n.* observation or experience of valid knowledge, viz. inferential knowledge न चायमनुमेयदेर्व्याप्त्यादिना समसत्ताकत्वनियमोऽप्यस्ति, व्यभिचारिणापि लिङ्गेन साध्य-वति पक्षे अनुमितिप्रमादर्शनात् AdvaiSi. 365.15.

**अनुमितिप्रमायोगव्यवच्छिन्न** (anumitipramāyoga-vyavacchinna) *adj.* excluded from the absence of connection with the valid knowledge, viz. inferential knowledge अनुमितिप्रमायोगव्यवच्छिन्नमनुमानम् SaptaPa. 146(41)

**अनुमितिप्रयोजक** (anumiti-prayojaka) *adj.* which causes or leads to inferential knowledge न च साध्याभावव्यापकाभावप्रतियोगित्वेन पक्षधर्मस्य ज्ञानमनुमितिप्रयोजकम् TattvCin. ii(1). 678.5.

**अनुमितिप्रयोजकता** (anumitiprayojaka-tā) *f.* the state of being that which causes or leads to inferential knowledge व्याप्तिविशिष्टहेतोः पक्षधर्मताग्राहकत्वेन प्रातिभासिकत्वविशेषणस्याप्यनुमितिप्रयोजकतया सार्थकत्वम् LaCandr. 403.14; उपाधिज्ञानस्य साक्षात्प्रतिबन्धकत्वाभावेन तदभावस्यानुमितिप्रयो-जकतया हेतुत्वाभावात् BhāṭṭCin. i. 31.25 (*on* i. 1.4)

**अनुमितिप्रयोजकत्व** (anumitiprayojaka-tva) *n.* the state of being that which causes or leads to inferential knowledge व्याप्तेरिव पक्षधर्मताया अपि ग्राहकत्वेन सार्थक्यं कुतो न स्यात्, व्याप्तिग्राहकस्यापि सार्थकत्वेऽ-नुमितिप्रयोजकत्वस्यैव तन्त्रत्वसंभवात् GuruCandr. i. 386.11; LaCandr. 403.13.

**अनुमितिप्रयोजकधी** (anumitiprayojaka-dhī) *f.* knowledge which causes or leads to inferential knowledge संस्कारद्वारा अनुमितिप्रयोजकधी-प्रतिबन्धकधीविषयत्वादेव व्यभिचारादेः हेत्वाभासत्वसंभवात् GuruCandr. i. 218.16.

**अनुमितिप्रवाह** (anumiti-pravāha) *m.* continuous series of inferential knowledges क्रिया कृतिजन्या सा कृतिज्ञानसाध्या तज्ज्ञानं वाक्यजन्य-मित्यनुमितिप्रवाहस्य भ्रमत्वेऽपि तद्धेतुकशक्तिग्रहस्य विषयाबाधेन प्रमात्वदर्शनात् ŚivārkaMaDī. i. 173.25 (*on* i. 1.4)

**अनुमितिप्रसङ्ग** (anumiti-prasaṅga) *m.* undesired occasion for inferential knowledge लिङ्गशब्दादिसिद्धे चेन्द्रियात्परोक्षधीप्रसङ्गात्। अनुमिते च शब्दादनुमितिप्रसङ्गात् Nyāyāmṛ. 628A.3.

**अनुमितिप्रामाण्य** (anumiti-prāmāṇya) *n.* validity of inferential knowledge व्याप्त्यादिनानुमितिप्रामाण्यादिना शब्दार्थस्य च योग्यतादिना शाब्दधी-प्रामाण्यादिना च तुल्ययोगक्षेमत्वात् Nyāyāmṛ. 106A.6; AdvaiSi. 365.10.

**अनुमितिबाध** (anumiti-bādha) *m.* contradiction through inference सा स्तुतिरेवानतियतनपरा नार्थपरा स्फुटमनुमितिबाधात् NayaMañ. IV. iv. 4.7.

**अनुमितिबोधकत्व** (anumitibodhaka-tva) *n.* the state of being what conveys conjecture or guess यत्र लिङ्गलिङ्गिनोः सत्त्वं तत्र मन्ये शङ्के अवैमि जाने इत्यादिपदानामनुमितिबोधकत्वम् RasGaṅ. 641.11.

**अनुमितिभाव** (**anumiti-bhāva**) *m.* existence of (process of) inference भवतु वा या काचिद् व्याप्तिर्नाम तत्सत्त्व एवानुमितिभावात् तस्याश्चानुमितेश्च व्याप्तिरेष्टव्या KhaṇḍanKhā. 726.10.

**अनुमितिभावक** (**anumiti-bhāvaka**) *adj.* which causes the existence of inferential knowledge यदेव दृश्यमानं लिङ्गं हेतुवचनस्य विषयः तदेवानुमितिभावकम् NyāyVārPari. 316.6.

**अनुमितिभावनाकाल** (**anumitibhāvanā-kāla**) *m.* time of either inference or understanding तदानीमिति। अनुमितिभावनाकाले इत्यर्थः Vedānt-Ka. 511.4 (*on* iv. 1.2)

**अनुमितिभिन्नत्व** (**anumitibhinna-tva**) *n.* the state of being different from inferential knowledge न हि लौकिकसंनिकर्षस्थले प्रत्यक्षमिव सत्प्रतिपक्षस्थले संशयाकारानुमितिः प्रामाणिकी, येनानुमितिभिन्नत्वेनापि विशेषणीयम् SiddhāMu. 43.3 (*on* 72)

**अनुमितिभ्रमदर्शन** (**anumitibhrama-darśana**) *n.* observation or experience of misapprehension of inferential knowledge गन्धव्याप्यपृथिवी त्वप्रमातोऽपि गन्धप्रागभावावच्छिन्ने घटे पक्षे बाधास्फूर्तिदशायामनुमितिभ्रमदर्शनात् AdvaiSi. 441.18.

**अनुमितिमत्त्व** (**anumitimat-tva**) *n.* the state of being the possessor, i.e. substratum of inferential knowledge धूमेन वह्नेरनुमानमिदं न घटेनेत्यादावनुमितिमत्त्वाद्यभावबोधानुपपत्तेः VyutpaVā. 163.27.

**अनुमितिमात्र** (**anumiti-mātra**) *n.* **A** inference in general अनुमितिमात्रे पक्षधर्मतैव प्रयोजिका TattvCin. ii(1). 89.3; **B** inferential knowledge in general रूपान्तरजिज्ञासाया अभावादनुमितिमात्रे जिज्ञासाया हेतुत्वात् BhāṭṭCin. ii. 19.8 (*on* i. 3.2)

**अनुमितिमात्रकारणत्व** (**anumitimātrakāraṇa-tva**) *n.* the state of being the cause of inferential knowledge in general सिषाधयिषाविरहसहकृतसाधकप्रमाणाभाववति लिङ्गज्ञानस्यानुमितिमात्रकारणत्वात् TattvCin. ii(2). 21.8.

**अनुमितिमात्रहेतुनिवेशिनी** (**anumitimātrahetu-niveśinī**) *adj.* (*f.*) which resides at, i.e. constitutes the cause of inferential knowledge in general सिद्धसाधनं च स्वार्थानुमाने दोष इति नानुमितिमात्रहेतुनिवेशिनी सा (पक्षधर्मता) KhaṇḍanKhā. 642.13.

**अनुमितिमात्रोच्छेद** (**anumitimātroccheda**) *m.* destruction or loss of inferential knowledge in general प्रत्यक्षसामग्रीविलक्षणसामग्रीकत्वेनाप्रत्यक्षमनुमितिरूपं ज्ञानमङ्गीकार्यमिति नानुमितिमात्रोच्छेदः LaCandr. 343.43.

**अनुमितिमात्रोच्छेदप्रसङ्ग** (**anumitimātroccheda-prasaṅga**) *m.* undesired occasion for the destruction or loss of inferential knowledge in general साध्यं च नोपाधिः व्यभिचारसाधने साध्याविशिष्टत्वात् अनुमितिमात्रोच्छेदप्रसङ्गाच्च TattvCin. ii(1). 376.2.

**अनुमितिमानसत्वविचार** (**anumitimānasatvavicāra**) *m.* title of a work, *nt.*

**अनुमितिमानसत्वविचाररहस्य** (**anumitimānasatvavicārarahasya**) *n.* title of a work, *nt.*

**अनुमितिमानसवाद** (**anumitimānasavāda**) *m.* title of a work, pw.

**अनुमितिमानसवादलक्षणावतरण** (**anumitimānasavādalakṣaṇāvataraṇa**) *n.* title of a work, pw.

**अनुमितिरूप** (**anumiti-rūpa**) *adj.* [*f.* -ā] **1** of the form of conjecture or guess स्थायिप्रतीतिरनुमितिरूपा प्राच्या(च्या)। न रसः AbhinBhā. i. 284.15 (*on* 6.31); Kāvyānu.(He.) 78.3; कुलं रूपम् … राज्यमनघम् … त्वां कथयति पुराराधितशिवम्। अत्र वर्णनीयराजकर्तृकशिवाराधनकथनरूपैकक्रियायां (Add. वस्तुतोऽनुमितिरूपायां) साधनीभूतस्याभिजात्यस्य यथा कर्तृत्वेनान्वयस्तथा … रूपादीनामपि AlaṅkāMañ. 158.12; **2** of the form of inferential knowledge लिङ्गदर्शनात् संजायमानं लैङ्गिकं लिङ्गजन्यमनुमितिरूपं फलम् Kiraṇā. 289.16; Upask. 421.2 (*on* x. 1.5); SarvaDaKau. 41.22; अस्मरणलिङ्गजन्यं ज्ञानाभावविषयमनुमितिरूपज्ञानमिदम् ŚrutaPra. iB. 20.4 (*on* i. 1.1); (प्रत्यभिज्ञायाः) अनुमितिरूपायाः … °अनुमानविरोधेनानुत्थानात् ŚivārkaMaDī. ii. 91.26 (*on* ii. 2.25); शुद्धत्वस्य हेतोः ब्रह्मण्यज्ञाने कथं तत्र स्वप्रकाशत्वस्यानुमितिरूपा सिद्धिः GuruCandr. i. 124.17; LaCandr. 244.7; 343.43.

**अनुमितिरूपत्वोपपादन** (**anumitirūpatvopapādana**) *n.* establishment of the state of being what is of the form of inferential knowledge स्मृतित्वानुपपत्तेरनुमितिरूपत्वोपपादनाच्च न किंचिदवेदिषमिति ज्ञानमन्यथैवोपपन्नम् ŚrutaPra. iB. 21.7 (*on* i. 1.1)

**अनुमितिरूपपरामर्शस्थल** (**anumitirūpaparāmarśa-sthala**) *n.* [Loc.] in the case of the consideration of the form of inferential knowledge अनुमितिरूपपरामर्शस्थले परामर्शतज्जनकज्ञानानाम् … बहूनां परामर्शजनकज्ञानानां मेलने कस्यचिदेव प्रमाणत्वम् ŚivārkaMaDī. i. 166.15 (*on* i. 1.4)

**अनुमितिरूपप्रमाकरण** (**anumitirūpapramā-karaṇa**) *n.* efficient cause or means of valid knowledge of the form of inferential knowledge तल्लिङ्गं प्रमाणमनुमापकम् अनुमितिरूपप्रमाकरणम् Kiraṇā. 290.9.

**अनुमितिवारण** (**anumiti-vāraṇa**) *n.* avoidance of inferential knowledge न च व्याप्तिसंस्कारत्वेन हेतुत्वे पूर्वाननुभूतव्याप्तेः … अनुमितिर्न स्यात्, अनुद्बुद्धसंस्कारादनुमितिवारणायोद्बोधकानां नानाविधानां हेतुत्वे च गौरवम् GuruCandr. i. 217.11.

**अनुमितिविज्ञात** (**anumiti-vijñāta**) *adj.* known through inference यत् भूतहितमत्यन्तं दृष्टश्रुतानुमितिविज्ञातेष्वर्थेषु यथान्तःकरणप्रत्ययोपस्थितम् … तत् सत्यम् MāṭhVṛ. 38.20 (*on* 23)

**अनुमितिविधेय** (**anumiti-vidheya**) *m.* predicate of, i.e. probandum (to be established) in inferential knowledge प्राभाकरादिमते अनुमितिपरामर्शयोः … अनुमितिविधेये … °स्मरणादिरूपज्ञानान्तरीयस्य नियमेन सत्त्वात् LaCandr. 672.34.

**अनुमितिविधेयता** (**anumitividheya-tā**) *f.* the state of being a predicate, i.e. probandum (to be established) in inferential knowledge येन रूपेणानुमितिविधेयता तेन रूपेण सिद्धिः प्रतिबन्धिका GuruCandr. i. 40.18.

**अनुमितिविधेयतावच्छेदक** (**anumitividheyatāvacchedaka**) *adj.* delimitor of the state of being the predicate of, i.e. probandum (to be established) in inferential knowledge तद्घटितेन संवादेन तद्घटितमेवानुमेयम्। न तु बाधितत्वसामान्याभावघटितम्, अनुमितिविधेयतावच्छेदकस्यैव व्याप्तिनिरूपकतावच्छेदकत्वात् GuruCandr. i. 289.19.

**अनुमितिविरोधित्व** (**anumitivirodhi-tva**) *n.* the state of being what is contradictory to inferential knowledge अनैकान्त इति। तल्लक्षणं तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्त्वम् SiddhāMu. 41.6 (*on* 71)

**अनुमितिविरोधित्वाभाव** (**anumitivirodhitvābhāva**) *m.* absence of the state of being what is contradictory to inferential knowledge व्यभिचारज्ञानस्यानुमितिविरोधित्वाभावेऽपि न क्षतिः SiddhāMu. 42.2 (*on* 21)

**अनुमितिविरोधिन्** (**anumiti-virodhin**) *adj.* contradictory to inferential knowledge सपक्षविपक्षवृत्तित्वमुभयव्यावृत्तत्वमनुपसंहारित्वं चानुमितिविरोधि तत्संबन्धः प्रत्येकमस्ति TattvCin. ii(1). 802.2.

**अनुमितिविलक्षणत्ववत्** (**anumitivilakṣaṇatva-vat**) *adv.* like the state of being what is distinct from inferential knowledge न चेश्वरप्रत्यक्षेऽव्याप्तिः। ईश्वरज्ञानस्यानुमितिविलक्षणत्ववत् प्रत्यक्षविलक्षणत्वात् BhāṭṭCin. i. 15.15 (*on* i. 1.4)

**अनुमितिविलम्ब** (**anumiti-vilamba**) *m.* delay in (the origination of) inferential knowledge न हि लिङ्गपरामर्शे सति तद्विलम्बेनानुमितिविलम्बो येन सहकारिता स्यात् TattvCin. ii(2). 77.2.

**अनुमितिविलम्बसंभव** (**anumitivilamba-sambhava**) *m.* possibility of delay in (the origination of) inferential knowledge सेष्टैव पक्षधर्मताधीविलम्बादेवानुमितिविलम्बसंभवात् LaCandr. 365.39.

**अनुमितिविशेष** (**anumiti-viśeṣa**) *m.* particular inferential knowledge तृणारणिमणिन्यायेनानुमितिविशेषे तद्धेतुत्वम् TattvCin. ii(1). 587.1; प्रत्यक्षविशेषेऽनुमितिविशेषे वा सुखदुःखयोरननुभवान्न तद्विशेषोऽपि Upask. 421.5 (*on* x. 1.5)

**अनुमितिविशेषजनकत्व** (**anumitiviśeṣajanaka-tva**) *n.* the state of being the producer of a particular inferential knowledge केवलान्वयिनि केवलान्वयिधर्मसंबन्धो व्यतिरेकिणि साध्यवदन्यावृत्तित्वं व्याप्तिः एतयोरनुमितिविशेषजनकत्वम् अनुमितिमात्रे पक्षधर्मतैव प्रयोजिका TattvCin. ii(1). 89.2.

**अनुमितिविशेषण** (**anumiti-viśeṣaṇa**) *n.* qualifier or attribute of inferential knowledge अनुमितिविशेषणतत्तद्विधेयकत्वरूपसुबन्तार्थ एव तृतीयार्थान्वय उपगम्यते VyutpaVā. 163.14.

**अनुमितिविशेषसामग्री** (**anumitiviśeṣa-sāmagrī**) *f.* totality of causes of particular inferential knowledge अनुमितिसामान्यसामग्र्यां सत्यामप्यनुमितिविशेषसामग्रीविरहादनुमित्यनुत्पत्तेः TattvCin. ii(1). 595.1.

**अनुमितिविषय** (**anumiti-viṣaya**) *m.* object of inferential knowledge लिङ्गमनुमितिविषयः TattvCin. ii(1). 990.18; प्रागवगतानवगतयोः पर्वततद्वृत्तिपावकयोरनुमितिविषययोरबाधस्याविशेषेण उभयत्राप्यनुमितेः प्रामाण्यप्रसङ्गात् SiddhāLeSaṁ. 146.1; Nyāyāmṛ. 171B.9; विषयस्य ज्ञानात्मकत्वे … अनुमितिविषयवह्न्यादेः परोक्षत्वानुपपत्तिः BhāṭṭCin. i. 20.17 (*on* i. 1.4); *adj.* **A** which has inferential knowledge as its object अनुमितिविषयं हि वक्तृज्ञानज्ञानम् SarvaDaKau. 53.7; **B** which is the object of inferntial

knowledge, cf. **अनुमितिविषयसाध्य.**

**अनुमितिविषयता** ( anumitiviṣaya-tā ) *f.* the state of being the object of inferential knowledge राजन्यपि कथं न तन्मात्रेण सर्वविषयं तदनुमितिविषयतां नयामः Bhāsk. i. 69.5 (*on* i. 1.3)

**अनुमितिविषयत्वापत्ति** ( anumitiviṣayatvāpatti ) *f.* undesired contingency of the state of being the object of inferential knowledge न च – तत्र ( चाक्षुषज्ञानविषयत्वे ) लिङ्गज्ञानं करणम्, तत्र च लिङ्गिनः तद्व्याप्तत्वं संबन्धोऽस्तीति|— वाच्यम्, लिङ्गस्यापि स्वज्ञानसंबन्धित्वेनानुमितिविषयत्वापत्तेः AdvaiSi. 457.9.

**अनुमितिविषयश्रुति** ( anumitiviṣaya-śruti ) *f.* Vedic statement refferring to the inferential knowledge न जिज्ञासाया अनुमित्यङ्गत्वम् … तस्याः कारणत्वे अनुमितिविषयश्रुतेर्जिज्ञासितत्वात् BhaṭṭDī. i. 39.7 (*on* i. 3.2); BhāṭṭCin. ii. 22.3 (*on* i. 3.2)

**अनुमितिविषयसाध्य** ( anumitiviṣaya-sādhya) *n.* probandum (to be established) which is the object of inferential knowledge साध्यस्यापि व्यावहारिकसत्त्वमेव स्यादनुमितिविषयसाध्यस्य परामर्शविषयहेतुना समानसत्ताकत्वनियमात् AdvaiSi. 441.15.

**अनुमितिवैलक्षण्यप्रतीति** ( anumitivailakṣaṇya-pratīti ) *f.* knowledge of the distinction (of *upamāna*) from inferential knowledge नानुमानम् — उपमिनोमीत्यनुव्यवसायेनानुमितिवैलक्षण्यप्रतीतेः BhāṭṭCin. i. 45.27 (*on* i. 1.4)

**अनुमितिव्यापार** ( anumiti-vyāpāra ) *m.* operation of inference अनुमानम् अनुमितिव्यापारो विकल्पात्मा नैव केनचित् वादिना इष्यते PratyabhiVi. i. 231.5 (*on* i. 5.8)

**अनुमितिशरण** ( anumiti-śaraṇa ) *adj.* who has inference as the (only) resort, i.e. means सोऽपि प्राज्ञव्युदासेऽप्यनुमितिशरणान् प्रत्युपात्तः प्रसङ्गः TattvMu. 3 24; 3.78.

**अनुमितिशाब्दधीस्वरूप** ( anumitiśābdadhī-svarūpa) *adj.* of the nature of inferential and verbal knowledges शब्दस्वरूपस्य तद्धर्मस्य … उपक्रमोपसंहारैकरूप्यादेः अनुमितिशाब्दधीस्वरूपतत्प्रामाण्यादेश्च ग्राह्यत्वात् Nyāyāmṛ. 104B. 8.

**अनुमितिसत्त्व** ( anumiti-sattva ) *n.* existence of inferential knowledge शङ्खो न पीत इत्यनुमितिसत्त्वेऽपि पित्तादिदोषेण तादृशप्रत्यक्षप्रतिबन्धकेन शङ्खः पीत इत्यादिप्रत्यक्षोत्पत्तिदर्शनेन भेदस्य … अभेदप्रत्यक्षम् LaCandr. 616.37.

**अनुमितिसद्भाव** ( anumiti-sadbhāva ) *m.* existence of inferential knowledge धूमत्वस्य विशेषस्य दर्शनेन तादृशभ्रमानुत्पत्तेः तत्रानुमितिसद्भावादेव अन्यथा निश्चयसामग्र्यां सत्यां भ्रमानन्तरं परामर्श एव कुतो न भवति TattvCin. ii(1). 484.1.

**अनुमितिसमय** ( anumiti-samaya ) *m.* time of inferential knowledge ( रूपक्षणः ) ज्ञाप्यत इत्यनर्थान्तरं स किं कारणानुमितेः प्राग( प्य )नुमितिसमये पश्चाद् वा TātpaṬ.(Vā.) 162.18 (*on* i. 1.5)

**अनुमितिसंभव** ( anumiti-sambhava ) *m.* **A** possibility of inference विशेषणतावच्छेदकप्रकारकज्ञानादेव साध्यविशेषणकपक्षविशेष्यकानुमितिसंभवात् AdvaiSi. 342.9; पक्षधर्मताबलात् पक्षीयसाध्यविशेष्यकानुमितिसंभवः GuruCandr. i. 228.10; पर्वतीयवह्नेरज्ञानेऽपि तद्विशेष्यकानुमितिसंभवात् LaCandr. 344.13; **B** possibility of inferential knowledge आत्मा देहो नेति … स्वीकारात् तादृशभेदेनात्मनि गौरत्वाद्यवच्छिन्नभेदानुमितिसंभवात् … उक्तश्रुतिरनुवादिका LaCandr. 616.26.

**अनुमितिसरणि** ( anumiti-saraṇi ) *f.* path of conjecture or guess उपपत्तिसमर्थनादिविलक्षणशब्दप्रयोगा आलंकारिकाणामनुमितिसरणिमेवाभिनिविशन्ते RasGaṅ. 631.7.

**अनुमितिसामग्री** ( anumiti-sāmagrī ) *f.* **1** totality of causes of inferential knowledge अभावसाध्यककेवलव्यतिरेकिणि साध्यप्रसिद्धेरनङ्गत्वात्तत्र क्लृप्ताया अनुमितिसामग्र्याः प्रत्यक्षसामग्रीतो बलवत्त्वम् AdvaiSi. 343.3; न च संस्कारेन्द्रिययोः परोक्षापरोक्षज्ञानजनकयोः प्रत्यक्षानुमितिसामग्र्योरिवैकज्ञानजनकत्वं संभवति ŚivārkaMaDī. ii. 89.28 (*on* ii. 2.24); अलौकिकप्रत्यक्षसामग्र्यपेक्षया समानेऽपि विषये अनुमितिसामग्र्या बलवत्त्वाभ्युपगमात् PūrvottaVāNaMā. 353.3; अनुमितेरेव व्याप्त्याद्यंशे स्मृतित्वस्वीकारात्। अन्यथा त्वनुमितिसामग्री तद्भाने प्रतिबन्धिकास्तु LaCandr. 339.33; भिन्नविषयत्वाद्यप्रवेशेनैव अनुमितिसामग्र्या लाघवात् बलवत्त्वम् JñānBiPra. 33.15; अनुमितिसामग्र्या बलवत्त्वेन … शाब्दबोधे … करणाकाङ्क्षाभावादतिदेशानुपपत्तेः BhāṭṭDī. iii. 6.18 (*on* viii. 1.4); BhāṭṭCin. i. 49.25 (*on* i. 1.4); **2** totality of causes of conjecture or guess भिन्ने विषयेऽनुमितिसामग्र्या बलवत्त्वादनुमीयमानो रसः RasGaṅ. 34.4; 631.9; **3** totality of causes of *anumiti* as a means of establishing one's right over land etc. अनेनानुमितिसामग्री उक्ता BālamBha. ii. 28.29 (*on* 2.22)

**अनुमितिसामग्रीत्व** ( anumitisāmagrī-tva ) *n.* the state of being the totality of causes of inferential knowledge अनुमितिसामग्रीत्वेन पराभिमतव्याप्तिज्ञानाद्युत्तरप्रत्यक्षस्यैवोक्तानुव्यवसायविषयत्वात् GuruCandr. i. 227.19.

**अनुमितिसामग्रीमात्र** ( anumitisāmagrī-mātra ) *n.* mere totality of causes of inferential knowledge संशयस्याकर्तव्यत्वेन जयव्यवस्थामात्रसिद्धये विप्रतिपत्तेरिवानुमितिसामग्रीमात्रस्य … कर्तव्यतया … बाधस्योद्भावनं व्यर्थम् LaCandr. 28.12.

**अनुमितिसामग्रीविघटकत्व** ( anumitisāmagrīvighaṭaka-tva ) *n.* the state of causing disintegration, i. e. loss of the totality of causes of inferential knowledge न च संशयरूपा नानुमितिः बाधस्येव विरोध्युपस्थितेरनुमितिसामग्रीविघटकत्वेनावधारणात् TattvCin. ii(1). 886.2.

**अनुमितिसामग्रीविघटन** ( anumitisāmagrī-vighaṭana ) *n.* disintegration, i.e. loss of the totality of causes of inferential knowledge द्विप्रकारो हि लोके प्रत्यक्षेणानुमानस्य बाधः … द्वितीयस्तु अनुमितिसामग्रीविघटनेन MayūMāli. 22.6 (*on* i. 3.2)

**अनुमितिसामग्र्यपेक्षा** ( anumitisāmagry-apekṣā ) *f.* [Inst.] in comparison with the totality of causes of inferential knowledge भ्रमरूपालौकिकप्रत्यक्षसामग्री तु अनुमितिसामग्र्यपेक्षया बलवती PūrvottaVāNaMā. 353.13.

**अनुमितिसिद्धमिथ्यात्व** ( anumitisiddha-mithyātva ) *n.* unreality or falsehood established through inference अनुमितिसिद्धमिथ्यात्वग्राहकत्वे सत्यद्वैतश्रुतिरनुवादिका स्यात् AdvaiSi. 387.11.

**अनुमितिसिद्धि** ( anumiti-siddhi ) *f.* establishment of inference धूमत्वेन पर्वतीयधूमज्ञानं चापि जातम्, तच्च सामान्यलक्षणां विनैव, तावतैवानुमितिसिद्धेः AdvaiSi. 338.6.

**अनुमितिस्थलीय** ( anumitisthal-īya ) *adj.* pertaining to the case of inference व्याप्तिघटकसंबन्धत्वरूपेणानुमितिस्थलीयसंनिकर्षो निवेश्यः GuruCandr. ii. 54.5; LaCandr. 457.32.

**अनुमितिस्वीकार** ( anumiti-svīkāra ) *m.* acceptance of inferential knowledge अनुमितिस्वीकारेऽपि व्यतिरेकव्याप्तिज्ञानघटितायाः सामग्र्या एवालौकिकप्रत्यक्षसामग्रीतो बलवत्त्वं सिध्यति GuruCandr. i. 227.23.

**अनुमितिहेतु** ( anumiti-hetu ) *m.* **i** cause (such as *vyāpti* etc.) of inferential knowledge अनुमितिहेतुः संबन्धः साहचर्यमिति सिद्धम् NyāyMañ. i. 107.20; TātpaṬ.(Vā.) 170.22 (*on* i. 1.5); TattvCin. ii(1). 734.1; अनुमितिहेतुव्यतिरेको हि हेतुदोषोऽनुमितिहेतुश्चैको व्याप्तिः Khaṇḍan-Khā. 843.11; न च संभाविता स्मृतिः अनुमितिहेतुः, अनभ्युपगमात् TarkSaṁ. (Ā.) 90.26; पक्षधर्मस्य व्याप्तिविशिष्टज्ञानमनुमितिहेतुः TattvCin. ii(1). 442.1; व्याप्तिनिश्चयोऽनुमितिहेतुरिति नियमप्रसूतमनुमानं तत्र मानम् ŚivārkaMaDī. i. 55.26 (*on* i. 1.1); तद्वारणाय व्याप्यप्रकारकधीरेवानुमितिहेतुर्वाच्या GuruCandr. i. 294.4; तादृशशक्तिमत्संस्कारसहितं लिङ्गज्ञानमनुमितिहेतुः LaCandr. 339.23; **ii** cause of inferential knowledge (identified with *svārthānumāna*) अनुमानं द्विविधम्। स्वार्थं परार्थं चेति। स्वस्यैवानुमितिहेतुः स्वार्थम् TarkKau. 12.24.

**अनुमितिहेतुत्व** ( anumitihetu-tva ) *n.* the state of being the cause of inferential knowledge अगृहीतव्याप्तेरिव गृहीतविस्मृतव्याप्तेरपि पुंसोऽनुमानोदयेन व्याप्तिस्मृतेरप्यनुमितिहेतुत्वात् TarkBhā.(Ke.) 39.5; न च फलीभूतज्ञानन्यूनविषयस्यैव परामर्शस्यानुमितिहेतुत्वं, गौरवात् TattvCin. ii(1). 991.7; न चैवमप्यनुमितिहेतुत्वे व्याप्तीनामननुगमः स्यादिति वाच्यम् SāṁkhyaPraBh. 124.10 (*on* 5.36); प्रतिबन्धकत्वं कारणीभूताभावप्रतियोगित्वम् … अनुमितिहेतुत्वे प्रमाणाभावेन दृष्टान्ते साधनवैकल्यात् ŚivārkaMaDī. i. 56.12 (*on* i. 1.1); व्यभिचारधीकालेऽपि तादृशधीसंभवेन तस्या अनुमितिहेतुत्वं खण्डयन्ति GuruCandr. i. 434.18; व्याप्यविशेष्यकपरामर्शस्याप्यनुमितिहेतुत्वात् वह्निव्याप्यगगनं पर्वतीयमिति ज्ञानात् पर्वते वह्न्यनुमितिः स्यात् LaCandr. 365.40; 420.25; न च … संस्कारो हेतुरिति वाच्यम्, व्याप्तिस्मृतिस्थलेऽपि तत्संस्कारस्यैवानुमितिहेतुत्वात् VedāntPari. 149.1.

**अनुमितिहेतुत्वाभाव** ( anumitihetutvābhāva ) *m.* absence of the state of being the cause of inferential knowledge व्याप्तिनिश्चये प्रामाण्यसंशयव्यतिरेकनिश्चययोरनुमितिप्रतिबन्धकत्वेऽपि तत्प्रामाण्यनिश्चयस्यानुमितिहेतुत्वाभावेन तत्र व्यभिचारात् ŚivārkaMaDī. i. 56.14 (*on* i. 1.1)

**अनुमितिहेतुपरामर्श** ( anumitihetu-parāmarśa) *m.* consideration which is the cause of inferential knowledge लक्ष्यलक्षणयोः साक्षिणैव प्रथमं

**अनुमेयाङ्गत्व** (anumeyāṅga-tva) *n.* the state of being that which is accessory to what is to be conjectured प्रतिपन्ने च वाच्येऽर्थे तस्याविनयप्रच्छादनतात्पर्येणाभिधीयमानत्वादनुमेयाङ्गत्वमेवेत्यस्यानुमान एवान्तर्भावः VyaktiVi. 130.28.

**अनुमेयात्मवादिन्** (anumeyātma-vādin) *adj.* upholder of the theory that the soul is to be inferred न च पारतन्त्र्यमिच्छादीनामनुमेयात्मवादिनां कदाचिदप्यस्मदादिप्रत्यक्षगोचरः (आत्मा) TātpaṬ.(Vā) 184.6 (*on* i. 1.1); स्मृत्यनुसंधानं संस्कारात् सिद्धम् इति अन्यथा सिद्धत्वात् आत्मानुमानाय न पर्याप्तम् इति प्रोक्तमनुमेयात्मवादिनः प्रति PratyabhiVi. i. 83.8 (*on* i. 2.1); अनुमेयात्मवादिनः तार्किकादीन् प्रति Bhāsk. i. 83.15 (*on* i. 2.1)

**अनुमेयात्यन्ताभाव** (anumeyātyantābhāva) *m.* constant absence of what is to be inferred, i.e. Absolute भेदगर्भयथोक्तग्राहिप्रत्यक्षस्यानुमेयात्यन्ताभावतद्वद्भेदाविषयकत्वात् GuruCandr. i. 242.10.

**अनुमेयादि** (anumeyādi) *adj.* **i** what is to be inferred etc. न च परोक्षं वस्तु परोक्षज्ञानैरेवाभ्यस्यमानैरपरोक्षीभवेत् अनुमेयादिष्वदर्शनात् IṣṭaSi. 74.2; **ii** what is to be inferred, i.e. probandum etc. संदेहादनुमेयादौ प्रवृत्तिः NyāyPari. 94.5; प्रत्यक्षाप्रामाण्ये तत्सिद्धस्य व्याप्त्यादेर्बाधेन अनुमेयादेः … बाधः AdvaiSi. 365.9.

**अनुमेयादितुल्यत्व** (anumeyādi-tulyatva) *n.* equality with what is to be inferred, i.e. probandum etc. तत्ताप्रकाशे … कारणता … तत्ताज्ञानत्वेन तत्र । अनुमित्यादावपि लिङ्गादिज्ञानत्वेनानुमेयादितुल्यत्वात् TattvCin. i. 562.3.

**अनुमेयानुमाननिपुण** (anumeyānumāna-nipuṇa) *adj.* **1** expert in inferring what is to be inferred, i.e. probandum नैयायिकैरिवानुमेयानुमाननिपुणैः … विपणिवणिग्जनैरधिष्ठितम् … कुण्डिनं नाम नगरम् NalaCam. 2.27(9); **2** expert in measuring what is to be measured, i. e. valued, NalaCam. 2.27(9) (comm. अनुमेयं कणादि तस्यानुमानमुद्देशज्ञानम्)

**अनुमेयानुमापकत्व** (anumeyānumāpaka-tva) *n.* the state of being what causes or leads to the inference of the inferable, i.e. probandum प्रमातुरनुमेयानुमापकत्वाभावात् लक्षणवाक्ये कथं संबन्धः TātpaṬ. (U.) 304.25 (*on* 5(4).2)

**अनुमेयानुषक्त** (anumeyānuṣakta) *adj.* related to, i.e. dependent on what is to be inferred, i.e. probandum अनुमेयानुषक्तसिद्धिरधिकरणसिद्धान्तः TārkiRa. 172.2; अनुमेयानुषक्तोऽधिकरणसिद्धान्तः । यथा क्षित्यादेः कर्तृमत्त्वे साधिते ईश्वरस्य सिद्धिः SarvaDaKau. 74.1.

**अनुमेयान्तराभाव** (anumeyāntarābhāva) *m.* absence of other inferable means (except the Vedas) मन्वादिवाक्यस्यापि … वेदत्वप्रसङ्गेन अनुमेयान्तराभावात् … नित्यानुमेयश्रुतिमूलत्वमनुपपन्नम् ŚrutaPra. ii. 58.3 (*on* i. 3.25)

**अनुमेयाप्रतिपादक** (anumeyāpratipādaka) *adj.* which does not convey what is to be inferred, i.e. probandum (विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोऽब्रवीत्) कश्यपात्मजोऽलिङ्गमनुमेयाप्रतिपादकमब्रवीत् NyāyKa. 201.14.

**अनुमेयाभाव** (anumeyābhāva) *m.* **1** absence of what is to be inferred, i.e. probandum अनुमेयाभावे च तस्यासत्त्वमुपलभ्य न च तथा वायुर्निष्क्रिय इति PadārthaSaṁ. 249.12; (विद्यमानता) सा … अपगतसंदेहा भविष्यति लिङ्गमिति चेत् न। अनुमेयाभावात् PrakaPañ. 274.4; न चागृहीतेऽग्नौ तदेकदेशतया धूमोऽवगन्तुं शक्यते । गृहीते च तस्मिन्ननुमेयाभावः Kāśi. iii. 24.11 (*on* 5(4).24); सामान्यविशेषात्मना भेदाङ्गीकारेऽप्यनुमेयाभावः TārkiRa. 83.8; बहिर्देशसंबन्धकल्पनादसंदिग्धं जीवनं लिङ्गमिति चेत् अनुमेयाभावः TantrRaha. 12.30; अभावज्ञानम् इन्द्रियेतरकरणकम् अभावज्ञानत्वात् अनुमेयाभावज्ञानवत् MānaMe. 139.7; **2** opposite to the subject, i.e. *vipakṣa* विपक्षाद् व्यावृत्तिमाह तदभावे च नास्त्येव तदभावे अनुमेयाभावे अनुमेयविपर्यये विपक्षे इति यावत् Kiraṇā. 291.3.

**अनुमेयाभासाश्रयत्व** (anumeyābhāsāśraya-tva) *n.* the state of being the abode of the fallacious probandum प्रकरणसमकालात्ययापदिष्टावुभौ यदनुमेयेन संबद्धमित्यन्तेनैव निराकृतौ अनुमेयाभासाश्रयत्वात् NyāyKa. 203.14.

**अनुमेयार्थ** (anumeyārtha) *m.* **1A** object which is to be inferred, i.e. probandum न च लिङ्गमन्तरेणानुमेयार्थो गम्यते NyāyVār. 40.6 (*on* i.1.4); **1B** (external) object which is to be inferred, cf. **अनुमेयार्थवादिन्**; **2** sense which is to be conjectured or suggested, cf. **अनुमेयार्थविश्रान्ति**.

**अनुमेयार्थदर्शन** (anumeyārtha-darśana) *n.* cognition of the object which is to be inferred, i.e. probandum स्वपरार्थविभागेन त्वनुमानं द्विधेष्यते । स्वार्थं त्रिरूपतो लिङ्गादनुमेयार्थदर्शनम् TattvSaṁ. 1362.

S. D. 384

**अनुमेयार्थप्रतिपत्ति** (anumeyārtha-pratipatti) *f.* cognition o the object which is to be inferred, i.e. probandum योगिप्रत्यक्षेण त्वविनाभावग्रहणेऽनुमेयार्थप्रतिपत्तिः PramāMī. 41.21 (*on* i. 2.11)

**अनुमेयार्थप्रत्यय** (anumeyārtha-pratyaya) *m.* cognition of the object which is to be inferred, i.e. probandum तत्तु स्वविषये प्रत्यक्षमप्यनुमेयार्थप्रत्ययं कुर्वन्ननुमानम् TātpaṬ.(Vā.) 157.13 (*on* i. 1.5)

**अनुमेयार्थवादिन्** (anumeyārtha-vādin) *adj.* upholder of the theory that (the external) objects are to be inferred अनुमेयार्थवादी अत्र इष्टापत्तिमाह Bhāsk. i. 214.12 (*on* i. 5.5)

**अनुमेयार्थविश्रान्ति** (anumeyārtha-viśrānti) *f.* cessation of, i.e. culmination into the sense which is to be conjectured or suggested को ह्यनुन्मत्तः … सविस्रम्भं भ्रमेदित्यनुमेयार्थविश्रान्तिनियमहेतुर्बाध्यबाधकभावोऽस्त्येवात्र विशेषः VyaktiVi. 113.19.

**अनुमेयार्थविषय** (anumeyārtha-viṣaya) *adj.* referring to the sense which is to be conjectured or suggested वाच्यार्थविषयः साध्यसाधनभावस्तावत् स्पष्ट एव । अनुमेयार्थविषये तु तस्मिन् परपुरुषपरिभोगशङ्कानिरासः साध्यः VyaktiVi. 117.8.

**अनुमेयार्थसंस्पर्श** (anumeyārtha-saṁsparśa) *m.* relation with the sense which is to be conjectured or suggested प्रकारत्रयेऽप्यनुमेयार्थसंस्पर्श एव काव्यस्य चारुत्वहेतुः VyaktiVi. 34.11; 32.24.

**अनुमेयाव्यभिचारनिबन्धन** (anumeyāvyabhicāra-nibandhana) *adj.* caused by or dependent on the non deviation from what is to be inferred, i.e. probandum द्विविधं प्रतिबन्धमनुमेयाव्यभिचारनिबन्धनमनुक्त्वा केवलसाहचर्यनियममात्रवर्णनं यत् प्रसारिका सैव NyāyMañ. i. 104.4.

**अनुमेयाव्यभिचारिलिङ्ग** (anumeyāvyabhicāri-liṅga) *n.* probans not deviating from what is to be inferred, i.e. probandum अनुमानस्य … स्वत एव प्रामाण्यमनुमेयाव्यभिचारिलिङ्गसमुत्थत्वात् TātpaṬ.(Vā.) 12.23 (*on* i. 1.1)

**अनुमेयाव्यावृत्त** (anumeyāvyāvṛtta) *adj.* (used as noun) name of a type of *vaidharmyanidarśanābhāsa* (*lit.* not excluded from, i.e. possessing probandum) यथा परमाणुरित्यनुमेयाव्यावृत्तोऽनुमेयं नित्यत्वं परमाणोरव्यावृत्तम् NyāyKa. 248.17.

**अनुमेयासिद्ध** (anumeyāsiddha) *m.*, *n.* name of a fallacious reasoning (*lit.* having non-existent probandum in a subject) असिद्धश्चतुर्विधः । उभयासिद्धोऽन्यतरासिद्धः तद्भावासिद्धोऽनुमेयासिद्धश्चेति … अनुमेयासिद्धो यथा पार्थिवं द्रव्यं तमः कृष्णरूपवत्त्वात् PadārthaSaṁ. 238.16; अनुमेयासिद्धमाश्रयासिद्धम् अनुमेयमसिद्धं यस्येत्यसिद्धानुमेयम् NyāyKa. 240.14.

**अनुमेयेश्वराभ्युपगम** (anumeyeśvarābhyupagama) *m.* admittance of the Lord who is to be inferred अनुमेयेश्वराभ्युपगमेन हि केवलाधिष्ठातृत्वमुच्यते VedāntSā.(Rā.) 186.2 (*on* ii. 2.36); अनुमेयेश्वराभ्युपगमेन हि प्रधानस्याधिष्ठानत्वमीश्वरस्योच्यते VedāntDī. 114.2 (*on* ii. 2.36)

**अनुमेयेश्वरासिद्धि** (anumeyeśvarāsiddhi) *f.* non-establishment of the Lord who is to be inferred अनुमेयेश्वरासिद्धेस्तदधिष्ठानाच्च न संभवति VedāntSā.(Rā.) 171.8 (*on* ii. 2.11)

**अनुमेयैकदेशवृत्ति** (anumeyaikadeśa-vṛtti) *adj.* occurring only in a part of the subject, i.e. *pakṣa* येनैव सामर्थ्येन तत्तुल्यैकदेशवृत्तिर्लभ्यते तेनैव सामर्थ्येनानुमेयैकदेशवृत्तिरपि हेतुः प्राप्तः NyāyVār. 129.9 (*on* i 1.35)

**अनुमेयैकविषयत्व** (anumeyaikaviṣaya-tva) *n.* the state of referring to the (invisible) probandum only तत्परिच्छेदात्सामान्यतोदृष्टमेवेदं स्यात्, न सामान्यतोदृष्टस्य नित्यपरोक्षानुमेयैकविषयत्वात् NyāyMañ. i. 121.1.

**अनुमेयोद्देश** (anumeyoddeśa) *m.* mention of the subject, i. e. *pakṣa* (as qualified by the probandum) अनुमेयोद्देशोऽविरोधी प्रतिज्ञा PadārthaSaṁ. 233.25; 239.9; अनुमेयोद्देशः … प्रतिपादयितुमिष्टो यो धर्मस्तेन विशिष्टो धर्मी अनुमेयः पक्ष इति कथ्यते NyāyKa. 234.10; Kiraṇā. 335.12.

**अनुमेयोद्देशत्व** (anumeyoddeśa-tva) *n.* the state of being the mention of the subject, i.e. *pakṣa* (as qualified by the probandum) तत्रानुमेयोद्देशोऽविरोधी प्रतिज्ञा … एवं सति यत्कृतकं तदनित्यमित्यस्यापि प्रतिज्ञात्वं स्यात्, अनुमेयोद्देशत्वात् Kiraṇā. 335.12.

**अनुमैकगम्यता** (anumaikagamya-tā) *f.* the state of being what is to be known through inference alone शक्तावप्यनुमैकगम्यतेष्टा, कुष्ठदशायामजनकस्य कुठारस्य तैक्ष्ण्यातिशयवतः कार्यदर्शनात् NayaVi. 133.4 (*on* i. 1.5)

**अनुमैकसमाश्रय** (anumaika-samāśraya) *adj.* which is based or dependent on inference alone यार्थान्तराभिव्यक्तौ वस्तुसामग्रीष्टा निबन्धनम् । सैवानुमितिपक्षे नो गमकत्वेन संमता । अन्यतोऽन्यस्य हि ज्ञानमनुमैकसमाश्रयम्

VyaktiVi. 137.9.

**अनुमोक्ति** (anumokti) *f.* statement, i.e. employment of syllogism सर्वाद्वैतवादिनं प्रति साध्यावैशिष्ट्यादिदोषान्न भेदेऽनुमोक्तिर्युक्ता Nyāyāmṛ. 569B.5.

**अनुमोक्त्यनुसारिणी** (anumokty-anusāriṇī) *adj.* (*f.*) which follows the statement, i.e. employment of syllogism प्रतिज्ञोक्तिरनुमोक्त्यनुसारिणी BṛĀraUBhVā. iv. 3.1501 (comm. अनुमानानुसारिणी हेतूक्तिः)

**अनुमोचित** (anu-mocita) *adj.* **1** discarded मृगसेनोऽपि · घण्टया दृष्टः। पुनरनेन सार्धमुषर्बुधमध्यानुमोचितनिश्चयात्मनि विहितबहुनिन्दया शोचितश्च Yaśas-Cam. ii. 338.18; **2** caused to be released or rescued, set free स राजशैलनिर्णेजकेन व्यापाद्यमानो मयानुनीय कथं कथमप्यनुमोचितो नाद्यापि प्रत्यवस्थानाद्विरमति KamVa. 5.15(12)

**अनुमोत्पत्ति** (anumotpatti) *f.* origination or rise of inference क्रियाशक्त्यादौ सामान्यरूपेण संबन्धग्रहणादेवानुमोत्पत्तेः NayaVi. 128.11 (*on* i. 1.5); अनुमोत्पत्तौ पक्षीकरणं कारणम् NyāySu.(Ja.) 351B.10 (*on* ii. 2.6)

**अनुमोत्पत्त्यर्थं** (anumotpatty-artha) *adj.* meant for origination or rise of inference प्रतिज्ञा च यदग्रे, तज्जिज्ञासोत्पादात्सुखमनुमोत्पत्त्यर्थम्, न तु सामग्रीत्वात् NayaVi. 138.4 (*on* i. 1.5)

**अनुमोत्पादसिद्धि** (anumotpāda-siddhi) *f.* accomplishment of origination or rise of inference अङ्गुल्यादिनिर्देशेऽभिप्रायधियानुमोत्पादसिद्धिः NayaVi. 139.4 (*on* i. 1.5)

**अनुमोद** (anu-moda) *m.* **A** act of rejoicing (one of Bodhisattva's paths of development) कारित्रमधिमुक्तिश्च स्तुतस्तोभितशस्तिताः। परिणामेऽनुमोदे च मनस्कारावनुत्तमौ AbhisaAlaṅ. 1.8; 2.24; **B** act of making (someone) happy, gratification अनुमोदे प्रमोदेन सुखं तिष्ठन्तु दुःखिताः BodhiCa. 3.1 (Pañ. अनुमोदे प्रसादेन इति संप्रहर्षयामि प्रसन्नचित्तः); 3.2; 3.3 [a subsequent pleasure, the feeling of pleasure from sympathy, MW.; Apte; causing pleasure, Apte]

**अनुमोदक** (anumoda-ka) *adj.* **1Ai** who rejoices or is pleased दुःखेन नोद्विग्नः सुखेन नानुमोदकः ··· प्रणवात्मकत्वे देहत्यागं करोति यः सोऽवधूतः TurAU. 474.16; **1Aii** which rejoices (on Bodhisattva's path of development) अनुमोदनासहगतं कुशलमूलम्। तच्चित्तमित्यनुमोदकम् AbhisaAlaṅĀ. 233.7; अनुमोदनाकारेणोत्पादादनुमोदकमेव चित्तमनुमोदनासहगतं पुण्यक्रियावस्तूच्यते AbhisaAlaṅĀ. 233.22; **1B** who joyfully accepts or gratifies योऽसौ पञ्चाशत्तमः पुरुषो भवेत् परंपराश्रवानुमोदकः, तस्यापि ··· अनुमोदनासहगतं पुण्याभिसंस्कारमभिनिर्देक्ष्यामि SaddhaPuṇ. 205.17; **2A** who gives consent or approval एकस्य बहवो यत्र प्रहरन्ति रुषान्विताः।··· तेषां यथोक्तं दापयेद्दमम्।··· उपेक्षी कार्ययुक्तश्च दोषवक्तानुमोदकः BṛhaspaSm. 185.16; SmṛtiCan. iv. 724.3; (गृष्टिम्) पश्यन्ति दीयमानां ये ये भवन्त्यनुमोदकाः। तेऽपि ··· विष्णुलोकमवाप्नुयुः BṛParāSm. 10.43; शकुनाः ···। वचसा कर्मणा ते हि न कायेनानुमोदकाः PadmP. (Ra.) 73.20; त्वं च शप्तः पुरा तेन तत्पापस्यानुमोदकः SkandP. iii(1). 9.67; **2B** which conveys consent or approval 'खल्विमं मानवमावर्तं नावर्तन्त' इति श्रुताविममिति विशेषणं मन्वन्तरान्तरे पुनरावृत्तेरनुमोदकं दृश्यते ŚivārkaMaDī. ii. 501.30 (*on* iv. 4.22)

**अनुमोदकचित्त** (anumodaka-citta) *n.* rejoicing mind (on Bodhisattva's path of development) कतमत्तच्चित्तमनुमोदकं परिणामनाकाले येनानुमोदकचित्तेन परिणामयति AbhisaAlaṅĀ. 233.11.

**अनुमोदत्** (anu-modat) *adj.* who approves or consents (मांसानि) अखादन्ननुमोदंश्च भावदोषेण मानवः MahāBhā. xiii. 116.39; मायां वर्णयतोऽमुष्य ईश्वरस्यानुमोदतः। शृण्वतः श्रद्धया नित्यं माययात्मा न मुह्यति BhāgP. ii. 7.53.

**अनुमोदन** (anu-modana) *n.* **1** approval, assent, consent, permission (न विवेक्तुं च ते प्रश्नमेतं शक्नोमि निश्चयात्) अनुमोदनात्पाण्डवस्य सूक्ष्मत्वात्कार्यगौरवात् MahāBhā. ii. 563*; (आहुको राजा) भोजस्येत्यनुमोदनम्।··· आ भूमिपालान्भोजान् स्वानतिष्ठन्किंकिणीकिनः HariVaṁ. 27.22 (BhārBhāDī. अभ्यनुज्ञानम्); श्रीध्रुवसेनः ··· पूर्वैरप्युर्वीपति[ भिस्तृ ]ष्णालवलुब्धैर्यान्यपहृतानि देवब्रह्मदेयानि तेषांम( Read तेषाम )प्यतिसरलमनःप्रसरमुत्संकलनानुमोदनाभ्यां परिमुदिततृभूव( Read त्रिभुव ) नाभिनन्दितः EI. iv. 79.45; xxii. 118.39; सा बाला ··· सोपवासा समासाद्य पितृभ्यामनुमोदनम् ···। जगाम परया लक्ष्म्या वनदेवीं किलार्चितुम् PadmP.(Ra.) 36.23; 39.198; 119.43; यः संप्राप्तधनोत्सर्ग उत्तमाधममध्यमः। प्रतिदानं तथा तस्य गृहीतस्यानुमोदनम् NītiSā. 18.6; (कथं तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यः) कथमिति यद्याक्षेपार्थम्, अनुमोदनम् — नेति होवाच याज्ञवल्क्यः BṛĀraUBh. 300.10 (*on* ii. 4.2); सीताशुद्धिस्तृतीयायां देवेभ्यो वरलम्भनम्। दशरथस्यागमनं तत्र चैवानुमोदनम् SkandP. iii(2). 30.81; पूजयन्ति सदा स्त्रियः।··· श्वश्रूं श्वसुरमेव च। ताः सर्वाः सुभगाः स्युर्वै विश्नेशस्यानुमोदनात् BhaviP. 65A.12 (i. 31.5); हिंसादयः प्रथमं त्रिधा भिद्यन्ते कृतकारितानुमोदनभेदेन RājMār. 35.7; विना रागेण सर्वत्र सुखिनामनुमोदनम् ··· इत्यादया विशेषाः स्युः प्रायः शान्तेषु योगिषु BhāvPra.(Śā.) 135.14(6); तथैवमनुमोदनं कुर्वत्या पुण्यमर्जितम् KathāK. 44.28; अनुमोदनं नाम स्वेतरक्रियमाणक्रियानुकूल्यम् SetuBa. 216 25; **2A** pleasure, satisfaction, sympathetic joy, rejoicing धर्मेऽनुमोदनं कुर्यात् SarvaSiSaṁ. 10.21; मद्भक्त्या जनवात्सल्यं पूजायां चानुमोदनम्।··· षोडशाङ्गा भक्तिरियम् BhaviP. 225A.16 (i. 151.24); SaurP. 11.16; पुण्यवत्सु पुण्यानुमोदनेन हर्षमेव कुर्यात् ··· अपुण्यवत्सु चौदासीन्यमेव भावयेत्। नानुमोदनं न वा द्वेषम् RājMār. 15.18; **2B** applauding, pleasing, gratification अनुमोदने विचारे च प्रयोक्तव्यं परिवाहितशीर्षकम् AbhinDa. 65; प्रियवादित्वं कृतज्ञता ··· इति त्रयोदशविधं शीलम्।··· साधुकारिणामनुमोदनम् 'प्रियवादिता' CaturCin. iii(1). 393.19; प्रलापः स्यादयोग्यस्य योग्यत्वे नानुमोदनम् RasāSu. 296.22 (3.277); मुनिभिः ···। अनुमोदनजातमौलिकम्पैः हरिकीर्तनश्रवणोन्मुखैरभावि Yādava. 15.77; एता एव चतस्रोऽपि भार्या दानानुमोदनात्। अस्मिन् भवेऽपि संजाता रूपलावण्यभासुराः UttaKuC. 558.

**अनुमोदना** (anu-modanā) *f.* **1Ai** (expression of) thanks, gratification वैशालकानां लेच्छवीनां तावद्दानं देयधर्मं इमाये अनुमोदनाये MaVastu-Ava. i. 297.18; i. 298.19; iii. 426.6; दानादिविपक्षाणां च मात्सर्यादीनां प्रतिदेशना प्रतिपक्षाणां च दानादीनामनुमोदना तदधिपतेयधर्मदेशनार्थं च बुद्धाध्येषणा MaYānaSū. 71.25 (11.62); त्वं महाराज ··· सर्वबुद्धबोधिसत्त्वप्रत्येकबुद्धार्यश्रावकपृथक्जनानामात्मनश्चातीतानागतप्रत्युत्पन्नानि सर्वकुशलमूलान्यभिसंक्षिप्य ··· अनुमोदस्वाग्रयानुमोदनया ŚikṣāSa. 9.18; **1Aii** praise, i.e. appreciation (of the food etc.) स्वभर्तुर्देवरस्यापि माहात्म्यं वीक्ष्य तादृशम्। अनुमोदनयैवात्मा तया राज्या पवित्रितः PārśvC. 3.284; तदा च तव भार्याभिः कृतातीवामोदना (? वानुमोदना)।··· पुण्येन त्वं नृपोऽभवः UttaKuC. 557; वृक्षस्थहंसहंसीभ्यां दृष्ट्वा तद्दानमुत्तमम्। कृत्वानुमोदनां सम्यग् भूरिपुण्यमुपार्जितम् CitraPaC. 107; **1B** rejoicing (one of Bodhisattva's paths of development) उपायानुपलम्भाभ्यां शुभमूलानुमोदना। अनुमोदे मनस्कारभावनेह विधीयते AbhisaAlaṅ. 2.24; विनेयप्रवृत्तेस्तस्य ··· साश्रवानाश्रवरूपेण द्विविधो भावनामार्ग इत्यधिमुक्तिपरिणामनानुमोदनाभेदेन त्रिविधसाश्रवभावनामार्गमध्ये ··· स्वपरपुण्यक्रियासमताप्रतिलाभार्थमनुमोदनामनस्कारमभिधाय ··· देशितः AbhisaAlaṅĀ. 21.11; 229.24; 240.5; **2** permission, consent, assent तपस्विनः।···तपांसि चक्रुराचार्यादधिगम्यानुमोदनाम् PadmP.(Ra.) 29.88; साधूनां सिन्धुराणां च वनवासे महासुखम्।··· भीमोऽनुमोदनामेवं कुर्वन् गत्वान्तिके गुरुम्। अवन्दत महाभक्त्या PārśvC. 2.255 [one of the seven forms of worship, DBHS; praise of that ascetic who eats food affected by *ādhākarma*, JainL.]

**अनुमोदनाकार** (anumodanākāra) *m.* [Inst.] in the form of rejoicing अनुमोदनाकारेणोत्पादादनुमोदकमेव चित्तमनुमोदनासहगतं पुण्यक्रियावस्तूच्यते AbhisaAlaṅĀ. 233.22.

**अनुमोदनानुगुणवचस्** (anumodanānuguṇa-vacas) *n.* speech which is in conformity with, i.e. expressive of approval अनुमोदनानुगुणवचसः खल्वत्रभवन्तः शोभेरन्नैवमधीरनयनाः JātaMā. 47.20 (8.37(2))

**अनुमोदनापरिणामनासहगत** (anumodanāpariṇāmanā-sahagata) *adj.* associated or connected with the turning into and the rejoicing (Bodhisattva's path of development) अनुमोदनापरिणामनासहगतमिति। अनुमोदनापूर्विका परिणामना तथागतानुत्तरसम्यक्संबोध्यनुपलम्भालम्बनेन मनस्कारेण परिणामनाद् विशेषः परिणामनामनस्कारस्तया च सहगतमिति AbhisaAlaṅĀ. 225.11.

**अनुमोदनापुण्य** (anumodanā-puṇya) *n.* merit acquired through praise हंसी ···। दानानुमोदनापुण्यात् संप्राप्ता मानुषं भवम् CitraPaC. 116.

**अनुमोदनापुण्यप्रभाव** (anumodanāpuṇya-prabhāva) *m.* efficacy of the merit acquired through the praise दानानुमोदनापुण्यप्रभावात प्रवराशयः। चित्रसेनकुमारोऽयं संजातो राजनन्दनः CitraPaC. 120.

**अनुमोदनापूर्विका** (anumodanā-pūrvikā) *adj.* (*f.*) preceded by the act of rejoicing अनुमोदनापरिणामनासहगतमिति। अनुमोदनापूर्विका परिणामना AbhisaAlaṅĀ. 225.12.

**अनुमोदनामनस्कार** (anumodanā-manaskāra) *m.* **1** mental activity of approval मनसिकारसंनिश्रिता पारमिताभावना चतुराकारा।··· अनुमोदनामनस्कारेण सर्वलोकधातुषु सर्वसत्त्वानां दानादिकमनुमोदमानस्य MaYānaSū. 102.11 (16.16); **2** mental activity of rejoicing त्रिविधसाश्रवभावनामार्गमध्ये ··· स्वपरपुण्यक्रियासमताप्रतिलाभार्थमनुमोदनामनस्कारमभिधाय ··· द्विविधोऽनाश्रवो भावनामार्गः ··· देशितः AbhisaAlaṅĀ. 21.18; 249.4.

**अनुमोदनाशासन** (anumodanā-śāsana) *n.* sanctioning grant

अर्हन्ति भट्टारकपादाः … ताम्रपट्टदानेन प्रसादं कर्तुमिति यतोस्माभिः … अनुमोदनाशासनं भुवामर्यं महासत्रोपचयाय प्रतिपादितम् EI. xiii. 119.12.

**अनुमोदनासहगत** (anumodanā-sahagata) *adj.* **1** connected with approval योऽसौ पञ्चाशत्तमः पुरुषो भवेत् परंपराश्रवानुमोदकः, तस्यापि … अनुमोदनासहगतं पुण्याभिसंस्कारमभिनिर्देक्ष्यामि SaddhaPuṇ. 205.18; **2** connected with the act of rejoicing अनुमोदनासहगतं कुशलमूलम्। तच्चित्तमित्यनुमोदकम् AbhisaAlaṅĀ. 233.6; 225.18; 234.21; 235.2.

**अनुमोदनी** (anu-modanī) *f.* (expression of) thanks, gratification or approval अनुमोदमी (v.l. °नी DBHS.) हितकरा जगति LaliVi. 15.10 [DBHS.]

**अनुमोदनीय** (anu-modanīya) *adj.* [*f.* -ā] **1A** to be assented ये चास्मद्वन्शो( Read वंशो )त्पद्यमानकराजान[:] तैरियन्दत्तिर्न विलोप्यानुमोदनीया EI. xix. 129.18; **1B** to be admitted or accepted कुतः केवलसुखयोर्व्यतिरेकः। अतः केवलं सुखमैकान्तिकमनुमोदनीयम् TattvPradī.(A.) 79.10 (*on* 1.69); 135.14 (*on* 2.7); **2A** to be rejoiced (on Bodhisattva's path of development) कुशलमूलान्युपलभ्य प्रमुदितचित्तेन परमार्थतोऽनुपलभ्यतया अनुमोदनीयानीत्यनुमोदनामनस्कारः AbhisaAlaṅĀ. 249.4; **2B** to be rejoiced, to be delighted in सर्वमिदमनुचिन्तनीयमनुकथनीयमनुमोदनीयं च यद्येकोऽपि जीविष्यति रक्षसां जीवभूतो दशाननः AdbhuDa. 9.10(3)

**अनुमोदमान** (anu-modamāna) *adj.* **A** applauding वसिष्ठः वर्षकामः पर्जन्यं तुष्टाव।… स मण्डूकाननुमोदमानान् दृष्ट्वा तुष्टाव Nir. 9.6(161.1); किं पश्यसीमाननुमोदमानान् जिह्माननो मत्सरवानिवार्यान् RāmC. 23.51; अनुमोदमानो वचनममीषामाह च स्मेरमुरगपतिः NīlaVi. 81.9; **B** approving मनसिकारसंनिश्रिता पारमिताभावना चतुराकारा।… अनुमोदनामनस्कारेण सर्वलोकधातुषु सर्वसत्त्वानां दानादिकमनुमोदमानस्य MaYānaSū. 102.12 (16.16); महर्षयो वै समुपागता ये प्रशस्य साध्वित्यनुमोदमानाः BhāgP. i. 19.19; PadmP. iv. 11.9; **C** praising आत्मोपमर्देऽप्यनुमोदमानादात्माधिकं पालयतश्च वत्सान्। गावः … अनघामविन्दन् वात्सल्यशिक्षामिव वासुदेवात् Yādavā. 4.72.

**अनुमोदय** (anumodaya) *m.* **A** rise or origination of inferential knowledge नैकदेशजानुमा, अतीतेऽपि लिङ्गे धीस्थेऽनुमोदयात् NayaVi. 119.1 (*on* i. 1.5); धूमस्याध्यक्षसिद्धेनैव धूमध्वजेन क्वचिदविनाभावमनुभूय प्रदेशान्तरे तदनुमोदयमासादयति PrakaVi. 85.22; **B** name of a section (dealing with possibility of inference about ignorance) (इत्यद्वैतसिद्धावविद्यानुमानोपपत्तिः) तर्कैः सारस्वतै रत्नैश्चन्द्रिकाचन्द्रभूषणैः। दुरन्तध्वान्तनाशायाज्ञानस्यानुमोदयः GuruCandr. ii. 425.15 (Colophon)

**अनुमोदयत्** (anu-modayat) *adj.* **A** praising स्वकृतं दुष्कृतं गर्हन् सुकृतं चानुमोदयन्। नाथ त्वच्चरणौ यामि शरणं शरणोज्झितः VītaRā. 17.1; **B** applauding अमृतस्यन्दीनि व्याहृतान्यमूनि वचनानि भृशमनुमोदयद्भिः सभासद्भिः सप्रश्रयमर्चितेन प्रवारणौत्सुकमनसा अहंमदशाहुधरणीसार्वभौमेन … प्रेषितानि … उपायनानि ĀnandRa. 8.31(1)

**अनुमोदयसाधन** (anumodaya-sādhana) *n.* instrument of rise or origination of inferential knowledge प्रमेयमनुमानस्य दृष्टादृष्टस्वलक्षणम्। परप्रत्यायनेच्छूनामनुमोदयसाधनम् PrakaPañ. 105.12.

**अनुमोदयितव्य** (anu-modayitavya) *adj.* to be consented or assented मया … महाद्विजाय श्रीनवशिवाय … °किणिहिकाग्रामः … प्रदत्तः [*।] … भवि[ष्य]दागाभिभोक्तृनृपतिभिः सर्व्वैरपि अस्मद्वंशजैरपरवंशजैर्व्वाऽनुमोदयितव्यः EI. xxv. 171.37.

**अनुमोदयितृ** (anu-modayitṛ) *adj.* who takes pleasure or rejoices केवली … अनुबृंहयिता परेण स्वस्य क्रियमाणस्य तस्यानुमोदयिता, तद्भावे हर्षकारीत्यर्थः … भवति SthānṬ. 389B.13.

**अनुमोदयित्वा** (anu-modayitvā) *ger.* [P. vii. 1.37-38] having made to give consent, i.e. having asked for permission कथं संन्यस्तो भवति।… मातरं पितरं भार्यां पुत्रान् सुहृदो बन्धूननुमोदयित्वा … वैश्वानरीमिष्टिं कुर्यात् KaṭhŚrU. 1(1); SaṁnyāU. 1.1(3); यदहरेव विरजेत्तदहरेव प्रव्रजेदिति बुद्ध्वा … पितरं मातरम् … अनुमोदयित्वा … इष्टिम् … आग्नेय्यामेव कुर्यात् ParaHaṁsPaU. 483.4; बन्धुपुत्रमनुमोदयित्वा …। प्राचीमुदीचीं वा निर्वर्तयंश्चरेत पात्री दण्डी ŚāṭyāU. 18.

**अनुमोदविभ्रम** (anumoda-vibhrama) *m.* flurry or flutter due to (excessive) joy गिरौ हिमोत्थे।… फणीन्द्रकन्या गिरिकन्यकाश्च …। सर्वास्तु तास्ते सततं सहायतां समाचरिष्यन्त्यनुमोदविभ्रमैः ŚivaP. ii(2). 22.30 (95B.13)

**अनुमोदि** (anumodi) *adv.* in a pleasing manner विशोधनं स्वर्गमहापथस्य त्यागप्रियाणामनुमोदि नृणाम् JātaMā. 4.20 (1.18) (*but* pw., *nt.* **अनुमोदिन्** *adj.* causing pleasure)

**अनुमोदित** (anu-modita) *adj.* [*f.* -ā] **1Ai** applauded, seconded **ii** admitted, supported (theory, view etc.) **iii** supported, i.e. enriched **Bi** permitted, allowed, approved, consented **ii** permitted (to leave or go) **iii** agreed or consented (to pay) **C** praised, i.e. appreciated **2A** who has been made happy, i.e. is gratified **B** pleased, delighted **1Ai** applauded, seconded मन्त्रिभिश्चानुमोदितः। आरुरोह प्रतिज्ञां स सर्पसत्राय पार्थिवः। पारिक्षितः MahāBhā i. 47.1; आहिच्छत्रं स्वकं राज्यं पित्र्यं प्राप्य महाद्युतिः। द्रुपदस्य पिता राजन् ममैवानुमते तदा (v.l. मम वाचानुमोदितः) HariVaṁ. 15.62; प्रतस्थे गिरिशो वीज्यमानश्च गङ्गया।… स्त्रीभिर्नानाविधालापैर्लाजाभिश्चानुमोदितः SkandP. i(2). 26.57; दत्तोत्सवा दनुजवैरिणि रुक्मिणी सा। आलोकितेव निकटान्निकटीकृतेव सोत्प्रासचाटुवचनैरनुमोदितेव RukmiHa. 1.7; उदस्थादथ तत्सैन्यभेरीध्वनिरनिह्नुतः। प्रतिशब्दापदेशेन यः (स्वरसंकरः) शैलैरनुमोदितः Surath. 10.30; इत्युक्तः शम्भुराजेन्द्रो योगिना शिवयोगिना। केशवेन गणेशेन मन्त्रिभिश्चानुमोदितः ParamāKā. 117.30; **1Aii** admitted, supported (theory, view etc.) अप्रवृत्तं कृतं यत्र श्रुतिस्मृत्यनुमोदितम्। नान्यथा तत्पुनः कार्यं न्यायापेतं विवर्जयेत् KātySm. 51; प्रपञ्चसद्भावः … स्वप्रमाणबलात्सिद्धः श्रुत्या चाप्यनुमोदितः SaṁviSi. 82.8; त्वयोक्तोऽयं ग्लहः सत्यं न ममैषोऽनुमोदितः BrahmP. 201.20; त्रिविधं साधनं दृष्टं साधूनाममलात्मनाम्। अयं हि शास्त्रसिद्धान्तो मुनीनां चानुमोदितः ĀdiP. 3.4; अस्त्येवास्माकमस्या लोकान्तरफलोपभोगयोग्यपुरुषोपनयने नोपयोगः तद्धीयतामेषा (मीमांसा) कर्मोपयुक्ता। तत्र तेषामन्तेवासिनां मध्ये केनाप्यन्तेवासिनैतदनुमोदितमेव PraboCan. 6.18 (110.7); दानवीरे … व्यभिचारिणः।… प्रसादे बहुदातृत्वं तद्वद्वाचानुमोदितम् RasāSu. 196.1 (2.237); एतावदस्माभिरिहोपन्यस्तं न त्वातञ्चनाभ्यासस्य सिद्धान्तलिङ्गत्वमनुमोदितम् VidhiRa. 42 (208.24); श्रुत्यैवानुमोदितस्य मननापरपर्यायानुमानस्य … सिद्धार्थरूपे ब्रह्मणि तस्य ततः प्राबल्याभावात् ŚivārkaMaDī. ii. 9.10 (*on* ii. 1.4); मृगीविशेषणत्वेनानेकपदार्थो हेतुरुक्त इत्यलंकारसर्वस्वकृतोक्तम्, अनुमोदितं च कुवलयानन्दकृता RasGaṅ. 632.14; **1Aiii** supported, i.e. enriched शृङ्गारवचनप्रायः करुणः स्यात्स चान्यथा। तस्माच्छृङ्गार एवायं करुणेनानुमोदितः ŚṛṅgāTi.(Ru.) 2.101; **1Bi** permitted, allowed, approved, consented अपुत्रया मया राजन्सपत्नीनां भयादिदम्। कन्या शिखण्डिनी जाता पुरुषो वै निवेदितः। त्वया चैव नरश्रेष्ठ तन्मे प्रीत्यानुमोदितम् MahāBhā. v. 192.3; धर्मः …। अनुमोदितः … पुनातीह नरं सदा MahāBhā. xiv. App. I. 4(61); गान्धर्वेण विवाहेन बह्व्योऽथ मुनिकन्यकाः। श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः Śāk. 3.28; आदत्त च निधिं तं तु पिशाचेनानुमोदितः (वैश्यः) BrahmāṇḍP. ii. 51.58; अस्तु वो विदी(दि)तम् यथा … °ब्राह्मणविष्णुशर्म्मणे…क्षेत्रम् … एतन्मया … अनुमोदे(दि)तम् EI. xi. 111.21; क्रमेण समारूढयौवनारम्भं परिसमाप्तसकलकलाविज्ञानमधीताशेषविद्यं चावगम्यानुमोदितमाचार्यैश्चन्द्रापीडमानेतुं राजा … बलाहकनामानम् … प्राहिणोत् Kād. 77.6; 233.20; श्रीकण्ठोऽपि … राज्ञानुमोदितः … भूविवरं विवेश HarṣaC. 171.4; इच्छतापि तमालापं लज्जां भावयता मया। अप्रत्याख्यातकथितं कथयेत्यनुमोदितम् BṛKathāŚloSaṁ. 10.28; स्वामिन् (वज्रबाहुः) अद्य निष्क्रमितुं भीमादिच्छामि भवतारकात्। ततः समाप्तयोगेन गुरुणेत्यनुमोदितः PadmP (Ra) 21.121; 92.48; वा(ब्रा)ह्मणानाञ्च प्राग्भोगक्रमेणैव यथान्श(Read यथांश) मनुमोदितः (अग्रहारः) EI. v. 212.14; ix. 283.12; xxiii. 21.14; दिष्ट्यानुमोदितोऽहमार्येण MahāvīC. 4.43(1) (comm. स्वेन सह गन्तुं समर्थितः); भगवत्यरुन्धती नाहं वधूविरहितामयोध्यां गमिष्यामीत्याह। तदेव राममातृभिरनुमोदितम् UttaRāC. 2.6(16); विश त्वं निरयं तस्माद् गुरुणा चानुमोदितः BhāgP. viii. 21.32; 1.5.25; अजेया ह्यसुराः साध्वि भृगुणा ह्यनुमोदिताः SkandP. i(1). 18.10; ii(9). 31.4; वितर्का हिंसादयः कृतकारितानुमोदिताः YogSū. 2.34 (RājMār. अन्येन क्रियमाणाः … साध्वङ्गीकृताः); सा चेयं देवी … जनकेन…अनुमोदिता च स्वेच्छाविहाराय TilaMañ. 168.15; द्विजोत्तमान्। विसर्जयेत् प्रियाण्युक्त्वा प्रणिपत्य च भक्तितः। आद्वारमनुगच्छेच्च आगच्छेदनुमोदितः BrahmP. 220.123; SmṛtiCan. v. 402.9; श्रुतोऽनुपाठितो ध्यात आदृतश्चानुमोदितः। सद्यः पुनाति सद्धर्मः PadmP. iv. 84.33; iv. 83.26; मयानुमोदिता सापि कंसप्रियचिकीर्षया। मृता तत्रैव … प्रिया तव AdiP. 19.67; शिवयोर्भुञ्जतोर्वीर्यं दृष्ट्वा धात्र्यां समर्पितम्। पावकः प्रतिजग्राह दैवतैरनुनाथितः (v.l. अनुमोदितः) RāmaCam. 1.58; 5.34(3); मायया श्लाघ्यमेतदित्युक्तम्। मनसा चानुमोदितम् PraboCan. 6.6 (102.2); यदि दैवात्तीर्थस्नानादि करोति तद्गुरवे निवेद्य गुरुणानुमोदितस्तत्फलं लभते VīraMi. (Tīrtha.) 20.3; सेनापतिः …। उदारमतिरानन्दराजाद्यैरनुमोदितः। अवोचत् ParamāKā. 35.39; 131.51; वासवः…प्राह तां सुमतिनानुमोदितः ŚivLī. 10.25; अपराधः … पुनर्द्विधा कारितश्च तथा ज्ञेयोऽनुमोदितः ŚukraNī. 4(1).69; **1Bii** permitted (to leave or go) उद्धवः … जगामाशु तपोवनम्।… केशवेनानुमोदितः ViṣṇuP. v. 37.37; BrahmP. 210.36; मुनींश्च तान्नमस्कृत्य तैः सर्वैरनुमोदितः। (रामः) निश्चक्रामाश्रमात् BrahmāṇḍP. ii. 22.3; **1Biii** agreed or consented (to pay) ऋणं पुत्रकृतं पित्रा न देयमिति धर्मतः। देयं प्रतिश्रुतं यत्स्यात् यच्च स्यादनुमोदितम् KātySm. 544; BṛhaspaSm. 116.124;

VīraMi.(Vyavahāra.) 273.18; **1C** praised, i.e. appreciated पितृतुल्यो वैश्रवणो ब्रह्मणा चानुमोदितः AdhyāRā. vii. 1.37; तेन तु कृपणत्वात्किमपि न दत्तम्। केवलं त्वद्दत्तमेव किंचिदनुमोदितम् PrabaK. 73.22; सामोदैरनुमोदिता मृगमदैरानन्दिता चन्दनैः ··· वागेषा नवकालिदासविदुषः ··· दुष्कविव्रातैः ··· क्रियेत विकृता ŚaṅkaDigVi.(Mā.) 1.10; त्वन्नार्या गुणसुन्दर्या तद्दानमनुमोदितम् CampaŚreKa. 459; **2A** who has been made happy, i. e. is gratified एवमस्त्विति तामाह स तु कन्यां कलावतीम्। विभावर्याः कलावत्याः स्निग्धदृष्ट्यानुमोदितः MārkP. 64.18; रम्भाय संदेशमुक्त्वा तेनानुमोदितः। (दूतः) तथैवागत्य सोऽवादीद्राज्ञे चन्द्रप्रभाय तत् KathāSaSāg. viii. 1.91; **2B** pleased, delighted तेनानुमोदितेन भरतमुनिना स्वयमागत्य सूत्रितम् ··· दर्शयसि दिव्यं प्रेक्षाविधिम् TilaMañ. 57.12; ब्रह्मसृष्टौ वयं सर्वे सृष्टा इवानुमोदिताः BṛDharmaP. i. 36.122.

**अनुमोदितक** (anumodita-ka) *adj.* who is approved (of his position) सुवर्णवीथ्याधिकृतान्तरङ्गउपरिक(Read ङ्गोपरिक)जीवदत्तस्तदनुमोदितक[:*] वारकमण्डले विषयपति[:*] पवितुकः EI. xviii. 76.4.

**अनुमोदितदर्शन** (anumodita-darśana) *adj.* who is made happy through the sight or meeting उच्चैःप्रमोदमनुमोदितदर्शनः सन् धन्यो नमस्यति पदाम्बुरुहं प्रभूणाम् PraboCan. 2.24 (30.8) (comm. दर्शनदानकृपया कृतार्थीकृतः)

**अनुमोदितरसाप्लावित** (anumoditarasāplāvita) *adj.* **i** overwhelmed with the praiseworthy devotional feelings तत्त्वतोऽशेषजन्तूनां भवत्पूजामयात्मनाम्। दृष्ट्यानुमोदितरसाप्लावितः स्यां कदा विभो Stotrā. 9.8 (comm. तैरेवानुमोदितः श्लाघितो यो रसो भक्त्यानन्दप्रसरस्तेन आप्लावितो व्याप्तः कदा स्याम्); **ii** overwhelmed with the feeling of joy, Stotrā. 9.8 (comm. अनुमोदनरसेन आनन्दप्रसरेणाप्लावितः)

**अनुमोदितविद्यागुरुजन** (anumodita-vidyāgurujana) *m.* [Loc.] after the *vidyāgurus* (teachers) were gratified परिणताशेषशास्त्रम् ··· अनुमोदितविद्यागुरुजनेन(?ने च) हरिवाहनम् ··· राजा ··· स्वभवनमानिनाय TilaMañ. 79.19.

**अनुमोदितव्य** (anu-moditavya) *adj.* (pred.) ought to be approved orsanctioned पुश्पिणो ग्राम[:]··· प्रतिपादितः ··· [।*] नित्यं परोपकृतिमात्ररतैर्भवद्भिर्धर्म्माभिराधनपरैरनुमोदितव्यम् EI. iii. 45.44.

**अनुमोदितुम्** (anu-moditum) *inf.* to approve, i.e. to prompt इत्युक्तवन्तं जनकात्मजायां नितान्तरूक्षाभिनिवेशमीशम्। न कश्चन भ्रातृषु तेषु शक्तो निषेद्धुमासीदनुमोदितुं वा RaghuVa. 14.43.

**अनुमोदितृ** (anu-moditṛ) *adj.* who permits or allows शिवो दाता हि लोकानां कर्ता चैवानुमोदिता SkandP. i(1).13.64.

**अनुमोदिन्** (anumod-in) *adj.* **i** causing pleasure विशोधनं स्वर्गमहापथस्य त्यागप्रियाणामनुमोदि नृणाम् JātaMā. 4.20 (1.28) [pw., *nt.*]; **ii** who takes pleasure or rejoices व्रजेन्दुः ··· मनोज्ञतरवृन्दावनान्तरनुमोदी। तनोतु मयि तुष्टिम् ··· अद्य वनमाली StavMā. 177.16.

**अनुमोद्बोधक** (anumodbodha-ka) *adj.* which causes rise or origination of inferential knowledge तत्त्वरत्नाकरेऽपि।··· अनुमोद्बोधकं वाक्यं प्रयोगः साधनं च तत्। इत्यादि। तदेवमनुमोद्बोधकं वाक्यं प्रतिज्ञादिपञ्चावयवम् NyāyPari. 156.8.

**अनुमोद्भव** (anumodbhava) *adj.* which is produced through inference अथानुमोद्भवं स्मृत्या हेतुत्वेनापि संस्थितम्। मध्ये तयोरिहेदानीं मानं शाब्दं प्रचक्ष्महे NyāyPari. 360.1.

**अनुमोद्य** (anumod-ya) *ger.* **1A** having become pleased, having rejoiced सोऽपि यदि श्रुत्वानुमोदेत, अनुमोद्य च सोऽप्यपरस्मै आचक्षीत SaddhaPuṇ. 205.15; इदं माधवमासस्य माहात्म्यम् ···। श्रुत्वा पठित्वा विधिवदनुमोद्य मनःप्रियम्। लभेद्भक्तिं भगवति यया स्यात्क्लेशसंक्षयः PadmP. iv. 99.5; अनुमोद्य शुभे स्वप्ने त्वशुभे तस्य शान्तये।··· दत्त्वा च दक्षिणाम्। द्विजेभ्यश्चैव लिङ्गिभ्यः सुस्वप्नोऽस्त्विति वाचयेत् IśānŚiPa. ii. 18.34; अनुमोद्य मनोमोदमेदस्विमनसावुभौ। क्षमापती गतौ KumāDeC.(So.) 27.23; **1B** having caused to please, having gratified परकीयं दानमयादिपुण्यक्रियावस्तु वक्ष्यमाणानुमोदनामनस्कारेणानुमोद्य बोधौ परिणामयितव्यम् AbhisaAlaṅĀ. 225.16; शंकराय नमस्तुभ्यमिति स्तुत्यानुमोद्य तु। यज्ञस्यास्य पतिस्त्वं हि शक्तिरेषा तवाचला IśānŚiPa. ii. 16.39; **2Ai** having permitted, approved or consented विनयवत्यासौ कारितं जैनमालयम्। अनुमोद्य महापूजां यक्षीभूदायुषः क्षये PadmP.(Ra.) 20.145; भवद्भिस्सर्वैरेव भूमेर्दानफलगौरवात् ··· दानमिदमनुमोद्य परिपालनीयम् EI. iv. 250.54; xviii. 306.45; xiv. 328.52; xix. 99.29; **2Aii** having admitted or accepted (views etc.) अथानुमोद्याभिहितं मुनिभ्यां स मण्डनार्यः ··· आनर्चे ··· मुनीन्द्रान् ŚaṅkaDigVi. (Mā.) 8.52; 8.132; **2B** having praised इत्थमाग्रभटमनुमोद्य क्षमापती यथागतं जग्मतुः PrabaCin. 88.6.

**अनुमोद्य** (anu-modya) *adj.* (pred.) ought to be approved दत्तं दानं यदेतत् ···। सर्व्वेषाञ्जन्मभाजां भवभयजलधेः पारसंतारणार्थम् ··· अनुमोद्यम् EI. xx. 44.17.

**अनुमोद्यमान** (anu-modyamāna) *adj.* [*f.* -ā] **1** being made happy or gratified सेनाधिनायकस्य वेणीमतीति ··· एकैव पुत्रिका।··· अभ्यर्थितेत्यनुमोद्यमाना बन्धुभिः ··· उत्तामयामास पितरौ UdaySuKa. 97.23; **2** being applauded साधु साध्वित्यनुमोद्यमानाः सचिवेन ··· प्रतस्थिरे दानवाः सद्य एव मन्दरम् NīlaVi. 68.7.

**अनुमोपयोगिनी** (anumopayoginī) *adj.* (*f.*) useful for or conducive to inferential knowledge स्मृता व्याप्तिरेव सानुमोपयोगिनी NyāySu.(Ja.) 261A.2 (*on* ii. 1.2)

**अनुमोहन** (anu-mohana) *n.* act of causing delusion, i.e. seducing मन्मथ उवाच।··· योषिन्महास्त्रं मे तत्कान्तां भगवन् सृज। मया संमोहिते शंभौ यथा तस्यानुमोहनम्। कर्तव्यम् ŚivaP. ii(2). 8.35 (76B.7)

**अनुमौलि** (anumauli) *adv.* around the head तस्मिन्सिंहासने दिव्ये श्रीमान्नेमिरुपाविशत्।··· अनुमौलि क्षणादाविरासीद्भामण्डलं विभोः PāṇḍaC. 17.26.

**अनुम्क** (a-numka) *adj.* not having the augment *n* अनुम्ग्रहणेन न शत्रन्तं विशेष्यते। किं तर्हि। शतैव विशेष्यते शता योऽनुम्क इति MahāBh. i. 141.7 (*on* i. 1.56)

**अनुम्ना** (anu-mnā-) I. Ā. to acknowledge or concede मुहाँ उतासि यस्य तेऽनु स्वधावरी सहः। मम्नाते इन्द्र रोदसी ṚV. vii. 31.7 (Sāy. अनुमन्येते)

**अनुम्रियमाण** (anu-mriyamāṇa) *adj.* dying after अहं परुषालापमुक्तः कुपितया तया। मामनुम्रियमाणस्त्वमुच्यसे किं जनैरिति BṛKathāŚloSaṁ. 20.354.

**अनुम्रोक** (anu-mroka) *m.* name of a deity (*lit.* who follows Mroka) म्रोकानुम्रोक पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनः AV. ii. 24.3 (Sāy. म्रोचति धनादिकम् अपहृत्य छन्नः सन् गच्छतीति म्रोकः। मोकम् अनुसृत्य गच्छतीति अनुम्रोकः); AV.(P.) ii. 42.4 (*but* pw. name of a destructive Agni)

**अनुम्लुच्** (anu-mluc-) I. P. to rise प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसाविति ··· अहोरात्रे तु ते ते हि प्र च म्लोचतोऽनु च म्लोचतः ŚatBr. VIII. vi. 1.18 [to rise from the resting-place (?), MW.]

**अनुम्लोचन्ती** (anu-mlócantī) *f.* name of an Apsaras (*lit.* the rising one) अयं पश्चाद्विश्वव्यचास्तस्य ··· प्रम्लोचन्ती च। अनुम्लोचन्ती चाप्सरसौ TaiS. IV. iv. 3.2; KāṭhS. 17.9 (i. 252.5); KapiKaS. 26.8 (110.11); VājaS. 15.17; VājaS.(K.) 16.4; ŚatBr. VIII. vi. 1.18; अप्सरसो हृष्टाः ···। उम्लोचेत्यभिविख्याता प्रम्लोचेति च ता दश (v.l. अनुम्लोचन्ती च तादृशी) MahāBhā. i. 114.54; दैविक्योऽप्सरसो दश।··· प्रम्लोचेत्यभिविख्यातानुम्लोचन्ती VāyuP. ii. 8.50.

**अनुम्लोचा** (annmlocā) *f.* name of an Apsaras (rising in the month of Bhādrapada) अप्सरसो हृष्टाः ··· उम्लोचेत्यभिविख्याता (v. l. अनुम्लोचेति विख्याता) MahāBhā. i. 114.54; अनुम्लोचा शङ्खपालो व्याघ्रो भाद्रपदे ··· वसन्ति ViṣṇuP. ii. 10.10; BhāgP. xii. 11.38; (अप्सरसः) प्रम्लोचेत्यभिविख्यातानुम्लोचैव तु ता दश BrahmāṇḍP. ii. 7.15; i. 23.10; KūrmaP. 375.11 (1.42); SkandP. iii(2). 3.66; ViṣṇuDhaP. ii. 22.66; LiṅgaP. i. 55.33 [ŚabdaRa.(Vā.) 167]

**अनुम्स्थानिकत्व** (anumsthānika-tva) *n.* the state of being one (word) which has other than the augment *n* as the original 'नुम्व्यवाये' इति णत्वं भविष्यति। यदि 'नुम्व्यवाये' इत्युच्यते प्रेन्वनमित्यत्रापि प्राप्नोति, इह च न स्यात् प्रोम्भणमिति, अनुम्स्थानिकत्वात् PadMañ. *on* KāśiVṛ. *on* P. i. 1.0 (47.12)

**अनुय** (anu-ya) *m.* progeny (*lit.* who comes after by birth), cf. **अनुयानुग.**

**अनुयच्छमान** (anu-yácchamāna) *adj.* [*f.* -ā] **1** controlling or binding together in due order (यजमानाः) मा च्छेद्म रश्मीँरिति नाधमानाः पितॄणां शक्तीरनुयच्छमानाः।··· मदन्ति ṚV. i. 109.3 (Sāy. अनुक्रमेण नियतान् कुर्वन्तः); TaiBr. III. vi. 9.1; ऋतस्य रश्मिमनुयच्छमाना भद्रंभद्रं क्रतुमस्मासु धेहि। उषः ṚV. i. 123.13 [directing, giving a direction to, MW.]; **2** (ánu-yácchamāna) offering अंसेष्वा मरुतः खादयो वो वक्षःसु रुक्मा उपशिश्रियाणाः। वि विद्युतो न वृष्टिभी रुचाना अनु स्वधामायुधैर्यच्छमानाः ṚV. vii. 56.13; MaiS. iv. 14.18 (iv. 247.11); TaiBr. II. viii. 5.6 (better *adn.*; cf. **अनु 1Di**)

**अनुयज्** (anu-yaj-) I. P. (rarely Ā.) **A** to offer afterwards, to make an after-offering दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तमनु यजति TaiS. VI. iii. 11.6; यैर्व्यवानन्यजति तेन यज्ञः क्रियतेऽनुयजति संमिष्ट्या

एवं प्रतिष्ठित्यै MaiS. i. 10.9 (i. 140.17); ऋतंवो नानुयजति वैश्वानरो वषट्कारो यदनुयजेद् वैश्वानरमृतुष्वन्ववसृजेत् MaiS. iv. 6.7 (iv. 89.16); iv. 7.1 (iv. 93.13); iv. 7.4 (iv. 97.7); यदनुवषट्कुर्यात्प्राणान्संस्थापयेत्प्रमीयेत यन्नानुयजति तस्मात्प्राणा असंस्थिता आ च परा च चरन्ति KāthS. 27.5 (ii. 143 22); KapiKaS. 42.5 (25.2); अग्निवजति पुरो हि स पुरः प्राणान्नानुयजति यदनुयजेदग्निना प्राणानन्तरियात्प्रमीयेत KāthS. 28.8 (ii. 163.3); KapiKaS. 44.8 (264.7); अनुयजत्यग्निस्समष्टिरग्निः प्रतिष्ठितिः KāthS. 36.4 (iii. 71.15); तासु सर्वास्विष्टास्वथैतत्पुरश्चैवानुयजति तस्मादनुयाजा नाम ŚatBr. I. viii. 2.7; ŚatBr.(K.) II. vii. 4.6; यदि दिवा यदि नक्तं नानुयजति नेदृक्तून्प्रवृणजा इति ŚatBr.(K.) V. iii. 2.8; V. iv. 3.8; अनुयजति स्वगाकृत्यै TaiĀ. v. 8.2 (625.1); वाजिनस्याग्ने वीहीत्यनुयजति ĀpaŚS. viii. 3.10; xix. 3.1; HirŚS. v. 1.38 (454.6); VaikhāŚS. 8.7; अनुयजतीत्यनुवषट्कारश्चोच्यते SaṅkarKā. i. 1.1 (AOR Ed.); SaṅkarKāBh. 156.12 (*on* iii. 3.12); **B** to offer to, to make an offering to अहं नाग्निष्ठावनुयजामि विद्वान् TaiBr. III. vii. 5.12 (*but* BhaṭṭaBhā. यागस्यानन्तरं यजामि); BhārŚS. ii. 19.1; ĀpaŚS. ii. 20.6; HirŚS. ii. 5.46 (281.10)

**अनुयजत्** ( anu-yajat ) *adj.* who makes after-offering or performs *anuyāja* अदीक्षितस्त्वनुयजंस्तत्तन्मन्त्रानुसंहिताम् । तारिकामुच्चरन् कुर्यान्मां चान्तःस्थां विभावयेत् LakṣmīT. 40.96.

**अनुयजन** ( anu-yajana ) *n.* after-offering or subsequent sacrifice अग्ने पुरोयजने सत्यग्निष्टोमस्यानुयजनं संभवति NyāyMāVi. 101.3 (*on* ii. 3.10)

**अनुयजनप्रतियोगित्व** ( anuyajanapratiyogi-tva ) *n.* the state of being the relational adjunct of after-offering अग्निष्टोमादिकृत्यनुयजनप्रतियोगित्वं तत्पूर्वभावित्वलक्षणम् MīmāKau. ii. 65.18 (*on* ii. 3.21)

**अनुयजनप्रतियोगित्वरूप** ( anuyajanapratiyogitva-rūpa ) *adj.* of the form of being the relational adjunct of after-offering उत्तरवाक्येषु अनुयजनप्रतियोगित्वरूपस्य गुणस्य … श्रवणात् तदनुरोधेन चिनोतेरपि लक्षणया यागपरत्वनिश्चयः MīmāKau. ii. 65.12 (*on* ii. 3.21); ii. 66.5 (*on* ii. 3.21)

**अनुयजनवश** ( anuyajana-vaśa ) *m.* [Abl.] on account of the after-offering or subsequent sacrifice अनुगमानुपपत्तेरेवमनुयजनवशादेवाग्नेयागत्वसिद्धिः ŚāstrDī. 172.6 (*on* ii. 3.10)

**अनुयजुःकृष्ट** ( anuyajuḥ-kṛṣṭa ) *adj.* (part of the ground) ploughed according to the (recitation of) *yajus*-formula ( अध्वर्युः अश्वम् ) अनुयजुःकृष्टं परिणयत्युत्तरतः प्रथमम् KātyŚS. xvii. 3.25.

**अनुयजुस्** ( anuyajus ) *adv.* according to the *yajus*-formula, PW.; pw.; MW., cf. अनुयजुःकृष्ट.

**अनुयत्** ( anu-yat- ) I.Ā. to strive for or after, i.e. to attain or reach मुवद्दिशेषु काव्येषु रन्ता नु जनान्यतते पञ्च धीरः ṚV. ix. 92.3 ( Sāy. अनुगन्तुं प्रयत्नं करोति । अनुगच्छतीति यावत् )

**अनुयत्** ( anu-yat ) *adj.* **1** which follows, i.e. which is in conformity with अह्नः स्तोमं चैतमनुयन्तं पश्यामः NidāSū. 8.3 (135.19); 8.10 (147.22); **2** which follows, i.e. which results from न प्रत्ययोऽनुयंस्तच्च प्रत्यक्षात् परिहीयते PramāVār. 3.292; **3A** which runs along नन्तुं नाकालयानामनिशमनुयतां पद्धतिः पङ्क्तिरेव SūryaŚ. 69; **3B** who goes after, who imitates राजहंसो धृतिं लेभे सध्रीचीमनुयन्नयम् MahāP. 9.3; 12.273.

**अनुयत** (ánu-yata) *adj.* pursued or followed (in hostile manner) वर्यश्चन सुभ्वं१ आवयन्ति क्षुभा मर्तमनुयतं वधस्नैः ṚV. v. 41.13 ( Sāy. अभिगतम् )

**अनुयत्नतस्** ( anuyatna-tas ) *adv.* with constant effort दद्यात् सर्वजन्तूनामाहारमनुयत्नतः । त्रिः पृथ्वीं रत्नसंपूर्णां यद्दत्त्वा तत् फलं लभेत् ŚivU. 6.228.

**अनुयन्त्र** ( anu-yantra ) *n.* **A** minor surgical instrument or device (useful for extracting the piercing sharp element from the body) स्वस्तिकसंदंशतालनाडीशलाकाख्यान्यनुयन्त्राणि AṣṭāSaṁ. i. 167.21 (1.34); अनुयन्त्राण्ययस्कान्तरज्जुचर्मान्तर्वल्काश्ममुद्गरपाणिपादतलाङ्गुलिजिह्वादन्तनखमुखशाखावालचलोष्मकालपाकहर्षभयानि AṣṭāSaṁ. i. 170.10 (1.34); **B** minor mechanical instrument, cf. अनुयन्त्रायुधोपेत.

**अनुयन्त्रायुधोपेत** ( anuyantrāyudhopeta ) *adj.* furnished with minor mechanical instruments and weapons अनुयन्त्रायुधोपेतं सोदकं दुर्गमुत्तमम् AgniP. 221.6.

**अनुयन्त्रित** (anu-yantrita) *adj.* [*f.*-ā] **I** controlled, admonished अनुम(v.l. °य)न्त्रितास्तेन धर्मराजेन ताः प्रजाः MahāBhā. iii. 1.37; xii. 260*(2); **II** (self-)controlled गायत्रीं तु ततो रौद्रीं ध्यात्वा ब्रह्मानुयन्त्रितः LiṅgaP. i. 13.13.

**अनुयम्** ( anu-yam- ) I.U. [DhātuPā. 1.871; 1.1033] **1** to follow अनु कृष्णे वसुधिती येमाते विश्वपेशसा ṚV. iv. 48.3 ( Sāy. अनुगच्छतः ); **2** to control, to direct इन्द्रः सीतां नि गृह्णातु तां पूषानु यच्छतु ṚV. iv. 57.7; तं पृच्छन्तोऽवरासः पराणि प्रत्ना त इन्द्र श्रुत्यानु येमुः ṚV. vi. 21.6; अव्यथमाना यज्ञमनुयच्छस्व सुनीती BhārŚS. iv. 10.1; ĀpaŚS. iv. 7.2; HirŚS. vi. 2.17 (513.18); भज वारिजनेत्रे मामनुयच्छ इशं कृशोदरि जनेऽत्र माम् YudhiVi. 5.799; **3** to offer अन्वद्य नो अनुमतिर्यज्ञं देवेषु यच्छताम् AV (P.) xx. 3.9; अनानुजामनुजां मामकर्त सत्यं वदन्त्यनुयच्छ एतत् KāthS. 39.10 (iii. 127.9)

[1]**अनुयम** ( anu-yama ) *adj.* following or subsequent to the practice of self-restraint योगं त्वनुयमं दिव्यं प्राप्तं तैश्छिन्नसंशयैः BrahmāṇḍP. iii. 2.286.

[2]**अनुयम** ( anu-yama ) *adj.* equal to the match पितामहः।… सर्वेत्राग्नौ समश्नापि वसन्ननुयमो मतः PadmP. v. 2.85.

**अनुयमुनम्** ( anuyamunam ) *adv.* along (the side or length of) Yamunā अनुयमुनं मथुरा KāśiVṛ. *on* ii. 1.16.

**अनुयव** ( anu-yava ) *m.* [listed in the *parimukhādigaṇa*, JaineVyā. 198.9 (*on* iii. 3.34); KāśiVṛ. *on* iv. 3.59; GaṇRa. 5.342 (380)] smaller or inferior kind of *yava* (barley) न्यूनो यवादन्य(?नु)यवः AṣṭāHṛ. i. 6.13; यवस्तु शीतशूकः स्यान्निःशूकोऽनुयवः स्मृतः ।… यवः कषायो मधुरः …। अस्मादनुयवो न्यूनः BhāvPraNi. 139.28.

**अनुयवम्** (anuyavam) *adv.* like barley परिमुखादिभ्यो ञ्यो भवति। परिमुखं भवः परिमुख्यः ।… अनुमायम् । अनुयवम् CāndraVṛ. *on* iii. 3.23 [MW.]

**अनुयष्टुम्** ( anu-yaṣṭum ) inf. to offer subsequently, to make after-offerings यागैरनुयजतीत्युक्ते यथाग्नियाग एवमसावनुयष्टुं शक्यते TantrVā. 614.17 (*on* ii. 3.21)

**अनुया** ( anu-yā- ) II.P. ( rarely Ā.) [P. iii. 4.11; vii. 2.73; AltGr. I. 2. 233] **1AI** to go to or towards **II** to go to, i.e. to take side of or support **III** to reach **B** to march towards, i.e. to attack upon or to assail **2AI** to go after or behind, to follow, (pass.) to be followed **II** to follow (the husband in death) **B** to go again and again, i.e. continuously **C** to go along **D** to pursue, to chase **E** to go for (refuge etc.) **F** to go with, to accompany, (pass.) to be accompanied **G** to go (up) subsequently **H** to pass, i.e. to come down continuously **3AI** to follow, i.e. to practise or observe **II** to follow, i.e. to obey **B** to follow, i.e. to imitate, to resemble, (pass.) to be imitated **C** to follow, i.e. to agree or to be in harmony with **4** to acquire, to attain, to obtain **5** to know, to understand **6** to direct, i.e. to guide **1AI** to go to or towards अनु देवान् रथिरो यासि साधन् ṚV. iii. 1.17 ( Sāy. अनुगच्छसि ); SV. II. vii(3). 10.2; प्राचीमनु प्रदिशं याति LāṭyaŚS. viii. 5.22; DrāhyŚS. xxii. 5.27; दुर्योधनस्तत्र पाण्डवानाह दुर्मतिः । गङ्गां चैवानुयास्यामः MahāBhā. i. App. I. 71(5); कौशिकीमभि( v.l. °नु )यास्यसि MahāBhā. iii. 109.19; ते …। रथशक्तीः परामृश्य विनेदुर्भैरवान् रवान् । अन्वयुर्भरतश्रेष्ठ सप्त श्वेतरथं प्रति MahāBhā. vi. App. I. 4(26); ( गोपाः ) आश्चर्यमाश्चर्यमिति ब्रुवन्तोऽनुययुर्गृहान् HariVaṁ. 639*(2); एकदा ( बल्लालप्रमुखानाम् ) जनकास्तेषां कल्याणवैद्यमन्वयुः GaṇeP. i. 22.21; इतो बाणं रामः क्षिपति हरिणे मुक्तकरुणः । सचापः सौमित्रिः स्वजनमनुयाति द्रुतमितः PrasaRā. 5.39; MahāN. 5.76; यदस्मादृस्माभिः … वनादनायाः … कतिपयपयःशीकरकणाः । द्विषन्तो वेशन्तम् … अनुयामस्तदपि तम् SaduktiKa. 273.12; यस्य दृष्टिम् ( Read दृष्टिम् ) …। हंत नूनमनुयांति सस्पृहं कर्णे( Read सस्पृहं कर्णं )कल्पतरुकामधेनवः EI. iii. 25.27; अम्भोविहाराद् गलदम्बुभारं वेणीभरं वारिधरं विशङ्क्य । ( चोलावन्याम् ) यत्रानताङ्गीरनुयान्ति नित्यं सरित्तटादासदनं मयूराः Raghunā. 1.41; **1AII** to go to, i.e. to take side of or support के वीरास्तममित्रघ्नमन्वयुः शत्रुसंसदि MahāBhā. vi. 15.48; प्रकृतयोऽनुयास्यन्ति स्तोष्यन्ति त्वां द्विजातयः HariVaṁ. 78.21; विभीषणो विद्विषतामहार्यैः प्रीत्यान्वयासीत् पुरुषोत्तमस्तम् RāghPāṇ.(Ka.) 7.20; **1AIII** to reach स्थितं त्वामनुयास्यन्ति भोगाः सर्वे ममाज्ञया AdhyāRā. vi. 16.16; **1B** to march towards, i.e. to attack upon or to assail कुरुसेनाशरीराणि …। ओषधीनां शिरांसीव कालपक्तिसमन्वयात् ( v.l. द्विपच्छीर्षाणि सोऽन्वयात् ) MahāBhā. iv. App. I. 45(72); समरे द्रौणम् …। न चाप्यभिययुः ( v.l. °नुययुः ) केचित् MahāBhā. vii. 85.34; के चैनं समरे वीरं प्रत्युद्ययुः ( v.l. अन्वयासुः; अन्वयुः ) MahāBhā. vii. 129.11; रघुपतिरग्रहीत् क्षुरप्रम् । मुष्टिभ्यां रजनिचरस्तमन्वयासीत् RāmC. 34.48; जवेन स तुरंगस्थः क्षत्रियान् कुपितोऽन्वयात् BṛKathāMañ. ii. 1.101; **2AI** to go after or behind, to follow यस्य प्रयाणमन्वन्य इद्ययुर्देवाः … सः … सविता ṚV. v. 81.3; TaiS. IV. i. 1.2; MaiS. ii. 7.1 (ii. 74.4); KāthS. 15.11 (i.217.14); VājaS.

तद्वचो नानुयुञ्जीत शयानं न प्रबोधयेत् MrgendraT. iv. 1.71; इदमेव युगस्यादौ पप्रच्छ भरतः पुरुम् । ततोऽनुयुयुजे सम्राट् सागरोऽजितम् MahāP. 2.42; अथैव योधाः शतशो हतास्ते …। किं विस्मृतं क्रुद्ध इवानुयुङ्क्षे यन्माम् … विषादहेतुम् RāmC. 23.64; 21.93; भवन्तमेवानुयुञ्ज्महे … °योगिप्रत्यक्षसिद्धौ किं प्रमाणमिति NyāyMañ. i. 95.27; i. 76.26; ii. 205.28; सर्वं कृत्स्नं भविष्यामो मन्यन्ते ब्रह्मविद्यया। यन्मनुष्या वयं तत्र विरोधमनुयुञ्ज्महे BrĀraUBhVā. i. 4.1078; iv. 3.1887; दशरथः … कथं प्रयातं रामेण … किंवृत्तः सौमित्रिरिति … सुमन्त्रमन्वयुङ्क्त RāmaCam. 2.52(8); 2.23(4); अत्यल्पमिदमन्वयुङ्क्थाः PramāMī. 1.6 (on i. 1.0); मुनीन्द्रं तेऽन्वयुञ्जत।… विरंस्यति जनस्यास्य राक्षसोपद्रवः कदा PāṇḍaC. 7.497; 5.311; 8.273; Yādavā. 7.3; जननी … मुनिमन्वयुङ्क्त मम भाव्यखिलम् ŚaṅkaDigVi.(Mā.) 9.47; अन्वयुङ्क्त तदर्थं स जैनान् KumāDeC. (So.) 13.28; 14.15; तौ … वासवः। अन्वयुङ्क्त …। काः पुनर्जगति पुण्यभूमयः Nalābhyu. 3.19; 7.76; UnmaRā.(Vi.) 49(2); पथिकान् वणिजोऽन्वयुञ्जत क नु सा सिन्धुरिति Gaṅgāva. 7.2; वङ्गाः कथमङ्गाः कथमित्यनुयुङ्क्ते वृथा देशान्। कीदृक् कृतान्तपुरमिति कोऽपि न जिज्ञासते VairāŚ.(A.) 76; ParamāKā. 81.18; Rāgh. 4.8; 'इतो भविष्यति इति प्रतिभाति, यदनुयुङ्क्ते' इति RasSa. 145(23); (pass.) to be asked, to be qnestioned प्राप्तकालं च आचक्षे भीष्मोऽयमनुयुज्यताम् MahāBhā. xii. 54.8; विज्ञातार्थं पदं यच्च तदर्थे प्रतिपादिते। लब्धिकादिवदविज्ञातं तत् किमित्यनुयुज्यते VākyaPa. 2.74; तां समाश्वासयम्। लब्धसंज्ञा च मृत्युकाङ्(क्षे ? क्षा)निमित्तमन्वयुञ्जि। सा AvantiKa. 198.15; नास्माभिर्वाक्यवृत्ते(वाक्प्रवृत्ते)स्त्वं निमित्तमनुयुज्यसे ŚlokaVār. 5(3).119 (301.6); नित्यं कार्यानुमेया च शक्तिः किमनुयुज्यते ŚlokaVār. 6.44 (741.5) (NyāyRa. कारणगतं शक्त्याख्यमतीन्द्रियमेव रूपमिति। तथापि किं नानुयुज्यते); विपदां प्रतिकर्तारो यस्य …। त्वादृशाः सन्ति किं तस्य कल्याणमनुयुज्यते AnargharRā. 3.37; सोऽयम् … अनुयुज्यताम्। तेन चाहूय पृष्टेन…निवेदितम् BrKathāŚloSaṁ. 2.73; 5.276; उपेत्य जोषं त्रिजटानुयुज्यतां किमाह सा संप्रति मुग्धमानुषी RāmC. 18.46; वयं तु न कर्तार एव संबन्धस्य यत एवमनुयुज्येमहि NyāyMañ. i. 225.19; पारमार्थिकशब्दार्थसमर्थनपिपासिताः। नेहागताः स्मो येनैवमनुयुज्येमहि त्वया NyāyMañ i. 280.4; ii. 137.25; TilaMañ. 271.10; यो हि परतन्त्रः सोऽन्येन बन्धनागारे प्रवेश्यते, न तु स्वतन्त्रः … न हि तद् भागस्य जीवस्य संप्रतितनी बन्धनागारप्रवेशिता येनानुयुज्येत Bhām. 166.10 (on i. 2.6); 373.13 (on ii. 1.33); कश्चित् केनचिदनुयुज्यते किमत्र ते प्रमाणम् NyāyRa. 95.16 (on 2.166); KhaṇḍanKhā. 1038.24; अत्रेदमनुयुज्यते केन पुनः प्राप्ता सती दैवेऽन्नदाने परीक्षा निषिध्यते CaturCin. iii(1). 511.21; स्मार्ता अप्यनुयुज्यन्तां वेदविद्याविशारदाः PrabhāC. 188.22; RasSa. 26(3); (caus. pass.) to make to be asked पुंसस्तु संनिहिते विषये करणे च संभवन्ति ज्ञानानीति सोऽपि किमनुयोज्यताम् NyāyMañ. i. 20.22; मद्विधानामेव दुःखद्रुमफलकालविलसितमिदं किमनुयोज्यन्ते प्रभुचरणाः CaitaCa. 109.1(4); **2Aii** to ask, i.e. to solicit or request अन्वयुङ्क्तात ऊर्ध्वं त्वं मुक्तये ब्रूहि यत्परम् BrĀraUBhVā. iv. 3.1887; अन्वयुङ्क्त ततो राजा यदस्मिन् समये द्विज। यद् भावि तत् कथय TrisaŚaPuC. ii. 6.280; **2B** to investigate, to ask for, to demand त्वां हि माधव संश्रित्य …। धार्तराष्ट्रम् … स्वमंशमनुयुञ्ज्महे MahāBhā. v. 70.3; v. 149.9; **2Ci** to interrogate (a culprit) तत्रोपयुक्तनिधायकनिबन्धकप्रतिग्राहकदायकदापकमन्त्रिमन्त्रिवैयावृत्यकरानेकैकशोऽनुयुञ्जीत ArthŚā. i. 157.2 (2.5); i. 356.1 (2.36); धर्मस्थश्च स्वामिनमनुयुञ्जीत – कुतस्ते लब्धम् ArthŚā. ii. 95.4 (3.16); ii. 14.6 (3.2); ii. 97.7 (3.16); **2Cii** to cross-examine (witnesses in a law-suit) सभान्तः साक्षिणः प्राप्तान् …। प्राड्विवाकोऽनुयुञ्जीत विधिना ManuSm. 8.79 (ManvaVi.; ManvaMu. पृच्छेत्); SmṛtiCan. iii. 198.3; सामन्तानामभावे तु मौलानां सीम्नि साक्षिणाम्। इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान् ManuSm. 8.259; व्याधादीनां द्वितीयान्ततया निर्देशः पूर्वश्लोकस्थेनानुयुञ्जीतेति पदेनान्वयार्थः SmṛtiCan. iv. 540.17; **3A** to enjoin, to prescribe चत्वारि शतानिगोप्तॄणामनुयुञ्जते BaudhŚS. ii. 212.10; **3B** to order यच्च भर्तानुयुञ्जीत तदेवाभ्यनुवर्तयेत् MahāBhā. iv. 4.17; (pass.) to be ordered अवरुद्धव्यवहाराय तेनान्वयुज्ये AvantiKa. 187.19.

**अनुयुज्य** (anuyuj-ya) *ger.* **1** having enjoined or prescribed एतद्विदं ब्रह्मचारिणमनिराकृतिनं संवत्सरावमं चारयित्वा व्रतमनुयुज्यानुक्रोशिने प्रब्रूयात् AśvaŚS. II. ii. 14.1; **2A** having asked or questioned पूर्वं दुत्तरमहः च राजास्तमिहानुयुज्य श्रुत्वा च वाक्यं भरतस्य तस्य। चिकीर्षमाणो रघुनन्दनस्तदा पितुः प्रतिज्ञां स बभूव तूष्णीम् Rāmā. ii. 2164*(7); संवावदूकेषु जनेषु कर्तॄन् कियन्तमित्याद्यणुनानुयुज्य TantrSa. 11.30 (Vimarśinī पृष्ट्वा); **2B** having construed अनुयुज्यानुयोगैश्च निर्देशादिभिदां गतैः Laghīya. 1.75; **3** having appointed or employed सः … प्रधानपुरुषं भुवनकाभिधानमनुयुज्य … अस्मानावर्जयामास HammīMaMa. 2.32(4)

**अनुयुज्यमान** (anu-yujyamāna) *adj.* [*f.* -ā] **1** being asked or questioned इमाः … पुरुषम् … सेर्ष्यमनुयुज्यमाना भुजङ्ग्य इव दशन्ति YaśasCam. ii. 61.8; इति … ससंभ्रमनुयुज्यमाना तया वारंवारमीषदुपजातहासा सधीरमवदम् TilaMañ. 294.3; 65.1; भगवत्या … अनुयुज्यमानो विधिः … आबभाषे NīlaVi. 56.2; **2** being connected, i. e. construed with, cf. **अनुयुज्यमानत्व.**

**अनुयुज्यमानत्व** (anuyujyamāna-tva) *n.* the state of being what is being connected, i. e. construed with तत्रापि प्रकारान्तरेणानुयुज्यमानत्वात् TantrVā. 778.13 (*on* iii. 2.13)

**अनुयुञ्जक** (anu-yuñjaka) *m.* one who questions, i. e. revil यथैषां वक्तुमिच्छन्ति नैर्गुण्यमनुयुञ्जकाः MahāBhā. xii. 288.23 (BhārBhāDī. स्पर्धावन्तः)

**अनुयुञ्जत्** (anu-yuñjat) *adj.* asking or questioning तच्चिन्तयामि सदनं मम सा समायान्त्येकाकिनी क चलसीत्यनुयुञ्जता यत्। लीलाशुकेन मृदु लापयति स्म तारा TārāŚa. 104.

**अनुयुञ्जान** (anu-yuñjāna) *adj.* [*f.* -ā] **A** examining तथाभूतानामन्वाख्यानमिति किं चातः यदि तावन्नियोग एवं भवतैवं मा भवतेति एवं पदार्थाननुयुञ्जानो भवानुपेक्षणीयः NyāyVār. 21.12 (*on* i. 1.1); **B** asking, questioning अद्य त्वयि वार्तामनुयुञ्जाने AnargharRā. 5.25(14); इति … पुनः पुनरनुयुञ्जानाय ताताय सौदेष्णेयः … गिरमेवं विज्ञापयामास BhārCam. 7.66(1); ब्रह्मर्षिहतकेषु … अनुयुञ्जानेषु पुनः पुनरार्तवदिनानि शपथपूर्वकम् NīlaVi. 6.4; 33.1; इत्यनुयुञ्जाने बलौ सोत्प्रासमाददे गिरमाङ्गिरसः NīlaVi. 65.6; 70.7; तदियं मामवलोकयति चेदिदानीं विश्रममूल्यमनुयुञ्जाना निरुन्धीत Jīvān. 69.1 (comm. आपृच्छन्ती); **C** requesting आदरादनुयुञ्जानं शिष्यं यो देशिकः स्वयम्। उपदेशेन संतुष्टं न करोति स किंगुरुः SkandP. i(3B). 4.7.

**अनुयुत** (anu-yuta) *adj.* joined after (another) स्त्रीणां स्थानत्रयं नृप। आयतम् … एकश्चानुयुतो यत्र पादौ विरचितः समा।… स्थानं ज्ञेयं तदायतम् ViṣṇuDhaP. iii. 23.18.

**अनुयुध्** (anu-yudh-) IV. Ā. to join in fighting, to fight against प्रायात्तेन रणे राजन्येन द्रोणोऽन्वयुध्यत। शिखण्डिनम् MahāBhā. vii. 144.14.

**अनुयुयुक्ष** (anu-yuyukṣa-) *desid.* to desire to question यत इदमपरिचितविबन्धयाथाकाम्यमप्युचितमिव (?) हृदयमिति भवन्तमनुयुयुक्षते, क्षमश्चेद्विवरीतुं व्याहरिष्यसि AvantiKa. 193.19.

**अनुयुयुक्षत्** (anu-yuyukṣat) *adj.* desiring to ask or question राजानो हतशिष्टास्त्वां राजन्नभित आसते। धर्माननुयुयुक्षन्तस्तेभ्यः प्रब्रूहि भारत MahāBhā. xii. 54.33.

**अनुयुयुक्षु** (anu-yuyukṣu) *adj.* desirous of asking नृपश्च बालसरस्वतीं निजपरिचरवर्तिनीं विधाय विसारहास्यप्रश्नमनुयुयुक्षू रणति स्म ŚukSa. 21.12.

**अनुयू** (anu-yú) *adj.* [from anu-yu-, II. P., cf. Vār. 2 *on* P. iii. 2.178; AltGr. I. 1.113 (nt.)] dependent अनुयुवं न्वा॒ऽ अय॒मध्व॒र्युर्य॒जमानमक॒द्द्विषतो भ्रा॒तृव्यस्यान्ववसा॒यिनम् ŚatBr. XI. iv. 2.13; त॒तो ह देवा॒ अनुयुव॒मिवासुस्ते हा॒सुरा मेनिरेऽस्मा॒कं वा॒ इदं भुवनमि॒ति ŚatBr.(K.) II. ii. 3.1; अथो हैतद् ब्रह्मणे चैव क्षत्राय च विशमनुयुवं करोति JaimiBr. 2.171; 2.172.

**अनुयूथ** (anu-yūtha) (Gr.) [cf. P. iv. 3.59] enumerated in the *parimukhādigaṇa*, JaineVyā. 198.10 (*on* iii. 3.34)

**अनुयूप** (anu-yūpa) (Gr.) enumerated in the *parimukhādigaṇa*, KāśiVṛ. *on* iv. 3.59; GaṇRa. 5.342(379) (v.l.); Prasā. i. 773.13.

**अनुयोक्तव्य** (anu-yoktavya) *adj.* [*f.* -ā] **A** who is to be asked or questioned दिव्या स्त्री …। सा त्वया नानुयोक्तव्या कासि कस्यासि वाङ्गने MahāBhā. i. 92.21; न वयं जानीमः। कण्वोऽनुयोक्तव्यः KundaMā. 6.14(14); भवादृशं सुहृदमपास्य केन वान्येनैतदनुयोक्तव्यम् MahāvīC. 5.72(1) (285.15); अनुयोक्तव्यमनुयुक्तोऽस्मि MālaMā. 8.66; कथं पुनरधिगन्तव्यः प्रियोदन्तः। नन्वयं मन्दानिलोऽनुयोक्तव्यः UnmaRā.(Vi.) 44(1); **B** who is to be objected to अणुसंचयं दर्शनविषयं प्रतिजानानः किमनुयोक्तव्यः NyāyBh. 101.6 (*on* ii. 1.36); NyāyVār. 243.4 (*on* ii. 1.33); **C** who is to be cross-examined (in a law-suit) (साक्षिणः) व्यवहारदेशगता उभयोरर्थिप्रत्यर्थिनोः संनिधानेऽनुयोक्तव्याः ManuBh. ii. 110.9 (*on* 8.79); **D** who is to be solicited or requested for सीता नाम जनकस्य धर्मतस्तनया। तां किल भवता मदर्थमनुयोक्तव्यो जनकराजः JānaPa. 1.12(18)

**अनुयोक्तुम्** (anu-yoktum) *inf.* **1Ai** to ask, to inquire about रात्रिवृत्तमनुयोक्तुमुद्यतं सा (पार्वती) प्रभातसमये सखीजनम्। नाकरोदपकुतूहलम् KumāSaṁ. 8.10; न युक्तं च मम स्त्रीगतमनुयोक्तुम् KundaMā. 5.14(68); अनुयोक्तुमसावियेष वार्तामथ सस्मार समाहितः क्षणेन RāmC. 8.5; विधीयतां किमधिमृध्यं विरोधिनां परासुता किमु परिभाव एव वा। इतीव तं विभुमनुयोक्तुमुद्यता शरावलिः श्रवणसमीपमाश्रयत् RāghPāṇ.(Ka.) 4.23; कियदितश्चलितव्यमिति श्रमव्यतिकरादनु-

योक्तुमिवोद्यता। असकृदस्पृशदूर्मिकराग्रतः प्रचलितं पथि तं पुरतो नदी Gaṅgāva. 8.5; **1Aii** to question (ऋषिपरिषद्) हलबलात्कृतापि गुरुयन्त्रणया गरीयस्यानुयो-(त्त?क्तु)मपारयन्त्यतिष्ठत् AvantiKa. 145.23; **1Aiii** to seek आदेशमेकमनुयोक्तुमयं व्यवस्यन् ... कुतुकी ददर्श ŚaṅkaDigVi. (Mā.) 5.92; **1B** to object व्याप्ति-विकल्पस्य फलत्वात् न प्रमाणत्वमनुयोक्तुं युक्तम् PramāMī. 37. 17 (*on* i. 2. 5); **1C** to examine, to interrogate कीर्तिः कौतुकिनी दिगन्तमगमत् ... ब्रह्मादीननुयो-क्तुमुत्तमगुणस्यास्य EI. ii. 412. 7; **2** to enjoin, to prompt (लिङादयः) न हि ते पुरुषमभिदधति ...। न च शब्दशक्तयोऽनुयोक्तुमर्हन्ति Kāśi. ii. 14. 5 (*on* 5 (1). 15)

**अनुयोक्तृ** (anu-yoktṛ) *adj.* [*but* MW., Apte *m.*] **A** who is a paid teacher or preceptor (*bhṛtakādhyāpaka*) अनुयोक्ता च यो विप्रो अनुयुक्तश्च भारत MahāBhā. xiii. 24. 18; **B** (used as noun) one who asks questions अनुयोक्तॄन् जगादापि दुःसंचिन्त्या महात्मनः RājTa. (Ka.) 6.61; अनुयुङ्क्तेऽनुयोक्ता यद्युक्तायुक्तोपपत्तिषु। तत्र व्यक्तं वदेद्वक्ता न त्वव्यक्तं कदाचन ParamāKā. 81. 18 [examiner, interrogator, Apte]

**अनुयोग** (anu-yoga) *m.* **1Ai** (act of) enjoining, injunction **ii** prescription, command **B** exposition, analysis **2Ai** interrogation, investigation **ii** cross-examination (in a law-suit) **iii** asking, inquiry **iv** request, appeal **v** asking (by a teacher) **B** censure, reproof, objection **Ci** regular pratice of questioning or investigation (an activity of a Bodhisattva) **ii** (act of) questioning **3** accompaniment, i.e. retinue **4** preoccupation **5A** devotion, addiction, application **B** religious vow **Ci** union **Cii** spiritual union, religious meditation **6Ai** continuous or persistent practice **ii** exertion, effort **B** continuous revolving, i.e. continuation **7** construing (of the *sūtra*) with (its) meaning subsequently **8A** name of one of the four types of analyses or expositions **B** name of one of the fourteen *aṅgas* of the *nirvahaṇasandhi* **9** basis, substratum **1Ai** (act of) enjoining, injunction नियोगश्चानुयोगश्च ...। एवंप्रकृतयो मन्त्राः सर्ववेदेषु सर्वशः BṛDe. 1. 36; 1. 52; **1Aii** prescription, command बलिं वैरोचनं वन्दे शतमायं च शम्बरम्। ... देवलं नारदं वन्दे वन्दे सावर्णिगालवम्। एतेषामनुयोगेन कृतं ते स्वापनं महत् ArthŚā. iii. 231. 4 (14. 3); अनुयोगो धनदानार्थमनुवाकमधीष्वेत्यध्ययनादेशः Aparā. 224. 18 (*on* 1. 154); शब्दनित्यत्वे प्रमाणं वदेति यदि मध्यस्थस्यानुयोगः तथापि प्रमाणमात्रे नाकाङ्क्षा TattvCin. ii(1). 721. 5; **1B** exposition, analysis निगृह्यानुयोगे च P. viii. 2. 94 (KāśiVṛ. मतस्याविष्करणम्); द्वावनुयोगौ वेत्त्यधीते वा व्यनुयोगः JaineVyā. 54. 11 (*on* i. 3. 47); सः ...। अनुयोगांश्च शुश्राव PadmP.(Ra.) 35. 84; प्रभुः। अनुयोगगणानुज्ञे तेषां द्रव्यादिभिर्ददौ TriṣaŚaPuC. iii. 1. 376; iii. 2. 153; Kāvyānu. (He.) 2. 19; अनुयोगो व्याख्यानं प्ररूपणा SthānṬ. 375B. 14; विभुस्तेषाम् ... सद्द्रव्यगुणपर्यायैरनुयोगं तथा गणम्। अन्वजानात् PārśvC. 6. 1356; अनुज्ञामनुयोगस्य गणानुज्ञां च सर्वतः। श्रीमल्लिर्दत्तवांस्तेषां प्रत्येकं विधिपूर्वकम् MalliC. 7. 1142; महत्यामनुयोगस्य मण्डल्यां पाठघोषतः। स्खलति श्रुतपाठो मे PrabhāC. 16. 26; चतुर्विधः कार्योऽनुयोगोऽतः परं मया PrabhāC. 17. 4; 17. 7; **2Ai** interrogation, investigation नानुयोगा ब्राह्मणानां भवन्ति वाचा राजन् मनसा कर्मणा वा MahāBhā. iii. 190. 66 (*but* BhārBhāDī. अनुयोगः शासनम्); xiii. 95. 21; अत्यर्थं वैद्यवेशेन श्लाघमाना विशिखान्तरमनुचरन्ति ... न चानुयोगमिच्छन्त्यनुयोक्तुं वा मृत्योरिव चानुयोगादुद्विजन्ते CaraS. i. 29. 9; अनुयोगो नाम स यत्तद्विद्यानां तद्विद्यैरेव सार्धं तन्त्रे तन्त्रैकदेशे वा प्रश्नः प्रश्नैकदेशो वा CaraS. iii. 8. 52 (1941 Ed.); नूनमार्ये सर्वस्वत्यागादति-प्रकाशादाशङ्कनीयचर्मरत्नलाभा तदनुयोगायाङ्गराजेन समाहूयसे DaśKuC. 55. 22; वृत्तोऽपपाठोऽनुयोगे ŚākaṭāVyā. iii. 2. 65; SiddhaHe. vi. 4. 67; कः स्वतन्त्रमनु नन्वनुयोगः NaiṣC. 21. 104; नियोगस्तथास्त्विति विधिरनुयोगः कथमेतदिति चोद्यम् VedāntKa. 526. 24 (*on* iv. 1. 15); **2Aii** cross-examination (in a law-suit) अनेकेषु चाभियोगेष्वपव्ययमानः सकृदेव परोक्तः सर्वं भजेत्। वैषम्ये सर्वत्रानुयोगं दद्यात् ArthŚā. i. 157. 5 (2. 8); अन्धः शत्रुगृहं गच्छेत्, इत्यत आरभ्य सर्वे साक्षिविषया अनुयोगाः ManuBh. ii. 116. 22 (*on* 8. 99); **2Aiii** asking, inquiry (रामः) मन्त्रिवृद्धान्। अन्वग्रहीत्प्रणमतः शुभदृष्टिपातैर्वार्तानुयोगमधुराक्षरया च वाचा RaghuVa. 13. 71; यत्नादमी विधेया गम्यस्य विमोक्षणोपायाः। ... स्वभावसंस्थापनानुयोगेषु KuṭṭaMa. 622; भवादृशानां न च धीविपर्ययस्तथापि हार्दादनुयोगमर्हसि RāmC. 5. 14; क्व स रामः क्व सा सीतेत्यनुयोगेषु योषिताम्। किं नु प्रतिज्ञासदृशं वक्ष्यसि RāmC. 31. 8 अनुयोगमु(?म)पेक्षन्ते विवक्षन्तोऽपि वाचकाः BṛKathāŚloSaṁ. 20. 189; 'कुतस्त्वम्' इत्यनुयोगोऽनुचितः RasSa. 26(2); **2Aiv** request, appeal ब्राह्मणं हत्वा ये लोका नरकादिलक्षणाः प्राप्यन्ते तत्कारिभिस्ते तव भवन्ति मिथ्या वदतस्तस्मात्सत्यं ब्रूहीत्यनुयोगः ManuBh. ii. 113. 4 (*on* 8. 89); प्रियसहचरयोरनुयोगो न प्रत्यादेशमर्हतीति कथयामि तावत् Mukundā. 207 (11); **2Av** asking (by a teacher) अनुयोगेन यो दद्याद् ब्राह्मणाय प्रतिग्रहम् BhaviP. 272A. 33 (i. 184. 3); CaturCin. iii(1). 510. 5; अनुयोगः परीक्षार्थं प्रश्नः किं पठसीत्येवंरूपः Aparā. 448. 23 (*on* 1. 122); **2B** censure, reproof, objection अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः NyāySū. v. 2. 22; तुल्य एष भवतोऽप्यनुयोगः AbidhKoBh. 123. 16 (*on* 3. 12); कारणाभावात्कार्याभाव इति अनुयोगः प्रसज्यते NyāyBh. 150. 13 (*on* ii. 2. 53); SarvaDaSaṁ. 15. 598; समासः कस्मादनिवृत्तोऽनुयोगः NyāyVār. 155. 12 (*on* i. 2. 42); समानोऽयमावयोरनुयोगः Kāśi. i. 115. 26 (*on* 2. 106 1/2); i. 121. 16 (*on* 2. 115); व्यापकं वैधर्म्यं मन्वानानामनुयोगो दर्शितः Kāśi. ii. 71. 22 (*on* 5 (3). 126); तादात्म्यतज्जननयोरपि चैष तेषां तुल्योऽनुयोग इति किं विफलैः प्रलापैः NyāyMañ. i. 107. 25; i. 367. 19; ĀtmaTaVi. 620. 17; Kiraṇā. 147. 10; स्वाङ्गोपनयनप्रयुक्तिर्द्वारभूताध्ययनप्रयुक्तिपूर्विका, न तु तत्पूर्विकाध्ययन-प्रयुक्तिरिति नाङ्गेन स्वद्वारं प्रयुक्तं स्यात् इत्यनुयोगः। न चाध्ययनाङ्गप्रवृत्त्यनुयोगः NayaVi. 23. 7 (*on* i. 1. 1); 39. 2 (*on* i. 1. 2); तस्माच्छब्दैः किं वाच्यमित्यनुयोगे किं प्रतिभासात् ĀtmaTaVi. 426. 14; वादे कथावसानस्य हेत्वाभासो हि कारणम्। तथा निरनुयोज्यानामनुयोग इति द्वयम् TārkiRa. 363. 12; अनुयोगो यशोऽर्थं धनार्थं वा सम्यगधीयानस्य न सम्यगधीष इत्याक्षेपः Aparā. 1117. 3 (*on* 3. 268); कस्यैतौ विरोध इति चानुयोगे स्वाश्रयस्येत्युत्तरम् KhaṇḍanKhā. 1269. 22; निरनुयोज्यानुयोगो निग्रहभूमिका। तवैवैषा समायाता व्यावर्तस्व ततो ग्रहात् PrabhāC. 180. 7; **2Ci** regular practice of questioning or investigation (an activity of a Bodhisattva) सर्वप्रथमं कोलितेन उपतिष्येण च वेदमन्त्रा अधीता अनुयोगो च दिन्नो आचार्यस्य च आचार्यशुश्रूषा कृता MaVastuAva. iii. 57. 1; iii. 383. 2; बोधिसत्त्वानाम् ... परवादिभिराकलनानुयोगो महत्यां च परिषदि धर्मदेशना BodhiBhū. 172. 4; **2Cii** (act of) questioning अनुयुज्यानुयोगैश्च निर्देशादिभिदां गतैः। द्रव्याणि जीवादीन्यात्मा विवृद्धाभिनिवेशनः। ... सुखमृच्छति Laghīya. 1.75; यदा त्वव्युत्पत्तिस(?सं)शीतिविपर्यस्तिसमधिकबोधस्याधिमुक्ति-युक्तिसंबन्धसविधस्य प्रमाणनयनिक्षेपानुयोगोपयोगावगाह्येषु ... तत्त्वेषु रुचिः संजायते YaśasCam. ii. 322. 17; अनुयोगगुणस्थानमार्गणास्थानकर्मसु। अध्यात्म-तत्त्वविद्यायाः पाठः स्वाध्याय उच्यते YaśasCam. ii. 415. 7; **3** accompaniment, i.e. retinue स्वेन स्वेनानुयोगेन सर्वे तेऽनुययुर्हरम् MahāBhā. iii. 1083*; **4** preoccupation बोधिसत्त्वस्य विज्ञेयमवैवर्तिकलक्षणम्। ... स्कन्धादावन्तरायेषु संभारे सेन्द्रियादिके। समरे मत्सरादौ च नेति योगानुयोगयोः AbhisaAlaṅ. 4. 49; **5A** devotion, addiction, application चतुर्दशभिः ... आकारैर्बोधिसत्त्वाः तृतीयायां भूमौ वर्तमानाः चतुर्थायां भूमौ विवर्तन्ते। ... अक्षवंकद्यूतक्रीडानुयोगमनुयुक्ताश्च भवन्ति MaVastuAva. i. 96. 5; या चेयममध्यमा प्रतिपदा आत्मकायबलमथानुयोगो दुःखः LaliVi. 26. 30 (5); 303. 5; कामसुखल्लिकात्मक्लमथयोरनुयोगोऽनुसेवनम् Sphuṭā. iii. 102. 5 (*on* 3. 94); **5B** religious vow क्रतौ श्राद्धे तदङ्गत्वाद् विप्राज्ञाभङ्गतो वृतः। भक्ष्यत्वादनुयोगेऽपि खादन्मांसान्यपि व्रती BṛhaspaSm. 351.153; SmṛtiCan. v. 411. 18; CaturCin. iii(1). 1518. 14; श्रीविजय-शिवमान्धातृवर्म्मा ... कौण्डिन्यसगोत्राय दत्तानुयोगाय तैत्तिरीयसब्रम्ह(ह्म)चारिणे देवशर्म्मणे मोदेकरनीनामहलम् ... केदारं द[त्त]वान् EI. vi. 14. 10; **5Ci** union पद्मप्राभृतके स्वसोदरीप्रेयसोऽनुयोगे संदिग्धमानसां देवसेनामाह शशः AbhinBhā. ii. 352. 24 (*on* 16B. 12); **5Cii** spiritual union, religious meditation विहितविनयकर्मणा च लभ्यो मिलदचलातलमौलिनानुयोगः PrabhāC. 6.19; **6Ai** continuous or persistent practice तदुपदिष्टानां च योगानामाभीक्ष्ण्येनानुयोगः KāmSū. 316.7 (6.2); JayaMa. 316. 13(*on* 6. 2); **6Aii** exertion, effort अनुद्योगेन नो तैलं तिलेभ्योऽपि हि जायते (v.1. अनुयोगं विना तैलं तिलानां नोपजायते) PañcT. 2. 114 (124. 22) (Kale Ed.); **6B** continuous revolving, i.e. continuation अनुयोगेषु वेदानां घटिका मार्गवृत्तिषु। न कल्पसूत्रहीनानां लभ्यते कृत्स्नवेदता TantrVā. 166. 1 (*on* i. 3. 10); **7** construing (of the *sūtra*) with (its) meaning subsequently अनुयोजनमनुयोगः - सूत्रस्यार्थेन सह संबन्धः SthānṬ. 3B. 10; अनुरूपोऽनुकूलो वा यो योगो - व्यापारः सूत्रस्यार्थेन प्रतिपादनरूपः सोऽनुयोगः SthānṬ. 4A. 1; 200A.2; **8A** name of one of the four types of analyses or expositions इदमध्यवसायाहं कथां धर्मानुबन्धिनीम्। प्रस्तुवे ...। प्रथमस्यानुयोगस्य गम्भीरस्योदधेरपि। वेलामिव MahāP. 1. 113; महाधिकाराश्चत्वारः श्रुतस्कन्धस्य वर्णिताः। तेषामाद्योऽनुयोगोऽयं सतां सच्चरिताश्रयः MahāP. 2. 98; प्रथमः सोऽनुयोगः स्यात्पुराणचरिताश्रयः YaśasCam. ii. 415. 10; **8B** name of one of the fourteen *aṅgas* of *nirvahaṇasandhi* (*lit*. investigation) निर्वहणम्...। अस्य चतुर्दशाङ्गानि। ...समयः। अनुयोगः। ... प्रशस्तिरिति NāṭaLaRaK. 889; 886; **9** basis, substratum, cf. **अनुयोगभूत** [Kośas give *anuyoga* as a synonym of the following words: *praśna*, AmaK. 330; ParyāRaMā. 1005; AbhidhāRaMā. 1. 154; Vaija. 34. 37; ŚabdaRa.(Vā.) 1825; KośaKaTa. 1. 1503; KalpaK.

446. 71; *pṛcchā*, AmaK. 330; ParyāRaMā. 1005; Vaija. 34. 37; ŚabdaRa. (Vā.) 1825; KośaKaTa. 1. 1503; KalpaK. 446. 71; *paryanuyoga*, Vaija. 34. 37; *anuyojana*, KalpaK. 446. 71; *kathaṅkathikatā*, KośaKaTa. 1. 1503; KalpaK. 446. 71; *jñīpsā*, KośaKaTa. 1. 1503 and NānārthāSaṁ. iii. 89. 12 gives *paryanuyoga* in the sense of *anuyoga*; ŚabdaRaSaK. 67. 4 gives *niyojana* as the meaning of *anuyoga*]; *n*. name of a section (dealing with great personalities) (राजा) सिद्धांवसंवद्धाम (v. 1. सिद्धान्तसंबद्धाम JMPJGM. Ed.) शृणोद्धुरुतः कथाम्। अनुयोगान्यतीतानां भाविनां च महात्मनाम् PadmP. (Ra.) 29. 112.

**अनुयोगक** (anuyoga-ka) *m*. question, inquiry प्रश्नः पृच्छानुयोगकः AgniP. 359. 62.

**अनुयोगकृत्** (anuyoga-kṛt) *m*. spiritual teacher or preceptor अनुयोगकृदाचार्यः AbhidhāCin. 78 [an interrogator, APTE]

**अनुयोगक्षम** (anuyoga-kṣama) *adj*. fit for questioning or asking किमभाङ्क्षीः क्षितिरुहान् किमक्षमवधीः शिशुम्। अनुयोगक्षमो नासि कपिजातेः परिप्लवात् RāmC. 21. 75.

**अनुयोगक्षेत्रता** (anuyogakṣetra-tā) *f*. the state of being the field, i.e. the topic of question or discussion यथा वा प्रमाणेषु तत्र (सामान्यरूपम्) दृश्यते तथा हेत्वाभासेष्वपि मा दर्शीति वस्तुस्वभावानामनुयोगक्षेत्रतानुपपत्तेः NyāyMañ. ii. 169. 6.

**अनुयोगचतुष्टय** (anuyoga-catuṣṭaya) *n*. group of four analyses or expositions (viz. *caraṇakaraṇānuyoga*, *dharmakathānuyoga*, *gaṇitānuyoga* and *dravyānuyoga*) पुरा चैकत्र सूत्रेऽभूदनुयोगचतुष्टयम् PrabhāC. 17. 8.

**अनुयोगतस्** (anuyoga-tas) *adv*. **1A** due to union, i.e. combination समस्या सप्त तद्भेदा नानार्थस्यानुयोगतः। यत्र प्रदीयते तुल्यवर्णविन्यासमुत्तरम् AgniP. 342. 23; काचस्तद्वर्णमनुयोगतः। मणेर्मरकतस्य ... विजातयः YuktiKa. 131. 9; **1B** due to association or basis ब्राह्मणादिकवर्णोऽहं शरीरस्यानुयोगतः BṛBrahmaS. ii. 3. 9; **2** due to exposition or analysis बन्धमोक्षज्ञता चेति फलं द्रव्यानुयोगतः YaśasCam. ii. 415. 16; **3** due to persistent effort आत्मवत्तान्यपत्यानि साधयत्यनुयोगतः BhaviP. 37B. 24 (i. 15. 13); **4** due to objection or censure निगृह्णतो निग्रहः स्यादचोद्यस्यानुयोगतः TārkiRa. 356. 8.

**अनुयोगदान** (anuyoga-dāna) *n*. administering of censure अधिकारेणाधीयानस्यानुयोगदानं 'किं पठसि नाशितं त्वये'ति ManuBh. ii. 433. 28 (*on* 11. 197)

**अनुयोगदूतिका** (anuyogadūtikā) *f*. puzzling question प्रवह्लिका प्रहेलिकानुयोगदूतिका तथा। विपादिका च सा भवेद्गुरूहकानुयोजनम् KośaKaTa. 1. 1465.

**अनुयोगद्वार** (anuyoga-dvāra) *n*. **1** a techinical term for a particular type of knowledge, opening to the further inquiry अनुगमाख्यस्य तृतीयस्यानुयोगद्वारस्य भेदभूताया उपोद्घातनिर्युक्तेः प्रतिभेदभूतनिर्गमद्वारस्वभावम् ... अभिधित्सुः सूत्रकारः ... आह JñātāDhaṬ. 1A. 4; महापुरस्येव चत्वार्यनुयोगद्वाराणि भवन्ति SthānṬ. 3B. 9; अनुयोगद्वाराणि द्वाराणीवापुनर्भवपुरस्य SiddhāĀSta. 8; **2** name of a text, cf. **अनुयोगद्वारटीका.**

**अनुयोगद्वारक्रम** (anuyogadvāra-krama) *m*. order of the opening to the further inquiry अधुना कथंचित् प्रत्यवस्थानावसरे भणितमपि नयद्वारमनुयोगद्वारक्रमायातमिति पुनर्विशेषेणोच्यते SthānṬ. 37A. 1.

**अनुयोगद्वारटीका** (anuyogadvāra-ṭikā) *f*. name of a commentary on the Anuyogadvāra इयं च गाथा ... इहाक्षरसममित्यादि व्याख्यायते, अनुयोगद्वारटीकायामेवमेव दर्शनात् SthānṬ. 396B. 9.

**अनुयोगद्वारभूतता** (anuyogadvārabhūta-tā) *f*. the state of being what has become the opening to the further inquiry यद्यात्र नयानां प्रमाणतुल्यकक्षताख्यापनं तत्तेषामनुयोगद्वारभूततया प्रज्ञापनाङ्गत्वज्ञापनार्थम् SyādvāMañ. 28 (44)

**अनुयोगद्वारभेद** (anyogadvāra-bheda) *m*. a particular type of opening to the further inquiry सांप्रतमनुयोगद्वारभेदभणनपुरस्सरमिदमेवाध्ययनमनुचिन्त्यते SthānṬ. 4B. 3.

**अनुयोगद्वारविशेष** (anuyogadvāra-viśeṣa) *adj*. which is a particular type of the opening to the further inquiry केवलमनुयोगद्वारविशेषस्योपक्रमस्य प्रतिभेदरूपप्रक्रान्तशास्त्रस्य ... अर्थतः आत्मागमत्वम् JñātāDhaṬ. 1A. 2.

**अनुयोगद्वारसमास** (anuyogadvāra-samāsa) *m*. enhancement to the opening to the further inquiry, JainaL.

**अनुयोगद्वारसूत्र** (anugogadvārasūtra) *n*. name of a Jain work, pw.

**अनुयोगपरीक्षण** (anuyoga-parīkṣaṇa) *n*. examination of one of the four types of analyses or expositions प्रथमः सोऽनुयोगः स्यात्पुराणचरिताश्रयः। अहो (?) धोमध्योर्ध्वलोकेषु चतुर्गतिविचारणम्। शास्त्रकरणमित्याहुरनुयोगपरीक्षणम् YaśasCam. ii. 415. 12.

**अनुयोगप्रदान** (anuyoga-pradāna) *n*. administering of censure उत्कर्षहेतोरधीयानस्य किं पठसि नाशितं त्वयेत्येवं पर्यनुयोगोऽनुयोगप्रदानम् Mitā. 461. 26 (*on* 3. 265)

**अनुयोगभाव** (anuyoga-bhāva) *m*. position of spiritual union or religious meditation अवदत्स तेभ्यः। ... अष्टप्रकाराननुयोगभावान् VarāṅgaC. 30. 8.

**अनुयोगभूत** (anuyoga-bhūta) *adj*. who has become the basis or receptacle तुमुले विमर्दे शौर्यस्य पुंसामनुयोगभूतम्। ... ते योधमुख्याः ... प्रजघ्नुरन्योन्यममोघमोक्षैः VarāṅgaC. 17.76.

**अनुयोगमुख्य** (anuyoga-mukhya) *n*. principal or chief divisions of expositions करणं चरणं द्रव्यं प्रथमं च सभेदकम्। अनुयोगमुख्यं योगी जगाद वदतांवरः PadmP.(Ra) 106. 91.

**अनुयोगयोग्य** (anuyoga-yogya) *adj*. who deserves censure नित्यं नियत्या परवत्यशेषे कः संविदानोऽप्यनुयोगयोग्यः NaiṣC. 6.103.

**अनुयोगवाक्य** (anuyoga-vākya) *adj*. summonned for interrogation, i.e. giving evidence or testimony तदेतद्गोरक्षकादिष्वनुयोगवाक्येषु ब्राह्मणेषु भवितव्यम् ManuBh. ii. 117. 21 (*on* 8. 103)

**अनुयोगविधि** (anuyoga-vidhi) *m*. A procedure of interrogating (a witness) अनुयोज्यः प्रष्टव्य इत्यर्थः। कोऽसावनुयोगविधिः ManuBh. ii. 87.1 (*on* 8.31); **B** procedure of cross-examination इतःप्रभृति सत्यवचनार्थः साक्षिणामनुयोगविधिः ManuBh. ii. 110. 27 (*on* 8. 81)

**अनुयोगविवर्जितत्व** (anuyogavivarjita-tva) *n*. the state of being free from devotion or addiction अन्तद्वयविवर्जितं कामसुखल्लिकात्मक्लमथानुयोगविवर्जितत्वात् BodhiBhū. 128. 23.

**अनुयोगविवर्धन** (anuyoga-vivardhana) *adj*. increasing the religious meditation, i.e. Yogic power प्रजापतिसुता ह्येते सर्वेषां तु महात्मनाम्। आद्यो गणस्तु योगानामनुयोगविवर्धनः BrahmāṇḍP. ii. 20. 2.

**अनुयोगव्यतिकर** (anuyoga-vyatikara) *m*. all manners (*lit*. transgression) of questions क्रमेण वर्तमाने सान्त्वनतर्जनप्राये प्रतिदिनमनुयोगव्यतिकरे ... प्रकृतिस्थोऽहमासम् DaśKuC. 58. 23.

**अनुयोगसमासावरणीय** (anuyogasamāsāvaraṇīya) *adj*. (action) covering, i.e. preventing the enhancement to the opening to the further inquiry, JainaL.

**अनुयोगाचार्य** (anuyogācārya) *m*. teacher (who is expert in) construing (the sūtra with its meanings) संगता औत्सर्गिकगुणयुक्तत्वेनोचिता आचार्यादितया अनुज्ञा समनुज्ञा, तथा हि - अनुयोगाचार्यस्यौत्सर्गिकगुणाः SthānṬ. 140A. 6.

**अनुयोगाज्ञानिर्वर्तन** (anuyogājñā-nirvartana) *n*. execution of order (in the form) of question अनुयोगाज्ञानिर्वर्तनाय किंचिदावेद्यते NīlaVi. 44. 12.

**अनुयोगाधिकरण** (anuyogādhikaraṇa) *n*. substratum, i.e. basis of exposition प्रत्येकं परिसमाप्त्या वर्तत इति अयमर्थो नैकत्र वर्तत इति तथाप्यनुयोगाधिकरणं निवर्तत इति NyāyVār. 217. 16 (*on* ii.1. 30)

**अनुयोगाधिकरणव्यावृत्तिदोष** (anuyogādhikaraṇvyāvṛtti-doṣa) *m*. defect of contradiction with (*lit*. exclusion of) the basis of exposition अनेकद्रव्यवृत्तिषु संख्यापृथक्त्वसंयोगविभागसामान्यादिष्वनुयोगाधिकरणव्यावृत्तिदोषो वक्तव्यः NyāyVār. 218. 1 (*on* ii. 1. 30)

**अनुयोगानिवृत्ति** (anuyogānivṛtti) *f*. non-cessation, i.e. non-removal of question भूतलघटस्पर्शः ... अनवस्थाप्रसङ्गात् च ... समुदायत्वं किंकृतमित्यनुयोगानिवृत्तेः ĀtmaTaVi. 715. 17.

**अनुयोगानुज्ञा** (anuyogānujñā) *f*. permission for exposition द्रव्यगुणैः पर्यायैश्च नयैरपि जगत्पतिः। ददावनुयोगानुज्ञाम् TriṣaŚaPuC. i. 3. 662; ii. 8. 819.

**अनुयोगार्जव** (anuyogārjava) *n*. straightforwardness in question (and answer) दृष्टदोषः स्वयंवादः स्वपक्षपरपक्षयोः। अनुयोगार्जवं हेतुः शपथश्चार्थसाधकः ArthŚā. ii. 11. 2 (3. 1) (comm. वादिप्रतिवादिनोरजिह्मप्रश्नोत्तरकरणम्)

**अनुयोगार्थ** (anuyogārtha) *m*. [Loc.] in the sense of interrogation कं कल्याणशिरोऽम्बुरुकूपुनरुरीकारानुयोगार्थयोः KośaKaTa. 2. 3198.

**अनुयोगावतार** (anuyogāvatāra) *m.* occurrence, i. e. appearance of question व्यङ्ग्यत्वमस्त्विति चेन्न व्यक्तिसदसद्भावयोरप्यनुयोगावतारात् ŚatDū. 208. 24.

**अनुयोगावरणीय** (anuyogāvaraṇīya) *adj.* which covers, i.e. prevents the inquiry, JainaL.

**अनुयोगास्पद** (anuyogāspada) *n.* occasion for or object of inquiry जातरूपधरस्य कथं तद्ग्रहणमित्येतदेव ह्यनुयोगास्पदम् ŚatDū. 231. 29.

**अनुयोगिता** (anuyogi-tā) *f.* the state of being the substratum (of relation), relational subjunctness न च शब्दस्मरणादीनामनुयोगिता भूतलविकल्पकं प्रत्यङ्गत्वात् ... घटस्य तु प्रतियोगितया TātpaṬ.(Vā.) 112. 7 (*on* i. 1. 4); रजतादौ प्रतियोगिता अनुयोगितया वा संबन्धेन उक्ततादात्म्यस्य न भ्रमे प्रसक्तिः GuruCandr. i. 16. 20; i. 33. 13; धात्वर्थभक्षणादेरनुयोगितया, गुरुमते तु विध्यर्थापूर्वांशे ... धात्वर्थभक्षणादेः प्रतियोगितयान्वयेऽपि न क्षतिः VyutpaVā. 59. 6.

**अनुयोगिताप्रतियोगितावच्छेदकत्व** (anuyogitāpratiyogitāvacchedaka-tva) *n.* the state of being the delimitor of the relational subjunctness and adjunctness स्वरूपतो घटत्वपटत्वयोरनुयोगिताप्रतियोगितावच्छेदकत्वबुद्धौ स्वरूपतस्तयोर्भेदधीरेव हेतुर्युक्ता च LaCandr. 802. 23.

**अनुयोगितावच्छेदक** (anuyogitāvacchedaka) *adj.* which delimits relational subjunctness संसर्गप्रतियोग्यनुयोगितावच्छेदकयोः भेदस्यावश्यकत्वात् GuruCandr. i. 31. 6.

**अनुयोगितावच्छेदकता** (anuyogitāvacchedaka-tā) *f.* the state of being delimitor of the relational subjunctness व्याप्यधर्म एव भेदे प्रतियोगितावच्छेदकतयानुयोगितावच्छेदकतया वा भासते LaCandr. 68. 10.

**अनुयोगितावच्छेदकत्व** (anuyogitāvacchedaka-tva) *n.* the state of being delimitor of the relational subjunctness विनान्तार्थे घटोत्पत्त्याद्यभावान्वयेऽनुयोगिविशेषणदण्डाद्यभावस्य च तदनुयोगितावच्छेदकत्वं भासते VyutpaVā. 149. 34.

**अनुयोगितावच्छेदकरूप** (anuyogitāvacchedaka-rūpa) *n.* feature, i.e. property delimiting the relational subjunctness प्रतियोग्यनुयोगितावच्छेदकरूपाभ्यां भेदाग्रहे संसर्गाग्रहात् GuruCandr. i. 30. 20; घटाभावे... किंचिद्विशिष्टघटाभावत्वेनानुयोगितावच्छेदकरूपेण आवश्यकभेदादेवोपपत्तेः GuruCandr. i. 78. 8; LaCandr. 156. 18.

**अनुयोगितावत्** (anuyogitā-vat) *adv.* like the relational subjunctness अर्थे वाच्यताख्या शक्तिः शब्दे वाचकताख्या शक्तिरस्ति सैव तयोः संबन्धोऽनुयोगितावत् SāṁkhyaPraBh. 124. 29 (*on* 5. 37)

**अनुयोगिताविशेषघटित** (anuyogitāviśeṣa-ghaṭita) *adj.* consisting of a particular kind of relational subjunctness अनुयोगिताविशेषघटितं प्रमात्वम् LaCandr. 69. 12.

**अनुयोगिताविशेषरूप** (anuyogitāviśeṣa-rūpa) *adj.* having the form of a particular kind of relational subjunctness अभावत्वस्यातिरिक्तत्वेऽप्यनुयोगिताविशेषरूपस्य तस्य प्रतियोगिताया इवातात्त्विकत्वसंभवात् GuruCandr. i. 190. 23; घटत्वावच्छिन्नप्रतियोगिताकत्वरूपेणानुयोगिताविशेषरूपोऽभावे घटादेः संबन्धो भाति LaCandr. 153. 25.

**अनुयोगितासंबन्ध** (anuyogitā-sambandha) *m.* relation (in the form) of relational subjunctness अनुयोगितासंबन्धेन वह्न्यादिविशिष्टाभावे ... अवच्छेद्यावच्छेदकभावभानोपगमेन सामञ्जस्यात् VyutpaVā. 135. 16; परिसंख्यात्वम् ... द्वयोः ... नित्यप्राप्तयोरनुयोगितासंबन्धेन इतरनिवृत्तिफलकनञाद्यसमभिव्याहृतविधित्वम् BhāṭṭCin. i. 73. 15 (*on* i. 1. 4)

**अनुयोगित्व** (anuyogi-tva) *n.* **A** the state of being the substratum (of relation), relational subjunctness एकरूपेण संबन्धत्वानुयोगित्वयोः असंभवात् GuruCandr. i. 26. 13; भासमानवैशिष्ट्यप्रतियोगित्वानुयोगित्वयोरेव प्रकारताविशेष्यतारूपत्वसंभवेन तदतिरिक्ततत्कल्पने मानाभावः GuruCandr. i. 235. 1; रासभं विनापि घट उत्पद्यत इत्यादौ विनापदार्थोऽभाववान्। तत्पदसमभिव्याहृतद्वितीयाया अभावान्वयिप्रतियोगित्वमनुयोगित्वं वार्थः VyutpaVā. 149. 27; तद्वत्त्वं च प्रतियोगित्वानुयोगित्वतादात्म्यान्यतमसंबन्धेन SetuBa. 187. 21; **B** the state of being a substratum or subjunct (of simiarity) (प्रसिद्धेरनुरोधेन यः ... अवयवसामान्ययोगः सेहोपमा मता) 'प्रसिद्धेरनुरोधेन' इत्यस्य च 'यदुपमायां यस्य प्रतियोगित्वानुयोगित्वादिकं प्रसिद्धं तदनतिक्रमेण' इत्यर्थः AlaṅkāKau. (Vi.) 22. 6; 'गज इव गच्छति'... इत्यादावपि गजपदस्य ... तस्य प्रतियोगित्वेन सादृश्येऽन्वयः, तस्यानुयोगित्वेन धात्वर्थे गमने AlaṅkāKau.(Vi.) 90. 2.

**अनुयोगित्वप्रतियोगित्वसंबन्ध** (anuyogitvapratiyogitva-sambadha) *m.* relation of being the subjunct and the adjunct (of similarity) माधववीरभटौघेष्वनुयोगित्वप्रतियोगित्वसंबन्धाभ्यामन्यसादृश्यव्यवच्छेदेनानुपमत्वपर्यवसानमवगम्यते AlaṅkāMañ. 12. 1.

**अनुयोगित्वमुख** (anuyogitva-mukha) *adj.* proceeding from or conveyed through being subjunct (of comparison) मुखं चन्द्र इत्यादौ रूपके ... चोभयत्रापि वस्तुतश्चन्द्राभेद एव संसर्गः। क्वचिदनुयोगित्वमुखः ... विशेषणविशेष्यभाववैचित्र्यात् RasGaṅ. 314. 8.

**अनुयोगित्वसत्त्व** (anuyogitva-sattva) *n.* existence of the relational subjunctness वृत्तेराकाराख्यगौणविषयताश्रयस्य अविद्यातादात्म्यस्य शुद्धचित्यनुयोगित्वसत्त्वात् GuruCandr. i. 54. 19.

**अनुयोगित्वसंबन्ध** (anuyogitva-sambandha) *m.* **A** relation of being a substratum or subjunct (of similarity) इवादिभिः सादृश्यमनुयोगित्वसंबन्धेन बोध्यते AlaṅkāKau.(Vi.) 75.3; अनुयोगित्वसंबन्धेन तद्बोधकत्वस्यापि वतिप्रत्ययस्य तुल्यार्थे विधानेन तद्योगे यथा आर्थी तथा वतिप्रत्ययप्रयोगेऽपि AlaṅkāKau.(Vi.) 78. 3; **B** relation (in the form) of relational subjunctness अन्योन्याभावस्य प्रतियोगित्वसंबन्धेन नानुयोगित्वसंबन्धेन चाभावान्निर्भेदः LalitāSaBh. 65. 28 (*on* 100)

**अनुयोगित्वसंभव** (anuyogitva-sambhava) *m.* possibility of relational subjunctness तादात्म्यत्वरूपेण संबन्धेऽपि तदतिरिक्तरूपेणानुयोगित्वसंभवात् GuruCandr. i. 26. 16.

**अनुयोगिन्** (anuyog-in) *adj.* [*f.* -ī] (also used as noun) **1** characterised by devotion आलब्धवीर्या सततानुयोगी उदग्रचित्ता ... अनुपादाय परिनिर्वृता MaVastuAva. i. 357. 12 [DBHS.]; **2Ai** substratum or subjunct (of absence etc.) घटाभावानुभवस्य तु घटस्मरणं हेतुरिति न प्रतियोगि, किन्तु अनुयोग्येव TātpaṬ.(Vā.) 112. 10 (*on* i. 1. 4); न प्रतियोग्यनुयोगिनोस्तथात्वं विरोधः KhaṇḍanKhā. 342. 22; अन्योन्याभावप्रत्यये प्रतियोग्यनुयोगिनोः समानविभक्तिकत्वनियमात् Tarkāmṛ. 10. 17; न ह्यनुयोगिनि प्रतियोगिप्रसिद्धिः ... कारणम् BhāṭṭDī. iv. 96. 9 (*on* x. 8. 1); **2Aii** subjunct (of similarity) 'उपमा काव्यसंपदाम्। सर्वस्वं सा च साधर्म्यम्' इतीदानीं तस्य प्रतियोग्यनुयोगिनावाह AlaṅkāŚe. 13. 0 (106); **2B** related, i.e. relational substratum or subjunct एकैकामृचमित्यनेन संतानप्रतियोगिनः कीर्तनात्तदनुयोगिनोऽपेक्षायामुपस्थितत्वात् BhāṭṭCan. 103. 13 (*on* xvi. 1.7); चरमाया ऋचस्तृतीयावृत्तावनुयोगिन्या ऋचोऽभावान्निगदेनैव संतानो वचनान्तरेण विहितो युज्यते BhāṭṭCan. 103. 16 (*on* xvi. 1. 7); **3** inquiring, questioning पतिमवेत्य भामिनी। ... सखीमनुयोगिनी परुषमैक्षतापरा Acyutarā. 9. 23.

**अनुयोगिनिष्ठत्वाभाव** (anuyoginiṣṭhatvābhāva) *m.* absence of the state of being resident in subjunct स्तम्भनिष्ठं स्तम्भतादात्म्यं कुम्भे नास्ति ... उक्ततादात्म्यस्यानुयोगिनिष्ठत्वाभावात् LaCandr. 805. 19.

**अनुयोगिनीतीर्थ** (anuyoginītīrtha) *n.* name of a holy place of pilgrimage (on the banks of a sacred stream) अनुयोगिनीतीर्थं नरस्तत्र कृताप्लवः। ... योगसिध्दिमवाप्नुयात् SkandP. iv. 61. 176.

**अनुयोगिपटादि** (anuyogi-paṭādi) *adj.* piece of cloth etc. which are realtional subjuncts (घटत्वेन पटो नास्तीत्यादौ) अनुयोगिपटादेः सप्तम्यन्तानुपस्थाप्यत्वात् GuruCandr. i. 76. 3.

**अनुयोगिपद** (anuyogi-pada) *n.* word conveying the relational subjunct (समानाधिकरणः निषेधप्रत्ययः) अनुयोगिपदतत्समानविभक्तिप्रतियोगिपदयुक्तनञ्जन्यः LaCandr. 798. 35.

**अनुयोगिप्रतियोगिसापेक्षत्व** (anuyogipratiyogisāpekṣa-tva) *n.* the state of being what is expectant of relational subjunct and relational adjunct देवतात्वस्य च नियमेनानुयोगिप्रतियोगिसापेक्षत्वात् MīmāKau. ii. 220.6 (*on* iii. 1. 27); प्रथमावगतस्य देवतात्वस्य ... अनुयोगिप्रतियोगिसापेक्षत्वात् ... उद्देश्यतावच्छेदकत्वसिद्धिः BhāṭṭDī. i. 209. 8 (*on* iii. 1. 15)

**अनुयोगिप्राप्ति** (anuyogi-prāpti) *f.* obtainment of relational subjunct ऋगुद्देशेन संतानविधाने त्ववसानसामान्याभाव एव प्राप्यते, न चार्धर्चौ संदधातीति वचनादनुयोगिप्राप्तिः BhāṭṭCan. 103. 19 (*on* xvi. 1. 7)

**अनुयोगिवाचकपद** (anuyogivācaka-pada) *n.* word expressing relational subjunct यत्रानुयोगिवाचकपदे सप्तमी तत्रात्यन्ताभावबोधः, यत्र प्रथमा तत्रान्योन्याभावबोधः BhāṭṭCin. i. 121. 6 (*on* i. 1. 4)

**अनुयोगिविनिर्मोक** (anuyogi-vinirmoka) *m.* [Inst.] by leaving out relational subjunct अनुयोग्यनुपस्थितेर्नञोऽनुयोगिविनिर्मोकेनाभावबोधकताया अव्युत्पन्नत्वात् VyutpaVā. 118. 9.

**अनुयोगिविशेषण** (anuyogi-viśeṣaṇa) *adj.* which qualifies the relational subjunct स्वरूपसंबन्धात्मकमभावानुयोगितावच्छेदकत्वमनुयोगिविशेषणे नञ्पदजन्याभावप्रतीत्या गृह्यते ŚaktiVā. 154. 11.

**अनुयोगिविशेषणदण्डाद्यभाव** (anuyogiviśeṣaṇadaṇḍādy - abhāva)

*m.* absence of the stick etc. qualifying the relational subjunct दण्डं विना न घटोत्पत्तिरित्यादौ च विनान्तार्थे घटोत्पत्त्याद्यभावान्वयेऽनुयोगिविशेषणदण्डाद्यभावस्य च तदनुयोगितावच्छेदकत्वं भासते VyutpaVā. 149. 34.

**अनुयोगिविशेषणावच्छेद** (anuyogiviśeṣaṇāvaccheda) *m.* [Inst.] due to the delimitation by qualifier of the relational subjunct अनुयोगिविशेषणावच्छेदेनैव नञाभावः प्रत्याय्यते ŚaktiVā. 153. 21.

**अनुयोगिवृत्तिनञर्थ** (anuyogivṛtti-nañartha) *m.* meaning of negative particle occurring in, i.e. related to the relational subjunct निषेधाधिकारे प्रतियोगिनमुद्दिश्यानुयोगिवृत्तिनञर्थस्यैव विधेयत्वात् BhāṭṭDī. iv. 96. 12 (*on* x. 8. 1)

**अनुयोगिवृत्त्यभावविधान** (anuyogivṛttyabhāva-vidhāna) *n.* enjoining, i.e. predication of the absence occurring in the relational subjunct (ह्रदे वह्निर्नास्तीत्यादौ) वह्न्यादेरेव प्रतियोगित्वमङ्गीकृत्य तदुद्देशेनैवानुयोगिवृत्त्यभावविधानम् BhāṭṭDī. iv. 97. 13 (*on* x. 8. 1)

**अनुयोगिवृत्त्यभावविषयक** (anuyogivṛttyabhāvaviṣaya-ka) *adj.* referring to the absence occurring in the relational subjunct शाब्दबोधाजनकत्वं पदशाब्दबोधवदेव प्रतियोगिप्रसिद्धिमात्रेणानुयोगिवृत्त्यभावविषयकशाब्दबोधोपपत्तेः BhāṭṭDī. iv. 96. 24 (*on* x. 8. 1)

**अनुयोगिस्वरूपत्वासंभव** (anuyogisvarūpatvāsambhava) *m.* impossibility of being what is of the form of relational subjunct घटादेर्भेदरूपत्वम्, धर्मभेदपक्षे ... भेदस्यानुयोगिस्वरूपत्वासंभवात् LaCandr. 805. 30.

**अनुयोग्यनुपस्थिति** (anuyogy-anupasthiti) *f.* absence of recollection of the relational subjunct अनुयोग्यनुपस्थितेर्नञोऽनुयोगिविनिर्मोकेनाभावबोधकताया अव्युत्पन्नत्वात् VyutpaVā. 118. 9.

**अनुयोजन** (anu-yojana) *n.* **1A** questioning, asking पितामहादयो ये च जगत्कार्याधिकारिणः।... नानुयोजनमर्हन्ति परमात्मप्रवृत्तयः AhirbuS. 8. 20 [Kośas give *anuyojana* as the synonym of *praśna* and *pṛcchā*, AbhidhāCin. 263; ParaNā. 447; KalpaK. 446. 71]; **1B** cross-examination अनुयोजनं सत्यानृतजन्यपुण्यपापप्रतिपादकमन्वादिवचनैर्यथार्थकथनपरान् कृत्वा प्रस्तुतार्थप्रश्नकरणम् SmṛtiCan. iv. 541. 6; **1C** interrogation, cf. **अनुयोजनविधि B; 2A** employment स्तेनानीतसमादानं स्तेनानामनुयोजनम्।... अतिचारा जिनैः पञ्च गदिताः SubhāRaSaṁ. 847; **2B** act of connecting, construing अनुयोजनमनुयोगः सूत्रस्यार्थेन सह संबन्धनम् SthānṬ. 3B. 9.

**अनुयोजनविधि** (anuyojana-vidhi) *m.* **A** procedure of cross-examination (in a law-suit) साक्षिणां लक्षणानि अनुयोजनविधिं च वक्ष्यामि SmṛtiCan. iii. 173. 8; **B** text dealing with the procedure of interrogation अत्र केचित् -'नग्नो मुण्डः' इत्यादिश्लोकत्रयमपकृष्यानुयोजनविधौ निवेशनीयम्, अन्यथानन्वयः स्यादिति मन्यन्ते SmṛtiCan. iii. 205. 14.

**अनुयोजित** (anu-yojita) *adj.* employed along with ˜उषसि शान्त्युदकं करोति ...। चातनैर्मातृनामभिर्वास्तोष्पत्यैरनुयोजितैः VaitāSū. 5. 10; शान्त्युदकं कृत्वा चातनेनानुयोजितम्। संप्रोक्ष्य विधिवन्मन्त्रैरानयेदरणी ततः AVPari. 21(6). 8.

**अनुयोज्य** (anu-yojya) *adj.* [*f.* -ā] **1A** to be used तानि तिलाक्षतादीनि तथापोह्य दर्शपूर्णमासानुयोज्यान्यस्मा उपाहरति VaikhāGS. 5. 4; **1B** to be appointed भूपाला अविमृश्य विधायिनः।... अनुयोज्या अमी चात्र दद्युश्चेत् सत्यमुत्तरम् PrabhāC. 188. 5; **1C** to be administered माषकादिक्रमेणैव अनुयोज्यं रसायनम् RaseCin. 9. 50 (132. 12); **2A** to be cross-examined (in a law-suit) ममेदमिति यो ब्रूयात्सोऽनुयोज्यो यथाविधि ManuSm. 8. 31 (ManuBh., ManvaMu. प्रष्टव्यः); अन्यथा ब्राह्मणेषु सत्यं ब्रूहीति यथा ब्राह्मणा एते कथं शूद्रवदनुयोज्याः ManuBh. ii. 117. 22 (*on* 8. 103); **2B** (used as noun) (a general statement) which is to be questioned (for specification) अथानुयोज्यम्। अनुयोज्यं नाम यद्वाक्यं वाक्यदोषयुक्तं तत्। सामान्यतो व्याहृतेष्वर्थेषु वा विशेषग्रहणार्थं यद्वाक्यं तदप्यनुयोज्यम् CaraS. iii. 8. 50 (1941 Ed.); **2C** to be ordered or commanded उभाभ्यामपि वां वासवनियोज्यो (v. l. वासवानुयोज्यो BÖHTLINGK Ed.) दुःषन्तः प्रणमति Śāk. 7.27(2) (*but* APTE, *m.* a servant, obedient and humble servant); **2D** to be censured or objected नियताचिन्त्यशक्तीनि वस्तूनीह प्रतिक्षणम्। भवन्ति नानुयोज्यानि दहने दाहशक्तिवत् TattvSaṁ. 438; तन्तुमृत्पिण्डविज्ञाने ह्यनुयोज्ये मते ŚlokaVār. 5 (3). 250 (341. 3); शक्तयः सर्वभावानां नानुयोज्याः स्वभावतः TantrVā. 344. 17 (*on* ii. 1. 1); सर्वैरेव वेदवादिभिस्तत्र स्थित्युत्पत्त्योर्यः परिहारः स प्रलयेऽपि समानः ... तस्मान्नापीतिमात्रमनुयोज्यम् Bhām. 342. 6 (*on* ii. 1. 9); **2E** to be asked or inquired षड्भेदयोगवादी यः सोऽनुयोज्यः समाहितैः MahāP. 21. 223; **3** capable of being made to be devoted अनियतगोत्रकः पुनर्महामते त्रिष्वप्येतेषु देश्यमानेषु यत्रानुनीयते तत्रानुयोज्यः LaṅkāSū. 2. 127 (109) (28. 11) [DBHS.]

**अनुयोज्य** (anuyoj-ya) *ger.* having appointed, having assigned विद्रवद् बलमवेक्ष्य कपीनां तन्निषेद्धुमनुयोज्य तदीशम्।... लक्ष्मणो रणरसेन तमाप RāmC. (App. 2) 40. 16.

**अनुयोज्यता** (anuyojya-tā) *f.* the state of being what is to be objected or censured अन्वयव्यतिरेकौ च गृह्येते व्यवहारतः। अनादिश्चैष संसार इति कस्यानुयोज्यता NyāyMañ. ii. 65. 10.

**अनुयोज्यमान** (anu-yojyamāna) *adj.* being used or employed पृथक्पदतया वाक्यकल्पः सः... अनुयोज्यमानः कविभिरुत्प्रेक्षावयव इत्युच्यते SaraKaṇṭhā. 468. 19.

**अनुयोज्यानुयोग** (anuyojyānuyoga) *m.* type of clincher (*lit.* censure of the censurable) वादिनोरनुयोज्यानुयोगमुद्भाव्य सदुत्तरेण कथा प्रवर्तनीया TārkiRa. 317. 1; स्मृत्युक्ता उभयाभासा यथायथमर्थान्तरमप्यनुयोज्यानुयोगासिद्ध्यादिनिग्रहस्थानहेत्वाभासादिष्वेव पर्यवस्यन्ति VīraMi. (Vyavahāra.) 54. 10.

**अनुरक्त** (anu-rakta) *adj.* [*f.*-ā] **1Ai** devoted to (the god) **ii** loyal **iii** devoted to, i.e. faithful **Bi** having a liking for **ii** inclined to, interested in **iii** who or which is liked by **C** kind, considerate, favourable **D** attached to, fond of, affectionate **Ei** who are in love with each other **ii** who is in love with, enamoured, passionate **iii** attracted to **F** influenced by **2A** who or which has become red, reddened or coloured **B** dyed, smeared with blood **3A** pleasing (to ears), i.e. harmonious **B** pleased, delighted **4** related to, associated or connected with **5** tied with, interwoven **1Ai** devoted to (the god) ग्राम्यस्त्वेकः पशुस्तत्र नाजहाच्छ्वा महामुनिम्। भक्तोऽनुरक्तः सततमुपवासकृशोऽबलः MahāBhā. xii. 117.9; किमनुक्रोशवैफल्यमुत्पादयसि मेऽनघ। आनृशंस्येऽनुरक्तस्य भक्तस्यानुगतस्य च MahāBhā. xiii. 5. 22; आह परमप्रीता देवं देवी...। प्रियार्थमनुरक्तानां सदा भूमण्डले त्वया। वर्तितव्यं जगन्नाथ प्रियां तनुमुपेयुषा AhirbuS. 33. 80; 35. 88; तस्यैवं मेऽनुरक्तस्य प्रश्रितस्य हतैनसः।... ज्ञानं गुह्यतमम्...। अन्ववोचन् (मुनयः) BhāgP. i. 5. 29; iii. 4. 10, iv. 17. 7; उदीच्यामग्निकायमुमानुरक्ता हेमाङ्गविभूषणा हेमवस्त्रा मामुपासते मामेव वेदाश्चतुर्मूर्तिधराः। BhasmJāU. 566. 5; नारदः कथयामास ...। मां भक्तमनुरक्तं च ...। पञ्चरात्रमिदम् PañcaRā. (Nā.) i. 1. 43; आह विष्णुर्द्रुहिणं महात्मा। एते हि भक्ता मयि चानुरक्ताः AdhyāRā. vii. 9. 60; उचितज्ञोऽनुरक्तोऽसि भक्तोऽसि कुशलोऽप्यसि KaṁVa. 5. 24; 7. 14 (9); जिनधर्मानुरक्तस्वांतकुकेशवंशमंडन साह अमरदत्तभार्या EI. i. 324. 43; **1Aii** loyal (subject, minister, servant etc.) अनुरक्ताः प्रकृतयो द्रुपदस्य महात्मनः MahāBhā. i. App. I. 103 (64); कच्चिद्वैद्याश्चिकित्सायामष्टाङ्गायां विशारदाः। सुहृदश्चानुरक्ताश्च शरीरे ते हिते सदा MahāBhā. ii. 5. 80; ii. App. I. 4 (19); बृहत्सेनाम् ... परिचारिकाम्। ... अनुरक्तां सुभाषिताम् MahāBhā. iii. 238* (2); वक्ता हितानामनुरक्त आर्यः शक्तिज्ञ आत्मेव हि सोऽनुकम्प्यः (भृत्यः) MahāBhā. v. 37. 23; SūktiRa. 94. 8; शतशोऽपरे। अनुरक्ताश्च विजये भीष्मेण निहता रणे MahāBhā. viii. 24*(2); (मन्त्रिणा) तानि तान्यनुरक्तेन शक्यान्यनुतितिक्षितुम् MahāBhā. xii. 84. 31; xii. 112. 23; xiii. App. I. 15 (907); तैर्मन्त्रिभिः ...अनुरक्तैः ...। स पार्थिवो दीप्तिमवाप Rāmā. i. 7. 17; अनुरक्ता महात्मानं रामं सत्यपराक्रमम्। अनुजग्मुः प्रयान्तं तं वनवासाय मानवाः Rāmā. ii. 40. 1; ii. 1020*(1); रामः ... इदमब्रवीत्। विभीषणं च धर्मज्ञमनुरक्तं निशाचरम् Rāmā. vi. 29. 2; अनुरक्तः शुचिर्दक्षः.... दूतो राज्ञः प्रशस्यते ManuSm. 7. 64; (राजा) अनुरक्तं हितैषिणम्।... महानसे प्रयुञ्जीत वैद्यम् SuśruS. v. 1. 10; (राजा) शिक्षितमनुरक्तं कृतकर्माणं जनमासन्नं कुर्वीत ArthŚā. i.103. 5 (1. 21); ii. 304. 3 (7. 10); बलम् ... तस्य... संख्यातः वीरपुरुषं च न चानुरक्तम् PratiYau. 1. 4; BṛhaspaSm. 301. 505; YuktiKa. 11. 4; बुद्धिमाननुरक्तोऽयम् ...। इति भृत्यविचारज्ञो भृत्यैरापूर्यते नृपः Tantrākhyā. 9. 19; PañcT. 1. 37 (30. 1); Hitopa. 2. 66; Pañcā. 11. 7; Subhāṣi. 2843; अपि वृषलमनुरक्ताः प्रकृतयः MudrāRā. 1. 19 (13); 4. 12 (28); अनुरक्तः शुचिर्दक्षो बुद्धिमान् परिचारकः AṣṭāSaṁ. i. 6. 7 (1. 2); AṣṭāHṛ. i. 1. 28; राजा राज्यवर्धनम्... अनुरक्तैश्च महासामन्तैः कृत्वा साभिसरमुत्तरापथं प्राहिणोत् HarṣaC. 210. 6; विभीषणस्त्वाभिगामिकात्मगुणसंपन्न इति अनुरक्ताः प्रकृतयः MahāvīC. 4. 7 (2); शुचिर्दक्षोऽनुरक्तश्च जाने भृत्योऽपि दुर्लभः Hitopa. 3. 137; यत्त्वया शात्रवं जन्ये मदायतमदायत। तेन त्वामनुरक्तेयं (पृथ्वी) रसायत Kāvyālaṅ.(Ru.) 3.38; अनुरक्तः अहार्यो भवति (दूतः) ManuBh. ii. 21. 25 (*on* 7. 64); ii. 322. 8 (*on* 9. 304); (गोपालदेवम्) यं स्वामिनं राजगुणैरनूनमासेवते चारुतरानुरक्ता।... °लक्ष्मीः EI. xiv. 326. 19; xv. 296. 14; कुर्वन्ति ये सदुपलेपनवासचित्रं संमार्जनं गिरिसुतायतनेऽनुरक्ताः SaurP. 50. 59; सदोषः सगुणो वास्तु न मे त्याज्यो विभीषणः। अनुरक्तो विरक्तो वा माम् ... आगतः RāmāMañ. 304. 25;

तथाप्यनुरञ्जकधात्वर्थभेदाद्भावनान्तरं प्रत्येतव्यम् TantrVā. 447.2 ( *on* ii. 2.1)

**अनुरञ्जकधात्वर्थाधीन** (anurañjakadhātvarthādhīna) *adj*. dependent on the qualifying root-meaning एवमिहापि भावनाया अनुरञ्जकधात्वर्थाधीन-निरूपणतया तद्भेदाद्भेदो न्याय्य: MayūMāli. 122.7 (*on* ii. 2.1)

**अनुरञ्जन** (anurañjana) *m*. name of one of the five types of nasalisation पूषा मित्रो वसून् पञ्चानुरञ्जनाः प्रकीर्तिताः। एकार्धमात्रिकाश्चैव पञ्चैते चानुरञ्जनाः PārāŚi. 157.

**अनुरञ्जन** (anu-rañjana) *n*. **1A** act of pleasing or gratifying (by ruling properly) **B** act of entertaining , critical appreciation **C** act of causing sexual pleasure **D** act of consoling **2A** act of causing devotion **B** act of causing love **3A** assumption of (form) due to association **B** act of causing semantic relation **C** act of qualifying **4** act of reflecting **1A** act of pleasing or gratifying (by ruling properly) यजन्ते हि तदा राजन्ब्राह्मणा बहुभिः सवैः। क्षत्रियाश्च प्रवर्तन्ते सर्ववर्णानुरञ्जनैः MahāBhā. iii. 186.99; अधर्मे धीयमानस्य सद्भिः स्यान्मे निबर्हणम्। उग्रेण पृथिवीं जित्वा धर्मेणैवानुरञ्जनम् HariVaṁ. 23.141; BrahmP. 13.163; समस्तविषयप्रशमनाद्विहिततन्मनोनुरञ्जनः अत्यन्तवत्सल-त्वात् ... श्रीपृथिवीवल्लभ° ... °भट्टारकस्सर्व्वानेवमाज्ञापयति EI.xxv. 291.19; युक्तः प्रजानामनुरञ्जने स्याः UttaRāC. 1.11; जलालुदीनप्रभुपातिसाहि° ... °तन्मनोनुरंजनसमासादितसकलभूतलाखिलजंतुसुखकारि EI. i. 324.34; राजर्षिवंशजातानां राज्ञां प्रसिद्धमाख्यानं वस्तु। यत्खलु लोकानामनुरञ्जनं कर्म NāṭaLaRaK. 40; SundaŚ. 4; धर्मात्मकत्वात्सर्वलोकानुरञ्जनमेव दण्डपातनम्। असाधूनामनुरञ्जनं तु न राजधर्मः VīraMi. 375.14 (*on* 1.353-354); **1B** act of entertaining, critical appreciation चक्रे मया काव्यपरिश्रमोऽयं बहुश्रुतानामनुरञ्जनाय Surath. 1.64; **1C** act of causing sexual pleasure परीक्ष्य गम्यैः संयोगः संयुक्तस्यानुरञ्जनम्। रक्तादर्थस्य चादानमन्ते मोक्षश्च वैशिकम् KāmSū. 332.20 (6.3); अनुरञ्जनमाचरेत्सङ्गे KandaCū. i. 4.56; vi. 3.37; असाध्यायाः सुखं सिद्धिः, सिद्धायाश्चानुरञ्जनम्। ... कामशास्त्रप्रयोजनम् RatiRaha. 1.6; **1D** act of consoling cf. **अनुरञ्जनप्रकार**; **2A** act of causing devotion सम्यग्वेत्ति तदाभ्यासात् स्वाराध्येनानुरञ्जनात्। विलक्षणं च तद्ध्यानं ध्यानाध्यात्मकमब्जज PauṣkS. 33.124; विश्वेषामनुरञ्जनैर-नुपमैरुत्तंसतामप्यसौ बिभ्राणः कुलभूषणः कुलपतिं देवः सिषेवे शिवम् ŚivLī. 16.89; **2B** act of causing love विश्वेषामनुरञ्जनेन जनयन्नानन्दम् ...मधौ मुग्धो हरिः क्रीडति GītGo. i.4.10; **3A** assumption of (form) due to association तदा मणिर्विभजते वर्णान्विचित्रान् स्फटिके यथा। वैमल्यादाश्रयवशात्तद्वर्णः ...। गुणवशात्तस्य स्वयंभोरनुरञ्जनम् VāyuP. ii. 5.96; BhaviP. 133A.14 (i.78.68); **3B** act of causing semantic relation संसर्गोऽपि पदार्थानामन्योन्येनानुरञ्जनम्। एकैकत्र तदप्यस्तीत्येकत्वं न प्रतीयते TantrVā. 429.11 (*on* ii. 1.46); **3C** act of qualifying अनुरञ्जनेन व्यक्तेर्विशेषणमित्युक्तम् Kāśi. iii. 123.18 (*on* 5(5). 58½); NyāyRa. 421.17 (*on* 5(5). 58½); अन्यदीयगुणग्रहणाग्रहणे ... अन्यदीय-गुणेनैवानुरञ्जनानुरञ्जने विवक्षिते Kuval. 144(12); **4** act of reflecting सर्वार्थानां भवेच्छब्दैः सर्वैरेवानुरञ्जनम् ŚlokaVār. 4.211 (197.6); न किंचिच्चेन्न तेन विकल्पानामनुरञ्जनस्योप-पादयितुमशक्यत्वात् NyāyMañ. i. 289.10.

**अनुरञ्जन** (anu-rañjana) *adj*. delighting सुतपसां फलमुत्सृजन्सुमनसां मनसामनुरञ्जनः। ... विनयोऽपि च भूपते AlaṅkāMañ. 85.12 .

**अनुरञ्जनकारिन्** (anurañjana-kārin) *adj*. who causes delight or gratification सुन्दरि पश्य मिलति वनमाली। ... चारुसनातनतनुरनुरञ्जनकारिसुहृद्गणसङ्गी StavMā. 273. 29.

**अनुरञ्जनक्षमा** (anurañjana-kṣamā) *adj*. *(f.)* capable of pleasing or gratifying कृतमतिरनुरञ्जनक्षमायाः सुभगतया प्रथयन् फलं क्षमायाः। ... स नृपगुणैरजयद्विपक्षमायाः KīcaVa. 1.27.

**अनुरञ्जनप्रकार** (anurañjana-prakāra) *m*. mode or manner of consoling or conciliating सखे महोदर, दृष्टः किलायमनुरञ्जनप्रकारस्त्रिजटासरमयोः सीतायाम् AdbhuDa. 8.36(12)

**अनुरञ्जनलक्षण** (anurañjana-lakṣaṇa) *adj*. characterised by causing love बाल्यात्प्रभृति सति धर्माधिगमे ... संवननं वशीकरणमनुरञ्जनलक्षणं श्लाघ्यम् JayaMa. 208.20(*on* 3.3)

**अनुरञ्जनविधि** (anurañjana- vidhi) *m*. **1** process of pleasing or gratifying (प्रियोपग्रहैश्च सुदीर्घकालमनुरञ्जयेत् ... इत्यनुरञ्जनविधिः JayaMa. 230.9 (*on* 3.5); ŚrīKaC. 3.77; **2** process of causing redness निर्मातुं भुवनानुरञ्जनविधिं देवे ततो भास्वति ŚrīKaC. 3.77.

**अनुरञ्जनादि** (anurañjanādi) *adj*. **A** beginning with reflection वर्तते चेज्ज्ञातिर्द्रव्ये तया तस्यानुरञ्जनाद्युपकारः Śarka. 65.23; **B** beginning with amorous feeling of love अनुरञ्जनादिरुक्तो यश्चानर्थानुबन्धान्तः KandaCū. vi. 6.46.

**अनुरञ्जनादिका** (anurañjanādi-kā) *adj*. *(f.)* (act of) colouring, i.e. manifesting with colour etc. रूपादिपरमाणव एव तेनाकारेणोत्पन्ना एकयोदका-हरणक्रियया व्यवच्छिन्ना घटादय इत्युच्यन्ते, अनुरञ्जनादिकया तु रूपादिव्यपदेशः TātpaṬ. (Vā.) 226.10 (*on* i. 1.14)

**अनुरञ्जनार्थम्** (anurañjanārtham ) *adv*. for the sake of causing love अनुरञ्जनार्थं बालायामुपक्रमादनेकप्रकारा उच्यन्ते JayaMa. 208.12 (*on* 3.3)

**अनुरञ्जनीय** (anu-rañjanīya) *adj*. fit to be pleased or delighted कष्टो जनः कुलधनैरनुरञ्जनीयः UttaRāC. 1.14; चेतोऽनुरञ्जनीयं कलया तत्रानुरक्ताया KandaCū. Add. 22 after iii. 3.7.

**अनुरञ्जनोपकार** (anurañjanopakāra) *m*. help (in the form) of reflection वर्तमानमुपकारमासजद्वर्तते। यथा लाक्षा स्फटिकेऽनुरञ्जनोपकारेण वर्तते Śarka. 65. 23.

**अनुरञ्जनोपाय** (anurañjanopāya) *m*. method of causing love इति घोटकमुखभणितिस्तस्याश्चेहानुरञ्जनोपायाः KandaCū. iii. 3.4.

**अनुरञ्जयत्** (anu-rañjayat) *adj*. **1A** gratifying, pleasing धर्मेण च प्रजाः सर्वा यथावदनुरञ्जयन्। ययातिः पालयामास MahāBhā. i. 80.5; VāyuP. ii. 31.66; MatsyaP. 34.6; पृथिवीं जित्वा धर्मेणैवानुरञ्जयन्। ... अर्जुनोऽथ तेजस्वी सप्तद्वीपेश्वरोऽभवत् MahāBhā.ii. App. I. 39(4); (दशरथः) पालयामास पृथिवीमनुरञ्जयन् Rāmā. i. 270* (1); **1B** conciliating, consoling स मुनिः ... संध्याकाशे तमनुरञ्जयन् ... चक्षुषा पुनःपुनरभिनिरूप्य ... अन्वतिष्ठत् AvantiKa. 145.3; नरवाहनदत्तस्तं निजगादानुरञ्जयन् KathāSaSāg. ix. 6.2; xii. 31.48; **2A** colouring or reddening स मुनिराकपिलतारकेणांशुमन्तमिव संध्याकाशे तमनुरञ्जयन् ... चक्षुषा पुनःपुनरभिनिरूप्य ... अन्वतिष्ठत् AvantiKa. 145.3; (ते ददृशुः पुरुषम्) उपवीतसूत्रताम्। नीतमुरगमनुरञ्जयता शितिना गलेन विलसन्मरीचिना Kirātā. 12.23; **2B** reflecting, i. e. following दूषणाभासेन न दूषयितुं शक्यमिति शिक्षयितुं वार्त्तिकमनुरञ्जयन्नेवोत्तरग्रन्थमवतारयति NyāyVārPari. 447.17; **3** connecting, qualifying धात्वर्थस्य भावनामनुरञ्जयतः तद्विषयताप्रतीत्या तत्परामर्शकृतं तदन्तर्गतस्य क्रियात्वमिति कुतः क्रियाद्वयप्रत्ययः BhāvanāVi. 177.1.

**अनुरञ्जयितुम्** (anu- rañjayitum) *inf*. **A** to please (critically), to appreciate एषा च प्रयोगपरंपरा तार्किकाणां चित्तमनुरञ्जयितुम् ... प्रणीता Kāśi. i. 78.10 (*on* 2.30); iii. 220.18 ( *on* 5 (10). 1; **B** to delight, to entertain डोम्बिका .. गीतेन नृत्तेन वान्येन (वाद्येन) च राजानमनुरञ्जयितुं गृहीतः (गृहीतोद्यमा) AbhinBhā. i. 175.18 (*on* 4.262); Kāvyānu. (He.) 394. 18; अप्रेममार्गपान्थाः तिष्ठन्त्येताः किमेताभिः। प्रियमनुरञ्जयितुं ननु मम दृष्टा सस्मिता दूती ŚṛṅgāMañ. (A.) 32.12.

**अनुरञ्जित** (anu-rañjita) *adj*. [*f*. -ā] **1A** consoled, conciliated वैन्यः प्रतापवान्। पित्रापरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः। अनुरागात्ततस्तस्य नाम राजेत्यजायत HariVaṁ. 5. 29; ViṣṇuP. i.13. 48; BrahmāṇḍP. i. 36. 155; ViṣṇuDhaP. i. 109. 50; BrahmP. 4. 57; PadmP. ii.27. 58; ii. 125.6; °दीनानाथादिषु दानमानादिभिरनुरञ्जितेष्वपि तन्मूल-प्रत्युपकाराद्यनर्हप्रव्राजित° ... NyāyPari.386.1; अन्नवेमनृपतिश्च ... येन[ती]र्त्येषु सत्राणि दृष्टसंपत्प्रसङ्गाभावात् ततानि येन येन प्रजास्साध्वनुरंजिताश्च EI. iii. 288. 17; **1B** pleased or delighted त्वया यतः प्रजाश्चेमाः स्वगुणैरनुरञ्जिताः। तस्मात्त्वं पुण्ययोगेन यौवराज्यमवाप्नुहि Rāmā. ii. 3. 24; गोप्यश्च दयितं कृष्णमनुव्रज्यानुरञ्जिताः। प्रत्यादेशं भगवतः काङ्क्षन्त्यश्चावतस्थिरे BhāgP. x. 39. 34; एवमनुरञ्जितां स्वयंवर-प्रवृत्तां च गान्धर्वेण योजयेत् JayaMa. 226. 23 (*on* 3. 5); आलिङ्गनैश्च सुदृशामनुरञ्जितोऽसौ सर्वर्तुगोत्रतिलकं शिशिरं विवेद VikraDeC. 16. 50; 5. 44; अनुरञ्जिता अपि गुणैर्न नमन्ति प्रकृतयो विना दण्डात् Subhāṣi. 2852; **1C** gratified, i.e. blessed विरोधं च निराकृत्य श्रुतीनां प्राणतत्व(?त्त्व)गान्। परिहृत्य विरोधांश्च तत्प्रसादानुरञ्जितः ... यतेतोपासनाय AnuVyā. 46B. 7 (*on* 3.3); **2** associated with, i.e. affected by अथ मन्यसे विषयस्त्रेधा भिन्नस्तेनानुरञ्जितः प्रत्ययस्त्रेधैव भवति NyāyVār. 409.1 (*on* iii. 2. 9); (भावनया) तयानुरञ्जित इव ह्यात्मा कामान्परीप्सति BṛĀraUBhVā. iv. 3. 1191; मनस्तन्मयतामेति तद्भावेनानुरञ्जितम् BṛĀraUBhVā. iv. 4. 727; पृथिव्याद्याभासाः ... कलादिभिर-नुरञ्जिताः प्रमातरि विश्राम्यन्ति PratyabhiVi. ii.242. 8 (*on* iii.1. 14); **3A** coloured, reddened प्रभाभिरनुरञ्जितमेघवृन्दमालक्ष्यते दहनगर्भमिवान्तरिक्षम् BhagAjju. 97(36); मृणालिनीनामनुरञ्जितं त्विषा ... पयः Kirātā. 4. 27; प्रयान्ति पीत्वा हिमपिण्ड-पाण्डुराः। कालीरपस्ताभिरिवानुरञ्जिताः क्षणेन भिन्नाञ्जनवर्णतां घनाः ŚiśuVa. 12.68; त्रिमेखलस्यास्य मूर्ध्नि पीठस्य विस्तृतेः ... जिनपादतलच्छायाशोणिम्नेवानुरञ्जिते। ... गन्धकुटी बभौ MahāP. 23. 5; यस्यां च ... उदग्रसौधाग्रपद्मरागग्राव्णां प्रतिभाभिरनुरञ्जितः .... व्यराजत पार्वणो रजनिजानिः TilaMañ. 12. 8; 120. 18; **3Bi** reflected, i.e., shone or illuminated अनुरञ्जितः। अचकात्काञ्चनमयः

श्रीमुक्ताकेशवो हरिः RājTa. (Ka.) 4. 196; **3Bii** reflected, i.e. made clear अध्यात्मप्रवणो भूत्वा ... तत्प्रसादानुरञ्जितः AnuVyā. 46B. 7 (*on* iii. 3. 1); अनुरञ्जितः समीचीनः कृतः NyāySu.(Ja.) 256A.7 (*on* iii.3.1)

**अनुरञ्जितखेचर** (anurañjita-khecara) *adj.* who has pleased or entertained the Vidyādharas (*lit.* who move in the air) मुनिसुव्रतनाथस्य तीर्थे...। व्यापारैरद्भुतैर्नित्यमनुरञ्जितखेचरः। ... विद्युत्केश इति ख्यातो बभूव PadmP. (Ra.) 6. 223.

**अनुरञ्जितजयलक्ष्मीक** (anurañjitajayalakṣmī-ka) *adj.* who has pleased the goddess of victory वीरशब्दस्य प्रवृत्तिनिमित्तैश्चरिताद्भुतैरनुरञ्जितजयलक्ष्मीकः स एष पुराणपुरुषः PārthPa. 26(7)

**अनुरञ्जितदिङ्मुख** (anurañjita-diṅmukha) *adj.* which has coloured or reddened the point or quarter of sky व्योमतलं बभौ। सांध्यं रागमिवाबिभ्रदनुरञ्जितदिङ्मुखम् MahāP. 22. 63.

**अनुरञ्जितभूतल** (anurañjita-bhūtala) *adj.* **1** which has coloured the surface of the earth धवलमप्यनुरञ्जितभूतलम् ... दिशो दश भ्रमति यस्य यशः EI. iv. 31. 5; **2** which has entertained or pleased the (people on) surface of the country, EI. iv.31. 5.

**अनुरञ्जितसकलदिश्** (anurañjita-sakaladiś) *adj.* which has reddened or coloured all directions अधरद्युतिवितानैरनुरञ्जितसकलदिग्भिस्तरण्योद्देशमादर्शयन्त्यः ... सुरस्त्रियः ... उत्सर्पं प्रचक्रुः AvantiKa. 162. 13.

**अनुरञ्जितसमस्तसाधुसंघ** (anurañjita-samastasādhusaṅgha) *m.* all groups of good people who are pleased or delighted हरिवाहनः ... अनुरञ्जितसमस्तसाधुसंघश्लाघनीयम् ... पालयन्नेकातपत्रं राज्यम् ... तिलकमञ्जर्या कलत्रिणमात्मानममन्यत TilaMañ. 427. 8.

**अनुरञ्जितसर्वक्ष्म** (anurañjita-sarvakṣma) *adj.* who has pleased (the people on) the entire earth अनुरञ्जितसर्वक्ष्मः समुद्यद्भास्करद्युतिः। अतिवीर्यः ...आज्ञापयति PadmP. (Ra.) 37. 7.

**अनुरञ्जिताखिलगुण** (anurañjitākhilaguṇa) *adj.* in whom entire range of qualities is reflected, i.e. illuminated अनुरञ्जिताखिलगुणो भवद्गुणैर्भवपञ्जरं दृढमनञ्जसाञ्जसा ... पुरुषो भुनक्ति HarVi. 6. 160.

**अनुरञ्जितातप** (anurañjitātapa) *adj.* wherein sunshine has become red अनुरञ्जितातपे तु समये ... प्राकारमलङ्घयम् DaśKuC. 142. 9.

**अनुरञ्जिताशेषसामन्त** (anurañjitāśeṣasāmanta) *adj.* who has delighted or pleased all the feudatories गोकर्णेश्वरस्वामिनश्चरणकमलाराधनादवाप्तपुण्यनिचयो ... शक्तित्रय(:) प्रकर्षानुरञ्जिताशेषसामन्त(:) ... साम[न्त]वर्म्मा EI. xv. 277. 10; xxiii. 262. 10; xix. 135. 5; xxiii. 79. 5; iv. 199. 3.

**अनुरञ्ज्य** (anurañj-ya) *ger.* having gratified, having pleased स राजा .. गुणैरनुरञ्ज्य सकलं साधुलोकम् ... साम्राज्यसिंहासनं भेजे UdaySuKa. 24.11; तत्र द्वाःस्थान्प्रतिहारमनुरञ्ज्यार्थदानतः। तस्या वासगृहद्वारं प्राप्तोऽहमविलम्बितः KathāSaSāg. xviii. 5.192.

**अनुरण्** (anu-raṇ-) I. P. **1A** to sound in response इयं महापृथिवी गम्भीरभीमरूपम् अनुनदे अनुरणे MaVastuAva. ii. 282. 10; ii. 412. 8; तद्यथापि नाम मागधिकानां कांसपात्री काष्ठेनाभ्याहता रणत्यनुरणति LaliVi. 21.88(2) [DBHS.]; **1B** to echo, cf. **अनुरणत् A**; **1C** to reverberate, cf. **अनुरणन Aii**; **1D** to continue in articulation, cf. **अनुरणन C**; **2** to respond, cf. **अनुरणत् B**; **3** to repeat musically, cf. **अनुरणनमय**.

**अनुरणत्** (anu-raṇat) *adj.* **A** echoing, i.e. revealing अभिनवगुप्तपदाभिधोऽहम्। यत्किंचिदप्यनुरणन् स्फुटयामि काव्यालोकम् Loc. 1. 13 (*on* 1.0); **B** responding (with full comprehension) सचेतनोऽपि दुर्नर्मगोष्ठीष्वनुरणन्वचः। अवदत्स्फुरदप्यन्तर्विटानां नाम लाघवम् RājTa. (Ka.) 8. 3275.

**अनुरणन** (anu-raṇana) *n.* **Ai** resonance घण्टाया अनुरणनमभिघातजशब्दापेक्षया क्रमेणैव भाति Loc. 94. 23 (*on* 2. 21); **Aii** reverberating (through suggestion) ननु रसादिध्वनिरसंलक्ष्यक्रम इति प्रसिद्धिः कथमत्र तस्यानुरणनेन व्यङ्ग्यतोच्यते CitraMī. 29. 8; **B** repeated musical rendering (of notes) अनुरणनं हि स्वरस्य पाठ्यसिद्धिरूपमिति गेयाधिकारे वक्ष्यामः AbhinBhā. i. 53. 8 (*on* 2. 19); **C** continuity in the articulation (of syllables), cf. **अनुरणनरूप B.**

**अनुरणनध्वनि** (anuraṇana-dhvani) *m.* kind of suggestion (*lit.* suggested sense in the form of reverberation) षट्त्रिंशत्प्रकारोऽर्थशक्तिमूलोऽनुरणनध्वनिः PratāYaBhū. 75. 5.

**अनुरणनप्रख्य** (anuraṇana-prakhya) *adj.* which is similar to reverberation अस्य ... ध्वनेः स क्रमव्यङ्ग्यत्वादनुरणनप्रख्यो य आत्मा Dhvanyā. 235.1 (*on* 2. 20)

**अनुरणनप्रधाना** (anuraṇana- pradhānā) *adj.* (*f.*) chiefly producing resonance, having resonance as the important or essential part यो धर्मस्तन्त्र्यामनुरणनप्रधानायामारक्तकण्ठे गातरि यथाकथंचिद्वक्तुं प्रवृत्ते हुडुक्कामुरजादौ च पृथग्लक्ष्यत एव AbhinBhā. ii. 390. 15 (*on* 17. 109)

**अनुरणनभेद** (anuraṇana-bheda) *m.* type of suggestion ( wherein the sense is obtained through reverberation) अनुरणनभेदगणनप्रस्तावे 'अर्थशक्तिमूलस्य द्वादश भेदाः' इत्यभिनवगुप्तोक्तिः RasGaṅ. 131.4.

**अनुरणनमय** (anuraṇana-maya) *adj.* consisting of repeated musical rendering (of notes) स्वराणां यद्रक्तिप्रधानत्वमनुरणनमयं तत्त्यागेनोच्चनीचमध्यमस्थानस्पर्शित्वमात्रं पाठ्योपयोगि AbhinBhā. ii. 385. 18 (*on* 17. 103); Kāvyānu. (He.) 282. 9.

**अनुरणनरूप** (anuraṇana - rūpa) *adj.* **Ai** of the form of reverberation यथोद्देशमनूद्देशे यद्यारुत्वमनुरणनरूपम् ... तत् ... वाच्यादतिरिच्यमानमालक्ष्यते Dhvanyā. 274. 5 (*on* 2. 27); अनुरणनरूपं यत्र यद्रूपकमर्थशक्तिव्यङ्ग्यं तदाश्रयेणेह काव्यस्य चारुत्वं व्यवतिष्ठते Loc. 111. 11 (*on* 2. 28); 119. 17 (*on* 2. 32); ध्वनिः। शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यः अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यः उभयशक्तिमूलानुरणनरूपव्यङ्ग्यश्चेति त्रिविधः KāvyPra. 128. 2; 194. 1; प्रवृत्तेऽस्मिन् महाप्रलये धरणीधारणायाधुना त्वं शेषः इति। न ह्येतद्वाक्यमनुरणनरूपमर्थान्तरं शब्दशक्त्यैवा-निबन्धनं प्रकाशयितुं क्षमम् VyaktiVi. 134. 19; अनुरणनरूपं व्यङ्ग्यं वाक्यार्थीभूतस्य वाच्यस्यापरस्य अङ्गम् Ekāva. 4. 2(1) (131. 4); क्रमलक्ष्यत्वादेवानुरणनरूपो यो व्यङ्ग्यस्तस्य ... त्रैविध्यात् संलक्षक्रमव्यङ्ग्यनाम्नो ध्वनेः काव्यस्यापि त्रैविध्यम् SāhiDa. 212. 1; **Aii** of the form of echoing (of sounds) द्वात्रिंशति विमानानां लक्षेषु स समुच्छलन्। तालुनीवानुरणनरूपः शब्दो व्यजृम्भत TriṣaŚaPuC. i. 2. 344; **B** of the form of continuity in the articulation (of syllables) प्रयत्नविशेषजनितो वर्णविरामेऽप्यनुरणनरूपो वर्णान्तरोच्चारणेऽप्यनुवर्तमानो घोषो द्वादि उच्यते Pradī. ii. 308A. 14 (*on* i. 4. 108)

**अनुरणनरूपता** (anuraṇanarūpa-tā) *f.* the state of being (the suggestion) of the form of reverberation न चोक्तनयेन निबन्धान्तरमन्तरेण स्वशक्त्यैवानुरणनरूपतयार्थान्तरसमानाधिकरणतां प्रतिपत्तुमलमित्युदाहरणमेतत् VyaktiVi. 132. 24.

**अनुरणनरूपरूपक** (anuraṇanarūpa-rūpaka) *n.* metaphor which is (the suggestion) in the form of reverberation एवंविधे विषयेऽनुरणनरूपरूपकाश्रयेण काव्यचारुत्वव्यवस्थानाद्रूपकध्वनिरिति व्यपदेशो न्याय्यः Dhvanyā. 262. 1 (*on* 2. 27)

**अनुरणनलक्षण** (anuraṇana-lakṣaṇa) *adj.* characterised by repeated musical rendering (of notes) अभिघातजाच्छब्दादनन्तरं योऽनुरणनलक्षणोऽन्यः शब्द उपजायते स तावन्निसर्गस्निग्धमधुराकारः AbhinBhā. iv. 12. 27 ( *on* 28. 21)

**अनुरणनव्यङ्ग्य** (anuraṇana-vyaṅgya ) *adj.* suggested through reverberation (of the expressed sense) ध्वनिकारोऽपि ... अत्र लज्जाख्यं संचारिभावमनुरणनव्यङ्ग्यमुदाजहार CitraMī. 29. 16.

**अनुरणनव्यञ्जनात्मक** (anuraṇanavyañjanātma-ka) *adj.* of the nature of manifestation of repeated musical rendering (of notes) तत्र मध्यमा तृतीयस्यामपि श्रुतौ तथाविधानुरणनव्यञ्जनात्मकनादनिष्पत्तिः यथाविधं षड्जग्रामे चतुर्थ्यां मा भूत् AbhinBhā. iv. 21. 14 (*on* 28. 27)

**अनुरणनात्मक** (anuraṇanātma-ka) *adj.* of the nature of repeated musical rendering (of notes) अतिकनीयसि मण्डपे पाठ्यमुच्चरितस्वरं सदनिस्सरणधर्मत्वादनुरणनात्मकमधुरशब्दान्तरानारम्भात् विनष्टः स्वरो मधुरो यस्य तादृशत्वं व्रजेत् AbhinBhā. i.53.8 (*on* 2. 19); श्रुत्यन्तरभावी यः स्निग्धोऽनुरणनात्मकः। स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते SaṃgīRa. i. 82. 1(1(3). 24)

**अनुरणनात्मन्** (anuraṇanātman) *adj.* of the nature of reverberation एवं घण्टादिनिर्ह्रादस्थानीयोऽनुरणनात्मोपलक्षितो व्यङ्ग्योऽप्यर्थो ध्वनिरिति व्यवहृतः Loc. 47.11 (*on* 1.16)

**अनुरणनीय** (anu-raṇanīya) *adj.* which is to be reverberated इत्थं नानार्थस्थलेऽनुरणनीयं व्यञ्जनं शब्दशक्तिमूलम् RasGaṅ. 138. 11.

**अनुरत** (anu-rata) *adj.* **1A** devoted to जनकः ...। क्षत्रधर्मण्यभि-(v. l. ° धर्मेष्वनु) रतः Rāmā. ii.110. 26; य (Read यः) सफलः सपुण्यो लोके प्रसिद्धः सगुणो वभूव(Read बभूव)। सारोत्कारच्छेद(Read सारोत्तरश्छेद°)विभेदहीन आकारवर्म्मानु (Read °वर्त्मानु°)रतोऽभिषेके EI. xi. 309. 3; **1B** intent on, engaged

in शोभनधान्यमहाधनकर्मानुरताः समनुजेन्द्राः BṛSaṁ. 15.10; 69.37; तद्राजधानी नगरी खल्वाटिका राजति ... भूदेवा यत्र वेदाध्ययनमनुरताः स्वस्तिमन्तो वसन्ति EI. ii. 231. 9; **2** taking delight in प्रयुञ्जानः प्रिया वाचः समाजानुरतो जनः Bhaṭṭi. 8. 39; भावयत्येषः (वासुदेवः) ...। लीलावतारानुरतो देवतिर्यङ्नरादिषु BhāgP. i. 2. 34; प्रायो नेशा भवन्ति स्वसुखमनुरता दुःखभाजः परेषाम् GopāKeCan. 59.5 [attached to, MW.]

**अनुरताबलागण** (anuratābalāgaṇa) *adj.* to whom group of young damsels was devoted एवं शशाङ्कांशुविराजिता निशाः स सत्यकामोऽनुरताबलागणः BhāgP. x. 33. 26.

**अनुरति** (anu-rati) *f.* love, affection, attachment रागोऽनुरागोऽनुरतिः Vaija. 98. 181; AbhidhāCin. 296; KośaKaTa. 1. 1939.

**अनुरत्त** (anu-ratta) *adj.* attached to, fond of आनुजावरम् अनुरत्त (?) उग्रा तेषामिन्द्रं वीर्यैरयन्त AV. (P.) iv. 27. 1 [Viśva.]

**अनुरथ** (anu-ratha) *m.* [JaineVyā. 198. 9 (*on* iii. 3. 34); GaṇRa. 5. 342(379)] **1** soldier guarding or protecting a chariot from behind अभिमन्युः ...। भीष्मेण युयुधे वीरस्तस्य चानुचरैः (v.1. चानुरथैः) सह MahāBhā. vi. 45. 9 (BhārBhāDī. पार्ष्णिगोपादिभिः); **2** (anuratha) name of a prince (son of Kuruvatsa and father of Puruhotra) अनवरथात् कुरुवत्सस्ततश्चानुरथस्ततः पुरुहोत्रो जज्ञे ViṣṇuP. iv. 12.16 (Wai Ed.); BhaviP. 418B. 34 (iii(1). 3. 59)

**अनुरथम्** (anuratham) *adv.* [P. ii.1. 6] behind the carriage, at the back of the chariot ततोऽस्यानुचरान्हत्वा (v.l. °नुरथं गत्वा) ...। भीष्ममेवाभिदुद्राव बीभत्सुः MahāBhā. vi. 113. 41; रथानां पश्चादनुरथं पादातम् JaineVyā. 47. 28 (*on* i. 3. 5); पश्चादर्थे, अनुरथं पादातम् CāndraVṛ. *on* ii. 2. 2; KāśiVṛ. *on* ii.1. 6; Prasā. i. 35. 13.

**अनुरथ्या** (anu-rathyā) *f.* path along the margin of a road, side road, foot-path, PW.; pw.; MW.; a by-road, Apte; cf. **अनु 3.**

**अनुरदत्** (anuradat) *m.* name of a person मानुषीलक्षणो वा ढण् स्यात्। पुष्करसत् अनुरदत् अनुशतिकादित्वादनयोः पदद्वयस्यैप् JaineVyā. 165.4 (*on* iii.1. 85)

**अनुरन्तुकाम** (anurantu-kāma) *adj.* desirous of enjoying or having sexual intercourse with सा सुन्दरीति ... मुग्धवदनेति मुहुर्मुहुर्मे। कान्तामयं विरहिणीमनुरन्तुकामः कामातुरो जपति मन्त्रमिवान्तरात्मा SubhāRaK. 17. 16.

**अनुरन्ध्रम्** (anurandhram) *adv.* [P. ii. 1. 14] towards or facing the hole क्षितितले दीपं निधायोज्ज्वलं पञ्चछिद्रमधोमुखं हि कलशं तस्योपरि स्थापयेत्। तद्बाह्ये परितोऽनुरन्ध्रममलं वीणाम् ... न्यसेत् PraboSu. 93.

**अनुरभ्** (anu-rabh-) I. Ā. **i** to take hold after (violently) ये नौ द्विषन्त्यनु तान्रभस्व AV. ix. 5. 2; यो नो द्वेष्ट्यनु तं रभस्व ĀpaŚS. vii. 17. 2; (better रभस्व, cf. Viśva.) HirŚS. iv. 3. 11 (423.7); **ii** to take hold after (in a friendly manner) दैवस्तन्तुरस्यनु त्वा रभे ŚāṅkhāŚS. ii. 12. 9; मानुषस्तन्तुरस्यनु मा रभस्व ŚāṅkhāŚS. ii.12.10.

**अनुरम्** (anu-ram-) I. U. **1** to cease to continue, to stop दिव्या आपो वै शाक्वरीर्नु[र]मन्तु गह्वरे AV. (P.) viii. 18. 3; उप प्रतिहारमाहावेऽनुरमति ŚāṅkhāŚS. xvii. 17. 12; **2** to be pleased, to be delighted in यस्यां मनोऽनुरमते चक्षुश्च प्रतिपद्यते। तां विद्यात् पुण्यलक्ष्मीकाम् BhārGS. 1. 11(11. 13); सर्वः कार्यवशाज्जनोऽनुरमते ŚārṅgaPa. 1543; **3A** to devote to, cf. **अनुरत 1A; 3B** to be intent on, to be engaged in, cf. **अनुरत 1B; 4** to be attached to, cf. **अनुरत 1B; 5** to enjoy, to have sexual intercourse with, cf. **अनुरममाणा.**

**अनुरममाणा** (anu-ramamāṇā) *adj.* (*f.*) enjoying, having sexual intercourse with सह निजपतिना युवती रात्रौ प्रीत्यानुरममाणा। ... मुक्तामयकण्ठिका तदबलायाः। ... निपतिता GaṇiSāSaṁ. 3. 19.

**अनुरवणज्ञान** (anuravaṇa-jñāna) *n.* knowledge of resounding (सुधनः श्रेष्ठिदारकः) सर्वसत्त्वान् ... सर्वधर्मधात्वा(?त्व)नुरवणज्ञानं संदर्शयमानान् ... अपश्यत् GaṇḍVyū.191. 22 [DBHS.]

**अनुरवणता** (anuravaṇa-tā) *f.* the state of resounding अहम् ... प्रतिश्रुत्कागिरिघोषानुरवणतां च तथागतघोषस्य प्रजानन् ... एवमनुगच्छामि ... सर्वबुद्धधर्मः GaṇḍVyū. 66. 32[DBHS.]

**अनुरवित** (anu-ravita) *adj.* [*f.*–ā] resonant, resounding throughout सोऽद्राक्षीत् तं कूटागारम् ... असंख्येयपक्षिगणविचित्रमनोज्ञरुतानुरवितालंकारम् GaṇḍVyū. 407. 31; तथागतस्य ... वाक् निश्चरति ...। सर्वपर्षदनुरविता दूरान्तिकपर्षत्तुल्यश्रवणत्वात् MaYānaSū. 80. 31 (12. 9); MahāVyu. 20. 59 [DBHS.]

**[1]अनुरस्** (anu-ras-) I. P. [DhātuPā. 1.745] **A** to resound, to echo, cf. **अनुरसित; B** to answer to a cry or to a sound, MW.

**[2]अनुरस्** (anu-ras-) X. P. [DhātuPā. 10. 385] **1** (pass.) to be tasted, to be relished तदत्र सर्वथा साक्षात् कृष्णाद्यनुभवाद्भुतः। प्रौढानन्दचमत्कारो भक्तैः कोऽप्यनुरस्यते BhaktiRaSi. ii.5. 65; **2** to be eager, cf. **अनुरसा.**

**अनुरस** (anu-rasa) *m.* [AltGr. II. 1. 258] **1** secondary taste or flavour (relished subsequent to main taste) अव्यक्तीभावस्तु खलु रसानां प्रकृतौ भवत्यनुरसेऽनुरससमन्विते वा द्रव्ये CaraS. i. 26. 9 (1922 Ed.); i.26.26 (1922 Ed.); मद्यस्याम्लस्वभावस्य चत्वारोऽनुरसाः CaraS. vi. 24. 113 (1922 Ed.); क्षारे ...। कटुकस्तत्र भूयिष्ठो लवणोऽनुरसस्तथा SuśruS. i. 11. 24; अनुरसस्तु रसेनाभिभूतत्वादव्यक्तो व्यक्तो वा किंचिदन्ते AṣṭāSaṁ. i.92. 15(1.17); AṣṭāHṛ. i. 9. 4; मूत्रं गोऽजाविमहिषीगजाश्वोष्ट्रखरोद्भवम्। ... लवणानुरसम् AṣṭāHṛ. i. 5. 80; i. 6. 3 [KośaKaTa. 1.1277]; **2** one of the three types of *rasābhāsas* (*lit.* subordinate feeling or secondary sentiment) रसाभासाः ...। स्युस्त्रिधोपरसाश्चानुरसाश्चापरसाश्च ते BhaktiRaSi. iv.9. 2 [AbhidhāMañ. 139. 2 gives *rasālā* as the synonym of *anurasa*] [(in poetry) a subordinate feeling or passion, MW.; Apte]

**अनुरसतस्** (anurasa-tas) *adv.* on account of the secondary taste or flavour ते रसानुरसतो रसभेदाः ...। संभवन्ति AṣṭāHṛ. i.10.44.

**अनुरससमन्वित** (anurasa-samanvita) *adj.* possessed of secondary taste or flavour अव्यक्तीभावस्तु खलु रसानां प्रकृतौ भवत्यनुरसेऽनुरससमन्विते वा द्रव्ये CaraS. i. 26. 9 (1922 Ed.)

**अनुरसा** (anu-rasā) *adj.* (*f.*) possessing eagerness or inclination राजितेत्यादि श्लोकस्य विपर्ययेण पाठे श्लोकान्तरं जायते। तत्रानुरसा अनुकूलहेवाका (राजितानुरसा राधधरासारसकायसा) comm. *on* HarVi. 43. 88 [*nt.*]

**अनुरसित** (anu-rasita) *adj.* **A** accompanied in sound जीमूतस्तनितविशङ्किभिर्मयूरैरुद्ग्रीवैरनुरसितस्य पुष्करस्य। ... मदयति मार्जना मनांसि Mālavikā. 1.21; **B** resounded, echoed मेघेनानुरसितं शङ्खायितं भेर्याः JñātāDhaṬ. 101B. 2.

**अनुरसित** (anu-rasita) *n.* echo or resounding दधति कुहरभाजामत्र भल्लूकयूनामनुरसितगुरूणि स्त्यानमम्बूकृतानि MahāvīC. 5. 41; UttaRāC. 2. 21 (comm. अनुरसितैः प्रतिध्वनिभिः); MālaMā. 9. 5; SubhāRaK. 47. 15.

**अनुरहत्** (anurahat) *m.* [enumarated in the *anuśatikādigaṇa*, GaṇPā. 8. 10; in the *bāhvādigaṇa*, GaṇPā. 163. 20; CāndraVyā. ii. 4. 20; AltGr. II.2.116] name of a person मानुषीलक्षणो वा ढण् स्यात्। पुष्करसत् अनुरदत् (v. 1. अनुरहत्) अनुशतिकादित्वादनयोः पदद्वयस्यैप् JaineVyā. 165. 4 (*on* iii. 1. 85); अनुरहतोऽपत्यम् GaṇRa. 3. 173(209); 3. 204(247); Prasā. i. 716. 20.

**अनुरहस** (anu-rahasa) *n.* [P.v. 4. 81; CāndraVṛ. *on* iv. 4. 67; KāśiVṛ. *on* v. 4. 81; KātanVṛ. *on* ii. 6. 41; AltGr. II. 1. 113] **A** continued seclusion or solitude अनुरहसमिति। ... अनुगतं रह इति वा प्रादिसमासः Nyās. ii. 172. 11 (*on* v. 4. 81); अनुरहसमित्यादि। अनुगतं रहः। ... इति तत्पुरुषः Prasā. i. 651. 5; comm. *on* SiddhāKau. 211A. 8 (*on* v. 4. 81); **B** conforming secrecy ज्ञातानुरहसो द्विषाम् ...। स्वान्नृपानूचे चमूपतिः DvyāśraKā. 19. 105 (comm. अनुरूपं रहः); *adj.* wherein seclusion or solitude is followed or maintained अनुगतं रहोऽस्मिन्वानुरहसम् JaineVyā. 27.1 (*on* iv. 2. 84); अनुरहसमिति। ...अनुगतं रहोऽस्मिन्निति बहुव्रीहिर्वा Nyās. ii. 172.11( *on* v. 4. 81); अनुरहसमित्यादि। ...अनुगतं रहोऽत्र ... इति बहुव्रीहिर्वा Prasā. i. 651. 15; SiddhāKau. 211A. 8 (*on* v. 4. 81)

**अनुरहसम्** (anurahasam) *adv.* [P.v. 4. 81; JaineVyā. 279. 2 (*on* iv. 2. 84); CāndraVṛ. *on* iv. 4. 67; KāśiVṛ. *on* v. 4. 81; AltGr. II. 1. 113] **A** in secret, secretly or privately राघवं पर्णशालायामिच्छानुरहसं पतिम् Bhaṭṭi. 4. 24 (comm. रहसि); अश्रूयतानुरहसम् ... यस्य रभसाद् व्रजसुन्दरीभिः ... गीतध्वनिः HarVi. 10. 32; शीतांशुना ...। अध्यासितानुरहसं रभसेन काचः(?) कर्णान्तकृष्टकुसुमेषुरविध्यदाशु Rāvaṇā. 17. 61; **B** secludedly, in solitude, apart इदमिदमिति ...पुरःपुरोऽन्या। अनुरहसमनायि नायकेन ŚiśuVa.7.50 (comm. रहोऽनु अनुरहसमेकान्तम्); ŚārṅgaPa. 3805; HarVi. 17. 58; अनुरहसमुपैति मन्त्रं मुहुः ...सः। ... तव कृते RāghPāṇ. (Dha.) 13.41 (comm. जनकोलाहलोज्झिते एकान्तप्रदेशे)

**अनुरहसवृत्त** (anurahasa-vṛtta) *n.* happening or event (taking place) in secret प्रभाते पृच्छन्तीरनुरहसवृत्तं सहचरीर्नवोढा न ... सुखयति AnargharRā. 4. 6; SubhāRaK. 20. 23 (v.l.)

**अनुरहसिवृत्त** (anurahasi-vṛtta) *n.* happening or event (taking place)

in secret प्रभाते पृच्छन्तीरनुरहसिवृत्तं सहचरीर्नवोढा न ... सुखयति SubhāRaK. 20. 23.

**अनुरहित** (anu-rahita) *adj.* devoid of (the preverb) *anu* अनुरहितात् जानातेः सन(?न्न)न्तात् तङाना भवन्ति CāndraVṛ. *on* i. 4. 113.

**अनुराग** (anu-rāga) *m.* **1A** love, passion **Bi** loyalty **ii** devotion **C** consideration, kindness, favour **Di** affection, attachment, fondness **ii** attachment (for worldly things) **E** interest, liking, inclination **2** desire, longing for **3A** redness, ruddiness, colouring **B** reflection **4** connection, association, qualification **5** pleasure, delight **6** musical note, harmony **7Ai** name of a sentiment **ii** a variety of *vipralambha śṛṅgāra* **iii** a variety of *sthāyibhāva* **B** name of an arrow of Mahālakṣmī **C** name of a Prākṛta poet **8** the word *anurāga* **1A** love , passion सौहार्दे चानुरागे च वेत्थ मे भक्तिम् MahāBhā. i.72.11; निशम्य दमयन्त्याः ...परिदेवितम्। निश्चयं परमं तथ्यमनुरागं च नैषधे MahāBhā. iii.54.21; परित्यजेयुः ... भार्याः पतींश्चापि कृतानुरागाः Rāmā. ii. App I. 9 (197); एषा तस्यानुरागेण शोभतेऽप्यनलंकृता Rāmā. v. 426* ; स्वर्गेऽपि दुर्लभं ह्येतदनुरागः परस्परम् (दंपत्योः) DakṣaSm. 4. 5; व्याजं ततः समभिनन्दति युद्धकाले सर्वं हि सैन्यमनुरागमृते कलत्रम् PratiYau. 1. 4; दुःखं त्यक्तुं बद्धमूलोऽनुरागः SvapnVā. 4. 6; BālC. 4. 2(4); प्रियानुरागस्य ... पुंसवनादिकाः क्रियाः ... सदृशीर्व्यधत्त सः RaghuVa. 3.10; न खलु सत्यमेव तापसकन्यायामभिलाषो (v.l. °नुरागो) मे Śāk. 2. 18(12); आननमस्याः ...। पुलकाचितेन कथयति मय्यनुरागं कपोलेन Śāk. 3. 18; SaraKaṇṭhā. 144.7; परिहासानुरागैर्वचोभिरनुवृत्तिः KāmSū. 177.20 (2. 10); 336.17(6. 4); KandaCū.vi.4. 15; KāmSū. 338. 25 (6. 4); KandaCū. vi. 4.28; अनुरागोऽभवद्विप्रं पश्यन्त्या देवयोषितः MārkP. 62. 3; 113. 19; (स्त्रीणां कामितम्) यत्केवलमनुरागादुत्पद्यते DhūrtaViSaṁ. 22. 9; अहो तु खलु निष्कैतवोऽनुरागः PadmPrā. 19. 3; कयापि हृदयवल्लभोऽनुरागादभिलिख्य Ratnā. 2. 6(24); तस्य च ... अनुरागस्य वरप्राप्तिरिव ... यशोवती नाम महादेवी ... अभूत् HarṣaC. 177. 8; 45. 11; 281. 2; नूनमेषा पूर्वजन्मनि मे जाया यज्ञवती ... एवंविधोऽनुरागो मन्मनसि न जायेत DaśKuC. 27.12; 45. 14 हिमऋतावपि ताः ... युवतयः ...। प्रकटयन्त्यनुरागम् ... रमयन्ति विलासिनः ŚiśuVa. 6. 61; 7. 13; अनुरागादुपगूढयोः श्रिया युवयोरिदमेव भिद्यते यदुपेन्द्रस्त्वमतीन्द्र एव सः ŚiśuVa. 16. 70; अनुरागो यथा शिक्षां प्रयच्छति ... तथा तयो रतिः प्राप्ता PadmP. (Ra.) 16. 192; चाटुक्रममनुरागं प्रणयरुषौ विरहजनितशोकार्तिम्। प्रकटयति वाररमणी KuṭṭaMa. 92. 130; तया यद्गुरु संदिष्टम् ...। एतदेव सुपर्याप्तमनुरागस्य लक्षणम् BṛKathāŚloSaṁ. 28. 87; कम्राकारा मुरारेः करकमलतलेनानुरागाद्गृहीता ... कौमोदकी नः Viṣṇu PādāSt. 5; ददेऽनुरागम्। सुरतैकसखी Kapphiṇā. 13. 28; शिथिलय हृदयं न मेऽनुरागम् ...। विसृज विषादमिमं न तन्वि वाक्यम् RāghPāṇ.(Dha.) 15.26; 17.46; लोकशास्त्रनिषिद्धपरिवर्जनं कन्यायामनुराग इत्यादिः ManuBh. ii. 268. 17 (*on* 9. 89); दमयन्ती ... हृदयेऽनुरागमौत्सुक्यं च ... उद्वहन्ती चिन्तयाञ्चकार NalaCam. 4. 7(3); 7.46(27); EI. ix. 53. 40; xxiii. 168. 32; यदुत दुःखहेतुरनुरागः TilaMañ. 111. 23; 277. 9; अनुरागो नवावस्थो नेतुस्तस्यां यथोत्तरम् DaśRū. 3.47; सौभाग्यरूपपरिहासगुणानुरागसङ्कीर्तनेन दयितस्य च लब्धसौख्यम् ... कामगुणेङ्गितं स्यात् RatiRaha. 4.27; ललितवधूहृदयादिवानुरागम् NavaSāC. 3.56; अनुरागविरागौ नारीणां विषये बन्धनं स्वीकारः AbhinBhā. iii. 244.13 ( *on* 23. 64); अनुरागेण ... य[स्य व]क्षोमुखाब्ज(ब्ज)योः। आसीने श्रीसरस्वत्यावनुकूले वि[र]ाजतः EI. xi. 151. 47; iv. 191. 43; ix. 97. 38; कुमारी स्वयमनुरागेणागता पितृजनेन वा वितीर्यमाणा गृह्यते UdaySuKa. 140. 28 ; अनुरागावमानाग्नितप्तामालोक्य मैथिलीम्। ... कश्चिद्भूयादित्यवदञ्जनः RāmāMañ. 398.7; सहजमनुरागमद्भुतमौचित्यं वीक्ष्य भूपतिस्तस्याः KalāVi. 4. 18; 4. 20; क्वानुरागः क्व वेश्यात्वमिति ते विस्मृतं कथम् KathāSaSāg. ii. 4. 93; iii. 4. 6; vii.3. 25; DaśāvaC. 9. 25; गेहे गेहेऽनुरागात् ... युतयुवतिजनो जाततृष्णाभरार्त्तः EI. xiv. 301. 39; अरतिरियमुपैति मां न निद्रा गणयति ... व्रजति तनुस्तनुतां न चानुरागः SubhāRaK. 22. 24; Subhāṣi. 1113; विधो युवानः। त्वयातुलत्वं गमितेऽनुरागे नान्योन्यमानग्रहमुत्सहन्ते ŚrīKaC. 11. 72; GītGo. viii.17.1; दार्ढ्यमनुरागे प्रियं वचः। एतैर्गुणैः समायुक्ता मृगीजात्योपलक्षिता Mānaso. iii. 20.1730; तस्यां पर्वतकस्याभूदनुरागः PariPar. 8. 329; अनुरागे स आरोप्य स्पर्शालिङ्गनचुम्बनैः। ताम् TriṣaŚaPuC. iv.1. 199; किं न रे रोलम्ब त्रपसे त्वम्। तथा येन प्रागनुरागात् क्रीडितं मालत्याः कलिकायाम् ChandaśCū. ii. 121. 3; एषा कदाचित् वैश्यासुता भविष्यति तदनुरागो ममास्याम् Pañcā.49. 13; त्वयाङ्गीकृतोऽयं नवानुरागः GopāKeCan. 131. 17; अनुरागो नले भैम्या दिनान्ते वा ममाधिकः। इति ज्ञातुमिवागच्छत् संध्या सैन्यस्य गच्छतः PāṇḍaC. 6. 290; 6. 975; तस्य प्रणयिनी तत्रानुरागं बिभ्रती शठा। वश्याय पारणे तस्मै ... कार्मणं ददौ MalliC. 8. 255; वर्ण्या कङ्केलिस्तस्या उपमानमनुरागः ...। वनलक्ष्म्या कङ्केलिच्छलेन मूर्तोऽनुराग इव प्रकटीचक्रे KāvyKaVṛ. 121. 22(4.2); सुता कृतवती स्थानेऽनुरागं तव VasaViKā. 14. 20; PārśvC. 5. 168; वाणी लक्ष्मीः किल विलसतो यस्य गेहेऽनुरागात् ... सोऽयं योगव्रतसमुदयं वक्ति हेमाद्रिरस्मिन् CaturCin. ii(2). 707. 3; अप्रेक्षमाणम् ... नृपनन्दनम्। अनुरागेण पश्यन्तीं सोऽपश्यत् कुसुमावलीम् SamarāSaṁ. 2. 46; 2. 77; अहरहरनुरागात् दूतिकां प्रेष्य ...। न मिलति ... वल्लभः NāṭaLaRaK. 25. 42; VetāPañ. (Śi.) 16. 42; अङ्कुरिता ... पल्लविता पुनः। सकोरका ... कुसुमिता। ... फलवती ... अनुरागेण भुज्यते BhāvPra. (Śā.) 78. 18 (4); भवतोऽयं संकरोऽत्रानुरागोऽपि नवावस्थो भवेत्तयोः BhāvPra. (Śā.) 244. 2(8); गणिकाया नानुरागो गुणवत्यपि नायके RasāSu. 29. 15(1. 115); 149. 19(2.1 09); भवतोऽयं विनयपरस्तादृगनुरागः LaṭaMe. 1.17; अनुराग-बलात्कारपूत्कारभीदर्शनहत्यादानादिबिभीषिकाभिरपि नाक्षुभत् PrabaK. 34. 25; माधवस्य मालत्यामनुरागः ... प्रकाशितः SāhiDa. 325.10; तस्य भार्याहम् ... तस्य ममोपरि महान् अनुरागो वर्तते SiṁhāDvā. 108. 12(26); अनुरागमनङ्कुशं विधातुं प्रतिपन्नः ... यो नलस्य दौत्यम्। स जगाद Nalābhyu, 2. 39; 6. 58; निरीक्ष्य कान्तं नृपम् ... भुवोऽनुरागो बहिरुद्यतो यथा Acyutarā. 3. 39; शास्त्रीयः खलु मार्गः पृथगनुरागस्य मार्गोऽन्यः CaitaCa. 61. 19(3); (दूती) नायकमतमनुरागे ... आख्याति KandaCū. v. 4. 54; राजा वदति ... कमलाकरस्यानुरागो महान् VetāPañ. (Jam.) 104.13; RasGaṅ. 497. 3; प्रकटमनुरागं विदधती ... अङ्घ्रियुगलीपुरन्ध्री ते मातः स्वयमभिसरत्येव हृदयम् MūkaPañ. 3. 37; ताम् ... विरहय्य रात्रौ। कृतस्थितेः क्वापि जडाशयेऽङ्ग रथाङ्गहूतेरिव तेऽनुरागः PadyaVe. 405; 406; 586; अनेन ... परां कोटिं नीतः सीतायास्तस्मिन्ननुरागः JānaPa.1.47 (4); जानेऽधरं राघवनर्तकीनां नृपानुरागेक्षणरागरक्तम् AlaṅkāMañ. 30. 3; 30. 6; स्थाने युवयोरनुरागः AmṛUda. 2. 2 (19); पुण्डरीकस्य चित्ते कामबाणैराहतस्य लघुभ्रातुः कण्डरीकस्य भार्यायामनुरागो बभूव KathāK. 10. 12; 54. 20; 60.10; असंभवोऽनुरागः स्याद् यूनोरासक्तचित्तयोः SāhiSā. 5. 79; अनुरागमकृत्रिमं वहन्तीं चिरमुल्लोलय चित्तजन्मलक्ष्मीम्। काञ्चीपुरीमधिवसन् VasaTi. 47.10; Manmatho. 4. 5 (643. 11); अयि जनकतनूजे ... प्रणमति मयि तस्मिन् मर्त्यकीटेऽनुरागः MahāN. 5.43; **1Bi** loyalty अनुरागं प्रजानां च ददौ तस्मै स कौशिकः MahāBhā. ii. 180* (19); PratiYau. 1. 4; सुविशाखेन यथावदर्थधर्मव्यवहार-दर्शनैरनुरागमभिवर्धयता EI. viii. 45. 19; viii. 198. 39; ix. 135. 28; कृत्स्नं चाष्टविधं कर्म पञ्चवर्गं च ... प्रकृतयः ... मण्डलस्य ...। अनुरागापरागौ च ManuSm. 7. 154; ManuBh. ii.46.2 ( *on* 7.154); ManvaVi. 828. 26 ( *on* 7.154); क्षीणलुब्धा हि प्रकृतयो भर्तरि स्निग्धा भर्तृहिते तिष्ठन्ति। उपजापं वा विसंवादयन्ति अनुरागे सार्वगुण्यमिति ArthŚā. ii. 262.9 (7.5); iii. 15. 12 (8. 2); तुल्ये पुरुषभोगे विक्रमः क्लेशसहत्वमनुरागः सर्वबललाभो वा मित्रकुलाद्विशेषः ArthŚā. ii. 296.1 (7. 9); अनुरागश्च भर्तरि ... गुणः परिचरे जने CaraS. i. 9. 8; i. 15.7; (प्रकृतयः) चन्द्रगुप्तेऽनुरक्ताः सुतरामेव तत्रानुरागं दर्शयिष्यन्ति MudrāRā. 4. 12(26); धृतिं चैवानुरागं च आपदि लक्षयेत् NītiSā. 4.35; 5. 24; सत्कारादनुरागाच्च ... नित्यम् ... मौलं भृतबलाद् गुरु NītiSā. 19.4; EI. viii. 192. 36; i.87. 28; iv. 78. 27; xxii. 117. 24; स्वराष्ट्रिकश्चानुरागादविचलितो भवति ManuBh. ii.10. 26 (*on* 7.33); ii. 61. 4 ( *on* 7. 203); तव ... स्वामिभक्तिमुचितामनुरागः सूचयति RāghPāṇ. (Dha.) 10. 24; प्रह्लादशम्बरमयैरनुरागेण चैव हि। ... अभिषिक्तोऽसुरैः ... बलिः VāmaP. 23. 8; उष्णप्रकर्षवान् प्रदेशः परमरहस्यमनुरागे प्रथमप्रकृतीनाम् NītiVā. 25.101; भृत्या इवानुरागेण तेऽपि प्राणैः प्रियैषिणः TriṣaŚaPuC. i.5.227; ChandaśCū. iii. 66. 4; अनुरागाल्लुठद्बाष्पमनुयान्तं पुरीजनम्। अभाषिष्टेति भूपालः MalliC. 1. 348; भोजः ... जनेनानुरागात् सेव्यते PurāPraSaṁ. 13. 32; प्रजानुरागाद् दृढतामुपैति प्रजाविरागात्परहस्तगामि। राज्यं भवेत् VīraBhā. 5. 126; **1Bii** devotion यथर्हहिस्तोच्छ्रयार्जितोर्जितधर्मानुरागेन (Read °ण ) EI. viii. 44.13; नृपानुरागात् ये सदैवानुरागेण भवत्पादानुगामिनः नृपानुरागात् पूर्वेयमकारि रविशान्तिना। उत्कीर्णा EI. xiv. 118. 22; अधुनैव कलिबलं दृश्यते आदरो न धर्मस्य नानुरागोऽस्ति देहिनः ĀdiP. 3. 6; यंसन्स(त्संस)क्तं तव चरयोर्देव सेवानुरागात्तन्मे चेतः ... त्र्यक्ष तद्रक्ष EI. xv. 182. 45; निजेनेवानुरागेणाङ्गरागेण गरीयसा। अङ्गं विलेपयामास वासवस्त्रिजगद्गुरोः TriṣaŚaPuC. i. 2. 587; जिनवचने ... धर्मानुरागेण रक्तं मनो येषां ते AupaSūṬ. 115.1; एषा ब्रह्ममयी साक्षात् केलिरद्वैतरूपिणी। ध्यायतामनुरागेण मत्सांनिध्यविधायिनी GopāKeCan. 146. 20; केवलमनुरागमेव दूतं कृत्वा ... विलोकयन्तु भगवन्तं भवन्तः CaitaCa. 189. 8(8); मम तु पुनरात्मा सुरधुनि स्वभावादेव त्वय्यमितमनुरागं विधृतवान् GaṅgāL .41; भक्तिर्द्विविधा मुख्या गौणी चेति। तत्रेश्वरविषयकोऽनुरागाख्यश्चित्त-वृत्तिविशेषो मुख्यभक्तिः LalitāSaBh. 58. 29 (*on* 93); अनुरागस्यैव भक्तिपदवाच्यत्वात् SetuBa. 68. 21; **1C** consideration, kindness, favour प्रजा

दृष्ट्वा रक्ताः ... राजेति नामास्य अनुरागादजायत MahāBhā. xii.29. 131;
VisṇuP. i. 13. 48; VāyuP. ii. 1. 132; BrahmāṇḍP. i. 36. 156; SkandP. vii(1).
336. 100; BrahmP. 4. 57; प्रजास्तेनानुरञ्जिताः। अनुरागात् ... राजा HariVaṁ.
5.29; अन्तरिता अनुरागा भावा मम कर्कशस्य बाह्येन KundaMā. 5.6; 6.22;
प्रतापानुरागावनतसमस्तसामन्तचक्रः ... राजा शूद्रकः Kād. 5. 6; EI. viii. 239.12;
ix.204.52; iv. 204.52; अपि चास्य ... अनुरागस्य लोकहृदयानि ... न
पर्याप्तो विषयः HarṣaC. 121.10; (राजा श्रेणिकः) त्यागस्य नार्थिनो यस्य
पर्याप्तिं समुपागताः। ... चित्तानि नानुरागस्य जनस्याखिलभूतले PadmP. (Ra.)
2.67; उद्योगमेधाधृतिसत्त्वसत्यत्यागानुरागस्थितिगौरवाणि ... प्रभुशक्तिमाहुः
NītiSā. 16. 31; EI. ix. 53. 40; xxiii. 168. 32; गृहीतश्चानुरागेण जनः काश्मीरको
मया NīlaP. 967; अनुरागः प्रतिपत्तिः ... सप्तदशकलाः प्रभावस्य KalāVi. 10.
10; यथा व्रजाधिराजोऽहं निवसाम्यत्र येन च। तद्रहस्यं मया वाच्यमनुरागो
यतस्त्वयि ĀdiP. 14. 118; अस्यानुरागाद्वीरस्य राजराजेति नाम च। प्रजज्ञेऽस्य
सुवीरस्य समुद्रेऽपि द्विजोत्तमाः PadmP. ii. 27. 59; यं यं नृपोऽनुरागेण
संमानयति संसदि। तस्य तस्योत्सारणाय यतन्ते राजवल्लभाः BhojPra. 26.12;
राजा कण्टकोद्धारेण प्रतापानुरागाभ्यां संयुक्तः स्यात् ManvaMu. 419. 21 (*on*
9. 303); शत्रुप्रजानामपि चानुरागात्तदे(द्दे)शलाभोऽपि नृपस्य साध्यः। यतोऽनुरागः
स्वपरप्रजानां वशक्रियायां परमं निदानम् VīraBhā. 5. 127; **1Di** affection,
attachment , fondness स्थिरानुरागो धर्मात्मा मातृवर्ती (रामः) Rāmā. ii. 110.
4; भ्राता च तस्य ...। अनुरागेण रूपेण गुणैश्चैव तथाविधः Rāmā. v.
33. 21; vi. 100. 3; वैवाहिकैः कौतुकसंविधानैः ... व्यग्रपुरंध्रिवर्गम्। आसीत्पुरं
सानुमतोऽनुरागात् KumāSaṁ. 7. 2; अनुरागश्च दाक्ष्यं च सत्यता च सुहृद्गुणाः
NītiSā. 4. 72; सौजन्यस्य परा कोटिः ...। गुणपक्षानुरागः ... सुजनेष्वनुरागो
नः MahāP. 1. 92; रञ्जयत्यनुरागं प्रजासु जनयति ManuBh. ii. 6. 16 (*on*
7. 19); ii. 36. 14 (*on* 7. 112); (विहितगर्वस्य) अन्योऽपि तस्य तनुते न जनोऽनुरागम्
SubhāRaSaṁ. 3. 7; 8. 4; नानुरागायोपरमते मनः NalaCam. 5. 0(17); न
महतामप्युपकारेण चित्तस्य तथानुरागो यथा विरागो भवत्यल्पेनाप्यपकारेण NītiVā.
10. 112; (भीमः) संसिन्वानेङ्कैन तस्मिन् प्रसुन्वन्हर्षं कान्वा नानुरागो निराक्ष्णोत्
DvyāśraKā. 8. 12; पुरजनोऽपि च। अत्यन्तमनुरागेण प्रव्रज्यां त्याजयेदिति
PariPar. 13. 79; शङ्खक्षोदरुचा तव कीर्त्या लोकानां च त्वय्यनुरागैः।...
जाता भूरुपचित्रा ChandaśCū. iii. 66. 4; इच्छानुरागो द्वेषः स्यादसहिष्णुत्वलक्षणः
TārkiRa. 145. 10; चिरसंघटितोऽपि नः क्षणादनुरागो बलभद्रकृष्णयोः Yādavā.
9. 85; उक्त्वैवमनुरागेण स्तन्येनैवाभिषिच्य तम् BṛBrahmaS. iii. 6.52; भक्तिश्चात्र
स्थायिभावः। न चासौ शान्तरसेऽन्तर्भावमर्हति अनुरागस्य वैराग्यविरुद्धत्वात्
RasGaṅ. 56. 15; **1D ii** attachment (for worldly things) अनुरागविरागौ हि
गृहारम्भतत्त्यागयोर्हेतू GoviBh. 285 . 11 ( *on* iii. 4. 49); **1E** interest, liking,
inclination पूजादिष्वनुरागः BhaktiSū. (Nā.) 1. 16; अत्यक्षेषु सर्वोऽपि शब्दस्तुल्य-
बलाबलः। एकत्रैवानुरागोऽयं तद्वः केनेह हेतुना TattvSaṁ. 2444; 2807; उत्कण्ठ्य
मौर्वीनिनदं नृपाणां तनूलता कण्टकितानुरागात् RāgaPāṇ. (Dha. ) 16. 20;
अस्मदीयमिदं दर्शनमित्यनुरागेण प्रमाणमिति Kāśi. i. 108. 18 (*on* 2. 93);
दुःखेऽप्यनुरागो न कस्माद्भवति Bhām. 53. 23 (*on* i. 1.1); उभयथाप्यनुपपत्तौ
कोऽनुरागोऽसत्त्वे ĀtmaTaVi. 491. 18; यस्मिन्सत्यनुरागस्तत्सुखम् Lakṣaṇā.
11.8; सौरभादनुरागेण मुदा बद्धोऽलिरभ्रमत् DvyāśraKā. 3. 41; [वि]भुनाति-
गुणानुरा[गा]त् सल्लक्षणक्षितिभुजा च परीक्ष्य EI. i. 201.21; नेत्रे मैत्रगुणानुरागसुभगे...
बिभ्राणा भवतां सुखानि तनुतां तारा...। जयत्यसंजातविचित्रवासना-
[गुणा]नुरागोज्च(ज्व)लधीः ...। तथागतः EI. xviii. 131. 4; सर्वस्यापि वर्णस्य
... जीवदयायामनुरागः SiṁhāDvā. 78. 0(11); महेश्वरस्यापि कुतोऽन्यथास्य
कौपीनवासोवसनेऽनुरागः HammīMaKā. 2. 26; अस्ति ... भ्रमरालकानुराग-
सुमरापाङ्गभृङ्गास्वादितवदनारविन्दसौन्दर्यमकरन्दस्य चिरंतननर्तकशिखामणेरानर्तकभूमिः
... राजधानी YātrāPra. 1.12(4); व्यङ्ग्यपथं व्यतीत्य शब्दार्थचित्रेषु ... अनुरागः
... पामराणाम् ŚivLī. 1.37; **2** desire, longing for सोऽयं दुर्लभेष्वनुरागः
पुंसाम् NalaCam. 1. 62; अनुरागेण लोभेनान्येन ... हेतुना ... भवति भ्रमणम्
Kāvyānu. (He.) 35. 27; जिनं प्रति ... यो दर्शनानुरागो दर्शनेच्छा AupaSūṬ.
107. 2; **3A** redness, ruddiness, colouring अजायत च नवपल्लव इव
बालवनलतायाः कुतोऽप्यनुरागः HarṣaC. 45.11; बहलताम्बूलसिन्दूरच्छुरितया विलभमान
इव द्वीपान्तराण्योष्ठमुद्रयानुरागस्य ...निर्जगाम नरपतिः HarṣaC. 281. 2;
उदयसमयसमुपजनितजनतानुरागपरिपिहितभुवनसमर्थितप्रथितबालादित्यद्वितीयनामा
परममाहेश्वरः EI. viii. 192.36; i.87.28; iv. 78. 27; xxii. 117. 24; गतवत्यराजत
... दिनकरेऽवनतिम्। बहलानुरागकुरुविन्ददलप्रतिबद्धमध्यमिव दिग्वलयम् ŚiśuVa.
9.8; आः कीदृगत्रिमुनिलोचनदूषिकायां पीयूषदीधितिरिति प्रथितोऽनुरागः AnargharRā.
2. 83; अनुरागो नयनयुगे सन्नपि केनोपलक्ष्येत Kāvyālaṅ. (Ru.) 7. 107; शनैः
समारुह्य नभोऽनुरागं जहौ शशी लोकहितोद्यतोऽपि RāghPāṇ. (Dha.) 17. 46;
जन्मनः पट्टं योधादुदयगिरीन्द्रः ... लोकानुरागाय EI. ix.53. 40; xxiii. 168.
32; रवौ प्रयाते ककुभां बभूव घनोऽनुरागः क्षणमात्रलक्ष्यः DaśāvaC. 9. 25;
रजनिजनितगुरुजागरकषायितम् ...। वहति नयनमनुरागमिव GītaGo. viii. 17.
1; कुचकलशतटाद् विदर्भजायाः परिगलितो नवकुङ्कुमाङ्गरागः। सरसि तत इतो
जले विसर्पन् बहिरनुराग इवोद्गतो बभासे Nalābhyu. 6. 58; स्वकरजपद्मा-
नुरागतात्पर्य्या[त्] उदयादित्यसदृ‌क्षा[क्षो] विजयादित्याभिदानप[धानप्र]भुरभवत्
EI. xix. 168. 31; विलोभयन् करस्पर्शैः पद्मिनीं मुदिताननाम्। परिपूर्णा-
(परिपूर्णोऽ)नुरागेण प्रातर्जयति भास्करः RasGaṅ. 497.3; न वेद सा रूपविमूढबुद्धिर्मुखे
शुकस्येव तवानुरागम् PadyaVe. 406; AlaṅkāMañ. 30. 6; मानिनीनाम्।
चरणाहतिमन्तरापि पुष्पैरनुरागं स्वमभिव्यनक्त्यशोकः Manmatho. 643.11;
**3B** reflection अर्थान्तरमर्थान्तरे आत्मानमारोपयति सादृश्यानुरागाभ्यां यथा
शुक्तिकायां रजतम् लाक्षादि वा स्फटिकादौ TātpaṬ. (U.) 171. 19 (*on* 4. 209);
अध्यासः ... क्वचिदनुरागाद्भवति लाक्षाया इव स्फटिकः NyāyMañ. ii. 102.
1; NyāyRa. 196. 17 ( *on* 4. 209); तेन तेनार्थिना तु रज्यमानं तत्प्रकाशतया
तदीयत्वेन व्यवतिष्ठते अनुरागस्य चागन्तुकतया इन्द्रियाद्यनुविधानम् ... चोपपद्यते
ĀtmaSi. 49. 10; **4** connection, association, qualification दृश्यतेऽजनुरागेण
भेदो यो नाम तत्र नः। विवेकोऽस्त्येव ŚlokaVār. 5(11). 30 (517. 3); TātpaṬ.
(U.) 449. 21 (*on* 5(11). 29); NyāyRa. 517. 15 (*on* 5(11). 30); अनुरागव्यवच्छेदौ
बुद्धीनां न च सिध्यतः ŚlokaVār. 7. 19(851. 2); 7. 30(854. 3); न च
स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुम् BrahmSūBh.
(Śaṅ.) 30.2( *on* i.1.4); **5** pleasure, delight यद्वृत्तानुरागादभूत् को नाप्तप्रमदः
EI. viii.212.31; **6** musical note, harmony, cf. **अनुरागसंवलिता**; **7Ai** name
of a sentiment (एकरसा) एकस्मिन्नेव भर्तरि रसः निरतिशयप्रीतिः अनुरागसंज्ञा
यस्याः सा LalitāTriBh. 269. 12(*on* 7); कलापोऽत्र प्रवासः प्रागनुरागाह्वयो रसः
AgniP. 336. 35; **7Aii** a variety of *vipralambha śṛṅgāra* विप्रलम्भनामा शृङ्गारः
...। प्रथमानुरागमानप्रवासकरुणात्मकत्वेन Kāvyālaṅ. (Ru.) 14. 1; SaraKaṇṭhā.
559. 7; SṛṅgāPra. 254. 2; **7Aiii** a variety of *sthāyibhāva* सदानुभूतमपि
यः कुर्यान्नवनवं प्रियम्। रागो भवन्नवनवः सोऽनुराग इतीर्यते UjjvaNīMa.
454. 9, 416. 4; अनुरागः स्वसंवेद्यदशां प्राप्य प्रकाशितः। यावदाश्रयवृत्तिश्चेद्भाव
इत्यभिधीयते UjjvaNīMa. 459. 4; **7B** name of an arrow of Mahālakṣmī
दलाग्रेष्वर्चयेत् बाणान् महालक्ष्म्याः ... अनुरागं च संवादं विजयं वल्लभं मदम्। हर्षं
बलं च तेजश्च ŚāraTi. 8. 153; TantrSā. (K.) 120. 30; **7C** name of a Prākṛta
poet, pw.; *nt*, **8** the word *anurāga* सहार्थादिविशिष्टा रतिर्दीप्तिर्वानुरागशब्देनोच्यते
SaraKaṇṭhā. 645. 15; 653.17[Kośas give *anurāga* as one of the meanings
of the following words : *abhijñāna*, NānārthMa. 1064; *kaṣāya*,
NānārthāSaṁ. ii.76. 347; *prasāda*, AmaK. 2516; *rati*, KośaKaTa. 2.5280;
*rāga*, Vaija. 218. 51; AnekāSaṁ. 2.45; NānārthāSaṁ. i.29.103; MediK.
23.70; AnekāTi. 2. 250; NānārthMa. 285; ŚabdaRa. (Vā.) 3981;
KośaKaTa. 2. 4039; ŚabdaRaSaK.61.16; *ruci*, NānārthSaṁ. 74. 8; while
ŚabdaRa (Su.) 67. 5 gives *rati* as the meaning of *anurāga;* and they give
*anurāga* as a synonym of the following words : *anurati*, Vaija. 98.181;
AbhidhāCin. 296; KośaKaTa. 1. 1939; *rati*, AbhidhāCin. 296; KośaKaTa.
1. 1939; *rāga*, Vaija. 98. 181; AbhidhāCin. 296; KośaKaTa. 1. 1939]

**अनुरागकथा** (anurāga-kathā) *f.* discourse or speech concerning love
असंस्तुतां तु गुणकथनैरनुरागकथाभिश्चावर्जयेत् KāmSū. 280. 18(5. 4); JayaMa.
280. 21 (*on* 5. 4)

**अनुरागकन्दल** (anurāga-kandala) *adj.* soft due to love महानुभाव
यथेयमनुरागकन्दलैरालापैस्त्वयोक्ता तथा सोऽपि ... अभिधातव्यः NalaCam.
5. 2(11); *m.* root or sprig of love कथनीयकीर्तिः क्वास्ते कथमास्ते ... इत्येवमुक्तः
स पुनः पल्लवयन्ननुरागकन्दलं नलमलपत् NalaCam. 6. 21(11)

**अनुरागकर** (anurāga-kara) *adj.* which causes pleasure अनुरागकरं
लोके कर्म कार्यं महीक्षिता MatsyaP. 215. 98; AgniP. 220. 24.

**अनुरागकरण** (anurāga-karaṇa) *n.* act of loving शक्तानुरागकरणे तथा
रक्तानुरञ्जने। प्रतिरोद्धा न मे कश्चिदहमेव सुखास्पदम् SṛṅgāMañ. (A.) 14. 9.

**अनुरागकला** (anurāga-kalā) *adj.* (*f.*) possessed of affection, affec-
tionate ये ब्राह्मणान् ...। वाण्यनुरागकलयात्मजवद्गृणन्तः संबोधयन्ति BhāgP.
iii. 16. 1(Vīrarāghava अनुरागेण कलया युक्तया वाचा गिरा)

**अनुरागकषायित** (anurāga-kaṣāyita) *adj.* coloured by love, i.e. full of
love स्वगोचरान्न चात्येति यत्तत्स्तिमितमुच्यते। मसृणं तदिति ख्यातमनुरागकषायितम्
BhāvPra. (Śā.) 120. 10 (5)

**अनुरागकालत्व** (anurāgakāla-tva) *n* . the state of occurring at the
time of love or passion (ईषन्मन्दसीत्कृतकूजिता चुम्बनार्थमेवाधिरोढुमिच्छेत्) ईषदिति।

गृही संसारसंवृत्तः। तपः करोति PañcaRā. (Nā.) i. 2. 63; **1C** having love
or passion, loving or passionate या तु पश्यत्यपश्यन्तम् ...। वीक्षितं चेक्षते
नित्यं विज्ञेया सानुरागिणी VitVr. 55; आचरन्नथ स योषितो हठं सा च
वामचरितानुरागिणः। अप्यनीप्सितविधानचेष्टितौ तेनतुः सपदि संमदं मिथः JānaHa.
8. 1; अनुरागी युवतिजनः खलु नाप्यतेऽनुरूपः Kirātā. 10. 50; ऋजुत-
नुरनुरागिणी हरिणी RatiRaha. 3. 22; अनुरागमैरिति मामनुरागिणीं
व्यवसितादपनेतुमिवेच्छति TāpaVa. 4. 8; स्त्रियोऽपि ... पुरुषेष्वनुरक्तास्तास्ते च
तास्वनुरागिणः MahāP. 3. 33; किमिव सुकरं नारूढानां दशामनुरागिणीम् Kapphiṇā.
14. 30; पुष्यमित्रदुहिता त्वय्यत्यन्तमनुरागिणी ManuBh. ii. 165. 18 (*on* 8. 193);
ii. 313. 12 (*on* 9. 260); अनुरागिणीं कांचिच्चक्रवाकीम् ... चक्रवाकयुवा दृष्टिपथमवातरत्
NalaCam. 5. 49 (13); 5. 54 (57); 6. 60 (1); कलाभिरनुरागिणी (संग्राह्या) JayaMa.
216. 9 (*on* 3. 3); अनुरागिणश्च प्रच्छन्नस्वाभिप्रायख्यापनचाटुविरचनात्मकविभावोन्मीलनं
व्यङ्ग्यम् Loc. 50. 8 (*on* 1. 16); Kāvyānu. (He.) 55. 20; यं शस्पृशा
हृदयहारिफलान्वितेन रामेरितेन सहसा सह सायकेन। स्नेहार्दितेन निरगादनुरागिणीव
प्राणावलिर्हृदयतः पिशिताशनानाम् RāmāCam. 1. 52; कुमारी ... अनुरागिणी
त्वयि प्रसूनशरसायकशिखाभिः खण्ड्यमानमर्मग्रन्थिरत्यर्थमन्तर्व्यथामनुभवन्ती क्वापि
कालं क्षपयति UdaySuKa. 71. 12; यदि सद्भाविनी वेश्या ...। अचौरो
यदि कायस्थस्तद्वेश्याप्यनुरागिनी(?णी) (स्यात्) NarmaMā. 3. 58; (विदूषकः) ददर्श
राजकन्यां च तामाकृत्यानुरागिणीम् KathāSaSāg. iii. 4. 328; vi. 2. 68; vii. 8.
141; धनेन पूज्यते पुत्रि सर्वो वेश्या विशेषतः। तच्च न्नास्त्यनुरागिण्या रागं
वेश्या त्यजेदतः KathāSaSāg. x. 1. 61; xii. 2. 90; प्रीतिः सुखस्पर्शमयी बभूव
वैराग्यभाजामनुरागिणां च DaśāvaC. 7. 20; तयोश्चाविनाभावनियमोऽ-
नुरागिणामध्यात्मसिद्ध एव VyaktiVi. 117. 10; पूर्णमेधेन ... याचितेयमुद्बोढुमनुरागिणा
TriṣaŚaPuC. ii. 4. 323; अन्योन्यमनुरागिणौ। वानरो वानरी चास्ताम् PariPar.
2. 407; भर्तारं मारयामास येयं मय्यनुरागिणी PariPar 2. 625; 6. 104; 12. 301;
भविता तव पालकं प्रति द्युवधूः केन पथानुरागिणी PṛthvīVi. 12. 51; जघान
स तु गोपस्त्रीः कोपात्तत्रानुरागिणीः PāṇḍaC. 2. 226; 10. 152; 16. 146;
अमात्यशंभुः ... पुरोऽङ्गनानामनुरागिणीनाम्। नेत्रत्रिभागेन विलोकितः KīrtiKau.
6. 32; VasaViKā. 14. 15; तत्कारिकोपनीतेऽथ कुङ्कुमस्य विलेपने।
युवाभ्यामनुरागिभ्यामङ्गरागः कृतो मिथः SamarāSam. 5. 492; नव भेदा विधीयन्ते
ह्यनुकार्यानुरागिणः BhāvPra. (Śā.) 264. 7 (9); स्थापितानङ्गसेनापि भार्यात्वेनानुरागिणी।
यतो जगति रामाणां मोहः स्याद्दुःसहो नृणाम् UttaKuC. 421; सामान्या परकीया
वा नायिकात्रानुरागिणी RasāSu. 290. 16 (3. 267); जङ्घे तदीये संतापं
यज्जनस्यानुरागिणः। जनयांचक्रतुस्तीव्रं तत्र हेतुर्विलोमता ŚārṅgaPa. 3358 =
Subhāṣi. 1568; शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी SāhiDa. 139. 7;
मार्तण्डः। आश्लिष्यत्यनुरागिणीं कमलिनीं गाढानुरागः करैः ŚṛṅgāBhū. 12;
तस्यालोक्य कलां बाला रूपं चाप्यनुरागिणी। मनोजं पूजयित्वा च जगाम निजमालयम्
PālaGoKa. 150; अन्येषामनुरागिणां क्वचिदपि स्निग्धं मनो निर्वृतावित्थं यान्तु
तपोवनानि महतां सूक्तानि मन्येऽधुना Subhāṣi. 164; VidaMā. 3. 11; Acyutarā.
11. 17; अवसितकार्यश्चेत् स्यादनुरागी वित्ततस्तथाभ्यधिकः Kanda Cū. vi. 4. 3;
सानुरागिणी बभूव VetāPañ. (Jam.) 80. 4; दर्शनाच्चित्रसेनस्य संजाता सानुरागिणी
CitraPaC. 159; मनोऽनुरागि ते तन्वि मन्ये वल्लभमीक्षते RasGan. 407. 10;
अभूत्तयोरेव मिथोऽनुरागिणोरनङ्गमूलः कलहः स केवलम् ŚivLī. 5. 10; नन्वेव कारो
यदि न दीयेत तर्ह्यन्यत्रानुरागवत्यामपि पत्यावनुरागिण्यां परकीयायामतिव्याप्तिः स्यात्
ŚṛṅgāMañ. (A.) 3. 5; 6. 7; 9. 27; मर्त्ये क्वाप्यनुरागिणीति भवतीं नायं नृपो
याचितः JānaPa. 4. 48; अनुरागिणीमनुगृहाणतमामबलामिमाम् Rāgh. 8. 20; ĀnandRa.
5. 0 (3); तथा वाच्यं यथा मयि अनुरागिणी स्यात् Nāṭa. 13. 6; ĀankāMañ.
79. 5; **1D** kind, considerate, favourable सदैव मत्प्रपन्नानां जनां येऽनुरागिणः।
संस्थिताश्च जगत्यस्मिन् धर्मज्ञानादयस्तु ते JayāS. 12. 34; त्यागिनमनुरागिणं
विशेषज्ञम्। यदि नाश्रयति श्रीः श्रीरेव हि वञ्चिता तत्र ŚārṅgaPa. 470; Subhāṣi.
233; क्षणमप्यनुगृह्णाति यं दृष्टिस्तेऽनुरागिणी। ईर्ष्ययेव त्यजत्याशु तं नरेन्द्र
दरिद्रता BhojPra. 54. 8; Subhāṣi. 2449; **1E** having interest or liking for
अहं हि बालिका नित्यं क्रीडनेष्वनुरागिणी BrahmāṇḍP. iii. 26. 79; RāmāMañ.
117. 5; उदयसिंहो नाम राजा। स च सर्वगुणानामनुरागी PuruṣPa. 128.
5; स्त्रीयोगेष्वनुरागी कर्मैतत् सस्पृहस्तनुते Kanda Cū. ii. 9. 29; यस्यां जनोऽनुरागी
सा गीरेतैः किमुद्यार्या PadyaVe. 678; **2** having redness, colourful or red
सामन्ताः ....। सहस्रकिरणं प्राप्ता नितान्तमनुरागिणः। ऋतवः क्रमनिर्मुक्ताः
सम्मेदमिव पर्वतम् PadmP. (Ra.) 10. 105; 80. 5; स्वच्छं सुवृत्तमनुरागि
हरिद्वयस्यालीलागृहीतमधुनापि यशःप्रकाशम्। श्वासानिला मलिनयन्ति न बाहुदण्डदर्पश्रियो
ललितदि प्रमदर्पणं वः HarVi. 13. 37; SubhāRaK. 49. 6; PṛthvīVi. 12. 51; त्वदीयं
यशः श्रुत्वा ... सद्गतिरुद्धतान्यपुरुषद्वेषा किमाचक्ष्यते देव। त्वय्यनुरागिणीच्छति
दिशामीशान्नकीशानिव VasaViKā. 14. 15; दिनमणिरनुरागी प्रोज्झ्य संध्यां हि
रक्तां तमसि ... मज्ञयति VidaMā. 3. 11; सरभसमनुरागिणीम् ... कमलिनीं
गाढानुरागतयाश्लिष्य ... अतनुतुङ्गतरपूर्वशिखरिशिखरमध्यमध्यारूढे भगवति वासरपरिवृढे
ĀnandaRa. 5. 0 (3) [Kośas give *anurāgin* as one of the meanings of *rakta*,
ViśvaPra. 59. 37; DharK. 1034; and of *raktaka*, ViśvaPra. 12. 122; MediK.
12. 44; ŚabdaRaSaK. 25. 9] [causing love, MW, causing or inspiring love,
APTE]

**अनुरागेङ्गित** (anurāgeṅgita) *n.* gesture (expressive) of love or passion
उक्तं गुणपताकायामनुरागेङ्गितं च यत्। अजातजातभोगानां तत्साधारणमुच्यते
RatiRa. 4. 25; अथ मुग्धाकन्ययोरनुरागेङ्गितानि SāhiDa. 139. 1.

**अनुरागैकरस** (anurāgaikarasa) *adj.* having the only feeling of love
कथमेवं प्रिये अनुरागैकरसं मामुत्सृज्य निरपेक्षैव गतासि Śāk. 3. 29 (4)

**अनुरागोक्ति** (anurāgokti) *f.* affectionate speech प्रजानामनुरागोक्त्या ...
श्रीबाहुबलिनो नयम्। ... अनुस्मरन् वाचिकं स प्राप सक्षशिलापुरीम् TriṣaŚaPuC.
i. 5. 52.

**अनुरागोत्कट** (anurāgotkaṭa) *adj.* abounding in loyalty अनुरागोत्कटैर्भृत्यैः
...। ययुः खेचरसामन्ताः PadmP. (Ra.) 55. 78.

**अनुरागोत्पत्तिस्थल** (anurāgotpatti-sthala) *n.* case of origin of love
or passion उत्तरक्षणे अनुरागोत्पत्तिस्थलमिति नायिकात्वमस्याः ŚṛṅgāMañ. (A.)
3. 25.

**अनुरागोत्पत्त्यर्थम्** (anurāgotpattyartham) *adv.* for the sake of origina-
tion of love or passion अनुरागोत्पत्त्यर्थं कन्यायै भूषणादि स्वेच्छया विवाहात्प्रागेव
वरो ददाति ManvaVi. 315. 9 (*on* 3. 54)

**अनुरागोत्पादन** (anurāgotpādana) *n.* **A** origination of love or passion
अतिमात्रदुष्करमवधारयन्त्या तया रूपदर्शनेन विना दुहितुरनुरागोत्पादनम् ...
TilaMañ. 170. 2; **B** origination of devotion श्रीपुरुषोत्तमस्य ... गुणाश्च
तस्मिन्ननुरागोत्पादनाय संक्षेपतो निरूपिताः VedāntKau. 279. 5 (*on* iii. 2. 11)

**अनुरागोत्सव** (anurāgotsava) *m.* celebration of love अनन्तेन गोपी
हावमनुरागोत्सवमकार्यत Prasā. ii. 443. 13.

**अनुरागोदयानन्तरम्** (anurāgodayānantaram) *adv.* after the appear-
ance or rise of love तत्रानुरागोदयानन्तरं संयोगेऽत्यन्तमभिवृद्धः ... उत्तमानुरागः
ŚṛṅgāMañ. (A.) 53. 1.

**अनुरागोद्घाटन** (anurāgodghāṭana) *n.* revealing of love नायकयोः
साक्षादन्योन्यदर्शनादिना सविशेषानुगो(?नुरागो)द्घाटनात् पुष्पम् Avalo. 15. 8
(*on* 1. 34)

**अनुरागोद्घाटनान्वय** (anurāgodghāṭanānvaya) *m.* following through
the revealing of love चित्रगतयोर्नायकयोर्दर्शनात्कुपिताया वासवदत्ताया अनुनयनं
नायकयोरनुरागोद्घाटनान्वयेन पर्युपासनम् Avalo. 14. 30 (*on* 1. 34)

**अनुरागोद्घाटनोत्था** (anurāgodghāṭanotthā) *adj.* (*f.*) arising from the
revealing of love अनुरागोद्घाटनोत्था प्रीतिर्नर्मद्युतिः PratāYaBhū. 110. 8.

**अनुरागोन्मुखता** (anurāgonmukha-tā) *f.* the state of having expectancy
for, i.e. being interested in love (पृष्टा च किंचित्सस्मितमव्यक्ताक्षरमनवसितार्थं
च मन्दं मन्दमधोमुखी कथयति) सस्मितमित्यादिनानुरागोन्मुखता व्रीडा व्याख्यायते
JayaMa. 215. 8 (*on* 3. 3)

**अनुरागोपगता** (anurāgopagatā) *adj.* (*f.*) approached with love तथानु-
रागोपगता दैत्यराजसुता त्वया। ... त्यक्ता KathāSaSāg. xvii. 6. 115.

**अनुरागोपलम्भ** (anurāgopalambha) *m.* experience or obtainment of
love, i.e. sexual orgasm तस्मात्पुरुषस्येव योषितोऽप्यनुरागोपलम्भाद्विसृष्टिसुखाधिगमः
प्रतीयते JayaMa. 80. 1 (*on* 2. 1)

**अनुरागौघ** (anurāgaugha) *m.* stream of devotion जनास्ते साधने रताः। ...
अनुरागौघं प्राप्य ... व्रजेऽभवन् UjjvaNīMa. 67. 3.

**अनुराज्** (anu-rāj-) IP. **i** to be brilliant in, i.e. to have mastery over
गायत्रं च त्रैष्टुभं चानु राजति ṚV. ii. 43. 1 (*but* Sāy. शृण्वतोऽनुरक्तान् करोति,
pw. to imitate, copy); **ii** to shine in accordance with, to imitate or copy
तृतीयं धाम महिषः सिषासन्त्सोमो विराजमनु राजति ष्टुप् ṚV. ix. 96. 18
(*but* Sāy. प्रकाशयति); SV. II. v(1). 1. 2; JaimiBr. 3. 205.

**अनुरात्र** (anu-rātra) *adj.* following the night, APTE.

**अनुरात्रम्** (anurātram) *adv.* **i** in the night तस्माद्ु स्त्र्यनुरात्रं पत्याविच्छते
AitBr. 12. 11 (344); **ii** at each and every night, night after night यत्रानुरात्रम्
... सुचारुचन्द्रोपलचन्द्रशालाः। प्रतिस्फलच्चन्द्रकलङ्कभीतिभृतो रुदन्तीव गलज्जलौघैः
VasaViKā. 2. 28.

**अनुराद्धा** (anu-rāddhā) *adj.* (*f.*) accomplished or acquired (through
Yogic concentration) विद्यां पृथग्धारणयानुराद्धां न्यषेधदज्ञो बलवीर्यदृप्तः सः

BhāgP. vii.8. 46.

[1]**अनुराध्** (anu-rādh-) v.P. to carry to an end, to be successful, to accomplish न्वे ३ं तेनारात्सीरसौ स्वाहा AV. v.6. 5 (pw. perhaps अनु is to be read for नु); अन्वे'षामराथ्स्मेति' TaiBr. I. v.2. 8 ( BhaṭṭaBhā. एता अनु ... संसिद्धिम् ... गता:)

[2]**अनुराध्** (anu-rādh-) IV. P. to prosper अनुराध्यास्म द्विपदा चतुंष्पदा AV. xix.15.2; AV. (P.) iii. 35. 2; xx.24. 6; प्रजापतेर्वर्तनिमनुं वर्तस्व। अनुं वीरैरनुं राध्याम गोभि: TaiBr. III.vii.10. 2; ĀpaŚS. ix.14.1.

**अनुराध** (anurādha) (= anūrādha) *m.* [P. iv. 2. 3; iv. 2. 4; ii. 3. 45] **A** [Loc.] under the constellation Anurādhā, at the time of the moon passing through the constellation Anurādhā (आदधीत) विशाखयो: प्रजाकामोऽनुराधेष्वृद्धिकाम: ĀpaŚS. v. 3. 14; अनुराधे देवगुरुं (गृह्य) सप्तनक्ती ग्रहार्तिनुत्। AgniP. 195. 5; चित्रानुराधपितृपन्नगदस्रभेषु ... रेखामेकामूर्ध्वगां षट् च सप्त तिर्यक्कृत्वा VasiS. 15. 6; [Inst.] under the constellation Anurādhā, when the moon passes through the constellation Anurādhā अथ पुंसवनं तृतीये मासि चतुर्थादौ वा तिष्येण वा हस्तेन वानुराधैर्वा BhārGS. 1.22 (22.6) ; रेवत्याथ मघानुराधहरिभि: शुद्धै: स्वभावादिभि: ... वदन्ति मुनयो वेश्मादिकार्यं शुभम् YuktiKa. 32.14; **B** name of a Buddhist, PW., MW. Apte.

**अनुराध** (anurādha) *adj* . [P. iv. 3. 34] born under the *constellation* Anurādhā श्रविष्ठानुराधास्वाति ... बहुलाभ्य उबेव भवति। ... भलक्षणस्याण उप्...। अनुराध: JaineVyā. 196. 3 (*on* iii. 3. 13); वत्सशालान्नक्षत्रेभ्यश्च जाते विहितस्य बहुलं लुग् भवति... अनुराध: CāndraVṛ. *on* iii. 3.7; KāśiVṛ *on* iv. 3.34; ŚākaṭāVyā. iii. 1.97; SiddhaHe. vi.3.107; Prasā. i.769.7; (तत्तन्नक्षत्रवाचकेभ्यो जातार्थप्रत्यये निष्पन्नं तत्तन्नक्षत्रजं नामेति केचित्) यत्तु देवत्रातेनानुराधो देवदत्त इति प्रयोक्तव्यमित्युक्तं तत्र सूत्राक्षरानुग्रहश्चिन्त्य: BālamBha. i. 29.15 ( *on* 1.11-12); KośaKaTa. 1. 803 [causing welfare, Apte. cf. **अनुराधा, अनूराधा.**

**अनुराधक** (anurādha-ka) *adj*. born under the constellation of Anurādhā मैत्री स्यादनुराधायामनुराधस्तु तज्जनि: (v.l.°नुराधानुराधा तज्जोऽनुराधक:) KośaKaTa. 1. 803.

**अनुराधग्राम** (anurādha-grāma) *m*. the ancient capital of Laṅkā or Ceylon; founded by Anurādha, MW.; Apte.

**अनुराधपुर** (anurādha-pura) *n*. name of a city, PW.; the ancient capital of Laṅkā or Ceylon; founded by Anurādha, MW; Apte.

**अनुराधर्क्ष** (anurādharkṣa) *n*. the constellation Anurādhā नागवृक्षोऽनुराधर्क्षम् ... तव मङ्गलम् PadmP. (Ra.) 20.44; विप्रेभ्य: ...। कम्बलान्यनुराधर्क्षे दत्त्वा प्रावरणानि च । स्वर्गे वर्षशतं साग्रमाते (? स्ते) सुरगणैर्वृत: BhaviP. 882A.2 (iv.192.21).

**अनुराधा** (anu-rādhá) (=anūrādhā) *f*. [P. ii. 3.45; iv.2.3; iv.3.34] **1Ai** the constellation Anurādhā, the seventeenth of the twenty-seven Nakṣatras or lunar mansions (*lit.* which follows *rādhā*, i.e. the constellation *viśākhā*), it consists of four stars sometimes identified as a line of oblation राधो' विशाखें सुहवानुराधा ज्येष्ठा सुनक्षत्रमरिष्टं मूलम् AV. xix. 7. 3; ( *but* MW. *m*. pl.); अथ नक्षत्रकल्पं व्याख्यास्याम: ... विशाखे अनुराधा ज्येष्ठा AVPari. 1(1). 2; रोहिणी पुनर्वसू अनुराधा इति नक्षत्राणि ĀpaŚS. v. 27. 5; कृत्वा चाङ्गारको वक्रं ज्येष्ठायां मधुसूदन । अनुराधां प्रार्थयते मैत्रं संशमयन्निव MahāBhā. v. 141. 8; हस्ततिष्यानुराधाश्च प्रशस्ता नाट्यकर्मणि NāṭyaŚā. 2.33; अनुराधोत्तराषाढ: तथा चैव पुनर्वसु:। इमानि भानि शस्तानि शिशुनिष्क्रमणे विधौ BṛhaspaSm. 243.77; आदित्येनानुराधा वसति... एतत्सुखं न HārīS. ii. 6. 4; हरिपूषानुराधाश्च शस्तं पुंसवनादिकम् LaghvāśvaSm. 4.3; अनुराधाख्यनक्षत्रे क्षपक: संस्तरं श्रयेत् BṛKathāK. 46. 20; शतभिषा धनिष्ठार्द्रा अनुराधोत्तरत्रयम्। रोहिणी श्रवणश्चेति स्थिरारम्भे महोदया: AgniP. 95. 4; 121. 38; पञ्चमस्योत्तरा भं स्यात् ...। अनुराधा निषादस्य SaṁgīMa. i. 1. 43; पूर्णिमा ज्येष्ठमासस्य ...। महाज्यैष्ठीति विज्ञेया युक्ता वाप्यनुराधया BṛDharmaP. i. 16. 27; अनुराधाश्विनी श्रोत्रं शस्तानि गमने नृणाम् Mānaso. ii. 13. 769; iii. 1.116; मूलं प्रोष्ठपदं चानुराधा VasiS. 25. 2; (मैत्रेऽपि च न शस्यते। मनुष्याणां प्रेतक्रिया) मैत्रमनुराधा Aparā. 558.15 (*on* 1.260); Vīra Mi. (Saṁskāra.) 366.13; VīraMi. (Samaya.) 185.31; BālamBha. i. 68. 3 (*on* 1.14); मृगशीर्षं तथा मूलमनुराधा नराधिप। पञ्चदशापि ऋक्षाणि प्रतिष्ठायां शुभानि MalliC. 2.650; अनुराधाश्विनी चैव रेवती दशमी तथा। ... दशमैकादशे चन्द्रे सर्वकर्माणि कारयेत् ŚārṅgaPa. 1723; 2223; एषां नक्षत्रद्वन्द्वे बह्वर्थे नित्यं द्वित्वं स्यात्...एषां किम्। राधानुराधा: Prasā. i.636.8; मित्रोऽनुराधा VīraMi. (Saṁskāra.) 159.13; 271.18; द्वादश्यां रात्र्यादिभागेषु क्रमेण अनुराधाश्रवणरेवतीनामादिमध्यावसानेषु जायमानेषु प्रस्थापयत्तनोऽधोधा: प्रशस्ता: VīraMi. (Samaya.) 59.23; नारदस्तु व्रतमात्रे उत्तरात्रयं शततारकानुराधारोहिणीत्यन्यान्यपि षडाह BālamBha. i. 67.22 (*on* 1.14); विशाखे चानुराधाश्चेति द्वन्द्व: LaŚabdeŚe. ii. 81.10 [AbhidhāCin. 113; ParyāŚaRa. 257; NāmŚil. 1760; ParaNā. 310; ŚabdaRa. (Su.) 2.17; KośaKaTa. 1.803; KalpaK. 401.193; 463.22]; [Loc.] under the constellation Anurādhā, at the time of the moon passing through Anurādhā तस्मादनुराधास्वाधेतया ऋद्ध्या ऋध्नो'ति MaiS. i.7.2 (i. 111.11); अग्नीनादधीत... अनुराधास्वृद्धिकाम: MānŚS. 28.21; (श्राद्धम्) कुर्वन्तश्चानुराधासु लभन्ते चक्रवर्तिताम् MārkP. 33.13; VāyuP. ii.20.9; BrahmāṇḍP. ii.18.9; BrahmP. 220.38; ऋक्षेऽनुराधासु च माधवाय नमस्तथोर: स्थलमेव पूज्यम् MatsyaP. 54.12; आढ्यो विदेशवासी क्षुधालुरटनोऽनुराधासु BṛSaṁ. 101.9; अश्विन्यनुराधासु स्थित: श्रविष्ठासु पार्थिवं भौम: HorāSā. 20.19; अत एव तत: प्राप्त: प्रथमं प्रमथाधिप:। ज्येष्ठाशुक्लचतुर्दश्यां सोमवारानुराधयो:। तत्पर्वणि महायात्रा कर्तव्या SkandP. iv. 63.9; (नक्षत्रपुरुषस्य) अनुराधासूर: ... अभिपूजयेत् BhaviP. 762A.3 (iv. 108.22); भानुं समर्चयेत्...। अनुराधासु नमोऽभिपूज्यमूरुद्वयं चैव सहस्रभानो: PadmP. v. 24. 71; चित्रानुराधाहस्तेषु ...। विख्यातं राजवंश्यानां नाम कुर्यान्महीपति: Mānaso. iii.12.1262; (श्राद्धं कुर्यात्) वाणिज्यकामोऽनुराधासु Aparā. 560.12 (*on* 1.267); श्रवणपुष्यपुनर्वसुमृगहस्तमूलानुराधासु ... जलपूजां कुर्यात् VīraMi. (Saṁskāra.) 249.1; 796.1; मृदुषु मृगरेवतीचित्रानुराधासु... व्रतं सत् शुभम् BālamBha. i. 66.7 ( *on* 1.14); **1Aii** the constellation Anurādhā (identified as Jāradgavī Vīthī) ज्येष्ठा विशाखानुराधा वीथी जारद्गवी स्मृता VāyuP. ii. 5. 50; BrahmāṇḍP. ii. 3. 50; DevīBhāP. viii. 15.6; **1Aiii** the constellation Anurādhā ( identified as *devanakṣatra*) अनुराधामृगशिर:श्रवणा देवतारका: ŚāraTi. 21.77; TantrSā. (K.) 9.12; 8.18; **1Aiv** the constellation Anurādhā (identified as wife of Soma) अनुराधा तथा ज्येष्ठा ... भरणी ... सोमपत्न्य: ViṣṇuDhaP. ii. 22.22; विधोरिवानुराधाभूत् तस्य राधा सधर्मिणी PāṇḍaC. 3.223; **1Av** the constellation Anurādhā ( identified as one of the four gentle (*mṛdu*) constellations मृदूनि चित्रानुराधामृगशिरोरेवतीति चत्वारि CaturCin. iii(1). 232.10; VīraMi. (Saṁskāra.) 246.14; VīraMi. (Samaya.) 132.32; **1B** the word *anurādhā* श्रविष्ठाफाल्गुन्यनुराधास्वाति ... बहुलाद्धुक् P. iv. 3.34; ŚākaṭāVyā. iii. 1.97; SiddhaHe. vi. 3.107; **2A** name of a queen (of king Candrodara and mother of prince Virādhita चन्द्रोदरे कालं प्राप्ते ...। वनितास्यानुरोधाख्या (v.l. °राधाख्या JPMJGM, 20 Ed.) ...। असूत च सुतम् ... (असौ) विराधिताभिख्यां प्रापित: PadmP. (Ra.) 9.40; **2B** name of a *gopī* अनुराधा तु ललिता ...। इत्यादीनां तु शतशो यूथानि व्रजसुभ्रुवाम् UjjvaNīMa. 72.2.

**अनुराधागत** (anurādhā-gata) *adj*. entered into the constellation Anurādhā जीव: पद्मभूपते:। च्युत्वा च लक्ष्मणादेव्या: कुक्षावधततार स:। चैत्रस्य कृष्णपञ्चम्यामनुराधागते विधौ TriṣaŚaPuC. iii.6.29.

**अनुराधाङ्गसंभव** (anurādhāṅgasambhava) *m*. son of the queen Anurādhā ततो लक्ष्मीधरोऽपृच्छदनुराधाङ्गसंभवम् PadmP. (Ra. ) 47.22.

**अनुराधादि** (anurādhādi) *adj*. the constellation Anurādhā etc. चैत्रवैशाखादिशब्दाश्चित्राविशाखाद्यनुराधादिनक्षत्राणामेकतरनक्षत्रयुक्तपौर्णमासीयुक्तमासवचना: CaturCin. iii (2). 11.19.

**अनुराधानक्षत्र** (anurādhā-nakṣatra) *n*. the constellation Anurādhā मैत्रमनुराधानक्षत्रम् CaturCin. iii. 175.3; [ Loc. ] under the constellation Anurādhā नक्वत्र अनुरावे (Read अनुराधानक्षत्रे) ... मेढिपोतहस्ते ... राजपुरग्रामम् ... प्रदत् (तम्) EI. ix. 179.11.

**अनुराधान्विता** (anurādhānvitā) *adj. (f.)* accompanied by the constellation Anurādhā अलिनि विशाखापादस्तथानुराधान्विता ज्येष्ठा BṛSaṁ. 102.4.

**अनुराधाप्रथमपाद** (anurādhā-prathamapāda) *m*. first quarter of the constellation Anurādhā आषाढभाद्रपदकार्तिकशुक्लद्वादशीष्वनुराधाश्रवणरेवतीयोगे पारणं न कुर्यादिति। अत्र यद्यप्येतावदेवोक्तं तथाप्यनुराधाप्रथमपाद एव वर्ज्य: NirṇaSi. 80.2.

**अनुराधामहादु:ख** (anurādhā-mahāduḥkha) *n*. great sorrow of the queen Anurādhā अनुराधामहादु:खं चन्द्रोदरवियोगत:। ... शृणुत सज्जना: PadmP. (Ra.) 1.67.

**अनुराधायोगरहिता** (anurādhāyoga-rahitā) *adj. (f.)* devoid of association (of the moon) with the constellation Anurādhā आषाढशुक्लद्वादश्यामनुराधायोगरहितायां पारणं कुर्यात् NirṇaSi. 79.30.

**अनुराधाश्रवणरेवतीयोग** (anurādhāśravaṇarevatī-yoga) *m.* [Loc.] in association (of the moon) with the constellations Anurādhā, Śravaṇa and Revatī आषाढभाद्रपदकार्तिकशुक्लद्वादशीष्वनुराधाश्रवणरेवतीयोगे पारणं न कुर्यात् NirṇaSi. 80.1.

**अनुराधास्थित** (anurādhā-sthita) *adj.* being in conjunction with the constellation Anurādhā पौषस्य कृष्णद्वादश्यामनुराधास्थिते विधौ। चन्द्राङ्कं चन्द्रवर्णं च सुतरत्नमसूत सा TriṣaŚaPuC. iii.6.32.

**अनुराधिका** (anurādhikā) *f.* name of one of the wives of the moon (identified with the constellation Anurādhā) नामानि चन्द्रपत्नीनां सावधानं निशामय। ... स्वाती विशाखा चानुराधिका BrahmVaiP. i.9.50; स्वाती विशाखा चानुराधिका। ... अष्टाविंशति नक्षत्रं कलत्रं शशिनः BrahmVaiP. iv. 96.70 [ŚabdaRa. (Su.) 2.17]

**अनुराधेयम्** (anurādheyam) *adv.* towards Karṇa अर्जुनः। धावति स्मानुराधेयम् PāṇḍaC. 13.669.

**अनुराधोत्तर** (anurādhottara) *m.* upper part of the constellation Anurādhā पृष्ठमेव धनिष्ठासु अनुराधोत्तरास्तथा ... निर्दिशेत् MahāBhā. xiii. App. I.12A (10)

**अनुराधोदर** (anurādhodara) *n.* belly as the constellation Anurādhā पृष्ठमेव धनिष्ठासु अनुराधोत्तरास्तथा (v.l. अनुराधोदरं तथा)। ... निर्दिशेत् MahāBhā. xiii. App. I. 12A (10)

**अनुराभि** (anurābhi) *f.* name of a medicinal plant *clitoria ternatea* or *celastrus paniculata* श्वेतानुराभिः कटभिः किणिहि मधुरेणुका AṣṭāNi. 11.3.

**अनुरामभद्रम्** (anurāmabhadram) *adv.* [P. ii. 1. 6] after Rāmabhadra वैदेहि ... अनुरामभद्रं संचर BālRā. 6.44(6)

**अनुराशि** (anu-rāśi) *m.* continuous heap मत्स्यानां महानुराशिः संवृत्तः GiMS. iii (2). 103.6 [DBHS.]

**अनुराशिका** (anurāśikā) *f.* name of a division of time (of manes) स्थूलसूक्ष्मप्रभेदेन राशिलग्नादिकं भवेत्। ... सूक्ष्मा राशिरियं प्रोक्ता प्रेतानां त्वनुराशिका ŚaktiSaṁT. i.2.119.

**अनुरिच्** (anu-ric-) VII. U. (pass.) to be emptied after ध्रुवां वै रिच्यमानां यज्ञोऽनुरिच्यते TaiS. I. vii.5.1.

**अनुरिष्** (anu-riṣ) IV P. to get hurt or injured afterwards यज्ञः रिष्यन्तं यजमानोऽनुरिष्यति ChāndoU. iv. 16.3.

**अनुरी** (anu-rī-) IV Ā. to go, i.e. to flow after (मरुताम्) वर्त्मान्येषामनु रीयते घृतम् ṚV. i.85.3.

**अनुरीयमाणा** (anu-rīyamāṇā) *adj.* (*f.*) going, i.e. flowing after ता आर्ववृत्रघ्नधरागुर्दक्ता अहिर्बुध्न्यमनुरीयमाणाः VājaS. 10.19 (Uvaṭa यजमानं प्रत्यनुसिच्यमानाः)

**अनुरीष** (anurīṣa) *m.* name of a king मरोः प्रशुश्रुकस्त्वासीदम्बरीषः (v.l अनुरीषः) प्रशुश्रुकात् Rāmā. i.69.29.

**अनुरु** (anu-ru-) II P. **i** to imitate the cry or to answer to the cry चकोरक्रौञ्चचक्राह्वभारद्वाजांश्च बर्हिणः। अनुरौति स्म सत्त्वानां भीतवद् व्याघ्रसिंहयोः BhāgP. x.15.13; न हि रुतमनुरौति ग्रामसिंहस्य सिंहः AdvaiSi. 709.5; 900. 11; **ii** to resound with, cf. **अनुरुत.**

**अनुरु** (an-uru) *adj.* not much or great, i.e. very small यद्यशसानुरु रोदःकुहरं यो द्वेष्टुरञ्जसा नुरुरोदः Nalo. 3.32 (comm. अविपुलम् अल्पम्)

**अनुरुच्** (anu-ruc-) I Ā. (pass.) to be liked यातुं यदनुरुच्यते शिवपुरीं रामानितम्बस्थलीं मुञ्चेर्दूरम् ŚṛṅgāVaiTa. 39; (*caus.*)to choose, to prefer (*lit.* to cause to like) (वैन्यः) स महातेजा वनमेवान्वरोचयत् MahāBhā. iii. 183.2.

**अनुरुजम्** (anurujam) *adv.* along with (the increase in) the disease न सर्पिः केवलं पित्ते पेयं सामे विशेषतः। सर्वं ह्यनुरुजं देहं हत्वा संज्ञां च मारयेत् AṣṭāSaṁ. i.131.7 (1.25)

**अनुरुत** (anu-ruta) *adj.* [*f.*-ā] **i** resounding with कनकशिलाचयविवरजतरुकुसुमासक्तिमधुकरानुरुते। ... उपवने। ... बृहस्पतिर्नारदाय याजाह BṛSaṁ. 24.1; **ii** which has subsequently cried, i.e. howled शिवा ...। वारुण्यनुरुता सैव शंसते सलिले मृतम् BṛSaṁ. 90.7.

**अनुरुद्** (anu-rud-) II P. A to weep after, i.e. to follow in weeping विरुतैः करुणस्वनैरियं (अलिपङ्क्तिः) गुरुशोकामनुरोदितीव माम् (रतिम्) KumāSaṁ. 4.15; पुरःपतिमुपैतुमात्मजाः। अनुरोदितीव करुणेन पत्त्रिणां विरुतेन वत्सलतयैव निम्नगाः ŚiśuVa.4.47; तद्दुःखतोऽनुरुरुदुर्गिरिकन्दरास्याः सर्वा दिशः SkandP. iv. 11.94; हा हतोऽस्मीति पतितो रुदन् रामः ...। ततोऽनुरुरुदुः सर्वा मातरश्च AdhyāRā. ii.9.15; अद्रेः सानु रुरोऽदः किमाप दयितो ममेति सानुरुरोद Nalo. 3.32; (pass.) to be followed in weeping सुचिरविरहक्षामो रामो न कैरनुरुद्यते SaduktiKa. 35. 32; **B** to lament after उपहितस्मृतिरङ्गुलिमुद्रया प्रियतमामनिमित्तनिराकृताम्। अनुशयादनुरोदिमि चोत्सुकः सुरभिमाससुखं समुपस्थितम् Śāk. 6. 9; (pass.) to be lamented after, SaduktiKa. 35. 32.

**अनुरुदत्** (anu-rudat) *adj.* weeping after तानि (उद्यानानि) अद्यानुरुदन्तीव परित्यक्तानि कामिभिः Rāmā. ii.65.19.

**अनुरुद्ध** (anuruddha) *m.* son of Amṛtodana and brother of Mahānāma and Bhaṭṭikā अमृतोदनस्य पुत्रा अनुरुद्धो च महानामो च भट्टिको च MaVastuAva. iii. 177. 2 [DBHS.] [name of a cousin of Śākyamuni, PW.; MW. ] cf. **अनिरुद्ध 2.**

**[1]अनुरुद्ध** (anu-ruddha) *adj.* conciliated, coaxed युग्मेष्वहःसु पुत्रकामोऽन्यत्र कन्यार्थी हर्षितस्तृप्तोऽनुरुद्धः स्त्रियमुपेयात् KāśyaS. 81A. 2 [ pacified, soothed, MW.]

**[2]अनुरुद्ध** (anu-ruddha) *adj.* **1A** confronted, encircled अनुरुद्धशु (? दु) रीतोदितन्नु (न्नु) पवंशप्रसूत स्ववंशल्ल (ल) लामभूत दक्षिणापथप्रि (पृ)थिव्या (:) स्वामी ... प्रतापात्ति (? त्ति) शयोपनतः EI. v. 7.1; **1Bi** (view) opposed श्राद्धे स्वदितमित्येतद्वाच्यमन्येन केनचित्। नानुरुद्धमिदं विद्वद्वृद्धैर्न श्रद्दधीमहि ManvaMu. 136.16 ( *on* 3. 254); **1Bii** checked or blocked, cf. **अनुरुद्धत्व; 2** surrounded or overcome, i.e. influenced dominatingly यावन्मनो रजसा पुरुषस्य सत्त्वेन वा तमसा वानुरुद्धम् BhāgP. v. 11.4; **3** who has borne, cf. **अनुरुद्धौषधिपति.**

**अनुरुद्धत्व** (anuruddha-tva) *n.* the state of being checked or blocked सर्वतश्चानुरुद्धत्वादथाधारे तदात्मके PauṣkS. 10.19.

**अनुरुद्धस्वामिन्** (anuruddhasvāmin) *m.* name of a Brahmin ( receiving endowment from the king Śivarāja) संबद्धतण्डल्वलुग्राम (मः) ... नानागोत्रचरणेभ्यो अनुरुद्धस्वामिगोमिदेवस्वामि ... गोमिस्वामि एभ्यस्ताम्रपट्टिकृत्य संप्रदत्तः EI. ix. 288.10.

**अनुरुद्धौषधिपति** (anuruddhauṣadhipati) *adj.* **i** (Śiva) who has borne the lord of medicinal plants, i.e. moon अनुरुद्धौषधिपतिः। ... स धत्ते विश्वव्यावसथपथरीतिं फलभृताम् ŚrīKaC. 5. 53; **ii** (Śiva) who has borne the lord of the medicinal plants such as Nāgadamanī etc., ŚrīKaC. 5.53 (comm. ओषधीनां नागदमनीप्रभृतीनां पतिर्येन धृतः)

**[1]अनुरुध्** (anu-rudh-) IV, Ā. [rarely P.] [P. iii.2.142; Kātan. iv.4.22; JaineVyā. ii.2.118; ŚākaṭāVyā. iv. 3.242; DhātuPra. 4. 69 (94. 25)] **1A** to adhere to, to cling to **B** to relate, to refer to **C** to remain connected **D** to agree syntactically **2A** to accept, to approve of, to comply with (pass.) to be accepted, to be approved of, to be complied with **B** to be or to act in accordance with, to be in conformity with **C** to support (a view) **3A** to desire, to love **B** to coax, to conciliate **4Ai** to cherish **ii** to satisfy, to gratify **B** to regard , to consider **C** to obey **D** to respect (pass.) to be respected **5Ai** to follow, to go after **ii** to follow, to imitate **B** to follow, to depend upon **C** to consider **D** to resort to **E** to follow closely, to be faithful **6** to practise, to observe (pass.) to be practised **7** to strive for (something), to seek after **8** to press, to insist, to request **1A** to adhere to, to cling to अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे ṚV. viii. 43.9; TaiS. IV. ii.3.3;IV. ii.11.3; MaiS. ii.7.10 (ii.88.6); KāṭhS. 16.10 (i.232.5); KapiKaS. 25.1 (93.13); VājaS. 12.36; VājaS. (K.) 13.3; ओषधीर्येषोऽनुरुध्यते ŚatBr. VI. viii.2.4; XII. iv.4.4; **1B** to relate, to refer to न ... जातिशब्दा जातिसंख्यामनुरुध्यन्ते SphoṭSi. 75.4; ती (ति?)र्यश्चोऽपि परिचयमनुरुध्यन्ते UttaRāC. 3.20(1); **1C** to remain connected न पूर्ववत्। निर्गच्छन्प्रविशन्सर्पो निर्मोकमनुरुध्यते BṛĀraUBhVā. iv.4. 509; **1D** to agree syntactically तत्र विशेषणं विशेष्यमनुरुध्यते Prasā. ii. 465.12; **2A** to accept, to approve of, to comply with सः ... यदि धर्ममनुरुध्यते तद्देयो भवति Nir. 13. 19=14. 6 (230. 6); तमत्रिर्गन्तुमारेभे वित्तार्थमिति नः श्रुतम् । भूयोऽथ (v.l. नान्वरुद्ध) धर्मव्यक्तिनिदर्शनात् MahāBhā. iii.183.2; प्रज्ञाचक्षुर्नर इह दोषं नैवानुरुध्यते MahāBhā. iii. 200.48; राजा ... समवृत्तिः प्रजासु ... नाधार्मिकाननुरुध्येत कामान् MahāBhā. v.29.25; प्रकृतयश्च भूयस्यो न मे व्यसनमनुरुध्यन्ते DaśKuC. 88.12; भगवन् यद्यनुरुध्यसे तदेहि सिद्धाश्रमपदम् MahāvīC.4.33(2); किन्तु प्रथमदर्शनं प्रियसुहृद इत्यनुरुध्ये MahāvīC. 5.72(2) (285.16); (महात्मानः) यन्महिम्ना तपःस्वाध्याययोर्लवशो विभक्ते समये तत्राप्यागमनमनुरुध्यन्ते MahāvīC. 7.28(5); (pass.) to be accepted, to be approved of, to be complied with हन्यत एवेति न तु सौ(स?)ख्यादिकृतोऽनुनयोऽनुरुध्यते Loc. 93.21 ( *on* 2.20); Kāvyānu. (He.) 25.20; उत्क्रमणं गतमागतं

च शरीरिणो नैव विभुत्वमते कथंचन युज्यते। तद् बलवत्यनुरुध्यतामणिमश्रुतिर्वै भववर्णमौपचारिकतां भजेत् NayaMañ. II. iii. 13.25; नवीनरीत्या… पूर्वक्रियाया एव प्राधान्यमनुरुध्यते RasGaṅ. 607.1; **2B** to be or to act in accordance with, to be in conformity with राज्यस्पृहा मम। अन्येषां दोषजा सैव धर्मं वै नानुरुध्यते VișṇuP. vi.7.5; ध्रुवं रूपं पितुः पुत्रः सोऽनुरुध्यति सर्वदा VāyuP. ii.38.51; BrahmāṇḍP. iii.1.48; (जीर्णपित्तस्य) तस्य संशमनं सर्पिः वातपित्तजितामग्रं संस्कारं चानुरुध्यते AṣṭāSaṁ. ii.7.9 (4.2); कुलालवच्च नैतस्य (ईश्वरस्य) व्यापारो यदि कल्पते। अचेतनः कथं भावस्तदिच्छामनुरुध्यते ŚlokaVār. 5(15).81 (662.2); अन्यथा अचेतना मृदादयः कथं कुम्भकारेच्छामनुरुध्येरन् PratyabhiVi. ii.168.2(*on* ii.4.9); **2C** to support (a view) न पुरुषकल्पनामनुरुध्यामहे BrahmSūBh. (Bhā.) 221.22 (*on* iv. 1.4); **3A** to desire, to love यत्त्वमद्यापि मानुषम्। आहारभूतमस्माकं राममेवानुरुध्यसे MahāBhā. iii. 265.28; नानुरोत्स्ये जगल्लक्ष्मीं घटिष्ये जीवितुं न वा Bhaṭṭi. 16.23; कुशिकनन्दन, धन्यः खल्वयं राजा सावित्रो यदेवमनुरुध्यन्ते भवन्तोऽपि मे AnargharRā. 1.22(10); अब्जिनीरपि च नानुरुध्यते। … अंशुमान् RāmC. 2.38; तामन्वरुध्यत कथं सदृशीं न शौरिः VāsuVi. 1.66; **3B** to coax, to conciliate, cf. [1]**अनुरुध्य 1; 4Ai** to cherish सुखप्रिया नानुरुध्यन्ति कामान् (पार्थाः) MahāBhā. v. 22. 4; v. 32.11; माहेश्वरीं प्रीतिमनुरुध्यन्तां भवन्तः MahāviC. 2.9(11); एवं वात्सल्यमनुरुध्यन्ते किल महात्मानः MahāviC. 6.41(1) (178.1); कथमस्मासु वनौकसोऽपि सौजन्यमनुरुध्यन्ते AnargharRā. 5.26(1); **4Aii** to gratify, to satisfy, cf. **अनुरुन्धत् 2; 4B** to regard, to consider ब्रह्महत्याफलं तस्य यः कृतं नावबुध्यते (v.l. नानुरुध्यते) MahāBhā. vii. 158.26; न हृदयमनुरुध्यते मनो वा प्रियसुखदुर्लभतामनित्यतां च MahāBhā. xii.172.34; श्रुतवानसि यत्कर्म कृतवानसि भार्गव। अनुरुन्ध्या(v.l.°ध्या) महे ब्रह्मन्पितुरानृण्यमास्थिताः Rāmā. i.75.2; लक्ष्मीः… न धर्ममनुरुध्यते Kād. 104.18; **4C** to obey मद्याचनमनुरुध्यते वा भवान् Kād. 181.15; देवि संस्तभ्यात्मानमनुरुध्यस्व भगवतो वसिष्ठस्यादेशमिति विज्ञापयामि UttaRāC. 4.7 (4); 5.28(4); **4D** to respect प्रायेण च सत्वप्यन्येषु वरगुणेष्वभिजनमेवानुरुध्यन्ते धीमन्तः HarṣaC. 200.6; यदि गुरुष्वनुरुध्यसे चेतयस्व मामपि MahāviC. 3.6(1); क्लिश्नाति साधुचरितानसाधूननुरुध्यते … विधिर्जडः RāmC. 9.71; यो हि यत्र गुणे मत्सरीभवति स तदाश्रयं नानुरुध्यते SyādvāMañ. 3(6); (pass.) to be respected महाराज यदीदानीमपि ज्ञातेयमनुरुध्यते तर्हि वत्सयो रामकृष्णयोः … महाराजेन भक्तावनुरक्तावनुचरौ ज्ञाती इति वा संरक्षणं करणीयम् KaṁVa. 7.14(8); **5Ai** to follow, to go after पुत्रलोकात्पतिलोकान्वृण्वाना सत्यवादिनी प्रियान्पुत्रान् परित्यज्य पाण्डवानन्वपद्यत (v.l. °ननुरुध्यते) MahāBhā. v. 88.43; अनुरुध्यस्व मामनुगच्छन्तम् MahāviC. 4.57(2); **5Aii** to follow, to imitate भोक्तुर्भोगांल्लोकोऽनुरुध्यते MahāP. 15.75; **5B** to follow, to depend upon स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते Kirātā. 2.12 [*but* Apte to adapt]; SūktiRa. 156.99; शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते VākyaPa. 3(7).81; द्रव्याश्रयत्वे न संसर्गो घटादीननुरुध्यते ŚlokaVār. 6.76 (750.1); प्रयत्नाभिहितो वायुः …। स संयोगविभागौ च ताल्वादेरनुरुध्यते ŚlokaVār. 6.122(761.4); न ज्ञानं पुरुषेच्छामनुरुध्यते BrahmSūBh. (Bhā.) 10.29 (*on.* i.1.3); द्रव्याश्रयो हि संयोगोऽल्पमेव संयोगिनमनुरुध्यते न महान्तम् TātpaṬ. (Vā.) 117.14 (*on* i. 1.3); न हि वस्तुकृता प्रीतिः स्वशक्तिमनुरुध्यते Gaṅgāva. 4.74; **5C** to consider, cf. [1]**अनुरुध्य 3B; 5D** to resort to, cf. [1]**अनुरुध्य 3D; 5E** to follow closely, to be faithful, cf. [1]**अनुरुध्यमान 1A; 6** to practise, to observe धर्मार्थावनुरुध्यन्ते त्रिवर्गासंभवे नराः MahāBhā. v.122.32; आयतनान्यभिसमीक्ष्य हितमेवानुरुध्येत CaraS. iii. 1.24 (1922 Ed.); तथा च शिष्टा नैवंविधे दाने 'वेदतत्त्वार्थविदुषे ब्राह्मणाये'त्येतदनुरुध्यन्ते ManuBh. i. 330.1 (*on* 4.5); संपत्संपत्तये दानधर्मं लोकोऽनुरुध्यते PrabhāC. 92.23; (pass.) to be practised यदि तानि (कर्माणि) अनुरुध्यन्ते ततोऽत्यन्तं वेदबाधः स्यात् YuktiSneha. 13.21 (*on* i. 1.1); **7** to strive for (something), to seek after यदालम्बसे कामं तत्तदेवानुरुध्यसे MahāBhā. xii. 171.37; प्रत्याचक्षे न चाप्येनमनुरुध्ये सुदुर्लभम् MahāBhā. xii.172.24; ननु ब्रह्म यदि ज्ञातं तावतैव कृतार्थता। न चेत्तत्संपदा किं स्याद्येन तामनुरुध्यते (नरः) BṛĀraUBhVā. i.4.1251; प्राप्य कल्पलताम् … कोऽनुरुध्येत वीरुधः PāṇḍaC. 7.283; **8** to press, to insist, to request, cf. [1]**अनुरोध 5**.

[2]**अनुरुध्** (anu-rudh-) vii. u. [P. iii. 1.78] **1A** to stop, to restrict (pass.) to be restricted **B** to restrain **2A** to respect **B** to cherish **3A** to practise, to observe **B** to bring about (pass.) to be brought about **4A** to depend upon **B** to depend upon, i.e. to resort to **5** to relate, to refer to **6A** to support (a theory or view etc.) **B** to be in conformity with **C** to approve, to comply with **7** to seek for **8** to surround (pass.) to be surrounded **9** to love **10** to bear **1A** to stop, to restrict शल्यैर्वा शङ्कुभिर्वापि श्वभ्रैर्वा भरतर्षभ। ये मार्गमनुरुन्धन्ति ते वै निरयगामिनः MahāBhā. xiii.24.75; (pass.) to be restricted आकारैश्च व्यवच्छेदात् सार्वार्थ्यमनुरुध्यते VākyaPa. 3(2).5; करवालविलूनवीरसेनामतङ्गजसहस्रकरप्रकाण्डैः … °पातालता-लुललितत्विषिरन्वरोधि HarVi. 49.35; अन्वरोधि दधता गुरु रंहः सैंहलेन रथता पवनेन ŚrīKaC. 12.7; **1B** to restrain यदि विरागी न भवेत्। न कर्माण्यनुरुन्ध्यात् Kiraṇā. 95.16; **2A** to respect श्रुतवानसि यत्कर्म कृतवानसि भार्गव। अनुरुन्ध्यामहे (v.l. अनुरुन्धामहे, अनुरुन्ध्यामि) ब्रह्मन्पितुरानृण्यमास्थिताः Rāmā. i.75.2; **2B** to cherish शैवप्रीतिं तदिह जनके नूनमेषोऽनुरुन्धे JānaPa. 1.13(5); **3A** to practise, to observe निरस्य तु पुमान् शुक्रमुपस्पृश्यैव शुध्यति। बैजिकादभिसंबन्धादनुरुन्ध्यादघं त्र्यहम् ManuSm. 5.63 (ManvaMu. त्र्यहमशौचं भवति); स्वधर्ममनुरुन्धन्ते नातिक्रममरातिभिः। … मानशालिनः Kirātā. 11.78; अनुरुन्ध्यात् कुर्यात् BālamBha. iii. 74.7 (*on* 3.23); **3B** to bring about सर्गादि योऽस्यानुरुणद्धि शक्तिभिर्द्रव्यक्रियाकारकचेतनात्मभिः। तस्मै समुन्नद्धनिरुद्धशक्तये नमः परस्मै पुरुषाय वेधसे BhāgP. iv. 17.33; (pass.) to be brought about कविरेव चिरन्तनः जडे जगति येनैव छन्दः प्रागन्वरुध्यत Gaṅgāva. 1.3; **4A** to depend upon प्रत्यये चान्यव्यावृत्तिरन्यव्यावृत्ति (प्र) त्ययः। शब्दाश्च निश्चयाश्चैव निमित्तमनुरुन्धते PramāVār. 1.60; **4B** to depend upon, i.e. to resort to किं कुर्वीमहि किं ब्रुवीमहि विभुं कं चानुरुन्धीमहि HammīMaKā. 14.7; **5** to relate, to refer to न च शब्दानां कश्चित् स्वभावप्रतिनियमो येनैकमर्थ-मनुरुन्धते नापरम् PramāVāSvopVṛ. 111.4; सामान्यानि हि विशेषं प्रति साकाङ्क्षाणि विशेषमनुरुन्धन्ति CaturCin. iii(3). 558.4; **6A** to support (a theory or view etc.) व्याख्यातारो विवक्षातः स्याद्वादमनुरुन्धते NyāyVi. 2.458; न चान्यदीयामनुरुन्धते मतिम् … मनांसि योषिताम् Nalābhyu. 4.60; **6B** to be in conformity with काव्यसंस्कारोऽपि शास्त्रवाक्यपाकमनुरुणद्धि KāvyMī. 17.15; (ये) आर्षेण वर्त्मना। प्रस्थिता नानुरुन्धन्ति श्रोतृचित्तानुवर्तनम् RājTa.(Ka.) 3.95; वाय्वादिर्हि प्रसह्य प्रवर्तयति न त्वर्थितामनुरुन्धे VedāntKa. 17.15(*on* i. 1.1); **6C** to approve, to comply with तथापि निर्बध्नति तेऽथवा स्पृहामिहानुरुन्धे मितया न किं गिरा NaiṣC. 9.12; कथं त्वदभिलाषं नानुरुन्धे RasSa. 108(3); **7** to seek for प्रियसख पुनरागाः प्रेयसा किं वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग BhāgP. x.47.20; **8** to surround वातोऽपि ध्वजवसनोदितो मिलित्वा मर्त्येशाश्वपतिमतां किमन्वरुन्ध Acyutarā. 11.54; (pass.) to be surrounded तावत्स रुद्रानुचरैर्मखो महान् … मकरोदराननैः पर्याद्रवद्भिर्विदुरान्वरुध्यत BhāgP. iv. 5.13. **9** to love यं देव्योनुरुन्धन्ति पवित्रशीलाः EI. xii. 174.75; **10** to bear, cf. **अनुरुद्धौषधिपति.**

**अनुरुध** (anu-rúdha) *adj.* (used as noun) one who obeys or follows प्रक्रामोद्योपसदं वर्णायानुरुधं बलायोपदाम् VājaS. 30.9; VājaS.(K.) 34.2.

[1]**अनुरुध्य** (anurudh-ya) *ger.* **1** having coaxed, having conciliated **2** having practised or observed **3A** having followed, having depended on **B** having considered **C** having imitated **D** having followed, having resorted to **4A** having cherished or felt **B** having obeyed **5** having accorded with, having conformed to **6** having adhered or clung to **1** having coaxed, having conciliated अर्जुनस्य वचः श्रुत्वा नकुलो वाक्यमब्रवीत्। … अनुरुध्य महाप्राज्ञो भ्रातुश्चित्तमरिंदमः MahāBhā. xii.12.2; त्वं जीवितं त्वमसि मे हृदयं द्वितीयम् …। इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां तामेव शान्तमथवा किमिहोत्तरेण UttaRāC. 3.27; प्रतिगिरमवदन्तीं भूय एवानुरुध्य (पृच्छेत्) RatiRaha. 11.12; इह हि नगरसीन्निं[म्नि] प्रेक्षितुं यामि शीते क्षणमिह तुरगाणां धावतां कौतुकानि। इति निजमनुरुध्यायाति रामोऽवरोधम् VīraBhā. 11.41; येनार्यस्य तदानुरुध्य हृदयं क्षान्तं पितुश्चेष्टितम्… स त्वं दर्शितभक्तिरार्यविषये धन्योऽसि JānaPa. 7.27; **2** having practised or observed पुराहमाश्रमे वासं रामपादानुवर्तिनी। अनुरुध्यापि सौमित्रे दुःखे च परिवर्तिनी Rāmā. vii. 48.5; **3A** having followed, having depended on कौशिककुमारः … प्रदीप्तभासं भारविं रविमिवेन्दुरनुरूप्यदर्श (w.r.for °रनुरुध्य दर्श) इव पुण्यकर्मणि विष्णुवर्धनाख्ये राजसूनौ प्रणयमन्वबध्नात् AvantiKa. 10.5; ईश्वरः प्राचीनक्रममनुरुध्य विरचयन्वेदं न स्वतन्त्रः VedāntKa. 230.6(*on* ii.1.1); ऊर्णनाभेस्तन्त्वादिजन्मोत्पत्तिस्तु लौकिकभ्रम-सिद्धकार्यकारणभावप्रसिद्धिमनुरुध्य AdvaiSi. 537.2; आम्नायमूलमनुरुध्य च संप्रदायं सिद्धान्तभेदलवसंग्रहमित्यकार्षीत् SiddhāLeSaṁ. 472.2; अन्ये 'घटस्य नीलो गुणः' इत्यादिप्रतीतिव्यवहारावनुरुध्य तयोर्भेदाभेदं च समर्थयन्ते PūrvottaVāNaMā. 78.1; ज्ञानसाध्यत्वं तु नाशमात्रस्याधिकरणस्वरूपत्वम् … मण्डनमनुरुध्याह GuruCandr. iii.185.21; इदं च संप्रदायमनुरुध्य व्याख्यातम् SetuBa. 232.2; **3B** having considered (इन्द्रविरोचनयोः) आशयमनुरुध्य यथार्थं ग्राहयिष्यामः Bhām. 217.4 (*on* i. 3.19); न हि वेदशब्दार्थाविव सुगताद्यागमासाधारण-

शब्दार्थावनुरुध्य तेषां प्रवृत्तिः ĀtmaTaVi. 890.7; साक्षात्कारमनुभवार्थमनुरुध्य तयोर्नैवमधिगमव्यवहारौ शङ्कजानुमानापेक्षौ तु विमर्शकस्य स्यातामेव KhaṇḍanKhā. 256.10; प्रधानप्रकृत्यर्थमनुरुध्य प्रत्ययार्थो नीतः VedāntKa. 127.12 (*on* i.1.28); (संस्थानानि) ...या ... [नि] ज्ञानमेकमवगाहमानम् [अनुरुध्य]... प्रतिसंधीयन्ते NyāyKu. 156.15; परव्याख्यानप्रकारमनुरुध्य वा स्वरूपतो निर्विकारे... शब्दप्रवृत्तिः NyāySiA. 193.4; 230.18; इच्छा निष्प्रयोजनेति चेत्। स्यादेवं यदि प्रयोजनमनुरुध्य कल्प्यते NyāySu. (Ja.) 310 A.7 (*on* ii.1.9); 332B.6 ( *on* ii.2.3); 362 B.8 (*on* ii.2.6); तद्य व्याप्तेर्दृष्टान्तस्य च शैलीमनुरुध्यान्वयोदाहरणं व्यतिरेकोदाहरणमिति भिद्यते NyāyPari. 158.2; 337.4; शिष्यजिज्ञासामनुरुध्य समवायपरीक्षामाह Upask. 348.7(*on* vii.2.26); 389.11 (*on* ix. 1.14); 395.10 (*on* ix. 2.2); बाह्ये वस्तुन्यभिनिवेशमानान् कांश्चिच्छिष्याननुरुध्य बाह्यार्थप्रक्रियेयं सुगतेन रचिता GoviBh. 129.11 (*on* ii. 2.28); पर्वणि नाध्येतव्यमित्यादीनां प्रकरणाद् ग्रहणाध्ययनाङ्गतेत्युक्तं तत्तु धारणाध्ययनाङ्गताग्राहकं नास्तीति कृत्वा चिन्तामनुरुध्य उपयोक्ष्यते च समानन्यायेषु भिक्षाचर्यादिषु BālamBha. i. 430.5 (*on* 1.66); **3C** having imitated (पौण्ड्रकः) नाटकीयमनुरुध्य विहारम्। ... हास्यतामपि जगाम जगद्भिः Yādavā. 21.6; **3D** having followed, having resorted to महासुराः ... पद्मनाभमनुरुध्यावतस्थिरे NīlaVi. 119.15; **4A** having cherished or felt प्रार्थ्य माल्यवता वाली युष्मद्घाते नियुज्यते। तेनापि रावणे मैत्रीमनुरुध्य व्यपेक्षते MahāvīC. 5.35; रात्रिंदिवं विजयिनो हरिणेक्षणानां वक्त्रस्य मैत्र्यमनुरुध्य विलाञ्छनस्य। नीलोत्पलानि यदि हासमुपाश्रयेयुर्जयेत किं वद तदा जडजप्रवादः KaumuMi. 3.8; **4B** having obeyed प्रार्थितस्य प्रियसुहृदो मन्दारकस्य वचनमनुरुध्य मालवेन विघ्नितस्तव पतिगृहवासः ŚṛṅgāTi. (Rā.)208(3); **5** having accorded with, having conformed to वारिषेणः ... तदेषः ... न भवत्युपेक्षणीयः इत्यनुध्यायाद्ध्या (?ध्या)तमनुरुध्यैतत्स्थापनाय जनकनिकेतनं जगाम YaśasCam. ii. 307.22; (देशकालौ) तौ अनुरुध्य छायामात्रेणावलम्ब्य... स्वांशा इव भान्ति PratyabhiVi. i. 297.3 (*on* i. 5.21); प्रथमं प्रधानमनुरुध्य प्रधानाविरोधेनाङ्गानि संबन्धयन्ति NyāyRaMā. 116.23; प्रकरणमनुरुध्य श्रुतिभङ्गेऽधिकरणविरोधं शङ्कते VedāntKa. 189.21 (*on* i.3.40); 'वैतसे कटे प्राजापत्यं चिनोति' ... इत्यादौ म्लेच्छप्रसिद्धिमनुरुध्य प्रवृत्त्यनध्यवसायः Upask. 92.10 (*on* ii. 1.17); वस्तुगतिमनुरुध्य प्राक्पदम् AdvaiSi. 562.19; GuruCandr. i. 145.7; MayūMāli. 356.14 (*on* iv. 1.9); वर्तमानदर्शपूर्णमासनामधेयमनुरुध्य तस्मिन्नेव यागषट्के यजिर्वर्तते PūrvottaVāNaMā. 11.11; स्वकुलाचारमनुरुध्यैव पूजयेत् LalitāSaBh. 223.10 (*on* 291); **6** having adhered or clung to स्ववाक्यमनुरुध्यैव बालमादाय यात्यसौ DevīBhāP. iv. 21.36.

**²अनुरुध्य** (anurudh-ya) *ger.* having stopped, i.e. held up राजपुरुषैराह्वानेनार्हतरप्रदेशेऽनुरुध्येदं हि धनमिति ManuBh. ii. 159. 14 (*on* 8. 176)

**अनुरुध्यत्** (anu-rudhyat) *adj.* [*f.* -ī, -ntī] **1** practising, observing तं भार्या प्रत्युवाचेदं धर्ममेवानुरुध्यती। वैन्यं गत्वा महात्मानमर्थयस्व धनं बहु MahāBhā. iii. 183.4; **2** following closely, being faithful भर्तारमनुरुध्यन्त्यः क्लिश्यन्ते वीरपत्नयः। शुश्रूषया क्लिश्यमानाः पतिलोकं जयन्त्युत MahāBhā. iv. 15.32; (सत्यवती) भर्तारमनुरुध्यन्ती सशरीरा दिवं गता Rāmā. i. 792*; **3** obeying, honouring नृपः। निग्रहाद्धर्मशास्त्राणामनुरुध्यन्नपेतभीः। कामक्रोधावनादृत्य पितेव समदर्शनः MahāBhā. xii. 25.13.

**¹अनुरुध्यमान** (anu-rudhyamāna) *adj.* [*f.* -ā] **1A** following closely, i.e. being faithful **B** being followed, i.e. attended **C** following, depending on **2** regarding, considering **3Ai** adhering to, sticking to **ii** being devoted to, being attached to **B** relating to, referring to **4A** obeying **B** being requested or urged **5Ai** approving, accepting, complying with **ii** being accepted or approved, being recognised **B** being in conformity with or in accordance with **6** practising, observing **7** disregarding **8A** longing for, desiring **B** cherishing, feeling **1A** following closely, i.e. being faithful अनुरुध्यमाना भर्तारं दृश्यन्ते वीरपत्नयः। शुश्रूषया क्लिश्यमानाः पतिलोकं जयन्त्युत MahāBhā. iv. App I.17 (7); **1B** being followed, i.e. attended अयमनुरुध्यमानस्तापसीभ्यामबालसत्त्वो बालः Śāk. 7.13(4); **1C** following, depending on पदार्थासङ्गतेऽर्थे चेद् वाक्यं साक्षात्प्रवर्तते।... तेनाज्ञातपदार्थोऽपि बुध्येतैव स्वभावतः। तान्वानुरुध्यमानस्य कारणं स्युस्त एव ते ŚlokaVār. 7.107 (875.7); (शब्दाः) ते हि स्वसामर्थ्यमनुरुध्यमानास्तिरस्कृतान्यार्थानयथार्थान् प्रत्ययान् जनयन्ति TātpaṬ. (U.) 60.8 (*on* 2.62); न एनं चाक्षुषं पुरुषमुररीकृत्य तं प्रत्यनुग्रहाय एते रश्मयः स्वामिकर्तव्यवशात्पूर्वमागच्छन्तोऽपि पुनः तत्कर्मक्षयमनुरुध्यमाना इव नोपयन्ति न प्रत्यागच्छन्ति एनम् BṛĀraUBh. 708.16 (*on* v.5.2); प्रमाणान्तरप्रतिपन्नवस्तूपस्थापनायोपादीयमानं वक्तुस्तदर्थसिद्धिमनुरुध्यमानमेव प्रमाणभावमनुभवति ĀgaPrā. 2.1; न हीश्वरः प्रबलतरपवन इव जन्तून् प्रवर्तयत्यपि तु तद्यैतन्यमनुरुध्यमानो रागाद्युपहारमुखेन Bhām. 580.12 (*on* ii.3.41); **2** regarding, considering (सर्वार्थसिद्धः) तपोधनांश्चैव स तान् ददर्श। तपांसि चैषामनुरुध्यमानस्तस्थौ शिवे श्रीमति वृक्षमूले BuddhaC. 7. 36; **3Ai** adhering to, sticking to स्तोत्रक्रममनुरुध्यमानस्य प्रधानक्रमो विरुध्येत। तस्मात्र स्तोत्रक्रमोऽनुरोद्धव्यः ŚābaBh. 1309. 11 (*on* v. 1.35); पुण्डरीकानि नरपतिस्तु प्रियजनप्रणयभङ्गकातरं दाक्षिण्यमनुरुध्यमानः ... कथं कथमपि ... तानि जग्राह HarṣaC. 154.3; केचित्पुनः पूर्वाणि पूर्वपक्षसूत्राणि भवन्ति उत्तराणि सिद्धान्तसूत्राणि इत्येतां व्यवस्थामनुरुध्यमानाः परविषया एव गतिश्रुतीः प्रतिष्ठापयन्ति BrahmSūBh. (Śaṅ.) 833.16 (*on* iv. 3.14); निजप्रतिज्ञानमनुरुध्यमाना महोद्यमाः कर्म समारभन्ते ŚārṅgaPa. 229; **3Aii** being devoted to, being attached to यां कामपि व्रजकुले वृषभानुजायाः प्रेक्ष्य स्वपक्षपदवीमनुरुध्यमानाम्। सद्यस्तदिष्टघटनेन कृतार्थयन्ती देवीं गुणैः सुललितां ललितां नमामि StavMā. 286.28 (comm. अनु लक्षीकृत्य रुध्यमानां वश्याम्); **3B** relating to, referring to आख्यातप्रत्ययः ... ब्राह्मणो यजमान इतिवदुपपदाधीनविशेषावस्थानत्वात्तदधीनजात्यादिवृत्तित्वमनुरुध्यमानो न... °अधिकारित्वनिर्णयः स्यात् TantrVā. 185.9 ( *on* i. 3.11); **4A** obeying निर्धना स्त्रीति। ... यदि स्मृतिमनुरुध्यमाना परवशा निर्धना च स्यात् यजेतेत्युक्ते सति न यजेत ŚābaBh. 1360.211 ( *on* vi. 1.13); सोऽपि ... पुरोहितस्य वाचमनुरुध्यमानः ... दुर्जातजातस्य शान्त्ये कृत्स्नमेव कोशजा(तं) द्विजातिसाच्चकार AvantiKa. 60.13; **4B** being requested or urged सारिकयानुरुध्यमानः कथयितुमारेभे (शुकः) VāsaDa. 109.5; तया चाहमनुरुध्यमानस्तां बकुलमालामात्मनः कण्ठादवतार्य दत्तवान् MālaMā. 1.305; अन्तः सौहार्दमनुरुध्यमानया ... निवर्तितो गमनादेतया मान्यया TilaMañ. 283.5; **5Ai** approving, accepting, complying with एवमघटमानसकलोपायसंपादिपदार्थेऽस्मिन्प्रार्थनामात्रकमेव केवलमनुरुध्यमानः शृणोतु देवः HarṣaC. 296.2; यद्यपि भवतो बुद्धिमनुरुध्यमानैरस्माभिः प्रवृत्तिरभ्युपगम्येत तथापि तस्याः प्रवृत्तेरर्थाभावात् प्रयोजनाभावादित्यर्थो न तस्य चेतनत्वाद्धेगो न पुरुषस्य BrahmSūBh. (Bhā.) 111.17 (*on* ii. 2.6); अत्रापरीक्षिताभ्युपगमादिति यथाश्रुतपक्षमीनिर्देशमनुरुध्यमानाः ...एवं व्याचक्षते NyāyMañ. ii. 129.15; **5Aii** being accepted or approved, i.e. being recognised यदि वृद्धव्यवहारे समधिगतपदसामर्थ्येऽनुरुध्यमानेऽन्वयावगतिर्नोपपद्यते ... कामं लक्षणाश्रीयताम् ĀgaPrā. 36.5; **5B** being in conformity with or in accordance with स्मृतिर्हि ... प्राचीं प्रतीतिमनुरुध्यमाना ...न प्रमाणम् PrakaPañ. 125.4; अथापि भवतः श्रद्धाम् अनुरुध्यमानाः। स्वाभाविकीमेव प्रधानस्य प्रवृत्तिम् अभ्युपगच्छेम BrahmSūBh. (Śaṅ.) 357.1 (*on* ii. 2.6); अस्तु लौकिकानां पदसंघातानां प्रेक्षावत्पुरुषसंदब्धानां संदर्भितुरभिप्रायमनुरुध्यमानानामनुपपत्त्या अनधिगतार्थलक्षणापरत्वम् TattvBi. 135.2; **6** practising, observing भूपतिरनुवर्तमानो (v. l. अनुरुध्यमानो) लौकिकमाचारमाचार्यवचने चोत्थाय ... तामेव भूमिमयासीत् HarṣaC. 331.12; एवं नामायुक्तमनुरुध्यमानाः पुमांसो महत्ययुक्तगह्वरे पात्यन्ते MahāvīC. 5. 45 (1); **7** disregarding न गुणमपेक्ष्याभिवर्धते, ना(मिमोषेऽपि दोषे) न व्यावर्तते। तथा हि यमयोस्त्वतिमानुषरूपमनुरुध्यमाना ... क्षुद्रम(लो ?ली)काभिमानगर्वं दुर्योधनमतिनिर्भरमालिलिङ्ग लक्ष्मीः AvantiKa. 47.8; **8A** longing for, desiring (सः) रतिमनयानुरुध्यमानः ...। व्यसनरहितराजराज्यभारः स्वमुपचिकाय यशो धनंजयेन RāghPāṇ. (Dha.) 2.34 (comm. कामयमानः); तथा हि कैश्चिद्विनेयः प्रसिद्धिमनुरुध्यमानो दृष्ट इति सप्रसिद्धेतिवृत्ते नाटके विनेयः AbhinBhā. ii. 410.21 (*on*18.8); **8B** cherishing, feeling कृपामनुरुध्यमानः न निष्ठुरं व्यवहरति TilaMañ. 112.23.

**²अनुरुध्यमान** (anu-rudhyamāna) *adj.* **A** being delimited or confined to लिङ्गादयः ... ते तु स्वशक्तिमनुरुध्यमानाः किंचिदेव विदधति न सर्वम् TantrVā. 717.4 (*on* iii. 1.13); संसर्गस्तु ... घटादीननुरुध्यमानो न व्यापको भवति NyāyRa. 749.21 (*on* 6.75); **B** being restricted or restrained वीक्ष्याननं नरपतेरनुरुध्यमानः किंचिद्विवक्षुरपि यत्र किमप्युवाच PṛthvīVi. 4.50.

**अनुरुन्धत्** (anu-rundhat) *adj.* [*f.* -ī, ntī(irr.)] **1A** loving, being fond of क्रूरं भ्रातृवचो हित्वा सा त्वामेवानुरुन्धती MahāBhā. i. 1552*(6); द्वयमिदमनुरुन्धद्दक्षिणः सारसाक्ष्योरधित ... आनन्दवृद्धिम् YātrāPra. 5.132; **1B** cherishing, feeling तन्मैत्रीमनुरुन्धता तव मया तत्संगराग्रे कृतं न व्रीडां गमितोऽसि येन न पुनः स्यां संभवे येन च BālRā. 6.70; कुन्त्या सह शिवादेवी रोहिणी देवकी तथा। सौजन्यमनुरुन्धत्यश्चेलुः PāṇḍaC. 14.279; **2** practising, observing तं भार्या प्रत्युवाचेदं धर्ममेवानुरुध्यती (v.l. अनुरुन्धती) MahāBhā. iii. 183.4; मन्ये दुर्बल इव चोरवृत्तिम् अनुरुन्धन्नधुना दशकन्धरोऽयम् अपूर्व इति मयि विस्रम्भादिव स्वयमप्यपूर्वतामवलम्बेत विमानम् इदम् JānaPa. 1.28 (2); **3A** following closely, i.e. being faithful भर्तारमनुरुध्यन्त्यः (v.l. अनुरुन्धन्त्यः) क्लिश्यन्ते वीरपत्नयः MahāBhā. iv. 15.32; **3B** following, depending on मनोऽनुरुन्धती भर्तुः MahāBhā. xiii. 95.39; स्वचित्तोत्थविकल्पार्थैः

**अनुरूपप्रत्यपकार** (anurūpa-pratyapakāra) *m.* befitting retaliation in return अस्मत्परिगृहीतानां दाराणामभिगमनेन दूषयिता। ततश्चानुरूपप्रत्यपकारेण शत्रोरानृण्यं गन्तव्यमिति तदस्यापि दारानेवाभिगमनेन दूषयन्प्रतिकरिष्यामि JayaMa. 66. 17 (*on* 1. 3)

**अनुरूपप्रमाण** (anurūpa-pramāṇa) *n.* [Inst.] with proportionate measurement द्विकलं द्विकलं ज्ञात्वा यथाभागं कृषीकृतम्। अनुरूपप्रमाणेन नातितीक्ष्णाङ्गमेव च। ... एतत् गण्डपरावृत्तं स्थानम् ViṣṇuDhaP. iii. 39. 22.

**अनुरूपप्रौढप्रहरण** (anurūpapraudha-praharaṇa) *n.* proper and grand weapon सा कन्या रत्नमजीजनत् ... बद्यो: कालादनुरूपप्रौढप्रहरणप्राप्ति-प्रीतहृदयेनास्फोटितमिव ... कुसुमसायकेन NalaCam. 3. 25(1)

**अनुरूपफल** (anurūpa-phala) *n.* appropriate fruit or result हितं हितानुज्ञानानामाधाराणाम् ... मन्त्रात्मा संप्रयच्छति। सद्यो वृत्तवशाद् ब्रह्मन्नुरूपफलं हि यत् PauṣkS. 25. 28.

**अनुरूपभर्तृगामिनी** (anurūpabhartṛ-gāminī) *adj.* (*f.*) who obtains a suitable husband वत्से, अनुरूपभर्तृगामिनी भूया: Nāgā. 1. 17 (11); एनाम् ... अनुरूपभर्तृगामिनीनां वासवदत्तादीनां वर्णनेन ग्राहयानुशयम् DaśKuC. 69.1.

**अनुरूपभाषण** (anurūpa-bhāṣaṇa) *n.* befitting speech परगतवचनानुरूपभाषणरूपभाणयोगश्च किं ब्रवीषीत्याकाशभाषिते AbhinBhā. ii. 408. 18 (*on* 18.4)

**अनुरूपभोग्य** (anurūpa-bhogya) *adj.* to be enjoyed, i.e. ruled by the right (person) राज्यं कुरूणामनुपूर्वभोग्यं (v. l. अनुरूपभोग्यं) क्रमागतो न: कुलधर्म एष: MahāBhā. v.146.29.

**अनुरूपम्** (anurūpam) *adv.* [P.ii.1.6] **1A** proportionately यो वात्मयाजी स्नातक: ... म्रियेत तस्य ... विशेषार्थी यथाविभवानुरूपं दक्षिणां दत्त्वा ... पूर्वोक्तेन विधिना दहनं कुर्यात् VaikhāGS. 5. 9; (कवि:) अनुरूपं च कविक्लेशस्य ... संमानडम्बरेण पूजितो राज्ञा UdaySuKa.157. 10; चूर्णीकृतमनुरूपं क्षिपेन्नरा यदि न भल्लात: RaseCin. 8. 37; **1B** in like manner or the same way ततोऽनुरूपमायं (? पं) च यमस्तस्मादनन्तरम्।... धर्मस्यापत्यमेतद्वै सुदेव्यां समजायत MatsyaP. 171. 47; यस्तु प्रहर्तारं प्रहृत्य तस्मिन् तूष्णीं तिष्ठति अनुरूपं प्रतिकृत्य विवदते ... एतयोर्यथोक्तादधिको दण्ड: DaṇḍaVi.248.15; **2A** appropriately, properly आहिताग्ने: यज्ञपात्राणि ... पृषदाज्येन पूरयित्वानुरूपं निदधति KauśiSū.81.3; **2B** in a befitting manner संग्रहेष्वलुब्धा: प्रत्यन्तेषु मौला: शुचयोऽर्थकृत्येषु ... अन्येषु यथानुरूपं नियोज्या: (जना:) SaṅkhaLiDS. 251; इच्छाविभूत्योनुरूपमद्रिस्तस्या: कृती कृत्यमशेषयित्वा। सभ्य: सभायाम् ... तस्थौ KumāSaṁ. 7. 29; स: (सरयूम्) तामपकृष्टनक्राम्। विगाहितुं श्रीमहिमानुरूपं प्रचक्रमे चक्रधरप्रभाव: RaghuVa.16.55; किमसावतिमहद्भि: पूर्वाचार्यैस्तस्या दिव्याकृतेर्घटिताया अनुरूपं घटेते न वेति द्रष्टुमर्हथ AvantiKa. 13. 15; पुरुषज्ञानलोकज्ञानपुरुषविशेषज्ञोऽनुरूपमुपकारी भवति ManuBh. ii. 64. 26 (*on* 7. 206); ईश त्वां स्तोतुमिच्छामि ...। नैव वर्णयितुं शक्तोऽस्म्यनुरूपमनीहकम् BrahmVaiP.iii.13.41; सकीर्ति ... भर्तुर्भूयादित्यबुदेश्वर:। सनामारीनहन्प्रत्यर्यनुरूपं कृतायुध: DvyāśraKā. 5. 42; **3** accordingly, correspondingly धर्मं कुरुकुलोचितम्। अनुरूपं महाबाहो पूर्वेषामात्मन: कुरु MahāBhā. i. 195.12; यो हि भृत्यो नियुक्त: सन् भर्त्रा कर्मणि दुष्करे। कुर्यात्तदनुरूपं हि Rāmā. v.70.7; तेनार्चितौ तावपि चानुरूपम् BuddhaC. 9. 3; क्रोशितुमपि रुजानुरूपमसमर्थस्य ... परिषेकं कुर्यात् AṣṭāSaṁ. ii. 170.4 (*on* 6.1); वस्त्वन्तरे रतिमुपेयुरथानुरूपम् VarāṅgaC. 1.43; रागद्वेषभयादीनामनुरूपं चरन्नपि। योऽन्तर्व्योमवदच्छन्न: स जीवन्मुक्त उच्यते VarāU.4.24; YogVā. iii. 9.8; जीवकर्मानुरूपं ब्रह्मणो भिन्नाभिन्नस्वभावा एवोपाधय उत्पद्यन्ते BrahmSūBh.(Rā.) 163.15 (*on* i.1.4); जगत्कारणविशेषाकाङ्क्षायामाकाशशब्देन ... अन्यत् सर्वं तदनुरूपमेव वर्णनीयम् BrahmSūBh.(Rā.) 219. 18 (*on* i. 1. 23); आशाभिपूर्तेरनुरूपमेव वर्षन्प्रकर्षाद्व-सुमण्डलानि। ... व्यनक्ति य: सोदरताविलासम् AcyutarāLa. 1. 9; **4** in a befitting form यथार्थो योग्यता। अनुरूपं सुरूपो वहति JaineVyā. 47. 29 (*on* i. 3. 5); अनुरूपं स्वरूपी भवति CāndraVṛ. *on* ii. 2. 2; योग्यतायाम्अनुरूपम्। रूपयोग्यं भवतीत्यर्थ: KāśiVṛ. *on* ii.1.6; अनुरूपमित्यत्र योग्यतायामनुशब्द:। योग्यं रूपं वहतीत्यर्थ: Nyās.i.341.27 (*on* ii.1.6); रूपस्य योग्यमनुरूपम् MugdhaBo. 6. 61 (61. 16); PrakriKau. i. 476.4; SiddhāKau. 162A. 5 (*on* ii.4. 18); LaŚabdeŚe. i. 536. 10; अनुरूपमिति योग्यतायामव्ययीभाव: RasGaṅ. 596. 3.

**अनुरूपमाय** (anurūpamāya) [w. r. for अनुरूपमापम्], MatsyaP. 171.47.

**अनुरूपयत्** (anu-rūpayat) *adj.* [*f.*-ntī] closely looking at सिंहासनस्थान्नृपतीन् भरतस्त्वनुरूपयन्। गिरा पप्रच्छ कुशलम् ViṣṇuDhaP. i. 209. 62; कंदर्पशत्रुरयमित्यनुरूपयन्ती सैषा पपात पुर एव पुरां विजेतु: BhikṣāKā. 8.6.

**अनुरूपयत्न** (anurūpa-yatna) *m.* due or proper effort अथानुरूपयत्नेन सम्यगन्वेषणे कृते। मूलाभावान्न विज्ञातं भवेद्बाधकबाधकम् TattvSaṁ. 2869.

**अनुरूपरमण** (anurūpa-ramaṇa) *m.* suitable lover, i.e. husband अनुरूपरमणमासादयेति तामाशिषावर्धयदर्धचन्द्रमौलि: PārvPa. 3. 8 (7)

**अनुरूपरमणविरह** (anurūparamaṇa-viraha) *m.* absence of a suitable lover वपुरिदमनुपममीदृग् यदि विहितं तेन धात्रा। अनुरूपरमणविरहात् किमिति कृतं वन्ध्यजन्मफलम् KuṭṭaMa. 815.

**अनुरूपरसा** (anurūpa-rasā) *adj.* **1** having befitting, i.e. favourable passion or love इयमेव नर्मदा मम वंशप्रभावानुरूपरसा ĀryāSaŚa. 455 (comm. अनुकूलरतिमती); **2** having proper quantity of water, ĀryāSaŚa. 455 (comm. रसो जलम्)

**अनुरूपरूप** (anurūpa-rūpa) *n.* **i** proper form अनुरूपरूपरतिशीलशुभां लभते स्त्रियं सुभग एव पुमान् Rāgh. 8. 20; **ii** conforming form, cf. **अनुरूपरूपा.**

**अनुरूपरूपसंपत्ति** (anurūparūpa-sampatti) *f.* wealth of befiting beauty प्रथममिह तावदाभिजात्यवित्तविद्याविवेकविभवैरनाकुले कुले जन्म ततोऽप्यनुरूपरूपसंपत्ति: ... इति महती भाग्यपरंपरा NalaCam. 6.35(6)

**अनुरूपरूपा** (anurūpa-rūpā) *adj.* (*f.*) possessing conforming form अशेषरूपेष्वनुरूपरूपा देवी जगन्नेतुरनुप्रजज्ञे Yādavā. 12.1 (comm. समानाकारा तत्तदवताराद्यनुरूपाकारा)

**अनुरूपलक्षितत्व** (anurūpalakṣita-tva) *n.* [w. r. for **अनुपलक्षितत्व**] AbhinBhā. i.310.15 (*on* 6.45)

**अनुरूपलोभ** (anurūpa-lobha) *m.* eagerness or longing for suitable (husband) अहोऽनुरूपलोभेन सखी मां मुग्धमानसीम्। दग्धुमभ्युद्यता पापा BṛKathāMañ. ix .1. 356.

**अनुरूपवत्** (anurūpa-va(n)t) *adj.* possessing similar traits (एको नारायणो देव:) चैतन्यमस्य धर्मो य: प्रभा भानोरिवामला। तया स्फुरति जीवोऽसौ स्वत एवानुरूपया (v.l.अनुरूपवान्) LakṣmīT. 13. 26.

**अनुरूपवपुस्** (anurūpa-vapus) *adj.* possessed of proper body त्वरिततरमुत्थाय चलितमभिरूपमभिनवारूढयौवनमनुरूपवपुषा ... राजसुतया ... मुहुर्धावित्वा ... निपत्य पादयो: प्रसाद्यमानमेकं नृपकुमारमद्राक्षम् TilaMañ. 397.15.

**अनुरूपवराप्राप्ति** (anurūpavarāprāpti) *f.* non-finding or non-obtainment of a suitable bridegroom कन्यासौ अनुरूपवराप्राप्त्या वृद्धकुमारी भूत्वा केनाप्यनुरूपेण महीमहेन्द्रेण सोपरोधमूढा सती सतीमतल्लिका तमुद्वोढारं च स्वं च जनकं च परामुन्नत: कोटिं नेष्यति PrabaCin.126.23; KumāPraPra.92.22.

**अनुरूपवरार्थ** (anurūpavarārtha) *m*. [Loc.] for the sake of (obtaining) a suitable bridegroom कन्या स्वयंप्रभा नाम ...। अनुरूपवरार्थेऽस्याश्चिरं चिन्तापरायण:। अरोचकी कविरिव तस्थावग्निजटी नृप: TriṣaŚaPuC. iv. 1. 462.

**अनुरूपवर्तनाभरण** (anurūpa-vartanābharaṇa) *n.* appropriate make-up (*lit.* application of colours) and decoration or ornamentation सात्त्विकभावोन्मीलनमभिनयमनुरूपवर्तनाभरणम्। मिश्रामिश्रे नाट्ये लयच्युतिं वर्णयन्ति मञ्जर्या: KuṭṭaMa. 805 (comm. भूमिकोचितं वर्तनं वर्णै: उपवर्णैश्च अङ्गवर्तनम्)

**अनुरूपविचेष्टित** (anurūpa-viceṣṭita) *n.* befitting action एतन्नम (?) प्रथममम्ब मयि त्वदीये प्रेम्णे पुनस्तदनुरूपविचेष्टितेभ्य:। यन्मां प्रतीत्थमुपदेशविधिस्तवायं मा भूद्विजेतरि पुरामनुरागबन्ध: BhikṣāKā. 23.18.

**अनुरूपविषयिन्** (anurūpa-viṣayin) *adj.* referring to appropriate objects (राग:) न केवलं लावण्यादिनैव रज्यते किं तर्ह्यनुरूपविषयिणाभिलाषेणापीति प्रतीयते SaraKaṇṭhā. 645. 6.

**अनुरूपवीरसंवाद** (anurūpavīra-saṁvāda) *m.* speaking to the worthy hero अनुरूपवीरसंवादप्रमोदभरद्विगुणितावष्टम्भसंक्षोभितभुवनत्रयस्य निरन्तरप्रहीयमाणबाणपञ्जरमध्यवर्तिना रामभद्रेण क्रीडाशकुन्तकौतुकं पूर्यते राक्षसराजस्य AnargharāRā. 6.71(1)

**अनुरूपवृत्तघटना** (anurūpavṛtta-ghaṭanā) *f.* **1** composition in appropriate metre (नगरी वाराणसी नाम) अनुरूपवृत्तघटना सत्कविकृतरूपकेषु लोके च। रमणीवचने यस्यां माधुर्यं काव्यबन्धे च KuṭṭaMa.15; **2** occurrence of proper conduct, KuṭṭaMa. 15.

**अनुरूपवेला** (anurūpa-velā) *f.* proper time अमात्य: ... प्रागेव मरणाबाधभयाद् राज्ञ: ... राजव्यञ्जनमनुरूपवेलायां प्रकृतीनां दर्शयेत् मित्रामित्रदूतानां च ArthŚā ii. 218. 4 (5. 6)

**अनुरूपवेश** (anurūpa-veśa) *m.* proper dress वय:कर्मार्थश्रुताभिजनानां प्रत्येकमनुरूपवेशभाषणबुद्धिवृत्ति: कार्या Aparā. 165. 16 (*on* 1.123)

**अनुरूपवेष** (anurūpa-veṣa) *m.* proper dress (राजा) कुशलविरचितानुकूल-(v.l.°रूप)वेष: क्षितिपसमाजमगात् RaghuVa. 5.76; लोकवृत्तं वृत्त्यर्थितया प्रायशो

यदाचरति स्वगुणानुख्यापनानुरूपवेषधारणादिकं लोकस्तत्र वर्तेत न वर्तयेत् ManvaVi. 58. 18 (*on* 4.11)

**अनुरूपव्यय** (anurūpa-vyaya) *adj.* **i** expended or spent in a befitting manner ललितापीडनामा ... वसुमतीपतिः। ... दुष्कृतेनार्जितं वित्तं पित्रा निरयभागिणा। यश्चारणादिषु न्यस्यन्ननुरूपव्ययं व्यधात् RājTa.(Ka.) 4. 662; कोशः सुससलभूपतेः। तेनातिव्ययिना स्वैरमनुरूपव्ययः कृतः RājTa. (Ka.) 8. 1949; **ii** who makes proper or corresponding expenditure श्रीगर्भपदपर्याय-च्छन्नजाड्यप्रभावतः। तथार्जितस्य कोशस्य सोऽनुरूपव्ययोऽभवत् RājTa.(Ka.) 7.1108.

**अनुरूपशस्** (anurūpaśas) *adv.* conformably or agreeably to, Apte.

**अनुरूपसंयोग** (anurūpa-saṁyoga) *m.* **1** union of conforming objects कविना विच्छित्तिविशेषोपनिबद्धं कार्यकारणयोरानुरूप्यमनुरूपसंयोगः सामग्रीसाकल्यं च समम्। अनुरूपसंयोगस्य ... चारुत्वादलंकारता AlaṅkāRa. 61.3; **2** union of suitable ones, cf. **अनुरूपसंयोगरसिक.**

**अनुरूपसंयोगरसिक** (anurūpasaṁyoga-rasika) *adj.* one who is delighted by the union of suitable ones अनुरूपसंयोगरसिकेन विश्वसृजा तथा रचितं यथा सा तथा सारिका VetāPañ.(Jam.) 30.16.

**अनुरूपसंसर्ग** (anurūpa-saṁsarga) *m.* union or coming together of conforming ones समालंकारः - अनुरूपसंसर्गः समम् RasGaṅ. 604.15.

**अनुरूपसंसर्गत्व** (anurūpasaṁsarga-tva) *n.* the state of being the union or coming together of conforming ones अनुरूपसंसर्गः समम्। ... अनुरूप-संसर्गत्वेन सामान्यलक्षणेन सर्वे भेदाः संगृहीताः RasGaṅ. 604. 20.

**अनुरूपसखीजन** (anurūpa-sakhījana) *m.* worthy female companion अनुरूपसखीजनैरुपेतां दमयन्तीं ददृशुर्विहंगमास्ते Nalābhyu. 2. 37.

**अनुरूपसखीजनपरिवृता** (anurūpasakhījana-parivṛtā) *adj.* (*f.*) surrounded by worthy female companions अनुरूपसखीजनपरिवृतां दुहितरमिमां गौरीं समित्कुशदूर्वाद्युपहरन्तीं परिचर PārvPa. 1. 21 (5)

**अनुरूपसंकेत** (anurūpa-saṅketa) *m.* sign indicative of the corresponding things यथापकरिदृष्टविषयमनुरूपसंकेताहितसंस्कारभेदमेकत्वाध्यवसायिप्रकृतिभ्रान्तं स्मार्तमिदं ज्ञानमुत्पद्यते TattvSaṁPañ. 46. 12 (*on* 59-60)

**अनुरूपसंगम** (anurūpa-saṅgama) *m.* union of the proper things सुदुर्लभे नार्हति कोऽभिनन्दितुं प्रकर्षलक्ष्मीमनुरूपसंगमे Kirātā.4.4(comm. योग्यसमागमे)

**अनुरूपसंघटनात्मक** (anurūpasaṅghaṭanātma-ka) *adj.* of the nature of the union or coming together of conforming ones अनुरूपसंघटनात्मक एव समालंकारः RasGaṅ. 608.8.

**अनुरूपसंघटनारूप** (anurūpasaṅghaṭanā-rūpa ) *adj.* of the form of the union or coming together of conforming ones विषयस्य विरूपसंघटनारूपायाः प्रथमभिदाया विपर्ययोऽनुरूपसंघटनारूपश्चारुत्वहेतुत्वादलंकारत्वेन गणितः Ekāva. 8.39 (2) (290.2).

**अनुरूपसमागम** (anurūpa-samāgama) *m.* union of conforming ones ज्येष्ठमासन्नसंग्रामं गतो मुक्त्वा विभीषणः। ... न मां द्रक्ष्यति सौमित्रि-र्ज्येष्ठभ्रातृवधोद्यतम्। सुग्रीवस्त्वक्ष्यति व्रीडामनुरूपसमागमे RāmC. 24. 137; अनुरूपसमागमस्तु प्रस्तूयतेऽत्रेति समम् Ekāva. 8.39 (4) (290.4).

**अनुरूपस्थाननिवेशन** (anurūpasthāna-niveśana) *n.* placing or arrangement (of objects) in a proper place (वासगृहे ... नागदन्तासक्ता वीणा। चित्रफलकम्) वीणादयः ... नागदन्तेष्वासज्य स्थापिता यथाप्रयोजनं चादातव्याः। अनुरूपस्थाननिवेशनमपि। वैदग्ध्यजननमिति गम्यते JayaMa. 46.21 (*on* 1.4)

**अनुरूपस्थानन्यास** (anurūpasthāna-nyāsa) *m.* depositing in a proper place अस्मत्स्वामिना संदेशमशून्यतां नयता पूर्वजोपार्जितं वारुणा-तपत्रमाभोगाख्यमनुरूपस्थानन्यासेन कृतार्थीकृतमेतत् HarṣaC. 289. 14.

**अनुरूपस्थालिका** (anurūpa-sthālikā) *f.* proportionate cooking vessel कचघटीम् ... रसगर्भिणीमधस्तर्जन्यङ्गुलिप्रमाणितछिद्रायामनुरूप-स्थामलिकायाम् (? स्थालिकायाम्) आरोप्य ... वर्धमानकमापूरणीयम् RaseCin. 2.5 (8.17)

**अनुरूपस्वर** (anurūpasvara) *m.* **1** name of a Bodhisattva अहं सर्वत्र बोधिसत्त्वजननी भविष्यामि। यथा च मैत्रेयस्य बोधिसत्त्वस्य ... अनुरूपस्वरस्य GaṇḍVyū. 348.6 [DBHS.]; **2** (anurūpa-svara) appropriate or proper tone, cf. **अनुरूपस्वरवश.**

**अनुरूपस्वरवश** (anurūpasvara-vaśa) *m.* [Inst.] on account of appropriate or proper tone स्वरोऽपि काक्वादिरूपः काव्ये विशेषप्रतीतिकृदेव। ... क्वचिदनेकार्थशब्दानां प्रकरणादिनियमाभावादनियन्त्रितयोरप्यर्थयोरनुरूपस्वरवशेनैकत्र नियमनं वाच्यम् SāhiDa. 61.12.

**अनुरूपा** (anu-rūpā) *f.* **1** one of the three types of nature of dramatic character (*lit.* conforming one) अनुरूपा विरूपा च तथा रूपानुरूपिणी। त्रिप्रकारेह पात्राणां प्रकृतिश्च विभाविता NāṭyaŚā. 26.1; स्त्रियो हि स्त्रीगतो भावः पौरुषः पुरुषस्य च। यथावयो यथावस्थमनुरूपेति सा स्मृता NāṭyaŚā. 26.14; **2** (anurūpā) name of the wife of Atri दक्षेण दत्ताः ...। संततिश्चानुरूपा च ऊर्जा स्वाहा स्वधा तथा। ... अत्रिर्वासिष्ठो वह्निश्च पितरश्च यथाक्रमम्। ख्यातास्ता जगृहुः कन्याः ... साधका वराः ŚivaP. ii (1). 16.22 (60A.9)

**अनुरूपाग्निष्टोमसामन्** (anurūpāgniṣṭomasāman) *adj.* having corresponding Agniṣṭoma chant अथातोऽनुरूपाग्निष्टोमसामा द्वादशाहः स्याद् इत्याहुः Kṣudra. 3. 3; अथाग्र एवानुरूपाग्निष्टोमसाम दशममहर्भव-त्येतस्माद् वा एतानि योनेरसृज्यन्तेति भवति Kṣudra. 3.3; *n.* corresponding Agniṣṭoma chant अथाप्यनुरूपाग्निष्टोमसाम्नि वारवन्तीयस्यैवानुरूपं कल्पयतीति NidāSū. 68. 1 (4.4)

**अनुरूपात्मदर्शन** (anurūpātmadarśana) *adj.* having manifestation of one's own self according to the (desired) form (देवः) स उपव्रज्य ...। हरिम्। ... भक्तानामनुरूपात्मदर्शनम् BhāgP. iii. 20. 25.

**अनुरूपानन्तर्य** (anurūpānantarya) *n.* immediacy of the *tṛc* or triad of verse (viz ṚV. ix.64. 28-30 to be used in the *bahiṣpavamāna stotra*) प्रकृतिक्लृप्तस्यानुरूपानन्तर्यस्य पर्यासे बाधे प्रमाणाभावात् BhāṭṭDī. ii. 193. 15 (*on* v.3.4)

**अनुरूपाभिनिवेशतोषिन्** (anurūpābhiniveśa-toṣin) *adj.* one who is delighted at proper persistence (पार्वती) अनुरूपाभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा। ... जगाम गौरीशिखरं शिखण्डिमत् KumāSaṁ. 5.7.

**अनुरूपारिलाभ** (anurūpāri-lābha) *m.* act of meeting a right rival तावुभावनुरूपारिलाभलम्भितसंमदौ। अभूतामुद्यरोमाञ्चत्रुटत्कञ्चुकबन्धनौ PāṇḍaC. 13. 680.

**अनुरूपार्घ** (anurūpārgha) *m.* proper value or price दिनमणिः ... दिनवणिजा ...। अनुरूपार्घमलब्ध्वा पुनरिव रत्नाकरे निहितः SubhāRaK. 27. 20.

**अनुरूपार्थ** (anurūpārtha) *adj.* containing proper or appropriate matter यदिदं मेऽनुरूपार्थं मया साधु सुमन्त्रितम्। भवन्तो मेऽनुमन्यन्ताम् Rāmā. ii. 35 *(1)

**अनुरूपार्थक्रियार्थिता** (anurūpārthakriyārthi-tā) *f.* the state of being desirous of the action conducive to proper result तदनुरूपार्थक्(क्रि)यार्थितया प्रवृत्तेः ... अनित्यसाध्यार्थक्रियार्थी ... किमनित्यताविचारं प्रत्याहितास्थः HetuBiṬ. 42. 24.

**अनुरूपार्थान्वय** (anurūpārthānvaya) *m.* a type of *vipralambhaśṛṅgāra* (*lit.* union or coming together of suitable objects) प्रथमानुरागे ...। अत्रैवा-नुरूपार्थान्वयः SaraKaṇṭhā. 653. 5.

**अनुरूपालंकारालंकृत** (anurūpālaṅkārālaṅkṛta) *adj.* decorated with proper or appropriate ornament (पुरुषम्) अनुरूपालङ्कारालङ्कृतम् ... कामेष्ववसृजेत् CaraS. i. 15. 17 (1941 Ed.)

**अनुरूपासनदेशन** (anurūpāsana-deśana) *n.* showing, i.e. offering of proper seat अनुरूपासनदेशनेन च। इङ्गित्यैषीद् बहुमानपात्रतां पृथक्पृथग्यूथपतीन् जगत्पतिः RāmC. 5. 9.

**अनुरूपिन्** (anurūp-in) *adj.* [*f.* -iṇī] **1** worthy (person) तदिदम् (रामायणम्) ... श्रोतव्यमनसूयया (v. l. अनुरूपिणा) Rāmā. i. 5. 4; **2** suitable, matching सचिवैरनुजस्यानुरूपिणीम्। कन्यामन्वेषयामास विजयानन्दरङ्गराट् ĀnandRa. 5. 40.

**अनुरूपे** (anurūpe) *adv.* in (or upon) form बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्ननुरूपे चरति Śatasāhasrikā prajñāpāramitā 765. 2 [DBHS.]

**अनुरूप्यदर्श** (anurūpyadarśa) [w. r. for अनुरुध्य दर्श] AvantiKa. 10.5.

**अनुरूप्यम्** (anurūpyam) *adv.* after silver बीजे तानि न्यसतु ... च्युतचरमराजीनि लोहेऽनुरूप्यम् TantrSa. 1. 105 (Vimarśinī अनुरूप्यं रूप्यानन्तरम्, *but* Vivaraṇa रूप्यस्य पश्चात् सुवर्णरजतयोरनन्तरमित्यर्थः)

**अनुरेवती** (anurevatī) *f.* name of a plant, MW.; *Croton tiglium*, pw.

**अनुरेवापुलिनम्** (anurevāpulinam) *adv.* [P. ii. 1. 16] along the sandy beach of (the river) Revā, i.e. Narmadā अनुरेवा पुलिनं (? अनुरेवापुलिनं) गृहाण यात्राम् NavaSāC. 5. 78.

**अनुरोग** (anu-roga) *adj.* continuously sick विद्यां न गृह्णन्ति ... नराः। अलसाश्चानुरोगाश्च MāṇḍūŚi. 16. 5; *m.* continuous sickness, cf. **अनुरोगिन्.**

**अनुरोगिन्** (anurog-in) *adj.* having continuous sickness क्षामक्षामक्षत-रुजाश्वासमूर्च्छानुरोगिणाम्। ... सर्वरोगान् निहन्ति (गुडः) HāriS. i. 10. 18.

**अनुरोति** (anuroti) [w. r. for **अनराति**] AV. (P.) ix. 3. 13.

**अनुरोदन** (anu-rodana) *n.* weeping after रुदता कुत एव सा पुनर्भवता …। अत्र हि 'कुत एव तु सानुरोदना' दिति युक्तः पाठः VyaktiVi. 59. 22 [condolence, sympathy, Apte ]

[1]**अनुरोद्धव्य** (anu-roddhavya) *adj.* **1A** to be followed or imitated **B** to be followed , to be depended upon **2** to be adhered to, to be stuck to **3** to be obeyed or honoured **4** to be accepted or admitted **5** to be regarded or considered **1A** to be followed or imitated शेषक्रियायां लोकोऽनुरोद्धव्यः BaudhDS. i. 5. 112; **1B** to be followed, to be depended upon अर्थप्रधानो हि ग्रन्थोऽनुरोद्धव्यः TantrRa. 101. 6; कथकाभ्यां यावता विना तदभिलषितं न पर्यवस्यति तावदनुरोद्धव्यम् KhaṇḍanKhā. 29. 10; परमर्षिप्रणीतानि व्याख्येयानि, तेषां च महर्षिप्रणीतानि व्याख्यानानि (च) सन्ति चेत्, तान्येवानुरोद्धव्यानि ŚrutaPra. iA. 2. 15 (*on* i. 1. 1); **2** to be adhered to, to be stuck to स्तोत्रक्रममनुरुध्यमानस्य प्रधानक्रमो विरुध्येत। तस्मान्न स्तोत्रक्रमोऽनुरोद्धव्यः ŚābaBh. 1309. 12 (*on* v. 1. 35); मुख्यधर्मानुग्रहस्य वक्ष्यमाणत्वात्तन्न्यायेन प्रकृतेऽप्यर्थवादस्य मुख्यत्वात्स एवानुरोद्धव्यः MayūMāli. 232. 6 (*on* iii. 3. 1); **3** to be obeyed or honoured दक्षाद्युक्तश्चाङ्गुलीनियमोऽनुरोद्धव्यः BālaKrī. i. 39. 15 (*on* 1. 20); **4** to be accepted or admitted करणव्यवहारास्तित्वमेवमनुरोद्धव्यं स्यात् KhaṇḍanKhā. 470. 21; आत्मशब्दस्वारस्यभङ्गहेतवोऽनुरोद्धव्याः ŚrutaPra. i B. 174. 18 (*on* i. 1. 5); वेदोपरा वेदान्ता इत्यभियुक्तवाक्यं परमास्तिकेन भवतानुरोद्धव्यं स्यात् NyāySu. (Ja.) 74A. 11 (*on* i. 1. 1); लिङ्गकारकयोः कारकस्य प्राधान्यात् कारकान्वयस्वारस्यमेवानुरोद्धव्यम् PūrvottaVāNaMā. 132 .19; **5** to be regarded or considered ब्रह्मोपक्रमस्तु नानुरोद्धव्यः ŚivārkaMaDī. i. 538. 24 (*on* i. 4. 16).

[2]**अनुरोद्धव्य** (anu-roddhavya) *adj.* to be obstructed or prevented आ शुद्धेः ब्रह्मवधादिजनितस्य पापस्य प्रायश्चित्तादिना अपगमपर्यन्तं सम्यक् प्रतीक्ष्योऽनुरोद्धव्यः (पतिः) VīraMi. 140. 6 ( *on* 1. 77 )

**अनुरोद्धव्यत्व** (anuroddhavya-tva) *n.* the state of being what is to be accepted or admitted कारणैकत्वावधारणस्यानुरोद्धव्यत्वात् … परमकारणत्वमभ्युपगन्तव्यम् ŚrutaPra. iB. 137. 4 (*on* 1. 1. 4 ); मुख्यामुख्यार्थानुग्राहकेषु मुख्यानुग्राहकस्यानुरोद्धव्यत्वं चास्मिन्नधिकरणे व्युत्पाद्यम् ŚrutaPra. iB. 180. 24 (*on* i. 1. 6)

[1]**अनुरोद्धुम्** (anu-roddhum) *inf.* **1** to respect अरण्यवासिनः पार्थान्नानुरोद्धुं त्वमर्हसि MahāBhā. iii. 251. 15; **2** to follow, i.e. to imitate यज्ञैर्विचित्रैर्यजतो भवाय ते राजन् स्वदेशाननुरोद्धुमर्हसि BhāgP. iv. 14. 21; **3** to coax, to conciliate, to propitiate प्रणयिनीमनुरोद्धुं प्राप दाशरथिरात्मनिकेतम् Rāgh. 5. 54; सः …। (लक्ष्मणम्) रुष्टमेनमनुरोद्धुमादरादादिदेश विवशः स्ववल्लभाम् Rāgh. 11. 51; किं वा मे विनिपात्य मानयशसी कामोऽनुरोद्धुं क्षमः JānaPa. 2. 25.

[2]**अनुरोद्धुम्** (anu-roddhum) *inf.* to overrule, to block एतन्न प्रदेशान्तरप्रसिद्धं क्रममनुरोद्धुमर्हति BrahmSūBh. (Śaṅ.) 429. 13 (*on* ii. 3. 6); तर्कः … नाश्रयासिद्धिमपि तावद् वास्तवीमनुरोद्धुमधिकरोति KhaṇḍanKhā. 1336. 22.

[1]**अनुरोध** (anu-rodha) *m.* [Dhātu Pra. 4. 69 (94. 25)] **1Ai** acceptance or compliance अनुरोधविरोधाभ्यां समः स्यादचलो ध्रुवः। सुकृतं दुष्कृतं चोभे नानुरुध्येत कर्मणि MahāBhā. xii. 269. 14; अनुरोधविरोधाभ्यां शीतोष्णाभ्यामिवार्दितः। शर्म नाप्नोति Saund. 13. 48; 17. 67; इयं तु राज्ञोऽनुरोधविरोधौ विचिन्त्य यथोचितमाचरतु KaṁVa. 5. 35 (11); [Abl. ] due to acceptance or compliance with अनुरोधाच्च तेनास्यामेकैव जनिता सुता। चिरमाराधितो भक्त्या विरक्तोऽपि हि रज्यते BṛKathāŚloSaṁ. 18. 557; **1Aii** following, i.e. accepting (a view) संशुद्धं तत्त्वभूतं यद्भाषणं स एव परिन्यासः। नानानुरोधादिति NāṭaLaRaK. 584; **1B** conformity, accordance प्राणस्य प्राणमिति कस्माद् द्वितीयैव न क्रियते। बहूनामनुरोधस्य युक्तत्वात् KenUBh. 33. 8 (*on* 1. 2); [Abl.] in conformity or accordance with ग्राम्यः … पादस्य तदुत्तरस्य चानुरोधाद् ग्राम्याणि … पदानि … तिष्ठति SaraKaṇṭhā. 110. 20; दृष्टेऽपह्नुत्यभावात् अनुमितिविषये लाघवस्यानुरोधात् … इदमखिलतमः कर्शनं दर्शनं नः TattvMu. 5. 136; ब्रह्मात्मश्रुत्यपहतपाप्मत्वाद्यन्वयानुरोधात् दहराकाशान्तर्वर्त्यपि परमेश्वर इत्यभ्युपगन्तव्यम् ŚivārkaMaDī. i. 439. 11 (*on* i. 3. 16); वीररसस्य चातुर्विध्यं प्रपञ्चितं प्राचामनुरोधात् RasGaṅ. 50. 8; 388. 15; 439. 3; शसो नः पुंसीत्यादेरनुशासनस्यानुरोधात् VaiyāBhū. 121. 21(*on* 25); (अनन्तरा) महासंज्ञा तु प्राचामनुरोधादेव LaŚabdeŚe. i. 52. 13; i. 527. 9; [Inst.] in conformity or accordance with न … युष्मदादीनामनुरोधेन मध्यमादयो भवितुमर्हन्ति ŚābaBh. 1127. 12(*on* iii. 8. 22); यानि व्यञ्जकमीक्षन्ते वृतत्वान्मलशक्तिभिः। व्यञ्जकस्यानुरोधेन तानि स्युर्व्याहतान्यपि MṛgendraT. i. 5. 15; यद्धि यस्यानुरोधेन स्वभावमनुवर्तते। तत्तस्य गुणभूतं स्यान्न प्रधानाद्गुणो यतः NaiṣkaSi. 37. 2; लक्षणीयानुरोधेनैव हि सर्वत्र परिग्रहपरित्यागौ TattvBi. 155. 7; व्याप्त्यनुपयोगिनोऽपि दृष्टान्तदृष्टधर्ममात्रस्यानुरोधेनानुमानमिच्छतः सर्वानुमानोच्छेदप्रसङ्गः ĀtmaSi. 10. 25; वरं मुख्यार्थानुरोधेन विधानमेव कल्प्यताम् TātpaṬ. (Vā.) 630. 17 (*on* iv. 1. 60); प्रसिद्धेरनुरोधेन यः परस्परमर्थयोः। भूयोऽवयवसामान्ययोगः सेहोपमा मता SaraKaṇṭhā. 399. 9; स राजा … प्रयोजनानुरोधेन शत्रुर्वा मित्रं वोदासीनो वा भवति ManvaVi. 759. 13 (*on* 7. 10); भग्नः श्रीविजयेशोऽपि तेनेति कथयोत्थितम्। प्रक्रान्तस्यानुरोधेन शोकशल्यं सहामहे RājTa. (Jo.) 762; (प्रथमश्रुतप्रमाणम्) तदनुरोधेनैव चरमश्रुतप्रमाणस्य नेतव्यत्वात् PāṇiTaVāNaMā. 28. 6;29.20; बलवतस्तस्यानुरोधेन … बहुत्वलक्षणासंभवात् … उपांशुत्वं विधीयते GuruCandr. i. 271. 7; i. 280. 13; श्रौतक्रमानुरोधेन… पर्यवसानम् … इदं च प्राचामनुरोधेन व्याख्यातम् SetuBa. 277. 13; इष्टाजनके आन्तरालिकश्रमे द्वेषाभावदशायामप्रवृत्तेः सर्वसिद्धायानुरोधेन तस्य प्रवर्तकत्वावश्यकत्वात् VaiyāBhū. 78. 21(*on* 22); प्रयोजनम् … सप्तम्यन्तैः कृतस्याधिकारिनिर्णयस्यानुरोधेनेहैव प्रकटीकृतम् Bhāsk. i. 17. 9 (*on* i. 1. 1); सा … अनुरोधेन वा मधुमासवासराणाम् … मामाभिगन्तुमुद्यतवती Mukundā. 184 (5); इदं प्राचामनुरोधेन LaŚabdeŚe. i. 24. 8; i. 125. 7; i. 148. 3; इदमर्वाचामनुरोधेन LaŚabdeŚe. i. 340. 3; **2** [Abl.] due to adherence सत्यानुरोधात् समये वेलां स्वां नातिवर्तते Rāmā. ii. 12. 6; [Inst. ] due to adherence to प्राणानुज्झितवानरातिभवने सत्यानुरोधेन यः। तस्यानुजः … श्रीहर्षः … समाज्ञापयति EI. i. 72. 7; iv. 210. 6: vii. 157. 7; **3** [Inst.] by following or practising गुरुवृत्त्यनुरोधेन न किंचिदपि दुर्लभम् Rāmā. ii. 707* (8); SūktiRa. 74. 11; **4A** gratification or fulfilling (of one's interest, wish etc.) तस्याप्योदन एवेप्सिततमो न तु गुणेष्वस्यानुरोधः MahāBh. i. 332. 24 (*on* i. 4. 49); iii. 441. 12 (*on* viii. 3. 61); अनुरुध्यते आनुकूल्येन प्राप्यते इति अनुरोधः प्रयोजनम् PadMañ. *on* KāśiVṛ. *on* P. viii. 3. 61 (551. 9); **4B** consideration, regard गत्वापि तत्राप्यपरत्र गच्छति। एवं जने त्यागिनि कोऽनुरोधः BuddhaC. 9. 36; प्रियेष्वनित्येषु कुतोऽनुरोधः Saund. 5. 43; वेदोपकरणे चैव स्वाध्याये चैव नैत्यके। नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ManuSm. 2. 105; कश्चपलां राजलक्ष्मीं प्रत्यनुरोधोऽयमार्यस्य HarṣaC. 250. 7; व्रीहित्वं च प्रधाने साक्षात् … व्रीहिभिर्यजेतेति। तस्मान्न तेष्वनुरोधः कार्यः ŚābaBh. 1428. 20 (*on* vi. 3. 41); जनः कुमारस्य स्व इवान्तरात्मा क इवात्रानुरोधः Kād. 209. 21; मलीमसानां न स्वार्थात्कचिदतिरिच्यतेऽनुरोधः HarVi. 17. 57; PāṇḍaC. 6. 394; [Abl.] out of consideration, regard or respect युक्तं न वा युक्तमिदं विचिन्त्य वदेद्विपश्चिन्महतोऽनुरोधात् PañcT. (Kos.) 1. 113 (19. 19); धर्मानुरोधादितरपक्षावलम्बनद्वारेण मृत्युमङ्गीकरोमि Kād. 160. 6; तत्तत्कर्मव्यतिकरकृतः पारतन्त्र्यानुरोधात् सज्जाः सर्वे व्यवसितहठोन्मूलनाय प्रयत्नात् RājTa. (Ka. ) 2. 93; [Inst.] out of consideration or regard (राजा) भृत्यानामनुपरोधेन (v. l. °मनुरोधेन) क्षेत्रं वित्तं च ददद् ब्राह्मणेभ्यो यथार्हमनन्ताँल्लोकानभिजयति ĀpaDS. ii (10). 26. 1; VīraMi. (Rājanīti.) 139. 1; क्षीणस्य चैव क्रमशो दैवात्पूर्वकृतेन वा मित्रस्य चानुरोधेन द्विविधं स्मृतमासनम् ManuSm. 7. 166; ManvaVi. 837. 2 (*on* 7. 166); NītiPra. 8. 83; महाश्वेतानुरोधेन च विदितकादम्बरीचित्ताभिप्रायाः … प्रतीहार्यः … निवारयांचक्रुः Kād. 192. 13; युष्माकमनुरोधेन वयमस्य … उपसर्गं करिष्यामः TriṣaŚaPuC. i. 4. 418; **4C** obeying, obedience (केयूरकोऽब्रवीत्) यदियमागत्य मामवदत्तरलिका तत्कथय किमयं गुरुजनवचनानुरोधः Kād. 180. 9; [Inst. ] by obeying वत्स नैव नियुक्तेयं वनवासे मनस्विनी। पितुर्वाक्यानुरोधेन गतस्य (v. l. गच्छस्व) विजनं वनम् Rāmā. ii. App. I. 15 (5); **5** request, pressing or insistence सा तु तदनुरोधादविच्छिन्नबाष्पजलधारासंतानापि … शनैः प्रत्यवादीत् Kād. 135. 23; तुल्यायामदृष्टकल्पनायां कः संस्कारेऽनुरोधः SphoṭSi. 91. 2; अनङ्गमुनिमण्डलीविहितसहसंवासानुरोधमिव निर्दलितनिखिलाबाधम् … उद्यानमपश्यत् YaśasCam. i. 94. 2; क्रियासंतत्यविच्छेदार्थं नानध्यायानुरोधः ManvaVi. 180. 5 (*on* 2. 106); कस्तावत्तस्यानुरोधः CaitaCa. 159. 10 (7); सत्यां विभक्तौ … °दान्तत्वादिनिर्णयानुरोधस्य सत्त्वात् … इत्याशङ्कां मनसिकृत्याह VaiyāBhū. 131. 24(*on* 27); [Abl.] due to request, pressing or insistence पश्यन्नपि … कुठारम्। दत्तोत्सेकः प्रलपति याज्ञवल्क्यानुरोधात् मिथ्याध्मातः किमपि … क्षत्रबन्धुः MahāvīC. 3. 28; 5. 59 (4); भूपतिभिः … अस्मदीया धर्म्मगौरवादस्मत् अनुरोधाच्च स्वदत्तिरिवानुपालनीया EI. xi. 94. 18; viii. 142. 22; iii. 343. 24; आर्योऽनुरोधान्न युनक्ति यत्र तत्राहमम्बानियमात्स्वतन्त्रः RāmC. 3. 53; प्रथमपूज्योऽयं देवाकृतिरुदारधीः। यस्यानुरोधात्सुलभा दुर्लभापि कलावती SamaMā. 7. 31; रुचिरदेवेन सोऽर्थितः …। अनुरोधाच्च वत्सेशसूनुस्तत्प्रत्यपद्यत KathāSaSāg. xi. 1. 11; गोदावरीपर्यन्तं तु रामानन्दानुरोधात् तेषां सङ्गोऽङ्गीकृतः CaitaCa. 159. 8 (7); [Inst.] due to request, insistence or pressing सानुरोधेन सख्या वनभयेन च गमनाय समुत्तस्थौ भूयोऽपि परितापिनी

PadmP. (Ra.) 17. 112; सखीनामनुरोधेन सा किलानङ्गमोहिता। ... हारं दध्रे NavaSāC. 6. 110; ममानुरोधेन क्रियतामर्कचन्द्रयोः ... निर्विघ्ना गगने गतिः DaśāvaC. 5. 66; तथापि वोऽनुरोधेन चक्रिणोऽस्य महौजसः । मशकाः कुञ्जरस्येव करिष्याम उपद्रवम् TriṣaŚaPuC. ii. 4. 219; **6A** liking, fondness आधारानुरोधात् त्रिपुरविजयिनः पातु वो दुःखनृत्तम् Mudrā Rā. 1. 2; तस्याः पतिरपर इव पाकशासनः ... नाभ्युपेता पापरुच्यनुरोधस्य AvantiKa. 7. 15; लङ्केश्वर चिरसंचरणादत्र नः अनुरोधं तर्कये MahāviC. 7. 26 (3); योद्धव्यमनुरोधं च विमुच्य सह पाण्डवैः PāṇḍaC. 13. 124; सेनापते ममानुरोधान्नात्मानं व्यापादयिष्यसि Hitopa. 3. 136 (3); **6B** propitiation, conciliation or coaxing राजपुत्रेण फलभूतिस्तदैव सः। कृतानुरोधः प्रहितो ययौ कुण्डलयोः कृते KathāSaSāg. iii. 6. 205; शिवायास्ते मूर्तेः क इह महिमानं निगदतु ... परममनुरोधं गिरिभुवो विहाय श्रीकण्ठः शिरसि नियतं धारयति याम् GaṅgāL. 12; [Inst. ] by propitiation or conciliation धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम्। अतन्द्रितोऽनुरोधेन मार्गेणात्मवशं नयेत् Bhāg P. xi. 20. 19; काप्यपेक्षा मुमुक्षूणां न यद्यप्युत्सवादिषु। तथापि मेऽनुरोधेन तातोऽप्येवं करिष्यति TriṣaŚaPuC. ii. 6. 640; **7** following, i.e. basis or dependence 'बोध्यः' शिष्यस्तस्य 'अनुरोधः' तदवबोधनप्रतिज्ञापारतन्त्र्यं तस्मात् प्रतिज्ञादीनि पश्चापि प्रयोक्तव्यानि PramāMī. 52. 17 (*on* ii. 1. 10); [Inst. ] by following, on the basis or dependence कार्यमेव विनाश इति तु केनानुरोधेन व्यवहर्तव्यम् ĀtmaTaVi. 236. 2; **8** persistence, cf. **अनुरोधश्रम**; **9** respect, cf. **अनुरोधाभ्यधिक** [ Kośas give *anurodha* as a synonym of the following words: *anuvartana*, AmaK. 1492; KośaKaTa. 1. 5891; *anuvṛtti* , AbhidhāCin. 733; ŚabdaRa. (Vā.) 2572; ParaNā. 2345; KośaKaTa. 1. 5891; *prasāda*, Vaija. 243. 55] [reference or bearing of a rule, MW.]

²**अनुरोध** (anu-rodha) *m.* obstruction, hindrance सर्वाधिकारी ... बभूव ... सुप्रभवदेवनामा ...। विनानुरोधात् स्वहितेच्छयैव महीपतिर्यस्य वचश्चकार ŚiśuVa (Praśasti) 2 (comm. उपरोधभावमृते)

**अनुरोधक** (anurodha-ka) *adj.* compliant, complying with, obeying or conforming to, having regard to, caring for, APTE.

**अनुरोधगद्गद** (anurodha-gadgada) *adj*. stammering with respect or obedience मुनयो मय्यनुरोधगद्गदाः कथयन्ति RāmC. 13. 9.

**अनुरोधतन्तु** (anurodha-tantu) *m.* thread in the form of regard or respect यश्चानुरोधतन्तुस्तं चिरं लक्ष्म्यां निबद्धवान्। स च्छिन्नो रागवेगेन लासासौन्दर्यजन्मना RājTa. (Jo.) 478.

**अनुरोधतस्** (anurodha-tas) *adv.* **1** through conciliation, propitiation or soothing हा प्रिये वासवदत्ते, कामं दुष्करमेतदेव यदहं त्यक्तस्त्वया जीवितस्तन्नमास्त्वनुरोधतः प्रणयिनां को वा स्वतन्त्रो भवेत् TāpaVa. 4. 14; **2** at the insistence or request मुद्रैषा खेचरी प्रोक्ता भक्तानामनुरोधतः ŚivS. 4. 53; वररुचिस्तस्य प्रणतस्यानुरोधतः।. सर्वमाजन्मवृत्तान्तम् ... अब्रवीत् KathāSaSāg. i. 2. 29; xii. 4. 15; पारयित्वा ततो ध्यानं रामस्तस्यानुरोधतः। तद्दर्शितपथो भैक्ष्यं सार्थादिभ्योऽग्रहीत्तदा PāṇḍaC. 18. 185; **3** by accepting, i.e. complying तम् .. सा ज्ञात्वा निश्चलनिश्चयम्। एवं जन्मान्तरे भावीत्यभ्यधादनुरोधतः RājTa. (Ka. ) 3. 428; **4** in conformity or accordance with अस्तु प्रमाणमामेति राज्ञाप्यूचेऽनुरोधतः PārśvC. 3. 890; सट्टके स्त्रीप्रधानत्वाद्रूपकस्यानुरोधतः। नृपः स्त्रीवत्पठेत् NāṭaLaRaK. 2156; बीजप्रकाशनं यत्र ... भवेत्। तत् स्यात् प्रतिमुखं बिन्दोः प्रयत्नस्यानुरोधतः RasāSu. 220. 15 (3. 39)

**अनुरोधन** (anu-rodhana) *n.* **1A** means of causing love, means of winning the affection of आञ्जनस्य ...। तुरो भर्गस्य हस्ताभ्यामनुरोधनमुद्भरे AV. vi. 102. 3 (Sāy. वशीक्रियते अनेन); AV. (P.) xix. 14. 3; **1B** soothing, conciliating or coaxing नारीणामनुरोधने। ... नता कार्या नासिका नाट्ययोक्तृभिः NāṭyaŚā. 8. 133; **2** acceptance, i.e. compliance प्राप्तार्थग्रहणं द्रव्यपरिवर्तोऽनुरोधनम्। उपेक्षा ... अमात्यस्य दूषणम् Hitopa. 2. 93[Kośas give *anurodhana* as the meaning of *prasāda*, TrikāŚe. iii. 3. 208; NānārthāSaṁ. ii. 23. 143]

**अनुरोधपुर** (anurodhapura) *n.* name of a city सिंहलेन्द्रः ... अनुरोधपुरं धिनोति BālRā. 3. 41.

**अनुरोधवती** (anurodhavatī) *f.* name of a *surāṅganā*, i.e. celestial lady, Ind. St. 15. 444 [pw.; *nt.*]

**अनुरोधविधि** (anurodha-vidhi) *m.* act of conciliation or coaxing असौ ... सहधर्मिणीप्रणीतसमधिकानुरोधविधिरतिमहान्तमन्वभूदानन्दम् Yātrā Pra.2. 85 (5)

**अनुरोधविधित्सा** (anurodha-vidhitsā) *f.* [Inst.] with an intention to make propitiation or conciliation पाण्डुर्विमृश्यान्तेऽनुरोधविधिवत्सया (? धित्सया) ... प्रैषीत्कुन्तीं कंसान्तकान्तिकम् PāṇḍaC. 17. 195.

**अनुरोधविधिवत्सा** (anurodhavidhivatsā) [w. r. for अनुरोधविधित्सा] PāṇḍaC. 17. 195.

**अनुरोधविरोधविप्रमुक्त** (anurodhavirodha-vipramukta) *adj.* free from compliance and aversion (one of the pairs of opposites from which the perfected are freed) विप्रसन्नमनाः। षडङ्गमन्वागतः। अननुरोध (? अनुरोध)विरोधविप्रमुक्तः MahāVyu. 19. 75 [DBHS.]

**अनुरोधविरोधविग्रह** (anurodhavirodha-vigraha) *adj.* of the form of compliance and aversion परिस्रवाः। अनुरोधविरोधविग्रहाः सततं सुव्रत नैव नैव ते GiMs. iii (1). 11. 12.

**अनुरोधविरोधापगत** (anurodhavirodhāpagata) *adj.* free from the compliance and aversion (one of the pairs of opposites from which the perfected are freed) अनुन्नतोऽनवनतः। अनुरोधविरोधापगतः ŚikṣāSa. 203. 4 [DBHS.].

**अनुरोधशालिता** (anurodhaśāli-tā) *f.* the state of being possessed of consideration or regard अतिथे परिगृह्यतामियं समवस्थासदृशी ममार्हणा। महतामनुरोधशालिता विषमस्थे हि जनेऽतिरिच्यते RāmC. 13. 37; धिगुदारतां धिगनुरोधशालितामतिमानुषीम् ... स यदायतेर्जनवदस्ति भाजनम् RāmC. 20.32.

**अनुरोधशालिन्** (anurodha-śālin) *adj.* possessed of consideration or regard न जातु जानन्त्यनुरोधशालिनो भवादृशा वक्तुमसूनृतं वचः RāmC. 5.57.

**अनुरोधश्रम** (anurodha-śrama) *m.* exertion due to persistence or continuation दिशतु वः श्रेयोर्द्धनारीश्वरः। यस्यार्द्धे ललिताङ्गहारवलनैरर्द्धे च भीमोद्भटैर्न्नाट्यारंभरयैर्ज्जयत्यभिनयद्वैधानुरोधश्रमः EI. xiv. 159. 3.

**अनुरोधसत्त्व** (anurodha-sattva) *n.* possibility of persistence णोपदेशत्वषोपदेशत्वनिर्णयायेव यत्नान्तरापत्तिगौरवापत्तेश्चानुरोधसत्त्वादित्याशङ्क्यां मनसिकृत्याह VaiyāBhū. 131. 25 (*on* 27)

**अनुरोधा** (anurodhā) *f.* name of the queen of Candrodara and mother of Virādhita चन्द्रोदरे कालं प्राप्ते कर्मनियोगतः। वनितास्यानुरोधाख्या असूत च सुतम् ... (असौ)विराधिताभिख्यां प्रापितः PadmP. (Ra.) 9. 40, cf. **अनुराधा 2A**.

**अनुरोधाप्रतिरोध** (anurodhāpratirodha) *m.* name of a samādhi अनुरोधाप्रतिरोधो नाम समाधिः MahāVyu. 21. 103 [DBHS.]

**अनुरोधाभिधान** (anurodhābhidhāna) *n.* mention of practice अनध्यायानामनुरोधाभिधानात् स्नातकव्रतकरणेऽध्यापकं प्रति कथितानामनध्याया-नामध्ययनकारिणं ब्रह्मचारिणं प्रत्यन्वयोऽपेक्षितः ManvaVi. 180. 7 (*on* 2. 106)

**अनुरोधाभ्यधिक** (anurodhābhyadhika) *adj.* surpassing the (level of ) respect वयमप्सरसः परश्शताः शतमन्युप्रभृतीनुपास्महे। मरुतः सुकृतात्तुलाधृतादनुरोधाभ्यधिकेन चाटुना RāmC. 13. 5.

**अनुरोधार्थम्** (anurodhārtham) *adv.* for the sake of performance or practice श्राद्धे दैवकर्मणोऽनुरोधार्थं कुतपे प्रारम्भः ManvaVi. 432. 15 ( *on* 3. 256)

**अनुरोधावधानयोग्य** (anurodhāvadhāna-yogya) *adj.* fit for paying attention to request or solicitation प्रथमप्रेतपिण्डभुजि भुक्ते द्विजन्मनि ... अनुरोधावधानयोग्येषु हृदयेषु ... देवो हर्षः महाजनेन मौलेनाकाले आत्मानं वेष्ट्यमानमद्राक्षीत् HarṣaC. 241. 11.

**अनुरोधिता** (anu-rodhitā) *adj.* (*f.*) which is followed or adhered to वरं मुख्यार्थानुरोधेन विधानमेव कल्प्यताम्। एवं सति श्रुतिरनुरोधिता भवति TātpaṬ. (Vā.) 630. 18 (*on* iv. 1. 60)

**अनुरोधिता** (anurodhi-tā) *f.* the state of being one who has acceptance or compliance with उक्तः प्रियया राजा पापभीतोऽपि तत् पुनः। अङ्गीचकार धिगहो कष्टां स्त्रीष्वनुरोधिताम् KathāSaSāg. iii. 6. 197.

**अनुरोधिन्** (anu-rodhin) *adj.* [*f.* -ī] [P. iii . 2. 142; JaineVyā. 114. 35 (*on* ii. 2. 118); CāndraVṛ. *on* i. 2. 96; Kātan. iv. 4. 22; Kātan Vṛ. *on* iv. 4. 22; DEBRU. 345] **1A** following, i.e. approaching ऋतुस्नातां सतीं भार्यामृतुकालानुरोधिनीम्। अतिवर्तेत दुष्टात्मा यस्यार्योऽनुमते गतः Rāmā. ii. 1802* (9); **1B** following, i.e. depending upon अविद्याकृतनामरूपोपाध्यनुरोधीश्वरो भवति व्योमेव घटकरकाद्युपाध्यनुरोधि BrahmSūBh . (Śaṅ.) 315. 16 (*on* ii. 1. 14); **2** observing, practising तदेवमेतं त्वमनुव्रता सती पतिव्रतानां समयानुवर्तिनी (v.l. समयानुरोधिनी) Rāmā. ii. 2377* (2); **3A** having due regard or consideration for षट् सर्वरोगाणां प्रोक्ताः सम्यगुपक्रमाः। साध्यानां साधने सिद्धा मात्राकालानुरोधिनः CaraS. i. 22. 42; **3B** conciliating भवतु भवतीह मयि सततमनुरोधिनी GītGo. x. 19. 3; **4A** conforming to, according to लौकिकानि

वचनानि पुरुषाधीनरचनतया तदभिप्रायानुरोधीनि TattvBi. 137. 4; ततः स पालको भ्रात्रा पश्चादेत्य न्यवर्त्यत। गोपालकेन वाक्यज्ञः पितृकार्यानुरोधिना Kathā SaSāg. ii. 5. 30; **4B** supporting ऐक्यस्य ब्रह्मभेदानङ्गीकारात्, विरोध्यनुरोधिनां सर्वेषां ब्रह्मणि कल्पितत्वेन तज्ज्ञानबाध्यत्वेन व्याप्तीनामसिद्धेः Advai Si. 791. 11; **5** compliant, obliging अनुरोधी नृपः स्त्रीभिराक्रीडी भजते जलम् Rāvaṇā. 11. 25.

**अनुरोधिनी** (anurodh-inī) *adj.* (*f.*) obstructing, i.e. concealing गिरा सत्यानुरोधिन्या सा तं प्रत्यब्रवीत्पतिम् KathāSaSāg. iii. 3. 141.

**अनुरोध्य** (anu-rodhya) *adj.* [*f.*-ā] **1** to be practised, i.e. to be administered दोषतारतम्याद्दण्डतारतम्यमनुरोध्यम् DaṇḍaVi. 82. 20; **2** to be fulfilled, to be gratified स्वतन्त्रा पुरुषकामनानुरोध्येति स्वतः प्रवृत्तां पुरुषकामनामेव खल्वनुवदन्त्यधिकारवाक्यस्थाः कमिश्रुतयः Śivārka MaDī. ii. 417. 8 (*on* iii. 4. 50); **3** to be accepted or admitted यद्युपांशुत्वस्य निरवकाशत्वं स्यात्तदा ... दुर्बलमप्युपांशुत्वमनुरोध्यं स्यात् MayūMāli. 115. 16 (*on* ii. 1. 13); **4** to be conformed to or accorded to तत एव प्रकरणमपि नानुरोध्यम् MayūMāli. 260. 8 (*on* iii. 4. 1); 576. 6 (*on* ix. 1. 2); **5** to be considered, cf. **अनुरोध्यत्व 2**; **6A** to be adhered to, cf. **अनुरोध्यत्व 4A**; **6B** to be followed, cf. **अनुरोध्यत्व 4B**.

**अनुरोध्यत्व** (anurodhya-tva) *n.* **1** the state of being what is to be practised or observed व्यवस्थिते प्रायश्चिते यत्र विशेषवचनं नास्ति तत्र दण्डोऽप्येवमेव द्रष्टव्यः। ... उभयत्र व्यवधानाव्यवधानयोरनुरोध्यत्वात् DaṇḍaVi. 77. 8; **2** the state of being what is to be considered or regarded न चेदं युक्तमेकत्रविधावपरविध्यविरोधस्यानुरोध्यत्वात् विधिनिषेधयोर्वैधयोरेकतरेण स्पृष्टेऽन्यतरानवकाशात् DaṇḍaVi. 241. 21; **3** the state of being what is to be accepted or admitted न च ब्रह्मशब्दस्वारस्यानुरोधादिदंशब्दस्य प्रसिद्धार्थपरत्वं हातव्यम्। प्रथमचरमश्रुतयोः प्रथमश्रुतस्यैवानुरोध्यत्वात् Śivārka MaDī. i. 87. 18 (*on* i. 1. 1); लोलुवादौ यङ्लुकः साधुत्वप्रतिपत्त्यर्थं शिष्टप्रयोगस्यावश्यमनुरोध्यत्वेन शिष्टप्रयोगदर्शनसापेक्षया अङ्गवृत्तपरिभाषया लोलुवादेरन्यथासिद्धिर्वक्तुमुचिता PāṇiTaVāNaMā. 67. 21; (काव्यम्) काव्यत्वाभावेन महाकविभिः ... काव्येषु निबद्धमपि नास्माभिर्गणितं वस्तुस्थितेरेवानुरोध्यत्वात् RasGaṅ. 24. 2; **4A** the state of being what is to be adhered to or resorted to न च न्यायविरोधमुपन्यस्य स्मृतिवचनं कथमुपेक्ष्यत इति वाच्यम्। ... परस्परपराहतेषु, तेषु (स्मृतिवचनेषु) न्यायस्यानुरोध्यत्वात् ŚivārkaMaDī. i. 261. 30 (*on* i. 1. 22); **4B** the state of being what is to be followed, i.e. depended upon वैशब्दमात्रस्य स्वारस्यभङ्गोऽस्तु परमेश्वरविषयाणामुपक्रमोपसंहारपरामर्शानामनुरोध्यत्वात् ŚivārkaMaDī. i. 547. 12 (*on* i. 4. 19)

**अनुरोध्यत्वापत्ति** (anurodhyatvāpatti) *f.* undesired contingency of the state of being what is to be considered प्रपञ्चसत्यत्वादिवादिभिस्तदसत्यत्वाभ्युपगमे दोषाणामप्युच्यमानत्वेन तेषामप्यनुरोध्यत्वापत्त्या अनेकान्तवादिनः तत्तद्वाद्युक्तदोषभाक्त्वस्यापि प्रसङ्गात् ŚivārkaMaDī. ii. 102. 28 (*on* ii. 2. 31)

**अनुरोह** (anu-rohá) *m.* **1** act of increasing or growing afterwards, act of mounting after प्ररो॒हों॑ऽस्यनुरो॒हों॑ऽसि TaiS. IV. iv. 1. 3; अनू (v. l. नु)-रोहैणानू(v. l. नु)रोहायानूरोहम् MaiS. ii. 8. 8 (ii. 113. 2); KāṭhS. 17. 7 (i. 250. 14) (v. l. नु); अनुरोहोऽस्यनुरोहाय त्वा सवितृप्रसूता बृहस्पतये स्तुत PañcBr. i. 10. 10; GopBr. ii. 2. 14 (179. 15); अनुरोहोऽस्यनुरोहाय त्वानुरोहं जिन्व इति VaitāSū. 26. 11; **2** (anuroha) name of an animal (recommended for partaking as food) उपवासस्तथा कार्यः सूनामांसाशने भवेत्। अजाविकानुरोहांश्च पृषतान्महिषांस्तथा। ... भक्षयेत् ViṣṇuDhaP. ii. 73. 45 [mounting or growing up to, MW.]

**अनुरोहण** (anu-rohaṇa) *n.* [enumerated in the *utthāpanādi gaṇa*, GaṇRa. 6. 366 (397)] act of increasing or growing afterwards उत्थापनादिभ्यश्छः। उत्थापनादिभ्यस्तदस्य प्रयोजनमित्यस्मिन् विषये छो भवति। उत्थापनीयम् ।... उत्थापन। ... अनुरोहण CāndraVṛ. *on* iv. 1. 132.

**अनुरोहणीय** (anu-rohaṇīya) *adj.* [Vār. 1 *on* P. v. 1. 111; CāndraVyā. iv. 1. 132; SaraKaṇṭhā. (Gr.) v. 1. 121; Debru. 209] serving the purpose of ascending or mounting after (छः) उदुपाभ्यां परात् स्थापेरनोः ... रुहेः ... प्रयोजनमस्य। ... अनुरोहणीयम् GaṇRa. 6. 366 (397)

**अनुरोहत्** (anurohat) *m.* name of a man, pw.

**अनुर्याजाह्व** (anuryājāhva) w. r. [for अनुयाजाह्व, Viśva.] AV. (P.) xvi. 52. 3.

**अनुर्वीकुर्वाण** (anurvī-kurvāṇa) *adj.* making (wide into) non-wide, i.e. narrowing अनूपान् जङ्गलीकुर्वन् जङ्गलानप्यनूपयन्। उर्वीमनुर्वीकुर्वाणः ...। व्यक्तशक्तिर्जरासंधः PāṇḍaC. 12. 321.

**अनुर्ह्राद** (anurhrāda) *m.* name of a *yakṣa* (father of Guhyakā) यक्षो राजतनाभाख्यः ...। अनुर्ह्रादसुता भार्या तस्यासीन्नृप गुह्यका ViṣṇuDhaP. i. 197. 10.

**अनुलक्ष्** (anu-lakṣ-) x. ā. **1** to observe subseqently स निर्जितानुपाश्रौषीत्पाण्डवाननुलक्षये MahāBhā. iii. 39*(6); **2** to characterise, cf. **अनुलक्षित**; **3** to know, cf. **अनुलक्ष्य 2**; **4** to aim at, cf. **अनुलक्ष्य 1**.

**अनुलक्षण** (anu-lakṣaṇa) *n.* secondary characteristics जात्यादीनाम् ... तेषामपि चत्वार्यनुलक्षणानि भवन्ति AbhidhKoBh. 76. 11(*on* 2. 46); सन्ति चोत्पादादीनामुत्पादादयो न चानवस्थाप्रसङ्गो लक्षणानुलक्षणानां परस्परनिष्पादकत्वात् PrasaPa. 148. 2.

**अनुलक्षित** (anu-lakṣita) *adj.* characterised by, i.e. possessing पाणौ (v.l.पाणी) पृषत्का लिखिता ममेमे धनुश्च संख्ये विततं सबाणम् (v.l धनुःशराभ्यामनुलक्षिताविमौ) MahāBhā. viii. 49. 95.

**अनुलक्षीकृ** (anulakṣī-kṛ-) viii. u. to aim at, to refer to, cf. **अनुलक्षीकृत्य**.

**अनुलक्षीकृत्य** (anulakṣīkṛt-ya) *ger.* having aimed at, having referred to शिष्यमनुलक्षीकृत्य ब्रूते अध्यापयतीत्यर्थः ViraMī. (Paribhāṣā.) 89. 2.

**अनुलक्ष्मणम्** (anulakṣmaṇam) *adv.* [ P. ii. 1. 6] following or after Lakṣmaṇa दशमुखस्त्वरंस्तमभिवीक्ष्य रामं रुषा व्रजन्तमनुलक्ष्मणं जनकजां जहाराश्रमे KalkiP. iii. 3. 36.

**अनुलक्ष्य** (anu- lakṣya) *adj.* **1** which conforms to the purpose or aim, what is to be aimed at अनुलक्ष्याख्यानं स्यात् ...। लक्ष्यमनुगतम् अनुलक्ष्यम् GaṇRa. 4. 308 (348) [ *but ind.* participle, conforming to, MW.]; **2** to be perceived or known अस्याः किल मध्यभागः। अणुः परं योगिदृशानुलक्ष्यः PadyaVe. 209.

**अनुलक्ष्य** (anu-lakṣya) *n.* visible mark ( of boundary) (मर्यादायाः प्रभेदे तु ... दण्डा अधमोत्तममध्यमाः) तुशब्देनानु-लक्ष्यभेदनव्यवच्छेदः ViraMī. 636. 9 (*on* 2. 155)

**अनुलक्ष्याख्यान** (anulakṣyākhyāna) *n.* narration which conforms to the purpose or aim अनुलक्ष्याख्यानं स्यात् ...। लक्ष्यामनुगतम् अनुलक्ष्यम् GaṇRa. 4. 308 (347)

**अनुलग्न** (anu-lagna) *adj.* **1** attached to, connected with मुखात्तस्य निरगात्पावकध्वजः। अनुलग्नश्च तस्याग्निरुज्ज्ञगान(?म) निरन्तरम् PadmP. (Ra.) 41. 85; **2** followed, i.e. coming after तन्मार्गतोऽनुलग्नं हि क्षौल्लकं युगलं परम्। ... दृष्टं नरैः Bṛ KathāK. 73. 252 [intent on, pursuing after, MW.; Apte]

**अनुलग्न** (anu-lagna-) *denom.* to cling on behind तेषां पश्चानां वाणिजकशतानां यो वा तस्य हयराजस्य ... महाकारपृष्ठिस्मिन्तस्य अनुलग्निष्यति MaVastuAva. iii. 73. 4[DBHS.]

**अनुलग्नय** (anu-lagnaya-) *denom.* to cling on behind तेषां पश्चानां वाणिजकशतानाम् ... तेषां पि च पुरुषाणां परस्परस्य अवलम्बिष्यति (v.l. अनुलग्नयिष्यन्ति) MaVastuAva. iii. 73. 3.

**अनुलग्नसितोपलांशु** (anulagnasitopalāṁśu) *m.* ray of adjacent or attached white rock परमशितिशिलीघरश्मिभिन्नं क्वचिदनुलग्नसितोपलांशुयुक्तम्। जलमिह सितदन्ति भाति बाढं हरिहरयोरिव संगतं शरीरम् PadmP. (Ra.) 42. 65.

**अनुलङ्घ्** (anu-laṅgh-) i. ā. to cross over, i.e. to transgress कम्पते न तरोः पत्रम् ...। शासनेन विना यस्य तं कालं कोऽनुलङ्घते ParamāKā. 45. 41.

**अनुलप्** (anu-lap-) i. p. **1** to talk to, to converse with जटायुरिव लक्ष्यते। तदेनमनुपालयामि (v. l. अनुलपामि) तावत् AnargharaRā. 5. 5 (33); **2 A** to repeat after, i.e. to imitate (in talking), cf. **अनुलपन A; 2B** to sing or produce (music) in accordance with, cf. **अनुलपन B** ; **2C** to utter repeatedly, cf. **अनुलप्य.**

**अनुलपन** (anu-lapana) *n.* **A** act of repeating after, i.e. imitation (in talking) पण्याङ्गनाजनस्य कलगलोल्लसल्लोहलोल्लपितानुलपनपरसारिकाशावसंकुलकुलायकरलोपकण्ठजरठिताभिनवाङ्गनारतिचेतसि (रमन्ते कामिन्यः) Yaśas Cam. i. 102. 3; **B** act of singing or producing (music) in accordance with, i.e. in harmony with (जातिसाधारणमेकांशानामविशेषाज्जातीनाम्) एकोंऽशो यासां जातीनां तासां यो विशेषहीनः प्रयोगः वाद्यंशानुलपनलक्षणान्तरमार्गरूपस्तुल्यः AbhinBhā. iv. 33. 2 (*on* 28. 34)

**अनुलप्य** (anulap-ya) *ger.* having uttered after, having repeated after स्नात्वा च ललितातीर्थे ...। लभेत्सर्वत्र लालित्यं यद्वा तद्वानुलप्य च SkandP. iv. 70. 21.

**अनुलब्ध** (anu-labdha) *adj.* **A** understood, apprehended (ब्रह्मचारी) स यथा श्रेयस उपद्रष्टैवं हि शश्वदीश्वरोऽनुलब्धः पराभवितोः Jaimi UBr. i. 54.

**अनुल्लिखत्** (an-ullikhat) *adj.* not mentioning, i.e. not referring to (as objects) न ह्येते विकल्पाः कंचिदर्थभेदमनुल्लिखन्त एव उत्पद्यन्ते ĀtmaTaVi. 192. 8; NyāyVārPari. 722. 9; शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति ... कोऽर्थः। किं किमप्यमनुल्लिखन् असदेवोल्लिखन्वा NyāySu. (Ja.) 58A. 7 (*on* i. 1. 1); Nyāyāmṛ. 419A. 5.

**अनुल्लिखित** (an-ullikhita) *adj.* **1A** not mentioned, not referred to (earlier) ननु कोऽयं तद्वान्नाम ... सामान्याश्रयः कश्चिदनुल्लिखितशाबलेयादि-विशेषस्तद्वानित्युच्यते NyāyMañ. i. 296. 2; अवयवविभागो ह्यवयविनो विभागहेतुस्तस्मिन् बुद्ध्या समुल्लिख्यमानेऽवयवविनाशोऽपि नानुल्लिखितो भवेत् NyāyMañ. ii. 115. 24; **1B** not expressed clearly षड्जादयो गान्धर्वशास्त्राभ्यासात् प्रागपि स्फुरन्तस्तद्रूपेणानुल्लिखिता न श्रोत्रेण व्यज्यन्ते Vedānt Ka. 30. 13 (*on* i. 1. 1); **1C** not apprehended, not thought of यदनुल्लिखितं मनोरथैः ...आसादितमनायासेन मया स्वयमागमनं भगवतः NīlaVi. 63. 5; **2** not drawn, cf. **अनुल्लिखितचित्र; 3** not ground or cut, cf. **अनुल्लिखितरत्नप्रभा**.

**अनुल्लिखितचित्र** (anullikhita-citra) *n.* picture which is not drawn संसृतिः। ... अनुल्लिखितचित्रस्य चित्रव्याप्तेव भित्तिभूः YogVā. ii. 17. 38.

**अनुल्लिखिततदंश** (an-ullikhitatadaṁśa) *adj.* which has not referred to that aspect नेह भूतले कुम्भ इत्यनुल्लिखिततदंशस्यापि स्मरणस्योपगमात् Nyāy-Ma. 62. 4.

**अनुल्लिखिततानधोरणी** (anullikhita-tānadhoraṇī) *f.* series of notes which are not expressed clearly षाडवौडवोवविभेदि सर्वमप्यवलम्ब्य रागकुलमस्तसंकरम्। स जगावनुल्लिखिततानधोरणीमधुरम् ŚivLī. 18. 49.

**अनुल्लिखितत्व** (anullikhita-tva) *n.* the state of being not mentioned or not referred to (वासनायाः) तस्याः मूलकृतानुल्लिखितत्वेनाप्रयोजकत्वादङ्गुलिविन्यासमारा-दुपकारकं कुर्वन्मूलोक्तां वासनां संस्मरेत् SetuBa. 217. 16.

**अनुल्लिखितपूर्व** (anullikhita-pūrva) *adj.* not mentioned or referred to earlier अन्यैरनुल्लिखितपूर्वमिदं ब्रुवाणो नूनं स्मृतेर्विषयतां विदुषामुपेयाम् VyaktiVi. 138. 3.

**अनुल्लिखितरत्नप्रभा** (anullikhitaratna-prabhā) *f.* lustre of the jewel which is not ground or cut न ह्यनुल्लिखितरत्नप्रभायाः प्रसरोपलम्भाभावान्नास्तित्वम् ŚrutaPra. iB. 186. 10 (*on* i. 1. 10)

**अनुल्लिखितरूपाभाव** (anullikhitarūpābhāva) *m.* absence of the form which is not mentioned or referred to (earlier) (प्रत्यनीकधर्मान्) न चेदुल्लिखेत् कथं तदाकारं नाम्। स्वसंवेदनस्यानुल्लिखितरूपाभावात् Ātma TaVi. 434. 5.

**अनुल्लिखितविशेष** (anullikhita-viśeṣa) *adj.* particularity of which is not mentioned or referred to (earlier) अक्षार्थयोगे सति दर्शनम् अनुल्लिखितविशेषस्य वस्तुनः प्रतिपत्तिः PramāMī. 21. 7 (*on* i. 1. 26); उपस्थानसंबन्धाय प्रकृतानामपि अनुल्लिखितविशेषस्य संबन्धमात्रस्य कल्पनीयत्वात् Mayū Māli. 220. 1 (*on* iii. 2. 8)

**अनुल्लिखितशब्दक** (anullikhitaśabda-ka) *adj.* having words which are not mentioned अनुल्लिखितशब्दकेष्वपि प्रत्ययेष्वन्ततः सामान्यशब्दसमुन्मेषसंभवात् NyāyMañ. i. 75. 30; सर्वः प्रत्यय उपजायमानो नानुल्लिखितशब्दक उपजायते NyāyMañ. ii. 99. 12 .

**अनुल्लिखिताख्य** (anullikhitākhya) *adj.* **A** whose eminence is not mentioned (specifically), i.e. difficult to mention तत्रानुल्लिखिताख्यमेव निखिलं निर्माणमेतद्विधेः ... तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् VakroJī. 18. 14; **B** (an-ullikhitākhya) not having any name mentioned (for comparison) VakroJī. 18. 14; केचित्तु अनुल्लिखिताख्यम् अनिर्दिष्टनामकं न खलु तत्सदृशं किंचिदस्ति यस्य नाम्ना स मणिर्व्यपदिश्येतेत्यर्थ इत्याहुः comm. on KāvPra. 394. 1.

**अनुल्लिखितार्थ** (anullikhitārtha) *adj.* purpose of which is not apprehended, i.e. not known यत्रानुल्लिखितार्थमेव निखिलं निर्माणमेतद्विधेः ... मणेरश्मत्वमेवोचितम् KāvPra. 394. 1 (comm. अविभावितः अर्थः प्रयोजनं यस्य)

**अनुल्लिखितार्थ** (anullikhitārtha) *m.* **A** object which is not mentioned or referred to अनुल्लिखितार्थलाभसमुल्लासेन ... आयस्यद्भिरपि सुरासुरैरालोकमानः सागरमथनसंरम्भमानन्द गोविन्दः NīlaVi. 88. 10; **B** object which is not expressed clearly प्रमित्यानुल्लिखितार्थवैपरीत्यभावविवक्षायां तु प्रमाया एव लक्ष्यमाणत्वात् KhaṇḍanKhā. 432. 4 (comm. अप्रकाशितम्)

**अनुल्लिखितोभयकोटि** (anullikhitobhayakoṭi) *f.* both alternatives of arguments which are not expressed clearly अनालिङ्गितो (v. l. अनुल्लिखितो) -भयकोट्यनवधारणज्ञानमनध्यवसायः SaptaPa. 168 (50)

**अनुल्लिख्य** (anu-ullikhya) *ger.* **1** not having vomitted विदग्धं चाहारजातमनुल्लिख्य विदाहीन्यभ्यवहरतः ... कुष्ठान्यभिनिर्वर्तयन्ति CaraS. ii. 5.6 (1941 Ed.); अनुल्लिख्य विदग्धं च विदाहि च समश्नतः जन्तोः संजायते कुष्ठम् BhelaS. 58. 9 (2.5); **2** not having apprehended or perceived अहं ब्रह्मेत्यनुल्लिख्य ब्रह्मास्तीत्येवमुल्लिखेत्। परोक्षज्ञानमेतन्न PañcDa. 7. 51.

**अनुल्लिख्यमानत्व** (anullikhyamāna-tva) *n.* the state of not being mentioned or referred to (otherwise) ज्ञानान्तरेण तथैवोल्लिख्यमानत्वं विपरीततया वानुल्लिख्यमानत्वमविसंवादित्वम् TattvPradī. (Ci.) 226. 2.

**अनुल्लेख** (an-ullekha) *m.* **1** non-mention, non-reference अथ वस्तूनाम-वस्तूनां च बाह्यानामनुल्लेखः ŚatDū. 106. 23; अनुल्लेखस्तु रूप्यादिधीरित्युक्त्या निबर्हितः NyāyPari. 52. 3; अपरोक्षज्ञानविषयेऽर्थे परोक्षत्वजात्याधारज्ञानोदयेऽप्यपरोक्षस्य परोक्षत्वेनानुल्लेखेनाप्रामाण्यानापत्तेः Nyāyāmṛ. 628A. 13; प्रकारतया ज्ञानरूपोपाधि-संबन्धस्यानुल्लेखेऽपि ... तदुल्लेखानपायात् GuruCandr. i. 159. 1; **2** non-apprehension, non-cognition संदेहाभावस्त्वनुल्लेखेन निश्चयेन वा NyāyPari. 253. 7; नन्वेकैका एव नीलपीतत्वादिव्यक्तयो नित्याः... इति चेन्न ... समवायस्य तत्रानुल्लेखात् Upask. 286. 2 (*on* vii. 1. 6); अपरोक्षत्वयोग्यस्य न परोक्षमतिर्भ्रमः। परोक्षमित्यनुल्लेखात् PañcDa. 7. 54.

**अनुल्लेखपक्षपरिशेष** (anullekhapakṣa-pariśeṣa) *m.* remnant of the view of non-reference or non- mention अस्तु बाह्यानुभवस्यैवावस्तुत्वमिति चेन्न ...। तदतिरिक्तस्य तु त्वदभिमतस्य ...। सिद्धावपि तस्यैव बाह्यानुभवाभावे तद्व्यतिरिक्तानामपि बाह्यानुभवभेदानामसंभवे पुनरनुल्लेखपक्षपरिशेषात् ŚatDū. 106. 28.

**अनुल्लेखप्रसङ्ग** (anullekha-prasaṅga) *m.* undesired occasion for non-reference भूतभविष्यतोः कदाचित्तदनुल्लेखप्रसङ्गात् ŚatDū. 141. 21.

**अनुल्लेखमात्र** (anullekha-mātra) *n.* mere non-apprehension, non- perception व्यक्त्यनुल्लेखमात्रेण भ्रमत्वे स्वर्गधीरपि। भ्रान्तिः स्याद् व्यक्त्यनुल्लेखात् सामान्योल्लेखदर्शनात् PañcDa. 7. 53.

**अनुल्लेखिन्** (an-ullekhin) *adj.* which has no mention, i.e. which is not commonly used अन्तयमकम् ... अव्यपेतमाद्यन्तयोरनुल्लेखीति नोदाहियते SaraKaṇṭhā. 201. 19.

**अनुल्लोकित** (an-ullokita) *adj.* which is not, i.e. cannot be looked up (reached by vision) अनुल्लोकितमूर्धानि सुरेहि असुरेहि च। महाप्रभा हि ते बुद्धा अतिगृह्णन्ति रश्मिभिः MaVastuAva. ii. 307. 5 [DBHS.]

? **अनुव** (anu-vá) *adj.* [P. vi. 2. 144] which blows, i.e. comes after प्रवांयांहे ऽहर्जिन्वानुवांय रांत्र्यै रांत्रीं जिन्व MaiS. ii. 8. 8 (ii. 112. 8) (better **अनुवा**) [VIŚVA.]

**अनुवंश** (anu-vaṁśa) *m.* [enumerated in the *digādigaṇa*, GaṇPā. 116. 28; JaineVyā. 197. 29 (*on* iii. 3. 29); CāndraVṛ. *on* iv. 3. 54; SaraKaṇṭhā. (Gr.) iv. 3. 149; GaṇRa. 5. 339 (376 - 377); Prasā. i. 771. 19; also enumerated in the *parimukhādigaṇa*, JaineVyā. 198. 10 (*on* iii. 3. 34); KāśiVṛ. *on* iv. 3 59; GaṇRa. 5. 342 (379); Prasā. i. 773. 13] **1A i** geneological list or table, chronicle मतिनारः खलु सरस्वत्याम् ... पुत्रमजनयत्तंसुं नाम। अत्रानुवंशो भवति MahāBhā. i. 90. 27; i. 90. 47; यत्रानुवंशम् ...जामदग्न्यस्तथा जगौ MahāBhā. iii. 85. 11; iii. 114. 10; अनुवंशं पठतः शृणु मे कुरुनन्दन MahāBhā. iii. 129. 8 (BhārBhāDī. परंपरागतमाख्यानश्लोकम्) (*but* APTE *adv.*); **1Aii** lineage or family history, i.e. Purāṇa अनुवंशे पुराणज्ञा गायन्तीति परिश्रुतम्। गुणान् देवावृधस्य HariVaṁ. 27. 12; MatsyaP. 44. 57; **1B** collateral branch of a family, modern race यायातमपि वंशस्ते समेष्यति च सदनम्। अत्र वंशे (v. l. अनुवंशे) च वंशस्ते सोमस्य भविता HariVaṁ. App. I. 18. 67 (9 **(2)); **1C** succession of teacher and student अनुवंशे भवौ शिष्याचार्यपरम्परासु वर्तमानौ श्लोकाख्यौ ... भवतः AbhinBhā. i. 290.9 (*on* 6. 31); **2** (Arch.) **A** name of a particular line (drawn on both sides of the diagonals in a site) महेन्द्रधर्मेशपदप्रविष्टं गृहक्षताप्याख्यपदप्रविष्टम्। पुष्पादि-दन्तेन्दुपदस्थितं च भल्लाटमित्रस्थमिमेऽनुवंशाः VāstuVi. 6. 26; शरीरं वास्तुपुंसोऽस्य ... कल्पयेत सिरावंशानुवंशांश्च SamarāSū. 12. 24; 12. 37 ½; ŚilpaRa. i. 13. 17 ½; यास्तिर्यगायता रेखास्तेऽनुवंशाः प्रकीर्तिताः SamarāSū. 12. 28; **2B** secondary rafter गवां नाशः शिरोवेधे वंशवेधे मृतिः ... अनुवंशे भयं भवेत् VāstuVi. 6.29; ŚilpaRa. i. 13. 21 ½; अनुवंशमनुप्राप्ता जयन्त्यो यदि मन्दिरे। वित्तायुषोऽस्तदाल्पत्वम् SamarāSū. 48. 97; **2C** small joist, small beam प्राग्वंशं चानुवंशं च नालिकेरच्छदादिभिः ... प्रच्छादयेत् ĪśānŚiPa. ii. 32. 119; MayaMa. 25. 27; cf. **अनुमार्ग 2; 3** back- bone, cf. **अनुवंशगत.**

**अनुवंशगत** (anuvaṁśa-gata) *adj.* placed in the direction of the back-

-bone or spine अस्याः प्रणयेन्नेत्रमनुवंशगतं सुखम् CaraS. viii. 9. 68 (1941 Ed.)

**अनुवंशचरित** (anuvaṁśa-carita) *n.* historical account of a collateral branch of a family सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुवंशचरितं पुराणं पञ्चलक्षणम् SkandP. vii (1) . 2. 84; कथितो भवता सर्गः प्रतिसर्गस्तथैव च। वंशानुवंशचरितं पुराणानामनुक्रमः SkandP. vii (4). 44. 23 [ AbhidhāCin. 252]

**अनुवंशद्वय** (anuvaṁśa-dvaya) *n.* pair of secondary rafters अनुवंशद्वयस्यापि संधिर्लाङ्गलमुच्यते VāstuVi. 6. 28; ŚilpaRa. i. 13. 20 ½.

**अनुवंशनिहिता** (anuvaṁśa-nihitā) *adj. (f.)* placed (right) below the secondary rafter शय्यानुवंशवि (v. l. नि) हिता गृहिणां कुलनाशिनी SamarāSū. 13. 19.

**अनुवंशपुराणज्ञ** (anuvaṁśapurāṇa-jña) *adj.* who knows, i.e. is expert in the historical account of the collateral branch of a family तस्य बभ्रुरिति ख्यातः पुण्यश्लोको नृपोत्तमः। अनुवंशपुराणज्ञा गायन्तीति परिश्रुतम् LiṅgaP. i. 69. 5.

**अनुवंशम्** (anuvaṁśam) *adv.* [CāndraVṛ. *on* iii. 3. 23] **1A** (right) below the secondary rafter नार्द्रपादः सुप्यात्। नोत्तरापरशिराः। न नग्नः। नार्द्रवंशे (v.l. नानुवंशम्) ViṣṇuSm. 70. 4; BṛSaṁ. 53. 124; ĪśānŚiPa. i. 9. 185; महावेश्मनि नानुवंशम् ... शयनं विधेयम् KalyāKā. 7. 22; अनुवंशं न भुञ्जीत ... नाशोऽनुवंशं रोगाः स्युः SamarāSū. 48. 105; 33. 72; **1B** along the lines व्यावृत्तपृष्ठमनुवंशमग्रतः पार्श्वाभ्यां पृष्ठतो भग्नरक्षा भग्नानुपातः इत्यश्वयुद्धानि ArthŚā. iii. 135. 2 (10. 5); **1C** according to race or family, MW.; **2** in the direction of or along the back-bone प्रणिदध्यात् ... गुदे नेत्रम् ...। अनुवंशं यथा मायुबस्तेश्चाबन्धनाद् भिषक् Hastyāyur. 599. 10 (4. 5)

**अनुवंशविहिता** (anuvaṁśa- vihitā) *adj. (f.)* prepared, i.e. placed (right) below the secondary rafter शय्यानुवंशविहिता... कुलनाशिनी SamarāSū. 13. 19.

**अनुवंशश्लोक** (anuvaṁśa-śloka) *m.* verse referring to geneological list अत्रानुवंशो (v. l. °नुवंशश्लोको) भवति MahāBhā. i. 90.8; i. 90. 30 (v. l. ); अत्रानुवंशश्लोकोऽयं गीतस्तस्मिन् पुराभवत् MatsyaP.44. 19; 50. 88; 271. 15; VāyuP. ii. 33. 19; ii. 37. 275; BrahmāṇḍP. ii. 70. 20; ii. 74. 105.

**अनुवंशा** (anu-vaṁśā) *adj. (f.)* **1** parallel to the secondary rafter गृहे सौम्ये पश्चिमपूर्वायतां तथानुवंशां पूर्वदक्षिणयोर्द्वारयुतामग्निशालां कल्पयति VaikhāŚS. 1. 2; **2** who is according to race or family अनुकूलामनुवंशाम् ... भार्यां विन्देत् MahāBhā. xiii. 44. 54;

**अनुवंशा** (anuvaṁśā) *f.* name of a daughter of Prāvā अनवद्यामनुव (v. l. वं) शामनूनाम् ... प्रावा व्यजायत MahāBhā. i. 59. 44.

**अनुवंशाश्रिता** (anuvaṁśāśritā) *adj. (f.)* resting on or placed along the secondary rafter मूषा स्यात् कुड्यजैः ... अनुवंशाश्रिते मूषे स्वस्तिके ... स्यातामवकोशिमे SamarāSū. 19. 75.

**अनुवंश्य** (anuvaṁś-ya) *adj.* [*f.*-ā] [ KāśiVṛ *on* iv. 3. 54; GaṇRa. 5. 339 (377)] **A** of a geneological list or table मार्कण्डेयः ... अनुवंश्यां जगौ गाथां नृगस्य MahāBhā. iii. 86. 5; अत्रानुवंश्यां जगौ गाथां नृगस्य NāṭyaŚā. 6. 34; अत्रानुवंश्या (:) श्लोका भवन्ति NāṭyaŚā. 17. 114; **B** existing in, i.e. related to a collateral branch of the family अनुर्द्रुह्यादयः ... नृपाः अनुवंश्याः ... तेषां कीर्त्यन्ते BrahmāṇḍP. i. 133.3.

**अनुवक्तवै** (anu-vaktavai) *Dat. inf.* in order to study अदितिस्ते कक्षां बध्नातु वेदस्यानुवक्तवै HirGS. i. 4. 6; ĀgniveGS. i. 1. 2 (6. 21)

**अनुवक्तव्य** (anu-vaktávya) *adj.* [ *f.* - ā] **1A** to be taught or imparted knowledge to स वा एष न सर्वस्मा अनुवक्तव्यः ŚatBr. XIII. vi. 2. 20 ( *but* MW. to be repeated); **1B** to be explained वाच्यमिदं शास्त्रम् ... अनुवक्तव्यं च JayāS. 33. 87; **2A** to be recited after हविर्धानविशिष्टाः सामिधेन्योऽनुवक्तव्याः ŚābaBh. 1084. 13 (*on* iii. 7. 15); तत्रैव हविर्धाने स्थित्वा सामिधेन्योऽनुवक्तव्याः MayūMāli. 320. 25 (*on* iii. 7. 7); **2B** to be repeated or continued उत वैदिक एव पूर्वमन्त्रस्थस्तनूर्वर्षिष्ठेत्यादिरनुवक्तव्य इति संशये TantrVā. 435. 14 (*on* ii. 1. 48); संकर्षे च प्रकीर्ण एवानुवक्तव्यः SaṅkarKāBh. 2. 8 (*on* i. 1. 1) [ to be called or mentioned by name, pw.]

**अनुवक्तुम्** (anu-vaktum) *inf.* **1** to connect by repeating or continuing धर्मश्चोदनाख्यः प्रमाणविधौ शक्यतेऽनुवक्तुम् TātpaṬ. (U.) 30. 5 (*on* 2. 1); **2** to state , i.e to impose न कश्चिद्दोषः तार्किकैरिहानुवक्तुं शक्यः ChāndoUBh. 355. 9 (*on* vi. 3. 3)

**अनुवक्तृ** (anu-vakṛ) *adj.* **1A** who recites सामिधेनीरनूच्य ब्रूयादुदयनीयऽएवातोऽनुवक्तास्मीति ŚatBr. IX. iv. 4. 16 ; होतारमप्रतिरथस्यानुवक्तारम् BaudhŚS. ii. 51. 16; **1B** who (merely) repeats, i.e. ignorant सन्त्यस्याप्यनुवक्तार इति व्यापकं तमः PramāVār. 1. 243; **1C** who repeats (the original statement) i.e. second speaker तस्मान्नानुवक्तास्य वाच्यः अपि तु वक्तैवेति NyāyKuA. ii. 73. 3; तादृशवाक्यार्थांशे वाक्यान्तरस्थक्रियाकर्मत्वानवगाहिन्यपि तादृशवाक्योच्चारणानुकूलानुवक्तुरिच्छा संभवति ŚaktiVā. 126. 1; **2A** who speaks authoritatively अथ होवाचैक्ष्वाको वा वार्ष्णोऽनुवक्ता वा सात्यकीर्त उतैषा खला देवतापसेद्धुमेव ध्रियतेऽस्यै दिशः JaimiUBr. i. 5. 4; **2B** who teaches अनूचानः अनुवक्तैवोपाध्यायः BālaKrī. ii. 8. 10 (on 3. 22) [ speaking after, replying, MW; replying etc. Apte]

**अनुवक्तृता** (anuvaktṛ-tā) *f.* the state of being one who repeats ( the original statement) वक्तॄणामुपाध्यायानामेवाभिप्रायो वेदे विधिरस्तु .. तेषामनुवक्तृतया... तथाविधाभिप्रायाभावात् NyāyKuA. ii. 105. 14.

**अनुवक्तृत्व** (anuvaktṛ-tva) *n.* the state of being one who repeats (the original statement) वक्तृत्वानुवक्तृत्वयोर्भेदस्य लोकसिद्धत्वात् TattvCin. iv (1). 348. 7.

**अनुवक्त्र** (anu-vaktra) *n.* **1** a type of metre (*lit.* nearing or approaching the mouth) अपुरश्चर्ययाप्येष भजतां धनधान्यादीन्। नित्यमावहतीत्यस्मात् श्रियो बीजमनुवक्त्रम् ĪśānŚiPa. i. 20. 4; **2** a variety of kiss प्रियाधरं स्वाधरसंपुटेन पिबेत् पतिः ...। परस्परं प्रेमरसातिरेकात् स्याच्चुम्बनं संपुटकं तदेवे (v. l. तत् संपुटाख्यं त्वनुवक्त्रसंज्ञं स्यात् केलिजिह्वाननज(? त? स्तदेव) AnaṅgaRa. 9. 19.

**अनुवक्र** (anu-vakra) *adj.* (also used as noun) (one) having subsequent retrograde motion tending towards regular motion वक्रानुवक्रं कृत्वा च श्रवणे पावकप्रभः। ब्रह्मराशिं समावृत्य लोहिताङ्गो व्यवस्थितः MahāBhā. vi. 3. 17 (BhārBhāDī. पुनःपुनर्वक्रीभूय); असिमुशलं सप्तदशादष्टादशतोऽपि वा तदनुवक्रे। दस्युगणेभ्यः पीडां करोत्यवृष्टिं सशस्त्रभयाम् BṛSaṁ. 6.5; (ग्रहान्) वक्रानुवक्रानुद्वीक्ष्य दशाफलमुदीरयेत्। ताराग्रहाणां सर्वेषामेवं ज्ञात्वा विचक्षणः HorāSā. 11. 3; अनुवक्रस्य दशायां स्वमानशौर्यान्वितो धनी भवति HorāSā. 16. 2; राशिषु चतुर्षु वक्रं षट्स्वतिवक्रमनुवक्रमष्टासु BrāhmSphuSi. 2. 51; आतुरस्य वक्रानुवक्रा ग्रहा गर्हितस्थानस्थाः ... चिकित्साप्रतिषेधाय AṣṭāSaṁ. i. 253. 8 (2. 12) [somewhat crooked or oblique, MW, Apte, very crooked, Apte]

**अनुवक्र** (anuvakra) *m.* **i** name of an attendant of Skanda वक्रानुवक्रौ बलिनौ मेषवक्त्रौ बलोत्कटौ। ददौ त्वष्टा महामायौ स्कन्दायानुचरौ वरौ MahāBhā. ix. 44. 36; **ii** name of one of the four lords of the southeastern troop of Skanda आवाह्य स्कन्दगणान् वक्रोऽनुवक्रः सुमुखः सुव्रतो वह्निदिग्गताः। एतेभ्यः ... बलिं क्षिपेत् ĪśānŚiPa. ii. 53. 82.

**अनुवक्र** (anu-vakra) *n.* **1** subsequent retrograde motion tending towards regular motion वक्रानुवक्रास्तमयोदयाद्यास्ताराग्रहाणां करणे मयोक्ताः BṛSaṁ. 1. 10; **2.** time required for a planet moving towards regular course after retrograde motion चक्रांशकैस्तदूनैरनुवक्रं तदधिकोनभागकलाः। ... दिवसाः BrāhmSphuSi. 2. 49 (comm. कालो वक्रस्यानुवक्रस्य वा भवतीत्यर्थः); अथ वक्राणां फलपाकसमयः। ... व्यालस्य निधने वक्रेऽनुवक्रे शेषयोः फलम्। ... वक्रे यावद्वक्रमनुवक्रवक्र (?क्रं वक्र) निवृत्तितोऽस्तारम्भपर्यन्तम् AdbhuSāg. 100. 23.

**अनुवक्रकाल** (anuvakra-kāla) *m.* time in which subsequent retrograde motion tends towards regular motion वक्रानुवक्रकाले भृगुचारो ज्ञातुमेव न च शक्यः। तस्माद्बहुप्रकारैर्गणितविशेषैश्च चिन्तयेत्तज्ज्ञः HorāSā. 32. 11.

**अनुवक्रग** (anuvakra-ga) *adj.* **A** moving in which subsequent retrograde motion tends towards regular motion यस्य वक्रानुवक्रगा ग्रहा गर्हितस्थानगताः पीडयन्ति जन्मर्क्षम् (स गतायुः) SuśruS. i. 32. 4; वक्रे दिनत्रिभागैर्नवांशयुततुल्यजिनैर्भुक्तैः। अतिवक्रे विपरीतं वक्रमनुवक्रगस्त्र्यंशम् (कुजः) PañcSi. 18. 33; वक्रो यदावरोही स्यादारोही चानुवक्रगः। वक्रः स्वोच्चफलं दद्याद्दशा तस्य तु मध्यमा HorāSā. 11. 2; **B** moving very retrogradely भौमरथश्चापि अष्टाङ्गः ...। सर्पतेऽसौ कुमारो वै ऋजुवक्रानुवक्रगः MatsyaP. 127. 4 [ having a somewhat oblique course ( as a planet etc.) MW; moving somewhat obliquely or retrogressively (said of planets) Apte ]

**अनुवक्रा** (anu-vakrā) *f.* a variety of motion (of planets) type of retrograde motion वक्रातिवक्रा विकला (v. l. वक्रानुवक्रा कुटिला) मन्दा मन्दतरा समा। तया शीघ्रतरा शीघ्रा ग्रहाणामष्टधा गतिः SūrySi. 2. 12; विकला ऋज्व्यनुवक्रा वक्राख्या बोधनस्य गतिभेदाः। विविधफलं तासु करोति VasiS. 5. 14; अर्धविनाशकरी त्वनुवक्रा VasiS. 5. 15.

**अनुवक्रिन्** (anuvakr-in) *adj.* having subsequent retrograde motion

अनुवक्री दन्तकरैः ... अस्तमेत्यैन्द्रयाम् ... भृगुः PañcSi. 18. 5.

**अनुवक्ष्** (anu-vakṣ-) I. P. to grow or to be powerful in accordance with प्र हि रिरिक्ष ओजसा दिवो अन्तेभ्यस्परि। न त्वां विव्याच रज इन्द्र पार्थिवमनु स्वधां ववक्षिथ ṚV. viii. 88. 5 (*but* Sāy. एवंभूतः सन्नस्माकं स्वधाम् अन्नमुदकं वा अनुवोढुमिच्छ) (better *adn.*) cf. **अनु 1 Di** [VIŚVA.]

**अनुवक्ष्यत्** (anu-vakṣyát) *adj.* [P. iii. 3. 14; vi. 2. 139] **i** who is about to recite (the *Sāmidhenī* verses) सामिधेनीरनुवक्ष्यन्नेता व्याहृतीः पुरस्ताद् दध्यात् TaiS. I. vi. 10. 4; BaudhŚS. i. 88. 21; सामिधेनीरनुवक्ष्यन्दर्श होतारं व्याचक्षीत TaiBr. II. ii. 1. 6; BaudhŚS. i. 66. 3; iii. 38. 17; iii. 201. 8; ĀpaŚS. iii. 19. 3; MānŚS. 120. 11; KātyŚS. ii. 2. 13; **ii** who is about to recite (the Prātaranuvāka verses) प्रजापतौ वै स्वयं होतरि प्रातरनुवाकमनुवक्ष्यत्युभये देवासुरा यज्ञमुपावसन्नस्मभ्यमनुवक्ष्यत्यस्मभ्यमिति AitBr. 7. 5 (201); 7. 6 (204); अथ सर्वा ह वै देवता होतारं प्रातरनुवाकमनुवक्ष्यन्तमाशंसमानाः प्रत्युपतिष्ठन्ते KauṣīBr. 11. 4 (50. 6); उपसन्नो होता प्रातरनुवाकमनुवक्ष्यन्भवति ŚatBr. III. ix. 3. 7; प्रातरनुवाकमनुवक्ष्यन्तः MānŚS. 209. 17; **iii** who is about to recite (the Anuvāka verses) (होता) अनुवक्ष्यन्वाऽएतद्यक्ष्यन्भवति तदेताभ्य एवैतद्देवताभ्यो निह्नुते यूयमनुब्रूत यूयं यजतेति ŚatBr. I. v. 1. 16; यक्ष्यन्वा इदमनुवक्ष्यन्भवति ŚatBr. (K.) II. iv. 3. 8.

**अनुवक्ष्यमाण** (anu-vakṣyámāṇa) *adj.* **1** who is about to learn or study तौ हेत्योचतुः। उप त्वायावेति। किमनुवक्ष्यमाणाविति ŚatBr. XIV. i. 1. 21; **2** which is about to be or going to be recited (महानाम्नीः) अनुवक्ष्यमाणेऽपराजितायां दिश्यग्निं प्रतिष्ठाप्य ... पश्चादग्नेराचार्यस्तृणेषूपविशेत् ĀśvaŚS. II. ii. 14. 12.

**अनुवच्** (anu-vac-) II. P. [Jaine Vyā. 111. 35 (*on* ii. 2. 90); ŚākatāVyā. i. 4. 81; KāśiVṛ. *on* iii. 2. 109] **1** to utter or to recite (a formulae etc., sometimes for invoking the deity to the sacrificial ceremony) (pass.) to be recited (*caus.*) to cause to recite **2A** to recite after (the teacher), to learn or study (pass.) to be recited after (the teacher), to be learnt or studied *(caus.)* to cause (one) to recite after (the teacher), to make (one) learn or study (the Veda) **B** to recite for (a student), to teach (pass.) to be taught **C** to restate, to reiterate (what is already known) **D** to repeat *(caus.)* to cause to repeat **3A** to speak favourably for **B** to narrate, to describe **C** to state (pass.) to be stated (*caus.*) to cause to state or read (loudly) **4** to shout at **5A** to speak with, to converse, **B** to speak after, to reply **6A** to propound, i.e. to proclaim **B** to command **1** to utter or to recite ( a formulae etc., sometimes for invoking the deity to the sacrificial ceremony) दधन्वे वा यदीमनु वोचद्ब्रह्माणि ṚV. ii. 5. 3; श्रेष्ठतामश्नुते स किल्बिषं भवति तस्मादाहुर्मानुवोचः AitBr. 3. 2 (56); उदगासीन्म इत्युद्गात्रेऽन्ववोचत् AitBr. 25. 9 (673); यत्र तिष्ठन् प्रथमामन्ववोचत् तत् स्थित्वा ... यथावसथमभ्युपेयात् KauṣīBr. 9. 4 (43. 2) ; ŚāṅkhāŚS. v. 13. 11; न मर्याभागयार्नुवक्ष्यथेति वार्गब्रवीत् TaiBr. III. iii. 8. 6; अथैनं शृण्वन्त्यसावन्ववोचतेति तद्वै स जायते ṢaḍviBr. i. 3. 16; यदाहुतिमनुचिषे ṢaḍviBr. i. 6. 16; ताभ्यां ह श्रध्दाय तेनाश्वस्य शीर्ष्णानुवाच JaimiBr. 3. 126; क इदमनुवक्ष्यति स इदमनुवक्ष्यति समाप्य सामिधेनीरन्वाह ĀśvaŚS. I. i. 2. 1; अभयं नो अस्तु प्राजापत्यमनुवक्ष्यामि ŚāṅkhāŚS. i. 4. 5; BaudhŚS. i. 99. 2; ĀpaŚS. xxiv. 11. 2; यत्र चासीनः प्रथमामन्ववोचत्तत् स्थित्वोत्सृज्यते ŚāṅkhāŚS. iii. 14. 14; पराङेवर्ग्मियः होतानूवाच BaudhŚS. ii. 406. 5; (ब्राह्मणः) त्र्यहं युष्माभिर्न प्रत्याख्येयो यः कश्च सावित्रीं अनूच इति VādhūŚS. iii. 92. 3; यदेकैकस्यै पुरोऽनुवाक्यया अन्ववोचः VādhūŚS. iv. 6. 3; यत्रैनमामन्त्रयते ब्रह्मन् सामिधेनीरनुवक्ष्यामि इति तत् प्रस्तौति हिं प्रजापतेऽनुब्रूहि यज्ञम् BhārŚS. iii. 17. 1; HirŚS. ii. 8. 16 (258. 19); xxi. 1. 8 (676. 9); उपप्रेष्य होतर्हव्या देवेभ्य इति संप्रेष्यत्यग्रिगुं होतानुवक्ति VaikhāŚS. 10. 12; (pass.) to be recited पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम् TaiS. II. v. 2. 5; II. v. 8. 4; अर्थात्राग्नेयी प्रथमानूच्यते MaiS. iii. 10. 1 (iii. 130. 9); एतद्धि संवत्सरस्य संक्रमणतरं यत्पञ्चदश सामिधेनीरनूच्यन्ते KāṭhS. 9. 1 (i. 104. 8); KapiKaS. 8. 4 (83. 4); स एतत्सूक्तमपश्यत्तेनैनानशमयद्यदेतदनूच्यते शान्त्यै KāṭhS. 10. 11 (i. 139. 15); 12. 4 (i. 166. 11); तस्मादेतेषु कर्मस्वष्टा-वष्टावनूच्यन्ते AitBr. 3. 1 (52); 30. 9 (794); तस्मात्सप्त चतुरुत्तराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्ते TaiBr. I. v. 9. 8; सोऽएषा मीमांसैव न त्वेवैता अनूच्यन्ते ŚatBr. I. iii. 5. 12; ŚatBr. (K.) II. iii. 3. 8; दीक्षायै तपसेऽग्नये स्वाहेति। अन्वेवैतदुच्यते नेत्तु हूयते ŚatBr. III. i. 4. 8; सधिष्टवाप्सु मे सोमो अब्रवीदित्यनूच्येत VaikhāŚS. 16. 25; प्रह्लादानूच्यतां तात स्वधीतं किंचिदुत्तमम् BhāgP. vii. 5. 22; *(caus.)* to cause to recite ब्रह्मानुवाचयति ŚāṅkhāŚS. xvi. 13. 15; अथ यजमानमेवानुवाचयति VādhūŚS. vi. 11. 4; वाजिभ्योऽनुवाचयति KātyŚS. iv. 4. 15; **2A** to recite after (the teacher), to learn or study अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः TaiBr. III. x. 11. 4; अथैनं शृण्वन्त्यसावन्ववोचतेति तद्वै स जायते ṢaḍviBr. i. 3. 16; न न्वै वयमग्निहोत्र इतिं च गतिं चानूचिमहे JaimiBr. 1. 25; तस्माद् उ ह यस्माद् एवानुब्रु (ब्र)वीत, तं ब्रूयाद् - अमुष्माद् अन्ववोच इति JaimiBr. 3. 77; ते हेमे बहु जप्यस्य चान्यस्य चानूचिरे प्राचीनशालिश्च जाबालौ च JaimiUBr. iii. 7. 3; आर्या ब्रह्मानूचुर्नाम गृणन्ति ये ते BhāgP. iii. 33. 7; (pass.) to be recited after (the teacher), to be learnt or studied सर्वेभ्यो वै वेदेभ्यो सावित्र्यनूच्यत इति हि ब्राह्मणम् HirŚS. xxvi. 1. 10 (4. 12); ĀpaDS. i (1). 1. 9; *(caus.)* to cause (one) to recite after (the teacher), to make (one) learn or study (the Veda) प्रत्यङ् आसीनाय अनुवाचयति गायत्रीम् MānGS. i. 22. 13; व्रतं प्रदायादितो द्वावनुवाकावनुवाचयेत् MānGS. i. 23. 3; i. 23. 15; VārāGS. 7. 3; सावित्रीमनुवाचयेत् DrāhyGS. iii. 2. 17; वासःसाच्छादनं कृत्वा गायत्रीमनुवाचयेत् LaghvāśvaSm. 10. 31; **2B** to recite for ( a student), to teach आरुणये ब्रह्मवर्चसकामाय तक्षानुवाचाग्निर्वृचः ŚatBr. II. iii. 1. 31; (सार्जयम्) एतं च यज्ञमनूचे ŚatBr. II. iv. 4. 4; अथाश्वस्य शिर आहृत्य तत्ते प्रतिधास्यावस्तेन नावनुवक्ष्यसि ŚatBr. XIV. i. 1. 23; BṛĀraU. ii. 5. 16; तद् यद् दध्यङ् आथर्वणोऽन्वपश्यत् तं तद् गच्छतम्। स वां तद् अनुवक्ष्यति JaimiBr. 3. 126; यत्तिसृणां प्रातरन्वाह यद् द्वयोः यदेकस्याः संवत्सरे द्वादशाहे षडहे त्र्यहे वा तस्मात्सद्योऽनूच्येति श्रुतिः MānGS. i. 22. 15; अन्ववोचनगमिष्यन्तः कृपया दीनवत्सलाः BhāgP. i. 5. 30; आचार्यः यस्मै माणवकाय अन्वाह अनुवक्ति BṛĀraUBh. 730. 15 (*on* v. 14. 6); ज्योतिर्ज्ञानस्य बीजानि सोऽन्ववोचद्विदांवरः (सन्मतिः) MahāP. 3. 87; शब्दोऽहमिति दोषाय नात्मन्येष तथैव तत्। इति वा भरतः कस्य दोषस्याभावमन्ववक् SiddhāSi. iii. 175. 10; (pass.) to be taught सोऽयं परोऽवरं यज्ञोऽनूच्यते पितैव पुत्राय ŚatBr. I. vi. 2. 4; ŚatBr. (K.) II. v. 4. 5; येषां द्विजानां सावित्री नानूच्येत यथाविधि ManuSm. 11. 190; ViṣṇuSm. 54. 26; गर्भाष्टमात्प्रभृति यावत्षोडशवर्षं ब्राह्मणस्य सावित्री नानूच्येत (त्रीन् कृच्छ्रांश्चारयितव्यः) ManuBh. ii. 431. 15 (*on* 11. 191); **2C** to restate, to reiterate (what is already known) यत्स्रुवमभिपूरयति स्रुचं तदभिपूरयति तां पूर्णां जुहोत्यन्वैवैतदुच्यते सर्वास्त्वेव हूयन्ते ŚatBr. III. i. 4. 22; (श्रुतिः) विधत्ते नु वक्तीति (? विधत्तेऽनुवक्तीति) चैतद्विरुद्धम् SaṁkṣeŚā. 1. 533 (i. 381. 23) (comm. ज्ञातमर्थं बोधयति); कस्ते जगत्कम्पकरस्य कम्प। इत्यादिकं राक्षसचारणानां चाटूदितं कर्णपथं निनाय (रावणः)। नीचैरनूचुः सचिवास्तदैव गर्भीकृतारिप्रणतिप्रकाराः RāmC. 23. 22; मन्त्रब्राह्मणयोर्यद्वा कलहो विनियोजने। न मन्त्रलिङ्गसिद्धार्थमनुवक्तीतरद्यतः NyāyMāVi. 27. 3 (*on* i. 2. 4); **2D** to repeat अनुवक्ति निषेधवाक्यं द्वैतोपमर्दम् SaṁkṣeŚā. 1. 257 (i. 197. 17); *(caus.)* to cause to repeat पुण्याहं स्वस्त्यृद्धयन्तं प्रत्येकं त्रिधा त्रिधा यथाविभक्तिवाचितमनुवाचयेयुः VaikhāGS. 1. 7; **3A** to speak favourably for स प्रजापतिर्मनसऽएवानूवाच ŚatBr. I. iv. 5. 11; **3B** to narrate, to describe (श्वेतकेतुः) स किल तथैवास यथा म एनमनूचुः JaimiBr. 2. 329; यथावदनुवक्ष्यामि शृणुध्वमृषिसत्तमाः MatsyaP. 274. 16; तेऽन्ववक्ष्ये प्रसंख्याय योजनैस्तन्निबोधत BrahmāṇḍP. i. 21. 80; **3C** to state यन्मया इत्यमवेदिष्याम हस्ती नः सान्नाय्यं पातेति, अन्वस्य प्रायश्चित्तिमवक्ष्यामहि VādhūŚS. ii. 13. 4; स तथेयुषेनाशुष आश्वदत्त द्रविणान्यनूचानकुलाय वीरः। न यथाभ्यगाद्याचितुमन्ववग्वा न यथा यथा नाश तदन्यगेहे DvyāśraKā. 12. 2; (pass.) to be stated अन्तर्मुख एव मौनयुक्तेन प्राप्यते संभाष्यानूच्यते BaudhDS. ii. 10. 57; *(caus.)* to cause to state or read (loudly) (शम्बरः) कार्यलेखम् ... अनुवाचयति तावत् ... सुग्रीवपरिचारकम् ... गोचरीकृत्य तिरोभवता मया वञ्चितोऽयं जरद्भल्लूकः AdbhuDa. 2. 0 (4); **4** to shout at, cf. **अनुवाच्यमान; 5A** to speak with, to converse, cf. **अनुवचन 3A; 5B** to speak after, to reply, cf. **अनुवचन 3B; 6A** to propound, i.e. to proclaim, cf. **अनुवचन 4A; 6B** to command, cf. **अनुवचन 4B** [to concede the point, to assent to, to yield, to name, to call *(caus.)* to read to oneself (before reading aloud), APTE]

**अनुवचन** (anu-vácana) *n.* [Alt Gr. II. 2. 194; enumerated in the *anupravacanādi gaṇa,* GaṇPā. 7. 8; JaineVyā. 233. 7 (*on* ii. 4. 104); KāśiVṛ. *on* v. 1. 111; also enumerated in the *utthāpanādi gaṇa,* CāndraVyā. iv. 1. 132; GaṇRa. 6. 366 (397)] **1A** recitation (of formulae etc.) **B** subsequent expression (i.e. Vedic knowledge) **C** recitation of texts in conformity with injunction or call (*praiṣa*) **D** subsequent recitation **2A** recitation after (the teacher), study, learning **B** teaching, expounding, lecture **C** restatement or reiteration **D** repetition **3A** speaking with, conversation, communication **B** speaking after, i.e. replying **4A** propounding, i.e. proclaiming (right course of conduct) **B** royal command **5** (the word) *anuvacana* **1A** recitation

(of formulae etc.) शुद्ध एव प्रणवः स्याच्छस्त्रानुवचनयोर्मध्ये KauṣīBr. 11. 5 (50. 23); GopBr. ii. 3. 11 (198.9); ŚāṅkhāŚS. vi. 1. 40; न ह वा ऋक्छस्त्रेण यातयामा भवति नानुवचनेन KauṣīBr. 22. 1 (97. 4); अथ कश्चिच्छस्त्रेऽनुवचने वा प्रमत्त उपहन्यात् ... इति मीमांसन्ते KauṣīBr. 26. 3 (121. 3); 26. 5 (122. 8); त्रिरेव प्रथमां त्रिरुत्तमामनवानन्ननुब्रूयात्। ... एतमेवास्मिन्नेतत् संततमव्यवच्छिन्नं दधात्येतदनुवचनम् ŚatBr. I. iii. 5. 13; त्रेधा विहित उ वा अयं प्राणः प्राणमेवास्मिन्त्संततमव्यवच्छिन्नं दधात्येतदेवानुवचनम् ŚatBr. (K.) II. iii. 3. 9; त्रिरनुवचनेनार्धर्चसंतानो विद्यत एकर्षित्वात् ĀpaŚS. xxiv. 11. 14; आसीनो यूपायाज्यमानाय प्रेषितोऽञ्जन्ति त्वामिति तृतीयस्यानुवचनस्यार्धर्चे काङ्क्षेत् MānŚS. 132. 7; अपि वानुवचनेऽनुवचनेऽपानित्युत्तमेऽनुवचनेऽग्न आयाहि वीतय इत्येतस्या अर्धर्चेऽपानित्येवमितरासु पूर्वस्याश्चोत्तरमुत्तरस्याश्च पूर्वमर्धर्चौ संदधाति HirŚS. xxi. 1. 12 (679. 18); व्याहृतीः सावित्रीं चानुब्रूयात्। एवं काण्डानुवचनेषु VārāGS. 5. 25; संततमुत्तरमर्धर्चमालभेतेत्युत्तमेनानुवचनेन आनन्तर्यात् संतानम् SaṅkarKā. (AOR. Ed.) iv. 1. 7; अनुवचनानां च क्रियात्मकत्वात् ... प्रकरणग्राह्यत्वेन तद्विरोधोदाहरणत्वम् TantrVā. 854. 12 (*on* iii. 3. 14); सामिधेन्योस्त्रिर्वचनात्पौनरुक्त्यम्, सकृदनुवचनेन तत्प्रयोजनसंपत्तेः अनर्थकं त्रिर्वचनम् NyāyMañ. i. 249. 31; द्यावापृथिव्योर्हविर्धानत्वात्तदीयस्य तृचस्यानुवचनं युक्तम् Sāy. *on* AitBr. 5. 3 (125); PūrvottaVāNaMā. 196. 3; MīmāKau. ii. 202. 2 (*on* iii. 1. 21); अर्थप्रतिपत्तिलक्षणकार्यार्थमनुवचनं त्रिरभ्यासोऽपि तदर्थः MayūMāli. 590. 3 (*on* ix. 1. 10); 712. 19 (*on* x. 4. 21); 713. 2 (*on* x. 4. 22); **1 B** subsequent expression (i.e. Vedic knowledge) इति त्रिशङ्कोर्वेदानुवचनम् TaiĀ. vii. 10. 1 (732. 4); TaiU. 1. 10; अक्षितोऽक्षीणरूपत्वाद् वेदानुवचनं त्विदम् TaiUBhāVā. 34. 21 (1); **1C** recitation of texts in conformity with injunction or call (*praiṣa*) अनुवचनप्रैषयाज्यासु नित्योऽध्वर्युतः संप्रैषः ĀśvaŚS. I. v. 5. 13; ŚāṅkhāŚS. v. 16. 3.; प्रैषानुवचनं मैत्रावरुणस्योपदेशात् MīmāSū. iii. 7. 43; किं सर्वानुवचनेषु सर्वप्रैषेषु च मैत्रावरुणः स्यादुत यत्रानुवचने प्रैष इति ŚābaBh. 1106. 17 (*on* ii. 7. 43); प्रैषेषु ह्यसावध्वर्युविकारः। अनुवचनेषु होतुः ŚābaBh. 2032. 3 (*on* x. 7. 19); वेदा[न](read नु)वचनेन यथा EI. xii. 324. 22; प्रकरणात्सर्वार्थं प्राप्तं प्रैषानुवचनयोर्निर्दिश्यते ṬupṬ. 26. 5 (*on* iv. 2. 18); 141. 17 (*on* vi. 5. 20); आद्योऽस्तु वचनान्मैवं साहित्योक्त्युपलम्भनात्। प्रैषानुवचने यत्र सहिते तत्र बाधनम् NyāyMāVi. 202. 15 (*on* iii. 7. 21); एवं चाश्वरशनाग्रहणात्प्रैषानुवचनशंय्विडान्ताङ्गकलापादिकमपरं च राशिं कृत्वा ... अभिधातव्यम् VidhiRa. 20 (114. 5); (सन्ति च) केवलान्यनुवचनानि BhāṭṭDī. ii. 57. 4 (*on* iii. 7. 22); i. 326. 17 (*on* iii. 4. 9); अनुवचने समानकालीनत्वसंबन्धेनान्वयात् LaCandr. 445. 27; **1D** subsequent recitation, cf. **अनुवचनत्व A**; **2A** recitation after (the teacher), study, learning तमेतं वेदानुवचनेन विविदिषन्ति ŚatBr. XIV. vii. 2. 25; BṛĀraU. iv. 4. 22; Śāṅkhā Ā. 13. 1 (47. 1); वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः। ... ज्ञानहेतवः YājñaSm. 3. 190; वेदानुवचनं वेदाध्ययनं गुरुवचनमनु पश्चाद्वचनम् Aparā. 1018. 19 (*on* 3. 190); अनुवाक्यमनुवचनं तद्विहीना अननुवाक्या ज्ञानरहिता इत्यर्थः Smṛti Can. ii. 412. 11; वेदस्यानुवचनमध्ययनम् VīraMi. 898. 19 (*on* 3. 190); BālamBha. iii. 112. 29 (*on* 3. 190); **2B** teaching, expounding, lecture एतानि वै पञ्चान्नाद्यानि पुरा सावित्र्यनुवचनादाचार्यो ब्रह्मचारिणि निदधाति Kāṭhakasaṅkalana 50. 8; अथ त्रिरात्रसंवत्सरयोः सावित्र्यनुवचनस्य विधानं वक्ष्यते KauṣīGS. ii. 4. 1; वेदानुवचनाद्य GautDS. i. 1. 11 (comm. अध्यापनम्); ब्रह्मानुवचने चाद्यन्तयोः GautDS. i. 2. 54; अनुवचनमध्यापनं कृत्स्नाङ्गस्य वेदस्य ManuBh. i. 154. 20 (*on* 2. 154); अनुवचनेनैतेऽपि गुणा लक्ष्यन्ते यतोऽननुवक्तर्यर्थाभावादेवावासः सिद्धः ManuBh. i. 196. 20 (*on* 2. 242); ब्रह्म वेदः अनुवचनमध्यापनम् Aparā. 55. 6 (*on* 1. 26); वेदस्यानुवचनं कृतवान् अनूचानः SiddhāKau. 509 B. 6 (*on* iii. 2. 109); **2C** restatement or reiteration विधिविहितस्य अनुवचनम् अनुवादः NyāySū. ii. 1. 66; **2D** repetition, cf. **अनुवचनमात्र 1**; **3A** speaking with, conversation, communication संबोधनमनुवचनाय ŚābaBh. 1654. 3 (*on* ix. 1. 9); **3B** speaking after, i.e. replying अत्रान्तरे समागतेन दुर्वाससा लक्ष्मणस्य वचनानुवचनम् MahāN. 9. 139 (1); **4A** propounding, i.e. proclaiming (right course of conduct) आदाने विसर्गे ... अनुवचने ... सदा युक्तस्तेनाष्टगतिको नृपः। ... इत्यौशनसौ श्लोकौ। ... असत्प्रवृत्तिनिषेधश्च 'अनुवचनम्' ManuBh. ii. 45. 8 (*on* 7. 154); **4B** royal command प्रचेता आह आदाने च विसर्गे च ... अनुवचने ... युक्तः ... राजा VīraMi. (Rājanīti.) 159. 20; अनुवचनं कार्यसंदेहे राजाज्ञा Vīrami. (Rājanīti.) 160. 2; 317. 21; **5** (the word) *anuvacana* अनुवचनशब्दाभिधेयस्य जपकार्यस्यैकत्वाद्विकल्पः NyāyMāVi. 695. 22 (*on* xii. 4. 1) [reading, a chapter, a section, MW.]

**अनुवचनकरण** (anuvacana-karaṇa) *n.* act of recitation of texts in conformity with injunction or call (*praiṣa*) अतोऽध्वर्युहोतृसंस्कारार्थत्वाद् भक्षस्य मैत्रावरुणे प्रैषकरणादध्वर्युकार्यमनुवचनकरणाच्च होतृकार्यं कुर्वाणेऽस्ति प्राप्तिः ŚāstrDī. 760. 2 (*on* x. 7. 6)

**अनुवचनकर्तृ** (anuvacana-kartṛ) *adj.* who performs the recitation of texts in conformity with injunction or call *(praiṣa)* अनुपात्तस्यानुवचनकर्तुः स्थानादिद्वारस्त्वमिति भावः MayūMāli. 198. 3 (*on* iii. 1. 10)

**अनुवचनकर्मकभावना** (anuvacanakarmaka- bhāvanā) *f.* activity or volition which has recitation of texts as its object विशेषणत्वास्वीकारे तु अनुवचनकर्मकभावनायां साधनतयान्वितस्य दण्डस्य विशेष्यीभूतभावनान्वयिन्यनुवचने समानकालीनत्वसंबन्धेनान्वयात् LaCandr. 444. 43.

**अनुवचनकार्य** (anuvacana- kārya) *n.* act of recitation of texts in conformity with injunction or call *(praiṣa)* प्रैषकार्येणाध्वर्यावन्तर्भावः। अनुवचनकार्येण च होतरि NyāyMāVi. 588. 4 (*on* x. 7. 6)

**अनुवचनकाल** (anuvacana-kāla) *m.* [Loc.] at the time of recitation of texts in conformity with injunction or call (*praiṣa*) अनुवचनकाले दण्डस्यासंबन्धेऽवलम्बनरूपदृष्टद्वारानुवचनसाधनत्वं तस्य न स्यात् GuruCandr. ii. 17. 14.

**अनुवचनकालीनदण्ड** (anuvacanakālīna- daṇḍa) *m.* stick present at the time of recitation of the texts in conformity with injunction or call *(praiṣa)* दण्डस्य ... अनुवचने समानकालीनत्वसंबन्धेनान्वयादनुवचनकालीनदण्डस्य साधनतालाभः LaCandr. 445. 27.

**अनुवचनक्रिया** (anuvacana- kriyā) *f.* action of recitation 'लक्षणहेत्वोः क्रियायाः' इत्यनेनानुवचनक्रियायाम् ... जृम्भणस्य भाव्यत्वादिना लक्षणत्वायोगात् जृम्भायां निमित्तेऽनुवचनम् ... आरादुपकारकम् BhāṭṭDī. i. 326. 15 (*on* iii. 4. 9)

**अनुवचनजनकता** (anuvacanajanaka-tā) *f.* the state of being what produces the recitation गुणत्वमपि च तासाम् ... अनुवचनजनकतयैव लाघवात् MīmāKau. ii. 203. 8 (*on* iii. 1. 21); गुणत्वमपि च ऋचां नानुवचनफलप्रकाशकतयैव, अपि त्वनुवचनजनकतया BhāṭṭDī. i. 202.9 (*on* iii. 1. 11)

**अनुवचनत्व** (anuvacana-tva) *n.* **A** the state of being the subsequent recitation तद्यदि पृथक् प्रयोगः स्यात्ततः सामिधेन्यङ्गमात्रग्रहणादितरेण निगदेन विनानुवचनत्वं विहन्येत TantrVā. 753. 7 (*on* iii. 1. 21); **B** the state of being the recitation of texts in conformity with injunction or call (*praiṣa*) प्रैषान्तानुवचनेषु तु प्रैषत्वेनाध्वर्युकर्तृकत्वस्यानुवचनत्वेन च होतृकर्तृकत्वस्य प्राप्तेः BhāṭṭDī. ii. 57. 21 (*on* iii. 7. 22)

**अनुवचनधर्म** (anuvacana-dharma) *m.* [Inst.] in accordance with the procedure or practice of recitation प्रागुदीच्यां दिशि पुण्ये देशे उदित आदित्येऽनुवचनधर्मेण वाग्यतायोष्णीषिणेऽन्वाह KauṣīGS. ii. 7. 24.

**अनुवचनफल** (anuvacana-phala) n. result or effect of recitation यद्यपि च तासामनुवचनं (ऋचाम्) प्रति गुणत्वं स्यात् तथाप्यनुवचनफलाग्निसमिन्धनप्रकाशकत्वेनैव तत्सामर्थ्यात् स्यात् MīmāKau. ii. 202. 12 (*on* iii. 1. 21); ii. 203. 8 (*on* iii. i. 21); गुणत्वमपि च ऋचां नानुवचनफलप्रकाशकतया BhāṭṭDī. i. 202. 9 (*on* iii. 1. 11)

**अनुवचनम्** (anuvacanam) *adv.* at each (time of) study or learning सावित्री चानुवचनम् GautDS. i. 1. 56; (comm. प्रत्यध्ययनं पठनीया)

**अनुवचनमात्र** (anuvacana-mātra) *n.* **1** mere repetition (in study) अनुवचनमात्रेणैव ... शास्त्रार्थसमाप्तेः NyāyRaMā. 21. 12; तस्मात्स्वर्गार्थत्वादध्ययनस्यानुवचनमात्रेण शास्त्रार्थसमाप्तेः TantrRaha. 66. 25; **2A** mere recitation यद्वा तिष्ठन्नन्वाहान्तरानूच्यामित्यादिष्वनुवचनमात्रं श्रूयते तत्र यदि सामिधेन्यनुवचनं प्रकृतं स्यात्ततस्तदेवावगम्येत ŚāstrDī. 202. 2 (*on* iii. 1. 11); अनूच्येत्यनुवचनमात्रस्यैव विधानम् MayūMāli. 877. 2 (*on* xii. 4. 1); **2B** mere recitation of texts in conformity with injunction or call *(praiṣa)* किं प्रैषमात्रेऽनुवचनमात्रे च मैत्रावरुणोपदेशेन हौत्रादिसमाख्याबाधः ŚāstrDī. 330. 8 (*on* iii. 7. 21)

**अनुवचनमात्रोत्तरत्व** (anuvacanamātrottara-tva) *n.* the state of being what follows mere recitation प्रकृतविध्योरनुवचनमात्रोत्तरत्वविधानात् BhāṭṭCan. 101. 20 (*on* xvi. 1. 5)

**अनुवचनमात्रोद्देश** (anuvacanamātroddeśa) *m.* [Inst.] with the intention of mere recitation अनुवचनमात्रोद्देशेन गुणविधायिनां विशिष्य सामिधेन्यनुपस्थापकत्वेन MīmāKau. ii. 200. 17 (*on* iii. 1. 21)

**अनुवचनविकृतित्व** (anuvacanavikṛti-tva) *n.* the state of being modification of the recitation (of the Sāmidhenī verse) यस्य लिङ्गम् ... सामिधेन्यनुवचनविकृतित्वमिति भावः MayūMāli. 201. 25 (*on* iii. 1. 11)

**अनुवचनविधान** (anuvacana-vidhāna) *n.* prescription of recitation (of Sāvitrī) सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वां यथाशक्तितो वाचयीतेत्याश्वलायनादिभिरनुवचनविधानात् VīraMi. (Saṁskāra.) 341. 22.

**अनुवचनविशेष** (anuvacana-viśeṣa) *m.* particular recitation of texts in conformity with injunction or call (*praiṣa*) न च ... मैत्रावरुणविधिरावर्जनीय इति वाच्यम्। ... चशब्दसहिताख्यातद्वयेनाप्यनुवचनविशेषस्यैव लक्षणीयतया उभयात्मकेष्वेव तद्विधानात् MayūMāli. 330. 14 (*on* iii. 7. 21)

**अनुवचनसमर्थ** (anuvacana-samartha) *adj.* competent in teaching अनूचानः अनुवचनसमर्थः वक्ता वाग्मी BṛĀraUBh. 217. 17 (*on* ii. 1.1)

**अनुवचनसंबन्ध** (anuvacana- sambandha) *m.* connection with teaching अनूचानग्रहणं तु ब्राह्मणस्यानुवचनसंबन्धात् क्षत्रियवैश्यनिवृत्त्यर्थं भविष्यति TantrVā. 902. 17 (*on* iii. 3. 33)

**अनुवचनसाधन** (anuvacana-sādhana) *n.* **1** means of accomplishing the teaching सावित्रीशब्देन तदनुवचनसाधनमुपनयनाख्यं कर्म लक्ष्यते ManuBh. i.95.10 (*on* 2.38); **2** means conducive to the recitation of texts in confomity with injunction or call (*praiṣa*), cf. **अनुवचनसाधनत्व.**

**अनुवचनसाधनत्व** (anuvacanasādhana-tva) n. the state of being the means conducive to the recitation of certain text in conformity with injunction or call (*praiṣa*) अनुवचनकाले दण्डस्यासंबन्धेऽवलम्बनरूपदृष्टद्वारानुवचनसाधनत्वं तस्य न स्यात् GuruCandr. ii. 17. 15.

**अनुवचनसामान्य** (anuvacana-sāmānya) *n.* recitation in general अनुवचनसामान्यं पुरोवाक्यानुवचनातिप्रसक्तमिति संख्या युक्तेत्युक्तम् MayūMāli. 201. 9 (*on* iii. 1. 11)

**अनुवचनसामान्योद्देश** (anuvacanasāmānyoddeśa) *m.* [Inst.] with reference to recitation in general न 'अन्तरानूच्यम्' इत्यादीनां सामिधेनीमात्रोद्देशेन विधानं प्रमाणाभावात्। अपि तु अनुवचनसामान्योद्देशेन BhāṭṭDī. i. 201. 17 (*on* iii. 1. 11)

**अनुवचनस्वरूपार्थत्व** (anuvacanasvarūpārtha-tva) *n.* the state of being what is meant for the recitation in its own form अविहितस्यानुवचनस्य ... अनुवचनस्वरूपार्थत्वे आनर्थक्यात् ... अदृष्टार्थं गुणविशिष्टानुवचनं विधीयते MayūMāli. 712. 20 (*on* x. 4. 21)

**अनुवचनांश** (anuvacanāṁśa) *m.* [Inst.] by the portion of the recitation of texts in conformity with injunction or call (*praiṣa*) यानि तु प्रैषान्तान्यनुवचनानि तेषु प्रैषांशेनाध्वर्योरनुवचनांशेन होतुः प्राप्तेरेकमन्त्रत्वेन नानाकर्तृसमावेशासंभवाद्धोतुरध्वर्योश्च ... मैत्रावरुणविधानमपेक्षितार्थं भवति ŚāstrDī. 330. 13 (*on* iii. 7. 22)

**अनुवचनाङ्गत्व** (anuvacanāṅga - tva) *n.* the state of being what is ancillary to the recitation of texts in conformity with injunction or call (*praiṣa*) दण्डी प्रैषानन्वाहेति दण्डविशिष्टेऽनुवचनाङ्गत्वेन चोद्यमाने विशेष्यस्य पूर्वमेव क्लृप्तत्वाद्विशेषणभूतस्य दण्डस्यानुवचनाङ्गत्वप्रतिपादनपरम् ... वचनं संभवति NyāyRaMā. 128. 12.

**अनुवचनादि** (anuvacanādi) *adj.* **A** study or learning etc. अवगतिसाधनानां च श्रवणादीनां वेदानुवचनादीनां च विधीयमानत्वात् BrahmSūBh. (Śaṅ.) 313. 12 (*on* ii. 1. 14); Mitā. 397. 12 (*on* 3. 190); **B** recitation etc. यः ... ग्रन्थार्थरूपतया जपानुवचनादिना वेदमभ्यस्यन् परित्यक्ताग्निहोत्राद्यनुष्ठानः भैक्षेणैव वर्तते BālaKrī. ii. 72. 8 (*on* 3. 205); **C** recitation of texts in conformity with injunction or call (*praiṣa*) etc. दण्डी प्रैषानन्वाह, दण्डी गच्छति इत्यादौ ... दण्डसंबधा(?न्धा)नुवचनाद्योरेककालीनत्वलाभः GuruCandr. ii. 19. 11.

**अनुवचनानुज्ञापनरूप** (anuvacanānujñāpana - rūpa) *adj.* of the form of seeking of permission for recitation न च ... स्वफलार्थमनुवचनानुज्ञापनरूपस्याङ्गस्य विकृतावूहेन प्रयोगोपपत्तेः बहिः प्रयोगेऽप्याक्षेपसंभवादिति वाच्यम् MīmāKau. ii. 203. 23 (*on* iii. 1. 21)

**अनुवचनानुवाद** (anuvacanānuvāda) *m.* [Inst.] by the reiteration with reference to the recitation न ह्यनुवचनानुवादेनात्र गुणविधिस्संभवति BhāṭṭDī. iii. 302. 13 (*on* x. 4. 21); अनुवचनानुवादेन तु मनोःर्क्रिविधानात् BhāṭṭDī. iv. 66. 5 (*on* x 6. 18)

**अनुवचनान्त** (anuvacanānta) *m.* [Loc.] at the end of the recitation (of the Sāmidhenī verses) अनुवचनान्ते बेदेनाहवनीयं त्रिरुपवाज्य स्रुवेण पूर्वमाघारमाघार्याहाग्निमग्नीत्संमृड्ढीति KātyŚS. iii. 1. 12.

**अनुवचनान्तर** (anuvacanāntara) *n.* another recitation (of the Sāmidhenī verses) न त्वेवं सत्येतान्यनुवचनान्तराणि दर्शपूर्णमासाभ्यामगृहीतत्वात् पृथगेव प्रयोक्तव्यानि TantrVā. 752. 22 (*on* iii. 1. 21); अनुवचनान्तराणि संख्याविशिष्टानि फले विधीयन्ते ŚāstrDī. 201. 10 (*on* iii. 1. 11); आश्रयालाभेन तत्रानुवचनान्तरस्यैव ... गुणात् भिन्नस्य फलं विध्यङ्गीकारात् MīmāKau. ii. 201. 19 (*on* iii. 1. 21); ii. 203. 10 (*on* iii. 1. 21); अनुवचनान्तरस्यैव फलोद्देशेन विहितत्वात् ... नाधर्मकत्वम् BhāṭṭDī. i. 201. 23 (*on* iii. 1. 11)

**अनुवचनान्तरविधि** (anuvacanāntara-vidhi) *m.* injunction regarding another recitation (of the Sāmidhenī verses) अनुवचनान्तरविधौ तेषां क्रतुमध्यप्रयोगं समर्थयति MayūMāli. 201. 27 (*on* iii. 1. 11)

**अनुवचनाभ्यासविधि** (anuvacanābhyāsa - vidhi) *m.* injunction of recitation and repetition अनुवचनाभ्यासविधौ अनुवचनस्यैवोद्देश्यत्वासंभवात् प्राथम्यस्य क्रियाविशेषणत्वे स्त्रीलिङ्गायोगाच्च तदुभयानुरोधेनाभ्युपगतम् PūrvottaVāNaMā. 196. 3; MīmāKau. ii. 202. 2 (*on* iii. 1. 21)

**अनुवचनीय** (anu-vacanīya) *adj.* [P.v. 1. 111] which has recitation as its purpose (छः) अनोः प्रवचेर्वचेः। ... उत्थापनम् वा प्रयोजनमस्य। ... अनुवचनीयम् GaṇRa. 6. 366 (397)

**अनुवञ्चत्** (anu-váñcat) *adj.* [P. vi. 1. 186; vi. 2. 139] (deified horse) which moves along वञ्चते स्वाहा ... अनुवञ्चते स्वाहा TaiS. VII. iv. 22. 1 (Sāy. वञ्चतादिशब्दपञ्चकेन गमनप्रकारविशेषाः); KāṭhS. v. 5. 1 (iii. 166. 13)

**अनुवञ्चित** (anu-vañcita) *adj.* which is avoided subsequently सुप्तस्य सर्पसंपर्के दैवमायुषि कारणम्। दृष्ट्वानुवञ्चिते सर्पे पौरुषं तत्र कारणम् Yaśas Cam. i. 383. 2.

**अनुवत्सर** (anu-vatsarā) *m.* [P. vi. 2. 189; AltGr. II. 1. 258] **A** name of the fourth year in the cycle of five years (i. e. Saṁvatsara, Parivatsara, Idāvatsara, Anuvatsara and Vatsara) अथेदस्मिन्नन्तः ... शतम् अनुवत्सराः AV. (P.) xvii. 29. 15; अनुवत्सराय ... कृणुता बृहन्नमः KāṭhS. 13. 15 (i. 198. 3); MānŚS. 39. 16; सीदानुवत्सरे KāṭhS. 39. 6 (iii. 124. 1); अग्निः संवत्सरः सूर्यः परिवत्सरश्चन्द्रमा इदावत्सरो वायुरनुवत्सरः ... आप्नोति ... वायुमनुवत्सरꣳ शुनासीर्येण PañcBr. xvii. 13. 17; वायुरनुवत्सरः TaiBr. I. iv. 10. 1; BrahmāṇḍP. i. 13. 119; संवत्सरादयः पञ्च ... युगमित्यभिधीयते। ... चतुर्थश्चानुवत्सरः ViṣṇuP. ii. 8. 72; VāyuP. i. 31. 27; i. 50. 183; BrahmāṇḍP. i. 13. 115; i. 21. 132; सोम इद्वत्सरः प्रोक्तो वायुश्चैवानुवत्सरः प्रजापतिश्चाप्यनुवत्सरः स्यात् BṛSaṁ. 8. 24; अनुवत्सरो वत्सरश्च विदुरेवं प्रभाष्यते BhāgP. iii. 11. 14; v. 22. 7; वर्षाः पञ्चविधाः ...। अनुवत्सरो वत्सरोऽयमिति BrahmVaiP. iv. 96. 58; आहुः पञ्चभेदं च वत्सरम् ... चतुर्थश्चानुवत्सरः SkandP. i (2). 31. 52; ViṣṇuDhaP. i. 82. 54; BhaviP. 186 B. 20 (i. 125. 33); इदापूर्व इत्यादि इदावत्सरः अनुवत्सरः इद्वत्सरः इति CaturCin. i. 890. 9; iii (3). 18. 5; **B** name of the fifth year in the cycle of five years विशेषार्चनस्य कालं वक्ष्यामः। ... संवत्सर इद्वत्सर इलावत्सरः परिवत्सरोऽनुवत्सरः PārāSū. 65. 9; साक्षात्कारकाला अनुवत्सरो ब्रह्मणः PārāSū. 86. 14; **C** name of the fifth year of five cycles of 12 years in the Bṛhaspati cycle संवत्सर° ... °अनुवत्सरशब्दानां प्रभवप्रमाथिसरशोभनराक्षसादिद्वादशद्वादशवर्षविशेषवाचित्वेऽपि LalitāSaBh. 204. 27 (*on* 245) [KośaKaTa. 1. 1121 gives *induvatsara* as the synonym of *anuvatsara*] [a year, MW., Apte]

**अनुवत्सर** (anuvatsara) *n.* name of the fourth year in the cycle of five years (i.e. Saṁvatsara, Parivatsara, Idāvatsara, Anuvatsara and Vatsara) अनुवत्सरमिद्वत्सरमिति पञ्चममीरितम्। ... कालवित्तमैः DeviBhāP. viii. 16.16.

**अनुवत्सरम्** (anuvatsaram) *adv.* [P. ii. 1. 6] every year, year after year अथ काल उपावृत्ते देवकी सर्वदेवता। पुत्रान्प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम् BhāgP. x. 1. 50; प्रजाः। त्वन्महोदयमहीतयाधुनाप्युत्सवं विदधतेऽनुवत्सरम् ŚrīVīraSt. 4 [yearly, MW.]

**अनुवत्सरीणा** (anuvatsár-īṇā) *adj.* (*f.*) [P.v. 1. 92] lasting for the year Anuvatsara (fourth year in the five- year cycle) शुनासीरीयेण यजमानः। अनुवत्सरीणाꣳ स्वस्तिमाशास्माशास्त इत्याशासीत् TaiBr. I. iv. 10. 3; BaudhŚS. ii. 203. 8; i. 155. 7; ĀpaŚS. viii. 21. 1; VaikhāŚS. 9. 12; अनुवत्सरीणाꣳ स्वस्तिमाशासे इतीडाया आशीःषु यजमानो जपति BhārŚS. vii. 24. 8; viii. 24. 10 [referring to the *anuvatsara*, MW.]

**अनुवत्सरीया** (anuvatsar- īyā) *adj.* (*f.*) [P. v. 1. 91] lasting for the year Anuvatsara (fourth year in the five -year cycle) इयꣳ स्वस्ति ... अनुवत्सरीयोद्वत्सरीया KāṭhS. 13. 15 (i. 198. 6); अनुवत्सरीयोद्वत्सरीये स्वस्तिमाशास इत्याह यजमानः MānŚS. 49. 16; इयँ स्वस्तिः सँवत्सरीया परिवत्सरीयेदावत्सरीयानुवत्सरीयोद्वत्सरीया MānŚS. 39. 18 [referring to the *anuvatsara*, MW.]

**अनुवत्सल** (anu-vatsala) *adj.* loving तौ तु भूमिगतौ बालौ लुण्ठतः स्मानुवत्सलौ GaṇeP. ii. 84. 50.

KūrmaP. 522.10 (2.12); PadmP. i.51.33; BallāC. 81.8; तदाज्ञानुवर्तनमनुचितम् Hitopa. 2. 153 (1); **4D** following or adhering to, cf. **अनुवर्तनद्वार**; **5Ai** continued presence or existence, persistence इच्छेदेकेषु [उच्छेदकेषु] बहुलं संस्कारस्यानुवर्ण[र्त]नम्। परपक्षेषु कल्प्या [कल्प्यं] हि भूयिष्ठानीति दृश्यते VibhraVi. 19; बोद्धृत्वपरिणामित्वधर्मयोरनुवर्तनम्। मलस्य साधिकारस्य निवृत्तेस्तत्परिच्युतौ MṛgendraT. i. 7. 22; तादवस्थ्ये तु रूपस्य नान्येनाभिभवो भवेत्। प्राक्तनानभिभूतस्य स्वरूपस्यानुवर्तनात् TattvSaṁ. 570; 688; मनसः अन्तःकरणस्य ... उपाधेरनुवर्तनात् ĪśopBh. 10. 2 (*on* 4); रसः ...। आलम्बनगुणस्थैर्यात्संस्कारस्यानुवर्तनात्। योऽनुयाति विलीनो यः स सूक्ष्म इति कथ्यते BhāvPra. (Śā.) 132. 7 (6); AkṣiU. 4.39; Adhyā U. 3; अनुयायिनि प्रयोगत्रयेऽप्यहमोऽनुवर्तनादित्यर्थः Bhāsk. i. 89. 19 (*on* i. 2. 2 ); i. 368. 13 (*on* i. 7. 6); तत्किं कृत्स्नस्य ब्रह्मधर्मस्य अनुवर्तनमभिप्रैषि GoviBh. 92. 6 (*on* ii. 1. 7); केचित् स्वप्नवदत्राहुः समसत्ताकतत्क्रियाम्। स्वप्नोत्थभयकम्पादेर्जागरेऽप्यनुवर्तनात्। अद्वैतविद्याचार्याणां समता नात्र संमता VedāntSiSūMañ. 2. 51 [AmaK. 2532; ŚabdaRa. (Vā.) 4397]; **5Aii** repeated existence, recurrence असत आत्मलाभः सतः सत्तावियोगो द्रव्यरूपतयानुवर्तनं च खलूत्पादादीनां परस्परमसंकीर्णानि लक्षणानि सकललोकसाक्षिकाण्येव SyādvāMañ. 21 (55); **5B** existence, position or condition अन्येषामपि द्वीपानां श्रूयतामनुवर्तनम् PañcaRā. (Nā.) ii. 2. 75; **6** name of a dramatic embellishment (*nāṭyālaṅkāra*) अथ नाट्यालंकाराः- प्रोत्साहनं च साहाय्यमभिमानोऽनुवर्तनम् SāhiDa. 344. 13 [Kośas give *anuvartana* as the synonym of the following : *anurodha*, AmaK. 1492; KośaKaTa . 1. 5891; *anuvṛtti*, KośaKaTa. 1. 5891; NānārthāSaṁ. i. 17. 81 gives *anuvartana* as the meaning of *yāñcā*: KalpaK. 239. 43 (v. l.) gives *vṛtta* in the sense of *anuvartana* ] [gratifying, obliging, result, consequence MW., Apte]

**अनुवर्तनकारिणी** (anuvartana-kāriṇī) *adj.* (*f.*) who practises compliance, complying छायेव साभवत्पत्यावनुवर्तनकारिणी PadmP. (Ra.) 7. 170.

**अनुवर्तनजीविन्** (anuvartana-jīvin) *adj.* who sustains on attendance or service तस्यानुजीविभिः क्रूरैरनुवर्तनजीविभिः। वसुहीना वसुमती कृता प्रकटतस्करैः NarmaMā. 1. 33.

**अनुवर्तनता** (anuvartana-tā) (=anuvartanā) *f.* conformity to, imitation of यावच्च लोकि अनुवर्तनतां करोति ... तावत्प्रसन्नमनसो अनुबन्धयामः LaliVi. 5. 43; किं तु जनस्य अनुवर्तनतां करोति लिपिशालमागतु सुशिक्षितु शिष्यणार्थम् LaliVi. 10. 2; आपत्तिष्वचोदनता संरञ्जनीयधर्मेष्वनुवर्तनता ŚikṣāSa. 183. 17; चत्वार इमे राष्ट्रपाल बोधिसत्त्वानामननुतापकरणा धर्माः ... चतुर्णामार्य-वंशानामनुवर्तनता Rāṣṭrapālaparipṛcchā 13. 18 [ DBHS.]

**अनुवर्तनद्वार** (anuvartana-dvāra) *n.* [Inst.] by means of following or adhering to वर्णविन्यासवक्रता ... प्रतिनियतगुणविशिष्टानां मार्गाणामनुवर्तनद्वारेण यथा स्वरूपानुप्रवेशं विदधाति तथा विधातव्या VakroJī. 85. 14.

**अनुवर्तनवश** (anuvartana-vaśa) *m.* [Abl.] on account of imitation भगवतः श्वासानिलाः पान्तु वः। यत्संस्कारकलानुवर्तनवशाद्वेलानिभेनाम्भसो यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति Subhāṣi. 36.

**अनुवर्तनसामर्थ्य** (anuvartana-sāmarthya) *n.* [Abl.] by the force of continuation or supplying (of word etc. from the previous context) उदात्त इत्यनुवर्तनसामर्थ्याद्यस्याप्राप्तः स्वरस्तस्य भवति MahāBh. ii. 154. 4 (*on* iii. 3. 107); ii. 209. 21 (*on* iv. 1. 17); iii. 210. 12 (*on* vi. 4. 82); सर्वेषामवयवानाम्, अनुवर्तनसामर्थ्यात् कार्ययोग इति भावः Pradī. vii. 200. 17 (*on* viii. 3. 78)

**अनुवर्तना** (anu-vartanā) *f.* conformity to, imitation of worldly actions लोकानुवर्तनां बुद्धा अनुवर्तन्ति लौकिकीम्। प्रज्ञप्तिमनुवर्तन्ति यथा लोकोत्तरामपि MaVastuAva. i. 168. 8; पादां च नाम धोवन्ति न चैषां सज्जते रजः। पादाः कमलपत्राभा एषा लोकानुवर्तना MaVastuAva. i. 168. 15; बोधिसत्त्वः ... काषायानि वस्त्राणि गृहीत्वा स्वयमेव प्रव्रज्यां लोकानुवर्तनामुपादाय सत्त्वानुकम्पायै सत्त्वपरिपाचनार्थम् LaliVi. 16. 0 (4); 25. 0 (2); बोधिसत्त्वस्य धर्मानुधर्मप्रतिपत्तिः। ... पञ्चविधा ...। तेषामेव [यथा] पर्येषितानां यथोद्गृहीतानां धर्माणां कायेन वाचा मनसा चानुवर्तना सम्यक्चिन्तना भावना च BodhiBhū. 76. 3; 76. 6 [DBHS.]

**अनुवर्तनादि** (anuvartanādi) *adj.* carrying out, i.e. expressing etc. (सविस्रम्भकथायोगै रतिं जनयते पराम्। परस्परप्रीतिकरैरात्मभावानुवर्तनैः ... रागो विवर्धते) एतेऽनुवर्तनादयो विस्रम्भयोगाः JayaMa. 181. 24 (*on* 2. 10)

**अनुवर्तनी** (anu-vartanī) *adj.* (*f.*) which continues to remain (स्नेहस्य) मात्रा ...। ह्रस्वा परीहारसुखाविकारा बृष्याथ बल्याप्यनुवर्तनी च KāśyaS. 19B. 4.

**अनुवर्तनीय** (anu-vartanīya) *adj.* [*f.* -ā] **1** to be gone through, i.e. to be experienced **2** to be practised or observed continuously **3** to be attended, to be served **4A** to be followed, i.e. to be admitted or conceded **B** to be followed, i.e. to be obeyed **C** to be gone after, to be followed **5** to be continued or supplied (from the previous context) **6A** to be favoured, to be obliged **B** to be turned, to be pursuaded **7** to be employed again **8** to be adhered to continuously **1** to be gone through, i.e. to be experienced दिष्टस्य ग्रन्थिरनिवर्तनीयः (v. l. °अनुवर्तनीयः) स्वकर्मणा विहितं नेह किंचित् MahāBhā. i. 190. 2; **2** to be practised or observed continuously निःसंशयं कार्यमवेक्षितव्यं क्रियाविशेषो ह्यनुवर्तितव्यः (v. l. अनुवर्तनीयः Gorr. Ed.) Rāmā. iv. 29. 20; लोकसंव्यवहारोऽनुवर्तनीयः एव Kād. 367. 8; तथापि लोकयात्रानुवर्तनीया MahāvīC. 7. 33 (1); प्रवर्तितं चक्रं सर्वेणानुवर्तनीयम् GītāBh. (Śaṅ.) 92. 12 (*on* 3. 17); आगमशीलनं च आफलान्मात्रया अनुवर्तनीयम् NyāyPari. 482. 2; 512. 6; तत्तद्गुणविशेषविशिष्टस्याहरहरनुवर्तनीयस्य साङ्गस्य ... तथाविध-विशिष्टानुष्ठानस्य रागप्राप्तत्वं न संभवति ŚatDū. 59. 15; कृत्स्नं पञ्चरात्रम् ... यथाधिकारं व्यवस्थितानुष्ठानतया सिद्धान्तादिसंकरपरिहारेणैव सर्वदानुवर्तनीयम् PāñcRāRa. 43. 17; 90. 9; किं च मदीयाचारे धर्मद्वयमेवानुवर्तनीयम् ŚaṅkaVi. (Ā.) 115. 10; प्रवृत्तस्याप्रायणमहरहरनुवर्तनीयायामुत्तरोत्तरं विशदीकरणीयायां च तस्याम् (विधायाम्) ŚivārkaMaDī. i. 45. 15 (*on* i. 1. 1); i. 82. 25 (*on* i. 1.1); पशौ पुरोडाशे च वाग्यमस्य समानतन्त्रता स्यात् पाशुको वाग्यमः पौरोडाशिकाह्वान-पर्यन्तमनुवर्तनीय इति यावत् MayūMāli. 822. 13 (*on* xi. 3. 8); **3** to be attended, to be served यावदयं संसारस्तावत्प्रसिद्धैवेयं लोकयात्रा यत् पुत्रैः पितरो लोकद्वयेऽप्यनुवर्तनीयाः VeṇīSaṁ. 3. 214; मुहूर्तं स्थित्वा भूपतिरादिदेश। ... भवद्भ्यां कुमारावनुवर्तनीयावहर्निशम् HarṣaC. 198. 12; **4A** to be followed, i.e. to be admitted or conceded यथोदाहृत एव मार्गः प्रमाणतायामनुवर्तनीयः NyāyMañ. i. 230. 29; अन्वयं यावत्पदस्य सामर्थ्यमनुवर्तनीयम् TattvBi. 152. 4; (प्रधानम्) व्यावर्त्यमनुवर्तनीयं च व्यवस्थाप्य PratyabhiVi. ii. 197. 1 (*on* iii. 4. 18) (Bhāsk. सिद्धतया ग्राह्यम्); एकवाक्यस्वारस्यभङ्गेनानेकवाक्यस्वारस्यं ह्यनुवर्तनीयम् ŚrutaPra. iB. 233. 20 (*on* i. 1. 17); एतावन्मात्रमप्यस्या अभ्यर्थित-मनुवर्तनीयमेव। अन्यथा ह्यदाक्षिण्यमापत्स्यते RasSa. 129 (5); **4B** to be followed, i.e. to be obeyed यदि वा न कोऽपि परमार्थतः प्रेयाननुवर्तनीयः ... नरपतीनाम् TilaMañ. 299. 12; यथाविधि मौनानुष्ठानस्यैव भगवत्सेवारूपत्वात् प्रवृत्तिविषया निवृत्तिविषया वा भगवदाज्ञैव सर्वदानुवर्तनीया इत्यच्छिद्रानुष्ठानसिद्धिः PāñcRāRa. 151. 14; **4C** to be gone after, to be followed अनुवर्तनीया तिलक-मञ्जरी TilaMañ. 366. 4; **5** to be continued or supplied (from the previous context) शङ्खादौ ... परमाणावग्निसंयोगेन विनाशात् तदर्थं प्रत्यक्षत्वे सतीत्यनुवर्तनीयम् NyāyKa. 60. 1; तदेवानुवर्तनीयमिति तु कुत इत्याह Bhām. 177. 15 (*on* 1. 2. 15); सामीप्यादित्यत्राप्यतिरनुवर्तनीयः यथा लोचनस्थमञ्जनमतिसामीप्यान्न दृश्यते SāṁkhyaTaKau. 213. 6 (*on* 7); प्रत्यक्षद्वयजनिते संस्कारे निर्णये चानुमानत्व-प्रसङ्गस्तदवस्थ एव, तस्मात्तन्निवृत्यर्थं प्रमाणपदं न कृतं चेदवश्यमनुवर्तनीयमित्यर्थः NyāyVārPari. 565. 7; सामान्यलक्षणसूत्रात् प्रत्यवस्थानपदमनुवर्तनीयम् TārkiRa. 254. 3; 'तत्राहुर्नाम तद्धतामित्युत्तरेष्वप्यनुवर्तनीयम् KāvyKaVṛ. 29. 21 (2. 1); सर्वोत्कृष्टब्रह्मचिन्तनाद्धेतोरियदा(नन्दा)दिकं सर्वत्रानुवर्तनीयम् VedāntPāSau. 328. 20 (*on* iii. 3. 34); कुमारी शेते इत्यादावकः सवर्णे दीर्घत्वाभावार्थमचीत्यनुवर्तनीयं न भवति PariVṛ. (Sī.) 36. 1; सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र PrakriKau. i. 18. 1; 'राज्ञाम् एकादश' इत्यत्र गुणभूतोऽपि गर्भशब्दोऽनुवर्तनीयः आकाङ्क्षाबलात् VīraMi. 31. 9 (*on* 1. 14); चतुर्विधमुक्तिफलकं प्रयोगम् ... यावज्जीवार्थकं प्रतिमासपदं रात्रिपदं चानुवर्तनीयम् LalitāSaBh. 221. 14 (*on* 291); **6A** to be favoured, to be obliged (न च गम्यैः परिभूयेत तान् सहायान् कुर्यात्) सहायाः प्रियहिताभ्यामनुवर्तनीयाः JayaMa. 307. 18 (*on* 6.1); **6B** to be turned, to be pursuaded नक्तंदिवमपि पतिपार्श्ववर्तिनी सा कथमनुवर्तनीया तत्रभवतेति तरलं भवति मे चेतः Mukundā. 81 (1); **7** to be employed again प्रवोवाजीया यदि कस्यांचिदिष्टौ मध्ये अन्त्ये वा स्यात्, तदानीम् अन्या काचित् (ऋक्) प्रथममनुवर्तनीया भवेत् PūrvottaVāNaMā. 195. 15; **8** to be adhered to continuously, cf. **अनुवर्तनीयत्व 2**.

**अनुवर्तनीयता** (anuvartanīya-tā) *f.* the state of being what is to be observed or practised continuously श्रवणमननोपासनाकालेष्वपि तत्काल-संभावितचित्तमालिन्यपरिहारार्थं चित्तशुद्ध्यर्थकर्मणामनुवर्तनीयता ब्रह्मविचारे ब्रह्मजिज्ञासायां वा तदानन्तर्योक्त्ययोगात् ŚivārkaMaDī. i. 82. 12 (*on* i. 1. 1)

**अनुवर्तनीयत्व** (anuvartanīya-tva) *n.* **1** the state of being what is to be observed or practised continuously जातिवर्णाश्रमाद्युपाधिकानां विधिनिषेधानां ब्रह्मविदोऽप्यनुवर्तनीयत्वस्य ... नियतस्य तु संन्यासः कर्मणो नोपपद्यते ŚatDū.

138. 3; **2** the state of being what is to be adhered to continuously ज्ञानस्याप्रयाणादनुवर्तनीयत्वस्य प्रतिपादितत्वात् ŚatDū. 234. 21; आमोक्षात्तदुपायभूतज्ञानाचार्ययोरनुवर्तनीयत्वमेवोक्तम् ŚatDū. 236. 26.

**अनुवर्तमान** (anu-vartamāna) *adj.* [*f.* -ā] **1Ai** going or moving along **ii** moving around **B** going after, following **C** occurring subsequently **Di** accompanying, i.e. harmonizing **ii** accompanying, i.e. going together **E** accepting **F** obeying **2A** practising, observing **B** attending upon, serving **3** continuing or supplying (from the previous context) **4A** existing continuously or persisting **B** continuing, present **Ci** recurring **ii** coming into being again and again **5** sticking to, adhering to **6A** complying with **B** imitating **7** using , i.e. enjoying **1Ai** going or moving along एष उ एवास्य त्रिवृद् वज्रोऽहरहरिमान् लोकाननुवर्तमानस्सर्वं पाप्मानमपघ्नन् पल्ययते य एवं वेद Jaimi Br. 1. 247; 1.248; राजवाहनः ... क्षुत्पिपासादिक्लेशनाशनं मणिम् ... मातङ्गाल्लब्ध्वा कंचनाध्वानमनुवर्तमानं तं विसृज्य बिलपथेन तेन निर्ययौ DaśKuC. 15. 12; (वत्साः) स्वक्षुण्णपदपद्धतिमनुवर्तमानाः कथं निवर्तनीयाः GopāKeCan. 47. 30; **1Aii** moving around गिरिवरमभितोऽनुवर्तमानो हय इव मण्डलमाशु यः करोति। तमिह शरणमभ्युपेहि देवि दिवसकरम् Rāmā. vi. 24. 36; **1B** going after, following इन्द्रं दैवीर्विशो मरुतोऽनुवर्तमान (better °वर्त्मान) इति हुत्वोपतिष्ठते HirŚS. xii. 5. 31 (102. 21); मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः KumāSaṁ. 3. 36; SaraKaṇṭhā. 629. 6; रुमण्वान् ... प्रहारव्रणितहास्तिकप्रायमशेषसैन्यमनुवर्तमानः शनैः शनैरागच्छति Ratnā. 4. 6 (5); सखि छायावन्मामनुवर्तमानस्य पुष्पोद्भवस्य वल्लभा त्वम् DaśKuC. 30. 15; गिरिराजकुमारिकामपि स्वं विपिनेष्वद्रिषु चानुवर्तमानाम्। ... अनुरोद्धुं स्वयमध्यास्त शिवः कदम्बमूलम् Śiv Lī. 3. 79; अमराश्च (चित्रशिखण्डिनम्) तमनुवर्तमानाः ... तपोलोकसमीपमापेदिरे NīlaVi. 36. 9; पार्श्वस्थितां प्रणयिनीमनुवर्तमानः। ... परभृतोऽयम् ... कुरुते विहारम् JānaPa. 1. 7; **1C** occurring subsequently सिद्धम् ... °श्रीचन्द्रगुप्तस्य ... [गुप्त]कालानुवर्तमानसंवत्सरे एकषष्ठे ... [प्र]थमे शुक्लदिवसे पञ्चम्याम् EI. xxi. 8. 3; **1Di** accompanying, i.e. harmonizing वन्दी सूचीबाणस्तारमधुरेण गीतिध्वनिमनुवर्तमानः स्वरेणेदमार्यायुगलमगायत् HarṣaC. 132. 3; **1Dii** accompanying , i.e. going together राजपुत्रो निरभिमानमनुकूलाभिः संकथाभिर्मामनुवर्तमानो मुहूर्तमास्त Daś KuC. 106. 11; किं गतमेतैरतिक्षुद्रैः किंचित्तु वयमनुवर्तमानाः क्षणमपहरिष्यामः NīlaVi. 119. 14; **1E** accepting अहं तु तन्महर्षेर्मतमनुवर्तमानः कावेरीतटमुपावर्ते AvantiKa. 199. 8; एतन्मतमेव तावदनुवर्तमानः प्रयागं तावद् गत्वा तत्रैव देवीस्नेहस्य यथोचितमाचरिष्यामि TāpaVa. 5.8(86); वैयासिकं तु मतमनुवर्तमानाः ... परमात्मनो नित्यस्य वेदानां योनेरपि न तेषु स्वातन्त्र्यम् Bhām. 74.13 (*on* i. 1.3); VedāntKa. 57. 20 (*on* i. 1. 3); ईप्सादिस्वातन्त्र्येण ... तच्चरितमनुवर्तमानो वार्तिककृदुपलक्षणान्तरं कृत्वोत्तरकालभाव्याह TātpaṬ. (Vā.) 31.6 (*on* i. 1. 1); अमी अभ्यर्थनां मम किमप्यनुवर्तमाना गृह्णन्ति कानिचिदहानि नरेन्द्रपूजाम् PrasaRā. 3. 40; प्रायेण सर्वप्राणिनः ...। अर्थकामावेव पुरुषार्थौ मन्यमानाः, चार्वाकमतमनुवर्तमाना एवानुभूयन्ते SarvaDaSaṁ. 1. 21; 15.1; **1F** obeying भैरवाचार्योऽपि प्रीत्यानतिक्रमणीयं नृपवचनमनुवर्तमानः पूर्ववत्तदेव व्याघ्राजिनमभजत् HarṣaC. 158. 11; वादिनस्तस्य वचनमनुवर्तमानो मेदिनीपतिर्विहस्य किंचित्सोपहासमवदत् TilaMañ. 50. 4; आज्ञां त्वदी[यामनुवर्तमानः] शरीरभाजां प्रसवप्रसङ्गे PṛthvīVi. 6.45; **2A** practising, observing यत्र तु प्रीत्युपलब्धितः प्रवृत्तिर्न तत्र शास्त्रमस्ति। तदनुवर्तमानो नरकाय राध्यति HirŚS. xxvi. 4. 13 (56. 27); ĀpaDS. i (4). 12. 13; ब्रह्मभूतो ब्राह्मणः शास्त्रमनुवर्तमानो ब्रह्मलोकमभिजयति BaudhDS. ii. 4. 24; यथोक्तमनुवर्तमानः प्राणानुपालनाद्दीर्घमायुरवाप्नोति CaraS. i. 11. 4; भूपतिरनुवर्तमानो लौकिकमाचारमाचार्यवचनं चोत्थाय ... सह स्वस्रा तामेव भूमिमयासीत् Harṣa C. 331. 12; काकतीयनरेन्द्रवृद्धोचितमाचारमनुवर्तमानस्य देवस्य ... विषादहर्षयोः सीमानं स्पृशत्यस्माकं मनः PratāYaBhū. 154. 13; व्याख्यानुमार्गमनुवर्तमानानां च कथं न जायते लज्जा NyāySu. (Ja.) 116A. 10 (*on* i. 1. 5); अदुष्टानां यथाशास्त्रमनुवर्तमानानां भोजनात् तृप्तानामाशीर्दानात् तत्फलम् Upask. 261. 3 (*on* vi. 1. 6); नन्वेतामेव तावत्प्रभातवेलां पतिव्रताधर्ममनु-वर्तमानां दिनकरकुलवधूं पश्यतु भवती KaṁVa. 1. 9 (2); आदिष्टाः ... असुरवराः स्वयमनतिक्रामन्तो धर्ममौशनसम् ... अनुवर्तमाना हिरण्याक्षदर्शितां सरणिम् NīlaVi. 30. 16; **2B** attending upon, serving (इन्द्रसेना) तपसाराधयत्तदा। ... अनुवर्तमाना त्वादित्यं तथा पञ्चतपाभवत् MahāBhā. i. App. I. 100 (84); यस्तां विविक्तचरितैरनुवर्तमानां नात्याद्रियत्परमभागवतप्रसङ्गः BhāgP. iii. 16. 21; यथा यथा स्वप्नेषु संकल्पदशास्वार्यपुत्रश्चाटुवचनादिभिर्व्यापारैर्मामनुवर्तमान आसीत्, तथा तथेदानीं प्रत्यक्षमनुवर्तते इत्याश्चर्यम् JānaPa. 5. 17 (2); **3** continuing or supplying (from the previous context) नार्थः क्ङिद्ग्रहणेनानुवर्तमानेन MahāBh. ii. 24. 11 (*on* iii. 1. 13); नवम इत्यनुवर्तमानेऽपि पुनर्नवमग्रहणमुपचित्राप्रतिप्रसवार्थम् MṛtaSaṁ. 83 . 24 (*on* 4. 45); पूर्वपक्षाश्च सुदूरमपि सिद्धान्तसारूप्यादनुवर्तमानाः प्रमाणवृत्ताहितबुद्धिभिः यत्नतोऽनुसरणीयाः SaṅkarKāBh. 198. 3 (*on* iv. 2. 33); षष्ठी 'हेतुप्रयोगे' इत्यतोऽनुवर्तमानमपि प्रयोगग्रहणमनङ्गीकृत्य PariVṛ. (Sī.) 5. 21; ह्रस्वग्रहणेऽनुवर्तमाने पुनर्यच्चकारेण तस्यानुवर्तनम् PariVṛ. (Sī.) 11. 23; 24. 15; सुपि स्थः इत्यतोऽनुवर्तमानं सुब्ग्रहणम् ... ज्ञापितम् Prasā. i. 6. 2; तद्ध्यन्तग्रहणम् 'झलो झलि' इत्यतोऽनुवर्तमानेन झलि इत्यनेन संबद्धम् Prasā. i. 87. 15; i. 218. 6; प्रत्ययग्रहणेऽनुवर्तमानेऽपि पुनः प्रत्ययग्रहणं कृत्स्नप्रत्ययलोपे यथा स्यात् Prasā. i. 159. 18; i. 453. 18; i. 698. 17; कर्मधारयपक्षे 'अन्त' इत्यनुवर्तमाने ... अन्तोदात्तत्वे विहिते ... पूर्वेषां चतुर्णामपि अचामनुदात्तः स्यात् MīmāKau. i. 117. 1 (*on* i. 3. 24); अग्निचिद्व्रतम् ... कर्तव्यमाहिताग्निव्रतवदिति प्राप्ते कर्मणि भूत इति चानुवर्तमाने ... चिनोतेः क्विप्प्रत्ययविधानात् BhāṭṭDī. ii. 198. 19 (*on* v. 3. 10); अनुबन्धानामेकान्तत्वे तु 'लोपो यि' इत्यतो लोपग्रहणेऽनुवर्तमाने पुनर्लोपग्रहणात् सर्वादेशत्वं बोध्यम् LaŚabdeŚe. i. 22. 17; i. 60 .4; झलीत्यनुवर्तमानं झलादि-प्रत्ययपरम् ... तदर्थकतयार्थाधिकारात् LaŚabdeŚe. i. 323. 3; i. 336. 25; GoviBh. 146. 5 (*on* ii. 3. 9); **4A** existing continuously or persisting ते च विकाराः परस्परमनुवर्तमानाः कदाचिदनुबध्नन्ति कामादयो ज्वरादयश्च CaraS. iii. 6. 8 (comm. यदैव ज्वरादयः कामादयो वा बलवत्त्वेन चिरकालमनुवर्तन्ते); अनुवर्तमानव्यावर्तमानयोः स्वभावोऽन्यो वक्तव्यः HetuBiṬ. 103. 9; सर्वथा दूरमपि विशेषणमालायामनुवर्तमानायां प्रथमोपलक्षणस्याभेदात् संबन्धदर्शनमुपपत्स्यते TantrVā. 693. 17 (*on* iii. 1. 12); अस्ति कश्चित्पार्थिवत्वादिस्वभावः पुरुषादीनां केशनखादिष्वनुवर्तमानो गोमयादीनां च वृश्चिकादिषु BrahmSūBh. (Śaṅ.) 294. 18 (*on* ii. 1. 6); 541. 8 (*on* iii. 1. 8); सर्वास्ववस्थास्वपि व्यावृत्तास्वनुवर्तमानमहमित्यन्तः-स्फुरन्तं सदा। स्वात्मानं प्रकटीकरोति DakṣiMūA. 7; क्षुत्पिपासोपजनिते संतापे शश्वदनुवर्तमाने जाठराग्निकृतविकारेऽन्नपाननिष्पन्दे वा न रोगबुद्धिर्जनस्य PañcPā. 32. 8 (*on* i. 1. 1); एकस्मिन्नपि द्रव्ये द्रव्यान्तराद् व्यावर्तमाने अनुवर्तमानयोर्जातिगुणयोर्भेदावगमादिति जातिनिर्णये निर्णीतम् PrakaPañ. 141. 7; न हीन्द्रियसंप्रयोगसमनन्तरं केषुचिदेव देहविशेषेषु अनुवर्तमानमन्यतो व्यावर्तमानं नरत्वातिरेकिणं ब्राह्मण्यं नाम जातिविशेषमपरोक्षयामः ĀgaPrā. 7. 8; न च ज्ञानात्मकत्वमेव ग्राह्यत्वं सुषुप्तावस्थायां ज्ञानात्मभूतस्य ज्ञानसंतानवदनुवर्तमानस्यपि ग्रहणाभावात् NyāyKa. 128. 3; सर्वं जगत् ... कर्मविशेषमुपभुञ्जानः कुलालव्यापारविगमे चक्रभ्रान्तिवत् संस्कारवशादनुवर्तमानस्य देहपातमुदीक्षमाणः NyāyKa. 284. 18; आज्ञादिभेदेऽप्यनुवर्तमाने प्रवृत्त्यभावस्य विरोधिमात्रे। लिङ्गादिशब्दस्य स वेत्ति शक्तिम् SaṁkṣeŚā. 1. 136 (i. 114. 18); बालादिशरीरेषु व्यावर्तमानेष्वपि परस्परमहंकारास्पदमनुवर्तमानं तेभ्यो भिद्यते Bhām. 2. 19 (*on* i. 1. 1); निश्चितेऽपि तत्त्वे विपर्यासनिबन्धनो व्यवहारोऽनुवर्तमानो दृश्यते Bhām. 43. 5 (*on* i. 1. 1); 57. 20 (*on* i. 1. 1); 88. 18 (*on* i. 1. 4); यस्मिन्ननुवर्तमाने यद् व्यावर्तते तत्तस्माद्भिद्यते यथा सुवर्णावयवेष्वनुवर्तमानेषु कटकमुकुटादयः। अनुवर्तमानेषु तु वर्णेषु व्यावर्तन्ते पदभेदाः TātpaṬ. (Vā.) 470. 13 (*on* ii. 2. 57); क्षीरावसेकादाम्लत्वं परिहृत्य माधुर्यमुपादायानुवर्तमानामलकी कालान्तरेऽपि फले माधुर्यमुन्मीलयति ĀtmaTaVi. 794. 9; अपवर्गपर्यन्तमेकमेव चित्तं धर्मितयानुवर्तमानं न निह्नोतुं पार्यते RājMār. 70. 24; दुःष्यन्तेन ... यदवगतं तत्तदनन्तरेऽप्यनुवर्तमानं प्रेमप्रकर्षाय भवति SaraKaṇṭhā. 657. 2; प्रैषादिष्वपि कार्यमेवानुवर्तमानं प्रवृत्तिहेतुतां भजते NyāyMa. 186. 10; 204. 4; सन्मात्रं सर्वासु प्रतिपत्तिष्वनुवर्तमानं दृश्यते BrahmSūBh. (Rā.) 23. 8 (*on* i. 1. 1); 696. 11 (*on* iii. 4. 26); कूटस्थो देवाद्यवस्थास्वनुवर्तमानः सर्वसाधारणज्ञानैकाकारात्मनि स्थितः GītāBh. (Rā.) 328. 1 (*on* 6. 8); सर्वभावानाम् ... ऐहिकामुष्मिकसर्वार्थसिद्धिः स्यात्। ... संस्कारादेरपि कस्यचित्स्थिरस्यानुवर्तमानस्यानभ्युपगमात् VedāntDī. 109. 6 (*on* ii. 2. 27); इदं रजतमित्यनुवर्तमानस्येदमर्थस्यावभासोऽक्षमूलः NītiMā. 19. 24; नियतक्रमस्य तस्य संस्काररूपेणानुवर्तमानस्य स्मारणेन व्यक्तीकारः VedāntKa. 230. 10 (*on* ii. 1. 2); भाष्ये भेदबुद्धावनुवर्तमानायामन्यतरबुद्धिरध्यास इत्यध्यासलक्षणमुक्तम् Vedānt Ka. 406. 2 (*on* iii. 3. 9); न हि तस्मिन्ननुवर्तमाने द्रव्यान्तरं समस्तीति प्रत्येति NyāyKu. 147. 8; 6.5; कुलाभिमानिभिः पुरुषैस्तादृग्विधाभिः स्त्रीभिश्च रक्ष्यमाणानि कुलान्युपप्लुतान्येवानुवर्तमानानि दृश्यन्ते CaturCin. iii (1). 344. 2; मोक्षहेतुः असकृदावृत्त आ प्रयाणादन्वहमनुवर्तमानो ज्ञानविशेषः NyāySiA. 216. 15; उत्तरोत्तरदिवसेष्वपि ... निर्वेदविषयतयानुवर्तमानानाम् ... दोषविशेषाणां निःशेषनिवृत्तिलक्षणवैशिष्ट्यलाभार्थम् ... मनोरथानुवर्तनं कार्यमेव PāñcRāRa. 91. 15; भूधातोस्सत्तार्थकत्वात्सर्वत्रानुवर्तमानं सद्रूपं ब्रह्मेति विज्ञायते BrahmSūBh. (Śrī.) i. 125. 5 (*on* i. 1. 2); ii. 465. 15 (*on* iv. 2. 18); अनुवर्तमानेन संस्कारेण उत्तरोत्तरः कर्मसंतानो जायते Upask. 232. 12 (*on* v. i. 17); 373. 13 (*on* ix. 1. 1); प्रकृत्यन्तरालादवैकार्यं चित्सत्त्वेनानुवर्तमानात् BhaktiSū. (Śā.) ii. 1. 11; मीमांसाशास्त्रे गुरुशिष्यपरंपरामविच्छेदेनानुवर्तमानामाहुः सांप्रदायिकाः ŚivārkaMaDī. i. 33. 25 (*on* i. 1. 1); i. 209. 17 (*on* i. 1. 13); असत्कार्यवादिनां

बौद्धानां नानुवर्तमानस्य द्रव्यस्यावस्थान्तरप्राप्तिर्विनाशः ŚivārkaMaDī. ii. 85. 7 (*on* ii. 2. 21); घटव्यक्त्यत्ययानन्तरमपि अनुवर्तमानाया नीलत्वजातेस्तदाश्रितत्व-नियमाभावात् PūrvottaVāNaMā. 75.3; प्रस्तरे यजमानभेदग्राहिणो यावद्ब्रह्मज्ञान-मर्थक्रियासंवादेनानुवर्तमानस्य प्रत्यक्षस्य प्रातिभासिकविषयत्वाभ्युपगमेनोपपादनायोगात् SiddhāLeSam̐. 249. 8; **4B** continuing, present गम्यस्याप्यनुवर्तमानस्य वेश्यास्वरूपप्रतिपत्त्यर्थमाह JayaMa. 323. 1 (*on* 6. 2); प्राचीनकालपर्यन्तमुपरवराहित्येन प्रतिपक्षताईपुरुषसमक्षमनुवर्तमानं साधयेत् SmṛtiCan. iii. 165. 13; **4Ci** recurring श्रीवर्धमानाभिधमात्मरूपम् इति विधेयमनुवर्तमानं बुद्धौ संप्रधार्य विज्ञेयम् Syādvā-Mañ. 1 (137); **4Cii** coming into being again and again ऋतुलिङ्गन्यायेन वा प्रतियुगमनुवर्तमाना बबरादयः प्रवाहनित्यतया न वेदस्यानित्यत्वमापादयन्ति YuktiSneha. 163. 11 (*on* i. 1. 8); **5** sticking to, adhering to लज्जां गुणौघजननीम् ... अनुवर्तमानाः। तेजस्विनः सुखमसूनपि संत्यजन्ति ... न पुनः प्रतिज्ञाम् ŚatTrayī. 2. 318; KumāPraPra. 56. 20; (भागुरायणः) कृतज्ञतामनुवर्तमानेनात्मनोऽनन्तर-ममात्यपदं ग्राहितः MudrāRā. 3. 24 (34); राज्यवर्धनहर्षौ ... प्रणयिनीमिव ... कुलपुत्रतामनुवर्तमानम् ... माधवगुप्तं ददृशतुः HarṣaC. 197. 13; **6A** complying with (पूषा) मन्दं मन्दम् अप्रियप्रश्नार्थमिव च स्थितिमनुवर्तमानो लौकिकीमवातरद्दिवः HarṣaC. 234. 4; असौ संनिहितधनिकचित्तमनुवर्तमानः तदनुगुणं वक्तुं शक्नोति ManuBh. ii. 103. 8 (*on* 8. 64); चित्तमनुवर्तमानानि मधुकरराजमिव मक्षिकाः सर्वाणीन्द्रियाणि प्रतीयन्ते RājMār. 41. 17; नरसिंहदेवस्य चित्तमनुवर्तमानेन विद्याधरेण कविना बाढमभ्यन्तरीकृतोऽसि RasāSu. 206. 4(2. 263 ½); **6B** imitating तं जीवकर्मपदवीमनुवर्तमानास्तापत्रयोपशमनाय वयं भजेम BhāgP. iii. 31. 16; प्रवृत्ति-विशेषे नियतो रूपकनाथ(म)को भविष्यति तादृक्प्रवृत्तिसमुचितवेषभाषाचारा-भिनयादिकमनुवर्तमानैः सूत्रधारादिभिः स्थापकान्तैः AbhinBhā. i. 251. 8 (*on* 5. 173); **7** using, i.e. enjoying (राजसुतः) अनुवर्तमान आगातारुण्यो-दीर्णविषयरितानि KuṭṭaMa. 738 (comm. सेवमानः)

**अनुवर्तमानता** (anuvartamāna-tā) *f.* **1** the state of being what exists continually or persists संस्कारो नामानुभवस्य कालान्तरेऽपि अनुवर्तमानता PratyabhiVi. i. 337. 1 (*on* i. 6. 9); अनाद्यविद्यादोषस्यानुवर्तमानतया भ्रमत्व-स्यैवौत्सर्गिकत्वात् SāṁkhyaPraBh. 65. 36 (*on* 1. 147); तेषाम् परमेश्वरधर्माणाम् ... उपसंहारपर्यन्तमनुवर्तमानतया भूयस्त्वं सौत्रेण ... सूचितम् ŚivārkaMaDī. i. 287. 20 (*on* i. 1. 31); **2** the state of being what is continued or supplied (from the previous context) 'ध्रुवमपायेऽपादान'मिति सूत्रादवधिपरस्य पदस्या-नुवर्तमानतया ... अस्य वैयर्थ्यप्रसङ्गात् ŚivārkaMaDī. i. 563. 17 (*on* i. 4. 25)

**अनुवर्तमानत्व** (anuvartamāna-tva) *n.* the state of being what exists continuously अहंकारग्रन्थेर्मनुष्याभिमानपर्यन्तस्याविकलमनुवर्तमानत्वात् PañcPā. 40. 2 (*on* i. 1. 0); व्यक्त्यन्तरे जातिप्रत्यभिज्ञया जातेरनुवर्तमानत्वम् ... प्रतीयते NītiMā. 29. 3; सांख्यादिसमयाः प्रमाणभूताः ... सर्वदानुवर्तमानत्वात् NyāySu. (Ja.) 315A. 13 (*on* ii. 2. 1)

**अनुवर्तमानत्वरूप** (anuvartamānatva-rūpa) *adj.* which is of the nature of the state of being what exists continuously प्रकर्षश्च ... निरन्तरमनु-वर्तमानत्वरूप इह ... विवक्षितः ŚivārkaMaDī. ii. 410. 32 (*on* iii. 4. 46)

**अनुवर्तमानत्वसंग्रह** (anuvartamānatva-saṅgraha) *m.* grasping or comprehension of the state of being what exists continuously (ब्रह्म धर्मिसत्ता-समानसत्ताकधर्मवत्) सत्ताकत्वादेरित्यादिना यावद्ब्रह्मस्वरूपमनुवर्तमानत्वसंग्रहः LaCandr. 718. 29.

**अनुवर्तमानदेह** (anuvartamāna-deha) *m.* body which continues to exist or persist न हि तत्त्वमस्यादिवाक्यश्रवणसमनन्तरमप्यनुवर्तमानदेहेन्द्रिया-दिभिर्दुःखादिकं न जायते ŚatDū. 137. 19.

**अनुवर्तमानद्वितीयान्त** (anuvartamāna-dvitīyānta) *adj.* (used as noun) what ends in accusative which is being continued (from the previous context) तदित्यनुवर्तमानद्वितीयान्ताबाधायाह तृन्नन्तमिति LaŚabdeŚe. ii. 292. 9.

**अनुवर्तमानधर्मवत्** (anuvartamānadharma-va(n)t ) *adj.* possessed of characteristic which exists continuously ब्रह्म ... यावत्स्वरूपमनुवर्तमान-धर्मवद्वा ...। धर्मैर्भावरूपधर्मैर्वा हीनं नावतिष्ठते, पदार्थत्वात् भावत्वात् Nyāyāmṛ. 489A. 7; AdvaiSi. 718. 2.

**अनुवर्तमानप्रतियोग्यधिकरण** (anuvartamāna-pratiyogyadhikaraṇa) *n.* locus of the counter positive which exists continuously न ततः पश्चाद-नुवर्तमानप्रतियोग्यधिकरणाश्रिताभावरूपध्वंससिद्धिः SiddhāLeSam̐. 438. 10.

**अनुवर्तमानबोधरूपता** (anuvartamānabodharūpa-tā) *f.* the state of being what is of the nature of knowledge which exists continuously नीलज्ञानं पीतज्ञानं शुक्लज्ञानमिति नीलपीताद्युपजनापायेऽप्यनुवर्तमानबोधरूपता ... अवधार्यते NyāyMañ. ii. 107. 11.

**अनुवर्तमानभावरूप** (anuvartamānabhāva-rūpa) *adj.* of the form of continuous existence आत्मा ... यावत्स्वरूपमनुवर्तमानभावरूपानात्मवान् ... पदार्थत्वाद् भावत्वाद्वा घटवत् Nyāyāmṛ. 153A. 5; AdvaiSi. 408. 8.

**अनुवर्तमानभ्रम** (anuvartamāna-bhrama) *m.* erroneous cognition which exists continuously रजतशुक्त्योरभेदग्रहेऽप्यनुवर्तमानभ्रमस्तु रजतभेदाज्ञानकार्यत्वात् तद्भेदज्ञानान्निवर्तते GuruCandr. i. 378. 15.

**अनुवर्तमानविपर्यय** (anuvartamāna-viparyaya) *m.* erroneous cognition or knowledge which exists continuously निरुपद्रवपरमार्थस्वभावस्य ... अनुवर्तमानविपर्ययैर्न बाधः VedāntKa. 21. 12 (*on* i. 1. 1)

**अनुवर्तमानव्यावर्तमानाकारता** (anuvartamānavyāvartamānākāra-tā) *f.* the state of having the forms existing and not existing जातिव्यक्त्योरेकत्वं चानुपपन्नम्, अनुवर्तमानव्यावर्तमानाकारतया तयोर्विरुद्धस्वभावत्वात् NītiMā. 28. 18.

**अनुवर्तमानसाक्षात्कार** (anuvartamāna-sākṣātkāra) *m.* direct knowledge (i.e. realisation) which exists continuously सततमनुवर्तमानसाक्षात्कारेण तस्याप्यविद्यालेशस्य निवृत्तिरिति कल्प्यते VedāntKa. 525. 25 (*on* iv. 1. 15)

**अनुवर्तमानस्थिराकार** (anuvartamāna-sthirākāra) *m.* the permanent form which exists continuously निरन्वयविनाशिनां ज्ञानानामनुवर्तमानस्थिराकार-विरहाद्वासना च दुरुपपादा BrahmSūBh. (Rā.) 494. 12 (*on* ii. 2. 27)

**अनुवर्तमानस्नेहातिशय** (anuvartamāna-snehātiśaya) *adj.* having excessive affection which exists continuously or persists मित्रस्य नैरन्तर्येण चिरकालमत्यन्तमनुवर्तमानस्नेहातिशयस्य ... यावदशौचं तस्मादपरदिने तदेव प्रकृतश्राद्धं कार्यम् HārLa. 180. 15.

**अनुवर्तमानस्वत्व** (anuvartamāna-svatva) *n.* ownership or proprietary right which exists continuously यस्मिन् वादे नाष्टिकस्यानुवर्तमानस्वत्वसाधक-प्रमाणाभावः ... तस्मिन्वादे ... राजा विनिर्णयं कुर्यात् SmṛtiCan. iv. 506.12.

**अनुवर्तमानानात्मवत्** (anuvartamānānātma-va(n)t) *adj.* possessed of non-self (i.e. body etc.) which exists continuously or persists आत्मा यावत्स्वरूपमनुवर्तमानानात्मवान् Nyāyāmṛ. 153 A. 5; AdvaiSi. 408. 7.

**अनुवर्तयत्** (anu-vartáyat) *adj.* [P. vi. 1. 186; vi. 2. 139] **1Ai** causing to go after or follow क्रव्यादा॑नुव॒र्तय॑न्मृ॒त्युना॑ च पु॒रोहि॑तम् AV. xi. 10.18; **1Aii** following, i.e. adhering to हृदयमनुकूलयामीति पृष्टो नृपेण चित्रशिखः स्वामिनोऽनुवर्तयन्नाशयं जगाद UdaySuKa. 40. 25; **1B** being in conformity with वसुंधरासंपादितशुद्धिमनुवर्तयन्ति बहुविधान्येतानि प्रादुर्भवन्ति KundaMā. 6. 34(2); **2** repeating or reciting together पच्छोऽर्धर्चशः सर्वां च तृतीयेन सहानुवर्तयन् PāraGS. ii. 3. 5; **3** favouring, i.e. providing तत् (सर्वथा) प्रजा न्यायेन मन्त्रसुखमनुवर्तयन् राजा राज्यसुखमनुभवति PañcT. 3. 121 (1) (369.15); **4A** causing to proceed properly नातिमहता व्यायामेन वेगानुदीरयन्नाप्रवृत्तान् प्रवर्तयन् प्रवृत्तांश्चानुवर्तयन् ... कण्ठमनभिस्पृशन् वमेत् AṣṭāSam̐. i. 139. 23 (1. 27); **4B** causing to continue विमर्शः ... स हि ... आत्मानमभिमत-प्रसिद्धार्थक्रियाप्राप्तिपर्यन्तमनुबन्धयन् (v.l. अनुवर्तयन् ) अनुन्मूलितवृत्तिः PratyabhiVi. ii.78.2 (*on* ii. 3. 2.); ii. 246.9 (*on* iii. 2. 2); अश्रौत्रैरपि तैः (ध्वनिभिः) यथाबोध-मनुवर्तयद्भिर्वृत्तिभेदासिद्धिः NyāyRa. 787. 18 (*on* 6. 227); **4C** continuing to hold श्रद्धां जनयन् भूयः कुर्वीतैवानुकारमेतस्य। अनुवर्तयंश्च गोष्ठीरनुरञ्जन-माचरेत्सङ्गे KandaCū. i. 4. 56; **5** being favourable यो वा एतमेवंविदम् अन्वेव अनुवर्तयन्नेव आत्नीयान्भार्यान्बुभूर्षति BṛĀraUBh. 62.7(*on* i. 3. 18); **6A** leading to एष धर्मभृतां श्रेष्ठो लोकं धर्मेऽनुवर्तयन् BhāgP. iv.16. 4; **6B** practising, observing अनुवर्तयन्व्रतमृणार्णधारयाप्यवसीदति स्म विधनः स सर्वथा ŚivLī. 18. 29.

**अनुवर्तयितव्य** (anu-vartayitavya) *adj.* [*f.*-ā] **1** to be caused to be repeated or to be recited over वैष्णवीमृचमनुवर्तयति। ... पृषदाज्य एवैषानुवर्तयितव्या भवतीति शालीकिः BaudhŚS. iii. 156. 10; iii. 282. 1; **2A** to be continued किंचिद्रूपं परिवर्ज्य त्यक्त्वा व्यावर्त्यमनुवर्तनीयम् (v.l. अनुवर्तयितव्यम्) च व्यवस्थाप्य PratyabhiVi. ii. 197.1 (*on* ii.4.18); **2B** to be continued or supplied (from previous context) अयं च छण् छन्दस्या(?स्य)भिधेय इष्यत इति 'शौनकादिभ्यश्छन्दसि' इत्यत्रानुवर्तयितव्यमाहुः Prasā. i. 780. 7; सूत्रेऽपि अनुवादपमनु-वर्तयितव्यमिति भाष्यकारः BhāṭṭCin. ii. 120. 5 (*on* vi. 3. 15); **3** to be practised or observed चिरमनुवर्तयितव्या काकतीयनरेश्वरपरिपालनपरिपाटी महाराजेन PratāYa Bhū. 216. 15.

**अनुवर्तयितुम्** (anu-vartayitum) *inf.* to carry out वत्स लक्ष्मण इदमपि तावदात्माभिप्रायमनुवर्तयितुमिच्छसि Prati. 4. 12 (2)

**अनुवर्तयित्वा** (anu-vartayitvā) *ger.* (irr.) having caused to repeat, i.e. having made to recite एकमिषे विष्णुस्त्वान्वेतु ... सप्त सप्तभ्यो होत्राभ्यो

विष्णुस्त्वान्वेत्विति निष्क्रम्यमाणेषु यजमानोऽनुवर्तयित्वा ĀpaŚS. x. 22. 12.

**अनुवर्तव्या** (anu-vartavyā) *adj*. (*f.*) to be observed or practised इयं परिभाषा प्रथमापराधविषयेऽनुवर्तव्या Smṛti Can. iii. 299. 14.

**अनुवर्ति** (anu-varti) *adj*. [Uṇā. 4. 119] accompanying with प्रजापतिरनुवर्तिस्सः प्रजाभिरनुवर्तिः। स मानुवर्तिरनुवर्तिं कृणोतु AV. (P.) ii.. 75. 1; देवा अनुवर्तयस्तेऽमृतेनानुवर्तयः। ते मानुवर्तयो अनुवर्तिं कृण्वन्तु AV. (P.) ii. 75. 5; *f.* the act of accompanying, AV. (P.) ii. 75.1.

**अनुवर्तित** (anu-vartita) *adj*. [*f*.-ā] **1** continued तदिच्छाम्यनुवर्णितम् (v.1. वर्तितम्) MahāBhā. xii. 234. 2; **2** (Buddh.) conforming to the previous one (i.e. *saṅghabheda* offence) अथापरः पुद्गलः संघावशेषामापत्तिमापन्नः ...। संघभेदसमुत्थितां दशरात्रिप्रतिच्छन्नाम्। तस्यानुवर्तितसमुत्थितामेकादशरात्रिप्रतिच्छन्नाम्! ... भगवत आरोचयन्ति GiMS. iii(3). 88. 3; **3** practised or observed केचिद्वृद्धास्तमाहुः ... राजन्। यथाशास्त्रमनुवर्तितं भवता Tantrākhyā. 90. 17; **4** behaved कृतकवचनैः कार्यारम्भैस्त्वयाप्यनुवर्तितम् Tantrākhyā. 130. 5; PañcT. 4. 19 (394.1); **5A** imitated अतिशयगुणं त्वत्पाण्डित्यं मयाप्यनुवर्तितम् Tantrākhyā. 130. 7; PañcT. 4. 19 (394 . 3); सर्वथा समानसुखदुःखतां दर्शयता विधिनापि भवतेव वयमनुवर्तिताः Kād. 73. 16; वृध्दाः समासेविता न व्यसनानि ... सतां चरितान्यनुवर्तितानि नेन्द्रियाणि Kād. 298. 6; **5B** followed, i.e. accepted इदानींतनैश्च पुरुषैरपि भ्रान्तिर्मन्वादीनामनुवर्तिता TantrVā. 74. 17 (*on* i. 3. 2); **5C** gone after or followed इयं चक्रसेनतनया ... द्वारदेशादीषदपसृतेनानुवर्तिता TilaMañ. 252. 17; **5D** followed, i.e. respected by, cf. **अनुवर्तितप्रज**; **6** manifested नरेन्द्रपुत्रीम् ... रहोविहारेष्वनुवर्तितैः स्वैः स रञ्जयामास गुणैर्गुणज्ञः VarāṅgaC. 19. 33; **7** continued or supplied (from the previous context) 'पद्दन्न'- इत्यत्र हि छन्दसीत्यनुवर्तितं वृत्तौ SiddhāKau. 76A. 11(*on* vi. 4. 10); इदमत्र तत्त्वम् ... ब्रह्म प्रकृतम् ... तदेव ... यच्छब्देनानुवर्तितम् GoviBh. 23. 12 (*on* i. 1. 24); **8A** encircled, i.e. surrounded by (युधिष्ठिरः) शशास गामिन्द्र इवाजिताश्रयः परिध्युपान्तामनुजानुवर्तितः BhāgP. i. 10. 3; **8B** attached to or devoted to एवमनुवर्तितात्कान्ताद्वित्तमाददीत JayaMa. 324. 2 (*on* 6. 3); **9** complied with, cf. **अनुवर्तितोक्ति**.

**अनुवर्तितकपालिन्** (anuvartita-kapālin) *adj*. who has imitated Lord Śiva अनुवर्तितकपालिन् हन भूतान् ĪśānŚiPa. i. 43. 53 (9)

**अनुवर्तितक्षत्रधर्म** (anuvartita-kṣatradharma) *adj*. who has practised or observed the duties of the Kṣatriyas नृपकुमारः ... अनुवर्तितक्षत्रधर्मैर्महाबलैर्नरपतिभिः ... क्षणमात्रमन्थरितरथगतिः ... वाहिनः भर्तुरन्तिकमधि(?ध्य)गच्छत् Tila Mañ. 89. 2.

**अनुवर्तितप्रज** (anuvartita-praja) *adj*. who has subjects following, i.e. respecting (कुमार) प्रमथ्य चम्पप्रमुखान् ...। प्रशाधि काञ्चीमनुवर्तितप्रजः पतिर्निधीनामलकापुरीमिव MadhuVi. 3. 41.

**अनुवर्तितवत्** (anuvartita-va(n)t) *adj*. **1A** who has gone towards किं मया कृतमेतावद्योऽहं कालमिमं जनम्। मत्स्यो जालं ह्यविज्ञानादनुवर्तितवांस्तथा MahāBhā. xii. 295. 23; BrahmP. 243. 23; **1B** who has gone along, i. e. who has adapted to मत्स्यो यथोदकज्ञानादनुवर्तितवानिह। ... आत्मानम्। तद्वत् ... वेद्म्यहम् MahāBhā. xii. 295. 24; **2** who has continued ममास्तु धिगबुद्धस्य योऽहम् ... । अनुवर्तितवान्मोहादन्यमन्यं जनाज्जनम् MahāBhā. xii. 295. 26; BrahmP. 243. 24.

**अनुवर्तितव्य** (anu-vartitavya) *adj*. **1** to be performed, to be practised क्रियाविशेषो ह्यनुवर्तितव्यः। ... कुमार कार्यस्य फलं न चिन्त्यम् Rāmā. iv. 29. 20; **2** to be endured एवं विहितोऽस्त्रबन्धो मयात्मयोनेरनुवर्तितव्यः Rāmā. v. 46. 39; **3** to be followed, i. e. to be admitted दोषेषु प्रतिविधातव्यं सिद्धान्तश्चानुवर्तितव्यः AbhidhKoBh. 80. 10 (*on* 2. 46); **4A** to be imitated भूतेन्द्रियैरपि तच्चरितमनुवर्तितव्यमिति ततः शास्त्रविरोधः TantrVā. 4. 13 (*on* i. 2. 2); **4B** to be behaved पित्रोरिव श्वशुरयोरनुवर्तितव्यम् ŚaṅkaDigVi. (Mā.) 3. 76; **5A** to be continued or to be supplied (from previous context) अवश्यं चोत्तरपदेन ... अनुवर्तितव्यं विषयरहितप्रतिषेधासंभवात् TantrVā. 326. 17 (*on* i. 4. 21); एतत्सूत्रत्रयन्यायो द्वेषिपुण्ये पापे चानुवर्तितव्यः TattvPrakā. 205A. 9 (*on* iv. 1. 18); **5B** to be followed, i.e. to be adhered to कर्मफलनित्यत्वशङ्काकलङ्कशूकोऽपि नानुवर्तितव्यः येन ... विवेकादिशैथिल्ये ब्रह्मजिज्ञासाप्रवृत्तिकातर्यमापद्येथाः SiddhāSi. i. 13. 13.

**अनुवर्तितशास्त्रमार्ग** (anuvartita-śāstramārga) *adj*. who has followed or observed the path (prescribed) by the scriptures यस्मिंश्च राजन्यनुवर्तितशास्त्रमार्गे प्रशासति वसुमतीं धातूनां सोपसर्गत्वम् ... बभूव TilaMañ. 15. 9.

**अनुवर्तिता** (anuvarti-tā) *f.* the state of being what conforms to, conformity स विस्मयनिवृत्त्यर्थं तपःपूजार्थमेव च। स्वां चानुवर्तितां रक्षन्नश्वपृष्ठादवातरत् BuddhaC. 6. 3 [compliance, MW.]

**अनुवर्तितांश** (anuvartitāṁśa) *adj*. who has caused to continue (his) aspect, i.e. who dwells in ज्ञानं यदेतददधात्कतमः स देवस्त्रैकालिकं स्थिरचरेष्वनुवर्तितांशः BhāgP. iii. 31. 16.

**अनुवर्तितुम्** (anu-vartitum) *inf.* **1** to go after , to follow **2** to adhere to **3A** to behave **B** to follow in action or behaviour **4A** to admit, to accept **B** to carry out **5A** to continue to exist, to persist **B** to continue, i.e. to keep on **6** to attend, to serve **7** to glorify, to please **1** to go after, to follow अनुवर्तितुमिच्छन्ति मातरः सततं सुतान् Rāmā. iv. App.I. 11 (16); शेकुस्तमनुवर्तितुम्। पृष्ठलग्ना निरुन्धन्तः स्थाने स्थाने विरोधिनः RājTa. (Ka.) 8. 408; **2** to adhere to बिभीषणः। ... अब्रवीत् ... इदं वचः। न कालः कपिराजेन्द्र वैक्लव्यमनुवर्तितुम् Rāmā. vi. 36.31; **3A** to behave तदर्हसि ... रूपस्यानुरूपेण दाक्षिण्येनानुवर्तितुम् BuddhaC. 4. 69; **3B** to follow in action or behaviour दुर्वासनया पीड्यमानो न साधूननुवर्तितुमुत्सहते JīvanVi. 85. 15; **4A** to admit, to accept राजशार्दूल मूढस्य नयवर्त्मनि। सुदुर्बुद्धेर्नानुवर्तितुमर्हसि BrahmāṇḍP. ii. 28. 50; निषेद्धुमनुवर्तितुमप्यपारीणतया निश्चलार्पितदृष्टिषु नन्दिमुखेषु पारिषदेषु ... उमाधवो गरलमुपयुयुजे NīlaVi. 101. 15; **4B** to carry out वेधसा ... तेनैव त्वयि दुर्धियां दनुभुवामादिष्टमाचार्यकम्। ... शक्तस्त्वं त्वनुवर्तितुं तदपि खल्वाकाशवद्वर्तितुम् NīlaVi. 64.11; **5A** to continue to exist, to persist संतुष्टः को न शक्नोति फलैश्चाप्यनुवर्तितुम्। सर्वस्त्विन्द्रियलोभेन संकटान्यवगाहते PadmP. v. 19. 258; मेलनं अनुवर्तितुमिच्छुः अनुविवृत्सुः सन् विमर्शः Bhāsk. ii. 127.22 (*on* ii. 3. 13); **5B** to continue, i.e. to keep on न हि महाशिलानिष्पाते चक्रभ्रमिरनुवर्तितुं शक्नोति AṇuBh. 312.17 (*on* iv. 1.15); **6** to attend, to serve मया ... निजसहोदरीं मन्दोदरीमनुवर्तितुम् ... स्थितम् PrasaRā. 6. 8(9); **7** to gratify, to please राजानं यदि वानुवर्तितुमये किं राजतन्त्रेऽमुना पृष्टे चोत्तरयामि Jīvān. 247.3 (comm. अनुनयेनावर्ज्य प्रसादयितुम्)

**अनुवर्तितृ** (anu-vartitṛ) *adj*. who carries out निष्फलो मम तर्कः। अथवा वयमार्यस्याभिप्रायमनुवर्तितारः Abhiṣe. 6. 23(6)

**अनुवर्तितोक्ति** (anuvartitokti) *adj*. who has complied with the sayings 'यत्र ब्रह्माण्डशुक्तिसंपुटमध्यमुक्ताफलगुलिकया तयालंकृतं तत्कुण्डिनं नगरम्' इत्यभिदधाने निषधनाथे तैस्तैरालापैरनुवर्तितोक्तिः पुष्कराक्षोऽप्यभाषत NalaCam. 6.65 (3)

**अनुवर्तित्व** (anuvarti - tva) *n.* the state of being one who is in accordance or in compliance with भर्तुश्चिन्तानुवर्तित्वं स्ववृत्तं चानुजीविनाम् NītiSā. 5. 55.

**अनुवर्तिन्** (anu - vartin) *adj*. [*f* - ī] (also used as noun) **1Ai** imitating **ii** resembling, being similar to **B** obeying, obedient **Ci** sticking to, adhering to **ii** following, i.e. admitting or accepting **2A** observing, practising **B** behaving **3A** complying with **B** being in accordance with **4Ai** going after, following **ii** going after, following (the husband after death) **Bi** going on, continuing **ii** coming together **iii** going along with, accompanying **Ci** follower, attendant, servant **ii** follower, i.e. devotee or worshipper **iii** follower (of a sect) **D** continuing to exist or present throughout **Ei** existing, being situated **ii** being in proximity **5** follwing as a consequence **6** favourable to **1Ai** imitating सायुषी नाम वासि ...। गृहकपोतिमनुवर्तिनीं कुलायिनीं ता इहा वेशयामसि AV.(P.) xx. 19. 15; तेषां(नृणां) ज्वलितकीर्तीनामन्योन्यमनुवर्तिनाम्। राज्ञां बलैर्बलवतां पीड्यते वसुधातलम् HariVaṁ. 41. 17; प्रायेण विषये तस्य (शुद्धोदनस्य) तच्छीलमनुवर्तिनः। अर्जयन्तो ददृशिरे धनानीव गुणानपि Saund. 2.11; मा भूदीश्वराणां मतिविभ्रमेण तच्चरितमनुवर्तिनीनां प्रजानां धर्मविप्लवः TātpaṬ. (Vā.) 669. 5 (*on* iv. 2. 51); **1Aii** resembling, being similar to अग्नीषोमीयस्य पशुपुरोडाशमुत्तरमुत्तरं तन्त्रमनुवर्ती स्यात् Baudh ŚS. iii. 220. 4; कश्च लक्ष्मणमुक्तानां रामकोपानुवर्तिनाम्। शराणामग्रतः स्थातुं शक्तो देवासुरेष्वपि Rāmā. v. 49. 17; (अब्रवीद्रावणम् ... विभीषणः) इह नेता च विगुणः सहाया गुणवर्जिताः (v. 1. सहायाश्चानुवर्तिनः) Rāmā. vi. App. I. 2(318); ध्वनिरपि च विपञ्चीपञ्चमस्यानुवादी (v. 1. °वर्ती) श्रुतिरपि कलकण्ठी कण्ठसंवादमेति PrasaRā. 6. 14; **1B** obeying, obedient यो वानुवर्ती पुत्राणां स पुत्रो दायभाग्भवेत् MahāBhā. i. 848*(1); भरतः ...। ज्येष्ठानुवर्ती धर्मात्मा सानुक्रोशो जितेन्द्रियः Rāmā. ii. 4.26; चक्रवाकः ... प्रेष्यवद् भार्यामनुवर्त्यनुगच्छति BuddhaC. 4. 50; 12. 93; मृतानां स्वामिनः कार्ये भृत्यानामनुवर्तिनाम्। भवेत् स्वर्गेऽक्षयो वासः कीर्तिश्च धरणीतले PañcT. (Kos.) 1. 331 (71. 21); Pañcā.

79. 23; नानुवर्तिना बुद्धैरपि रज्यतोपकारकोटिशतैरपि शक्यते स्वीकर्तुम् AvantiKa. 197. 6; यदन्यद्विहितं किंचित् ...। तत् सर्वमनुसर्तव्यं वक्तव्यं चानुवर्तिषु MṛgendraT. ii. 8. 218; अहापयन् नृपः कालं भृत्यानामनुवर्तिनाम्। कर्मणामानुरूप्येण वृत्तिं समनुकल्पयेत् NītiSā. 5. 63; SūktiRa. 156. 61; यः कोपः सापराधेषु यः प्रसादोऽनुवर्तिषु। स्वामिनस्तेन लोकोऽयं गुणपरायणः YaśasCam. ii. 235. 3; ते मयि ... अर्भके दान्तेऽधृतक्रीडनकेऽनुवर्तिनि। चक्रुः कृपाम् ... मुनयः BhāgP. i. 5. 24; परवशानुवर्तिनस्तु ... वारणाः Hastyāyur. 402. 26 (3. 7); कन्या (अङ्गारवती) ... पृष्टा तेनेति भूभृता। सा तं प्रत्यब्रवीदेवं मन्मथाज्ञानुवर्तिनी KathāSaSāg. ii. 3. 52; नायकहितानुरागानुकूलं यथालोकं त्वनुवर्तिनी मध्यमा (अभिसारिका) ŚṛṅgāMañ. (A.) 39. 26; **1Ci** sticking to, adhering to वाक्यं धर्मपथानुवर्तिनः। निशम्य रामस्य वचः सुयुक्तं निजगाद वानरः Rāmā. iv. 18. 56; दशार्धयुक्तेन रथेन यातो मनोवशेनार्यपथानुवर्तिना। तं चेद्रथं नापहरन्ति वाजिनस्तथागतं नावजयन्ति शत्रवः VisṇuSm. 72. 6; वदिष्याम्यनृतं ब्रह्मन्कथमत्र तवान्तिके। विशेषादद्य भवता पृष्टा मार्गानुगामिना (v. l. °वर्तिना PW.) BrahmP. 178. 89; **1Cii** following, i. e. admitting or accepting नराधिपा नीचमतानुवर्तिनो बुधोपदिष्टेन न यान्ति वर्त्मना। विशन्ति ते दुर्गममार्गनिर्गमं समस्तसंबाधमनर्थपञ्जरम् Tantrākhyā. 43. 12; Pañcā. 101. 23; **2A** observing, practising युगपद्धर्मानुवर्तिनौ स्यातामिति वाचानुमान्याग्निकार्यं स्वयं कृत्वा यत्कन्यामर्हयित्वा दद्यात्स प्राजापत्यो भवति VaikhāGS. 3. 1; स्वधर्मानुवर्तिनां शूद्रानुलोमानामामं क्षुधितस्य संग्राह्यम् VaikhāDS. ii. 15. 8; हा नृशंसाद्य कैकेयी पापा पापानुबन्धिनी (v. l. °वर्तिनी) तीक्ष्णा संभिन्नमर्यादा तीक्ष्णे कर्मणि वर्तते Rāmā. ii. 43. 5; vi. 9. 16; रमन्ते किं न पशवः प्राणिधर्मानुवर्तिनः VitVṛ. 8; स्वधर्मम् अनुवर्तिनां वैश्यानां स्थानं मारुतं कीर्तितम् ViṣṇuP. i. 6. 35; वैष्णवं धर्ममुत्सृज्य बौद्धधर्ममुपागताः। प्रजास्तामनुवर्तिन्यः क्षपणैः प्रतिबोधिताः SkandP. iii(2). 36. 36; अत्रासवृत्तिरवदातगुणानुवर्ती श्रीरामराजनरपालमणिस्समिंधे EI. xiv. 222. 112; ix. 338. 170; **2B** behaving प्रभुः क्षमावान्वीरश्च मृदुर्दान्तो जितेन्द्रियः। रहोऽनीचानुवर्ती च क्लीबवन्मम नैषध MahāBhā. iii. 71. 14; एवं तत्रोचिरे केचिद्ये धर्मेणानुवर्तिनः BrahmP. 170. 30; **3A** complying with साहं सर्वात्मना नित्यं भर्तारमनुवर्तिनी MahāBhā. iii. 598* (2); चतुर्दश सहस्राणि मम चित्तानुवर्तिनाम्। ... सर्वोद्योगमुदीर्णानां रक्षसां सौम्य कारय Rāmā. iii. 21. 8; iv. 18. 51; vi. App. I. 2 (122); राक्षसाश्चापि गृह्यन्ते नित्यं छन्दानुवर्तिभिः PañcT. (Kos.) 1. 79 (15. 20); अनुवर्तिनि कलत्रे। ... निवेद्य दुःखं सुखी भवति PañcT. (Kos.) 1. 388 (82. 15); Pañcā. 12. 12; 49. 7; SiṁhāDvā. 100. 4; लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना। स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते VākyaP. 1. 109; छन्दानुवर्तिनो दाराः प्रियाः शीलविभूषिताः AṣṭāHṛ. i. 13. 7; छन्दानुवर्तिनां लोके कः परः प्रियवादिनाम् NītiSā. 5. 56; परचित्तानुवर्तिनः। स्वयंविक्रीतदेहस्य सेवकस्य कुतः सुखम् VetāPañ. (Śi.) 18. 45; का देवता कः सुजनोऽनुवर्ती ऋते भवत्या शरणं न मेऽस्ति VarāṅgaC. 19. 55; **3B** being in accordance with युगानुवर्तिनो लोका यजन्तीह सुमेधसः GopāloTāU. 1(16) (596. 26); श्रुतानुवर्तीनि मतानि वेधसामसंशयं साधु भवन्ति भूतये NītiSā. 1. 69 (comm. शास्त्राहितपरिज्ञानपूर्वकारीणि); पूर्णप्रणयानुवर्तिना तद्ब्राण्डनिधानोद्देशः कथितः DaśKuC. 59. 12; **4Ai** going after, following अश्रुबिन्दूद्भवा तस्याः प्रावर्तत महानदी। अनुवर्तती (v. l. °वर्तिनी) सृतिं तस्या भृगोः पत्न्या यशस्विनः MahāBhā. i. 6. 6; i. 112. 22 (v. l.); कुमारः ... सन्नकौतुकमवलोकमानः ... अनुवर्तिभिरनोकहैर्मनोज्ञमाधीज्ञानजीवंजीवकां कूजत्कोकिलाम् ... कमपि चीरवाससं ददर्श AvantiKa. 226. 1; **4Aii** going after, following (the husband after death) सत्यवती ... सशरीरा गता स्वर्गं भर्तारमनुवर्तिनी Rāmā. i. 33. 8; **4Bi** going on, continuing एवं व्यूढेष्वनीकेषु भूयिष्ठमनुवर्तिषु। ब्रह्मलोकपराः सर्वे समपद्यन्त भारत MahāBhā. vi. 113. 1; **4Bii** coming together को हि शक्तो रणे पार्थ ... जेतुम् ... वीरान्कृतास्त्रान्समरे सर्वानेवानुवर्तिनः MahāBhā. viii. 51. 14; **4Biii** going along with, accompanying वर्तमानेऽपि देहेऽस्मिन्छायावदनुवर्तिनि। अहन्ताममताभावो जीवन्मुक्तस्य लक्षणम् ViveCū. 433; अहमपि तवानुवर्ती भविष्यामि BhartṛNi. 4. 2 (5); **4Ci** follower, attendant, servant सेनापतिगुणाश्च ये। ... दुष्टेङ्गितं च विविधं वृत्तिश्चैवानुजीविनाम् (v. l. °वर्तिनाम्) MahāBhā. xii. 59. 56; भगवांस्तत्र बन्धूनां पौराणामनुवर्तिनाम्। यथाविध्युपसंगम्य सर्वेषां मानमादधे BhāgP. i. 11. 21; तथाश्ववक्त्रच्युतफेनबिन्दुभी रुचिं नृपायेव तदानुवर्तिभिः Rāvaṇā. 3. 14; गीतज्ञः ... रुद्रस्य परमेश्वरस्यानुचरोऽनुवर्ती भूत्वा तेनैव रुद्रेणैव सार्धं मोदते Aparā. 991. 17 (*on* 3. 115); **4Cii** follower, i.e. devotee or worshipper पवित्रारोहणम् ...। मनुष्यामरसिद्धानां वक्तव्यं चानुवर्तिनाम् PauṣkS. 30. 222; जगाद मारुतिर्यूयं परमप्यनुवर्तिनः। अनर्थबान्धवा एव मम नो हितहेतवः PadmP. (Ra.) 113. 6; अवतारानुचरितं हरेश्चास्यानुवर्तिनाम्। पुंसामीशकथाः प्रोक्ता नानाख्यानोपबृंहिताः BhāgP. ii. 10. 5; **4Ciii** follower (of a sect) दर्शनान्तरसंस्थाभ्यश्च्युतानामनुवर्तिनाम्। विधायैवं स्वजात्यन्तं दीक्षां कुर्याद्विलोमतः MṛgendraT. iv. 1. 27; **4D** continuing to exist or present throughout न अभिघातयेत् ...। पारंपर्यागते द्वारे ये केचिदनुवर्तिनः MahāBhā. xii. 101. 26; स चातत्कार्यविश्लेषस्तदन्यस्यानुवर्तिनः। अदृष्टेः प्रतिषेधाद्य संकेतस्तद्विदर्थिकः PramāVār. 1. 111; **4Ei** existing, being situated अस्मिन्नेव पुरोऽनुवर्तिनि लतावेश्मन्यपास्तातपे संवेश्यालिमरन्दपङ्कनिवहैरालिप्य वक्षस्तटीम्। ... संप्रार्थ्य मुद्राम् ... मातुः प्रद्यो वयम् GopāKeCan. 126. 30; 127. 15; **4Eii** being in proximity मिरिंजिदेशांतर्गतकोडवल्लिखंपणानुवर्त्तिनि कोंनिजवाडग्रामे ... निवर्त्तनद्वयं मान्यम् ... क्रयेणादाय EI. xxiii. 31. 30; **5** following as a consequence तमोभवा ...। आगन्तुकी व्याध्यनुवर्तिनी च रात्रिस्वभावप्रभवा च निद्रा CaraS. i. 21. 58; **6** favourable to तानि ...। बाधकान्यनुवर्तीनि मध्यस्थान्यवगत्य च। योगी ... बिभृयात् इष्टसिद्धये MṛgendraT. iii. 1. 38 [guided by, Apte]

**अनुवर्तिपुरस्सर** (anuvarti-purassara) *adj.* led by the follower(s) चतुर्थमष्टकं यद्वै ह्यनुवर्तिपुरस्सरम्। तदानन्तकरं विद्धि PauṣkS. 24. 50.

**अनुवर्त्म** (anuvartma) *adv.* in the similar course or manner नो हान्यस्यानुवर्त्म गेयम् JaimiBr. 1. 144; 1. 333; तद् वायोश्चापां चानुवर्त्म गेयम् JaimiUBr. i. 2. 4; i. 2. 7.

**अनुवर्त्मन्** (ánu-vartman) *adj.* [P. vi. 2. 1; AltGr. II. 1. 312; Debru. 762] **A** who follows the track or path मर्मं यातमनुवर्त्मान् एतं AV. iii. 8. 6; vi. 94. 2; **B** who follows the path, i.e. obedient or attendant मरुतो वै देवानां विशः ... आसादयति विशमेवास्मा अनुवर्त्मानं करोति TaiS. II. ii. 5. 7; II. ii. 11. 12; इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानः TaiS. IV. vi. 5. 6; V. iv. 7. 7; MaiS. ii. 11. 1(ii. 140. 7); iii. 3. 10 (iii. 44. 13); KāṭhS. 18. 6 (i. 270. 15); 21. 10 (ii. 51. 2); KapiKaS. 28. 6 (126. 9); VājaS. 17. 86; VājaS. (K.) 18. 86; दैवीं च वा अस्मा एतद् विशं मानुषीं चानुवर्त्मानौ करोति MaiS. iii. 3. 10 (iii. 44. 14); ṢaḍvíBr. i. 4. 5; ŚatBr. II. v. 2. 34; IV. iii. 3. 10; IX. iii. 1. 16; IX. iv. 3. 9; XII. vii. 3. 12; XIII. ii. 2. 15; ŚatBr. (K.) I. v. i. 30; V. iii. 4. 9; JaimiBr. 1. 95; 2. 197; 3. 205; सजातानेवास्मा अनुवर्त्मनः करोति KāṭhS. 11. 1 (i. 143. 10); विशं चैवास्मै तच्छौद्रं च वर्णमनुवर्त्मानौ कुर्वन्ति AitBr. 36. 4 (903); यन्मम त्वं कृतानुकरानुवर्त्मासि ŚatBr. I. iv. 5. 9; I. iv. 5. 11; तदस्माऽइदꣳ सर्वमनुवर्त्म करोति ŚatBr. III. iii. 4. 5; ŚatBr. (K.) IV. iii. 4. 2; तदिदꣳ सर्वं मनसः कृतानुकरमनुवर्त्म ŚatBr. IV. iv. 1. 9; ŚatBr. (K.) V. iv. 3. 9; स्त्रियः पुꣳसोऽनुवर्त्मानो भावुकाः ŚatBr. XIII. ii. 2. 4; ŚatBr. (K.) II. iv. 3. 12; तस्यै सर्वे देवा अनुवर्त्मानः JaimiBr. 1. 338; अथो हैतत् ब्राह्मण एव क्षत्रमनुवर्त्म करोति JaimiBr. 2. 171; 2. 172; 2. 426; **C** who or which follows ऋचमेव तत् साम्नोऽनुवर्त्मानं कुर्याद्य एनं तत्र ब्रूयादनुवर्त्मा न्वा अयं होता सामगस्याभूत् Ait Br. 8. 4 (228); ऋचं स साम्नोऽनुवर्त्मानं करोति KauṣīBr. 12. 5 (55. 11)

**अनुवर्त्मन्** (ánu-vartman) *n.* **1A** act of following of the path, i.e. attendance एतद्वै देवानामनुवर्त्म MaiS. iii. 3. 10 (iii. 44. 14); KāṭhS. 21. 10 (ii. 51. 2); **1B** (mental) following of the path आर्षभस्येह राजर्षेर्मनसापि महात्मनः। नानुवर्त्मार्हति नृपः BhāgP. v. 14. 42 (Bhāvārthadīpikā वर्त्मानुगन्तुं न शक्नोति) (*but* pw. way on which one has trodden after another); **2** name of a *havis* तदेतदनुवर्त्म नाम हविः KāṭhS. 11. 1 (1. 143. 10)

**अनुवर्त्मम्** (anuvartmam) *adv.* along the path or track अनुवर्त्ममौदुम्बरीं शाखामुपगूहति KātyŚS. xv. 6. 31 (comm. रथचक्रवर्त्मनि)

**अनुवर्त्य** (anuvart-ya) *ger.* **1A** having gone after, having followed अश्रुबिन्दूद्भवा तस्याः प्रावर्तत महानदी। अनुवर्तती (v. l. अनुवर्त्य) सृतिं तस्या भृगोः पत्न्याः MahāBhā. i. 6. 6; प्रत्युत्तराभासमात्रकेण तमनुवर्त्य तूष्णीमतिष्ठम् UdaySuKa. 35. 13; **1B** having followed, i. e. having complied with एतावन्तं कालमेतं जनमनुवर्त्य संप्रत्यनभिमतं चिकीर्षसि RasSa. 128 (3); **2A** having continued or supplied (from the previous context) नुमेवानुवर्त्य इहार्थमुत्तरार्थं च MahāBh. iii. 269 . 6 (*on* vii.1.78); अचीत्यनुवर्त्यजादौ जुसि गुणो विधेयः PariVṛ. (Śi.) 130 . 22; 'ऋतश्च संयोगादेः' इत्यत्र सति इति पदमनुवर्त्य PrakriKau. ii. 332 . 5; 'बहोर्लोपो भू च बहोः' इत्यतो लोपग्रहणमनुवर्त्य PāṇiTaVāNaMā. 57. 14; इह वा सुपीत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् SiddhāKau. 20B. 15 (*on* vi. 1.94); पूर्ववदित्यनुवर्त्य वाक्यभेदेन संबध्यते SiddhāKau. 346 B. 7 (*on* i . 3 . 63); कर्तरि शबित्यत्र सार्वधातुके इत्यनुवर्त्य VaiyāBhū. 25. 3 (*on* 3); तदशिष्यमित्यनुवर्त्य वचनमित्यत्र योज्यम् VaiyāBhū. 44 . 6 (*on* 8); अन्ये तु एतस्या एव मुद्राया इत्यनुवर्त्य कनिष्ठानामिके मुद्रामध्यगे मध्यमातर्जनीभ्यां समे च कार्ये इति योजयन्ति SetuBa.

विध्यसंस्पर्शो वा ग्रहैकत्ववदनुवादकत्वं वेन्द्रि(य)कामहोमवत् TantrVā. 21. 21 (*on* i. 2. 7); शब्दस्त्वर्थे पश्चान्निश्चयं जनयन्नप्यनुवादकत्वान्न प्रमाणम् PrakaPañ. 244.5; 242. 17; केचिदाहुः प्रत्यक्षानुमानविषयत्वे शब्दस्यानुवादकत्वम्। तदविषयत्वे संबन्धाग्रहणादवाचकत्वम् NyāySā. 31. 17; न सिद्धार्थप्रतिपादकत्वमनुवादकत्वम् ... किं त्वर्थगताधिगन्तृत्वम् NyāyKa. 4. 18; अनुवादकत्वं समर्थयता ल्युट्तृतीययोः पौनरुक्त्यं समाहितं न चानुवादकत्वं शब्दाभ्यासस्य प्रयोजनवत्ताव्यतिरेकेण सिध्यति NyāyVārPari. 138. 3; शास्त्रस्य विधायकत्वाभावादनुवादकत्वादर्थस्य चोपाधित्वात्तस्य च परत्वासंभवात् परत्वाभावः Pradī. iii. 2A. 24 (*on* iii. 1. 1); न च जीवेश्वरभेदः सिद्ध इत्यनुवादकत्वं भेदवाक्यानाम् ViṣṇuTaNi. 3B. 7; BrahmSūBh. (Rā.) 32. 8 (*on* i. 1. 1); न च यं कामं कामयते सोऽस्य संकल्पादेव समुत्तिष्ठतीति सामान्यवचनात् सर्वशक्तित्वसिद्धिः, यं कामं कामयत इत्यस्यानुवादकत्वात् ŚatDū. 157. 18; अनेकशाखाबोधिते चैकस्मिन्कर्मणि प्रथमेनाज्ञातज्ञापने सिद्धे द्वितीयादेरनुवादकत्वेन तत्र प्रामाण्यम् SarvaDaKau. 97. 24; अन्यतमया वृत्त्येत्यनुवादकत्वादेकत्वमविवक्षितम् ManvaMu. 146. 23 (*on* 4. 13); अनुवादकत्वं हि वाक्यस्य न ज्ञातज्ञापकत्वमात्रम् Nyāyāmṛ. 156B. 8; 567A. 8; ŚāṁkhyaPraBh. 2. 20 (*on* 0. 0); अष्टाकपालादिवाक्येषु विध्यश्रवणाद्विधियोग्यपुरुषव्यापारमात्रस्याप्यश्रवणात् यच्छब्दोपबन्धेनानुवादकत्वस्यैव प्रत्यायनात् ŚivārkaMaDī. i. 181. 15 (*on* i. 1. 4); ii. 284. 14 (*on* iii. 3. 2); (अरुणया ... सोमं क्रीणाति) 'अरुणया' इत्यत्र तृतीयाविभक्तिस्तु न तद्गतकरणत्वानुवादिनी। ... कारकविभक्तेरनुवादकत्वेन वैयर्थ्यकल्पनायोगात् PūrvottaVāNaMā. 125. 4; GuruCandr. i. 263. 20; लौकिकवाक्यानां मानान्तरावगतार्थतयानुवादकत्वम् VedāntPari. 223. 1; अनुवादकत्वेन च अनयोः सामानाधिकरण्यसिद्ध्यर्थं जघन्येऽपि पृष्ठशब्दे साधनलक्षणा नैवं विरुध्यते MīmāKau. i. 191. 13 (*on* i. 4. 3); iii (1). 54. 2 (*on* i. 2. 29); iii (2). 169. 4 (*on* ii. 2. 3); अस्य पूजनतर्पणयौगपद्ये न्यायप्राप्तस्य वामहस्तस्यानवादकत्वेनोपपत्तेरुपसंहारकत्वायोगात् SetuBa. 86. 21; अनूयाजान्प्रकृत्यानवानं यजतीति श्रुतम्। शाखान्तरे चोत्तमेनैवान्यादिति श्रूयते। उत्तम इति वाक्यस्यानुवादकत्वेन विशेषविधित्वाभावान्नोपसंहारकत्वम् BhāṭṭCan. 120. 4 (*on* xvi. 3. 15); **2** the state of being what produces the cognition consequently नहि प्रमितप्रमापकत्वमनुवादकत्वं किं तु पश्चाद्बोधकत्वमात्रम् AdvaiSi. 427. 6.

**अनुवादकत्वकथा** (anuvādakatva-kathā) *f.* talk about the state of being what reiterates न चेष्टापत्तिः मानान्तरगृहीतप्रमाणभावप्रत्यक्षनिर्णीते मानान्तरस्याननुवादकत्वे जगत्यनुवादकत्वकथोच्छेदप्रसङ्गात् AdvaiSi. 427. 19.

**अनुवादकत्वकल्पन** (anuvādakatva-kalpana) *n.* assumption of the state of being what reiterates अनुमानविषये जगत्कर्तरि प्रवर्तमानस्य शास्त्रस्य न तथा किंचित्फलं दृश्यत इत्यनुवादकत्वकल्पनमेव न्याय्यम् ŚivārkaMaDī. i. 145. 15 (*on* i. 1. 3); दशक्रयवचनस्य विधायकत्वे संभवति न अनुवादकत्वकल्पन युक्तम् PūrvottaVāNaMā. 146. 13.

**अनुवादकत्वकल्पना** (anuvādakatva-kalpanā) *f.* assumption of the state of being what reiterates मन्त्रविशिष्टग्रहणविधिगौरवपरिहाराय परिसंख्यापरिहाराय च मन्त्रप्रतीकोपादानमात्रस्यानुवादकत्वकल्पनायामनुपपत्त्यभावात् VidhiRa. 27 (144. 21)

**अनुवादकत्वकृत** (anuvādakatva-kṛta) *adj.* caused by the state of being what reiterates न च नानाशाखागतेष्वग्निहोत्रादिवाक्येषु किंचिदपि वाक्यं शाखान्तरवाक्यतः प्राप्तिमपेक्ष्य स्वार्थं बोधयति। अतो नानुवादकत्वकृतं वैरूप्यम् ŚivārkaMaDī. ii. 284. 17 (*on* iii. 3. 2)

**अनुवादकत्वप्रसङ्ग** (anuvādakatva-prasaṅga) *m.* undesired occasion for the state of being what reiterates अप्रमाणत्वं प्रमाणान्तरसापेक्षत्वात् प्रमायां साधकतमत्वाभावादिति न सिद्धार्थप्रतिपादकत्वमनुवादकत्वं प्रत्यक्षस्याप्यनुवादकत्वप्रसङ्गात् NyāyKa. 4. 18; सन्मात्रग्राहिप्रत्यक्षनिराकरणाय शास्त्रस्यानुवादकत्वप्रसङ्गे विवरणकारैरुक्तम् NyāyPari. 367. 3; पुरोवादपूर्वकत्वादनुवादस्यात्रायं पुरोवाद इत्यस्यैवाभावात् न शाखान्तरस्थवाक्यस्यानुवादकत्वप्रसङ्गः AdvaiSi. 424. 15.

**अनुवादकत्वप्रसिद्धि** (anuvādakatva-prasiddhi) *f.* ascertainment or proof of the state of being what reiterates न चैतावता भवत्यप्रमाणता। प्रत्यक्षानुमानयोरपि तुल्यविषयत्वादित्यर्थः। तर्हि कथमनुवादकत्वप्रसिद्धिः VedāntKa. 179. 4 (*on* i. 3. 8)

**अनुवादकत्वभङ्ग** (anuvādakatva-bhaṅga) *m.* loss or refutation of the state of being what reiterates भेदश्रुतेरनुवादकत्वभङ्गः Nyāyāmṛ. 588B. 2.

**अनुवादकत्वलक्षण** (anuvādakatva-lakṣaṇa) *adj.* characterised by the state of being what reiterates अवबोधकत्वेनेति। अज्ञातज्ञापकत्वेनेत्यर्थः। तथा चानुवादकत्वलक्षणमप्रामाण्यं निरस्तम् GuruCandr. i. 376. 17.

**अनुवादकत्ववत्** (anuvādakatva-vat) *adv.* like the state of being what reiterates प्रथमं वेदद्रष्टारं प्रति तद्वेदीयशाखान्तरवाक्यस्यानुवादकत्ववत्सत्त्वप्रत्यक्षवन्तं प्रति सत्त्वश्रुतेरनुवादकत्वानपायात् GuruCandr. i. 450. 24.

**अनुवादकत्वशङ्का** (anuvādakatva-śaṅkā) *f.* doubt regarding the state of being what reiterates न च शब्दस्यैवानुवादकत्वशङ्केति नियन्तुं शक्यम् VivaPraSaṁ. 294. 15.

**अनुवादकत्वशङ्कानुपपत्ति** (anuvādakatvaśaṅkānupapatti) *f.* untenability of the doubt regarding the state of being what reiterates न च ... भेदकत्वाभावः शङ्क्यः, विधायकत्वांशे आमिक्षावाक्यस्य वाजिनवाक्यस्य च समत्वेनानुवादकत्वशङ्कानुपपत्तेः MīmāKau. iii (2). 263. 10 (*on* ii. 2. 22)

**अनुवादकत्वसंभव** (anuvādakatva-sambhava) *m.* possibility of the state of being what reiterates साधिकारनियोगसंनिधौ प्रयाजादिवाक्यानि श्रुतानि न तावत्स्वविषयं नियोगान्तरमवगमयितुमीशते, अवघातादिवदनुवादकत्वसंभवात् PrakaPañ. 442. 17; NyāyRaMā. 138. 18; उपांशुत्वस्य वेदधर्मत्वेऽप्यु'च्चैर्निगदेने'त्यस्य निरर्थवादकस्यैव निगदमात्रोद्देशेन विशेषविधया पक्षप्राप्तोच्चैस्त्वादिनियामकत्वोपपत्तेर्नानुवादकत्वसंभवः MīmāKau. iii (2). 118. 10 (*on* ii. 1. 42 )

**अनुवादकत्वसिद्धि** (anuvādakatva-siddhi) *f.* establishment of the state of being what reiterates प्रमातरि चरमप्रत्ययाधायकत्वादाश्रयस्यानुवादकत्वसिद्धिः VedāntKa. 179. 6 (*on* i. 3. 8)

**अनुवादकत्वस्वीकार** (anuvādakatva-svīkāra) *m.* acceptance of the state of being what reiterates अङ्गविधीनां कार्यत्वमस्ति तथापि प्रधानपूर्वकार्यत्वस्यैवाङ्गविधिपर्यन्तत्वेन पृथक् तेषां कार्यत्वं नास्ति। अत एव तन्मतेऽङ्गविधीनामनुवादकत्वस्वीकारः MayūMāli. 199. 23 (*on* iii. 1. 10)

**अनुवादकत्वाङ्गीकार** (anuvādakatvāṅgīkāra) *m.* acceptance of the state of being what reiterates लिङ्प्रत्ययस्यानुवादकत्वाङ्गीकारान्मुख्यो विध्यर्थो बाध्येत NyāyMāVi. 43. 7 (*on* i. 4. 3)

**अनुवादकत्वादर्शन** (anuvādakatvādarśana) *n.* non-observation of the state of being what reiterates स्पर्शज्ञानयोग्यद्रव्यविषयस्य चक्षुषोऽनुवादकत्वादर्शनात् VivaPraSaṁ. 294. 12.

**अनुवादकत्वानपाय** (anuvādakatvānapāya) *m.* absence of the loss of the state of being what reiterates प्रथमं वेदद्रष्टारं प्रति तद्वेदीयशाखान्तरवाक्यस्यानुवादकत्ववत्सत्त्वप्रत्यक्षवन्तं प्रति सत्त्वश्रुतेरनुवादकत्वानपायात् GuruCandr. i. 450. 24.

**अनुवादकत्वानुपपत्ति** (anuvādakatvānupapatti) *f.* untenability of the state of being what reiterates प्रथमप्रवृत्तस्य शूर्पवाक्यस्यानुवादकत्वानुपपत्तेरयं प्रकारोऽनुपपन्नः MayūMāli. 13. 21 (*on* i. 2. 3)

**अनुवादकत्वापत्ति** (anuvādakatvāpatti) *f.* contingency of the state of being of what reiterates पराभिमतत्रयोदश्यादिविषयत्वे चानुवादकत्वापत्तेः। यतस्त्रयोदश्यादौ वर्गद्वयस्य श्राद्धं तत्प्रकरणे विशेषवचनैरेव विहितम् CaturCin. iii (1). 84. 16; नाप्यर्थापत्तिः। ... प्रमाणान्तरसिद्धे च वस्तुनि चोदनाया अनुवादकत्वापत्तेः YuktiSneha. 16. 22 (*on* i. 1. 2); एतन्मात्रनिर्णयपरेऽत्र शास्त्रे स्थितस्यास्य श्लोकस्यानुवादकत्वापत्तेः Bhāsk. ii. 305. 14 (*on* iv. 1. 12)

**अनुवादकत्वापरिहार** (anuvādakatvāparihāra) *m.* non-avoidance of the state of being what reiterates न च ... श्रुतेर्नानुवादकत्वमिति वाच्यम्। ... सत्यादिपदप्रवृत्तिस्वीकारेण तदतिरिक्तविश्वसत्यत्वस्य शाब्दबोधाविषयत्वात् तदादायानुवादकत्वापरिहारात् AdvaiSi. 424. 5.

**अनुवादकत्वापात** (anuvādakatvāpāta) *m.* contingency of the state of being what reiterates सत्यादिवाक्यस्य संसर्गाबोधकत्वे अनुवादकत्वापातात् LaCandr. 673. 42.

**अनुवादकत्वाभ्युपगम** (anuvādakatvābhyupagama) *m.* acceptance of the state of being what reiterates श्रुतिस्थकिंचनेत्यादिपदानामनुवादकत्वाभ्युपगमात् AdvaiSi. 516. 16; लाघवादेकैव भावना। न च तद्वाचकतिप्प्रत्ययाभ्यासाद् भेदः तस्य धात्वर्थविधानार्थमनुवादकत्वाभ्युपगमेनानन्यपरत्वाभावात् MīmāKau. iii (2). 138. 1 (*on* ii. 2. 1)

**अनुवादकत्वायोग** (anuvādakatvāyoga) *m.* untenability of the state of being what reiterates एकस्य संभूतशब्दस्य क्वचित् प्रतिपादकस्य क्वचिदनुवादकत्वायोगात्, परंपरया ब्रह्मजत्वोपपत्तेश्च वायोरपि तेज उत्पद्यत इति सिद्धान्तितम् ŚrutaPra. ii. 353. 15 (*on* ii. 3. 17); प्रत्यक्षस्याप्रामाण्ये श्रुतेरनुवादकत्वायोगात् Nyāyāmṛ. 588A. 5; वाक्यान्तरेण जौहवस्य प्रयाजार्थत्वाप्राप्तेः प्रकरणस्य दुर्बलत्वेन तत्प्राप्त्या प्रत्यक्षवचनस्यानुवादकत्वायोगात् MayūMāli. 364. 8 (*on* iv. 1. 16)

**अनुवादकत्वोपपत्ति** (anuvādakatvopapatti) *f.* tenability of the state of being what reiterates न च परप्रत्यायनरूपकार्यानुरोधेनोपांशुत्वविधेस्संकोचादु'च्चैर्निगदेने'त्यस्यानुवादकत्वोपपत्तेर्न भेदबोधकता MīmāKau. iii (2). 115. 13 (*on* ii. 1. 39)

**अनुवादकत्वोपपादक** (anuvādakatvopapādaka) *adj.* (used as noun) that which explains, i.e. facilitates the state of being what reiterates विरोधे विरोधिनो मानत्ववत् अनुवादकत्वोपपादकस्य मानताया अनपेक्षितत्वात् AdvaiSi. 823. 5.

**अनुवादकधी** (anuvādaka-dhī) *f.* knowledge arising from what reiterates लिङ्गता च शक्तिमत एव, वाक्यस्यानुवादकता च। नन्वनुवादकधीर्न मितिः NayaVi. 53. 4 (*on* i. 1. 2)

**अनुवादकपूजा** (anuvādaka-pūjā) *f.* worship, i.e. honour of one who repeats or reports (for explanation) प्रायश्चित्तकृत् ... सभ्यानुवादकपूजां च विधाय ... नम्रस्तिष्ठेत् BālamBha. iii. 211. 6 (*on* 3. 327); कर्ता ... अनुवादकपूजां च करिष्ये इति संकल्प्य चन्दनादिना संपूज्य ... संकल्पानुवादकाय ... दक्षिणां दद्यात् BālamBha. iii. 217. 9 (*on* 3. 327)

**अनुवादकवाक्य** (anuvādaka-vākya) *n.* sentence of one who repeats or reports यदि ... वक्त्रनुवादकवाक्ययोर्विभिन्नैवानुपूर्वी तदानुवादकवाक्ये तदुक्तित्वादिना विशेषदर्शनेऽप्यानुपूर्वीप्रकारेण देव्युच्चरितत्वादिभ्रमादेव श्रोतुर्देव्यादिप्रतीतिस्वीकारेणानुपपत्त्यभावात् ŚaktiVā. 119. 6.

**अनुवादकवाक्याध्ययन** (anuvādakavākyādhyayana) *n.* study of the sentence which restates or reiterates क्रतुविध्यपेक्षितवाक्यार्थज्ञानार्थत्वपक्षे तादृशज्ञानस्यान्यतस्सिद्धौ तदुद्देशेनानुवादकवाक्याध्ययने 'स्वाध्यायोऽध्येतव्यः' इति विधिना प्रवृत्त्यनुपपत्तेरित्यर्थः GuruCandr. i. 471. 22.

**अनुवादकविभक्ति** (anuvādaka-vibhakti) *f.* case -suffix which restates or reiterates (the meaning known through the stem) अनन्वितार्थकविभक्त्यपेक्षयानुवादकविभक्तेरेव न्याय्यत्वान्न द्रव्यादिभ्यः सर्वविभक्त्यापत्तिः LaŚabdeŚe. i. 425. 5.

**अनुवादकविशेष** (anuvādaka-viśeṣa) *m.* distinction of one who repeats or reports (for explanation) वर्णक्रमेण चानुवादकविशेषोऽङ्गिरसैव दर्शितः BālamBha. iii. 205. 28 (*on* 3. 327)

**अनुवादकसंबोध्य** (anuvādaka-sambodhya) *adj.* (used as noun) one who is to be addressed by one who repeats or reports तादृशेच्छामादायानुवादकसंबोध्यस्य संबोध्यतापत्तिः ŚaktiVā. 126. 2.

**अनुवादकांश** (anuvādakāṁśa) *m.* part of restatement or reiteration अनुवाद्यस्यासत्त्वे ... अनुवाद्यविधेयसंसर्गरूपवाक्यार्थो बाधितः स्यात्। नापि नेह नानेति निषेधार्थः। तत्रैव किंचनेत्यनुवादकांशस्य सत्त्वात् Nyāyāmṛ. 163A.3.

**अनुवादकाभ्युपगम** (anuvādakābhyupagama) *m.* acceptance of (sentence as being) a restatement or reiteration विस्पष्टं पौरुषेयत्वमन्यथा यद्योन्यामिति वाक्यमनुवादकं स्यादिति भावः। अनुवादकाभ्युपगमेऽप्याह - नहीति MayūMāli. 601. 4 (*on* ix. 2. 2)

**अनुवादकारण** (anuvāda-kāraṇa) *n.* cause of restatement or reiteration यदि हि विपरिवृत्तिरनुवादकारणं स्यात् ततो न कर्मान्तरमध्यवसीयेत TantrVā. 453. 14 (*on* ii. 2. 2); विधिः स्वस्य विशिष्टविधिगौरवपरिहारार्थं धात्वर्थभावनयोः प्राप्तिमन्यतोऽपेक्षते। तस्यां चापेक्षायां प्रत्यभिज्ञानमनुवादकारणम्, न त्वपेक्षाराहित्येऽपि Mīmā Kau. iii (2). 147. 7 (*on* ii. 2. 2)

**अनुवादकारणत्व** (anuvādakāraṇa-tva) *n.* the state of being the cause of restatement or reiteration अपेक्षाप्रत्यभिज्ञयोर्द्वयोरपि परस्परापेक्षत्वेनानुवादकारणत्वात् यथैव 'सोमेन'त्यादौ सत्यामप्यपेक्षायां प्रत्यभिज्ञाभावान्न धात्वर्थभावनयोरनुवादः MīmāKau. iii (2). 147. 8 (*on* ii. 2. 2)

**अनुवादकार्थवाद** (anuvādakārthavāda) *m.* explanatory passage which restates or reiterates नन्वनुवादकार्थवादानामप्रमाणकत्वात्कथं विधिभिर्वाक्यैकवाक्यता VedāntKa. 179. 1 (*on* i. 3. 24)

**अनुवादकृत** (anuvāda-kṛta) *adj.* caused by repetition 'विश्वजित्सर्वपृष्ठो भवति' ...। रथन्तरपृष्ठबृहत्पृष्ठयोर्ज्योतिष्टोमे विकल्पितयोरिहापि चोदकेन विकल्पप्राप्तौ सर्वशब्देन समुच्चयो विधीयते। तथा सति - अनुवादकृतं वैयर्थ्यं न भविष्यति NyāyMāVi. 383. 1 (*on* vii. 3. 3)

**अनुवादकेच्छाविषयत्व** (anuvādakecchāviṣaya-tva) *n.* the state of being the object of desire of one who repeats or reports वक्तृप्रतिपाद्यतया युष्मदर्थघटितवाक्यार्थघटितो यो वाक्यार्थकर्मकोक्तिक्रियाघटितवाक्यार्थस्तद्विषयकत्वविशिष्टप्रतिपत्त्याश्रयत्वेनैव तस्यानुवादकेच्छाविषयत्वात् ŚaktiVā. 125. 24.

**अनुवादकोच्चारित** (anuvādakoccārita) *adj.* uttered by one who repeats or reports अनुवादकेन यः संबोध्यते स नानुवादकोच्चारितयुष्मच्छब्दनिरूपितनिरुक्तसंबोध्यतावान् ŚaktiVā. 125. 20.

**अनुवादगत** (anuvāda-gata) *adj.* **1** pertaining to, i.e. referred to by the restatement or reiteration 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते' इत्यनुवादगतचतुर्दशसंख्याश्रवणं सतीष्वपि पार्वणहोमादिषु अवषट्काराहुतिषु सवषट्काराहुतिविषयतया योज्यते PūrvottaVāNaMā. 146. 6; **2** belonging to the subject, cf. **अनुवादगतत्व**.

**अनुवादगतत्व** (anuvādagata-tva) *n.* the state of belonging to the subject समासे विध्यनुवादगतत्वेन विवक्षितयोः प्राधान्याप्राधान्ययोर्विपर्यासप्रसङ्गात् Ekāva. 6. 1 (3) (155. 3)

**अनुवादगिर्** (anuvāda-gir) *f.* expression of restatement or reiteration विप्रादेरनुवादः स्यात्प्रापणं वानुवादगीः। व्यत्ययाय त्रयाणां च राजत्वाप्राप्तिरस्ति हि NyāyMāVi. 93. 25 (*on* ii. 3. 2)

**अनुवादगोचर** (anuvāda-gocara) *m.* object of restatement or reiteration अज्ञानस्य साक्षिसिद्धतया प्रमाणाबोध्यत्वात्, प्रमाणज्ञानोदयात्प्राक्कालेऽज्ञानं तद्विशेषितोऽर्थः साक्षिसिद्धोऽज्ञात इत्यनुवादगोचरो भवति TattvPradī. (Ci.) 60.2; NyāySu. (Ja.) 63A. 12 (*on* i. 1. 1); Vādā. 32. 2.

**अनुवादज्ञान** (anuvāda-jñāna) *n.* cognition through reiteration, i.e. reiterative or repetitive cognition ज्ञानमात्रस्य पक्षत्वे त्वनुवादज्ञाने हेत्वसिद्धिः स्यात् VivaPraSaṁ. 21. 5.

**अनुवादतस्** (anuvāda-tas) *adv.* on account of the restatement or reiteration शब्दो लिङादिशून्योऽपि ह्यविज्ञातार्थबोधकः। विधिर्भवति सामर्थ्याज्ज्ञाते ह्यर्थेऽनुवादता (v. l. °वादतस् ASS. Ed.) BṛĀraUBhVā. i. 4. 856; निर्विण्णस्याग्रे ... शमान्वितायेत्यनुवादतः शमदमसंपत्तिर्लब्धा ŚivārkaMaDī. i. 85. 34 (*on* i. 1. 1); इष्यते चानुवादतोऽपि पदार्थप्राप्तिः MīmāKau. ii. 29. 4 (*on* ii. 3. 4)

**अनुवादता** (anuvāda-tā) *f.* the state of being a secondary reference, the state of being a restatement or reiteration यद्यपि प्राथम्यस्य स्त्रीलिङ्गसंबन्धः श्रौतस्तथापि प्राथम्यस्यैवाभ्यासेन संबन्धो न लिङ्गस्य। यदि लिङ्गस्यैतेन संबन्धोऽभिधीयते, प्राथम्यस्यानुवादता कल्प्येत ŚābaBh. 1675. 28 (*on* ix. 1. 33); सिद्धार्थमपि यद्वचः। न मानान्तरलब्धार्थतया तस्यावबोधकम्। न तत् सापेक्षमेषा चेदभिप्रेतानुवादता BrahmSi. 79. 16; सर्वत्राख्यातसंबद्धे ... विधिशक्त्युपसंक्रान्तेः स्याद्धातोरनुवादता TantrVā. 290. 2 (*on* i. 4. 3); अर्थे निश्चिते पश्चात्सोऽर्थो वाक्येन गम्यते। तस्यां दशायां वाक्यस्य तस्य स्यादनुवादता PrakaPañ. 36. 2; मिते तत्र न पूर्वस्मिन्सिद्धेऽप्यर्थेऽनुवादता BṛĀraUBhVā. (Sambandha.) 677; विध्यन्तरात्सिद्धेर्वेदान्तस्यानुवादता BṛĀraUBhVā. i. 4. 797; i. 4. 856; न च भूतार्थतामात्रेणानुवादतेत्युपरिष्टान्निपुणतरमुपपादयिष्यामः Bhām. 71. 8 (*on* i. 1. 2); वाक्यानि चानुवादतया नेतव्यानि TantrRa. 106. 5; परिचायकतानुरोधेनैकस्य विधित्वमपरस्यानुवादतेति बोध्यम् MīmāKau. ii. 328. 17 (*on* iii. 3. 10); एवं व्यभिचारभये गलिते वाक्यार्थनिर्णये जाते। पुनरभिधत्ते शब्दोऽप्यनुवादतयेति तस्य राद्धान्तः MānaMe. 104. 7.

**अनुवादताप्रसक्ति** (anuvādatā-prasakti) *f.* undesired occasion for the state of being a restatement or reiteration यत्र फलपर्यन्तपरीक्षादिना नाप्रामाण्यशङ्का यथा अवघातादेर्वैतुष्यादिसाधनग्राहकलौकिकमाने तेनानुवादताप्रसक्तेः व्रीहीनवहन्तीत्यादेर्नियमतात्पर्यकत्वं स्वीकृतम् GuruCandr. i. 470. 20.

**अनुवादताप्रसङ्ग** (anuvādatā-prasaṅga) *m.* undesired occasion for the state of being a restatement or reiteration अप्राप्तप्रापकस्य आगमस्यानुवाद[ता]प्रसङ्गोऽपि परिहृतः स्यात् NyāySiA. 232. 14.

**अनुवादत्व** (anuvāda-tva) *n.* **1** the state of being the subject, i.e. counterpositive of predicate धर्मस्य जिज्ञासा ...। आनन्तर्यविधाने तु या वेदाध्ययने कृते। इत्येवमनुवादत्वात्प्रागप्येषा प्रसज्यते ŚlokaVār. 1. 82 (26. 9); 'यश्चोदनालक्षणः स धर्मः' इत्येतस्यां वचनव्यक्तावर्थशब्दस्य न विधेयत्वम्, वाक्यभेदप्रसङ्गात्, नानुवादत्वम्, अतिप्रसङ्गात् TātpaṬ. (U.) 119. 12 (*on* 2. 283); कडाराः कर्मधारय इत्यत्र यः कडारशब्दस्तस्यानुवादत्वात् प्राधान्यम् PariVṛ. (Sī.) 168. 5; **2** the state of being a restatement or reiteration, the state of being secondary reference तेनेतरैः प्रमाणैर्या चोदनानामसङ्गतिः। तयैव स्यात्प्रमाणत्वमनुवादत्वमन्यथा ŚlokaVār. 2. 72 (68. 2); दुष्टत्वाच्छुक्तिकायोगो वार्यते रजतेक्षणात्। एवं सत्यनुवादत्वं लक्षणस्यापि संभवेत् ŚlokaVār. 4. 39 (145. 6); संवादत्वानुवादत्वमेकस्यैकान्तनिश्च (?श्चि)तम्। ऐकान्तिकविधित्वाद्य ब्राह्मणे तन्न युज्यते TantrVā. 177. 14 (*on* i. 3. 10); 287. 15 (*on* i. 4. 2); यथा चान्यत्रार्थवादानामनुवादत्वाल्लक्षणावृत्तिरदोषः TantrVā. 819. 24 (*on* iii. 3. 2); एवमन्यतरस्यातिवादत्वे (v. l. अनुवादत्वे) (ASS. Ed.) अवश्यंभाविनि ऋचा प्रतिषेधविधानम् ṬupṬ. 228. 1 (*on* ix. 4. 17); किं वाक्यस्यानुवादत्वं सिद्धेऽर्थे मान्तरेण वा। मिते तत्र न पूर्वस्मिन् सिद्धेऽप्यर्थेऽनुवादता BṛĀraUBhVā. (Sambandha.) 677; साकाङ्क्षत्वानुवादत्वे कुतश्चावगते त्वया। अप्रामाण्यान्न चेत्ताभ्यां विधेयप्रक्षयाद्विधेः TaiUBhāVā. 185. 18 (2); धर्मं प्रति प्रत्यक्षमनिमित्तमेवंलक्षणकत्वादित्यनुवादत्वं लक्षणस्यापि संभवेदिति तदेतल्लक्षणवर्णने

सूत्रयोजनमसमीचीनम् NyāyMañ. 1. 93. 18; साधकबाधकयोरन्यतरोपनिपातः संभवति। तत्र साधकसंभवेऽनुवादत्वम् इतरत्र बाधितविषयत्वादप्रमाणत्वम् Kāśi. i. 67. 21 (*on* 2. 21); ii. 16. 11 (*on* 5 (1). 1) कुतस्तदुपनिपातसंभावनयानुवादत्वम् ĀgaPrā. 20. 2; दश यज्ञायुधानीति ... लाक्षणिकार्थत्वापत्तेः। अथ वानुवादत्वेनाप्रवृत्तिविशेषकरत्वात् TantrRa. 42. 17; ईश्वरेऽपि शास्त्रस्यानुवादत्वमपि तत्रांशे नाशङ्कनीयमेव NyāyKu. 87. 5; विप्रग्रहणमनुवादत्वात् क्षत्रियादिप्रदर्शनार्थम् CaturCin. iii (1). 57. 8; iii (1). 1057. 1; iii (2). 601. 8; ब्रह्मणः प्रमाणान्तरगोचरत्वे तद्विषयस्यागमस्यानुवादत्वं प्रसञ्जयता सूचितम् ŚatDū. 222. 26; विप्रेणैवाध्यापनमिति विधानेन संभवत्यप्यनुवादत्वमस्येति वृथा मेधातिथेर्ग्रहः ManvaMu. 28. 17 (*on* 1. 103); किं चानुवादत्वेऽपि नैष्फल्यमात्रं न त्वप्रामाण्यं याथार्थ्यमेव प्रामाण्यं न त्वनधिगतार्थत्वमित्यन्यत्रोक्तत्वात् Nyāyāmṛ. 162B. 1; अर्थेऽनुपलब्धे इत्यनुवादत्वं निरस्यति YuktiSneha. 44. 29 (*on* i. 1. 5); त्रिवृत्कुर्वत उपदेशात् इति सूत्रं त्वनुवादत्वान्न पञ्चीकरणं न्यायसिद्धं बाधितुमुत्सहते SiddhāBi. 103. 1; अर्थवादस्य गुणत्वादनुवादत्वेन लक्षणासहिष्णुत्वाच्च तत्रैव लक्षणा युक्ता UpaParā. 2. 9; गुणवृत्तिनिमित्तकथनार्थत्वाच्च पूर्ववदेव संगतित्रयम्। तत्र न तावदयमर्थवादः येनानुवादत्वात् गुणवृत्त्यङ्गीकरणमपि युज्यते MīmāKau. i. 285. 16 (*on* i. 4. 27); न च वैयर्थ्यं, रशनाधर्माणां दर्भमयीत्वादीनामेतत्परिव्याणसाधारण्यसिद्ध्यर्थमनुवादत्वस्य तृतीये साधितत्वात् BhāṭṭDī. ii. 148. 11 (*on* iv. 4. 9); iv. 5. 5 (*on* x. 5. 3); नापि 'वायुर्वै क्षेपिष्ठा देवता' इतिवदनुवादत्वम् संवादिप्रमाणाभावात् VīraMi. (Bhakti.) 42. 3; ननु अनुवादत्वेऽनुशब्दस्यानर्थक्यमित्यस्वरसादनुशब्दस्य कर्मप्रवचनीयत्वमाश्रित्य ... यागविधानमुपपादयति MayūMāli. 172. 10 (*on* ii. 3. 10); इदं सूत्रं समाहारद्विगावेव। अनुवादत्वे लाघवात् LaŚabdeŚe. ii. 36. 6; **3** the state of being the continuation or supplying (from the previous rule) परस्मिन्निति निमित्तभावे सप्तमी, न परसप्तमी, परशब्देनैव परत्वस्योक्तत्वात् परस्मिन्य आदेश इति अनुवादत्वात् PadMañ. *on* KāśiVṛ. *on* P. i. 1. 57 (191. 23)

**अनुवादत्वकारण** (anuvādatva-kāraṇa) *n.* cause of the state of being a restatement or reiteration न चाप्युद्दिश्यमानत्वमनुवादत्वकारणम् TantrVā. 625. 3 (*on* ii. 3. 26); [Abl.] on account of the state of being a restatement or reiteration मानत्वं तत्र च श्रुतेः। न कथंचन संभाव्यमनुवादत्वकारणात् BṛĀraUBhVā. iv. 3. 1747.

**अनुवादत्वगमक** (anuvādatva-gamaka) *adj.* indicative of the state of being a restatement or reiteration अनुवादत्वगमको हि शब्दोऽसंभवादुपेक्षणीयः NyāyMāVi. 156. 27 (*on* iii. 4. 5)

**अनुवादत्वनिर्वाहार्थम्** (anuvādatvanirvāhārtham) *adv.* for the sake of facilitating the state of being a restatement or reiteration अनुवादस्य पुरोवादसापेक्षत्वात् पुरोवादपर्यालोचनेनैवात्मलाभ इत्यनुवादत्वनिर्वाहार्थं पुरोवादपर्यालोचनस्यावश्यकत्वात् MayūMāli. 148. 11 (*on* ii. 2. 9)

**अनुवादत्वनिश्चय** (anuvādatva-niścaya) *m.* ascertainment of the state of being a restatement or reiteration अनुवादत्वनिश्चयात्प्रथमं जायमान एव प्रत्ययो विशेषविषय एव जायते न तु सामान्यविषयः अतो यज्यर्थत्वेऽपि न पारिप्लवत्वम् MayūMāli. 525. 2 (*on* vii. 1. 1)

**अनुवादत्वपर** (anuvādatva-para) *adj.* intended to be a restatement or reiteration न च सूत्रमप्यनुवादत्वपरमेवास्तु MayūMāli. 539. 24 (*on* vii. 3. 9)

**अनुवादत्वपरिहार** (anuvādatva-parihāra) *m.* avoidance or removal of the state of being a restatement or reiteration अथातो ब्रह्मजिज्ञासेति सूत्रेऽनुवादत्वपरिहाराय ... कर्तव्येतिपदमध्याहार्यम् NyāySu. (Ja.) 21B. 13 (*on* i. 1. 1); आकरग्रन्थेषूक्तरीत्यानुवादत्वपरिहाराय दार्शिकहविःसामान्ये लक्षणामङ्गीकृत्य पूर्वदेवतापनयनस्य वक्ष्यमाणदेवताभ्यो विभागस्य वा विधेयत्वाभ्युपगमेऽपि ... अनुवादत्वापरिहारात् VidhiRa. 39 (?40) (200. 4)

**अनुवादत्वप्रतीति** (anuvādatva-pratīti) *f.* cognition of the state of being a restatement or reiteration विधित्वानुवादत्वप्रतीतिमन्तरेण वाक्यार्थस्यैवानवगमात् CaturCin. iii (1). 114. 9; अपूर्वार्थो विधीयताम् इति चेत्। मैवम्। हिशब्देन यच्छब्देन चोभयत्रानुवादत्वप्रतीतेः NyāyMāVi. 156. 11 (*on* iii. 4. 4)

**अनुवादत्वप्रदर्शनार्थम्** (anuvādatvapradarśanārtham) *adv.* for the sake of showing (the sacrifice) as being a restatement or reiteration योऽपि यत् जुहोतीति यच्छब्दात् द्रव्यप्रत्ययो भवति सोऽपि ... क्रियाविशेषणभूतस्यानुवादत्वप्रदर्शनार्थम् TantrVā. 1019. 4 (*on* iii. 4. 46)

**अनुवादत्वप्रयुक्त** (anuvādatva-prayukta) *adj.* caused by the state of being a restatement or reiteration (वैफल्येन स्वाध्यायविधिग्रहणानुपपत्तेः) अध्ययनस्याक्षरावाप्त्यर्थत्वपक्षे अनुवादत्वप्रयुक्तवैफल्यस्यादोषत्वेऽपि ... अनुवादकवाक्याध्ययने स्वाध्यायोऽध्येतव्यः इति विधिना प्रवृत्त्यनुपपत्तेः GuruCandr. i. 471. 21.

**अनुवादत्वप्रसङ्ग** (anuvādatva-prasaṅga) *m.* undesired occasion for the state of being a restatement or reiteration ननु भवतीति स्वतःसिद्धम्। मैवम्। तथा सत्यनुवादत्वप्रसङ्गात् NyāySu. (Ja.) 17A. 2 (*on* i. 1. 1)

**अनुवादत्वभङ्ग** (anuvādatva-bhaṅga) *m.* loss of the state of being a restatement or reiteration श्रोतव्य इत्यादेरनुवादत्वभङ्गः Nyāyāmṛ. 619B. 11.

**अनुवादत्वलक्षण** (anuvādatva-lakṣaṇa) *n.* characteristic of the state of being a restatement or reiteration अग्निहोत्रपदे स्पष्टमनुवादत्वलक्षणम् TantrVā. 296. 19 (*on* 1. 4. 4)

**अनुवादत्वलाक्षणिकत्वकल्पन** (anuvādatvalākṣaṇikatva-kalpana) *n.* assumption of the state of being a restatement and the state of being an indicatory statement पृष्ठैः स्तुवत इति श्रुतेरनुवादत्वलाक्षणिकत्वकल्पनस्य ... अयुक्तत्वात् VidhiRa. 29 (164. 12)

**अनुवादत्वव्यञ्जकाभाव** (anuvādatvavyañjakābhāva) *m.* absence of what indicates the state of being a restatement or reiteration (यत्किंचिल्लिङ्गाभावेन लैङ्गिकाभावस्य वक्तुमशक्यत्वात्) लिङ्गाभावेन अनुवादत्वव्यञ्जकाभावेन GuruCandr. i. 482. 21.

**अनुवादत्वव्यावृत्ति** (anuvādatva-vyāvṛtti) *f.* exclusion, i.e. removal of the state of being a restatement or reiteration सूत्रस्यानुवादत्वव्यावृत्तये तव्यप्रत्ययमध्याहरति एषितव्यमिति VedāntKa. 43. 24 (*on* i. 1. 1)

**अनुवादत्वशङ्का** (anuvādatva-śaṅkā) *f.* doubt regarding the state of being a restatement or reiteration न हिंस्यादित्यत्र नानुवादत्वशङ्कापि AdvaiSi. 822. 12; नानुमानेनोक्तश्रुतेरनुवादत्वशङ्का GuruCandr. i. 468. 21.

**अनुवादत्वसमर्थनार्थम्** (anuvādatvasamarthanārtham) *adv.* for the sake of establishing the state of being a restatement or reiteration सूत्रद्वयमगमितं पश्यन्ननुवादत्वसमर्थनार्थं क्रतुयुक्तपुरुषधर्मपक्षं हृदि कृत्वा स चायमर्थ उपनयनकाल एव प्रतिषिद्धः इति ब्रवीति TantrVā. 936. 1 (*on* iii. 4. 12)

**अनुवादत्वसंभव** (anuvādatva-sambhava) *m.* possibility of the state of being a restatement or reiteration होतुः पादद्वयस्यावस्थानेनान्यः पाद इत्यस्यानुवादत्वसंभवात् ... तत्र होता स्थित्वानुब्रूयादित्यर्थः BhāṭṭCan. 100. 14 (*on* xvi. 1. 3)

**अनुवादत्वसूचनार्थ** (anuvādatvasūcanārtha) *adj.* meant for indicating the state of being a restatement or reiteration अनुवादत्वसूचनार्थः सौत्रो हि वाकारः ŚivārkaMaDī. ii. 391. 25 (*on* iii. 4. 20)

**अनुवादत्वाकाङ्क्षा** (anuvādatvākāṅkṣā) *f.* desire for (admitting) the state of being a restatement or reiteration यावद्यावद्विधेयान्तरमुपादीयते तावत् तावत्पूर्वत्रानेकशक्तिकल्पनाभयादनुवादत्वाकाङ्क्षा भवति TantrVā. 290. 4 (*on* i. 4. 3)

**अनुवादत्वाङ्गीकरण** (anuvādatvāṅgīkaraṇa) *n.* acceptance of the state of being a restatement or reiteration प्रयच्छेदिति चानन्यपरे विस्पष्टे विधौ सति नानुवादत्वाङ्गीकरणं युक्तम् TantrVā. 1063. 5 (*on* iii. 5. 48)

**अनुवादत्वाङ्गीकार** (anuvādatvāṅgīkāra) *m.* acceptance of the state of being a restatement or reiteration 'आघारमाघारयति' इत्यस्योपलक्षणत्वेनानुवादत्वाङ्गीकारे वैयर्थ्यप्रसङ्गाच्च न द्वितीयोऽपि (पक्षः) BhāṭṭDī. iv. 88. 11 (*on* x. 7. 12)

**अनुवादत्वानपेक्षण** (anuvādatvānapekṣaṇa) *n.* absence of expectancy for the state of being a restatement or reiteration एवं प्राप्तिबुद्धौ सत्यामप्यनुवादत्वानपेक्षणाद्विधेः कर्मान्तरत्वम् TantrVā. 454. 8 (*on* ii. 2. 2)

**अनुवादत्वानिवृत्ति** (anuvādatvānivṛtti) *f.* non-cessation or non-removal of the state of being a restatement or reiteration पितरो यत्र पूज्यन्ते तत्र मातामहा अपि। अविशेषेण कर्तव्यं विशेषान्नरकं ध्रुवमिति। ... अविशेषविधायकत्वान्नानुवादकमिति चेत्। मैवम्। पितरो यत्र पूज्यन्त इत्यादिपूर्वार्धस्यानुवादत्वानिवृत्तेः CaturCin. iii (1). 84. 19.

**अनुवादत्वानुपपत्ति** (anuvādatvānupapatti) *f.* untenability of the state of being a restatement or reiteration न ... अवदानानुवादेन पञ्चत्वविधिः ... वपाया इतराङ्गवत्तदभावेनावदानाप्राप्तेर्वपाश्रवणस्यानुवादत्वानुपपत्तेः BhāṭṭDī. iv. 93. 13 (*on* x. 7. 18); न चतुस्त्रिंशदित्यत्र ... तदादिकमन्त्रलक्षणया तन्निषेधो विधीयते, तत्पदमात्रनिषेधे षड्विंशतिरित्येवेत्यादेरनुवादत्वानुपपत्तेः GuruCandr. i. 462. 18.

**अनुवादत्वापत्ति** (anuvādatvāpatti) *f.* contingency of the state of being a restatement or reiteration तथाभूतानां च द्वादशत्वविधिनैव प्राप्तेरनुवादत्वापत्तिः TantrVā. 314. 9 (*on* i. 4. 17); तेन मूलप्रमाणाभावेनाजाता येयं प्रमाणान्तरसंगतिस्तयैव प्रामाण्यमन्यथानुवादत्वापत्तेः NyāyRa. 68. 11 (*on* 2. 72); नेह शीर्षण्यान् प्राणानुद्दिश्य

सप्तत्वं विधीयतेऽन्यतोऽवगमादनुवादत्वापत्तेः VedāntKa. 331. 21 (*on* ii. 4. 5); तथा च अनुवादत्वापत्त्या विधिकल्पकत्वं वाच्यम् GuruCandr. i. 305. 4; LaCandr. 371. 8.

**अनुवादत्वापरिहार** (anuvādatvāparihāra) *m.* non-avoidance or non-removal of the state of being a subject वक्ष्यमाणदेवताभ्यो विभागस्य वा विधेयत्वाभ्युपगमेऽपि तस्य ... उपांशुयाजाज्यस्याभावेन च विधेयालाभेनानुवादत्वापरिहाराद्य VidhiRa. 39 (? 40) (200. 8)

**अनुवादत्वापेक्षण** (anuvādatvāpekṣaṇa) *n.* expectancy for the state of being a restatement or reiteration यदनूद्यतामित्यपेक्षितं तत्प्राप्तौ सत्यामनूद्यते। नैकाङ्गविकलमनुवादत्वापेक्षणेन प्राप्तिबुद्धिमात्रेण वा TantrVā. 454. 6 (*on* ii. 2.2)

**अनुवादत्वाभाव** (anuvādatvābhāva) *m.* absence of the state of being a restatement or reiteration विधिपरत्वे वेदान्तानां न केवलमनुवादत्वाभावोऽपि तु विपरीतार्थत्वं च न स्यात् VedāntKa. 59. 21 (*on* i. 1. 3); वेदस्यापौरुषेयत्वेन मानान्तरापेक्षयानुवादत्वाभावे 'उरु प्रथस्व' इत्यादिमन्त्राणां पुरोडाशप्रथनादिरूपस्वार्थप्रकाशनसामर्थ्यरूपलिङ्गेन विनियोगसिद्धेः GuruCandr. i. 470. 11.

**अनुवादत्वायोग** (anuvādatvāyoga) *m.* untenability of the state of being a restatement or reiteration आनन्दत्वबोधिका श्रुतिरपि ... सत्यश्रुतिवद्भवेत् इति चेन्न ... श्रुतेश्च निरुपाधिकानन्दविषयत्वेन भिन्नविषयत्वादनुवादत्वायोगात् AdvaiSi. 426. 4; (एतावन्तं कालं ब्रह्म नावेदिषम्) उक्तश्रुतिरनुवादिकेति तत्तुच्छम्, ब्रह्मधीपूर्वकालवृत्तित्वेन ग्राहकानुभवेन प्रलयवृत्तिताग्राहकश्रुतेरनुवादत्वायोगात् GuruCandr. i. 460. 18.

**अनुवादत्वावश्यकत्व** (anuvādatvāvaśyaka-tva) *n.* necessity of the state of being a restatement or reiteration उभयतोऽप्यनुवादत्वावश्यकत्वे समानयनादिविध्यदृष्टार्थत्वाद्यनुरोधेन शुद्धानूयाजवचनस्यैवानुवादत्वम् BhāṭṭDī. ii. 105. 16 (*on* iv. 1. 16)

**अनुवादत्वासंभव** (anuvādatvāsambhava) *m.* **A** impossibility of the state of being a restatement or reiteration इमौ च पशुसोमद्रव्यकौ, न चैवं सति प्रत्यभिज्ञानमस्तीत्यनुवादत्वासंभवः TantrVā. 508. 18 (*on* ii. 2. 17); वषट्कर्तुर्णा चानेकचमसप्राप्तौ सत्यामनुवादत्वासंभवाद् ग्रहेष्वपि पूर्वेण प्राप्तत्वाद्यमसशब्दोऽनर्थकः TantrVā. 1069. 7 (*on* iii. 5. 53); अप्राप्तत्वेनानुवादत्वासंभवात् विधिरेवायम् VedāntDī. 224. 10 (*on* iv. 1. 12); 'सोऽत्र जुहोती'त्यस्य मन्त्रविधानार्थमनुवादत्वासंभवाद्धोमान्तरविधानार्थत्वमेव MayūMāli. 696. 10 (*on* x. 4. 1); **B** impossibility of the state of being the subject, i.e. counter-positive of predicate एवमप्यग्निष्टोमसामेति नावकल्प्यते अनुवादत्वासंभवाद् विधाने च वाक्यभेदात् ŚāstrDī. 155. 14 (*on* ii. 2. 12)

**अनुवादत्वोक्ति** (anuvādatvokti) *f.* mention of the state of being a restatement or reiteration अनुवादत्वोक्तिस्तूभयत्र तुल्या MīmāNyāPra. 253. 17; षड्विंशतिपदे षडशीतिसमासपदोपेताध्रिगुलक्षणयानुवादत्वोक्तौ लक्षणादोषात् ... न चतुस्त्रिंशदिति निषेधानुवादः GuruCandr. i. 461. 17.

**अनुवादत्वोपपत्ति** (anuvādatvopapatti) *f.* tenability of the state of being a restatement or reiteration न च जीवत्वावच्छिन्नजीवभेदस्याप्राप्त्या 'न हिंस्या'दित्यादिवदननुवादत्वम्, जीवे ईश्वरभेदस्य प्रत्यक्षसिद्धतया ... तद्बोधकश्रुतेरनुवादत्वोपपत्तेः AdvaiSi. 822. 12.

**अनुवादत्वोपासनार्थत्वव्युदास** (anuvādatvopāsanārthatva-vyudāsa) *m.* refutation of the state of being a restatement and the state of being what is meant for adoration श्रुतिषु च न प्रामाणिकभेदव्युदासः ... तासां च तत्प्रधानत्वमनुवादत्वोपासनार्थत्वव्युदासात् तात्पर्यलिङ्गावगमाद्य स्थितम् ŚrutaPra. ii. 447. 18 (*on* iii. 2. 29)

**अनुवादत्वोपोद्बलन** (anuvādatvopodbalana) *n.* strengthening of the state of being a restatement or reiteration 'यजत' इत्यस्य वर्तमानापदेशत्वेन विधित्वाभावात्। न चाप्राप्तार्थकत्वेन लेट्त्वनिश्चयः, आग्नेयादियागानां प्राप्तानामेवानुवादसंभवेन तदसिद्धेः। प्रत्युत यच्छब्दैवंशब्दसमभिव्याहारेणानुवादत्वोपोद्बलनाद्य MīmāKau. iii (2). 162. 18 (*on* ii. 2. 3)

**अनुवादत्वौचित्य** (anuvādatvaucitya) *n.* propriety of the state of being a restatement or reiteration अस्मिन्नेव शास्त्रे व्यावहारिकस्यैवेश्वरप्रतिषेधस्यैश्वर्यवैराग्याद्यर्थमनुवादत्वौचित्यात् SāṁkhyaPraBh. 2. 36 (*on* 0. 0)

**अनुवाददर्शन** (anuvāda-darśana) *n.* observation, i.e. view of (something being) a restatement, reiteration or secondary reference दण्डी प्रैषानन्वाहेत्यनूद्यते। ... तस्मात्सर्वत्र दण्डभावादनुवाददर्शनमुपपद्यते ṬupṬ. 26. 3 (*on* iv. 2. 18); दण्डस्यानुवाददर्शनमुपपद्यते TantrRa. 141. 2; न वा किंचिदिति मतं यद्यप्यसंकुचितविषयम् ...। तथापि ब्राह्मणमात्रपरतया नेयम्। उपसंहारे ईशानतमो ब्राह्मण इत्यनुवाददर्शनात् DaṇḍaVi. 203. 10; धर्मशब्दो न यागादिजन्यापूर्ववाची। किंतु यागादिकर्मवाची। ... 'लोके धर्मिष्ठं प्रजा उपसर्पन्तीति' श्रुतावपि तथैव लोकव्यवहारस्यानुवाददर्शनाद्य ŚivārkaMaDī. i. 17. 8 (*on* i. 1. 1); प्रकृतितः प्राप्तत्वात्पशावपि दैवतावदानोत्तरमेव प्रदानमिति प्राप्ते ... न तावत्येव होतव्यमित्यनुवाददर्शनाद्य समानकालान्यवदानानि कृत्वा प्रदानम् (पशोः) BhāṭṭCan. 53. 5 (*on* xiv. 2. 18)

**अनुवाददशा** (anuvāda-daśā) *f.* [Loc. ] at the time of restatement or reiteration लौकिकमाप्तवाक्यमनुवाददशायामर्थसंस्पर्शि TantrRaha. 37. 18.

**अनुवाददोष** (anuvāda-doṣa) *m.* fault (in the form) of restatement or reiteration कुतश्चित्प्रतिपन्ने पुनःप्रतिपादनेऽनुवाददोषो मा भूत् ManuBh. i. 21. 9 (*on* 1. 25); पूर्वत्रासिद्धमित्याष्टमिकस्य प्लुतस्यासिद्धत्वात् ततश्च पक्षेऽनुवाददोषः प्राप्नोति Pradī. i. 14B. 12 (*on* i. 2. 17); PadMañ. *on* KāśiVṛ. *on* P. i. 2. 17 (290. 8); नियमे प्राप्तबाधः सिद्धस्य पुनरुपादानादनुवाददोषश्च विधौ तु न प्राप्तबाधो नाप्यनुवाददोषः Pradī. vii. 225. 21 (*on* viii. 4. 32)

**अनुवादद्वय** (anuvāda-dvaya) *n.* pair of restatements or reiterations अनुवादद्वयेन समुदायद्वयाप्तेर्द्विवचनान्तोपपदवशेन तेषामिवाधिकारसंबन्धः PrakaPañ. 260. 11; द्विवचनमपि य एवं विद्वानित्येवं संयुक्तानुवादद्वयपरिकल्पितसमुदायद्वयाभिप्रायं प्रसिद्धार्थमेव ŚāstrDī. 402. 21 (*on* iv. 4. 11)

**अनुवादद्वार्** (anuvāda-dvār) *f.* [Inst.] through restatement or reiteration 'नेह नाना' इत्यादिश्रुतीनाम् ... ब्रह्मगतस्य सत्यत्वेन द्वे(?द्वै)ताभावस्य अनुवादद्वारा विधेयब्रह्मस्तुतिपरत्वम् GuruCandr. i. 248. 13.

**अनुवादद्वार** (anuvāda-dvāra) *n.* [Inst.] through restatement or reiteration एकवाक्यत्वम् ... तद्यानुवादद्वारेण स्तुतौ सत्यामवकल्पते न विधौ TantrVā. 914. 19 (*on* iii. 4. 9); (मागधः। कर्तव्यः पूर्वरङ्गस्तु) पाठ्यादियोजना च वेषाचारयोजना च ... तामनुवादद्वारेणाभिधातुं शुद्धधान्यत्वेन योज्य इत्याख्यातुं समुचितमुपसंहारं करोति AbhinBhā. i. 250. 22 (*on* 5. 173); अवान्तरभेदप्रतिपादनद्वारेणैव चानुवादद्वारेणाविवक्षितवाच्यस्य यः प्रभेदो विवक्षितान्यपरवाच्यात्प्रभिन्नत्वं तत्प्रतिपादनायेदमुच्यते Loc. 60. 21 (*on* 2. 1)

**अनुवादधी** (anuvāda-dhī) *f.* cognition (produced) from the restatement or reiteration अनुवादधीस्त्वसन्निकृष्टपदाच्छाब्यपि न शास्त्रम् NayaVi. 143. 6 (*on* i. 1. 5)

**अनुवादन** (anu-vādana) *n.* [enumerated in the *anupravacanādigaṇa*, GaṇPā. 7. 15; GaṇRa. 6. 366 (397)] **1** the word *anuvādana* छोऽनुप्रवचनादेः। तदस्य प्रयोजनमिति वर्तते। अनुप्रवचनादिभ्यश्छो भवति। ठञोऽपवादः ... अनुवादन JaineVyā. 233. 7 (*on* iii. 4. 104); KāśiVṛ. *on* v. 1. 111; **2** restatement or reiteration शब्दस्यार्थस्य तत्प्रोक्तं पुनरुक्तं मनीषिभिः। विज्ञातस्य पदार्थस्य त्रीन् वारान् भाषितस्य च। नानुवादः परोक्तस्य भवेत्तद(दन)नुवादनम् Mānaso. iv. 2. 194 (? 394)

**अनुवादनिरपेक्षम्** (anuvādanirapekṣam) *adv.* without expectancy for or depending on restatement or reiteration अवश्यं विध्यनुवादनिरपेक्षं संक्षेपविस्ताराभिधानमात्रं हेतुर्वक्तव्यः स चानैकान्तिक इत्युक्तम् TantrVā. 1074. 1 (*on* iii. 6. 7)

**अनुवादनिराकरण** (anuvāda-nirākaraṇa) *n.* refutation of (being) a restatement or reiteration ये च लक्षणानुवादेनैवानिमित्तपरं सूत्रमिति मन्यन्ते तन्निरासार्थमनुवादनिराकरणम्, न ह्यनुक्तस्यानुवादोऽपि संभवति NyāyRa.137. 21 (*on* 4. 16)

**अनुवादनीय** (anu-vādanīya) *adj.* [P. v. 1. 111; GaṇPā. 7. 15; GaṇRa. 6. 366 (397)] to be restated or reiterated अनुवादो ह्यनूद्यमानार्थस्य प्रापकमपेक्षत इत्येव नियमः। न तु पुरोवादप्राप्तं सर्वं यथाकथंचिच्छब्दस्य सामर्थ्यमाश्रित्यानुवादनीयमिति नियमः ŚivārkaMaDī. i. 117. 10 (*on* i. 1. 2)

**अनुवादपक्ष** (anuvāda-pakṣa) *m.* **A** view of (the text being) restatement or reiteration नन्वनुवादेऽपि लक्षणा। नानुवादपक्षे लक्षणायां दोषः ŚābaBh. 364. 3 (*on* i. 4. 22); 1201. 15 (*on* iv. 1. 8); इतरथा हि .. अनुवादपक्षो दुरुपन्यास एव स्यात् TantrVā. 468. 15 (*on* ii. 2. 3); (कठोरहृदयो रामोऽस्मि) रामस्य यत् कठोरहृदयाभिधानं तत् पुनरुक्तमेव .अनुवादपक्षस्यातिकृच्छ्रत्वात् VyaktiVi. 118. 12; अनुवादपक्षेऽप्याश्रमान्तरसद्भावमुक्त्वास्मिन्वाक्ये तेषां विधिरेव नानुवादः VedāntKau. 363. 21 (*on* iii. 4. 20); विध्यनुवादपक्षयोरुभयोरप्यत्र विग्रहे पारमेश्वरत्वासंभवशङ्का प्रवर्तते ŚivārkaMaDī. i. 253. 28 (*on* i. 1. 21); अनुवादपक्षस्यायुक्तत्वात् विधिपक्ष एवाश्रयणीयः PūrvottaVāNaMā. 15. 2; **B** category of restatement or reiteration, cf. **अनुवादपक्षनिक्षिप्तत्व.**

**अनुवादपक्षनिक्षिप्तत्व** (anuvādapakṣanikṣipta-tva) *n.* the state of being thrown, i.e. included in the category of restatement or reiteration न लक्षणवर्णनमस्माकमभिमतम् अनुवादपक्षनिक्षिप्तत्वात्, अपि तु लोकप्रसिद्धप्रत्यक्षानुवादेन

धर्मं प्रति अनिमित्तत्वमेव विधीयते NyāyMañ. i. 94. 12.

**अनुवादपरत्व** (anuvādapara-tva) *n.* the state of being what is intended for a restatement or reiteration न च वाच्यम् ... व्यस्तोपासनेषु विधिश्रुतीनां वैयर्थ्यमिति व्यस्तोपासनानुवादेन समस्तोपासनस्य विधेयतया तच्छ्रुतीनामनुवादपरत्वात् VedāntKau. 349. 14 (*on* iii. 2. 55)

**अनुवादपरा** (anuvāda-parā) *adj.* (*f.*) intended for a restatement or reiteration उद्गमश्रुतिस्तु स्तुतित्वेनानुवादपरा भविष्यति AṇuBh. 165. 20 (*on* ii. 4. 21)

**अनुवादपरिभाषा** (anuvāda-paribhāṣā) *f.* [Inst.] in the manner or the mode of restatement (of facts) श्रीशुक उवाच। एतावदनुवादपरिभाषया प्रत्युदीर्य मुनिवरः ... राजयानमपि तथोवाह BhāgP. v. 10. 14.

**अनुवादपरिहार** (anuvāda-parihāra) *m.* avoidance or removal of a restatement or reiteration अनुवादपरिहाराय च कर्तव्यपदाध्याहारेण तावदन्वयः PrakaVi. 30. 7; अत्र च सूत्रेऽनुवादपरिहाराय कर्तव्यपदमध्याहृत्य ... मुमुक्षुणा ब्रह्मानुभवाय विचारः कर्तव्यः इति श्रौतो वाक्यार्थः कथनीयः VivaPraSaṁ. 224. 12.

**अनुवादपुरस्सरम्** (anuvādapurassaram) *adv.* as preceded by restatement or reiteration प्रतिवादिवाक्यादवगतार्थस्यानुवादपुरःसरं प्रमाणासंभवेन सर्वैर्वादिभिर्निराकरणाङ्गीकारात् ... लक्षणप्रमाणयोरसंभवात्तादृगज्ञानमस्तीत्येतदेवाज्ञानम् TattvPradī. (Ci.) 57. 5; Vādā. 30. 3.

**अनुवादपुरोवादसाधारण्य** (anuvādapurovāda-sādhāraṇya) *n.* [Inst.] in commonness with a restatement and prestatement (जगत्कारणवादिवाक्यप्रतिपाद्यम् ...ब्रह्म जिज्ञास्यम्) अनुवादपुरोवादसाधारण्येन जगत्कारणवादीत्युक्तम् ŚrutaPra. iB. 173. 20 (*on* i. 1. 5)

**अनुवादपूर्वकम्** (anuvādapūrvakam) *adv.* as preceded by a restatement or reiteration तत्रोत्थापनस्यानुवादपूर्वकं ध्रुवालक्षणं तत्प्रयोगद्वारेण पूर्णं कर्तुमाह AbhinBhā. i. 226. 23 (*on* 5. 59); सूत्रकारोक्तप्रयोजनानुवादपूर्वकं वार्त्तिकारम्भप्रयोजनं दर्शयति TātpaṬ. (Vā.) 2.2 (*on* i. 1. 1); CaturCin. iii (1). 758. 13; सर्वेषामनुवादपूर्वकं कालादिसंबन्धोपपत्तेः MīmāKau. i. 253. 2 (*on* i. 4. 15); निषेधमुखेनानुपा(?वा)दपूर्वकं देशांतरमृते इत्यस्य विवरणमुत्तरपद्यम् BālamBha. iii. 69. 23 (*on* 3. 21)

**अनुवादप्रकार** (anuvāda-prakāra) *m.* [Inst.] in the mode or manner of restatement or reiteration पदशो दशश्लोक्यामुक्तमर्थं श्रोतुरनुवादप्रकारेण द्रढयति ŚrutaPra. iB. 52. 13 (*on* i. 1. 1)

**अनुवादप्रतियोगिविधि** (anuvādapratiyogi-vidhi) *m.* injunction opposed or counter to a restatement or reiteration इह ःु निषेधप्रतियोगिविधित्वं लक्ष्यरूपम्। अतो न तदव्यापनं दोष इति चेत्। मैवम्। इहाप्यनुवादप्रतियोगिविधेरेव लक्ष्यत्वात् VidhiRa. 11 (82. 11)

**अनुवादप्रतियोगिविधित्व** (anuvādapratiyogividhi-tva) *n.* the state of being an injunction opposed or counter to a restatement or reiteration नन्वनुवादप्रतियोगिविधित्वं तत्र तस्य व्यवस्थापितम् VidhiRa. 11( 82. 4)

**अनुवादप्रदेश** (anuvāda-pradeśa) *n.* domain of repetition or reproduction यया कयाचन संज्ञया भावितस्य प्रत्ययादर्शनस्यानुवादप्रदेशेषु यत्किंचनसंज्ञोच्चारणेऽपि ग्रहणप्रसङ्गः, ततश्च अत्तीति ... द्विर्वचनं स्यात् PadMañ. *on* KāśiVṛ. *on* P. i. 1. 61 (219. 15)

**अनुवादप्रयोजन** (anuvāda-prayojana) *n.* purpose of restatement or reiteration अनुवादप्रयोजनं कर्मापेक्षितकर्तृस्तुतिः VedāntKa. 194. 7 (*on* 1. 3. 14); अनुवादप्रयोजनं तु दन्तधावनस्य स्थानविशेषनियमनमेवेत्याहुः VīraMi. 178. 1 (*on* 1. 98)

**अनुवादप्रसक्ति** (anuvāda-prasakti) *f.* occasion for secondary reference यथा वैश्वदेव्यामिक्षायागमात्रस्य नानुवादप्रसक्तिस्तथा वैश्वदेवाधिकरण एवोक्तम् MayūMāli. 129. 10 (*on* ii. 2. 3); कर्मकाण्डेऽपि प्रसङ्गाद्देवतान्तरानुवादप्रसक्तौ सत्यामन्येषां देवानां तत्तदसाधारणसंज्ञयैवानुवादप्रायपाठे LalitāSaBh. 235. 16 (*on* 303)

**अनुवादप्रसङ्ग** (anuvāda-prasaṅga) *m.* occasion for secondary reference न च ... आग्नेयादीनां तत्सिद्ध्यर्थं समुदायानुवादोऽर्थवानिति वाच्यम्। वैश्वदेववाक्ये ... तस्यैवानुवादप्रसङ्गेन समुदायानुवादानुपपत्तेः MīmāKau. i. 247. 25 (*on* i. 4. 13)

**अनुवादप्राधान्य** (anuvāda-prādhānya) *n.* prominence of secondary reference वाजपेयाधिकरणन्यायेन एकस्य फलं प्रत्यपादानविधानगुणभावादितरत्तु प्रत्युद्देशानुवादप्राधान्याद् वैरूप्यनिमित्तवाक्यभेदप्रसङ्गः TantrVā. 338. 24 (*on* ii. 1. 1)

**अनुवादप्रायपाठ** (anuvādaprāya-pāṭha) *m.* reading which is almost a restatement or reiteration देव्याश्च सर्वोत्तमत्वम् ... स्पष्टमेव। ... अन्येषां देवानां तत्तदसाधारणसंज्ञयैवानुवादप्रायपाठे 'महत्यै वा एतद्देवतायै रूपं महतीमेव तद्देवतां प्रीणाती'त्यादिव्यवहाराच्च LalitāSaBh. 235. 16 (*on* 303)

**अनुवादफल** (anuvāda-phala) *n.* effect of restatement or reiteration अनुवादफलं तु द्विगुवाच्यस्य समाहारस्य न कदाप्युद्भूतावयवभेदविवक्षेति बोधनम् LaŚabdeŚe. ii. 36. 7; अनुवादफलं प्रदर्शयन् वचनसार्थक्याय तात्पर्यार्थं प्रतिज्ञातमाह BālamBha. ii. 325. 19 (*on* 2. 269)

**अनुवादफलाभाव** (anuvādaphalābhāva) *m.* absence of the effect of restatement or reiteration समोत्तरवर्णानुगमने त्वत्राप्तत्वेन तस्य विधेयत्वाद्विध्यनुवादवैरूप्यापत्तेरनुवादफलाभावात् BālamBha. iii. 77. 14 (*on* 3. 26)

**अनुवादबल** (anuvāda-bala) *n.* [Abl. ] **A** by the force or strength of restatement or reiteration 'न गिरागिरेति ब्रूया'दित्यनुवादबलादिवेरापदस्य तत्स्थानता MīmāKau. iii (2). 184. 13 (*on* ii. 2. 9); न च अनुवादबलात्स्थाननियमस्तद्वदिहाप्यस्त्विति वाच्यम् MayūMāli. 155. 20 (*on* ii. 2. 12); असमभिव्याहारेऽप्यनुवादबलादेव तदर्थलाभः BālamBha. i. 228. 15 (*on* 1. 81); **B** by the force of repetition or reproduction 'अन्यपदार्थे' 'समर्थः' 'चार्थे' इत्यनुवादबलादस्य तत्र कल्पनेति LaŚabdeŚe. i. 525. 8.

**अनुवादबुद्धि** (anuvāda-buddhi) *f.* **A** knowledge of a restatement or reiteration देवतायाः पुनरुपादेयत्वात्कर्मोद्देशेन विधिः संभवतीति नानुवादबुद्धिरपैति TantrVā. 486. 11 (*on* ii. 2. 10); **B** knowledge produced from restatement उपनीतमात्रमेव च पेषणं पुरोडाशेऽनुवादबुद्ध्या गृह्यते TantrVā. 904. 1 (*on* iii. 3. 36)

**अनुवादभङ्गी** (anuvāda-bhaṅgī) *f.* [Inst.] in an indirect manner of restatement or reiteration 'सत्संप्रयोगे ... विद्यमानोपलम्भनत्वात्' इत्यनुवादभङ्ग्या प्रत्यक्षलक्षणमाचक्षते PramāMī. 23. 18 (*on* i. 1. 29)

**अनुवादभाग** (anuvāda-bhāga) *m.* **1** portion which is a restatement or reiteration प्रथमपादोऽनुवादभागो हेतुत्वेनोपात्तः Loc. 94. 23 (*on* 2. 21); **2** portion forming the subject, i.e. the counter positive of a predicate गौरयं पदा न स्प्रष्टव्य इत्यत्र गौरयमित्यनुवादभागः पदा न स्प्रष्टव्य इति हि विधीयते Ekāva. 6. 1 (4) (151. 6)

**अनुवादभाज्** (anuvāda-bhāj) *adj.* **1** possessing secondary reference यथासिद्धपदार्थस्त्वनुवादभाक् BrahmSi. 103. 2; **2** forming a part of a restatement or reiteration यजिना विहिते यागे याज इत्यनुवादभाक् TantrVā. 487. 4 (*on* ii. 2. 10)

**अनुवादभूत** (anuvāda-bhūta) *adj.* which has become a secondary reference or which has become a restatement or reiteration अनुवादभूतः स्त्रीलिङ्गनिर्देशो भवत्येव, शुक्लामानयेति ŚābaBh. 1675. 24 (*on* ix. 1. 33); यस्मिन् कस्मिंश्चित्प्रत्यये प्रयोक्तव्ये यस्यैवार्थः कथ्यते स एवानुवादभूतः प्रकृत्यनुग्रहार्थं प्रयुज्यते नान्योऽभ्यधिकार्थान्तरापत्तिप्रसङ्गात् TantrVā. 345. 17 (*on* ii. 1. 1); यदि तावदनधिकविषयाण्येव तानि सर्वाणि, तत एकमेव तत्राद्यं प्रमाणम्। इतराणि त्वनुवादभूतानि Kāśi. i. 101. 11 (*on* 2. 74); अनुमिते बुद्धिविशेषे पश्चादनुवादभूतं वाक्यं वाक्यार्थमवबोधयतीति वः सिद्धान्तः ŚāstrDī. 24. 19 (*on* i. 1. 2); 394. 13 (*on* iv. 4. 1)

**अनुवादभूतत्व** (anuvādabhūta-tva) *n.* the state of being that which has become a restatement or reiteration अनुवादभूतत्वाच्च न वाक्यभेदो भविष्यति ŚābaBh. 1675. 25 (*on* ix. 1. 33)

**अनुवादमन्त्र** (anuvāda-mantra) *m.* formula which is a restatement or reiteration अनुवादमन्त्रश्रुततमोऽधिष्ठातृपरः शिवशब्दः ... वर्तयितव्यः ŚivārkaMaDī. i. 129. 31 (*on* i. 1. 2)

**अनुवादमात्र** (anuvāda-mātra) *n.* mere restatement or reiteration, mere secondary reference अनुवादमात्रमन्तिकस्य MīmāŚū. xi. 2. 28; अनुवादमात्रमनर्थकम् ŚābaBh. 1240. 8 (*on* iv. 2. 24); VedāntKa. 194. 14 (*on* i. 3. 42); CaturCin. iii (1). 69. 19; पूर्वहेतूक्तिः अनुवादस्यानर्थक्यात् अनुवादमात्रेऽनर्थकं वचनमिति KenUBh. 81. 6 (*on* 2. 3); 'युध्यस्व' इति अनुवादमात्रम्, न विधिः GītāBh. (Śaṅ.) 31. 16 (*on* 2. 18); निगमेषु निश्चितार्थं तन्त्रे कश्चिद्यदि प्रकाशयति तदिदमनुवादमात्रं प्रामाण्यं तस्य सिध्यति न किंचित् SvātmNi. 49; TantrVā. 741. 22 (*on* iii. 1. 14); कार्यपरत्वानुपपत्तेः अनुवादमात्रं विधिवचनम् NyāyMañ. i. 267. 22; न चानुवादमात्रं तद्वक्तुरित्युपपद्यते NyāyMañ. ii. 131. 7; अनुवादमात्रमिदं पूर्वस्य पञ्चयज्ञानुष्ठानविधेर्गृहस्थभोजनकालस्य च ManuBh. i. 256. 5 (*on* 3. 107); किं तु तथा सति परशब्दोऽनुवादमात्रमनर्थः कस्यापि न परव्यपदेशः ManuBh. ii. 137. 11 (*on* 8. 147); गुणैरिति चानुवादमात्रम्। कारणगुणा हि प्रामाण्ये

**अनुविधीयमानत्व** (anuvidhīyamāna-tva) *n.* the state of being what is being closely followed, i.e. being conformed to नानादेहोपाधिभेदमनुविधीयमानत्वाद् विविधाः ... भावाः MuṇḍUBh. 325. 3 (*on* ii. 1. 1)

**अनुविधीयमानप्रकर्षता** (anuvidhīyamānaprakarṣa-tā) *f.* the state of being the excellence which is being followed closely, i.e. being conformed to अनुविधीयमानप्रकर्षतया कारणैकार्थसमवेततया च त्रितयमिह प्रसक्तम् Kiraṇā. 214. 11.

**अनुविधेय** (anu-vidheya) *adj.* [*f.* -ā] **1A** to be established, to be derived **B** to be established or prescribed **C** to be established, i.e. to be proved **2A** to be followed, i.e. to be imitated **B** to be followed closely, i.e. to be conformed to **C** to be followed, i.e. to be observed **3** to be regulated (in service) **4A** to be treated, to be administered **Bi** to be performed or to be carried out **ii** to be carried out continuously **5** to be obeyed **6** to be made, i.e. raised **1A** to be established, to be derived (शब्दाः) यद्यप्यप्रयुक्ता अवश्यं दीर्घसत्रवल्लक्षणेनानुविधेयाः MahāBh. i. 9. 15 (*on* i. 1. 0); **1B** to be established or prescribed, cf. **अनुविधेयत्व 2; 1C** to be established, i.e. to be proved, cf. **अनुविधेयप्रज्ञत्व**; **2A** to be followed, i.e. to be imitated विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ŚatTrayī. 18; SubhāRaK. 37. 1; SaduktiKa. 301. 21; Subhāṣi. 280; **2B** to be followed closely, i.e. to be conformed to गच्छति जीवद्देहे तदनुविधायिनः प्राणा अपि गच्छन्ति ...। स चैषामनुविधेयः सूक्ष्मो देहो भूतेन्द्रियमय इति गम्यते Bhām. 529. 2 (*on* iii. 1. 3); **2C** to be followed, i.e. to be observed, cf. **अनुविधेयाचारत्वासंभव; 3** to be regulated (in service) एतेषामवश्यमकामयमानापि वेश्यानुविधेया भवति DhūrtaViSaṁ. 22. 15; **4A** to be treated, to be administered अथ यदा वातशोणितपित्तानां विकारैः पीड्यमानस्य दन्तिनः क्षीरपानमनुविधेयं भवति तदा जीर्णे कफप्रकोपे वा पयः पीत्वा क्षीरव्यापदमृच्छति Hastyāyur. 117. 4 (1. 16); त्र्यरत्नीनां स्नेहपानमनुविधेयं भवति Hastyāyur. 582. 3 (4. 4); **4Bi** to be performed or to be carried out, cf. **अनुविधेयत्व1; 4Bii** to be carried out continuously, cf. **अनुविधेयानुष्ठान**; **5** to be obeyed, cf. **अनुविधेयपुरुषाभिप्राय**; **6** to be made, i.e. raised, cf. **अनुविधेयप्रश्नावसर**.

**अनुविधेय** (anuvidheya) *m.* regulator, i.e. speaker or chairperson अनुविधेयसंवरणं तु सर्वदानपेक्षितमेव विजयफलप्रतिपादनार्थत्वादनुविधेयस्य रागद्वेषरहितास्त्र्यवरा विषमसंख्याः सभ्याः स्युः NyāyPari. 170. 5; 181. 10; जल्पवितण्डयोर्नैतत् सर्वदा निग्रहस्थानं केवलं सभ्यानुविधेयानामुभयमतिमान्द्यनिरूपणायोपयुक्तम् NyāyPari. 209. 9.

**अनुविधेयता** (anuvidheya-tā) *f.* the state of being what is to be followed closely, i.e. to be conformed to पञ्चरात्रस्य तन्त्रान्तरैरनुविधेयतया तेभ्यो (आगमेभ्यो) वैलक्षण्यं वेदतुल्यत्वं च सिद्धम् ŚrutaPra. ii. 339. 9 (*on* ii. 2. 42)

**अनुविधेयत्व** (anuvidheya-tva) *n.* **1** the state of being what is to be performed or carried out लिङादेः ... येनास्यानुविधेयत्वात् फलकल्पकता भवेत्। तस्याप्या(?प्य)नुविधेयत्वे शब्दस्य न तदीयताम् NyāySu. (So.) 27. 4 (*on* i. 2. 7); **2** the state of being what is to be established or prescribed लिङादेः पुरुषार्थौपयिकत्वेनानुविधेयत्वात् प्रवर्तकत्वाव्याहतिः NyāySu. (So.) 30. 28 (*on* i. 2. 7).

**अनुविधेयपुरुषाभिप्राय** (anuvidheyapuruṣābhiprāya) *m.* intention or desire of the man to be obeyed (श्राविणः) शङ्खादिध्वनेरपि समयवशादनुविधेयपुरुषाभिप्रायविशेषरूपार्थावबोधादेव प्रवर्तन्ते NyāyMa. 182. 1; शङ्खध्वनौ चानुविधेयपुरुषाभिप्रायानुमापके व्यभिचारात् TattvPradī. (Ci.) 272. 13.

**अनुविधेयप्रज्ञत्व** (anuvidheyaprajña-tva) *n.* the state of having the intelligence which is to be established, i.e. proved किंचिन्मात्रान्यथाभावेऽपि विशिष्टवाक्यार्थसिद्धेरतिवादानुविधेयप्रज्ञत्वं विज्ञायते NyāyKu. 12. 12.

**अनुविधेयप्रश्नावसर** (anuvidheyapraśnāvasara) *m.* occasion for a question to be made, i.e. raised subsequently संभावितस्यापि वाद्यनुयोगापेक्षयानुद्भावने पञ्चमः पक्षः वादिनोः स्तम्भरूपमनुविधेयप्रश्नावसरमपेक्षमाणेषु षष्ठः TārkiRa. 316. 10.

**अनुविधेयवचन** (anuvidheya-vacana) *adj.* whose word is to be followed कविरनुविधेयवचनो भवतीति दर्शयति AbhinBhā. i. 34. 3 (*on* 1. 99)

**अनुविधेयवर** (anuvidheya-vara) *m.* best person who is to be obeyed औरसलक्षणे 'स्वक्षेत्र' इति स्वग्रहणम्। क्षेत्रं च पुत्रिकापितुरेव। भर्ता हि तस्य चानुविधेयवर इति मातृकुले स्वामी ManuBh. ii. 280. 23 (*on* 9. 132)

**अनुविधेयसंवरण** (anuvidheya-saṁvaraṇa) *n.* selection of the regulator, i.e. speaker or chairperson अनुविधेयसंवरणं तु सर्वदानपेक्षितमेव NyāyPari. 170. 4; सभ्यानुविधेयसंवरणादिकमकृत्वा प्रयोगे वादारम्भो विपर्यासः NyāyPari. 195. 6.

**अनुविधेयाचारत्वासंभव** (anuvidheyācāratvāsambhava) *m.* impossibility of the state of being a custom which is to be followed, i.e. to be observed भवत्पक्षप्रवेशितविसंवादैक्याच्चानुविधेयाचारत्वासंभवादिति ŚatDū. 228. 19.

**अनुविधेयानुष्ठान** (anuvidheyānuṣṭhāna) *adj.* observance or performance of what is to be carried out continuously ज्ञानयोगयोग्यस्यापि अनुविधेयानुष्ठानस्य ... कर्मनिष्ठैव श्रेयस्त्वेनानुशिष्यते ŚatDū. 24. 16.

**अनुविध्यत्** (anu-vidhyat) *adj.* injuring or shooting (already wounded animal) afterwards नश्यतीषुर्यथाविद्धः खे विद्धमनुविध्यतः। तथा नश्यति वै क्षिप्रं बीजं परपरिग्रहे ManuSm. 9. 43; अन्येनेष्वासेन विद्धं मृगमनुविध्यतः पूर्वस्य वेधकस्यात्र स्वाम्यम् ManuBh. ii. 253. 12 (*on* 9. 43)

**अनुविध्यमाना** (anu-vidhyamānā) *adj.* (*f.*) being penetrated, i.e. soaked with जम्बूनदीरोधसोर्या मृत्तिका तीरवर्तिनी। जम्बूरसेनानुविध्यमाना वाय्वर्कयोगतः। विद्याधरामरस्त्रीणां भूषणं विविधं महत् DevīBhāP. viii. 6. 10.

**अनुविनद्** (anu-vinad-) I. P. (*caus.*) to make resonant or to echo or to resound, MW.; cf. **अनुविनादयत्**.

**अनुविनम्** (anu-vinam-) I. P. to bend down afterwards अत्राप्युत्प्रेक्षा भवन्ति। तं यदि ज्वालोर्ध्वमभ्युज्ज्वलेद् देवलोकमभ्यजैषीदित्येनं जानीयात् ... अथ यदीमामनुविनमेदिहैवेत्येनं जानीयात् ĀgniveGS. iii. 6. 4 (153. 10)

**अनुविनर्द्** (anu-vinard-) I. P. to answer with roars, MW.

**अनुविनर्दत्** (anu-vinardat) *adj.* roaring or shouting after, answering with roars मृगाननुविनर्दताम्। मृगाणाम् ...। नादः ... प्रादुरासीत् HariVaṁ. App. I. 31(336)

**अनुविनश्** (anu-vinaś-) IV. P. **Ai** to disappear along with, to vanish away मरी॑चिर्धू॒मान्प्रवि॑शानु॑ पाप्मन् ...। नदीनां॒ फेनाँ॒ अनु॒ तान्वि नश्य AV. vi. 113. 2; प्रजा॑पतिः प्रजा॑ असृजत ता॑ अन्धे॑ तमसीमाँ॑ ल्लोका॑ननुव्यनश्यन् MaiS. i. 6. 6 (i. 96. 2); विशेषज्ञाननाशोऽतस्तान्येवानु विनश्यति। न प्रेत्य संज्ञास्तीत्युक्त आत्मनोऽनाशिताश्रुतेः IṣṭaSi. 187. 2; **Aii** to vanish into ए॒ते॒भ्यो भू॒ते॒भ्यः समु॒त्था॒य ता॒न्येवानुवि॒न॒श्यति ŚatBr. XIV. v. 4. 12; BrĀraU. ii. 4. 12; ŚatBr. XIV. vii. 3. 13; BṛĀraU. iv. 5. 13; (*caus.*) to cause to vanish यः कामयेत ब्रह्म बलं स्यादिति ब्रह्म वै ब्रह्मणस्पतिर्विण्मरुतो ब्रह्मण्येव विशमनुविनाशयति KāṭhS. 11. 4 (i. 148. 2); **B** to get destroyed or perished afterwards अरक्षितात्मा यो राजा ...। प्रजाश्च तस्य क्षीयन्ते ताश्च सोऽनु विनश्यति (सोऽनुविनश्यति) MahāBhā. xii. 91. 36; कामानुसारी ... कामाननु विनश्यति (कामाननुविनश्यति) MahāBhā. xii. 168. 35; यथाग्निर्दाह्यं विनाश्यानुविनश्यति एवं सर्वस्यानित्यता सर्वं विनाश्यानुविनश्यति NyāyBh. 256. 3 (*on* iv. 1. 27); NyāyVār. 474. 12 (*on* iv. 1. 27)

**अनुविनादयत्** (anu-vinādayat) *adj.* making resonant, making echo or resounding तेषां रुदतां महात्मनां भुवं च खं चानुविनादयन्स्वनः। ... विशुश्रुवे Rāmā. ii. 95. 47 [to make resonant or musical, MW.]

**अनुविनाश** (anu-vināśa) *m.* the (act of) perishing or self- destruction afterwards तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् NyāySū. iv. 1. 27.

**अनुविनिःसृ** (anu-vinissṛ-) I. P. to go or come out in order, MW.

**अनुविनिःसृत** (anu-vinissṛta) *adj.* issued forth or come out in order, i.e. one after another ब्रह्मणोऽव्यक्तजन्मनः। पुराणमेतद्वेदाश्च मुखेभ्योऽनुविनिःसृताः MārkP. 45. 20.

**अनुविनी** (anu-vinī-) I. U. **1** to take along, i.e. to spread over अ॒थेम॒मभिषेकं॒ कृष्णविषाण॒यानुवि॒नयति ŚatBr. (K.) VII. iii. 2. 4; सोऽनुवि॒नयति ... य॒था वै प॒र्वत इदꣳ स॒र्वमतिष्ठा॒वा ... भवति ŚatBr. (K.) VII. iii. 2. 5; **2** to turn towards ज्वाला ... अथ यदि भूम्यामनुविनयेदिहैवेति (एनम्) जानीयात् BaudhPiMe. i. 16. 4; cf. **अनुविनम्** (better **अनु** *adn.*)

**अनुविन्द** (anuvinda) *m.* **Ai** name of a king (of Avanti and son of Adhidevī, one of the generals in the army of Kauravas) विन्दानुविन्दावावन्त्यौ सैन्येन महता वृतौ MahāBhā. ii. 28. 10; v. 163. 6; viii. 50. 51; xi. 25. 26; राजाधिदेवी ... विन्दानुविन्दावावन्त्यौ ... सुषुवे HariVaṁ. 406*(4); 81. 41; VāyuP. ii. 34. 147; BrahmāṇḍP. ii. 71. 158; BhāgP. x. 58. 30; विन्दानुविन्दावावन्त्यौ ... दशैते ...। अक्षौहिणीनां पतयः MahāBhā. vi. 16. 33; इरावान् ... अनुविन्दस्य सायकैः। चतुर्भिश्चतुरो वाहाननयद् यमसादनम् MahāBhā. vi. 79. 15; विन्दं तु निहतं दृष्ट्वा अनुविन्दः प्रतापवान्। ... गदां

गृह्य महाबलः। अभ्यद्रवत MahāBhā. vii. 74. 26; HariVaṁ. App. 29B (126); App. 29B (283); राजाधिदेव्यामावन्त्यौ विन्दानुविन्दौ जज्ञाते ViṣṇuP. iv. 14. 43; **Aii** name of a king (of Kekaya) विन्दानुविन्दौ कैकेयौ सात्यकिः समवारयत् MahāBhā. viii. 9. 6; सात्वतः ... अनुविन्दशिरोऽहरत्। ... शोषयन् केकयान् सर्वान् जगामाशु वसुंधराम् MahāBhā. viii. 9. 20; **Bi** name of a son of Dhṛtarāṣṭra दुर्योधनः ... विकटस्तथा। विन्दश्चाप्यनुविन्दश्च सजीवी विकलः करी। ... एते चान्ये च बहवो धार्तराष्ट्रा महाबलाः MahāBhā. i. 1814 *; धृतराष्ट्रस्य ...। पुत्राणां नवनवतिस्तेषां नामानि तद्यथा। आसीद्दुःशासनः। ... अनुविन्दः PāṇḍaC. 3. 118; **Bii** name of a prince (son of king Lahara) विष्वक्सेनीयभूपालो लहरस्तत्र चागतः। ... तत्पुत्राः षोडशैव महाबलाः। ... विन्दस्तथानुविन्दश्च BhaviP. 532B. 24 (iii (3). 332. 17)

**अनुविन्दा** (anuvindā) *f.* name of one of the wives of Vāsudeva (Kṛṣṇa) रुक्मिणी सत्यभामा च ...। मित्रविन्दानुविन्दा ... अष्ट महिला वासुदेवप्रियाः PadmP. iv. 70. 33.

**अनुविन्ध्य** (anu-vindhya) *adj.* (situated) along the Vindhya (mountain) तथा चतुर्णां वक्ष्यामि शैलेन्द्राणां यथाक्रमम्। अनुविन्ध्यानि रम्याणि ...। अनेकपक्षियुक्तात्मशृङ्गाणि सुबहूनि च VarāP. 78. 1.

**अनुविन्ना** (anu-vinnā) *adj.* (*f.*) [P. viii. 2. 42] acquired, obtained 'यज्ञेन वाचः पदवीयमायंस्तामन्वविन्दन्नृषिषु प्रविष्टाम्' इति स्थितामेव वाचमनुविन्नां दर्शयति BrahmSūBh. (Śaṅ.) 197. 15 (*on* i. 3. 29)

**अनुविपरिवर्तमान** (anu-viparivartamāna) *adj.* [*f.* -ā] **1** being revolved or rolled round, being recollected again and again हृदयमनुविपरिवर्तमानासु सामिधेनीषु उपवीतमामनन्ति ŚābaBh. 733. 7 (*on* iii. 1. 21); **2** being turned in opposite direction or being reversed, i.e. continued in a reverse or wrong order न पश्चाद्भाविन्यां समस्तवर्णावभासिन्यामुपलब्धावनुविपरिवर्तमानान् वर्णात्मनो भिन्दन्ति SphoṭSi. 65. 6.

**अनुविपश्** (anu-vipaś-) I. P. = **अनुविदृश्**.

**अनुविपिनम्** (anuvipinam) *adv.* in every forest, forest after forest भनिकरसदृशद्युतिरनुविपिनं लसति सुविशदा बहुरिह हि नगे NemiNir. 7. 48; भ्राम्यन्ती ... अनुविपिनं यद्वैरिसीमन्तिनी निद्राणा मुहुराहता ... शाखामृगैः SaduktiKa. 217. 5; अनुविपिनमशोकवल्लरीणाम् ...। उपरि मधुकरो निलीय गायन्नुभवति स्म नवां वसन्तदोलाम् Nalābhyu. 6. 8.

**अनुविप्रयुक्ता** (anu-viprayuktā) *adj.* (*f.*) used or employed one after another तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अन(v. l. °नु Viśva.) विप्रयुक्ताः। क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक्प्रयुक्तासु न कम्पते ज्ञः PraśnaU. 5. 6.

**अनुविप्रोषित** (anu-viproṣita) *adj.* gone on a journey नाधीयीतास्तमित आदित्ये नानुदिते नानुविप्रोषिते न पर्यावृत्ते BaudhGS. iii. 4. 34.

**अनुविप्लु** (anu-viplu-) I. Ā. to float or move over ते मोहितास्तद्वशे वर्तमाना इतः प्रेतास्तत्र पुनः पतन्ति। ततस्तं (मृत्युम्) देवा अनु विप्लवन्ते MahāBhā. v. 42. 8 (*but* JñānDī. उपहसन्ति); (better **अनु** *adn.*)

**अनुविभज्** (anu-vibhaj-) I. P. to distribute or apportion accordingly पञ्च प्रयाजाः षड्तवः क्वैतं षष्ठमृतुं यजतीति यदेव चतुर्थे प्रयाजे समानयति तदेनमितरेष्वनुविभजति KauṣīBr. 3. 4 (10. 21); वसतीवरीराहरति ... स यज्ञस्य रसोऽपः ... प्राविशत् ... तं यज्ञे दधाति तस्मादेनाः सर्वेषु सवनेषु त्रेधानुविभजति ŚatBr. (K.) IV. ix. 2. 2; समिधः ... एताभिराप्रीणीयाद् एता वा ऊनातिरिक्ताः प्राजापत्या अश्वमनुविभजन्ति VādhūŚS. iii. 89. 3.

**अनुविभा** (anu-vibhā-) II. P. to shine or illumine (one ) after (another) अग्निः सर्वा दिशोऽनुविभाति TaiĀ. v. 3. 7 (601. 8)

**अनुविभावयिषु** (anu-vibhāvayiṣu) *adj.* wishing to make (somebody) experience ततश्च विधातुः कल्मषशेषमनुविभावयिषोः ... अशुचौ लालाहारे कृमिजालसमाकुले बभूव YaśasCam. ii. 259. 18.

**अनुविभू** (anu-vibhū-) I. P. **1** to be equal, to correspond to तदिदं मनो यजुः सर्वाः सिकता अनुविभवति ŚatBr. VII. iii. 1. 40; द्वे यजुषी त्रीन् परिधीननुविभवतः ŚatBr. IX. iv. 4. 13; यावन्मात्रेण यजुषाध्वर्युर्ग्रहं गृह्णाति स उभे स्तुतशस्त्रेऽनुविभवति ŚatBr. X. iii. 5. 12; तानीमानि त्रीणि छन्दांसि षट् पृष्ठानि नानुव्यभवन् JaimiBr. 3. 316; **2** to extend over or pervade, to fill out स एष एकः सन् प्रजासु बहुधा व्याविष्टस्तस्मादेका सती लोकंपृणा सर्वमग्निमनुविभवति ŚatBr. X. v. 2. 15; प्रजापतिः ... द्यौर्भूत्वा सर्वमनुव्यभवत् JaimiBr. 1. 314; (अन्नम्) अब्रवीत् ... मयि प्रतिष्ठाय वायुराकाशमनुविभवति JaimiUBr. iv. 12. 10; **3** to be able to follow गायत्री देवेभ्योऽपाक्रामत्। तां देवाः प्रवर्ग्येणैवानुव्यभवन्। प्रवर्ग्येणाप्नुवन् TaiĀ. v. 11. 3 (639. 14) (Sāy. अन्वेष्टुं विभवः समर्था अभवन्); यच्चतुर्विंशतिः कृत्वः प्रवर्ग्यं प्रवृणक्ति। गायत्रीमेव तदनु विभवति TaiĀ. v. 11. 3 (640. 2) (Sāy. गायत्रीमेवानुगन्तुं समर्थो भवति); **4** to experience, cf. **अनुविभावयिषु**.

**अनुविभ्रमत्** (anu-vibhramat) *adj.* following in blundering, being confused after, straying after राजेन्द्र भूम्यर्थे नानृतं वक्तुमर्हसि। मा गमः ससुतामात्योऽत्ययं पुत्राननुभ्रमन् (v. l. अनुविभ्रमन्) MahāBhā. v. 35. 32.

**अनुविमुच्** (anu-vimuc-) VI. Ā. (pass.) to be loosened, to get unyoked successively होत्रा अनुविमुच्यान्ता इति। अथ यदनड्वानग्नीधे भवति - वहति वा JaimiBr. 2. 203.

**अनुविमृज्** (anu-vimṛj-) II. U. **A** to wipe off, to rub along, to smear with बभ्रेरध्वर्यो मुखमेतद्वि मृड्ढ्याज्याय लोकं कृणुहि प्रविद्वान्। घृतेन गात्रानु सर्वा वि मृड्ढि AV. xi. 1. 31; AV. (P.) xvi. 92. 1; अथैतमभिषेकम्। कृष्णविषाणयानुविमृष्टे ŚatBr. V. iv. 2. 4; 'अक्षीभ्यां ते नासिकाभ्याम्' इति सूक्तेन प्रत्यृचमाज्यलेपेनाङ्गान्यनुविमृज्यात् KauṣiGS. i. 13. 2; **B** to stroke along एतद्विवो मात्रया वरिम्णा प्रथस्वेत्यनुविमार्ष्टि ŚatBr. VI. iv. 1. 8; VII. iv. 1. 9.

**अनुविमृज्य** (anu-vimṛjya) *ger.* **A** having rubbed along, i.e. having smeared with आज्यलेपेनाङ्गान्यनुविमृज्य वाचंयमोऽभिप्रव्रज्यार्थं ब्रूयात् ŚāṅkhāĀ. 4. 3 (14. 16); KauṣiBrU. 2. 3; प्रत्यृचमाज्यलेपेनाङ्गान्यनुविमृज्य ŚāṅkhāGS. i. 21. 3; **B** having stroked along कटिं निपीड्यानुविमृज्य चोरुम्। ... विलक्षणायाः शठो मनोजोपनिषत् (?) पपाठ PadyaVe. 408.

**अनुविमृश्** (anu-vimṛś-) VI. P. to think, to consider, cf. **अनुविमृश्य** [to lay over, PW., MW.]

**अनुविमृश्य** (anu-vimṛśya) *ger.* having thought over or considered स तु मुनिरनुविमृश्य गणिकामातरमवदत् DaśKuC. 43. 8.

**अनुविरत** (anu-virata) *adj.* stopped from, i.e. separated यद्यहं क्षणमात्रं हि त्वत्तोऽनुविरतोऽभवम्। न मे प्राणाः प्रहृष्यन्ति ĀdiP. 14. 29.

**अनुविराज्** (anu-virāj-) I. P. to be bright after or along, ṚV. v. 81. 2; MW (better **अनु** *adn.*, cf. **अनु 1A**)

**अनुविराजित** (anu-virājita) *adj.* resplendent द्वात्रिंशत्महापुरुषलक्षणेहि समन्वागतो भवेयं अशीतिही अनुव्यंजनेहि अनुविराजितशरीरः ... यथायं भगवान् सर्वाभिभू एतरहेसि MaVastuAva. i. 38. 14 [DBHS.]

**अनुविरुह्** (anu-viruh-) I. P. to rise, i.e. to grow after or towards दूर्वाणां स्तम्बमाहरेतां प्रियतमां ममं। इमां दिशं मनुष्याणां भूयिष्ठानु विरोहतु TaiĀ. vi. 9. 1 (705. 2) (Sāy. दक्षिणां दिशम् अनु सा दूर्वा ... विरोहतु विविधमङ्कुरमुत्पादयतु); BaudhPiMe. 1. 15 (25. 7) (Caland Ed.) [Viśva.] (better **अनु** *adn.*)

**अनुविरोधिन्** (anu-virodhin) *adj.* opponent, enemy रामस्यानुविरोधिनम्। मत्वा तं भरतं शत्रुं रामभक्तो गुहस्तदा। ... रुरोध NaraP. 48. 125.

**अनुविलप्** (anu-vilap-) I. P. to mourn or lament after विलपति करुणस्वरेण देवे जलधरधीरगभीरनिस्वनेऽपि। चिरमनुविलपन्ति बाष्प(?ष्प)कण्ठाः ... नीलकण्ठाः CaitaCan. 224. 13 (9)

**अनुविलसत्** (anu-vilasat) *adj.* flashing after, i.e. dancing in accordance with चरणक्रममनुविलसद्भ्रूयुगविन्यासम् ...। नृत्यन्नितम्बबिम्बां गतमस्याः कं न मोहयति SundaŚ. 89.

**अनुविली** (anu-vilī-) IV. Ā. **A** to dissolve into सैन्धवखिल्यः। उदके प्रास्त उदकमेवानुविलीयेत ŚatBr. XIV. v. 4. 12; BṛĀraU. ii. 4. 1; **B** to dissolve subsequently सैन्धवखिल्यः ... उदकमेव विलीयमानम् अनुविलीयते ... उदकस्य विलयनम्, तत् अनु सैन्धवखिल्यो विलीयते BṛĀraUBh. 314. 11 (*on* ii. 4. 12)

**अनुविलेपन** (anu-vilepana) *n.* ointment, unguent काचित्पिपेषानुविलेपनं हि ... अङ्गना Saund. 4. 26; स्रग्धूपगन्धानुविलेपनानि ... यः ...। दद्याद्विजेभ्यः स भवेदरोगः CaturCin. i. 155. 6.

**अनुविलोक्** (anu-vilok-) X. P. **1** to look over, to view completely शक्रो देवानामिन्द्रः सुमेरौ (समुद्रे) स्थित्वा ... शीर्षव्यवलोकनेनानुविलोकयति स्म LaliVi. 6. 22 (33); देवपुत्राः ... भगवन्तमनुविलोकयन्ति स्म LaliVi. 6. 22 (44); **2** to consider, to ponder metaphorically, DBHS. [to survey, MW.]

**अनुविलोकन** (anu-vilokana) *n.* looking over thoroughly, examination एतं कुलपुत्र समाधिं समापन्नस्य ... अधिष्ठानं बुद्धधर्मदेशनानुविलोकनेषु GaṇḍVyū. 77. 23 [DBHS.]

**अनुविलोकयत्** (anu-vilokayat) *adj.* **1** looking over or viewing completely, examining असितो नाम महर्षिः ... दिव्येन चक्षुषा सर्वं जम्बुद्वीपमनुविलोकयन्नद्राक्षीत् ... शुद्धोदनस्य गृहे कुमारं जातम् LaliVi. 7. 54 (51); ते वणिजकाः ... समन्ततोऽनुविलोकयन्तो ददृशुः ... उदकौघम् JātaMā. 92. 16 (14. 21 (7)); **2** (*fig.*) considering, pondering सुधनः श्रेष्ठिदारकः ... अतिष्ठत्

मञ्जुश्रियं कुमारभूतं चिन्तयन् अनुविलोकयन् GaṇḍVyū. 419. 3 [DBHS.]

**अनुविलोमकुल** (anuviloma-kula) *n.* family of mixed and reverse castes (born of the mother inferior in caste to the father and that of the mother superior in caste to the father) भूयो द्वे चैकमप्यनुविलोमकुलेत्ययोः स्युः TantrSā. 2. 120; ŚilpaRa. ii. 2. 19.

**अनुविलोमतस्** (anuviloma-tas) *adv.* forwards and backwards, top to bottom and bottom to top निशीथसमये हतामनुविलोमतः पुत्तलीं सतीक्ष्णविषरूषितां जपतु तापयन् मारयेत् ĪśānŚiPa. i. 24. 44.

**अनुविवक्ष** (anu-vivakṣa-) *desid.* to desire to recite continuously एतदनुवचनम्। स यावदस्य वचः स्यात्। एवमेवानुविवक्षेत् ŚatBr. I. iii. 5. 14.

**अनुविवक्षत्** (anu-vívakṣat) *adj.* desiring to recite continuously तस्य एतस्य परिचक्षीत साम्युवान्यादनवानन्ननुविवक्षंस्तत्कुर्म विवृह्णेत सा परिचक्षा ŚatBr. I. iii. 5. 14.

**अनुविवर्तन** (anu-vivartana) *n.* act of revolving after यस्मिन्भ्रमत्यनुविवर्तनविप्लवार्तकूर्माधिराजकरजोद्धतरत्नखण्डैः। विच्छायता भुजगराजफणैः ... तरसाधिजग्मे HarVi. 4. 13.

**अनुविवा** (anu-vivā-) II. P. to blow along, to blow through सर्वा दिश आवाति। सर्वा दिशोऽनु विवाति TaiBr. II. iii. 9. 6; वायुर्भूत्वा सर्वा दिश आवाहि। सर्वा दिशोऽनु विवाहि TaiBr. III. x. 4. 2.

**अनुविवित्स** (anu-vivitsa-) *desid.* to desire to know or discover about तमनुविवित्तिरब्रवीत्। प्रजापते स्वर्गं वै लोकमनु विविथ्ससि TaiBr. III. xii. 2. 9.

**अनुविविश्** (anu-viviś-) VI. P. to settle along separately ये देवा दिविभागा येऽन्तरिक्षभागा ये पृथिवीभागाः। ... त इदं क्षेत्रमनुविविशन्तु TaiS. II. iv. 8. 2; KāṭhS. 11. 9 (i. 156. 9); यें देवा दिविभागाः स्थ यें अन्तरिक्षभागा यें पृथिवीभागास्तें ... इदं क्षेत्रमनुविंविशत MaiS. ii. 4. 7 (ii. 45. 6)

**अनुविवृत्** (anu-vivṛt-) I. Ā. **A** to spread over or extend along दैवोदासो अग्निः ...। अनु मातरं पृथिवीं वि वावृते ṚV. viii. 103. 2 (*but* MW. to run along); **B** (*caus.*) to turn out after तं प्रजापतिश्च परमेष्ठी च पिता च पितामहश्चापश्च श्रद्धा च वर्षं भूत्वानुव्यवर्तयन्त AV. xv. 7. 2 (*but* MW. to follow hastily)

**अनुविवृत्सु** (anu-vivṛtsu) *adj.* desirous of continuing तद्देशकालाभ्यां सह तत्राप्यस्ति मेलनाभासो यद्विमर्शोऽनुविवृत्सुर्निरुध्यते PratyabhiVi. ii. 127. 6 (*on* ii. 3. 13) (Bhāsk. मेलनम् अनुवर्तितुमिच्छुः)

**अनुविवृध्** (anu-vivṛdh-) I. Ā. to increase consequently योगाभ्यासमनुविवर्धन्ते रागाः कौशलानि चेन्द्रियाणाम् YogBh. 75. 6 (*on* 2. 15)

**अनुविश्** (anu-viś-) VI. P. **1A** to go after, to follow (तक्षकम्) तमुत्तङ्कोऽन्वाविवेश (v. l. अनुविवेश) तेनैव बिलेन MahāBhā. i. 3. 138; सुप्रतीकद्विपारूढो भगदत्तक्षितीश्वरः। तमन्वविशदादित्यमिवोद्योतो भवार्णवे PāṇḍaC. 13. 318; (refl.) to follow oneself रिपुः ... दभ्रमे त्वनु विश्यताम् AV. (P.) xvi. 9. 10; **1B** to enter after, to merge in मध्यप्राणं सुषुप्तौ स्वजनिमनुविशन्त्यग्निसूर्यादयोऽमी ŚatŚlo. 39; तें मुक्ता मामनुविशन्ति विज्ञानमयेनाङ्गेन BhasmJāU. 566. 12; संस्कारस्य च प्रत्यक्षभेदरूपत्वात् ज्ञानत्वमुन्नेयम्, न पुनर्यथाहुः ...। अस्य ह्यज्ञानरूपत्वे ज्ञानरूपस्मृतिजनकत्वं न स्यात्, नहि सत्ता सत्तान्तरमनुविशति PramāMī. 22. 7 (*on* i. 1. 29); प्रक्षीणसर्वकर्मलेपा योगिनो विष्णुपदादूर्ध्वमप्राकृतशिवपदं परमानन्दमयमनुविशन्ति BrahmSūBh. (Śrī.) ii. 334. 1 (*on* iii. 3. 30); **2Ai** to pervade प्रीतिश्च पुरुषव्याघ्र दुर्योधनमथास्पृशत्। ह्रीश्च क्रोधश्च बीभत्सुं क्षणेनान्वविशत् MahāBhā. i. 126. 11; **2Bi** to enter into, to mix with रागान्धावनपेक्षितात्ययौ परस्परमनुविशतः KāmSū. 101. 7 (2.2); **2Bii** to go into, to enter into जगदुत्पाद्य ...। सर्पादीन् कल्पितान् स्रग्वत्तदेवानुविवेश सः TaiUBhāVā. 117. 14 (2); BṛĀraUBhVā. iv. 4. 615; भक्षितास्तेन मण्डूकाः बीजावशिष्टाः प्रमुक्ताः, येऽस्य वक्त्रे नानुविशन्ति Tantrākhyā. 117. 15; **2C** to enter into, i.e. to experience, cf. **अनुविशन्ती**.

**अनुविशन्ती** (anu-viśantī) *adj.* (*f.*) (*fig.*) entering into, i.e. experiencing मम सखी ...। हताशेयं प्रेमानलमनुविशन्ती सरभसं पतङ्गीवात्मानम् ... दाहितवती HaṁsDū. (Rū.) 77.

**अनुविशा** (anuviśā) *f.* name of a daughter of Prāvā अनवद्यामनुव- (v. l. वि)शाम् ... प्रावा व्यजायत MahāBhā. i. 59. 44.

**अनुविशाद्य** (anu-viśādya) *ger.* having spread over or covered with कृष्णाजिनम् ... रौहिणपिष्टैरनुप्रकीर्य मुञ्जप्रलवैरनुविशाद्य सिकताभिरनुप्रकिरति BaudhŚS. i. 286. 7; एनं सिकताभिरनुप्रकीर्य मुञ्जप्रलवैरनुविशाद्य रौहिणपिष्टैरनुप्रकीर्य कृष्णाजिनेन प्राचीनग्रीवेणोत्तरलोम्ना प्रोर्णोति BaudhŚS. i. 288. 17.

**अनुविशाल** (anuviśāla) *n.* name of *parivarta* (one of the four varieties of *khaṇḍikātāla*) तस्य विशालमनु संगता अनुविशालम् ... इति दश परिवर्ताः AbhinBhā. i. 190. 13 (*on* 4. 287)

**अनुविशीर्यमाण** (anu-viśīryamāṇa) *adj.* being disintegrated or broken to देहे स्वधातुविगमेऽनुविशीर्यमाणे व्योमेव तत्र पुरुषो न विशीर्यतेऽजः BhāgP. ii. 7. 49.

**अनुविश्य** (anuviś-ya) *ger.* **i** having entered, i.e. reached तस्मिन् गिरिवरे रम्ये ... अन्नविष्यन्दजातानि (v. l. अनुविश्य सुजातानि) मूलानि च फलानि च। अमृतस्वादुकल्पानि ददृशुस्तत्र वानराः Rāmā. iv. 36. 29; **ii** having entered into एकस्त्वमेव भगवन् ...। सृष्ट्वानुविश्य पुरुषस्तदसद्गुणेषु नानेव दारुषु विभावसुवद्विभासि BhāgP. iv. 9. 7; शरीरमनुविश्यापि तत्प्रकाशयन्तः पुण्यानेव भोगाननुभवन्ति BrahmSūBh. (Ma.) 74B. 9 (*on* iv. 4. 15); अनुविश्य च मे वाचं चक्षुः श्रवणनासिके ...। सर्वं कारयति ...। परमात्मा BṛBrahmaS. iii. 9. 29.

**अनुविश्व** (anuviśva) *m.* (pl.) name of a people in the north-east of India ऐशान्याम्...। एकचरणानुविश्वाः BṛSaṁ. 14. 31.

**अनुविषण्ण** (anu-viṣaṇṇa) *adj.* fixed upon, i.e. directed towards अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुः ChāndoU. viii. 12. 4 (Śaṅ. अनुषक्तम् अनुगतम्); यत्र यस्मिन्काले देहच्छिद्रमेव एतदाकाशमनुविषण्णमनुगतं चक्षुर्भवति तत्र स पुरुषश्चाक्षुषः चक्षुरभिमानी सन् द्रष्टा भवति PrakaVi. 691. 20.

**अनुविषय** (anu-viṣaya) *m.* taste, flavour अपश्यन्तोऽन्न(v. l. नु)विषयं भुञ्जते विघसाशिनः MahāBhā. xii. 276. 39 (*but* BhārBhāDī. विषयं विषयमनुवर्तते)

**अनुविषिच्** (anu-viṣic-) VI. P. **A** (pass.) to be poured out or after विषमेवास्याप्रियं भ्रातृव्यमनुविषिच्यते य एवं वेद AV. viii. 10. 33; **B** to sprinkle with, cf. **अनुविषिञ्चत्**.

**अनुविषिच्यमाना** (anu-viṣicyamānā) *adj.* (*f.*) being poured out वषट्कृते चमसेन जुहोति। स्रुचा वानुविषिच्यमानयानुवषट्कृते च ĀpaŚS. viii. 3. 8.

**अनुविषिञ्चत्** (anu-viṣiñcat) *adj.* sprinkling with उपस्तीर्यान्तर्वेदि बर्हिरनुविषिञ्चन्वाजिनं गृह्णाति ĀpaŚS. viii. 3. 6; स्रुचि चमसे वान्तर्वेद्यूर्ध्वस्तिष्ठन्बर्हिरनुविषिञ्चन्वाजिनं गृह्णाति MānŚS. 42. 13.

**अनुविष्ट** (anu-viṣṭa) *adj.* [*f.* -ā] **A** who is entered in, i.e. who is presided over by सोऽनुविष्टो भगवता यः शेते सलिलाशये। लोकसंस्थां यथापूर्वं निर्ममे BhāgP. iii. 20. 17 (Śrīdhara अधिष्ठितः सन्); **B** who or which has entered into, BhāgP. iii. 20. 17 (Vīrarāghava अनुप्रविष्टो ब्रह्मा); परिव्राजकादीनाम् ... वासना कुतश्चिदभ्यासाद् हृदयमनुविष्टोद्भूता सती कंचिदेवाकारमेकस्यामेव प्रमदातनौ दर्शयति Kāśi. ii. 179. 20 (*on* 5 (3). 215)

**अनुविष्टम्भ** (anu-viṣṭambha) *m.* impediment in consequence तत्कावश्विनौ। ... तयोः काल ऊर्ध्वमर्धरात्रात् प्रकाशीभावस्यानुविष्टम्भम् Nir. 12. 1 (206. 6)

**अनुविष्ठा** (anu-viṣṭhā-) I. U. **1A** to spread over, to extend over वि ते वज्रासो अस्थिरन्नवतिं नाव्या3 अनु। महत्त इन्द्र वीर्यं बाह्वोस्ते बलं हितमर्चन्ननु स्वराज्यम् ṚV. i. 80. 8; त्वयां हितमप्यमप्सु भागं धन्वान्वा मृगयसो वि तस्थुः ṚV. ii. 38. 7 (better *adn.*, cf. **अनु 1Ei**); अहं सुवे ...। ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ṚV. x. 125. 7; वायुरेवास्य तं गन्धं: सुरभिंमंकः सोऽस्य सुरभिर्गन्धो जनंता अनुविंतिष्ठते MaiS. ii. 5. 2 (ii. 49. 14); **1B** to stand or settle firmly on यस्ते प्राणः पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे KātyŚS. ii. 8. 14 (better *adn*; cf. **अनु 1Eii**); **2** (*caus.*) to put together, cf. **अनुविष्ठाप्य**.

**अनुविष्ठाप्य** (anu-viṣṭhāpya) *ger.* having put together or mixed with, i.e. having collected part by part एष एताः रात्रिमिहामा वसति तस्मादमावास्या नाम। (सोमं) तं गोभिरनुविष्ठाप्य समभरन् ŚatBr. I. vi. 4. 6; स यदेताः रात्रिमिमेह वसत्यप्सु चौषधीषु च तस्मादमावास्या नाम तमेतद्देवा गोभिरनुविष्ठाप्य समभरन्दभ्यचौ(?श्रौ)षधिभ्यश्च ŚatBr. (K.) II. vi. 2. 6.

**अनुविष्ठित** (ánu-víṣṭhita) *adj.* [*f.* -ā] **A** spread over, i.e. diffused तव त्ये पितो रसा रजांस्यनु विष्ठिताः। दिवि वाताइव श्रिताः ṚV. i. 187. 4; या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु ṚV. x. 97. 19; **B** spread over, i.e. distributed एकशतं विष्कन्धानि विष्ठिता पृथिवीमनु AV. iii. 9. 6; यास्ते शतं धमनयोऽङ्गान्यनु विष्ठिताः AV. vi. 90. 2 (better **अनु** *adn.*)

**अनुविष्णु** (anuviṣṇu) *adv.* after Viṣṇu अव्ययीभावो नपुंसकं स्यात्। ... पश्चात्। विष्णोः पश्चादनुविष्णु PrakriKau. i. 476. 3; SiddhāKau. 162A. 3 (*on* ii. 4. 18); KośaKaTa. 2. 3101.

**अनुविष्यन्द्** (anu-viṣyand-) I. Ā. [P. viii. 4.41] to flow along, i.e. to spread along सह हृदयेन पशुः श्रपयन्ति पुनः पशुं शुगनुविष्यन्देत ŚatBr. XI. vii. 4. 3.

**अनुविसर्पत्** (anu-visarpat) *adj.* moving along, i.e. spreading over (in the body) यथा दुष्टेन दोषेण यथा चानुविसर्पता। निर्वृत्तिरामयस्यासौ संप्राप्तिर्जातिरागतिः AṣṭāHṛ. iii. 1. 8; RugVi. 1. 10.

**अनुविसृ** (anu-visṛ-) I. P. to extend or stream over, MW.

**अनुविसृज्** (anu-visṛj-) VI. P. **A** to release along वि पर्जन्यं सृजन्ति रोदसी अनु धन्वना यन्ति वृष्टयः ṚV. v. 53. 6 (*but* MW. to send along); **B** to send along, i.e. to shoot at वज्रो दक्षिणाविसर्जनो भ्रातृव्यमेव पराणुद्य तस्मै व्रजमनुविसृजति KāṭhS. 21. 2 (ii. 38. 6); KapiKaS. 31. 17 (164. 15).

**अनुविसृज्य** (anu-visṛjya) *ger.* having sent along, i.e. having shot at तौ प्रापततां तयोर्याः प्रोक्षणीरापः आसँस्ताभिरनुविसृज्य शीर्षे अच्छिनत् KāṭhS. 30. 1 (ii. 182. 9); KapiKaS. 46. 4 (279. 3); गायत्री वै सोममपाहरच्छ्येनो भूत्वा तस्य सोमरक्षिरनुविसृज्य नखमच्छिनत् KāṭhS. 34. 3 (iii. 37. 15); गायत्री सोममहरत्तस्या अनुविसृज्य सोमरक्षिः पर्णमच्छिनत् PañcBr. ix. 5. 4.

**अनुविसृत** (anu-visṛta) *adj.* extended or streamed over यावद् घृतमनुविसृतं तावत् स्फ्येन परिलिखति BhārŚS. x. 15. 9; ĀpaŚS. x. 23. 2.

**अनुविसृत्य** (ánu-visṛtya) *ger.* having extended or streamed over पुर्याप्लावयति। यथा सुवृष्टं इमामनु विसृत्यं TaiBr. III. ii. 8. 2 (*but* Bhaṭṭabhā. पर्जन्ये पृथिवीमनुप्रविश्य आपः ओषधीः महयन्ति पूजयन्ति)

**अनुविस्तीर्ण** (anu-vistīrṇa) *adj.* extended, large दशनल्वानुविस्तीर्णो रथोऽप्यस्य व्यशीर्यत Rāmā. vi. 3088* (1)

**अनुविस्तृत** (anu-vistṛta) *adj.* extended, large रावणस्य शरीरं तु पञ्चनल्वानुविस्तृतम् Rāmā. vi. 3088* (2)

**अनुविस्मरत्** (anu-vismarat) *adj.* forgetting again and again अतीतमननु (v. l. मनुवि)स्मरन् ... अतर्कितगमागमाननुभवामि भोगानहम् ŚatTrayī. 267.

**अनुविस्मिता** (anu-vismitā) *adj. (f.)* who is astonished after another सैवं तस्या वचः श्रुत्वा विस्मितामनुविस्मिता Rāmā. (GORR. Ed.) iii. 3. 16.

**अनुविस्रंस्** (anu-visraṁs-) I. P. *(caus.)* to separate, to loosen, cf. **अनुविस्रंस्य** [MW.]

**अनुविस्रंस्य** (anu-visráṁsya) *ger.* [DEBRU. 783] having separated, loosened or unfastened after, having undone or untied पुराञ्चः पितरः ...अथ संनहनमनुविस्रंस्य। अपसलवि त्रिः परिस्तृणन्पर्येति ŚatBr. II. vi. 1. 15; ŚatBr. (K.) I. vi. 1. 11.

**अनुविहन्** (anu-vihan-) II. P. to destroy or to obstruct उपजीविनः ...। उत्कोचैर्वञ्चनाभिश्च कार्याण्यनुविहन्ति MahāBhā. xii. 56. 51.

**अनुविहित** (anu-vihita) *adj.* **1** laid down or prescribed accordingly अतिरात्रे सहस्रमनुविहितं ददाति BaudhŚS. iii. 300. 7; सप्तदशाक्षरश्छन्दस्यः प्रजापतिर्यज्ञमनुविहितः MahāBh. ii. 335. 8 (*on* iv. 4. 140); ii. 434. 4 (*on* v. 4. 30) (better **अनु** *adn.*); अग्न्याधेयमनुविहितमवसरप्राप्तमिदानीं पुनराधेयमुच्यते BālamBha. i. 259. 22 (*on* 1. 89); **2** determined छद्मनैवार्थाभ्युपगमो दर्शितः। वार्त्तिककारेणापि तथैवानुविहितम् Kāśi. ii. 104. 23 (*on* 5 (3). 29); **3** follower, obedient इदं दैवतन्त्रं व्यवस्य भरतर्षभ। तस्यानुविहितोऽनाथा नाथ पाहि प्रजाः प्रभो BhāgP. i. 9. 17; **4** imitated, cf. **अनुविहितमहोत्सव.**

**अनुविहितभवच्चित्तता** (anuvihitabhavaccitta-tā) *f.* the state of being one who follows your mind (will) अङ्गीकारं गतेऽस्मिन्नमरपरिवृढः संभृतानन्दमूचे। भूयादन्तर्धिसिद्धेरनुविहितभवच्चित्तता यत्र तत्र NaiṣC. 5. 137 (comm. अनुविहितमनुसृतं भवच्चित्तं यया तस्याः भावः)

**अनुविहितभावता** (anuvihitabhāva-tā) *f.* the state or condition of existence which is determined (through inference) न हि वयमस्य भगवतः कार्यविशेषेणानुविहितभावतयोपकरणशरीरं निराकुर्मः Kiraṇā. 317. 8.

**अनुविहितभावाभाव** (anuvihita-bhāvābhāva) *adj.* whose existence and non-existence, i.e. positive and negative concomitance are determined अस्माकं तु कार्येणानुविहितभावाभावं चेतनमचेतनं वा कारणमुच्यते ĀtmaTaVi. 858. 1; कारणभेदोऽनुविहितभावाभाव एव सिध्यति NyāyVārPari. 527. 15.

**अनुविहितमहोत्सव** (anuvihita-mahotsava) *adj.* who has imitated the (celebration of) festival अनुविहितमहोत्सवो यथार्हं वितरणतोषितबन्दिबन्धुवर्गः। (कृष्णः) परिणयविधिं लतावधूनामतनुत चूतवरैः प्रियार्पितानाम् Yādavā. 24. 30.

**अनुविहितान्वयव्यतिरेक** (anuvihitānvayavyatireka) *adj.* whose positive and negative concomitances are determined कोष्ठगत्यानुविहितान्वयव्यतिरेकमेव कार्यात् कारणं सिध्येत् NyāyKuA. i. 70. 5.

**अनुविहृ** (anu-vihṛ-) I. P. **1** to spread along सारस्वतीं मेषीं मदित्या अजांमभिशस्यमानः याजयेद्वायुर्वा एतस्याश्लीलं गन्धं जनता अनुविहरति MaiS. ii. 5. 2 (ii. 49. 13); **2** (pass.) to be taken out अथो ऋतूनामेव तद्रूपं क्रियते षड् पुरुषा यानग्निरनुविह्रियते PañcBr. x. 12. 9 (better **अनु** *adn.)*

**अनुवी** (anu-vī-) II. P. [DhātuPā. 2. 369; AitGr. III. 180; DEBRU. 39] **1** to go after, to follow हरी यस्य सुयुजा विव्रता वेरर्वन्तानु शेपा ṚV. x. 105. 2; सप्तविंशत्यास्तुवत द्यावापृथिवी वि। एतां वसवः ... अनु व्यायन् TaiS. IV. iii. 10. 3; VājaS. 14. 30; VājaS. (K.) 15. 9; MaiS. ii. 8. 6 (ii. 110. 19); सर्वाण्यङ्गान्यनुवेति MaiS. iii. 8. 9 (iii. 108. 13); KāṭhS. 17. 5 (i. 249. 4); KapiKaS. 26. 4 (107. 13); दिशोऽनु तृतीय व्येति JaimiBr. 1. 46; इमे वै लोकाः ... त्रेधा व्यायन् । तांस्ते सान्नाय्यमनुव्यैनो उ (v. l. अनुव्यैत् OERTEL ) JaimiBr. 1. 185; तद्वत्रैवानुव्येति JaimiBr. 1. 242; 1. 243 (better **अनु** *adn.*); यमस्य पन्थामनुवेता BhārŚS. i. 9. 11; ĀpaŚS. i. 10. 6; **2** to obtain ये ब्राह्मणं हिंसितारः ...। अवर्तिमद्भविता राष्ट्रमेषां तपसैव निहतं? नानु वेतु? AV. (P.) ix. 18. 4; **3** to extend over, to pervade यावद् वा अग्नेर्दहतो धूम उदेत्यानु व्येति। तावती त्रिवृतो मात्रा TaiBr. I. v. 10. 4; प्राणो वै स्वयमातृण्णान्ने पुरीषं प्राणे तदन्नं दधाति तेन सर्वमात्मानं प्रछादयति तस्माद्यत्प्राणेऽन्नं धीयते सर्वमात्मानमवति सर्वमात्मानमनुव्येति ŚatBr. VIII. vii. 3. 2; यावन्मात्र इवान्नस्य रसः सर्वमन्नमवति सर्वमन्नमनुव्येति ŚatBr. X. iii. 5. 12; **4** to dissolve or mingle into (one whole) अथ यदूर्ध्वमुदीक्ष्यतेदं तद्यदिदमूर्ध्वमद्भ्योऽधि जायते सेयः सर्वाप एवानुव्यैत् ŚatBr. VI. i. 1. 12; **5**; to follow, i.e. to be in accordance with स उ वा एष एव स त्रयोदशपुरुषोऽत्रो हैवैषोऽग्नेर्विमा(न)मनुव्येति VādhūŚS. iv. 113. 4; **6** to accompany, cf. **अनुवीत i.**

**अनुवी** (anu-vī) *adj.* neglected, slighted तौ मित्रावरुणौ प्राणापानौ पशुभ्योऽपाक्रामतामनुवी मन्यमानौ नावाभ्यामनुवीभ्यां पशवः प्राणिष्यन्तीति JaimiBr. 1. 109.

**अनुवीक्ष्** (anu-vīkṣ-) I. Ā. **Ai** to look over, to observe अच्छिन्नपत्राः प्रजा अनुवीक्षस्व VājaS. 13. 30; VājaS. (K.) 14. 3; ŚatBr. VII. v. 1. 8; *(caus.)* to cause (one) to look over आदित्यमुपतिष्ठते ... एताननुवीक्षयन्त्यग्निमादित्यमश्मानमुदकुम्भं हिरण्यं गां भूमिम् ĀgniveGS. i. 2. 3 (17. 14); **Aii** to look about or after प्रजापतिः प्रजाः सृष्ट्वानुव्यैक्षत ŚatBr. VI. ii. 2. 6; **B** to look into, i.e. to ponder over, cf. **अनुवीक्ष्य Aii; Ci** to look at, to examine, to survey ते देवा विधातारमनुब्रुवन्नेवमु चेत् त्वमेतदधिथास्तथास्मानन्वीक्षस्व JaimiBr. 2. 399; मित्रस्य वश्चक्षुषानुवीक्ष इति दिशः ससंभाराः ĀśvaŚS. II. ii. 14. 18; सुवरभिविख्येषमिति सर्वं विहारमनुवीक्षते ĀpaŚS. i. 18. 4; ii. 3. 10; iv. 4. 9; xi. 18. 2; xiii. 6. 14; xv. 3. 7; xxii. 28. 24; सर्वं यज्ञमनुवीक्षते HirŚS. i. 5. 15 (123. 20); दक्षिणपूर्वाभ्यामनुवीक्षते BhārGS. 1. 27 (29. 1); 2. 22 (55. 13); **Cii** *(caus.)* to cause (one) to see, i.e. to watch ये केचिद्भूमिपतयस्तान्सर्वानन्ववेक्षयेत्। सुहृद्भिः ... तेन राजा न रिष्यते MahāBhā. xii. 94. 19; **D** to look for, to expect यक्षिणी प्राह इले किमनुवीक्षसे BrahmP. 108. 43.

**अनुवीक्षमाण** (anu-vīkṣamāṇa) *adj.* looking at, examining, surveying दिशोऽनुवीक्षमाणो जपति ŚatBr. V. ii. 1. 15; गृहान् ... प्रपद्येत।... शिवं शग्मं शंयो: शंयोरिति त्रिरनुवीक्षमाणः ĀśvaŚS. I. ii. 5. 17; सर्वमनुवीक्षमाणो जपेत् LāṭyāŚS. iv. 2. 9; DrāhyŚS. xi. 2. 10.

**अनुवीक्षित** (anu-vīkṣita) *adj.* looked about or after अथामङ्गलभीताभ्यां वाचा ते न निवारिताः। पितृभ्यां तनया यात स्निग्धदृष्ट्यानुवीक्षिताः PadmP. (Ra.) 6. 549.

**अनुवीक्षितुम्** (anu-vīkṣitum) *inf.* to look over, i.e. to trouble देवा ऊचुः ... नीलकण्ठ नमोऽस्तु ते।... ये त्वां प्रपन्नाः शरणं कृपालुं नालं कृतान्तोऽप्यनुवीक्षितुं तान् BrahmP. 94. 29.

**अनुवीक्ष्य** (anu-vīkṣya) *ger.* **Ai** having looked about or after आत्मैवेदमग्रऽआसीत्। पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत् ŚatBr. XIV. iv. 2. 1; BṛĀraU. i. 4. 1; सोऽनुवीक्ष्यात्मर्मोहोत्थदृष्ट्याविद्योत्थरूपकम् BṛĀraUBhVā. i. 4. 37; **Aii** having looked into, i.e. having pondered over विराट् ... प्रथमः संभूतोऽनुवीक्ष्यान्वालोचनं कृत्वा- 'कोऽहं किंलक्षणो वास्मि' इति BṛĀraUBh. 79. 13 (*on* i. 4. 1); **Bi** having looked over, having observed समुद्रोऽसि विश्वव्यचा इति सदोऽनुवीक्ष्य ŚāṅkhāŚS. vi. 12. 24; तथा गतां तामनुवीक्ष्य भूपः तलोदरीं प्राणसमां विविग्नः। ... भृशं स चक्रन्द ĀnandRa. 3. 20; **Bii** having looked at or surveyed एवं दग्धां धार्तराष्ट्रस्य सेनां युधिष्ठिरः

क्रोधदीप्तोऽनुवीक्ष्य MahāBhā. v. 47. 13.

**अनुवीचिभाषण** (anuvīci-bhāṣaṇa) *n.* faultless speech in accordance with Jain doctrine (*lit.* speech in the form of one wave following another) JainL.

**अनुवीचियुक्ति** (anuvīci-yukti) *f.* [Inst.] in the manner of speech in accordance with Jain doctrine क्रोधस्य लोभस्य भयस्य चापि हास्य चात्यन्तमपोहनं च। वाचः प्रयोगोऽप्यनुवीचियुक्त्या पञ्चैव सत्यव्रतभावनास्ताः VarāṅgaC. 31. 77; cf. **अनुवीचिभाषण**.

**अनुवीचीवचस्** (anuvīcī-vacas) *n.* faultless speech in accordance with Jain doctrine अनुवीचीवचो भाष्यं सदा पूज्यादिसंनिधौ। यथेष्टं हसनालापान्वर्जयेद्-गुरुसंनिधौ YaśasCam. ii. 407. 13.

**अनुवीज्** (anu-vīj-) I. U. to fan, MW.

**अनुवीजित** (anu-vījita) *adj.* fanned पाण्डवः। पुष्पगन्धवहैः पुण्यैर्वायुभिश्चानुवीजितः MahāBhā. iii. 44. 9.

**अनुवीज्यमान** (anu-vījyamāna) *adj.* being fanned हस्तिनः ... सुरभिकुसुमगन्धवहैर्मृदुशिशिरपवनैरनुवीज्यमानाः प्रत्यूषप्रदोषार्धरात्रिषु विचरन्ति Hastyāyur. 196. 11 (2. 13)

**अनुवीत** (anu-vīta) *adj.* **i** accompanied by, i.e. blessed with विप्राशिषा वेदघोषैर्मङ्गलैरपरैरपि। अनुवीतं महोत्साहम् ...। अभ्यसिञ्चन्महाराजं शम्भुराजं महौजसम् ParamāKā. 43 . 24; **ii** accompanied, i.e. escorted by शम्भुराजः ...। अनुवीतो महाशूरैः ParamāKā. 89. 10.

**अनुवीथि** (anuvīthi) *adv.* on the road, along the path इह धन्यतमैरलोकि ...। अनुवीथि पदावली मुरारेरकुतोजन्मसरस्वतीविचेया YātrāPra. 7. 61.

**अनुवीध्र** (anu-vīdhra-) *denom.* [ P. viii. 1. 70] to kindle, to light after यजमानः ... श्रीणंन्त्यन्यांन्त्सौमान्नांन्यांऽस्तंत्सौमानां मिथुनं॑ यांञ्श्रीणंन्ति तांनंनुवर्षति यांन्नं श्रीणंन्ति तांननुंवीध्रति MaiS. iv. 6. 3 (iv. 83. 1)

**अनुवीर्** (anu-vīr-) X. Ā. [ DhātuPā. 10. 355] to be powerful, to display heroism गोत्रभिदं॑ गोविदं वज्रबाहुं जयंन्तम् ...। इमं संजाता अनुं वीरयध्वमिन्द्रं॑ सखायो अनु सं रंभध्वम् R̥V. x. 103. 6; TaiS. IV. vi. 4.2; MaiS. ii. 10. 4 (ii. 136. 5); KāṭhS. 18. 5(i. 269. 20); KapiKaS. 28. 5 (125. 18); VājaS. 17. 38; (*but.* VIŚVA. **अनु** . *adn.*)

**अनुवीर्यम्** (anuvīryam) *adv.* in accordance with the power क्षत्रं वै स्तोत्रं विट् शस्त्रं क्षत्रेणैवास्मै विशमनुवीर्यमनुवर्त्मानं करोति Ṣaḍvi-Br. i. 4. 5 (*but* Sāy. **अनु** *adn.*)

**अनुवीर्या** (anu-vīryā) *adj.* (*f.*) which follows or obeys the power क्षत्रं वै स्तोत्रं विट् शस्त्रं क्षत्रेणैवास्मै विशमनुवीर्यम् (°र्याम् VIŚVA.) अनुवर्त्मानं करोति ṢaḍviBr. i. 4. 5.

[1]**अनुवृ** ( anu-vr̥-) X.U. to seek to hinder, to stop, to prevent देवा वै तृतीयेनाह्ना स्वर्गं लोकमायंस्तानसुरा रक्षांस्यन्ववारयन्त AitBr. 21. 1 (544); अपरेऽपि राजानः परावृत्य समन्ततः। महाबला रणे शूराः पाञ्चालानन्ववारयन् MahāBhā. vii. 70. 14.

[2]**अनुवृ** (anu-vr̥-) V.U. **1A** to cover over इन्द्रो वै वृत्रमहन्। तं वृत्रं जघ्निवांसमेभ्यो लोकेभ्यस्तमोऽन्ववृणोत् (v. l. तमेवान्ववृणोत्) ... त्रयो वा इमे लोकाः। तेनैभ्यो लोकेभ्यस्तमोऽपाहत। तं चतुर्थाल्लोकात्तमोऽन्वेवावृणोत् JaimiBr. 2. 179; **1B** to encircle, cf. **अनुवृत्त B**; **2** to surround शतसहस्राणि रथिनां सर्वशः प्रभो। छादयानं शरैर्घोरैस्तमेकमनुवव्रिरे (पार्थम्) MahāBhā. vi. 73. 12; ताः (व्रजयोषितः) कृष्णमनुवव्रिरे HariVaṁ. 63. 30.

[3]**अनुवृ** (anu-vr̥-) IX. Ā. to worship or serve after प्रजापतिः ... अथेन्द्रमब्रवीत्त्वमनुवृणीष्वेति JaimiUBr. i. 51. 7; (प्रजापतिः) विश्वान् देवानब्रवीद्यूयमनुवृणीध्वमिति JaimiUBr. i. 52. 1.

[1]**अनुवृत्** (anu-vr̥t-) I. Ā. (rarely P.) [AltGr. I. 59] **1A** to follow to observe, to practise (pass.) to be followed, to be observed, to be practised **Bi** to behave towards **ii** to act or behave accordingly **C** to side with, to act favourably **D** to carry out (duty etc.), to maintain (*caus.*) to cause to carry out **E** (*caus.*) to cause to bring together **F** to co-operate **2Ai** to go after, to follow **ii** to pursue **iii** to follow (in sequence) **Bi** to go or turn towards, (*caus.*) to cause to go or turn towards **ii** to entertain, i.e. to succumb to **iii** to resort to, to cling to **C** to move or to go around or along, (*caus.*) to cause to move or to go around **Di** to follow (the path etc.) **ii** to follow, i.e. to approve **Ei** to follow closely, to confirm to **ii** to follow, to imitate **Fi** to follow, to occur after **ii** to go together, to accompany **G** to pursuade **H** to proceed to, i.e. to intend for **3A** to repeat or to recite again **B** (*caus.*) to add, to insert **C** to depend upon or to result **D** to turn back, i.e. to restore or to recover **4A** to continue or supply (words, meanings etc. from the previous context) (pass.) to be continued or supplied (from the previous context) (*caus.*) to cause to continue or supply (from the previous context) **Bi** to continue to exist or persist with (*caus.*) to cause to continue to exist to persist with **ii** to continue, i.e. to pervade or to be common to (pass.) to be continued, i.e. pervaded **iii** to continue (in succession) **C** to continue, to carry on **Di** to continue (treatment for a long time) **ii** to continue to undergo (treatment) **Ei** to continue to be, i.e. to dwell **ii** to be, to exist **F** to appear, to enter **G** to connect, to relate **5A** to obey, to respect or regard, to be loyal **B** to attend upon, to serve **C** to gratify **6** to cherish, to become happy **7** to comply **8** to taper round or circular **9** to turn around **1A** to follow, to observe, to practise रथौं वामनुं व्रतानि वर्तंते R̥V. i. 183. 3; प्राचीनंमन्यदनुं वर्तते रज उदन्येन ज्योतिंषा यासि सूर्य R̥V. x. 37. 3; AV. (P.) xvii. 25. 6; MahāU. 5. 177; सुवृत्तिमनुवर्तिष्ये पितुः MahāBhā. i. 110. 6; ii. 5. 15; यः पापमेवानुवर्तते MahāBhā. iii. 159. 6; SūktiRa. 9. 7; ये च धर्माः कुटुम्बेषु ...। तान् सर्वाननुवर्तामि MahāBhā. iii. 222. 33; कृपणानाम् ... मा वृत्तिमनुवर्तिथाः MahāBhā. v. 131. 38; ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः MahāBhā. xiii. 24. 83; xiv. App. I. 4 (2114); PadmP. ii. 96. 21; धर्मः ... सद्भिराचरितः पुरा। तं चाहमनुवर्ते Rāmā. ii. 27. 28; ii. 338*; दश लक्षणानि धर्मस्य ... अनुवर्तन्ते ते यान्ति परमां गतिम् ManuSm. 6. 93; मत्प्रीतिः परमो धर्मः ...। अनुवर्तस्व ViṣṇuP. i. 12. 20; ये धर्मं नानुवर्तन्ते ते वै नग्नादयो जनाः BrahmāṇḍP. ii. 14. 40; BṛParāSm. 6. 207; सद्वृत्तमनुवर्तेत KāmSū. 242. 3 (4. 1); 237. 13 (4. 1); इदानीं तु यदाचारमत्यन्तमनुवर्तते। तत् प्राच्यादि-समाख्याख्यमुपन्यस्तं विशेषणम् TantrVā. 188. 1 (*on* i. 3. 14); तामेताम् ... ब्राह्मीमुपनिषदम् ... यो वेद अनुवर्तते अनुतिष्ठति तस्य ... फलमाह KenUVāBh. 97. 10 (*on* 4. 9); (राजपुत्रः) सः ... व्याधजातिकर्माण्येवानुवर्तते BṛĀraUBh. 259. 17 (*on* ii. 1. 20); (बैजिके अभिसंबन्धे) तत्र कथं नानुरुन्ध्यान्नानुवर्तेत। अघमाशौचं त्र्यहम् ManuBh. i. 451. 5 (*on* 5. 62); आगमालोकधर्माणां मर्यादाः पूर्वनिर्मिताः। प्रमाणेनानुवर्तन्ते दृश्यन्ते ह दृढव्रताः BrahmP. 225. 60; यथाविधि लिङ्गाचारावनुवर्तस्व ŚatDū. 233. 19; इमम् ... वृत्तान्तं महाराजाय निवेद्य ... स्वामिभक्तिव्रतमनुवर्तावहे KaṁVa. 6. 29 (5); धर्मादनपेतम्। यदनुष्ठानं धर्ममनुवर्तत एव तदित्यर्थः LaŚabdeŚe. ii. 293. 11; (pass.) to be followed, to be observed, to be practised चोदनाधर्मः किमर्थं नानुवर्त्यते MṛgendraT. i. 1. 4; स एव अद्य इदानीं श्वोऽपि भविष्यत्यपि काले अनुवर्त्यते अनुवर्तिष्यते च देवैरित्यभिप्रायः BṛĀraUBh. 206. 5 (*on* i. 5. 23); **1Bi** to behave towards धार्तराष्ट्राः ... दुर्योधनादयः। तेष्वन्ववर्तन्त पापाचाराः MahāBhā. iii. App. I. 25 (7); **1Bii** to act or behave accordingly क्षत्तुर्यदा अन्ववर्तन्त बुद्धिं कृच्छ्रं कुरून्न तदाभ्याजगाम MahāBhā. v. 26. 16; एषोऽहं भवच्छन्दमनुवर्ते PañcRā. 1. 38 (2); अहं तावत्स्वामिनश्चित्तमनुवर्तिष्ये Śāk. 2. 4 (5); जनस्याशयमालक्ष्य यो यथा परितुष्यति। तं तथैवानुवर्तेत पराराधनपण्डितः AṣṭāHṛ. i. 2. 28 (comm. आराधयेत्); अन्तःपुराण्यपि ... तस्याभिलषितमन्ववर्तन्त HarṣaC. 152. 4; मालती ... प्रीत्या वाचं ददात्यनुवर्तते ... माम् MālaMā. 3. 34; इह लोके प्रजाः अन्वाविशन्ति अनुवर्तन्ते यथानुशासनम् ChāndoUBh. 479. 7 (*on* viii. 1. 5); त्वदिच्छामनुवर्त्स्यामि प्रसृताक्षि प्रसीद मे RāmC. 24. 57; यथा ह्यचेतनः काय आत्मेच्छामनुवर्तते। तदिच्छामनुवर्त्स्यन्ते तथैव परमाणवः NyāyMañ. i. 185. 32; महिषी यद्यदीहेत तत्तदेवान्ववर्तत BhāgP. iv. 25. 56; यो यथा वर्तयत्येनं तं तथैवानुवर्तते SūktiRa. 163. 66; धर्मधुरंधरः ... दर्शनीयेषु चोलेषु दिदृक्षामन्ववर्तत Yādavā. 22. 164 (comm. अन्वसरत्); कुलसात्म्यं च बुध्येत यस्मिन् यस्मिन् यथा यथा। औचित्यात्कुलसात्म्यस्य तत्तथैवानुवर्तते KāśyaS. 307A. 22; **1C** to side with, to act favourably न हि दुर्योधनो राज्यं मधुरेण प्रदास्यति। अनुवर्त्स्यति तं चापि धृतराष्ट्रः सुतप्रियः MahāBhā. v. 4. 2; v. 6. 5; यथा प्रजाभ्यः कुनृपो बलाद् बलीन्हरत्यशेषं च न चाभिरक्षति। तथैव कायो वसनादिसाधनं हरत्यशेषं च न चानुवर्तते Saund. 9. 38; महत्ते पौरुषोद्योगविपुलोत्साहसेवनम्। भयादिवातिकुटिलं दैवमप्यनुवर्तते RāmāMañ. 281. 18; **1D** to carry out (duty etc.), to maintain कुलस्थितिमनुवर्तस्व MahāvīC. 7. 31 (3); अनुवर्तते शूरः कार्यक्षमो भवति ManuBh. ii. 64. 27 (*on* 7. 206); चिन्तामोहौ परित्यज्य ह्यनुवर्तस्व च PadmP. ii. 11. 26; बुद्ध्यादिभ्यो बहिः सर्वमनुवर्तस्व मा खिदः AdhyāRā. ii. 4. 41; vi. 12. 26; vi. 15. 8; राधेयमेव मेने बुधः स्ववृत्त्यानुवर्तेत UpadeŚ. 82; (*caus.*) to cause to carry out दौवारिकान्तर्वंशिकमुखश्च यथोक्तं राजप्रणिधिमनुवर्तयेत् ArthŚā. ii. 218. 6 (5. 6); iii. 15. 1 (8. 2); **1E** (*caus.*) to cause to bring together यदाहारजातं समान्

38 (*but* comm. अनिशम्); **2A** along the shore व्रजति विरलतामनुवेलमुर्वीगन्धर्वनगरे ... सागरावतारदेशमुद्दिश्य चलितेषु सर्वतः सैनिकेषु ... बाह्यास्थानमण्डपमगच्छम् TilaMañ. 124. 11; तेन सा ... रक्षिता निपुणमद्रितटसंघट्टमनुवेलं वीक्षमाणेन TilaMañ. 142. 2; **2B** up to the shore याति भानुरपमण्डलवृत्त्या दक्षिणोत्तरदिशोरनुवेलम् VāstuVi. 3. 9; ŚilpaRa. i. 11. 4; **2C** on the shore अथ नृपमनुवेलं सेव्यमानं बलौघैः ... राक्षसेन्द्रो ववन्दे RāghPāṇ. (Ka.) 7. 6; सरित्पतिः सह्यसुतां तरङ्गैरालिङ्ग्य यस्यां रमतेऽनुवेलम् Raghunā. 1. 14.

**अनुवेलस्पन्दित** (anuvela-spandita) *adj.* throbbing on each and every occasion अनुवेलस्पन्दिताधरपुटा प्रष्टुकामेव वार्तामिष्टजनस्य ... अवेक्षसे दक्षिणां ककुभम् TilaMañ. 258. 14.

**अनुवेलावनम्** (anuvelāvanam) *adv.* near the forest on the shore प्रययौ निकषाम्भोधिम् ...। अनुवेलावनं सम्राट् सैन्यैः MahāP. 29. 9.

**अनुवेल्ल्** (anu-vell-) I. P. **1** to go or move along अपाङ्गभागस्थं सूत्रवद्यलितं कृमिं संचरन्तमभितः प्रथमत एव विध्येत्। पक्ष्माणि वा विशति। शस्त्रं वाप्यनुवेल्लति Hastyāyur. 149. 13 (1. 18); **2** to bend, cf. **अनुवेल्लित** *adj.*

**अनुवेल्लित** (anu-vellita) *n.* bandage for (injured) shoulder or lap कोशदामस्वस्तिकानुवेल्लितमु(प्र)तोलीमण्डलस्थगिकायमकखट्वाचीनविबन्धवितानगोफणाः पञ्चाङ्गी चेति ... बन्धविशेषाः। ... अनुवेल्लितं शाखासु SuśruS. i. 18. 18; AṣṭāSaṁ. i. 188. 5 (1. 38); i. 188. 9 (1. 38); AṣṭāHṛ. i. 29. 60 [bandaging, securing with bandages (in surgery), MW.]

**अनुवेल्लित** (anu-vellita) *adj.* turned, i.e. bent in conformity with, bent under पर्यङ्कतले दक्षिणपादपार्ष्ण्यधोभागानुवलि( v. l. वेल्लि)तेतरचरणाग्रपृष्ठम् ... विश्रब्धप्रसुप्ताम् ... राजकन्यामपश्यम् DaśKuC. 62. 3.

**अनुवेश** (anu-veśa) *m.* **1** entry गुरोरनुप्रवेशो हि नोपघातो यवीयसः। यवीयसोऽनुप्रवेशो ( v. l. यवीयसोऽनुवेशो) ज्येष्ठस्य विधिलोपकः MahāBhā. i. 205. 27; (यन्त्रसुन्दरमन्वदि (?वि) शम्) यन्त्रसुन्दरानुवेशादनन्तरम् comm. *on* YaśasCam. ii. 31. 16; **2A** next but one neighbour साधयतः प्रतिवेशानुवेशयोरुपरि निमन्त्रणे च द्वादशपणो दण्डः ArthŚā. ii. 113. 3 (3. 20) (*but* comm. अनन्तरगृहम्); **2B** next to nearby house स्वगृहस्याभिमुखं गृहं प्रतिवेशः अभितः समीपस्थं गृहमनुवेशः Mānavavyākhyāna 1102. 3 (*on* 8. 392)

**अनुवेशन** (anu-veśana) *n.* [GaṇPā. 7. 14; CāndraVṛ. *on* iv. 1. 132; DEBRU. 209] act of entering after or following (in death) स्त्रीणामयं परो धर्मो यद् भर्तुरनुवेशनम् BrahmP. 80. 75.

**अनुवेशनीय** (anu-veśanīya) *adj.* [P.v. 1. 111; SaraKaṇṭhā. (Gr.) v. 1. 122] pertaining to the (act of) entering after or following अनुवेशनीयम् GaṇRa. 6. 366 (397)

**अनुवेश्म** (anuveśma) *adv.* in every house तत्रानुवेश्म दातारो दिवि कल्पद्रुमा इव। सर्वदा सुलभा एव दुर्लभाः पुनरर्थिनः TriṣaŚaPuC. iii. 2. 30.

**अनुवेश्य** (anu-veśya) *m.* next but one neighbour or back-neighbour प्रातिवेश्यानुवेश्यौ च कल्याणे ...। अर्हावभोजयन् विप्रो दण्डमर्हति माषकम् ManuSm. 8. 392; प्रतिवेश्यानुवेश्यौ च तस्य मित्रारिबान्धवाः प्रष्टव्याः BṛhaspaSm. 187. 23; DaṇḍaVi. 70. 13; अनुवेश्यः पृष्ठतो वसन् ManuBh. ii. 231. 14 (*on* 8. 392); अनुवेश्यः स्वगृहात्तद्गृहा(ह)द्रष्टा Aparā. 835. 10 (*on* 2. 263); प्रातिवेश्यो निरन्तरगृहस्थः। अनुवेश्यस्तदनन्तरः ManvaVi. 1101. 23 (*on* 8. 392); प्रातिवेश्यः पार्श्वगृहवर्ती अनुवेश्यः तत्पार्श्वगृहवर्ती ManuBhāvāCan. 1102. 5 (*on* 8.392); निरन्तरगृहवासी प्रातिवेश्यः तद(न)न्तरगृहवास्यनुवेश्यः ManvaMu. 359. 3 (*on* 8. 392)

**अनुवेश्य** (anuveś-ya) *ger.* having fixed, i.e. steadied (*lit.* having caused to enter) चित्तमप्यनुवेश्य च। मयि संन्यास्योगेन (यदीच्छेत् परमां गतिम्) VarāP. 142. 13.

**अनुवेष** (anu-veṣa) *m.* utensil (for serving food), ladle षट्त्रिंशतमनुवेषान् दीर्घदण्डान् ... कुरुत BaudhŚS. ii. 218. 10.

**अनुवेष्ट्** (anu-veṣṭ-) I. Ā. **1** to encircle, to cling to यज्ञो यंदसृज्यत तंस्यो ल्बमन्ववेष्टत KāṭhS. 23. 3 ( ii. 77. 21); 12. 4 (i. 166. 11); KapiKaS. 35. 9 (186. 4); (pass.) to be encircled, to be clung to (सः) हसन्नेव च ... तक्षकेणाभिवेष्टितः (v. l. °न्ववेष्ट्यत) MahāBhā. i. 39. 33; **2A** to bind, to entwine, cf. **अनुवेष्टित A**; **2B** to cover, cf. **अनुवेष्टित B**; **3** to recline against, cf. **अनुवेष्ट्य 2** [*caus.* to wind round, cover, MW.]

**अनुवेष्टनभाव** (anuveṣṭana-bhāva) *m.* idea or attitude of clinging or embracing या ...। अनुवेष्टनभावेन भर्तारमनुगच्छति। सा तु मृत्युमुखद्वारं न गच्छेत् VarāP. 209. 9.

**अनुवेष्टित** (anu-veṣṭita) *adj.* [*f.* -ā] **A** bound or tied, entwined अग्निः ... तच्छुल्बकं प्रददाह येनानुवेष्टित आस JaimiBr. 1. 171; उष्णीषः ... मौञ्ज्यामश्वाभिधान्यामनुवेष्टितो भवति VādhūŚS. xi. 1. 39 (CHAUBEY's Ed.); (यूपः) यद्यनुवेष्टितः पार्श्वावबाधः MānŚS. 177. 13; **Bi** covered, full of पुष्पितस्येव फेनस्य पर्यन्तमनुवेष्टितम्। पिबन्तो निवसन्त्यत्र फेनपा मुनिसत्तमाः MahāBhā. v. 100. 5; (रामः ...। विवेश नलिनीं चम्पाम्) लताभिरनुवेष्टिताम् Rāmā. iii. 71. 17; शीतलोदका। मही सदा कर्दमदुर्गमा ... सतालहिन्तालवनानुवेष्टिता KalyāKā. 2. 29; **Bii** surrounded or encircled by कतिपयैस्तु जनैरनुवेष्टितो ध्रुवमतीवदति(वि)ष्ठदुरासदः ParamāKā. 14. 101.

**अनुवेष्ट्य** (anuveṣṭ-ya) *ger.* **1** having bound or tied, having entwined तं हौदुम्बर्यामनुवेष्ट्य शणशलाकाभिरुपादीपयांचकार JaimiBr. 1. 171; वेदं मेक्षणं बर्हिषोपसंनह्य मध्यमे स्थूणाराजेऽनुवेष्ट्य निदधाति VādhūŚS. vi. 7. 3 (CHAUBEY's Ed.); गर्भस्य नाभ्याश्रया नाडी कण्ठमनुवेष्ट्य व्यापत्तिं करोति AṣṭāSaṁ. i. 206. 17 (2. 2); **2** having reclined against, cf. **अननुवेष्ट्य.**

**अनुवैचित्र्य** (anu-vaicitrya) *n.* corresponding diversity उपवर्षाचार्यस्य शास्त्रसंप्रदायप्रवर्तकस्यानुवैचित्र्यं कृतमेवं विज्ञानवैचित्र्यम् BrahmSūBh. (Bhā.) 124. 29 (*on* ii. 2. 29)

**अनुवैनेय** (anuvaineya) *m.* name of a settlement (*nigama*) of the Maineya people अतिक्रम्य मल्लान् मैनेयानामनुवैनेये निगमे षट्सु योजनेषु LaliVi. 15. 101 (2) [DBHS.]

**अनुव्यञ्जन** (anu-vyañjana) *n.* ( rarely *m.* , cf. SaddhaPuṇ. 45. 11) minor or secondary characteristic of things in general, also specifically, one of the eighty minor marks or characteristics of a Mahāpuruṣa, especially of a Buddha बुद्धानाम् ... अशीत्यनुव्यञ्जनानि आसि MaVastuAva. ii. 43. 8; Saund. 13. 41; कुमारस्य कायेऽशीत्यनुव्यञ्जनानि ... कतमानि ... तान्यशीत्यनुव्यञ्जनानि LaliVi. 7. 54 (130); अनुव्यञ्जना ये च महामुनीनामशीति पूर्णाः प्रवरा विशिष्टाः SaddhaPuṇ. 45. 11; द्वे दन्तमाले द्वे अनुव्यञ्जने BodhiBhū. 260. 11; लक्षणानुव्यञ्जनानां भगवति महापुरुषत्वसंप्रत्ययेन दर्शनमात्रात् परेषां प्रसादजनकत्वं कर्म MaYānaSū. 185. 20 (20. 48); GiMs. i. 3. 8; अद्राक्षुस्ता बुद्धम् ... द्वात्रिंशता महापुरुषलक्षणैः समलंकृतमशीत्यानुव्यञ्जनैर्विराजितगात्रम् Divyāva. 28. 26; 47. 7 [DBHS.]; **2** similarity in appearance व्यञ्जनानि ... अवयवास्तैः सहोपलम्भात्तेषामनुव्यञ्जनं तत्सादृश्यं तेन तदारोपः TātpaṬ. (Vā.) 641. 3 (*on* iv. 2. 3)

**अनुव्यञ्जनग्राहिन्** (anuvyañjana-grāhin) *adj.* who grasps the minor or secondary marks or characteristics सो चक्षुषा रूपं दृष्ट्वा न च निमित्तग्राही भविष्यन्न चानुव्यञ्जनग्राही MaVastuAva. iii. 52. 6; Sphuṭā. i. 94. 18 (*on* 1. 42); ŚikṣāSa. 357. 2 [DBHS.]

**अनुव्यञ्जनचतुष्टय** (anuvyañjana-catuṣṭaya) *n.* group of four minor or secondary marks or characteristics द्वे शङ्खे द्वौ च कर्णावनुव्यञ्जनचतुष्टयम् BodhiBhū. 260. 14.

**अनुव्यञ्जनद्वय** (anuvyañjana-dvaya) *n.* pair of minor or secondary marks or characteristics द्वौ अक्षिपरिवारावनुव्यञ्जनद्वयम्। द्वे भ्रुवावनुव्यञ्जनद्वयम्। द्वे नासिकाविले अनुव्यञ्जनद्वयम् BodhiBhū. 260. 13.

**अनुव्यञ्जनयुक्त** (anuvyañjana-yukta) *adj.* possessed of minor or secondary marks or characteristics शरीरं द्वात्रिंशल्लक्षणैः समलंकृतम्। अनुव्यञ्जनयुक्तं च SaddhaPuṇ. 161. 5.

**अनुव्यञ्जनसंज्ञा** (anuvyañjana-sañjñā) *f.* illustration of similarity or conformity in appearance, i.e. figurative aspect सा च खलु स्त्रीसंज्ञा सपरिष्कारा, पुरुषस्य पुरुषसंज्ञा च स्त्रियाः सपरिष्कारा निमित्तसंज्ञा अनुव्यञ्जनसंज्ञा च। ... अनुव्यञ्जनसंज्ञा - इत्थं दन्ता इत्थमोष्ठाविति NyāyBh. 290. 1-3 (*on* iv. 2. 3)

**अनुव्यञ्जनसंपद्** (anuvyañjana-sampad) *f.* excellence of minor or secondary marks or characteristics चतुर्विधा रूपकायसंपत्। लक्षणसंपत् अनुव्यञ्जनसंपत् बलसंपत् वज्रसारास्थिसंपत् AbhidhKoBh. 416. 4 (*on* 7. 34)

**अनुव्यत्ययम्** (anuvyatyayam) *adv.* following the reverse order यद्धि पृष्ठयोरनुव्यत्ययं श्यैतनौधसे व्यत्यहरिष्यद् भूयान् व्यत्यय आकाङ्क्ष्योऽभविष्यत् NidāSū. 172. 6 (9. 13)

**अनुव्यध्** (anu-vyadh-) IV. P. (TaiĀ. I. P.) **1Ai** to strike or pierce through दक्षिणा मा दक्षिणतो दक्षिणा पातु सव्यतः। पश्चादनु व्या (v. l. °व्य) धात् AV. (P.) ii. 85. 3 (BHATTACHARYA's Ed.); पश्चाद् अनव्याधात्?(अनुव्याधात् JAOS. 40. 163) पातु AV. (P.) vii. 15. 1; भूमिः। सर्वपाप्मानमपनुद्यास्मदमित्रान्मे

द्विषतोऽनु विध्यतु KauśiSū. 98. 2; *(caus.)* to cause to pierce वर्ममन्त्रं तु कर्मात्मा(त्म) परमात्मानुवेधयेत् PāraS. 3. 42; **1Aii** to penetrate, cf. **अनुवेध 1Ai**; **1Aiii** to chase, to pursue, cf. **अनुविद्ध 2B**; **1B** to destroy, to eliminate अरिंष्टं यत् किं चं क्रियतें। अ॒ग्निस्तदनुंवेधति TaiĀ. ii. 7. 4 (170. 3); **2A** to blend, to intermix, cf. **अनुवेध 2**; **2B** to pervade, cf. **अनुविद्ध 1A**; **2C** to involve, cf. **अनुविद्ध 1B**; **2D** to preside over, cf. **अनुविद्ध 1D i**; **3A** to relate, cf. **अनुवेध 3A**; **3B** to co-refer, cf. **अनुवेध 3B**; **4** to tie, cf. **अनुवेध 4**; **5** to continue, to permeate, cf. **अनुव्याध 2**; **6A** to string with, cf. **अनुविद्ध 3Ai**; **6B** to set into motion, cf. **अनुविद्ध 3B**; **7** to surround by, cf. **अनुविद्ध 4**; **8** to paint with, cf. **अनुविद्ध 5**; **9** to be attached, cf. **अनुविद्ध 6**.

**अनुव्यधमान** (anu-vyadhamāna) *adj.* being pierced, i.e. applied (श्वयथुः) लेपप्रदेहैरनुव्यधमानः परिशुष्यति Hastyāyur. 386. 10 (3. 5)

**अनुव्यन्** (anu-vyan-) II. P. to breathe after भुवः इत्यनामुपधायानुव्यनिति VādhūŚS. viii. 31. 10 (Chaubey's Ed. ); चितिं जुहोमीति स्वयमातृण्णायां हुत्वानुव्यनिति HirŚS. xii. 1. 10 (78. 16)

**अनुव्यम्** (anúvyam) *adv.* **A** as inferior to देवा॒श्च वाऽअ॒सुराश्च। उ॒भये प्राजापत्या॒ः पस्पृधिरे त॒तो देवा॒ अनु॒व्यमिवासुः ŚatBr. I. ii. 5. 1 (Sāy. अनुगमनं न्यग्भूतिं प्राप्ता इव बभूवुः); तस्मान्नु हैष वृक्ष एवानुव्यम् VādhūŚS. iv. 59B. 3; **B** behind, after त्रयोदशमदीक्षयꣳ सोऽनुव्यमभवत्तस्मादुपसत्सु दिदीक्षाणोऽनुव्यं भवत्येव PañcBr. x. 3. 2 (Sāy. अनुपूर्वाद् वेतेर्गतिकर्मणः ... द्वितीयैकवचने ... यण्)

**अनुव्यर्ज्** (anu-vyarj-) I. P. to acquire after स॒र्वमु वै वि॒श्वे देवास्तत् स॒र्वमनु॒व्यर्जति ŚatBr. (K.) V. iii. 2. 22.

**अनुव्यवगा** (anu-vyavagā-) II. P. [P. ii. 4. 45] to enter in between पा॒पीयांसो वै॒ भवामोऽसुररक्षसा॒नि वै॒ नोऽनुव्य॒वागुः ŚatBr. III. iv. 2. 2; cf. **अनुव्यवे.**

**अनुव्यवलोकित** (anu-vyavalokita) *adj.* continuously gazed at (by) अथ खलु सुधनः श्रेष्ठिदारकः ... अद्राक्षीत् समन्तभद्रम् ... सर्वबोधिसत्त्वानुव्यवलोकितम् GaṇḍVyū. 422. 12 [DBHS.]

**अनुव्यवसाय** (anu-vyavasāya) *m.* **1** after-cognition or recognition (consciousness of perception which follows and refers to determinate cognition) सर्वत्र प्रत्यक्षविषये ज्ञातुरिन्द्रियेण व्यवसायः पश्चान्मनसानुव्यवसायः NyāyBh. 15.4 (*on* i. 1. 4); दृश्यते च विनश्वरेष्वपि पदार्थान्तरेषु क्रमानुभूतेषु युगपदनुव्यवसायो मानसः NyāyMañ. i. 345. 23; घटमहं जानामीति मानस्यां बुद्धौ त्रयाणामपि ज्ञानज्ञेयज्ञातॄणां भेदेनानुव्यवसायात् TātpaṬ. (Vā.) 239. 23 (*on* i. 1. 22); असंभावनामात्रनिराकरणेनानुव्यवसायस्य ... स्वरूपप्रच्छादनम् ... तत्र यदवभासते वस्तु तन्नाट्यम् AbhinBhā. i. 37. 14 (*on* 1. 107); इच्छाद्वेषप्रयत्नगोचरस्यापि ज्ञानस्य प्रामाण्यसमर्थनं सूचितमित्यनुव्यवसायोऽवशिष्यते NyāyVārPari. 111. 8; बुद्धिर्ज्ञानमित्येतावतैव स्वस्थं यस्मिन् सत्यात्मनि जानामीत्यनुव्यवसायो भवति सा बुद्धिः Kiraṇā. 258. 4; जिज्ञासायां सत्यां यत्रैवानुव्यवसाये ज्ञेयता न स्वीक्रियते तत्र संशयः स्यात् KhaṇḍanKhā. 84. 11; ज्ञानव्यवहारहेतुप्रकाशत्वं विवक्षितं तदपि न। अनुव्यवसायेऽतिव्याप्तेः TattvPradī. (Ci.) 5. 1; न चानुव्यवसायादनुभवप्रत्यक्षता VedāntKa. 293. 17 (*on* ii. 2. 28); ज्ञानोत्पत्त्यन्तरमनुव्यवसायेन ज्ञानमवभासते NyāyKu. 29. 8; न ह्यन्यगोचरस्य ज्ञानस्य ततोऽन्यगोचरत्वेन भ्रमः, अनुव्यवसायस्य विषयावच्छिन्नग्राहकत्वात् ŚatDū. 128. 19; अनुव्यवसाये सविषयव्यवसायप्रत्यक्षतामिच्छति NyāyPari. 74. 4; सर्वधीयथार्थत्वपक्षे ... प्रामाण्यम् ... अनुव्यवसायेन ग्रहणयोग्यम् TattvCin. i. 127. 2; अनुव्यवसायेन ज्ञानगोचरानुमानेन वा जन्येयं स्मृतिः ... घटमात्रगोचरायाः स्मृतेरन्या VivaPraSaṁ. 36. 22; नीलादिसंवेदनानन्तरमेव हि ज्ञाततायाः अनुव्यवसायस्य वा संभवः SāhiDa. 261. 4; रूपरसगन्धस्पर्शान् युगपत् प्रत्येमीति कथमनुव्यवसायः Upask. 166. 5 (*on* iii. 2. 1); अधुना बहिरनुभवामीत्यनुव्यवसायो भवति न वेति AṇuBh. 309. 23 (*on* iv. 1. 12); शुक्तिरूप्यादेरपि व्यवसायद्वारा अनुव्यवसायं प्रति ... विषयत्वात् Nyāyāmṛ. 15A. 6; अन्तःकरणं व्यवसायानुव्यवसायौ ... पदार्थाः कल्प्यन्ते SāṁkhyaPraBh. 66. 1 (*on* 1. 147); धूलिपटलस्यानुव्यवसाये भानं ज्ञानलक्षणया SiddhāMu. 35. 7 (*on* 65); 68. 21 (*on* 136); ज्ञानोपरमेऽपि इच्छाद्यनुव्यवसाये घटादेः ... ज्ञानत्वेनैव हेतुत्वम् GuruCandr. i. 229. 11; अनेन सदृशी मदीया गौरिति प्रतीतेरनुभवसिद्धत्वात्। ... उपमिनोमीत्यनुव्यवसायाच्च VedāntPari. 178. 6; आदौ 'घट' इति व्यवसायः, ततः 'घटमहं जानामि' इत्यनुव्यवसायः Tarkāmṛ. 16. 10; संसर्गं शाब्दयामीत्यनुव्यवसायोऽपि शब्दप्रयोज्यत्वात् MīmāKau. i. 123. 1 (*on* i. 3. 24); अयं घट इत्याकारकस्य स्वरूपतो घटत्वादिज्ञानस्यानुव्यवसाये प्रकारितायाः तत्संबन्धेन ... घटत्वादेर्भानात् ŚaktiVā. 198. 12. चाक्षुषानन्तरोत्पन्नो 'रजतमहं पश्यामि' इत्यनुव्यवसायः ... प्रामाण्यं गृह्णाति MaṇiKa. 6. 4; इदंत्वरजतत्वादिना पुरोवर्तिन उपनयसत्त्वाच्च तथाभानमनुव्यवसाये दुर्वारम् JñānBiPra. 12. 20; घटादिज्ञानोत्तरं घटं जानामीत्यनुव्यवसायो जायते BhāṭṭCin. i. 14. 31 (*on* i. 1. 3); i. 23. 31 (*on* i. 1. 4); शाब्दयामीत्यनुव्यवसायान्मानसत्वे ... निर्बाधेति द्रष्टव्यम् VaiyāBhū. 156. 4 (*on* 30); औपनिषदैस्तु अनुव्यवसायेऽपि व्यवसायविषयविषयकत्वस्यावश्यकत्वे ... अनुव्यवसायमेव व्यवसायस्थानीयं स्वीकृत्य ज्ञानभासनं तु ब्रह्मणैव SetuBa. 271. 6; **2** consciousness of perception of sentiments, relishing or enjoying of dramatic representation असंभावनामात्रनिराकरणेनानुव्यवसायस्य ... स्वरूपप्रच्छादनम् ... तत्र यदवभासते वस्तु तन्नाट्यम् AbhinBhā. i. 37. 14 (*on* 1. 107); प्रयोक्त्रा दृश्यमानेन योऽनुव्यवसायो जन्यते ... रसनास्वादनचमत्कारचर्वणनिर्वेशभोगाहारपरपर्यायः ... वस्तु तन्नाट्यम् AbhinBhā. i. 37. 18 (*on* 1. 107); प्रत्यक्षकल्पानुव्यवसायविषयः लोकप्रसिद्धसत्यासत्यादिविलक्षणत्वात् यच्छब्दवाच्यः ... अर्थो नाट्यम् AbhinBhā. i. 43. 10 (*on* 1. 119); **3** the word *anuvyavasāya* विकल्पकम् अनुव्यवसायशब्दवाच्यं विदधदन्तःकरणं पश्चाद्भाविनं व्यवसायं निश्चयात्मकम् PratyabhiVi. ii. 43. 2 (*on* ii. 2. 3); **4** a type of consciousness or prior experience अन्येऽनुव्यवसायाख्यमाहुरेतद्यथोदितम् PañcDa. 8. 15; न चानयापि स्वजनकोऽनुव्यवसायाख्यः पूर्वानुभवो विषयीक्रियते VivaPraSaṁ. 36. 24 [perception of a sentiment or judgement, Apte.]

**अनुव्यवसायकाल** (anuvyavasāya-kāla) *m.* time of after-cognition or recognition न हि व्यवसायकाले पारोक्ष्यापारोक्ष्यस्मृतित्वानुभूतित्वानि परिस्फुरन्ति ...। अनुव्यवसायकाले तु तत्प्रतिभासः ĀtmaTaVi. 344. 16.

**अनुव्यवसायगम्य** (anuvyavasāya-gamya) *adj.* knowable through after-cognition or recognition ननु वह्निज्ञानस्य दाहसमर्थविषयत्वं न दाहसमर्थोऽयमिति व्यवसायगम्यम् ...। नापि तदनुव्यवसायगम्यम् TattvCin. i. 269. 3.

**अनुव्यवसायगोचर** (anuvyavasāya-gocara) *adj.* referred to by after-cognition or recognition अनुव्यवसायगोचरानुमानगोचरज्ञेयज्ञानाकारस्यैव तत्राप्यारोपात् NyāyKu. 80. 2.

**अनुव्यवसायग्राहक** (anuvyavasāya-grāhaka) *adj.* which causes or helps to grasp the after-cognition or recogniton न च साध्यविकलो दृष्टान्तः। अनुव्यवसायग्राहकज्ञानान्तराभावात् SarvaDaKau. 117. 2.

**अनुव्यवसायग्राह्यता** (anuvyavasāyagrāhya-tā) *f.* the state of being what is to be grasped through after-cognition or recognition ज्ञाने पुरोवर्तिविशेष्यताकत्वस्य रजतत्वादिप्रकारकत्वस्य च अनुव्यवसायग्राह्यतायामविवादात् JñānBiPra. 12. 12.

**अनुव्यवसायग्राह्यत्व** (anuvyavasāyagrāhya-tva) *n.* the state of being what is to be grasped through after-cognition or recogniton न हि क्रियाविशेषेण ... सर्वा धर्मव्यक्तयो जन्यन्ते ... सर्वस्य च अनुव्यवसायग्राह्यत्वात् अतीन्द्रियविशेषणायोगात् TarkSaṁ. (Ā.) 118. 2.

**अनुव्यवसायग्राह्या** (anuvyavasāya-grāhyā) *adj.* *(f.)* to be grasped through after-cognition or recogniton आकारता चैतन्यनिष्ठा, चैतन्यग्राह्या च ... जन्यज्ञाने व्यवह्रियते। तन्मते तु जन्यज्ञाननिष्ठानुव्यवसायग्राह्या GuruCandr. i. 11. 21.

**अनुव्यवसायज्ञान** (anuvyavasāya-jñāna) *n.* knowledge of (the nature of) after-cognition or recognition न हि ज्ञानमनुव्यवसायज्ञानेन निरूप्यमाणमर्थनिरूपणं विना शक्यं निरूपयितुम् TātpaṬ. (Vā.) 661. 5 (*on* iv. 2. 33); न चानुव्यवसायज्ञाने साध्यस्य सिद्धत्वाद् भागे. सिद्धसाधनता TattvPradī. (Ci.) 6. 5.

**अनुव्यवसायज्ञानगम्य** (anuvyavasāyajñāna-gamya) *adj.* which is to be known through after-cognition or recognition घटसुखादिज्ञानानि चानुव्यवसायज्ञानगम्यानि SarvaMaSaṁ. 35. 18; ज्ञानस्यानुव्यवसायज्ञानगम्यत्वं चायुक्तम् SarvaMaSaṁ. 37. 21.

**अनुव्यवसायज्ञानविषयत्व** (anuvyavasāyajñānaviṣaya-tva) *n.* the state of being the object of knowledge of (the nature of) after-cognition or recognition समवायस्यानुव्यवसायज्ञानविषयत्वेऽपि रूपज्ञानाविषयत्वात् TattvPradī. (Ci.) 47. 7.

**अनुव्यवसायज्ञानवेद्यत्व** (anuvyavasāyajñānavedya-tva) *n.* the state of being what is to be known through the knowledge of (the nature of) after-cognition or recognition ज्ञानानां चानुव्यवसायज्ञानवेद्यत्वे तस्य स्वप्रकाशत्वाभ्युपगमेऽपसिद्धान्तापत्तेः SarvaMaSaṁ. 27. 17.

**अनुव्यवसायत्व** (anuvyavasāya-tva) *n.* the state of being the after-cognition or recognition विशेषश्चानुव्यवसायत्वमेव, न ह्यजानन्नपि कश्चिज्ज्ञानामीत्यनुव्यवस्यति NyāyVārPari. 117. 5.

**अनुव्यवसायत्ववत्** (anuvyavasāyatva-vat) *adv.* like the state of being

the after-cognition or recognition अनुव्यवसायत्ववदितरत्वविशेषणेऽपि विशेषाभावात् TarkSaṁ. (Ā.) 93. 29.

**अनुव्यवसायत्वानधिकरणत्व** (anuvyavasāyatvānadhikaraṇa-tva) *n.* the state of not being the substratum of the state of being the after-cognition or recognition अ(नु)व्यवसायत्वानधिकरणत्वविवक्षायाम् अपि - तदन्योन्याभावमादाय उक्तदोषस्य तुल्यत्वात् TarkSaṁ. (Ā.) 94. 1.

**अनुव्यवसायदर्शन** (anuvyavasāya-darśana) *n.* observation of after - cognition or recognition इयन्तं कालं घटमहमन्वभूवमित्यनुव्यवसायदर्शनात् कालभेदोऽनुभूयत एव TārkiRa. 47. 4; ज्ञानं न संनिकर्षः इति तावदयुक्तम् ... तदभावश्च ... वह्निमनुमिनोमि इत्येवानुव्यवसायदर्शनाद्य कल्प्यते PūrvottaVāNaMā. 354. 7.

**अनुव्यवसायनियम** (anuvyavasāya-niyama) *m.* rule regarding after-cogniton or recognition (as being concomitant with cognition) 'व्यवसायस्यानुव्यवसायनियमान्न तत्र संशयादि' इति चेन्न KhaṇḍanKhā. 83. 22.

**अनुव्यवसायनिरसन** (anuvyavasāya-nirasana) *n.* refutation or removal of after-cognition or recognition न हि स्वाकारवृत्त्यवच्छिन्नसाक्षिणैव स्वगोचरसंस्काराधानमिति नियमोऽस्ति। ... अनवस्थापत्त्या वृत्तिगोचरवृत्त्यन्तरस्यानुव्यवसायनिरसनेन निरस्तत्वात् SiddhāLeSaṁ. 180. 6.

**अनुव्यवसायपर** (anuvyavasāya-para) *adj.* intended to refer to after-cognition or recognition विशिष्टो विषयः स्वयमनुभव एव ...। अनुभूयमानोऽप्यनुभवः ...। न चानुभवशब्दोऽनुव्यवसायपरः ŚrutaPra. iA. 114. 26 (*on* i. 1. 1)

**अनुव्यवसायप्रत्यक्षगोचरता** (anuvyavasāyapratyakṣagocara-tā) *f.* the state of being the object of perception which is (of the nature of) after-cognition or recognition अस्तु तर्ह्यस्मदाद्यभिप्रायेणातीन्द्रियत्वविशेषणम्। मैवम्। अनुव्यवसायप्रत्यक्षगोचरतया सर्वस्यास्मदादिविशेषणस्वीकारेऽपि पूर्वोक्तदोषतादवस्थ्यात् TattvPradī. (Ci.) 133. 5.

**अनुव्यवसायप्रत्यक्षजनकत्व** (anuvyavasāyapratyakṣajanaka-tva) *n.* the state of being the producer of perception which is (of the nature of) after-cognition or recognition (लिङ्गाभावः) स हि सामग्री वा तदेकदेशो वा। ... नापि द्वितीयः। प्रत्यक्षस्य तदेकदेशस्य साधारणधर्मदर्शनादेः स्वविषयतयानुव्यवसायप्रत्यक्षजनकत्वेनातिव्यापकत्वात् TattvPradī. (Ci.) 228. 6.

**अनुव्यवसायबोध्य** (anuvyavsāya-bodhya) *adj.* which is to be known through after-cognition or recognition न च प्रमाणानि साक्षिवेद्यत्वेनाविद्यां बोधयन्ति। येन भ्रमविषयत्वेनानुव्यवसायबोध्यस्य रूप्यादेरिव प्रामाणिकत्वं न स्यात् Nyāyāmṛ. 335 A. 7.

**अनुव्यवसायमात्र** (anuvyavasāya-mātra) *n.* only after-cognition or recognition यदि सर्वज्ञानानां प्रामाण्यं स्वाभाविकं जायते अनुव्यवसायमात्रेण च ज्ञायते कथं तर्हि क्वचित् प्रामाण्यसंदेहः NyāyKu. 38. 5; अनुव्यवसायमात्रस्य मिथोऽवच्छेद्यावच्छेदकभावापन्नविशेष्यताप्रकारतोभयग्राहकत्वं तार्किकादिभिरुच्यते GuruCandr. i. 11. 15.

**अनुव्यवसायमाला** (anuvyavasāya-mālā) *f.* series of after-cognitions or recognitions विषयस्मरणादनुमिते ज्ञाने विषयवत्स्मर्यतेऽनुमीयते वेति संदेहात्स्मरणाभावो दुरवधर इति चेन्न, अनुव्यवसायमालायामपि तथात्वात्संदेहापातप्रसङ्गात् NyāyKu. 78. 13.

**अनुव्यवसायमिथ्यात्वप्रमा** (anuvyavasāyamithyātva-pramā) *f.* valid knowledge of falsity or errorneousness and that of after-cognition or recognition न ह्यनुव्यवसायमिथ्यात्वप्रमे भ्रमे भवतः AdvaiSi. 404. 19.

**अनुव्यवसायरूप** (anuvyavasāya-rūpa) *adj.* of the form of after-cognition or recognition क्रमोपलब्धेष्वपि वर्णेषु मानसमनुव्यवसायरूपम् ... यदुपजायते तदर्थप्रत्यायनाङ्गं भविष्यति NyāyMañ. i. 345. 21; न ह्यनुव्यवसायरूपं प्रत्यक्षमिष्टम्, अतीतविषयतया प्रत्यक्षत्वानुपपत्तेः ŚrutaPra. iA. 114. 26 (*on* i. 1. 1)

**अनुव्यवसायरूपप्रमा** (anuvyavasāyarūpa-pramā) *f.* valid knowledge of the form of after-cognition or recognition जानामीत्याद्यनुव्यवसायरूपप्रमाविषये प्रातिभासिके व्यभिचारवारकत्वात् AdvaiSi. 404. 18; रजतमिदं जानामीत्यनुव्यवसायरूपप्रमायाः व्यवसायांशे ... विशेषणत्वं रजतादेः GuruCandr. i. 206. 16.

**अनुव्यवसायलक्षण** (anuvyavasāya-lakṣaṇa) *adj.* characterised by after-cognition or recognition मानसमनुव्यवसायलक्षणं प्रत्यभिज्ञानं भाष्यकारो दर्शयति TātpaṬ. (Vā.) 509. 20 (*on* iii. 1. 7)

**अनुव्यवसायवत्** (anuvyavasāya-vat) *adv.* like the consciousness of perception of sentiments, or relishing of dramatic representation अनियतानुकारो नाट्यमित्यपि न भ्रमितव्यम्। ... अनुव्यवसायवत् विशेषविषयीकार्यं नाट्यम् AbhinBhā. i. 37. 11 (*on* 1. 107)

**अनुव्यवसायवाद** (anuvyavasāya-vāda) *m.* name of a section in the Tattvacintāmaṇi (dealing with the theory of the after-cognition or recognition) अथानुव्यवसायवादः TattvCin. i. 784. 1; इति ... तत्त्वचिन्तामणौ प्रत्यक्षखण्डे अनुव्यवसायवादः TattvCin. i. 808. 3.

**अनुव्यवसायवादिन्** (anuvyavasāya-vādin) *m.* who upholds the theory of after-cognition or recognition अनुव्यवसायवादिनं प्रत्यप्ययं (सिद्धमिति वचनस्य) प्रयोगो न स्यात् TattvPradī. (Ci.) 7. 3.

**अनुव्यवसायविरोध** (anuvyavasāya-virodha) *m.* contradiction to after-cognition or recognition विशिष्टधीकारणज्ञानविषयत्वे सति प्रत्याय्यव्यावृत्तिसमानाधिकरणं विशेषणमिति। तन्न। नीलमुत्पलमित्यादावनीलानुल्लेखे ... नीलं जानामीत्यनुव्यवसायविरोधात् TattvCin. i. 828. 5; न च तद्विशेषणज्ञानजन्यत्वं तत्प्रकारकत्वम् ... तद्वैशिष्ट्यस्याभानेऽनुव्यवसायविरोधस्योक्तत्वात् Nyāyāmṛ. 424A. 5.

**अनुव्यवसायविशेष** (anuvyavasāya-viśeṣa) *m.* particular kind of consciousness of perception of sentiments or relishing of dramatic repersentation उपायसंवेदनालाभात् तदिदमनुकीर्तनमनुव्यवसायविशेषो नाट्यापरपर्यायः AbhinBhā. i. 36. 19 (*on* 1. 107)

**अनुव्यवसायविषय** (anuvyavasāya-viṣaya) *m.* object of after-cognition or recognition इदंत्वरजतत्ववैशिष्ट्यं पुरोवर्तिनि नानुव्यवसायविषय इति न स्वतःप्रामाण्यग्रहः TattvCin. i. 232. 2.

**अनुव्यवसायविषयत्व** (anuvyavasāyaviṣaya-tva) *n.* the state of being the object of after-cognition or recognition अस्मदाद्यैन्द्रियकप्रमित्यविषयत्वविवक्षायाम् - अहम् इन्द्रियं जानामि इत्यनुव्यवसायविषयत्वेन उक्तदोषाविशेषः TarkSaṁ. (Ā.) 34. 18; न च व्यवसायस्य ज्ञानत्वे घटविषयकत्वे च यथानुव्यवसायविषयत्वान्न संशयस्तथा प्रामाण्येऽपि न स्यात् ... इति वाच्यम् TattvCin. i. 223. 1; वह्नित्वस्य अनुव्यवसायविषयत्वे स्वतःप्रामाण्यग्रहापत्तेः TattvCin. i. 269. 6.

**अनुव्यवसायविषयत्वानुपपत्ति** (anuvyavasāyaviṣayatvānupapatti) *f.* untenability of the state of being the object of after-cognition or recognition न हि (स्मरणे) तत्रानुमानव्यवधानमस्ति, तथा सति स्मरणस्यातीतत्वेनानुव्यवसायविषयत्वानुपपत्तेः TattvPradī. (Ci.) 231. 8.

**अनुव्यवसायवेद्यत्व** (anuvyavasāyavedya-tva) *n.* the state of being knowable through the after-cognition or recognition नापि द्वितीयः ... पूर्वत्रावेद्यत्वविरोधः, अनुव्यवसायवेद्यत्वपक्षपातात् ŚatDū. 80. 8.

**अनुव्यवसायसाक्षिक** (anuvyavasāya-sākṣika) *adj.* having after-cognition or recognition as the witness (उपाधेः) तस्या अविषयत्वेनानुव्यवसायसाक्षिककार्यगतविशेषीभवनासामर्थ्यात् KhaṇḍanKhā. 1253. 6; इदं रजततया जानामीत्यनुव्यवसायसाक्षिकमेवान्यस्यान्यथा भानम् TattvCin. i. 529. 3.

**अनुव्यवसायसाध्य** (anuvyavasāya-sādhya) *adj.* to be accomplished through after-cognition or recognition शिरोमणिस्तु - दुःखध्वंसो दुःखानुव्यवसायसाध्यः MaṇiKa. 60. 1.

**अनुव्यवसायसामग्री** (anuvyavasāya-sāmagrī) *f.* totality of causes of after-cognition or recognition अनुव्यवसायसामग्र्या असामर्थ्यस्य ... कल्पनं अभिनिवेशेन स्वबुद्धिविडम्बनामात्रम् JñānBiPra. 12. 31; ज्ञानग्राहिकाया अनुव्यवसायसामग्र्याः प्रामाण्यग्रहणेऽसामर्थ्यं कल्प्यत इति न स्वतस्त्वम् MaṇiKa. 8. 6.

**अनुव्यवसायसिद्ध** (anuvyavasāya-siddha) *adj.* [*f.* -ā] established through after-cognition or recognition 'घटपटौ भिन्नौ जानामी'ति घटपटभेदधीः स्वप्रकाशा वा, अनुव्यवसायसिद्धा वा ... न स्वप्रतियोगिकभेदविषया AdvaiSi. 516. 21; अनुमितिः प्रत्यक्षमेवेति चार्वाकाः। तन्न 'अनुमिनोमि' इत्यनुव्यवसायसिद्धस्यानुमितित्वस्य प्रत्यक्षत्वसामानाधिकरण्ये मानाभावात् MaṇiKa. 30. 4.

**अनुव्यवसायसिद्धत्व** (anuvyavasāyasiddha-tva) *n.* the state of being what is established through after-cognition or recognition स्वप्रतियोगिकसंयोगानुयोगित्वसंबन्धेन घटादिप्रकारताकज्ञानस्थले तादृशसंसर्गताद्वयस्य अनुव्यवसायसिद्धत्वात् GuruCandr. i. 235. 21; अनुव्यवसायसिद्धत्वादिपक्षयोर्व्यक्तिभेदस्य पराभ्युपगतत्वेऽपि न क्षतिः GuruCandr. ii. 239. 7.

**अनुव्यवसायस्वीकार** (anuvyavasāya-svīkāra) *m.* acceptance of after-cognition or recognition अनुव्यवसायस्वीकारो व्यर्थः व्यवसायस्य

स्वप्रकाशत्वसंभवात् LaCandr. 770. 37.

**अनुव्यवसायात्मक** (anuvyavasāyātma-ka) *adj.* **1** of the nature of consciousness of perception (of sentiments) or of relishing of dramatic representation अनुव्यवसायात्मकं कीर्तनं रूषितविकल्पसंवेदनं नाट्यम् AbhinBhā. i. 37. 23 (*on* 1. 107); **2** of the nature of after-cognition or recognition निरुक्तं तु ज्ञानाज्ञानमनुव्यवसायात्मकं भिन्नमेवेति स्वीक्रियते SetuBa. 271. 5.

**अनुव्यवसायादिक** (anuvyavasāyādi-ka) *adj.* after-cognition or recognition etc. अनुव्यवसायादिकम् ... विषयविषयिणोरात्मव्यवसाययो (र्व्यवसायानुव्यवसाययो)रव्यभिचारमेकहेलया दर्शयतीति नापरापेक्षा NyāyKu. 19.6.

**अनुव्यवसायादिहेतुत्व** (anuvyavasāyādi-hetutva) *n.* causality of the after-cognition or recognition etc. उपलक्षितस्य ज्ञानस्य च हर्षभयानुव्यवसायादिहेतुत्वेऽप्युपलक्षणस्य तस्य हेतुत्वाभावात् ŚatDū. 133. 14.

**अनुव्यवसायानङ्गीकार** (anuvyavasāyānaṅgīkāra) *m.* non-acceptance of after-cognition or recollection न च - प्रत्यक्षयोग्यार्थानुमापकं दृष्टम्-इति युक्तं, सामान्यतोदृष्टस्यापि तथात्वात् ... तदितरत्वविशेषणस्य अनुव्यवसायानङ्गीकारपक्षे - व्यर्थत्वात् TarkSaṁ. (Ā.) 93. 27.

**अनुव्यवसायानुपपत्ति** (anuvyavasāyānupapatti) *f.* untenability of after-cognition or recognition न च लक्ष्यार्थस्य शाब्दबोधविषयत्वानुपगमे तदुपरागेण शृणोमीत्यनुव्यवसायानुपपत्तिरिति वाच्यम्, इष्टत्वाद्, विधेयोपरागेणैव तथाप्रत्ययात् ŚaktiVā. 24. 18.

**अनुव्यवसायानुरोध** (anuvyavasāyānurodha) *m.* [Abl.]in accordance with after-cognition or recognition सकलधूमादीनां प्रत्यक्षे भानं किमनुमित्यादिकार्यानुरोधात्, अनुव्यवसायानुरोधाद्वा। ... न च - 'धूमं जानामी'त्यनुव्यवसाये सर्वधूमभानमिति वाच्यम्, 'इमं धूमं जानामि न त्वेतदन्य'मिति व्यवहारस्य सर्वसिद्धत्वेन समाधानस्य तु तुल्यत्वात् LaCandr. 345. 28.

**अनुव्यवसायान्तरापेक्षा** (anuvyavasāyāntarāpekṣā) *f.* expectancy for another after-cognition or recognition तमेव भान्तमनुभात्येतत्समस्तं जगदित्याचार्यभगवत्पादाः। ... औपनिषदैस्तु अनुव्यवसायेऽपि ... ज्ञानभासनं तु ब्रह्मणैवेति नानुव्यवसायान्तरापेक्षानवस्थाकलुषितेत्यास्थीयते SetuBa. 271. 9.

**अनुव्यवसायापत्ति** (anuvyavasāyāpatti) *f.* undesired contingency of after-cognition or recognition न्यायमते पर्वतमनुमिनोमीत्यनुव्यवसायापत्तिः। असंनिकृष्टपक्षकानुमितौ तु सर्वांशेऽपि ज्ञानं परोक्षम् VedāntPari. 57. 1.

**अनुव्यवसायापेक्षा** (anuvyavasāyāpekṣā) *f.* expectancy for after-cognition or recognition घटमहं जानामीत्येव ज्ञानाकारात् ज्ञानाभासनायानुव्यवसायापेक्षायां दीपभासनाय दीपान्तरापेक्षापत्तेः LalitāSaBh. 52. 30 (*on* 87)

**अनुव्यवसायाभाव** (anuvyavasāyābhāva) *n.* absence of after-cognition or recognition सर्वत्र प्रत्यक्षविषये ज्ञातुरिन्द्रियेण व्यवसायः पश्चा-न्मनसानुव्यवसायः उपहतेन्द्रियाणामनुव्यवसायाभावात् NyāyBh. 15. 5 (*on* i. 1. 4); ज्ञातुमिच्छामीत्यनुव्यवसायाभावेऽपि स्थाणुरयमित्यर्थ(न्वय)प्रत्ययो भवति NyāyKuA. ii (1). 209. 1; तदभावश्च (=प्रत्यक्षभ्रमप्रयोजकदोषविशेषाभावश्च) तत्र वह्निं पश्यामीति अनुव्यवसायाभावात् वह्निमनुमिनोमि इत्येवानुव्यवसायदर्शनाच्च कल्प्यते Pūrvotta-VāNaMā. 354. 6; न च - तन्मते (तार्किकादिमते) सर्वस्य ज्ञानस्यानुव्यवसायाभावेनोक्तविषयत्वासंभवात् संशयादिविषयत्वे ज्ञानतादात्म्यमेव विरोधित्वेन कल्प्यम् LaCandr. 469. 29.

**अनुव्यवसायायोग** (anuvyavasāyāyoga) *m.* untenability of after-cognition or recognition नासतः ख्यातिरिति चेन्न रूप्यतादात्म्यस्य रूप्यत्वसंसर्गस्य चेदमंशनिष्ठत्वेनाग्रहणे ... इदं रूप्यत्वेन ज्ञातमित्यनुव्यवसायायोगात् पुरोवर्तिनिष्ठाभेदाग्रहे प्रवृत्त्यनुपपत्तेश्च सन्मात्रविषयकत्वे अप्रामाण्यायोगाच्च Nyāyāmṛ. 424A. 2.

**अनुव्यवसायाविषयत्व** (anuvyavasāyāviṣaya-tva) *n.* the state of not being the object of after-cognition or recognition तदभाववत्त्वस्य भ्रमानुल्लिखितत्वेनानुव्यवसायविषयत्वात् TattvCin. i. 176. 1.

**अनुव्यवसायासिद्धि** (anuvyavasāyāsiddhi) *f.* non-establishment of after-cognition or recognition विषयज्ञानादनुव्यवसायस्य कर्मक्रियालक्षणवैलक्षण्योपलब्धियोग्यस्य तथानवसायात्स्मरणाभिमानो दुरारोप इति मतम्, तन्न। व्यवसायस्मरणानुमितानुव्यवसायगोचरज्ञाने सति तथा अनुव्यवसाया(ऽनवसाया)-सिद्धेः NyāyKu. 80. 1.

**अनुव्यवसायिन्** (anu-vyavasāyin) *adj.* which has (or produces) after-cognition or recognition तद्द्वयालम्बना एता मनोऽनुव्यवसायि सत्। करोति मातृव्यापारमयीः कर्मादिकल्पनाः ĪśvaPraSū. ii. 2. 3.

**अनुव्यवसायेतर** (anuvyavasāyetara) *adj.* other than after-cognition or recognition अनुव्यवसायेतरास्मदाद्यैन्द्रियकबुद्ध्यगोचरत्वाभिप्रायेणातीन्द्रियत्वविशेषणमिति चेत्। न। प्रमाणान्तरोपनीतविशेषणावगाहिविशिष्टज्ञानवादे सर्वेषामप्यैन्द्रियकत्वसंभावनया पूर्वोक्तदोषानुत्तारात् TattvPradī (Ci.) 133. 6.

**अनुव्यवसायोत्पत्तिवेला** (anuvyavasāyotpatti-velā) *f.* time of origination of after-cognition or recognition अनुव्यवसायोत्पत्तिवेलायां तथा व्यवसायो न प्रतीयत इति चेन्न, अनुव्यवसायगोचरानुमानगोचरज्ञेयज्ञानाकारस्यैव तत्राप्यारोपात् NyāyKu. 80. 1.

**अनुव्यवसीयमान** (anu-vyavasīyamāna) *adj.* [*f.* -ā] being referred to by after-cognition or recognition उपलभ्यमानः शब्दो वीणाकार्यः एवंभूतशब्दत्वात् इयमनुव्यवसीयमाना बुद्धिर्द्रव्याश्रिता गुणत्वात् कार्यत्वाद्वेति साध्यसाधनभेदेन वैयधिकरण्येनेत्यर्थः Kiraṇā. 208. 10; अनुमितिज्ञानं ह्यर्थस्य तथात्वं व्यवच्छिन्ददेवोत्पद्यते वह्निमानेवायमिति, तथा च अनुव्यवसायेनानुव्यवसीयमानमिदं स्वस्वार्थावधारणात्मकमेवावसीयते NyāyVārPari. 113. 4; दृष्टो ह्यस्यानुव्यवसीयमानज्ञानविशेषणे घटादौ व्यापारः NyāyVārPari. 632. 8; मनसा ह्यनुव्यवसीयमानज्ञानलक्षणविशेष्यसंनिकृष्टेनासंनिकृष्टो घटादिरवच्छेदकतया प्रतीयते NyāyVārPari. 633. 1; परमाण्वादिबुद्धावनुव्यवस्यमानायां (? व्यवसीयमानायां) परमाणुप्रतीत्यंशेऽपि साक्षात्त्वमनुभूयत इत्यत्र न नः संप्रतिपत्तिः KhaṇḍanKhā. 609. 22.

**अनुव्यवसीयमानत्व** (anuvyavasīyamāna-tva) *n.* the state of being referred to by after-cognition or recogniton दृष्टो ह्यस्यानुव्यवसीयमानज्ञानविशेषणे घटादौ व्यापार, इन्द्रियव्यापारविगमेऽपि सौदामिनीसम्पातादौ सकृदुपजायमानस्यार्थनिश्चयस्य समन्धकारेऽप्यनुव्यवसीयमानत्वात्, तस्य चानुव्यवसायस्य साक्षात्कारित्वात् NyāyVārPari. 632. 11.

**अनुव्यवसो** (anu-vyavaso-) IV. P. **A** to know after, i.e. to determine subsenquently दुष्करं परमज्ञानं तर्केणात्र (v.l. तर्केणानु)व्यवस्यति MahāBhā. viii. 49. 48; (pass.) to be known after, i.e. to be determined subsenquently (ग्रहणस्वरूपस्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः) कथमनालोचितः स विषयविशेष इन्द्रियेण मनसा वा अनुव्यवसीयेतेति YogBh. 171. 3 (*on* 3. 47); **B** (pass.) to be recognised अथ ब्रूषे- 'यदा कियद्दूरं बुद्धिपरम्परया सा बाधिता भवत्यद्वैतश्रुतिस्तदा ... यापि बुद्धिः शेषं गत्वा नानुव्यवसीयते तत्रापि तद्बाधोऽवगम्यते, यत्र सा बाध्यते तत्तुल्यन्यायत्वादन्तिमबुद्धेरपीति'। मैवम् KhaṇḍanKhā. 161. 7; न ह्यतद्विषयस्तज्ज्ञानविषयत्वेन, न वा तदविषयकं तद्विषयकत्वेनानुव्यवसीयते TattvCin. i. 529. 6; तन्तुपटादिविषया बुद्धिरत्यन्तभिन्नघटपटादिविषयबुद्धितो विलक्षणानुव्यवसीयते। उताविलक्षणा NyāySu. (Ja.) 360A. 6 (*on* ii. 2. 6); धूमत्वेन पुरोवर्तिनं धूमं साक्षात्करोमि न व्यवहितमित्यनुभवाच्च। अन्यथा जगतीगतसकलधूमव्यक्तीरहं साक्षात्करोमीत्यनुव्यवसीयेत AdvaiSi. 345. 4 [to perceive, MW.]

**अनुव्यवस्यमान** (anu-vyavasyamāna) *adj.* being known after, i.e. being determined subsenquently करोतिरुत्पादनार्थः। उत्पत्तिस्तु कर्मस्था। ... यत्नार्थत्वे तु नैतत् सिध्येत्। ज्ञानेच्छादिवद् यत्नस्य कर्तृस्थत्वात्। एतेन 'अनुव्यवस्यमानेऽर्थे' इति व्याख्यातम् SiddhāKau. 469A. 7 (*on* iii. 1. 87)

**अनुव्यवहार** (anu-vyavahāra) *m.* **1** regular action अभिचारानुव्या (v. l. °व्यव )हारयोश्च क्वचित्फलदर्शनात् ... चरेद् धर्मान् KāmSū. 19. 18 (1. 2); **2** regular, successive (in stages) or corresponding process, operation or business, cf. **अनुव्यवहारतस्**.

**अनुव्यवहारतस्** (anuvyavahāra-tas) *adv.* on account of regular, successive (in stages) or corresponding process, operation or business आलपनसंलपनप्रतिसंमोदनैः ... लौकिकार्थानुव्यवहारतः आहूतस्यागमनगमनतः ... चित्तानुवर्तनता BodhiBhū. 97. 18 [DBHS.]

**अनुव्यवहारहेतु** (anuvyavahāra-hetu) *m.* cause of regular, successive (in stages) or corresponding process, operation or business दश हेतवः। कतमे। अनुव्यवहारहेतुः। ... विरोधहेतुः। अविरोधहेतुश्च तत्र सर्वधर्माणां यन्नाम नामपूर्विका च संज्ञा संज्ञापूर्वकश्चाभिलापः। अयमुच्यते तेषां धर्माणामनुव्यवहारहेतुः BodhiBhū. 69. 5; यानीमानि विविधानि सस्यानि धान्यसंख्यातानि लोके ... तेषां तावद् यदिदं नाम संज्ञा वाग्व्याहारो विविधः ...। अयमेषामनुव्यवहारहेतुः BodhiBhū. 70. 13 [DBHS.]

**अनुव्यवे** (anu-vyave-) II. P. to enter in between एते ह त्वेव ते विश्वे देवा ये ते चतुर्धा व्यद्रवंस्तान् विद्रुतानसुररक्षसान्यनुव्यवेयुः ŚatBr. III. iv. 2. 1; ŚatBṛ. (K). IV. iv. 2. 1; य एषां परस्तरामिव भवति स एनाननुव्यवैति ŚatBr. III. iv. 2. 3; ŚatBr. (K.) IV. iv. 2. 2, cf. **अनुव्यवगा**.

**अनुव्यवेत्य** (anu-vyavétya) *ger.* having entered in between ते तान् ह तथा विष्ठितानसुररक्षसान्यनुव्यवेत्य जिघांसांचक्रुः ŚatBr. (K.) IV. iv. 3. 6.

**अनुव्यश्** (anu-vyaś -) V. Ā. to come up to यावन्मात्रेण यजुषाध्वर्युर्ग्रहं गृह्णाति स उभे स्तुतशस्त्रेऽ अनुविभवत्युभे स्तुतशस्त्रेऽअनुव्यश्नुते ŚatBr. X. iii. 5. 12.

**अनुव्यस्** (anu-vyas-) IV. P. to scatter along एतद्ध वै साम प्रजा इमा अनुव्यास JaimiBr. 1. 154.

**अनुव्याकृ** (anu-vyākṛ-) VIII. P. **1** to explain or analyse after प्रयोजनसद्भावे भाव्यदिशा शिष्या एवानुव्याकरिष्यन्ति NyāySu. (Ja.) 4A. 1 (*on* i. 1. 1); **2A** to prophesy afterwards, cf. **अनुव्याकृत; 2B** to elucidate, especially a question, DBHS.

**अनुव्याकृत** (anu-vyākṛta) *adj.* prophesied afterwards अतः प्रभृति ... अनुव्याकृतो बुद्धे भविष्यसि इति। ततः पश्चात् ... भगवतानुव्याकृतम् MaVastuAva. i. 2. 2; अयमेव भगवांछाक्यमुनिरनुव्याकृतः MaVastuAva. i. 2. 7 [ DBHS.]

**अनुव्याख्या** (anu-vyākhyā-) II. P. [P. ii. 4. 54] **1A** to explain after or further यदा वै चन्द्रमाः क्षीयते चाप्यायते च तदनुव्याख्यास्यामः ṢaḍviBr. iv. 6. 1; एतं त्वेव ते भूयोऽनुव्याख्यास्यामि ChāndoU. viii. 10. 4; viii. 9.3; viii. 11.3; ता अनुव्याख्यास्यामः BaudhGS. i. 1. 2; iii. 3. 3; तस्यानुव्याख्यास्यामः BaudhDS. i. 1. 2; iii. 1. 4;ताननुव्याख्यास्यामः ĀgniveGS. iii. 10. 1 (170. 16); तस्य समुदाचारलक्षणं सर्वमनुव्याख्यास्यामः MahāBhā. xii. 184. 10; तथानुव्याख्यास्यामः CaraS. i. 12. 7; i. 27. 5 (1922 Ed.); द्विदोषजानीतराणि तान्यनुव्याख्यामः KāśyaS. 116A. 13; 37A. 27; एतं त्वेव ते भूयोऽनुव्याख्यास्यामि BrahmSūBh. (Śaṅ.) 177. 7 (*on* i. 3. 19); अथ दुर्विरिक्तलक्षणान्यनुव्याख्यास्यामः Hastyāyur. 620. 3 (4. 7); **1B** to explain in order or succession तेषां षण्णां रसानामेकैकस्य यथाद्रव्यगुणकर्माण्यनुव्याख्यास्यामः CaraS. i. 26. 40 (1922 Ed.); **2** to denote, to express, cf. **अनुव्याख्येय**.

**अनुव्याख्या** (anuvyākhyā) *f.* title of a work, pw.

**अनुव्याख्यान** (anu-vyā́khyāna) *n.* **A** name of a certain Brāhmaṇa text which explains difficult Mantra texts अस्य महतो भूतस्य निश्वसितमेतद्यद् ऋग्वेदः ... श्लोकाः सूत्राण्यनुव्याख्यानानि ŚatBr. XIV. v. 4. 10; BṛĀraU. ii. 4. 10; MaiU. 6. 32; MaitrīU. 6. 32; श्लोकाः सूत्राण्यनुव्याख्यानानि ... वाचैव सम्राट् प्रज्ञायन्ते ŚatBr. XIV. vi. 10. 6; BṛĀraU. iv. 1. 2; सूत्राण्यनुव्याख्यानानि ... अस्यैवैतानि सर्वाणि निश्वसितानि ŚatBr. XIV. vii. 3. 11; BṛĀraU. iv. 5. 11; अनुव्याख्यानानि मन्त्रविवरणानि ... वस्तुसंग्रहवाक्यविवरणान्यनुव्याख्यानानि BṛĀraUBh. 309. 8 (*on* ii. 4. 10); अनुव्याख्यानानि संग्रहविवरणानि VedāntKa. 218. 9 (*on* i. 4. 19); **B** name of the commentary (by Ānandatīrtha *on* Brahmasūtrabhāṣya) इति श्रीमदानन्दतीर्थ° ... °विरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने प्रथमाध्यायस्य प्रथमः पादः AnuVyā. 11A. 1 coloph.; चशब्देनानुव्याख्याने प्रयोजनसद्भावं समुच्चिनोति NyāySu. (Ja.) 313. 13 (*on* i. 1. 1); अत एवानुव्याख्याने जिज्ञास्योऽयं विधीयत इति Nyāyāmṛ. 623B. 7; अत्रोक्तप्रथमाध्यायप्रथमपादेऽनुव्याख्याने VaiyāBhū. 76. 24 (*on* 2); तदेतत् तृतीयाध्यायचरणसमाप्तावुक्तमनुव्याख्याने VaiyāBhū. 244. 19 (*on* 65)

**अनुव्याख्याननलिन** (anuvyākhyāna-nalina) *n.* lotus in the form of Anuvyākhyāna (the commentary by Ānandatīrtha) अनुव्याख्याननलिने चञ्चरीकति मे मनः NyāySu. (Ja.) 1A. 9 (*on* i. 1. 1)

**अनुव्याख्यामृताम्भोधि** (anuvyākhyāmṛtāmbhodhi) *m.* ocean of nectar in the form of Anuvyākhyāna (the commentary by Ānandatīrtha) अनुव्याख्यामृताम्भोधेः समुत्पन्नातिनिर्मला। इयं न्यायसुधा ... सेव्यतां सदा NyāySu. (Ja.) 657 A. 1 (*on* iv. 4. 8)

**अनुव्याख्येय** (anu-vyākhyeya) *adj.* to be denoted or expressed subsequently अनेकार्थत्वाद्धातूनामन्यवचनमात्र एवाख्यातेनानुव्याख्येयः ManuBh. ii. 251. 23 (*on* 9. 37)

**अनुव्याचक्ष्** (anu-vyācakṣ-) II. Ā. to pronounce or explain afterwards चतुर्होतॄन् होतानुव्याचष्टे ब्रह्म वै चतुर्होतारः JaimiBr. 3. 306.

**अनुव्याध** (anu-vyādha) *m.* **1** piercing weapon, obstructing weapon दक्षिणा मा दक्षिणतो दक्षिणा पातु सव्यतः। पश्चादनव्याधात्? (°दनुव्याधात् JAOS. 40. 163) पातु सर्वस्या भवहेत्याः AV. (P.) vii.15.1 (*better* VIŚVA. **अनुव्यध्** IV. P.); **2** continuity, permeation नाप्यननुभाविकः प्रत्ययेष्वेकानुव्याधः शक्यानुमानः, नरविषाणवदनुपलब्धिविरोधात् TattvBi. 48. 2; **3** relation, association (रेवत्या) मुखामोदं मदिरया कृतानुव्याधमुद्वमन्। जगाद ŚiśuVa. 2. 20 (comm. कृतसंसर्गम्) [blending, intermixture, MW., APTE]

**अनुव्याधवत्** (anuvyādha-va(n)t ) *adj.* [*f.* -ī] possessing continuity or permeation गकारादयोऽपि ... एकस्यामेव स्मृतौ प्रथमानाः सत्यपि पदमिति व्यपदेशाभेदे नैकानुव्याधवन्तः TattvBi. 52. 7; एकानुव्याधवती हि प्रख्या TattvBi. 52. 9.

**अनुव्याधविरहित** (anuvyādha-virahita) *adj.* devoid of continuity or permeation अनपेक्षाश्च प्राञ्चः प्रत्ययाः स्तम्भकुम्भाम्भोरुहाद्यवगाहिन इवाभिन्नानुव्याधविरहिताः ... न परस्परं स्वगोचरं संभिन्दन्ति TattvBi. 47. 5.

**अनुव्याप्** (anu-vyāp-) V. P. to pervade, to permeate one after another अथ ह स्माह तक्षको भागेरथिर्मात्स्यो राजानु चतूरात्रः पृष्ठानि व्याप्नोति JaimiBr. 2. 284.

**अनुव्यापिनी** (anu-vyāpinī) *adj.* (*f.*) pervading or permeating over सर्वलोकानुव्यापिनीं कीर्तिसंपदं तां च लक्ष्मीम् ... अमृष्यमाणा दैत्यगणाः JātaMā. 74. 7 (11. 2 (1) )

**अनुव्याप्त** (anu-vyāpta) *adj.* [ *f.* -ā] pervaded, permeated अथ येन वैतानुगृहीतेत्ये (v. l. एताः सिरा अनुव्याप्ता एव एतानुगृहीतेत्ये)त्येष वाव स व्यानः MaiU. 2. 6; स एष वृक्षः इदानीं जीवेन आत्मना अनुप्रभूतः अनुव्याप्तः ... तिष्ठति ChāndoUBh. 391. 1 (*on* vi. 11. 1); विष्णोः सर्वतोमुखस्य स्नेहो यथा पललपिण्डमोतप्रोतमनुव्याप्तं व्यतिरिक्तं व्याप्नुते TripuTāU. 539. 24; NṛPūTāU. 194. 14 (Adyar Ed.1953)

**अनुव्यास्था** (anu-vyāsthā-) I. P. (*caus.*) to send away (in different directions) यं दिशोऽनुं व्यास्थापयन्ति TaiBr. I. viii. 3. 1; TaiĀ. v. 4. 7 (606. 5); यद् वा एंवमदो दिशोऽनुं व्यास्थापयन्ति TaiBr. I. viii. 8. 5 (*better* अनु *adn.*)

**अनुव्याहरण** (anu-vyāharaṇa) *n.* repeating after, repeated recitation समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा। सोऽनुव्याहरणाद्भूयः शोकः श्लोकत्वमागतः Rāmā. i. 2. 39.

**अनुव्याहरिष्यत्** (anu-vyāhariṣyat) *adj.* cursing, reproaching तं हानुव्याहरिष्यन्त उपनिषेदुः ṢaḍviBr. i. 4. 16; तेऽनुव्याहरिष्यन्त आस्तावमुपसेदुः JaimiBr. 1. 75; अथैनमनुव्याहरिष्यन्भवति, तमनुव्याहरेद् ब्रह्मणा त्वा शपामीति BaudhŚS. i. 293. 12.

**अनुव्याहार** (anu-vyāhāra) *m.* **1** curse, imprecation, execration एष ह तर्ह्यनुव्याहार आस JaimiBr. 2. 269; अथातोऽनुव्याहाराः AitĀ. III. i. 4. 1; ŚāṅkhāĀ. 7. 9 (28. 1); शाकल्यस्य पृथिव्यग्निः पृथिवी वागनुव्याहारः ŚāṅkhāĀ. 7. 3 (26. 25); अनुव्याहारो ह वा आसन्यो मन्त्रस्तस्मान्मा पाहि BaudhŚS. iii. 281. 4; HirŚS. xxvi. 7. 72 (117. 1); ĀpaDS. i (10). 29. 15; कस्यापि रोषणस्य महर्षेः ... अनुव्याहारात् ... अम्भसां निधौ पतितः AvantiKa. 16. 19; **2** expiatory or propitiatory rite शास्त्रस्यानभिशङ्क्यत्वादभिचारानुव्याहारयोश्च क्वचित्फलदर्शनात् ... चरेद् धर्मान् KāmSū. 19. 8 (1. 2) (JayaMa. अनुव्याहारः शान्तिकपौष्टिकम्)

**अनुव्याहारभय** (anuvyāhāra-bhaya) *n.* fear of curse or execration अनुव्याहारभयं त्वेतेषु KātyŚS. xxv. 10. 15.

**अनुव्याहारशापादिरूप** (anuvyāhāraśāpādi-rūpa) *n.* [Inst.] in the form of imprecation and curse etc. दिव्यो नानाविधाकारः समुदेत्यस्त्ररूपवान् (व्यूहः) ...। अनुव्याहारशापादिरूपेणैवावतिष्ठते AhirbuS. 10. 50.

**अनुव्याहारिन्** (anuvyāhār-ín) *adj.* who utters imprecations or execrates, who curses तस्मादु ह नानुव्याहारीव स्यादुत ह्येवंवित्परो भवति ŚatBr. I. vii. 1. 18; ŚatBr. (K.) II. v. 3. 14; नो हैनमनुव्याहारिण स्तृण्वते ŚatBr. IV. V. 2. 3; यर्ह्ययं ब्राह्मणोऽनुव्याहारी मर्ता, तर्हि यष्टास इति JaimiBr. 2. 269; 2. 277.

**अनुव्याहृ** (anu-vyāhṛ-) I. U. **1A** to curse, to execrate स य एनं शस्ते तूष्णीशंस उप वा वदेत् अनु वा व्याहरेत् AitBr. 9. 7 (255); 33. 6 (856); य एनमनुव्याहरति स आर्तिमार्छति PañcBr. vi. 4. 10; xvii. 4. 3; तान् ह वरुणो राजानुव्याजहार PañcBr. xxiv. 18. 2; हन्तेममनुव्याहराम ṢaḍviBr. i. 4. 16; स यद्येनं प्रथमायाꣳ सामिधेन्यामनुव्याहरेत् ŚatBr. I. iv. 3. 11; यो हैनं तत्रानुव्याहरेत् ŚatBr. II. i. 4. 19; ŚatBr. (K.) I. i. 4. 19; IV. ii. 1. 5; याज्ञवल्क्यं चरकाध्वर्युरनुव्याजहार ŚatBr. III. viii. 2. 24; ŚatBr. (K.) IV. viii. 2. 18; य एनं तत्रानुव्याहरेत् ŚatBr. IV. v. 2. 13; ŚatBr. (K.) II. v. 3. 12; नोऽयं नृशंसकोऽन्त उद्गायत्येममनुव्याहरिष्याम इति JaimiBr. 1. 75; 1. 138; यद्येनं बहिष्पवमानोऽनुव्याहरेत् JaimiBr. 1. 254; 1. 255; अन्तेवासिनमुद्गापयन् स्वयज्ञेऽनुव्याजहार JaimiBr. 1. 337; तमु ह स्व एवान्तेवास्यनुव्याजहार JaimiBr. 2. 305; स यदेवैनं तदनुव्याहरेत् Kāṭhakasaṅkalana 52. 1; तेनो ह त्रिष्टोमेन वृद्धद्युम्न आभिप्रतारिण ईजे। तमु ह ब्राह्मणोऽनुव्याजहार ŚāṅkhāŚS. xv. 16. 11; तमनुव्याहरेद् ब्रह्मणा त्वा शपामि इति BaudhŚS. i. 293. 13; स्कन्ने अग्निहोत्रे उप वा मीमांसेतानु वा व्याहरेत् VādhūŚS. iii. 19. 15; दीक्षितमुप वा मीमांसेतानु वा व्याहरेत् VādhūŚS. iv. 28D. 6; काले चेष्टन्तमुप वा मीमांसेतानु वा व्याहरेत् VādhūŚS. iv. 69. 4; iv. 80. 4; अथैनमनुव्याहरन्ति ĀpaŚS. x. 2. 11; प्रतिजानन्ननुव्याहरेत् KauśiSū. 49. 16; **1B** to criticise स य एनांस्तथा चक्रुषोऽनुव्याहरेत् JaimiBr.

**अनुष्ठानकलाप** (anuṣṭhāna-kalāpa) *m.* group or series of performances (of sixteen rites) गर्भाधानादिरन्त्येष्टिपर्यन्तो यस्य वर्णस्य मन्त्रैरनुष्ठानकलाप उक्तो द्विजातेरित्यर्थः ManvaMu. 36. 19 (*on* 2. 16)

**अनुष्ठानकल्पना** (anuṣṭhāna-kalpanā) *f.* assumption, i.e. admission of performance (of rites) प्रयोजनवत्त्वसिद्धये अध्याहाराद्विना अनुष्ठानकल्पना स्यात् NyāySu. (So.) 54. 15 (*on* i. 2. 9)

**अनुष्ठानकाण्ड** (anuṣṭhāna-kāṇḍa) *n.* cluster of performances (of rites) एतच्च धर्मावाहनादि शिरसि पत्रारोपणान्तमनुष्ठानकाण्डं सर्वदिव्यसाधारणम् Mitā. 203. 30 (*on* 2. 101)

**अनुष्ठानकारकभूत** (anuṣṭhānakāraka-bhūta) *adj.* which has become the efficient means of performance (of rites) मन्त्रा अनुष्ठानकारकभूतद्रव्य-देवताप्रकाशका: PrasthāBhe. 3. 4.

**अनुष्ठानकारिन्** (anuṣṭhāna-kārin) *adj.* who carries out or undertakes performance तारकः ... तपोऽनुष्ठानकारिणः ...। अग्निहोत्ररतानन्यान् कारागारेऽक्षिपद् द्विजान् GaṇeP. i. 83. 10.

**अनुष्ठानकाल** (anuṣṭhāna-kāla) *m.* **1A** time or period of performance (of rites) कर्तव्यमित्यपि विज्ञातेऽनुष्ठानकाले स्मृत्या प्रयोजनम् ŚābaBh. 155. 8 (*on* i. 2. 37); अनुष्ठानकाले विधिश्रुत्यधीनः पुरुषः TantrVā. 715. 22 (*on* iii. 1. 13); 733. 13 (*on* iii. 1. 14); अन्यत्र पुनरग्निहोत्रादौ प्रतीतिकालोऽन्योऽनुष्ठानकालोऽन्यः BrahmSūBh. (Bhā.) 10. 18 (*on* i. 1. 3); तच्च (कपालमात्रम्) निरपेक्षमेवोभयत्र पुरोडाशे तुषोपवापे च विनियुक्तमनुष्ठानकाले ... उपादीयते TantrRa. 87. 3; 246. 10; यः साधनत्वमनुष्ठानकाले न वेत्ति तस्याविद्वत्त्वादेवानधिकारादननुष्ठानमिष्टमेव NyāyRa. 692. 18 (*on* 5 (17). 17); CaturCin. iii (1). 148. 22; iii (1). 755. 14; अनुष्ठानकाले प्रयोगविधिर्ज्ञानान्तरमनुष्ठापयति BrahmSūBh. (Śrī.) i. 183. 6 (*on* i. 1. 4); तनूनपातं यजतीत्यादौ निर्धारितरूपविशेषप्रतिपत्तिः नामधेयाधीनैव। तत्फलं चानुष्ठानकाले व्यवहारसौकर्यमेव MīmāKau. i. 172. 12 (*on* i. 4. 2); ii. 97. 6 (*on* ii. 3. 27); पदार्थानामनुष्ठानकाले स्मारकापेक्षायां मन्त्रादीनामुपस्थितत्वेन स्मारकत्वनियमात् तत्क्रमेणैवानुष्ठानक्रमनियमोपपत्तेः BhāṭṭDī. ii. 160. 10 (*on* v. 1. 4); iii. 74. 5 (*on* ix. 1. 14); MayūMāli. 592. 10 (*on* ix. 1. 11); **1B** time of doing, carrying out or execution अनुष्ठानकाले क्रोधमोहशोकादि त्यक्त्वा प्रमुदितेन भाव्यम् ManuBh. i. 69. 3 (*on* 2. 6); अनुष्ठानकाले नाभिप्रेतादिगतमानसेन भवितव्यम् ManuBh. i. 126. 8 (*on* 2. 97); **2** time of going over, i.e. recitation मन्त्रो ह्यनुष्ठानकाले पदार्थं प्रकाशयन्पदार्थशेषः UpaParā. 34. 18.

**अनुष्ठानकालपरामर्श** (anuṣṭhānakāla-parāmarśa) *m.* consideration, i.e. remembrance at the time of performance (of rite) तदेवमनुष्ठानकालपरामर्शो न भोगकालपरामर्शः NyāyRa. 692. 17 (*on* 5 (17). 17)

**अनुष्ठानकालापेक्षित** (anuṣṭhānakālāpekṣita) *adj.* required at the time of performance (of rite) अनुष्ठानकालापेक्षितस्य समिद्यागादिस्मृतिक्रमस्य... संग्राह्य-त्वाभावात् ŚivārkaMaDī. i. 49. 10 (*on* i. 1. 1)

**अनुष्ठानकालीन** (anuṣṭhānakāl-īna) *adj.* **i** belonging to, i.e. perceived at the time of performance (of rites) अयं च प्रवृत्तिक्रमोऽनुष्ठानकालीनोऽपि प्रयोगविधिप्रवृत्तेः पूर्वमपेक्षावशादवगम्यमानः ... पदार्थान्तरक्रमं बोधयति BhāṭṭDī. ii. 161. 21 (*on* v. 1. 5); **ii** belonging to, i.e. occurring at the time of performance (of rites) अनुष्ठानकालीनमेव पौर्वापर्यं शास्त्रार्थावधारणवेलायां पूर्वमेवालोच्य व्यवस्थितविषयत्वकल्पनेति न कश्चिद्विरोधः BhāṭṭDī. ii. 303. 10 (*on* vi. 5. 19)

**अनुष्ठानकृत्** (anuṣṭhāna-kṛt) *adj.* performer (of rites) इदं क्षेत्रं सुविख्यातं नामलेति भविष्यति। अनुष्ठानकृतामत्र नानासिद्धिप्रदं नृणाम् GaṇeP. i. 57. 55; अनुष्ठानकृन्नादत्तान्नः स्यात् PārāSū. 78. 18.

**अनुष्ठानकृत** (anuṣṭhāna-kṛta) *adj.* caused by the performance (of rites) अनुष्ठानकृतमेव प्रामाण्यम् ... इत्यभिप्रायः BālaKrī. i. 150. 5 (*on* 1. 225); आम्नानकृतनित्यत्वमेव द्वारत्वे प्रयोजकं नानुष्ठानकृतमित्यत्र किं विनिगमकम् MayūMāli. 310. 23 (*on* iii. 6. 13)

**अनुष्ठानक्रम** (anuṣṭhāna-krama) *m.* **A** order of performance (of religious activities, rites, etc.) अधुनानुष्ठानक्रममाह TātpaṬ. (U.) 23. 16 (*on* 1. 101); आत्मविदश्च मुमुक्षोरयमनुष्ठानक्रमो भवति NyāyMañ. ii. 89. 25; देवता-प्रसादसिद्धयेऽनुष्ठानक्रमं वक्ष्यामः PārāSū. 77. 2; Bhām. 593. 10 (*on* iii. 3. 7); तत्क्रमेण (अवगतिक्रमेण) चानुष्ठानक्रमः TantrRa. 246. 8; 264. 16; 288. 10; यथाप्रयोगमर्थावगमो यथावगमं चानुष्ठानमित्यनुष्ठानक्रमः प्रतीयते NyāyRaMā. 149. 7; ŚāstrDī. 414. 1 (*on* v. 1. 3); SmṛtiCan. v. 282. 9; समिधो यजतीत्यादिषु क्रमपठितप्रयाजेषु चिन्ता किं यथापाठमनुष्ठानक्रम उत न VedāntKa. 33. 3 (*on* i. 1. 1); अनुष्ठानक्रमस्याकाङ्क्षितत्वात् ... सोऽभिधीयते NyāyMāVi. 264. 10 (*on* v. 1. 0); मुख्ययागयोस्तु याज्यानुवाक्यायुगलपाठानुक्रमेणानुष्ठानक्रमः। ... निर्वापानुष्ठानक्रम इति राद्धान्तः Subodhi. 73. 2 (*on* 2. 136); मन्त्राः पुनः प्रयोगकाले व्याप्रियन्ते, अनुष्ठानक्रमस्य स्मरणक्रमाधीनत्वात् ArthSaṁ. 78. 5; MīmāNyāPra. 235. 13; सामान्येनोपदिष्टस्याचमनस्यानुष्ठानक्रममाह ManvaMu. 46. 9 (*on* 2. 60); अङ्गप्रधानानामनुष्ठानक्रमः ... श्रुत्यादिभिर्निरूपितः ŚivārkaMaDī. i. 24. 13 (*on* i. 1. 1); अत्रानुष्ठानक्रमः BālamBha. iii. 188. 9 (*on* 3. 323); [Loc.] in the order of performance उत्पत्तिक्रमेण ह्यनुष्ठानक्रमः, स पदार्थानां न तत्प्रयोजनस्य। अनुष्ठानक्रमे च सत्येकोत्कर्षेऽपरोत्कर्षो भवति TantrRa. 288. 11; श्रुत्यर्थाविरुद्धो हि पाठक्रमोऽनुष्ठानक्रमे प्रमाणम् PrakaVi. 27. 3; अङ्गानामनुष्ठानक्रमे श्रुत्याद्यभावात् VedāntKa. 34. 5 (*on* i. 1. 1); उपस्थितिक्रमो ह्यनुष्ठानक्रमे तन्त्रम् MayūMāli. 501. 6 (*on* vi. 5. 14); [Inst.] according to the order of performance (of rites) विधीयमानानां यः क्रमस्तेनार्थवान् ब्राह्मणपाठक्रमो नानुष्ठानक्रमेण ṬupṬ. 55. 18 (*on* v. 1. 16); नन्वनुष्ठानक्रमेणानुष्ठेयं निरूप्यम् TristhaSe. 1. 11; **B** order or sequence of practice (of sex) यद्यपि प्रीतिविशेषानन्तरं रतारम्भिकं युक्तम्। रतावसानिकं चेहैव। तथाभूतत्वादनुष्ठानक्रमस्य JayaMa. 177. 12 (*on* 2. 10)

**अनुष्ठानक्रमनियम** (anuṣṭhānakrama-niyama) *m.* rule regarding the order of performance (of rites) यद्यपि च क्वचित्पुराणे कश्चित्पाठक्रमः स्यात्तथापि तेन नानुष्ठानक्रमनियमः संभवति TristhaSe. 3. 5; पाठक्रमादनुष्ठानक्रमनियममुपपादयति MayūMāli. 410. 7 (*on* v. 1. 4)

**अनुष्ठानक्रमनियमाभाव** (anuṣṭhānakramaniyamābhāva) *m.* absence of the rule regarding the order of performance (of rites) केवलकाम्येष्वैन्द्राग्न्यादिषु पाठक्रमेणानुष्ठानक्रमनियमाभावस्य ... अधिकरणे स्थापितत्वात् TristhaSe. 3. 5.

**अनुष्ठानक्रमनियमोपपत्ति** (anuṣṭhānakramaniyamopapatti) *f.* tenability of rule regarding the order of performance (of rites) मन्त्रादीनामुपस्थितत्वेन स्मारकत्वनियमात्तत्क्रमेणैवानुष्ठानक्रमनियमोपपत्तेः BhāṭṭDī. ii. 160. 11 (*on* v. 1. 4)

**अनुष्ठानक्रमनियामकता** (anuṣṭhānakramaniyāmaka-tā) *f.* the state of being that which regulates the order of performance (of rites) 'समिधो यजति' 'तनूनपातं यजती'त्यादिषु हि पाठक्रमोऽनुष्ठानक्रमनियामकतया क्लृप्तः ŚivārkaMaDī. i. 37. 7 (*on* i. 1. 1)

**अनुष्ठानक्रममात्र** (anuṣṭhānakrama-mātra) *n.* order of performance (of rites) alone पाठक्रमो न केवलमनुष्ठानक्रममात्रनियामकत्वेनाभिसंहितः किं-त्वाकाङ्क्षितसर्वदृष्टप्रयोजनार्थत्वेन ŚivārkaMaDī. i. 37. 8 (*on* i. 1. 1)

**अनुष्ठानक्रियाप्रारम्भ** (anuṣṭhānakriyā-prārambha) *m.* commencement of the act of performance (of rites) केनचित् संनिधिं बाधित्वानुष्ठानक्रिया-प्रारम्भाख्यप्रकरणवशेन सर्वार्थं भवति ŚāstrDī. 802. 13 (*on* xi. 1. 8)

**अनुष्ठानक्लेशादिमात्र** (anuṣṭhānakleśādi-mātra) *n.* mere hardship etc. in the performance (of rites) अनुष्ठानक्लेशादिमात्रात् इष्टस्याधिक्ये पर्यवसानस्य वक्तव्यत्वात् PūrvottaVāNaMā. 59. 17.

**अनुष्ठानगत** (anuṣṭhāna-gata) *adj.* **1** pertaining to the performance (of rites) अनुष्ठानगताः प्रयोजकत्वाप्रयोजकत्वादयः आन्वीक्षिकीगम्याः TātpaṬ. (Vā.) 69. 1 (*on* i. 1. 1); **2** gone to, i.e. engaged in the performance (of rites) यथापूर्वं पश्यति स्म सर्वं त्रिभुवनं विभुः ...। अनुष्ठानगतान् मुनीन् GaṇeP. ii. 104. 36; **3** pertaining to the right place, rightly placed तस्मादनुष्ठानगतं ज्ञानमस्य विचार्यताम् SyādvāMañ. 1 (56)

**अनुष्ठानगुण** (anuṣṭhāna-guṇa) *m.* attribute or quality (in the form) of performance (of rites) सामग्र्यनुष्ठानगुणैः समग्राः शूद्रा यतः सन्ति समा द्विजानाम् BhaviP. 81A. 20 (i. 41. 29)

**अनुष्ठानगौरवद्वार्** (anuṣṭhānagaurava-dvār) *f.* [Inst.] through the cumbersomeness or needless multiplication of performance (of rites) अहीनगतोपसदां द्वादशत्वेनानुष्ठानगौरवद्वारा निन्दया साह्नगतोपसत्त्रयस्य विधेयस्य तदभावेन ... स्तुतिः LaCandr. 732. 38.

**अनुष्ठानचोदन** (anuṣṭhāna-codana) *n.* injunction of performance (of rites) आभ्यां कालद्वयेऽपि साङ्गयोरनुष्ठानचोदनात् कथं तन्त्रत्वम् MayūMāli. 807. 1 (*on* xi. 2. 2)

**अनुष्ठानजनकत्व** (anuṣṭhānajanaka-tva) *n.* the state of being the producer of performance (of rites) करणमन्त्रजन्यस्मृतेरनुष्ठानजनकत्वेन एकेन सिद्धा-वितरस्य वैयर्थ्यापत्तौ विकल्पः BhāṭṭDī. iv. 272. 4 (*on* xii. 3. 16)

**अनुष्ठानजन्य** (anuṣṭhāna-janya) *adj.* produced from the performance (of rites) धर्मशब्दोऽयं स्मृतिकारैः ... प्रयुज्यते, कदाचित्तदनुष्ठानजन्य आफल-प्रदानावस्थायिनि कस्मिंश्चिदर्थे MamuBh. i. 66. 23 (*on* 2. 6)

**अनुष्ठानतत्पर** (anuṣṭhāna-tatpara) *adj.* **1** engaged in the following or going over, i.e. recitation लोभमायाविनिर्मुक्तो मन्त्रानुष्ठानतत्परः। ... शिष्यः Rasā. 2. 7; **2** devoted to the performance (of rites) स्वकर्मानुष्ठानतत्परेण ...

हरिदत्तश्रेष्ठिना उपदेश: कृत: EI. vi. 18. 18.

**अनुष्ठानतन्त्र** (anuṣṭhāna-tantra) *n.* (singleness or simultaneity) of procedure of performance (of rites for more than one effect) तत्रानुष्ठानतन्त्रं विदुषि तु घटते कर्तृकालाद्यभेदात् TattvMu. 2. 38; ŚivārkaMaDī. i. 77. 19 (*on* i. 1. 1); फलतन्त्रं पदार्थतन्त्रमनुष्ठानतन्त्रं चेति त्रिविधमपि तन्त्रमध्यायार्थ: MayūMāli. 794. 9 (*on* xi. 1. 1)

**अनुष्ठानतन्त्रता** (anuṣṭhānatantra-tā) *f.* the state of being (the singleness or simultaneity) of procedure of performance (for more than one effect) पूर्वस्मिन् पादे केवलप्रधानार्थानामनुष्ठानतन्त्रता विचारिता, इह त्वङ्गप्रधानार्थानां देशादीनां तन्त्रता ... इति पादान्तरत्वमनुष्ठानतन्त्रतानिर्वाहकत्वाद्देशादितन्त्रताया आनन्तर्यं च बोध्यम् MayūMāli. 804. 1 (*on* xi. 2. 1)

**अनुष्ठानतन्त्रत्व** (anuṣṭhānatantra-tva) *n.* the state of being (the singleness or simultaneity of) procedure of performance (for more than one effect) यथानुष्ठानतन्त्रत्वं नित्यकाम्याग्निहोत्रयो: ĀgaPrā. 85. 1.

**अनुष्ठानतन्त्रत्ववत्** (anuṣṭhānatantratva-vat) *adv.* like (the singleness or simultaneity of) procedure of performance (of rites for more than one effect) प्रथमकल्पनेनैवानुष्ठानतन्त्रत्ववत् ... नोपरिष्टाद् गन्तुं शक्यते TantrVā. 522. 4 (*on* ii. 2. 20)

**अनुष्ठानतर्कणमात्र** (anuṣṭhānatarkaṇa-mātra) *n.* reasoning alone (through presumption) of the performance (of rites) नियमविध्यभावे लोकसिद्ध-वैतुष्यकारणत्वात्तदर्थमवहननं विदलनादिकं वानुष्ठीयेतेत्येवमनुष्ठानतर्कणमात्रं प्राप्ति: VidhiRa. 12 (88. 10)

**अनुष्ठानतस्** (anuṣṭhāna-tas) *adv.* **i** due to the performance (of rites) (शिवरात्रिव्रतम्) श्रूयतामृषयो भक्त्या तदुद्यापनमादरात्। यस्यानुष्ठानत: पूर्णं व्रतं भवति ŚivaP. iv. 39. 2 (398A. 15); सत्रिप्रभृतीनामपि ... अघसंकोचनम् ... अन्तिम-युगे न स्यात् इति चेन्न, अनुष्ठानतस्तद्व्यवस्थापनात् PāñcRāRa. 171. 1; अनुष्ठान-तोऽहिंसाद्यर्थस्य शिष्टपरिग्रहेऽपि तस्य वेदमूलकत्वेनाप्युपपत्ते: MīmāKau. i. 40. 4 (*on* i. 3. 7); **ii** in comparison to the performance (of rites) अनुष्ठानतोऽपि कठिने मोक्षांशेऽपि विलम्बिते साधने कथं शिष्टानां वाममार्गे प्रवृत्ति: LalitāSaBh. 183. 18 (*on* 220)

**अनुष्ठानता** (anuṣṭhāna-tā) *f.* the state of being an act or task to be carried out or executed वक्तुस्तदशक्त्यानुष्ठानतां मन्यमानस्यौदासीन्यप्रतीति: VakroJī. 127. 17.

**अनुष्ठानतात्पर्य** (anuṣṭhāna-tātparya) *n.* purport of performance (of rites) वेदेऽनुष्ठानतात्पर्यान्न लयो गम्यते क्वचित् BṛĀraUBhVā. (Sambandha.) 385.

**अनुष्ठानतारतम्य** (anuṣṭhāna-tāratamya) *n.* gradation, i.e. relative difference (in the degree) of performance (of rites) युगानां रूपमनुष्ठातृपुरुष-तारतम्योपेतं तदनुसारेणानुष्ठानतारतम्यं संभवति VīraMi. (Paribhāṣā.) 47. 22.

**अनुष्ठानदर्शन** (anuṣṭhāna-darśana) *n.* perception of the performance (of rites) मन्वादेरनुष्ठानदर्शनेन वा अद्ययावदनुष्ठानम् MīmāKau. i. 62. 3 (*on* i. 3. 9)

**अनुष्ठानदशा** (anuṣṭhāna-daśā) *f.* course of performance (of rites) यदा हि विधिवेलायां साहित्यं नावगतं तदानुष्ठानदशायामपि न लब्धुं शक्यते ŚāstrDī. 805. 11 (*on* xi. 2. 1); किमतिथिभोजनप्राथम्यनिन्दनं हेतु: उत प्राणाग्निहोत्रप्राथम्यम् ...। न द्वितीय:, प्राथम्यविधानस्यानुष्ठानदशायामप्राथम्यमात्रनिवर्तकत्वात् ŚrutaPra. ii. 512. 22 (*on* iii. 3. 40); अनुष्ठानदशायां येन केनचित्स्वरेणानुष्ठानमित्यनियम: MayūMāli. 235. 10 (*on* iii. 3. 3); पौरोडाशिकविधि: ... पश्चात्त्वनुष्ठानदशायां परकीयानुष्ठानमुपजीवति MayūMāli. 847. 14 (*on* xii. 1. 2)

**अनुष्ठानदु:खतस्** (anuṣṭhānaduḥkha-tas) *adv.* due to the rigour of performance (of rites) परमात्मन:। ज्ञानादेव परा सिद्धिर्न त्वनुष्ठानदु:खत: YogVā. iii. 6. 1.

**अनुष्ठानदेश** (anuṣṭhāna-deśa) *m.* place or position of performance (of rites) अनुष्ठानदेश: क्रम: कस्मान्नोदाहृत: NyāySu. (So.) 1200. 2 (*on* iii. 3. 12)

**अनुष्ठानदेशक्रम** (anuṣṭhānadeśa-krama) *m.* order of (the form of) place or position of performance (of rites) अनुष्ठानदेशक्रमोऽपि पशुधर्माणामग्नीषोमीयार्थत्वेन भविष्यति TantrVā. 834. 5 (*on* iii. 3. 12)

**अनुष्ठानदेशलक्षण** (anuṣṭhānadeśa-lakṣaṇa) *adj.* charecterised by the place or position of performance (of rites) पशुधर्माणां दैक्षार्थत्वे ... अनुष्ठानदेशलक्षणोऽपि क्रम: ... सुज्ञानो भविष्यति NyāySu. (So.) 1200. 4 (*on* iii. 3. 12)

**अनुष्ठानदेशविशेष** (anuṣṭhānadeśa-viśeṣa) *m.* specific place or position of performance (of rites) पशव: क्व कर्तव्या इत्यविज्ञायमाना: ... यस्मादनुष्ठानदेशविशेषयुक्ततया न ज्ञायन्ते MayūMāli. 306. 6 (*on* iii. 6. 7)

**अनुष्ठानदेशसाम्य** (anuṣṭhānadeśa-sāmya) *n.* similarity of the place or position of performance (of rites) विनाप्यनुष्ठानदेशसाम्येन यावति प्रदेशे ... प्रधानं पद्यते तावत्येव मन्त्रेषु TantrVā. 832. 22 (*on* iii. 3. 12)

**अनुष्ठानदेशसाम्यमात्र** (anuṣṭhānadeśasāmya-mātra) *n.* mere similarity of the place or position of performance (of rites) क्रमो नाम निरपेक्षाणां सतां पाठानुष्ठानदेशसाम्यमात्रम् TantrVā. 851. 9 (*on* iii. 3. 14)

**अनुष्ठानद्वार्** (anuṣṭhāna-dvār) *f.* [Inst.] through the performance (of rites) धर्मस्यानुष्ठानद्वारा ज्ञानसाधनत्वं युक्तम् ŚivārkaMaDī. i. 79. 15 (*on* i. 1. 1); धर्मस्यालौकिकस्य लोकसिद्धप्रमाणैरविचारितसिद्धप्रमाणभावैरवगन्तुं शक्यत्वात्साधन-फलनिर्णयमन्तरेणानुष्ठानद्वाराभ्युदयपर्यवसानत्वाभावेन MayūMāli. 1. 13 (*on* i. 2. 1)

**अनुष्ठाननित्यत्व** (anuṣṭhāna-nityatva) *n.* obligation of performance (of rites) किंत्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति MahāvīC. 4. 33; UttaRāC. 1. 8.

**अनुष्ठाननिबन्धन** (anuṣṭhāna-nibandhana) *n.* basis of performance (of rites) तदेवं नित्यत्वं नैमित्तिकत्वं काम्यत्वं भूयोभूयोऽनुष्ठाननिबन्धनम् PadMañ. *on* KāśiVṛ. *on* P. vi. 1. 84 (546. 29)

**अनुष्ठाननिमित्त** (anuṣṭhāna-nimitta) *n.* **i** cause of performance (of rites) क्रतूपकारश्चाङ्गानां कार्यमिति तदेवानुष्ठाननिमित्तम् PrakaPañ. 479. 16; स्मरणरूपं ज्ञानमनुष्ठाननिमित्तं न तु वाक्यजनितमनुभवज्ञानम् TantrRa. 246. 12; **ii** motif of performance (of rites) यत्र हि परस्परपरिहारेणानेकमनुष्ठाननिमित्तं यथा पशुपुत्रादि स एव योगसिद्धिविषय: VīraMi. (Paribhāṣā.) 64. 12.

**अनुष्ठाननियम** (anuṣṭhāna-niyama) *m.* obligatoriness of performance (of rites) परविधिप्रयुक्तत्वे नित्यस्याध्ययनस्य काम्यविधिप्रयुक्तत्वं स्यात्, ततश्चानुष्ठाननियमो न स्यात् ŚrutaPra. iA. 31. 29 (*on* i. 1. 1)

**अनुष्ठाननियमसिद्धि** (anuṣṭhānaniyama-siddhi) *f.* establishment of the obligatoriness of the performance (of rites) (तेषामन्तराले यथाकामी न नियम: श्रूयते) अर्थेन पशुनियोजनेन अनुष्ठाननियमसिद्धे: इति प्राप्ते ब्रूम: SaṅkarKāBh. 52. 8 (*on* i. 4. 47)

**अनुष्ठाननियमाभाव** (anuṣṭhānaniyamābhāva) *m.* absence of the obligatoriness of performance (of rites) अपवर्गोत्तरकालमपि नानुष्ठानप्रसङ्ग:, यावन्निमित्तमनुष्ठाननियमाभावात् ŚrutaPra. iB. 142. 12 (*on* i. 1. 4)

**अनुष्ठाननिर्वृत्त्यर्थ** (anuṣṭhānanirvṛtty-artha) *adj.* denoting the completion of performance (of rites) कृत्वाशब्दश्च ... नानुष्ठाननिर्वृत्त्यर्थ: TantrVā. 565. 9 (*on* ii. 2. 27)

**अनुष्ठाननिर्वृत्त्यवश्यंभाव** (anuṣṭhānanirvṛtty-avaśyambhāva) *m.* necessity of the completion of performance (of rites) क्रतो: ... अनुष्ठान-निर्वृत्त्यवश्यंभावात् PūrvottaVāNaMā. 150. 12.

**अनुष्ठाननिष्ठ** (anuṣṭhāna-niṣṭha) *adj.* **i** devoted to the performance (of rites) मन्त्रानुष्ठाननिष्ठस्य (कवे:) नेदिष्ठा कविराजता KāvyMī 13. 15; **ii** devoted to, i.e. referring to the performance (of rites) आगमस्त्वनुष्ठाननिष्ठो नैवंजातीयके प्रमाणम् Kāśi. ii. 192. 22 (*on* 5 (3). 260)

**अनुष्ठाननिष्ठत्व** (anuṣṭhānaniṣṭha-tva) *n.* the state of being devoted to, i.e. referring to the performance (of duties) क्रियाकाण्डानुष्ठाननिष्ठत्वे हि वेदस्य ज्ञानकाण्डोपदेश: किंप्रयोजन: स्यात् NyāyMañ. ii. 85. 12.

**अनुष्ठाननैयत्य** (anuṣṭhāna-naiyatya) *n.* obligatoriness of observance (of austerity) व्रतं नाम वेदोक्तविधिनिषेधानुष्ठाननैयत्यम् ŚāṇḍU. 410. 14 (1. 2)

**अनुष्ठानपक्ष** (anuṣṭhāna-pakṣa) *m.* **i** case of performance (of rites) नित्यकर्मानुष्ठानपक्षे नास्त्येव मोक्ष: NyāyMañ. ii. 89. 30; **ii** alternative of performance (of rites) क: प्रयाससाध्यं वित्तक्षयकरमनुष्ठानपक्षमाश्रयेत ManuBh. i. 453. 26 (*on* 5. 69)

**अनुष्ठानपद्धति** (anuṣṭhānapaddhati) *f.* title of a text, pw.

**अनुष्ठानपर** (anuṣṭhāna-para) *adj.* [*f.* -ā] **1A** devoted to the observance (of duties) अनुष्ठानपरं नरम्। ... श्रीश्च तं नैव मुञ्चति DakṣaSm. 3. 21; विध्यर्था-नुष्ठानपरो विधिज्ञ उच्यते। लौकिकानुष्ठानेऽपि तथा ... एष स तज्ञानातीति अनुष्ठानपरे प्रयुञ्जते ManuBh. i. 436. 28 (*on* 5. 33); त्रयश्चाश्रमिणो ह्येते ह्यनुष्ठानपरा: कुशलतरा धर्मेषु भवन्ति ManuBh. ii. 488. 11 (*on* 12. 111); तत्कुक्षिसमुद्भ(?भू)ता: ष(ट्) पुत्रा: ... [धर्मा]नुष्ठानपरा: EI. ii. 44. 15; **1B** devoted to the performance (of rites) पुलेबूंरनामग्राम: ... स्वकर्म्मा(नुष्ठा)नपराय ... पूर्वाग्रहारिकरुद्रशर्म्मणे ... सम्प्रत्त: EI. xix. 257. 18; विदुषामुपाध्यायादागमित-विद्यानां तथा तदभ्यासपराणाम् अनुष्ठानपराणां च स्मृति: प्रमाणम् ManuBh. i. 67. 16 (*on* 2. 6); अनुष्ठानपरस्य तद्विरोधितया प्रतिषेध: ManuBh. ii. 104. 5 (*on* 8. 65); शेषो धरां धर्तुमनुष्ठानपरोऽभवत् GaṇeP. i. 73. 23; **1C** intent on carrying out or

execution (of acts) अनुष्ठानपरश्चैव ... ये ... मम कर्माणि कुर्वते VarāP. 115. 42; श्रेष्ठाः ... ज्ञानिष्वनुष्ठानपरास्तेषु च ब्रह्मवेदिनः GaṇeP. i. 37. 28; **2** intended to convey the performance (of rites) श्रुतिरनुष्ठानपरा VedantKa. 229. 20 (*on* ii. 1. 1)

**अनुष्ठानपरता** (anuṣṭhānapara-tā) *f.* the state of being devoted to the performance (of rites) आवाहनकाले निजपित्रादयो ब्राह्मणादिभिः सोमपादिरूपेण ध्येयाः। एवं व्यवस्थाज्ञानमनुष्ठानपरता च स्यात् ManvaMu. 127. 5 (*on* 3. 201)

**अनुष्ठानपरायण** (anuṣṭhāna-parāyaṇa) *adj.* intent on or devoted to the performance (of rites) अस्ति ... °यागक्रियानुष्ठानपरायणैः ... तपस्विभिराकीर्णम् आश्रमपदम् Pañcā. 213. 4.

**अनुष्ठानपरायणता** (anuṣṭhānaparāyaṇa-tā) *f.* the state of being intent on or devoted to the performance (of rites) अनुष्ठानपरायणतया परमानन्देन तिष्ठन्तं नैष्ठिकं मामकारणं राज्यगर्वेणावमानितवानसि DaśKuC. 27. 24.

**अनुष्ठानपरिपातन** (anuṣṭhāna-paripātana) *n.* failng off, i.e. disobeying (the injunction regarding) the performance (of rites) नाधिवेदनेऽपत्योत्पत्त्यभावाद्धि वन्ध्याया अनुष्ठानपरिपातनं स्यात् ManuBh. ii. 266. 15 (*on* 9. 81)

**अनुष्ठानपरिवर्जनाश्रय** (anuṣṭhānaparivarjanāśraya) *adj.* based on, i.e. referring to performance and avoidance (of rites) ऋषीणामुपदेशजातमनुष्ठानपरिवर्जनाश्रयम् NyāyBh. 240. 11 (*on* iii. 2. 72)

**अनुष्ठानपरिहारान्तरङ्ग** (anuṣṭhānaparihārāntaraṅga) *adj.* which has execution or carrying out and avoidance (of acts) as the immediate cause अयमपरः प्रवृत्त्यर्थसंग्रहोऽनुष्ठानपरिहारान्तरङ्गः NyāyPari. 511. 7.

**अनुष्ठानपर्यन्त** (anuṣṭhāna-paryanta) *adj.* **1** ending with worship यज्ज्ञानम् ... अनुष्ठानपर्यन्तं ज्ञात्वा मत्प्राप्तिविरोधिनः सर्वस्मादशुभान्मोक्ष्यसे GītāBh. (Rā.) 447. 4 (*on* 9. 1) (comm. उपासनस्वरूपम्); **2** extending up to performance (of rites) अध्यायानध्यायादिव्यवस्थयाधीयमानस्य ... अनुष्ठानपर्यन्तस्य ... ग्रन्थराशेर्भ्रान्तपुरुषप्रणीतत्वशङ्का च निरवकाशा TantrRaha. 38. 22; **3** culminating into performance (of religious rites) अनध्यवसायेऽनुष्ठानस्यैव निवृत्त्यानुष्ठानपर्यन्तबोधजनकत्वाभावात् ... शङ्कते MayūMāli. 98. 21 (*on* ii. 1. 1)

**अनुष्ठानपर्यन्तता** (anuṣṭhānaparyanta-tā) *f.* the state of being that which is extended up to performance (of rites) निर्मलत्वशङ्काकलङ्कितत्वेन अनुष्ठानपर्यन्ततानपायात् NyāyVārPari. 280. 3.

**अनुष्ठानपर्यन्तशक्ति** (anuṣṭhānaparyanta-śakti) *adj.* having the capacity for culminating into performance (of rites) नानुष्ठानपर्यन्तशक्तिः शास्त्रार्थः किं तु शक्तिमात्रमेव MayūMāli. 23. 15 (*on* i. 3. 2)

**अनुष्ठानपर्यवसानसंभव** (anuṣṭhānaparyavasāna-sambhava) *m.* possibility of culminating in to performance (of rites) आख्यानानामपि विद्यास्तुत्यर्थत्वात् सकाशात्परिप्लवप्रयोगशेषत्वं ज्यायोऽनुष्ठानपर्यवसानसंभवादिति संगतिः VedāntKa. 491. 21 (*on* iii. 4. 23)

**अनुष्ठानपर्यवसानाभाव** (anuṣṭhānaparyavasānābhāva) *m.* absence of culmination in to performance (of duties) पाञ्चदश्यविधिर्हि प्रकरणाविशेषाद् दर्शपूर्णमासप्रयोगसामान्यविषयस्तत्तत्प्रयोगविशेषविषयत्वं विनानुष्ठानपर्यवसानाभावात्सामान्यमुखेन तत्तत्प्रयोगविशेषांल्लक्षयित्वा पर्यवस्यति MayūMāli. 299. 6 (*on* iii. 6. 9)

**अनुष्ठानपर्यवसायित्व** (anuṣṭhānaparyavasāyi-tva) *n.* the state of being that which culminates in to performance (of rites) अविहितत्वादिति। विधेरनुष्ठानपर्यवसायित्वेनाशक्तस्य तदसंभवादिति भावः MayūMāli. 448. 9 (*on* vi. 1. 2)

**अनुष्ठानपर्यवसायिनी** (anuṣṭhāna-paryavasāyinī) *adj.* (*f.*) culminating into performance (of rites) अनुष्ठानपर्यवसायिनी तत्र चोदना ब्रह्मचोदना BrahmSūBh. (Bhā.) 2. 7 (*on* i. 1. 1)

**अनुष्ठानपर्यवसिता** (anuṣṭhāna-paryavasitā) *adj.* (*f.*) culminated into the performance (of rites) शक्तेः शास्त्रप्रमेयत्ववादिनापि न तन्मात्रेण शास्त्रपर्यवसानं वक्तुं युक्तमतिप्रसङ्गात् किं तु शक्तिरप्यनुष्ठानपर्यवसिताया भवति तादृश्येव शास्त्रार्थ इति वक्तव्यम् MayūMāli. 23. 1 (*on* i. 3. 2)

**अनुष्ठानपर्याय** (anuṣṭhāna-paryāya) *m.* option or alternative of performance (of rites) अनुष्ठानविपर्यय(v.1. पर्याय Vṛndavan Ed.)माह तथेति ŚrutaPra. ii. 312. 32 (*on* ii. 2. 35)

**अनुष्ठानपूर्वक** (anuṣṭhānapūrva-ka) *adj.* preceded by performance (of rites) शास्त्रार्थावधारणपूर्वकं ह्यनुष्ठानं नानुष्ठानपूर्वकं शास्त्रम् ŚāstrDī. 88.23 (*on* i. 1. 5)

**अनुष्ठानप्रकार** (anuṣṭhāna-prakāra) *m.* **1** manner of (mentally) going over or meditation पार्थः ... स्थितप्रज्ञस्यानुष्ठानप्रकारं च पृच्छति GītāBh. (Rā.) 139. 6 (*on* 2. 54) (comm. श्रवणमननाभ्यां स्थितप्रज्ञस्य ह्यनुष्ठानम्); माण्डुक्यादौ च सर्वत्र निर्गुणोपास्तिरीरिता। अनुष्ठानप्रकारोऽस्याः पञ्चीकरण ईरितः PañcDa. 9. 64; पूर्वत्र विद्या नाना इत्युक्तमिदानीं तासां ब्रह्मप्राप्तिफलानामनुष्ठानप्रकारो विचार्यते VedāntKau. 350. 18 (*on* iii. 3. 57); **2** manner or method of performance (of rites) अनुष्ठानप्रकारोऽधिकरणत्रयेण निरूप्यते VedāntKa. 475. 10 (*on* iii. 3. 59); 'विधिः' अनुष्ठानप्रकारः CaturCin. iii (1). 756. 12; प्रयाजेषु पुरुषभेदेनानुष्ठानप्रकारो भिद्यते NyāyMāVi. 353. 3 (*on* vi. 6. 1); पूर्वस्मिन् पादे द्रव्यापचारे सत्यनुष्ठानप्रकारो विचारितः MayūMāli. 481. 6 (*on* vi. 4. 1)

**अनुष्ठानप्रकारकथन** (anuṣṭhānaprakāra-kathana) *n.* description of the manner or method of performance (of rites) यजतिचोदना द्रव्यदेवताक्रियासमुदायमनुष्ठापयतीत्येवमनुष्ठानप्रकारकथनपरत्वे चोदनाशब्दोऽर्थवान् भवति न तु लक्षणपरत्वे MayūMāli. 376. 1 (*on* iv. 2. 12)

**अनुष्ठानप्रकारज्ञापिका** (anuṣṭhānaprakāra-jñāpikā) *adj.* (*f.*) indicative of the manner or method of performance (of rites) न ह्याहुत्याधारभूतमग्निम्, अनुष्ठानप्रकारज्ञापिकां विद्यां च विना कर्मानुष्ठानं संभवति NyāyMāVi. 95. 8 (on ii. 3. 3)

**अनुष्ठानप्रकारावगत्यर्थम्** (anuṣṭhānaprakārāvagatyartham) *adv.* for the sake of the knowledge of the manner or method of performance (of rites) मान्त्रवर्णिकद्रव्यदेवताफलाद्यूहानूहनिर्णयादिभिरनुष्ठानप्रकारावगत्यर्थं मन्त्रार्थनिर्णायकन्यायविचारापेक्षायामपि मन्त्रैरनुष्ठेयार्थस्मरणसिद्ध्यर्थं न तदपेक्षास्ति ŚivārkaMaDī. i. 32. 2 (*on* i. 1. 1)

**अनुष्ठानप्रतिपत्ति** (anuṣṭhāna-pratipatti) *f.* knowledge of execution or carrying out लोके स्नायादनुलिम्पेद्भुञ्जीतेत्यादौ पाठानुसारेणैवानुष्ठानप्रतिपत्तेरिहापि यथापाठमनुष्ठानम् MayūMāli. 409. 23 (*on* v. 1. 4)

**अनुष्ठानप्रतिपादक** (anuṣṭhāna-pratipādaka) *adj.* what explains (the rules) of performance (of rites) कल्पः प्रत्यक्षवेदमूलकोऽनुष्ठानप्रतिपादको ग्रन्थविशेषः VīraMi. (Saṁskāra.) 477. 13.

**अनुष्ठानप्रतिपादन** (anuṣṭhāna-pratipādana) *n.* explanation of performance (of rites) प्रायश्चित्तान्ते पुनःसंस्कारं कुर्यादित्यादिविष्ण्वादिवाक्येषु द्वयोरपि स्वस्वकार्यप्रतिपादनमुखेनैव समाख्याभ्यां क्रमेणानुष्ठानप्रतिपादनं युक्तम् VīraMi. (Saṁskāra.) 547. 9.

**अनुष्ठानप्रतीति** (anuṣṭhāna-pratīti) *f.* knowledge of performance (of rites) पशुत्रयेऽप्यङ्गत्वावगमात्तेषां कालभेदेन तत्र तत्रानुष्ठानप्रतीतेः MīmāKau. ii. 336. 17 (*on* iii. 3. 12)

**अनुष्ठानप्रत्यय** (anuṣṭhāna-pratyaya) *m.* knowledge of performance (of rites) नाप्यनुष्ठानाख्यात्फलाद्विनियोगः शक्यते कर्तुम्। अनुष्ठानप्रत्ययस्य दृढत्वात् TantrVā. 844. 16 (*on* iii. 3. 14)

**अनुष्ठानप्रयुक्तानित्यत्व** (anuṣṭhānaprayuktānityatva) *n.* non obligatoriness caused by performance (of rites) नन्वेवमप्येकस्मिन्प्रयोगे उभयानुष्ठानासंभवादस्त्यनित्यत्वमित्याशङ्क्यानुष्ठानप्रयुक्तानित्यत्वं न द्वारत्वविरोधीत्याशयेनाह MayūMāli. 310. 22 (*on* iii. 6. 13)

**अनुष्ठानप्रयोग** (anuṣṭhāna-prayoga) *m.* application of performance (of rites) अत्रानुष्ठानप्रयोगो वक्ष्यते TristhaSe. 360. 26.

**अनुष्ठानप्रयोजक** (anuṣṭhāna-prayojaka) *adj.* conducive to performance (of rites) अनुष्ठानप्रयोजको वेदभागः खिलः VīraMi. 13. 1 (*on* 1. 3)

**अनुष्ठानप्रयोजनाभाव** (anuṣṭhānaprayojanābhāva) *m.* absence of the purpose of performance (of rites) यथासंभवमनुष्ठानमिति चेत्, न, पुनस्तत्त्वदर्शनेन अनुष्ठितकर्मणां बाधे सति अनुष्ठानप्रयोजनाभावात् VivaPraSaṁ. 337. 17.

**अनुष्ठानप्ररोचनार्थ** (anuṣṭhānaprarocanārtha) *adj.* meant for causing interest in the performance (of rites) विहितमकुर्वतः पुरुषस्य पुरुषार्थासिद्धेरित्यकरणनिन्दनमनुष्ठानप्ररोचनार्थमित्यविरोधः Mitā. 405. 27 (*on* 3. 220)

**अनुष्ठानप्रवर्तन** (anuṣṭhāna-pravartana) *n.* undertaking of the performance (of rites) वेदे ह्यसिद्धप्रामाण्ये महाक्लेशेषु कर्मसु। नानर्थशङ्कया युक्तमनुष्ठानप्रवर्तनम् NyāyMañ. i. 6. 24.

**अनुष्ठानप्रवाह** (anuṣṭhāna-pravāha) *m.* stream or continuity of performances (of rites) अन्धपरंपराकल्पस्तर्ह्ययमनुष्ठानप्रवाह इति चेन्न NyāyPari. 386. 7.

**अनुष्ठानप्रवृत्ति** (anuṣṭhāna-pravṛtti) *f.* inclination for or activity towards performance (of rites) कामे विहते काम्ययागानुष्ठानप्रवृत्तिः निरुध्यते BṛĀraUBh. 675. 2 (*on* iv. 5. 15); पुरुषान्तरस्थमनुष्ठानं दृष्ट्वा तदनुपपत्त्या कारणमनुमाय ततोऽनुष्ठानप्रवृत्तेरदोषः BālaKrī. i. 21. 20 (*on* 1. 7)

**अनुष्ठानप्रसक्ति** (anuṣṭhāna-prasakti) *f.* undesired occasion for performance (of rites) न ह्यग्नेर्विकृतिसंबन्धोपदेशाभावे तदाश्रितगुणकामानां विकृतिमध्येऽनुष्ठानप्रसक्तिः VidhiRa. 2 (11. 10); (शूद्राणाम्) त(?ते)षामनुष्ठानप्रसक्तौ हि तदपेक्षितवेदार्थग्रहणप्राप्तिः ŚivārkaMaDī. i. 492. 7 (*on* i. 3. 39); आग्नेयादित्रिकस्य विभिन्नपौर्णमासीष्वप्यनुष्ठानप्रसक्तौ तस्येष्टित्रये पौर्णमास्येकत्वविधानेनार्थवत्त्वात् BhāṭṭDī. iv. 144. 5 (*on* xi. 1. 8); यद्यपि क्रत्वर्थतया तेषां (अग्निहोत्रादीनाम्) न प्राप्तिस्तथापि पुरुषार्थतया विधिबलादेव क्रतुप्रयोगकालेऽप्यनुष्ठानप्रसक्त्यैककालतामात्रेण प्राप्तिमादाय प्रतिषेध उपपद्येत MayūMāli. 778. 15 (*on* x. 8. 7)

**अनुष्ठानप्रसङ्ग** (anuṣṭhāna-prasaṅga) *m.* **1** undesired occasion for performance (of rites) अपवर्गोत्तरकालमकालोत्तरमपि जीवननिमित्ताग्निहोत्रादिवन्नित्यं तद्विषयानुष्ठानप्रसङ्गः BrahmSūBh. (Rā.) 149. 4 (*on* i. 1. 4); (व्रतानाम्) एतेषां ब्रह्मयज्ञसंध्योपासनादिवत् समावर्तनादूर्ध्वमप्यनुष्ठानप्रसङ्गं वारयितुमुक्तम् ManvaVi. 181. 31 (*on* 2. 108); नियमपरिसंख्यात्वापत्त्या गृहमेधीयतद्व्यतिरिक्ताङ्गकलापस्यापि पक्षेऽनुष्ठानप्रसङ्गात् ŚivārkaMaDī. i. 66. 6 (*on* i. 1. 1); प्रसङ्गस्त्रिविधः। अनुष्ठानप्रसङ्गः पदार्थप्रसङ्गः शास्त्रप्रसङ्गश्चेति। तत्र पश्वर्थप्रयाजाद्यनुष्ठानेन पशुपुरोडाशाद्युपकारोऽनुष्ठानप्रसङ्गः ŚivārkaMaDī. i. 78. 16 (*on* i. 1. 1); MayūMāli. 846. 4 (*on* xii. 1. 1); कालादिमात्रविधानोपपत्तेः प्रत्येकमेवानुष्ठानप्रसङ्गेन ... नेष्टसिद्धिः MīmāKau. iii (2). 171. 8 (*on* ii. 2. 3); पौरोडाशिकं चोदकं प्रयोगविधिं च प्रयाजाद्यंशेऽप्यभ्युपगम्य केवलमनुष्ठानप्रसङ्ग एवाभ्युपगन्तुं शक्यः BhāṭṭDī. iv. 217. 18 (*on* xii. 1. 1); MayūMāli. 647. 17 (*on* x. 1. 1); **2** context of performance एकहायनी 'प्रसङ्गात् पदपांस्वर्थापीति ... (सप्तमं पदम्) नानुष्ठानप्रसङ्गाभिप्रायमप्रयोजकत्वाधिकारात् किं तु शास्त्रप्रसङ्गाभिप्रायम् TantrRa. 85. 6.

**अनुष्ठानप्राथम्य** (anuṣṭhāna - prāthamya) *n.* priority of performance (of rites) एकं प्रधानं वेदद्वयसापेक्षं तत्रानुष्ठानं प्रवृत्तिप्राथम्यादेव भवति। अध्ययनप्राथम्यापेक्षयानुष्ठानप्राथम्यस्यान्तरङ्गत्वात् BālamBha. i. 248. 9 (*on* 1. 89)

**अनुष्ठानप्राप्ति** (anuṣṭhāna - prāpti) *f.* **A** occasion for performance (of rites) शेषाणां शेषिणां च ...। युगपदनुष्ठानप्राप्तौ क्रमः स्यात् VedāntKa. 35. 7 (*on* i. 1. 1); **B** understanding of performance (of rites) प्रकृतावप्राप्तस्याग्नेः प्रथमश्लोकव्याख्यानदर्शितरीत्या ... प्राप्तिः। तत्प्राप्त्या च तदाश्रितानां श्येनाकृत्यादिफलार्थगुणानां प्रकृतिमध्येऽनुष्ठानप्राप्तिः VidhiRa. 9 (49. 15)

**अनुष्ठानप्रारम्भ** (anuṣṭhāna - prārambha) *m.* commencement of execution or carrying out प्रधानानां युगपदनुतिष्ठासितत्वेनानुष्ठानप्रारम्भस्तेषामेक एव MayūMāli. 802. 9 (*on* xi. 1. 8)

**अनुष्ठानफल** (anuṣṭhāna - phala) *adj.* [*f.* -ā] having the performance (of rites) as the fruit or result अनुष्ठानफलो हि विधिर्नानु(?र्नानानु)ष्ठानाय। दृष्टार्थत्वादेव तत्सिद्धेः BrahmSi. 153. 6; न चात्र निवृत्तिपदेन भावरूपैव निवृत्तिर्विवक्षितेति शक्यं वक्तुम्। प्रागुदाहृतनिषेधपरिसंख्यास्वनुष्ठानफलास्वव्याप्तिप्रसङ्गात् VidhiRa. 23 (125. 3)

**अनुष्ठानफल** (anuṣṭhāna - phala) *n.* fruit or result of the performance (of rites) पुरुषः ... कर्ता अनुष्ठाता भवति विज्ञाता अनुष्ठानफलस्यानुभविता भवति ChāndoUBh. 436. 15 (*on* vii. 8. 9); अनुष्ठानफलं प्राप्तं यत्ते दृढपदाम्बुजम् GaṇeP. i. 34. 26; कर्तव्यकर्मज्ञानं ह्यनुष्ठानफलम् GītāBh. (Rā.) 256. 1 (*on* 4.17)

**अनुष्ठानफलकत्व** (anuṣṭhānaphalaka-tva) *n.* the state of being what has the performance (of rites) as the fruit or result लौकिककर्मणामग्निहोत्रादिकर्मणां चाकरणयोः समुच्चित्य प्राप्तौ 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिविधेरग्निहोत्राद्यकरणनिवृत्तिरूपतदनुष्ठानफलकत्वात् VidhiRa. 23 (125. 1)

**अनुष्ठानफलकत्वाभाव** (anuṣṭhānaphalakatvābhāva) *m.* absence of the state of being what has the performance (of rites) as the fruit or result तात्पर्यविषये सर्वत्रानुष्ठानफलकत्वाभावेनाप्रामाण्यापत्तेरवर्जनीयत्वात् MayūMāli. 99. 12 (*on* ii. 1. 11)

**अनुष्ठानफलदातृत्व** (anuṣṭhānaphaladātṛ-tva) *n.* the state of being the bestower of the fruit or result of the performance (of rites) परब्रह्मण एव ... अनुष्ठानफलदातृत्वमुतान्यस्येति संशयः BrahmSūBh. (Śrī.) ii. 273. 5 (*on* iii. 2. 37)

**अनुष्ठानफललाभ** (anuṣṭhānaphala-lābha) *m.* obtainment of the fruit or result of the performance (of rites) स्तुतिमात्रकल्पनाद् विधिकल्पनमेव युक्तमनुष्ठानफललाभात् PrakaVi. 959. 17.

**अनुष्ठानबाध** (anuṣṭhāna-bādha) *m.* **A** one of the four defects of option (*lit.* contradiction to the performance (of rites)) प्रतिपत्तिबाधोऽनुष्ठानबाधोऽपूर्वबाधः फलबाधश्चेति एकैकशिरसि दोषचतुष्टयात् ŚrutaPra. iA. 57. 1 (*on* i. 1.1), ii. 431. 19 (*on* iii. 2. 17); **B** suspension or deferring of the performance (of rites) अपच्छेदनिमित्तकस्य पूर्वप्रयोगाङ्गसर्वस्वदानस्य। ... पूर्वप्रयोगकाले अनुष्ठानबाधः LaCandr. 383. 22; यदि पृथक्पदार्थातिदेशबलेन बाधितस्याप्य-ङ्गत्वमङ्गीक्रियते तर्हि ... दृष्टद्वारा संभवेऽदृष्टं परिकल्प्यानुष्ठानप्रसङ्गात् तदभिमतोऽनुष्ठानबाधोऽपि न स्यात् MayūMāli. 647. 17 (*on* x. 1. 1)

**अनुष्ठानबाधचिन्तन** (anuṣṭhānabādha-cintana) *n.* thought or consideration of contradiction to the performance (of rites) अहीनेऽर्थादन्यकर्तृके सिद्धे तत्र दक्षिणायाः प्रतिप्रधानं भेदेनानुष्ठानबाधचिन्तनात्संगतिः MayūMāli. 751. 6 (*on* x. 6. 17)

**अनुष्ठानबुद्धि** (anuṣṭhāna-buddhi) *f.* thought of undertaking ( the work or command) (किं कृत्यमिति ब्रुवती सज्ञा भवनमध्ये तिष्ठेत्) आदिश्यमानकार्यस्यानुष्ठानबुद्ध्या JayaMa. 235. 10 (*on* 4. 1)

**अनुष्ठानबोध** (anuṣṭhāna-bodha) *m.* **i** knowledge of performance (of rites as an operation) विधेर्द्विविधो व्यापारो भावार्थफलयोः साध्यसाधनसंबन्धबोधो भावार्थानुष्ठानबोधश्चेति TattvPradī. (Ci.) 104. 2; **ii** knowledge of performance (of rites in a fixed order) क्रमादयश्च सति प्रयोगविधिनानुष्ठानबोधे ... श्रुत्यादिभिः पदार्थप्रयोगावच्छेदकत्वेन विधीयन्ते MīmāKau. i. 34. 6 (*on* i. 3. 7)

**अनुष्ठानबोधक** (anuṣṭhāna - bodhaka) *adj.* **A** what enjoins performance (of rites in a fixed order) साङ्गप्रधानकर्मण्यनुष्ठानबोधकः प्रयोगविधिः VivaPraSaṁ. 138. 1; **B** what indicates the performance ( of rites as an operation) यत्रैकभक्तादौ दिनद्वये ... पूर्वदिनस्य ग्राह्यत्वमुक्तं तत्र मुख्यकाले तत्तिथेरभावेऽपि तत्रैवानुष्ठानबोधकमिदम् NirṇaSi. 148. 1.

**अनुष्ठानबोधोपपत्ति** (anuṣṭhānabodhopapatti) *f.* tenability of the knowledge of performance (of rites in a fixed order) न प्रयोगविधिर्नाम कश्चिद् भिन्नो विधिः, उत्पत्तिविधावेव लिङादिवाच्यया प्रवर्तनया कृतिसाध्यत्वस्य स्वविषये आक्षेपेणानुष्ठानबोधोपपत्तेः BhāṭṭDī. iv. 149. 5 (*on* xi. 2. 1)

**अनुष्ठानभूति** (anuṣṭhāna- bhūti) *f.* superhuman power (attained) through the performance (of rites) कल्प्यते मध्यमो भावस्तत्रानुष्ठानभूतयः। भजतां यत्नसंपन्ना भवन्तीष्टप्रपूर्तये BṛDharmaP. ii. 6. 93.

**अनुष्ठानभृश** (anuṣṭhāna - bhṛśa) *adj.* powerful due to the performance (of rites) परितुष्टो विभावसुः। उवाच निजभक्तं तमनुष्ठानभृशं कृशम् GaṇeP. ii. 74. 41.

**अनुष्ठानभेद** (anuṣṭhāna - bheda) *m.* **A** [ Inst.] by the difference in performances ( of rites) अनुष्ठानभेदेन कालत्रितयचोदनात्। यो यस्य चोदितः कालो लङ्घनीयो न तेन सः NyāyMañ. i. 255. 31; अनुष्ठानभेदेन शब्दतो विशिष्टविषयतया प्रतीयमानस्याङ्गान्तरविधायकत्वोपपत्त्या MayūMāli. 757. 17 (*on* x. 7. 3); **B** variety of performances संन्यासाः कतिभेदास्तदनुष्ठानभेदाः कीदृशाः NāraPaU. 5. 1(316)

**अनुष्ठानभेदप्रयोजकत्व** (anuṣṭhānabhedaprayojaka - tva) *n.* the state of being what is conducive to the difference in performance (of rites) भेदेनानुष्ठीयमानयोरपि सहविधानदर्शनेन विधिभेदस्यानुष्ठानभेदप्रयोजकत्वाभावादिति भावः MayūMāli. 803. 6 (*on* xi. 1. 9)

**अनुष्ठानभेदमुख** (anuṣṭhānabheda - mukha) *n.* [ Inst.] through the difference in performance (of rites) किमत्र प्राकृतं खदिरादिकं प्रवर्तते उत नेति अधिकरणाङ्गसंशयमनुष्ठानभेदमुखेन सूचयन् ... तदर्थसंशयमाह MayūMāli. 676. 13 (*on* x. 2. 31)

**अनुष्ठानभेदासांकर्य** (anuṣṭhānabhedāsāṅkarya) *n.* absence of cross - connection with varieties of performance (of rites) वैकृतरथन्तरपृष्ठादिविधिष्वपूर्वविध्यादिलक्षणानुगतेर्नातिव्याप्तिः ... तावता रथन्तरपृष्ठादिष्वनुष्ठानभेदासांकर्यात् VidhiRa. 10 (45. 8)

**अनुष्ठानमात्र** (anuṣṭhāna - mātra) *n.* **1** mere going over, i. e. reciting महामन्त्रं गणेशस्य ...। अस्यानुष्ठानमात्रेण कार्यं ते सिद्धिमेष्यति GaṇeP. i. 17. 42; पितृमातृवधोत्पन्नं बुद्धिपूर्वमघं च यत्। तदनुष्ठानमात्रेण सर्वमेतद्विलीयते RāmUTāU. 5. 20 (Ed. Adyar. 1953); (द्वाविंशत्यक्षरमन्त्रस्य) यस्यानुष्ठानमात्रेण शक्रः सुरपदं गतः ParamāKā. 127. 13; **2A** mere observance व्रतम् ... कुरु निश्चितमानसः। यस्यानुष्ठानमात्रेण सर्वदुःखलयो भवेत् GaṇeP. i. 51. 69; i. 69. 7; कौलधर्मात् परो धर्मः ... नास्ति। यस्यानुष्ठानमात्रेण ब्रह्मज्ञानी नरो भवेत् MahNirvāT. 4. 43; (धर्मं चरति) चरतिरत्रासेवायां नानुष्ठानमात्रे Prasā. i. 828. 15; **2B** mere carrying out बाधोऽपि व्यवहारस्यैव । ... कृष्णलेष्ववघातस्य चरुषु पेषणस्य चानुष्ठानमात्रं बाध्यते TantrRaha. 3. 4; **2C** mere performance (of rites) कलशस्थापनं वक्ष्ये चक्रानुष्ठानमेव च। येनानुष्ठानमात्रेण देवता सुप्रसीदति MahNirvāT. 5. 180; प्रधानानां द्वादशस्वहःस्वनुष्ठानमात्रं सिध्येत् MayūMāli. 834. 13 (*on* xi. 4. 5); **3** performance in general, cf. **अनुष्ठानमात्रविहित.**

**अनुष्ठानमात्रविहित** (anuṣṭhānamātra - vihita) *adj.* prescribed for performance in general यज्ञाद्यतिरिक्ते ... अनुष्ठानमात्रविहितं ह्रस्वदर्भमात्रं पवित्रं शुचीत्युक्तं मुनिभिः VīraMi. (Paribhāṣā.) 94. 13.

**अनुष्ठानमात्राधीना** (anuṣṭhānamātrādhīnā) *adj.* (*f.*) dependent on merely the performance (of rites) अनुष्ठानमात्राधीनायाः स्वर्गादिफलसिद्धेर्देवतास्वरूप-तद्याथात्म्यसत्कार्यवादादिज्ञाननैरपेक्ष्यम् ŚrutaPra. iA. 2. 24 (*on* i. 1.0)

**अनुष्ठानमात्रोपदेश** (anuṣṭhānamātropadeśa) *m.* instruction regarding mere performance (of rites) प्रायश्चित्तवत् संशोधनार्थो दिव्योपदेशः स्यात्। सत्यम्। यद्यनुष्ठानमात्रोपदेशः स्यात् BālaKrī. i. 240. 9 (*on* 2. 117)

**अनुष्ठानमानस** (anuṣṭhāna - mānasa) *adj.* whose mind is devoted to the performance (of rites) परिहृत्य विषयरसमनुष्ठानमानस इवाभूवम् YaśasCam. ii. 74. 9; *n.* lake *Mānasa* in the form of performance (of rites), YaśasCam. ii. 74. 9 (comm. अनुष्ठानमानसे क्रियासरोवरे)

**अनुष्ठानमार्ग** (anuṣṭhāna - mārga) *m.* [Inst.] by way of following (the scriptures) श्रुत्यनुष्ठानमार्गेण कर्मानुष्ठानमेव वा। समाप्य संन्यसेत् NāraPaU. 3. 10.

**अनुष्ठानयत्ता** (anuṣṭhāna - yattā) *adj.* (*f.*) engaged in the practice (of sex) अनुष्ठानयत्ता स्त्री बध्द्वा दूरात् प्रदर्शयेत् LakṣmīT. 45. 111.

**अनुष्ठानयोग्य** (anuṣṭhāna - yogya) *adj.* [*f.* -ā] **1A** fit for carrying out or execution (भावनायाम्) तस्याम् ... विधित्वं तावन्नाश्रीयते यावदंशत्रयपूर्णा भावनानुष्ठानयोग्या न भवति TantrVā. 352. 19 (*on* ii. 1. 1); एवम् ... अनुष्ठानयोग्या भावना संजाता NyāyRaMā. 144. 1; जिज्ञासापदेनानुष्ठानयोग्यो विचारो लक्ष्यताम् VivaPraSaṁ. 7. 18; जिज्ञासापदं चानुष्ठानयोग्यस्य ... विचारस्योपलक्षणम् NyāySu. (Ja.) 21B. 13 (*on* i. 1. 1); ममैतच्छरीरं यथा ... अनुष्ठानयोग्यं भवति तथा कर्तव्यम् SiṁhāDvā. 96. 5(1); **1Bi** fit for the performance (of rites) सत्यपि महावाक्यस्यैक्ये ... अनुष्ठानयोग्यापूर्वार्थविधानम् ... क्रियते PrakaVi. 967. 15; उक्तरीत्या प्रबलमपि विधिवाक्यमनुष्ठानयोग्ये विशेषे संदेहजनकतया निर्णय-हेतुमर्थवादमपेक्षते NyāyMāVi. 59. 18 (*on* i. 4. 19); ईक्षणादितरे बहवो व्यापारा अनुष्ठानयोग्याः सन्ति NyāyMāVi. 221. 5 (*on* iv. 1. 3); साधनफलसंबन्धरूपस्तद्वि-शेषोऽनुष्ठानयोग्यो नानुमातुं शक्यः NyāySu. (Ja.) 82A. 6 (*on* i. 1. 1); **1Bii** (used as noun) what is fit for the performance (of rites) अनुष्ठानयोग्यस्य अनुष्ठानसिद्ध्यर्थं स्तुत्यपेक्षणात् NyāySu. (So.) 42. 21 (*on* i. 2. 7); **2** entitled to go over, cf. **अनुष्ठानयोग्यत्व**.

**अनुष्ठानयोग्यता** (anuṣṭhānayogya-tā) *f.* **A** the state of being what is fit for carrying out or execution अंशत्रयाश्लेषलब्धानुष्ठानयोग्यताम्। भावनामीदृशीं प्राप्य वृत्तिर्विधिनिषेधयोः NyāyMañ. i. 311. 18; **B** the state of being what is fit for the performance (of rites) इत्थमंशत्रयान्वितायां भावनायां प्रतिपन्नायां तस्यानुष्ठानयोग्यतया तत्र विधिः पुरुषं प्रवर्तयति TantrRaha. 52. 18.

**अनुष्ठानयोग्यत्व** (anuṣṭhānayogya-tva) *n.* the state of being what is entitled to go over, i.e. to recite तदाश्वस्तस्यैव तत्र अनुष्ठानयोग्यत्वात् PratyabhiVi. ii. 86. 7 (*on* ii. 3. 2)

**अनुष्ठानरत** (anuṣṭhāna - rata) *adj.* **1** devoted to going over, i. e. recitation गृत्समदो विप्रो मन्त्रं प्राप्य पितुर्मुखात्। अनुष्ठानरतो भूत्वा जपध्यानपरोऽभवत् GaṇeP. i. 36. 22; **2** devoted to the performance (of rites) दृष्टो मया रुक्माङ्गदः शुभः। अनुष्ठानरते वाचक्नवौ मे भर्तरि प्रिये GaṇeP. i. 36. 37; i. 60. 3; योगीश्वराः केचिदनुष्ठानरताः सदा ... वसन्ति ... तस्मिन्पुरे संप्रवृत्तो गणनाथमहोत्सवः GaṇeP. i. 62. 22; प्रणामगोत्रयमनियमसंज(य)मस्वाध्यायध्यानानुष्ठानरतपरमपाशु-पताचार्यभट्टारकश्रीभाववाल्मीक [:] EI. xxv. 185.51.

**अनुष्ठानरूप** (anuṣṭhāna-rūpa) *adj.* of the form of performance (of rites) लिङ्गादिज्ञानमुत्पन्नं सत् ... अनुष्ठानरूपात् फलाद्वियुज्यमानं बाधिष्यते TantrVā. 878. 2 (*on* iii. 3. 14); अन्योन्यसंवादात् कपिलादिषु समाश्वास इति चेन्न ... अधिकारिविशेषेण ब्राह्मणत्वाद्यप्रतिसंधानेऽनुष्ठानरूपश्वासस्याभावात् NyāyKuA. i. 141. 4.

**अनुष्ठानरूप** (anuṣṭhāna-rūpa) *n.* [Inst.] in the case of the performance (of rites) यदप्यनुष्ठानरूपेणानित्यत्वं तद् व्रीहीणामपि तुल्यमेव ŚāstrDī. 310. 13 (*on* iii. 6. 13)

**अनुष्ठानरूपफल** (anuṣṭhānarūpa - phala) *n.* fruit or result in the form of performance (of rites) न चैतदत्यन्तं प्रवृत्तम्। अनुष्ठानरूपफलपर्यवसानाभावात् NyāyMāVi. 146. 24 (*on* iii. 3. 12)

**अनुष्ठानलक्षण** (anuṣṭhāna-lakṣaṇa) *adj.* [*f.* - ā] **1A** characterised by the observance शरीरिणां वर्णाश्रमविभागेनानुष्ठानलक्षणा प्रवृत्तिः NyāyBh. 240. 12 (*on* iii. 2. 72); अनुष्ठानलक्षणायाः प्रतिपत्तेः फलमाह JayaMa. 25. 19 (*on* 1. 2); **1B** characterised by the performance (of rites) धर्मो ज्ञानानुष्ठानलक्षणः BṛĀraUBh. 148. 15 (*on* i. 4. 14); अनुष्ठानलक्षणमुपकारमित्यर्थः MayūMāli. 185. 22 (*on* iii. 1. 2); **2** characterised by the employment (of the means) आत्मनः ... धर्माधर्मविवेकपूर्वको मोक्षसाधनानुष्ठानलक्षणः योगः GītāBh. (Śaṅ.) 19. 6 (*on* 2. 10)

**अनुष्ठानलक्षणफलशून्य** (anuṣṭhānalakṣaṇaphala-śūnya) *adj.* devoid of the fruit or result characterised by the performance (of rites) पश्चात्तापादिकं नैमित्तिकानां प्रायश्चित्तानामङ्गत्वेनोक्तम्। स्वातन्त्र्येऽङ्गभावरहितत्वे तद्विधिः प्रायश्चित्त-विधिर्निष्फलोऽनुष्ठानलक्षणफलशून्यः स्यात् Aparā. 1231. 26 (*on* 3. 312)

**अनुष्ठानलब्धि** (anuṣṭhāna-labdhi) *f.* obtainment or accomplishment of the performance (of rites) नादृष्टार्थो नियोगो नियोज्यान्वितोऽभिधीयते, किन्त्वनुष्ठानलब्धये PrakaPañ. 469. 13.

**अनुष्ठानलाभ** (anuṣṭhāna-lābha) *m.* **A** obtainment or accomplishment of the carrying out or execution अर्थावबोधनिष्ठतया तस्य विधेरनुष्ठानलाभः ManuBh. i. 202. 19 (*on* 3. 1); i. 207. 7 (*on* 3. 4); आचार्यकरणविधिप्रयुक्त्या चानुष्ठानलाभे विश्वजिदादिवत् कल्पनानुपपत्तेः Kāśi. i. 39. 2 (*on* 1. 88½); न त्वेतदस्ति (आचार्यके) अकल्पितेऽपि तस्मिन्ननुष्ठानलाभात् NyāyRaMā. 3. 21; नाध्यापनविधिप्रयुक्तस्याध्ययनस्य सिद्ध्येत्। ... अध्यापनस्यापि काम्यत्वात् तद्विषयरागेणैव तन्निष्पादकेऽनुष्ठानलाभात् TattvPradī. (Ci.) 50. 1; यत्रान्यतोऽनुष्ठानलाभः तत्र न नियोज्यकल्पनं, यथाध्ययनविधौ TantrRaha. 58. 19; 60. 20; **B** obtainment or accomplishment of performance (of rites) केवलमेव मन्थनं कृत्वा तेनाग्निना पाकः कार्यः इत्यनुष्ठानलाभात् MīmāKau. i. 243. 25 (*on* i. 4. 12)

**अनुष्ठानलाभार्थ** (anuṣṭhānalābhārtha) *adj.* meant for the obtainment of the performance (of rites) श्रपणस्य प्रयोगमध्येऽनुष्ठानलाभार्थो विधिः VidhiRa. 9 (58. 14)

**अनुष्ठानलिप्सा** (anuṣṭhāna-lipsā) *f.* desire for obtaining the carrying out or execution उमा योगसंसिद्धा ज्ञात्वा शंकरमागतम्। अन्तर्भावविशुद्धात्मा कृपानुष्ठानलिप्सया। तमुवाच BrahmP. 35. 7.

**अनुष्ठानलोकव्यवहारविलोप** (anuṣṭhānalokavyavahāra-vilopa) *m.* loss of the performance (of rites) and (that of) common practice of people ज्योतिरादिशब्दानां हि ज्योतिष्टोमाद्यर्थत्वस्याङ्गीकृतत्वान्नानुष्ठानलोकव्यवहारविलोपः NyāySu. (Ja.) 184B. 2 (*on* i. 4. 2)

**अनुष्ठानलोप** (anuṣṭhāna-lopa) *m.* loss of performance (of rites) अग्निहोत्रादौ प्रतीतिकालोऽन्योऽनुष्ठानकालोऽन्यः यदि च प्रतीतिमात्रेण नियोग-सिद्धिरिहेष्यते तथा सर्वत्रेत्यनुष्ठानलोपः प्रसज्येत BrahmSūBh. (Bhā.) 10. 19 (*on* i. 1. 3)

**अनुष्ठानवचन** (anuṣṭhāna-vacana) *n.* **A** statement of the performance (of rites) ब्रूयादित्यनुष्ठानवचनमविवक्षितस्वार्थमिति ŚābaBh. 948. 2 (*on* iii. 4. 15); ज्ञात्वानुष्ठानवचनाद्विद्वान् यजत इत्यपि BṛĀraUBhVā. (Sambandha.) 198; तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद इत्यविदुषोऽप्यनुष्ठानवचनात् BrahmSūBh. (Rā.) 658. 1 (*on* iii. 3. 41) ; **B** expression of performance (of rites) तदानुष्ठानवचन एव प्रयोगशब्दः प्राप्तशब्दार्थे च भूतशब्दः NyāySu. (So.) 54. 23 (*on* i. 2. 9)

**अनुष्ठानवत्** (anuṣṭhāna-va (n) t ) *adj.* who adheres to the performance (of rites) दुर्वृत्ताः सागराः सर्वे लोकोपद्रवकारिणः। अनुष्ठानवतां नित्यमन्तराया भवन्ति ते BṛNāraP. 8. 75; सिद्धिक्षेत्रमिदम् ...। अनुष्ठानवतामत्र सर्वसिद्धिकरं भवेत् GaṇeP. i. 61. 54; ii. 80. 23; (मुकुन्दस्य) तन्नाम्ना पप्रथे पुरम्। अनुष्ठानवतां नृणां सद्यः परमसिद्धिदम् GaṇeP. ii. 39. 24; ii. 132.25.

**अनुष्ठानवशीकृत** (anuṣṭhāna-vaśīkṛta) *adj.* controlled by the performance (of rites) ददामि वाञ्छितं वोऽहमनुष्ठानवशीकृतः GaṇeP. ii. 37. 9.

**अनुष्ठानवाचिन्** (anuṣṭhāna-vācin) *adj.* expressive of the performance (of rites) (धर्मार्थिभिः ...। अर्थस्य सदसद्भावे यत्नः कार्यः क्रियां प्रति) क्रियाशब्दश्चात्रानुष्ठानवाची TātpaṬ. (U.) 195. 24 (*on* 5 (2). 4)

**अनुष्ठानविकल्प** (anuṣṭhāna-vikalpa) *m.* option or alternative of the performance (of rites) 'दद्यात् पूर्वमुखो द्रव्यमेष एव विधिः सदा। यत्तु कीर्तयन्ति 'प्राङ्मुखस्तु गृह्णीयाद्विवाहे तु विपर्यय' इति तस्य समूलत्वे सिद्धे अनुष्ठानविकल्पः CaturCin. i. 103. 8; विद्याभेद उक्तस्तत्रानुष्ठानविकल्पोऽविशिष्टफलत्वात् VedāntPāSau. 350. 15 (*on* iii. 3. 57); श्रुतिस्मृतिविरोधे तु स्मृत्या मूलान्तरा-नुमानादनुष्ठानविकल्पं केचिदाहुः NyāyPari. 403. 24; अहःपुण्यत्वानुपपत्त्या ... सर्वसंक्रान्तिषु रात्रावनुष्ठानविकल्पः NirṇaSi. 5. 26.

**अनुष्ठानविकल्पमात्र** (anuṣṭhānavikalpa-mātra) *n.* mere option or alternative of the performance (of rites) न ह्यसावनर्थः, अनुष्ठानविकल्पमात्रार्थ-

त्वान्निषेधस्य Kāśi. i. 164. 23 (*on* 2. 203)

**अनुष्ठानविकल्पाङ्गीकार** (anuṣṭhānavikalpāṅgīkāra) *m.* acceptance of the option of the performance (of rites) न च - अत्रापि व्याघातः शङ्क्यः। अनुष्ठानविकल्पाङ्गीकारेण भिन्नप्रयोगविषयत्वात् NyāyMāVi. 602. 21 (*on* x. 8. 3)

**अनुष्ठानविचार** (anuṣṭhāna-vicāra) *m.* deliberation on the performance (of rites) 'पशुमालभेत' इत्यत्र पशुपदे पुंलिङ्गमविवक्षितम्। कुतः। शब्दार्थविचारेऽनुष्ठानविचारे च तदुपयोगदर्शनात् NyāyMāVi. 223. 8 (*on* iv. 1. 5)

**अनुष्ठानविधान** (anuṣṭhāna-vidhāna) *n.* **1** [Inst.] by enjoining of going over, i.e. recitation इदं पुराणम् ...। अनुष्ठानविधानेन मासमात्रं जपेत्तु यः। ... सोऽपि तन्मयतामियात् GaṇeP. ii. 155. 23; **2** enjoining of the employment (of means), cf. **अनुष्ठानविधानशास्त्र**; **3** enjoining of undertaking, cf. **अनुष्ठानविधानाभाव**.

**अनुष्ठानविधानशास्त्र** (anuṣṭhānavidhāna-śāstra) *n.* scripture of (the form of) enjoining of the employment (of means) राद्धान्तस्तु-स्वर्गापवर्गसाधनानुष्ठानविधानशास्त्राणामर्थवत्त्वाय कर्तैवात्मा VedāntDī. 126. 13 (*on* ii. 3. 33)

**अनुष्ठानविधानाभाव** (anuṣṭhānavidhānābhāva) *m.* absence of the enjoining of undertaking कर्मानुष्ठानकर्मसंन्यासयोः ... एकेन सह कर्तुमशक्यत्वात् कालभेदेन च अनुष्ठानविधानाभावात् GītāBh. (Śaṅ.) 151. 12 ( *on* 5. 1)

**अनुष्ठानविधायिन्** (anuṣṭhāna-vidhāyin) *adj.* who carries out the performance (of rites) यजनादिषट्कर्मजपस्वाध्यायध्यानानुष्ठानविधायिने ... समग्रश्रीब्राह्मणलोको(Read लोका)य... प्रदत्तम् EI. xi. 311. 28.

**अनुष्ठानविधि** (anuṣṭhāna-vidhi) *m.* **1** procedure of going over, i.e. recitation अनुष्ठानविधिः को वा पूजास्थानं च किं प्रभो ŚivaP. vi. 2. 27 (472B. 8); एतस्य मन्त्रराजस्यानुष्ठानविधिं मे ब्रूहि VaradottaratāpanīU. 6 (150. 2); **2** injunction of the performance (of rites) अनुष्ठानविधिरेव प्रयोजनोपयोगिनं क्रमविशेषं नियच्छति VedāntKa. 32. 24 (*on* i. 1. 1)

**अनुष्ठानविधित्सा** (anuṣṭhāna-vidhitsā) *f.* desire to undertake the performance (of rites) राजा पौषधशालायामनुष्ठानविधित्सया। उत्ततार करिस्कन्धात् TriṣaŚaPuC. i. 4. 82.

**अनुष्ठानविध्यानर्थक्य** (anuṣṭhānavidhy-ānarthakya) *n.* futility or uselessness of the injunction of performance (of rites) अननुष्ठेयत्वे अनुष्ठातुरभावात् अनुष्ठानविध्यानर्थक्यात् अप्रामाण्यमेव कर्मविधीमामिति चेत् न, प्रागात्मज्ञानात् प्रवृत्त्युपपत्तेः BṛĀraUBh. 675. 7 (*on* iv. 5. 15)

**अनुष्ठानविपर्यय** (anuṣṭhāna-viparyaya) *m.* reverseness or perverseness of the performance (of rites) अनुष्ठानविपर्ययमाह ŚrutaPra. ii. 313. 32 (*on* ii. 2. 35); विषयव्यवस्थादिशङ्कापरिहारार्थं विरोधिकरणन्यायः स्थापनीय एव। तद्यानुमाननिरासमात्रान्न सिध्यति, तत्त्वानुष्ठानविपर्यय(र्यास)स्यानुमानमूलत्वाभावात् ŚrutaPra. ii. 321. 24 (*on* ii. 2. 38)

**अनुष्ठानविपर्यास** (anuṣṭhāna-viparyāsa) *m.* perverseness or reverseness of performance (of rites) तत्त्वानुष्ठानविपर्यय(र्यास)स्यानुमानमूलत्वाभावात् ŚrutaPra. ii. 321. 24 (*on* ii. 2. 38)

**अनुष्ठानविप्लवप्रशमन** (anuṣṭhānaviplava-praśamana) *n.* removing of the confusion regarding the observance कृत्स्नवेदिनो मन्वादयो महर्षयस्तत्तद्देशकालविशेषेष्वकृत्स्नवेदिनां तत्त्वानुष्ठानविप्लवप्रशमनाय स्वानुभूतान् वेदार्थान् यथावन्निबध्नन्ति NyāyPari. 403. 22.

**अनुष्ठानविरोध** (anuṣṭhāna-virodha) *m.* contradiction or opposition to the performance (of rites) अनुष्ठानविरोधस्तु तुल्यो भेदेऽपि कर्मणाम् BālaKrī. i. 16. 6 (*on* 1. 7); सत्यप्यनुष्ठानविरोधे प्रमेयभूतशक्त्यविरोधादुभयोः प्रामाण्यमुपपन्नमिति नैकस्यापि बाधो युज्यते ŚāstrDī. 23. 3 (*on* i. 3. 2); MayūMāli. 23. 2 (*on* i. 3. 2); न च द्रव्यप्राधान्योक्तेरतिवादत्वम्, अनुष्ठानविरोधात् ŚrutaPra. iA. 26. 26 (*on* i. 1. 1); ii. 55. 19 (*on* i. 3. 25); विहितपर्वकाले अनुष्ठानविरोधे प्रधानस्यैव तत्काले अनुष्ठानम् GuruCandr. i. 282. 22.

**अनुष्ठानविरोधादि** (anuṣṭhānavirodhādi) *adj.* contradiction or opposition etc. to the performance (of rites) यत्त्वनुष्ठानविरोधादि चोद्यम्, तत् स्वयमार्जितेनापि तत्सिद्धेर्न किंचित् BālaKrī. i. 245. 1 (*on* 2. 124)

**अनुष्ठानविवर्जित** ( anuṣṭhāna-vivarjita) *adj.* devoid of the performance (of rites) लक्षणं भोजकानाम् ...। भौमास्तु ब्राह्मणा ये तु अनुष्ठानविवर्जिताः। तेऽप्यभोज्या भवन्ति BhaviP. 219B. 34 (i. 147. 28)

**अनुष्ठानविशेष** (anuṣṭhāna-viśeṣa) *m.* particular performance (of rites) चतुष्प्रकारं भिद्यन्ते मुनयः संशितव्रताः। अनुष्ठानविशेषेण श्रेयांस्तेषां परः परः LaViṣṇuSm. 3. 11; मासाग्निहोत्रहोमस्य अनुपदिष्टेतिकर्तव्यताकस्य ... आकाङ्क्षितेतिकर्तव्यतालाभात् अनुष्ठानविशेषो लभ्यते PūrvottaVāNaMā. 10. 10; पूर्वपक्षप्रकरणे पूर्वपक्षसिद्धान्तयोश्चोदकप्राप्तयैकयैव रशनया पशोर्बन्धनमिति नास्त्यनुष्ठानविशेषः MayūMāli. 401. 16 (*on* iv. 4. 9); 658. 1 (*on* x. 1. 1)

**अनुष्ठानविशेषग्रहणार्थम्** (anuṣṭhānaviśeṣagrahaṇārtham) *adv.* for the sake of knowing, i.e. indicating the particular performance (of rites) अनुष्ठानविशेषग्रहणार्थमेव स्वर्गकामविशेषणग्रहणमिति निरवद्यम् ŚābaBh. 1354. 7 (*on* vi. 1. 3)

**अनुष्ठानविशेषतत्पर** (anuṣṭhānaviśeṣa-tatpara) *adj.* devoted to the particular performance (of rites) अभूदनुष्ठानविशेषतत्परः स पार्थिवः प्रार्थितवस्तुसिद्धये VikraDeC. 2. 43.

**अनुष्ठानविशेषफलकत्व** (anuṣṭhānaviśeṣaphalaka-tva) *n.* the state of having the particular performance (of rites) as the result (यदि पक्षद्वयेऽपि न कश्चिदनुष्ठाने विशेषः किमर्थमधिकरणम्) अनुष्ठानविशेषफलकत्वान्मीमांसायाः MayūMāli. 99. 2 (*on* ii. 1. 1); 449. 25 (*on* vi. 1. 2)

**अनुष्ठानविशेषलाभार्थ** (anuṣṭhānaviśeṣalābhārtha) *adj.* meant for the obtainment of the particular performance (of rites) अनुष्ठानविशेषलाभार्थो ह्यधिकार उपास्यते ManuBh. i. 202. 10 (*on* 3. 1)

**अनुष्ठानविशेषविषयत्व** (anuṣṭhānaviśeṣaviṣaya-tva) *n.* the state of referring to the particular performance मार्गवाचिशब्दस्यानुष्ठानविशेषविषयत्वं हि गौणम् ŚrutaPra. ii. 421. 18 (*on* ii. 1. 21)

**अनुष्ठानविशेषसंभव** (anuṣṭhānaviśeṣa-sambhava) *m.* possibility of particular performance (of rites) चतुर्थपक्षे तु द्वयोः समुच्चयेन प्रयोग इत्यनुष्ठानविशेषसंभवादयुक्तमिदं तन्त्ररत्नवाक्यं स्यात् MayūMāli. 623. 25 (*on* ix. 3. 4)

**अनुष्ठानविशेषानर्ह** (anuṣṭhānaviśeṣānarha) *adj.* not deserving, i.e. not referring to any particular performance (of rites) यज्ञशेषतुल्यत्वादनेन स्तुत्यर्थं पुनर्वचनमिति तु गोविन्दराजव्याख्यानमनुष्ठानविशेषानर्हमप्राकरणिकं च ManvaMu. 142. 24 (*on* 3. 285)

**अनुष्ठानविशेषाभाव** (anuṣṭhānaviśeṣābhāva) *m.* absence of the particular performance (of rites) अनुष्ठानविशेषाभावोऽप्यसिद्धः MayūMāli. 99. 2 (*on* ii. i. 1. 1); अनुष्ठानविशेषाभावादप्रयोजनत्वमाशङ्क्याह MayūMāli. 491. 1 (*on* vi. 4. 14); 762. 20 (*on* x. 7. 9)

**अनुष्ठानविशेषार्थम्** (anuṣṭhānaviśeṣārtham) *adv.* for the sake of the particular performance (of rites) शास्त्रस्थानामनुष्ठानविशेषार्थं विवेको युक्तः Kāśi. iii. 231. 23 (*on* 5 (10). 27-28½)

**अनुष्ठानविशेषालाभ** (anuṣṭhānaviśeṣālābha) *m.* non- obtainment of particular performance (of rites) किंचित्फलम् ... अनुष्ठानविशेषालाभात् फलत्वेन न व्यपदिश्यते VidhiRa. 10 (49. 2)

**अनुष्ठानविशेषोपयोगिनी** (anuṣṭhānaviśeṣopayoginī) *adj.(f.)* useful for particular performance (of rites) सोमाङ्गविकारेषु काम्यपश्वादिष्वतिदेशेन दैक्षपशुधर्मातिदेशप्राप्तौ दीक्षा दक्षिणान्तेभ्यो व्यावर्तयन्ती तेष्वेवानुष्ठानविशेषोपयोगिनी VidhiRa. 10 (71. 21)

**अनुष्ठानविषय** (anuṣṭhāna-viṣaya) *m.* **1** object or referent of performance (of rites) प्रसिद्धिप्राचुर्येणानुष्ठानविषय एव यज्ञशब्दस्य मुख्यत्वादिति भावः MayūMāli. 256. 10 (*on* iii. 3. 12); **2** object of undetaking or doing, cf. **अनुष्ठानविषयत्व A**.

**अनुष्ठानविषयत्व** (anuṣṭhānaviṣaya-tva) *n.* **A** the state of being an object of undertaking or doing न ह्यविद्यमानं शशविषाणादिकं तथा दृश्यतेऽनुष्ठानविषयत्वेन PramāVāBh. 9. 20; **B** the state of being an object of performance (of rites) स्वाध्यायत्वम् ...। स्वत्वं च परंपरयाध्ययनाविषयत्वमनुष्ठानविषयत्वं च ...। तेनाध्ययनानुष्ठानयोः स्वपरंपरापरिगृहीताध्ययनानुष्ठानविषयत्वोपपत्तिः BhāṭṭCin. i. 2. 23 (*on* i. 1. 1)

**अनुष्ठानविहीन** (anuṣṭhāna-vihīna) *adj.* devoid of the performance (of rites) अनुष्ठानविहीनाश्च कृमिभक्षं प्रयान्ति हि BṛNāraP. 14. 119; अनुष्ठानविहीनानाम् ...। क्लेशो हि केवलम् ... फलम् BhaviP. 16B. 26 (i. 4. 108); अनुष्ठानविहीनो हि नरकं यात्यसंशयम् BhaviP. 171A. 30 (i. 117. 6); अनुष्ठानविहीना ये न ते भोज्यास्तु भोजकाः BhaviP. 219B. 33 (i. 147.27)

**अनुष्ठानवेला** (anuṣṭhāna-velā) *f.* **1** time for the performance (of rites) न तावदनुष्ठानवेलायामस्मृतः कश्चित्पदार्थः शक्यः कर्तुम् TantrVā. 415. 1 (*on* ii. 1. 31); पदार्थः ...। अनुष्ठानवेलायां येन वाक्येन विहितस्तद्वाक्यं स्मारयति। तेन वाक्येन स्मृतेनानुष्ठानवेलायां पदार्थः स्मारितः सन्ननुष्ठीयते ṬupṬ. 55. 7 (*on* v. 1. 16); अनुष्ठानवेलायां पौर्वापर्यस्य शास्त्रार्थानिर्णायकत्वात् GuruCandr. i. 330. 15; **2** time for going over, i.e. recitation तादृशस्थलेऽनुष्ठानवेलायामप्य-

नियामक: पाठो नान्तरीयकत्वात् पारायणादावेवोपयुज्यते MīmāKau. iii (2). 264. 22 (*on* ii. 2. 23)

**अनुष्ठानवैकल्य** (anuṣṭhāna-vaikalya) *n.* deficiency or defectiveness of performance (of rites) गोत्रप्रयुक्ता प्रयाजादिव्यवस्था भृग्वङ्गिरसादौ तु गोत्राभावादित्याद्यनुष्ठानवैकल्यं प्रसज्येत VīraMi. (Saṁskāra.) 608. 13.

**अनुष्ठानवैलक्षण्य** (anuṣṭhāna-vailakṣaṇya) *n.* difference between the observances यमनियमयोरनुष्ठानवैलक्षण्यं स्मर्यते JīvanVi. 95. 2.

**अनुष्ठानवैषम्य** (anuṣṭhāna-vaiṣamya) *n.* difference between the performances (of rites) आवाहनं त्वनुष्ठानवैषम्येण न प्रसङ्गात्सिध्यति NyāyMāVi. 481. 17 (*on* x. 1. 1)

**अनुष्ठानव्यसन** (anuṣṭhāna-vyasana) *n.* a variety of pride of learning (*lit.* addiction to the observance) शास्त्रवासना त्रिविधा, पाठव्यसनं बहुशास्त्रव्यसनमनुष्ठानव्यसनं चेति JīvanVi. 54. 19; अनुष्ठानव्यसनं विष्णुपुराणे निदाघस्योपलभ्यते। ... निदाघो हि पुन: पुन: प्रबोध्यमानोऽपि कर्मश्रद्धाजाड्यं चिरं न जहौ JīvanVi. 55. 14.

**अनुष्ठानशक्ति** (anuṣṭhāna-śakti) *f.* **1** capacity for performance (of rites) यथा ह्यश्वमेधराजसूयाद्यनुष्ठानशक्तेरपचयस्तथाध्ययनशक्तेरपि ĀtmaTaVi. 896. 12; **2** capacity for following or understanding यथा च प्रत्यक्षस्य प्रसज्यरूपाभावग्रहणमभावविकल्पोत्पादनशक्तिरेव तथा विकल्पानामपि तदनुरूपानुष्ठानशक्तिरेवाभावग्रहणम् TarkBhā. (Mo.) 29. 14.

**अनुष्ठानशक्तियुक्त** (anuṣṭhānaśakti-yukta) *adj.* endowed with the capacity for performance (of rites) न हि फलकाममात्रस्य नियोज्यत्वम्। कस्य तर्हि अनुष्ठानशक्तियुक्तस्य NyāyRaMā. 166. 5.

**अनुष्ठानशक्तिवत्** (anuṣṭānaśakti-vat) *adv.* like the capacity for performance ( of rites) पुरुषाणामनुष्ठानशक्तिवत् अध्ययनशक्तिरपि युगक्रमेणापचीयते ĀtmaTaVi. 896. 19.

**अनुष्ठानशरीर** (anuṣṭhāna-śarīra) *n.* (in Sāṅkhya phil.) the body which is intermediate between the subtle (*liṅga* or *sūkṣma)* and gross body (*sthūla - śarīra*) (generally called the *adhiṣṭhāna-śarīra*), PW.; pw.; MW.; APTE; the body of action, APTE.

**अनुष्ठानशीलता** (anuṣṭhānaśīla-tā) *f.* the state of having inclination, i.e. habit of doing or undertaking सेवा अनुष्ठानशीलता ManuBh. i. 51. 20 (*on* 2. 1 )

**अनुष्ठानशेषत्व** (anuṣṭhānaśeṣa-tva) *n.* **i** the state of being the remainder of the performance (of rites) न तु विद्यास्तुतिमात्रमाख्यानं प्रात:सायंकालयोरुचितहविर्होमानन्तरकालानुष्ठानपूरणं किलाख्यानैर्भवतीति कृत्वा अनुष्ठानशेषत्वं ज्याय: श्रेष्ठं भवति ŚaṅkaVi. (Ā.) 222. 3.; **ii** the state of being what is subservient to the performance (of rites), cf. **अनुष्ठानशेषत्वाभाव** .

**अनुष्ठानशेषत्वाभाव** (anuṣṭhānaśeṣatvābhāva) *m.* absence of the state of being what is subservient to the performance (of rites) अक्षरराशिग्रहणमात्रपर्यन्तत्वे त्वर्थज्ञानस्यानुष्ठानशेषत्वाभावेन कर्मसु कर्तृभूतजीवातिरिक्तात्मप्रतिपादनसंभवात् ŚrutaPra. iA. 28. 28 (*on* i. 1. 1)

**अनुष्ठानशेषभूत** (anuṣṭāna-śeṣabhūta) *adj.* who has become subservient to the performance (of rites) न हि जीवविलक्षण आत्मा संप्रतिपन्न:। अतोऽनुष्ठानशेषभूत आत्मा कर्मसु कर्तृभूतो जीव एव ŚrutaPra. iA. 28. 26 (*on* i. 1. 1)

**अनुष्ठानश्रुत्यर्था** (anuṣṭhānaśruty-arthā) *adj.* (*f.)* meant to state, i.e. eulogise the performance (of rites) अध्ययनात्फलश्रुतिरनुष्ठानश्रुत्यर्था ManuBh. i. 531. 23 (*on* 6. 93)

**अनुष्ठानसंयुक्त** (anuṣṭhāna-saṁyukta) *adj.* associated with, i.e. engaged in the performance ( of rites) यस्य च श्रुताध्ययनानुष्ठानसंयुक्ता बहवो ब्राह्मणा अशौचाभावमिच्छन्ति तस्याप्यशौचं नास्ति HārLa. 104. 7.

**अनुष्ठानसंविद्** (anuṣṭhāna-saṁvid) *f.* knowledge regarding the performance (of rites) सर्वथा न: सक्रमकपदार्थविषयैवानुष्ठानसंवित् Kāśi. i. 171. 7 (*on* 2. 206)

**अनुष्ठानसक्ता** (anuṣṭhāna-saktā) *adj.* (*f.)* devoted to, i.e. engaged in the practice (of sex) अनुष्ठानसक्ता स्त्री बध्वा दूरात् प्रदर्शयेत् JayāS. 27.162.

**अनुष्ठानसंकल्प** (anuṣṭhāna-saṅkalpa) *m.* resolve or determination for the performance (of rites) सर्वमानविरोध एव या प्रधानदुर्दीक्षा दुष्टोऽनुष्ठानसंकल्प: NyāySu. (Ja.) 328B. 1 (*on* ii. 2. 1)

**अनुष्ठानसंनिकर्ष** (anuṣṭhāna-sannikarṣa) *m.* close relation with or proximity to the performance (of rites) ब्राह्मणक्रमस्य प्रथमभावित्वेऽप्यनुष्ठाने विप्रकृष्टत्वाद्दुर्बलत्वं मन्त्रक्रमस्य त्वनुष्ठानसंनिकर्षात्प्राबल्यम् MayūMāli. 414. 7 (*on* v. 1. 9)

**अनुष्ठानसंनिधि** (anuṣṭhāna-sannidhi) *m.* proximity to the performance (of rites) संनिधिस्त्वाम्नानसंनिधिरनुष्ठानसंनिधिरिति द्विविध: Śivārka-MaDī. i. 73. 27 (*on* i. 1. 1)

**अनुष्ठानसंनिधिलक्षण** (anuṣṭhānasannidhi-lakṣaṇa) *adj.* of the characteristic of proximity to the performance (of rites) अनुष्ठानसंनिधिलक्षणेन हि क्रमेण त्रयस्त्रिंशाङ्गता मध्वशनस्य स्यात् ŚāstrDī. 747. 10 (*on* x. 6. 9)

**अनुष्ठानसंनिहित** (anuṣṭhāna-sannihita) *adj.* which is in proximity to the performance (of rites) अनुष्ठानसंनिहितफलवतस्तु परं साकाङ्क्षत्वे प्रसङ्गेनोपकार: MīmāKau. ii. 343. 10 (*on* iii. 3. 12)

**अनुष्ठानसमनन्तरम्** (anuṣṭhānasamanantaram) *adv.* **A** immediately after the observance एक एव सुहृद्धर्मो निधनेऽप्यनुयाति य: इति। क्रियाया अनुष्ठानसमनन्तरमेव नाशात् कुत: कालान्तरान्वय: ManuBh. i. 66. 27 (*on* 2. 6); **B** immediately after the performance (of rites) कारीर्यादिकर्मणां तत्समनन्तरं फलार्थितयानुष्ठीयमानानां न नियमतोऽनुष्ठानसमनन्तरं फलप्राप्ति: ManuBh. i. 71. 15 (*on* 2. 10)

**अनुष्ठानसमय** (anuṣṭhāna-samaya) *m.* **A** time for the performance (of rites) मार्जारस्पर्शनिमित्तं स्नानमुच्छिष्टसमयेऽनुष्ठानसमये च वेदितव्यं समाचारात् Mitā. 353. 7 (*on* 3. 30); प्रयोजनमनुष्ठानसमये मन्त्रात्फलमृत्विग्गततया ज्ञातव्यं पूर्वपक्षे MayūMāli. 340. 5 (*on* iii. 8. 13); देवतेति विधानमात्रेण विधेश्चारिताार्थ्यात् किंत्वनुष्ठानसमये तद्दशायां चाग्निशब्दश्चिरनिवृत्तत्वान्न संनिहित: MayūMāli. 707. 2 (*on* x. 4. 13); **B** time for carrying out or execution, i.e. grammatical operation or use न त्वनुष्ठानसमये प्रयोगगतमिति चोद्यपरिहारयो: क्रियमाणयो: प्रतिपत्तिगौरवं भवति PadMañ. *on* KāśiVṛ. *on* P. i. 1. 0 (55. 13)

**अनुष्ठानसमयासत्त्व** (anuṣṭhānasamayāsat-tva) *n.* non-existence at the time of performance (of rites) गृहदाहादिवदनुष्ठानसमयासत्त्वेऽपि निष्पत्तिमात्रेण निमित्तत्वं कामनाया उपपन्नमिति भाव: MayūMāli. 463. 8 (*on* vi. 2. 3)

**अनुष्ठानसमर्थ** (anuṣṭhāna-samartha) *adj.* competent or capable of performance (of rites) साङ्गस्यैव फलसाधनत्वादनुष्ठानसमर्थस्यैवाधिकार: NyāyRaMā. 168. 3.

**अनुष्ठानसमाप्ति** (anuṣṭhāna-samāpti) *f.* conclusion of the performance (of rites) अपराह्णेऽनुष्ठानसमाप्तिरिति गम्यते ManvaVi. 432. 15 (*on* 3. 256)

**अनुष्ठानसमुपजनितधर्म** (anuṣṭhānasamupajanita-dharma) *adj.* having the characteristic produced through the continuation of connected act अनिष्टवियोगेष्टसंयोगोद्देशेनानुष्ठानसमुपजनितधर्मे संयोगविभागहेतौ लक्षणस्यासंभवित्वात् TattvPradī. (Ci.) 184. 7.

**अनुष्ठानसंपत्ति** (anuṣṭhāna-sampatti) *f.* accomplishment or attainment of the performance (of rites) यतो दर्शनसंपत्त्यैवात्रानुष्ठानसंपत्ति: ManuBh. i. 523. 3 (*on* 6. 75)

**अनुष्ठानसंपन्न** (anuṣṭhāna-sampanna) *adj.* endowed with the performance (of rites) मनुर्नाम कश्चित्पुरुषविशेषोऽनेकवेदशाखाध्ययनविज्ञानानुष्ठानसंपन्न: स्मृतिपरंपराप्रसिद्ध: ManuBh. i. 2. 29 (*on* 1. 1)

**अनुष्ठानसंपाद्यत्व** (anuṣṭhānasampādya-tva) *n.* the state of being what is to be obtained or attained through the performance (of rites) न च प्रसिद्धवायुदेवत्यमेवं स्रष्टव्यमित्यवगम्येतानुष्ठानसंपाद्यत्वात् देवतात्वस्य TantrVā. 606. 4 (*on* ii. 3. 14)

**अनुष्ठानसंभव** (anuṣṭhāna-sambhava) *m.* **1A** possibility of carrying out or undertaking नाचार्येणाप्रवर्तितस्यानुष्ठानसंभव: ManuBh. i. 160. 19 (*on* 2. 165); **1B** possibility of performance (of rites) अविदुषश्च नानुष्ठानसंभव: ManuBh. i. 361. 15 (*on* 4. 80); न चाग्निष्टोमादिवदनावृत्ति:। तस्यादृष्टाफलत्वेन सकृदनुष्ठानसंभवात् TattvPrakā. 200A. 6 (*on* iv. 1. 1); परद्वारैव तत्कर्मणां स्वगतफलमुद्दिश्यानुष्ठानसंभवात् Upask. 260. 7 (*on* vi. 1. 5); शूद्रस्योपनयनाभावेऽपि तदुद्देशेन विशिष्य विहितानां कर्मणां तदङ्गनियमानां चानुष्ठानसंभवेऽप्यन्येषां वैदिककर्मणाम् ... अनुष्ठानं न संभवति ŚivārkaMaDī. i. 489. 24 (*on* i. 3. 39); पूर्वभ्रमत्वकल्पनापक्षे तु पूर्वस्मिन् विस्मृतेऽपि न क्षति:, उत्तरज्ञानविषयस्यैव अनुष्ठानसंभवात् GuruCandr. i. 331. 13; न तावत् वसन्तादिकाल इव जीवनव्याप्ते काले सकृदेव सायंप्रात:कालादौ अनुष्ठानसंभव: MīmāKau. ii. 104. 2 (*on* ii. 4. 2); i. 13. 24 (*on* i. 3. 3); द्वेषोऽपि न सर्वस्येति यस्यैव न तस्यैवानुष्ठानसंभव: VaiyāBhū. 87. 23 (*on* 22); 88. 25 (*on* 22); उच्चार्यमाणत्वे तत एवाष्टकादिकर्तव्यतावगमेनानुष्ठानसंभवात्स्मृतिप्रणयनं व्यर्थम् MayūMāli. 19. 7 (*on* i. 3. 1); **2** possibility of following or going

over mentally, i.e. meditation परोक्षनिश्चयमात्रेणानुष्ठानसंभवात् न कर्तव्येऽनुभवापेक्षा PrakaVi. 45. 18.

**अनुष्ठानसहित** (anuṣṭhāna-sahita) *adj.* associated with the performance (of rites) अवघातादीनामनुष्ठानसहितं फलं व्रीहिषु दृश्यते TantrVā. 680. 20 (*on* iii. 1. 10)

**अनुष्ठानसातत्य** (anuṣṭhāna-sātatya) *n.* continuity of performance (of rites) यावज्जीवमग्निहोत्रं जुहोति ... जीवनस्य निमित्तत्वेनोपन्यासात् सति निमित्ते नैमित्तिकस्यावश्यंभावाज्जीवतोऽनुष्ठानसातत्यमात्रं वर्ण्यते NyāyMāVi. 315. 17 (*on* vi. 2. 7)

**अनुष्ठानसादेश्य** (anuṣṭhāna-sādeśya) *n.* community of place or common location of the performance (of rites), a type of position (*sthāna*) indicating dependence तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः। पाठानुष्ठानसादेश्याद् विनियोगस्य कारणम् TantrVā. 832. 21 (*on* iii. 3. 12); NyāyRaMā. 142. 14; ŚāstrDī. 240. 2 (*on* iii. 3. 6); ArthSaṁ. 61. 4; MīmāKau. ii. 336. 9 (*on* iii. 3. 12); BhāṭṭDī. i. 252. 6 (*on* iii. 3. 5); MīmāNyāPra. 227. 19; औपवसथ्येऽहन्यनुष्ठेयत्वावगतेरेकप्रदेशानुष्ठानाख्यस्यानुष्ठानसादेश्यस्य स्पष्टत्वात् NyāySu. (So.) 1198. 3 (*on* iii. 3. 12); अनुष्ठानसादेश्यात्पशुधर्माणामग्नीषोमीयाङ्गत्वम् NyāyMāVi. 141. 20 (*on* iii. 3. 5); चयनप्रयोगस्य अनुष्ठानसादेश्यात् ज्योतिष्टोमाङ्गत्वप्रसक्तावपि ... चयनस्य काम्यत्वावगमात् न तदङ्गत्वम् MīmāKau. ii. 68. 12 (*on* ii. 3. 22); चयनस्य ज्योतिष्टोमप्रयोगसंवलितत्वादनुष्ठानसादेश्यादेव तदङ्गत्वसिद्धिः BhāṭṭDī. i. 159. 17 (*on* ii. 3. 10); ii. 279. 10 (*on* vi. 4. 10); तदुच्चारणस्यादृष्टद्वारानुष्ठानसादेश्यात् प्रधानऋगङ्गत्वम् BhāṭṭDī. iii. 117. 20 (*on* ix. 2. 9); iv. 57. 5 (*on* x. 6. 9); 'षडङ्गो वेदोऽध्येतव्यः' इत्यनुष्ठानसादेश्यात् ... तादर्थ्येन तत्प्रयुक्त एव विचारो न रागप्रयुक्त इत्यापद्यते SiddhāSi. i. 58. 22; वाक्यकल्प्यपूर्वानुष्ठानविधिनानुष्ठानसादेश्येन तत्प्राप्तिसंभवात् BhāṭṭCin. ii. 60. 7 (*on* i. 4. 6); मध्वशनस्य त्रयस्त्रिंशेऽहन्यनुष्ठितत्वादनुष्ठानसादेश्येन तदङ्गमेवेदमतस्तत्रैवानुष्ठेयम् MayūMāli. 747. 2 (*on* x. 6. 9)

**अनुष्ठानसादेश्यरूप** (anuṣṭhānasādeśya-rūpa) *adj.* of the form of community of place of performance (of rites) निष्फलस्याग्नेः फलवत्सोमाङ्गत्वमनुष्ठानसादेश्यरूपेण स्थानप्रमाणेन सिध्यति VidhiRa. 10 (49. 9); 32 (179. 4)

**अनुष्ठानसादेश्यलक्षण** (anuṣṭhānasādeśya-lakṣaṇa) *adj.* of the characteristic of community of place of performance (of rites) ननु पाठसादेश्यलक्षणस्यानुष्ठानसादेश्यलक्षणस्य वा क्रमस्य प्रकरणादिकल्पनाद्वारा विनियोजकत्वं युक्तम् NyāySu. (So.) 1067. 15 (*on* iii. 1. 24); अनुष्ठानसादेश्यलक्षणस्थानक्रमात् ... आग्नेययागाङ्गत्वोपपत्तेः MīmāKau. i. 228. 15 (*on* i. 4. 9 ); अनुष्ठानसादेश्यलक्षणस्थानबाधापातात् न मन्त्रस्य अष्टाकपालभावनाङ्गत्वे प्रमाणमस्ति MīmāKau. i. 230. 24 (*on* i. 4. 9); यस्मिन्नग्नीषोमीयोऽनुष्ठीयते तस्मिन्नेव दिने धर्माम्नानादनुष्ठानसादेश्यलक्षणं संनिधानम् MayūMāli. 303. 12 (*on* ii. 6. 7)

**अनुष्ठानसादेश्यसंग्रहार्थम्** (anuṣṭhānasādeśyasaṅgrahārtham) *adv.* for the sake of the inclusion of community of place of performance (of rites) अनुष्ठानसादेश्यसंग्रहार्थमर्थपदग्रहणम् MīmāKau. ii. 342. 23 (*on* iii. 3. 12)

**अनुष्ठानसादेश्यस्थल** (anuṣṭhānasādeśya-sthala) *n.* case of community of place of the performance (of rites) अनुष्ठानसादेश्यस्थले ... अक्लृप्तप्रयोजनानां च पशुधर्मादीनां समानदेशेऽनुष्ठानादेव तेषां फलवदङ्गत्वम् MīmāKau. ii. 338. 10 (*on* iii. 3. 12)

**अनुष्ठानसादेश्यस्मरण** (anuṣṭhānasādeśya-smaraṇa) *n.* remembrance of community of place of the performance (of rites) अन्यत्रापि विश्वजिन्न्यायेन स्वर्गकल्पनस्यैवापत्तेः नानुष्ठानसादेश्यस्मरणमस्ति MīmāKau. ii. 336. 20 (*on* iii. 3. 12)

**अनुष्ठानसादेश्यहेतुक** (anuṣṭhānasādeśyahetu-ka) *adj.* caused by the community of place of the performance (of rites) क्रमस्य प्रकरणविरोधे कस्यचिदुदाहरणस्यानुपपत्तेरनुष्ठानसादेश्यहेतुकात्। क्रमादभिषेचनीयाङ्गत्वावगतेः NyāySu. (So.) 1264. 6 (*on* iii. 3. 14)

**अनुष्ठानसादेश्यादि** (anuṣṭhānasādeśyādi) *adj.* community of place of the performance (of rites) etc. बहुत्वप्रकाशनलिङ्गादनुष्ठानसादेश्यादेर्बाधे पूषानुमन्त्रणादिवत् विकृतावुत्कर्षः BhāṭṭDī iii. 147. 4 (*on* ix. 3. 5)

**अनुष्ठानसादेश्यापेक्षण** (anuṣṭhānasādeśyāpekṣaṇa) *n.* expectancy for the community of place of the performance (of rites) यूपस्वरूपे आनर्थक्येन ... अपूर्वसाधनलक्षणार्थमनुष्ठानसादेश्यापेक्षणेन सवनीयार्थत्वस्यैवावगतेः MīmāKau. ii. 356. 11 (*on* iii. 3. 14)

**अनुष्ठानसादेश्यावगत** (anuṣṭhānasādeśyāvagata) *adj.* known from the community of place of the performance (of rites) अनुष्ठानसादेश्यावगताध्ययनाङ्गत्वान्यथानुपपत्त्या अध्ययनस्यार्थज्ञानफलकत्वमभ्युपगन्तव्यम् PūrvottaVāNaMā. 277. 7.

**अनुष्ठानसाधन** (anuṣṭhāna-sādhana) *n.* **i** means of the performance (of rites) कल्पनाद्धि प्रयोगाणां कल्पोऽनुष्ठानसाधनम् TantrVā. 161. 16 (*on* i. 3. 10); **ii** accomplishment of the performance (of rites), cf. **अनुष्ठानसाधनाशक्ति**.

**अनुष्ठानसाधनाशक्ति** (anuṣṭhānasādhanāśakti) *f.* absence of capacity for accomplishment of the performance (of rites) दीर्घसत्रेष्वद्यत्वेऽप्यनुष्ठानसंभवः। ... यत्तु नाद्यत्वे केचिदनुतिष्ठन्तो दृश्यन्त इति—उपदिष्टार्थस्य नित्यवदाम्नातस्यापि बहुभिः प्रकारैरनुष्ठानसाधनाशक्त्या फलानिच्छया वा ManuBh. ii. 274. 6 (*on* 9. 112)

**अनुष्ठानसाधारण्य** (anuṣṭhāna-sādhāraṇya) *n.* commonness (of enjoining) of the performance (of rites) अनुष्ठानसाधारण्यमस्यैकादशे वक्ष्यति द्रव्यस्याकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यादिति TantrVā. 1085. 18 (*on* iii. 6. 15)

**अनुष्ठानसाध्य** (anuṣṭhāna-sādhya) *adj.* which is to be accomplished through the performance (of rites) प्रमाणान्तरावगतं हि काम्यमनुष्ठातृविशेषणम्—अनुष्ठानसाध्यमनुष्ठातृसंबन्धीति विधिः प्रमाणमिति मीयते ManuBh. i. 174. 17 (*on* 2. 189); न ह्यनुष्ठानसाध्यो धर्मोऽनुष्ठानात् पूर्वं वाक्यबोधावसरे अनुभवितुं योग्यः VivaPraSaṁ. 270. 8; अनुष्ठातुरुपांशुत्वानुष्ठानं छद्मगतिरूपमनुष्ठानसाध्याय यज्ञशब्दनिर्दिष्टाय परमापूर्वाय NyāyMāVi. 424. 2 (*on* ix. 1. 6)

**अनुष्ठानसाध्यत्व** (anuṣṭhānasādhya-tva) *n.* the state of being what is to be accomplished through the performance (of rites) अदृष्टादिति चेत् न, तस्याप्यनुष्ठानसाध्यत्वात् Kiraṇā. 221. 9; ननु अर्थज्ञानस्य स्वरूपेणापुरुषार्थत्वेऽपि स्वर्गादिपुरुषार्थसाधनत्वेनोद्देश्यत्वं संभवतीति चेन्न, अनुष्ठानसाध्यत्वात्स्वर्गादेः NītiMā. 3. 4.

**अनुष्ठानसापेक्ष** (anuṣṭhāna-sāpekṣa) *adj.* expectant of the performance (of rites) धर्मज्ञानफलादनुष्ठानसापेक्षाद्विलक्षणं ब्रह्मज्ञानफलं भवितुमर्हति BrahmSūBh. (Śaṅ.) 17. 17 (*on* i. 1. 4)

**अनुष्ठानसामर्थ्यजनन** (anuṣṭhānasāmarthya-janana) *n.* act of producing the capacity for the performance (of rites) अनुष्ठानसामर्थ्यजननस्य दृष्टफलत्वेनासंभवितत्वाशङ्काभावात् तन्निश्चयरूपश्रद्धाजननार्थं स्मारकमन्त्रानपेक्षणात् MīmāKau. ii. 275. 11 (*on* iii. 2. 26)

**अनुष्ठानसामर्थ्यप्रतिबन्ध** (anuṣṭhānasāmarthya-pratibandha) *m.* obstruction, i.e. objection to the capacity for the performance (of rites) विप्रभोजनोपहितस्य श्राद्धात्मकप्रधानस्यानुष्ठानसामर्थ्यप्रतिबन्धे भवति शूद्रस्याधिकारभङ्गः Aparā. 469. 25 (*on* 1. 227)

**अनुष्ठानसामर्थ्यरूप** (anuṣṭhānasāmarthya -rūpa) *adj.* of the form of the capacity for the performance (of rites) अनुष्ठासामर्थ्यरूपकर्तृसंस्कारश्च प्रतिपत्त्यर्थेन सोमभक्षणेन ... अनुनिष्पाद्यते MayūMāli. 223. 19 (*on* iii. 2. 10)

**अनुष्ठानसामान्य** (anuṣṭhāna-sāmānya) *n.* **A** generic class in the case of the performance (of rites) इहापि यागादिभेदे सिद्धे शब्दस्थानीयमनुष्ठानसामान्यं निरूप्यते TantrVā. 448. 13 (*on* ii. 2. 1); **B** performance (of rites) in general श्रौतप्राच्यादिपदस्यार्थाबोधादप्रमाणं श्रुतिरिति चेत्। मैवम्। अनुष्ठानसामान्यस्य मूलश्रुतिकल्पकत्वात् NyāyMāVi. 36. 1 (*on* i. 3. 8)

**अनुष्ठानसाम्य** (anuṣṭhāna-sāmya) *n.* sameness in respect of doing or undertaking साम्यं च शिवशक्त्योः पञ्चविधम् अधिष्ठानसाम्यमनुष्ठानसाम्यमवस्थानसाम्यं नामसाम्यं रूपसाम्यं चेति। ... अनुष्ठानं स(?सृ)ष्ट्यादिकृतम् LalitāSaBh. 54. 10 (*on* 88)

**अनुष्ठानसिद्धि** (anuṣṭhāna-siddhi) *f.* **A** accomplishment, i.e. prescription of the performance (of rites) (as an effect) न हि प्राक् कारणकल्पनातोऽनुष्ठानसिद्धिः BālaKrī. i. 21. 19 (*on* 1. 7); **B** accomplishment or carrying out of the performance (of rites) 'भ्रान्त्याप्यनुष्ठानसिद्धिरिति' चेत्। स्यादप्येकस्य भ्रान्तिः ManuBh. i. 63. 3 (*on* 2. 6); i. 87. 2 (*on* 2. 28); यत्र चान्तरेणापि नियोज्यत्वमधिकारो भवत्यवगतस्तत्र तत एवानुष्ठानसिद्धेः किं नियोज्यत्वेन NyāyRaMā. 8. 18; 3. 11; 18. 23; TattvPradī. (Ci.) 50. 7; श्येनादीनां तु रागादेवानुष्ठानसिद्धेर्न नियोगस्तेषामनुष्ठानमाक्षिपति ŚāstrDī. 33. 4 (*on* i. 1. 2 ); श्रवणादिकालेष्ववश्यानुष्ठेयानां कर्मणामनुष्ठानसिद्धये धर्मविचारप्राथम्यमर्थादापतति ŚivārkaMaDī. i. 45. 24 (*on* i. 1. 1); ननु भक्षणस्य केवलस्य प्रकाशनेनाप्यनुष्ठानसिद्धेः तवाप्यदृष्टार्थत्वं तुल्यम् MayūMāli. 224. 2 (*on* iii. 2. 10); दीक्षणीयादीनां प्रधानारम्भादेवानुष्ठानसिद्धेर्न स्वार्थ आरम्भोऽस्तीत्यर्थः MayūMāli. 650. 6 (*on* x. 1. 2); 855. 3 (*on* xii. 1. 16); **C** obtaining or understanding of the performance (of rites) तेषां (कर्मणाम्) परिज्ञाने कोऽभ्युपायः, न प्रत्यक्षम् ... नाप्यनुमानम् ... न च तावतानुष्ठानसिद्धिः NyāyMañ. i. 230. 3; तर्हि

नियोज्यविशेषणतयैवार्थवादिकं फलं रात्रिसत्रवत् संबध्यताम्। न। अन्यतोऽनुष्ठानसिद्धेः PrakaPañ. 12. 6; श्येनादीनामपि नियोगादेवानुष्ठानसिद्धेः YuktiSneha. 33. 28 (*on* i. 1. 2); विधिपाठबलादेवानुष्ठानसिद्धेर्न चिन्ताविषयत्वम् BhāṭṭDī. ii. 194. 13 (*on* v. 3. 6); iv. 270 . 11 (*on* xii. 3. 13); वचनादेवानुष्ठानसिद्धेर्न पुरुषादरावश्यंभाव इत्यर्थः MayūMāli. 601. 8 (*on* ix. 2. 1)

**अनुष्ठानसिद्ध्यर्थ** (anuṣṭhānasiddhy-artha) *m.* [Loc.] for the sake of accomplishment, i.e. prescription of the performance (of rites) विधिना अनुष्ठानसिद्ध्यर्थे स्तुतेरुपकारकत्वेऽभिहिते विधिमात्रेणानुष्ठानसिद्धेः किं स्तुत्या NyāySu. (So.) 51. 25 (*on* i. 2. 7)

**अनुष्ठानसिद्ध्यर्थम्** (anuṣṭhānasiddhyartham) *adv.* for the sake of accomplishment of the performance (of rites) अनुष्ठानसिद्ध्यर्थमेकद्रव्यविषयमेव कर्म क्रियते Pradī. i. 93A. 32 (*on* i. 2. 64); अवश्यकर्तव्यानामग्निहोत्रादिकर्मणामनुष्ठानसिद्ध्यर्थमर्थज्ञानस्यापेक्षितत्वात् ŚivārkaMaDī. i. 51. 28 (*on* i. 1. 1)

**अनुष्ठानसौकर्य** (anuṣṭhāna-saukarya) *n.* ease or facility for the performance (of rites) शास्त्रस्य महाविषयत्वं पुरुषस्य चानुष्ठानसौकर्यमश्रुतविधिकल्पनस्य अनेन प्रयोजनमुक्तम् NyāySu. (So.) 87. 3 (*on* i. 2. 26); (आहुतीनाम्) लिङ्गविनियुक्तानामप्यनुष्ठानसौकर्याय विनियोगं भाष्यकारादय आहुः VīraMi. (Śrāddha.) 232. 27; MīmāKau. i. 90. 15 (*on* i. 3. 12); अनुष्ठानसौकर्याय प्रकृताविव विकृतावपि पाणिकण्डूयनस्यापेक्षितत्वात्तदपि शास्त्रानुमतमेव MayūMāli. 821. 2 (*on* xi. 3. 6)

**अनुष्ठानसौकर्यार्थम्** (anuṣṭhānasaukaryārtham) *adv.* for the sake of ease or facility for the performance (of rites) प्रत्यक्षविधिविहितार्थानुवादकत्वेऽप्यनुष्ठानसौकर्यार्थं कल्पादिद्वारोपस्थापनमर्थवत् MīmāKau. i. 90. 9 (*on* i. 3. 12)

**अनुष्ठानसौष्ठव** (anuṣṭhāna-sauṣṭhava) *n.* skilfulness or excellence in the observance विश्वामित्र इव त्रयीम्। पाठबोधावनुष्ठानसौष्ठवेन पुनाति ... लक्ष्मीदेवः ŚrīKaC. 25. 89.

**अनुष्ठानस्मरण** (anuṣṭhāna-smaraṇa) *n.* recollection of the performance (of rites) ब्राह्मणं त्वप्राप्तपदार्थविधिनापि चरितार्थम्। अतोऽनुष्ठानस्मरणायैवोत्पन्नत्वान्मन्त्रान्बाधितुं नालम् NyāyMāVi. 270. 27 (*on* v. 1. 9)

**अनुष्ठानस्मारक** (anuṣṭhāna-smāraka) *adj.* [*f.*-ikā, MW.] reminder of the performance (of rites) 'ऊरु प्रथस्व'- इत्यादयोऽनुष्ठानस्मारकाः NyāyMāVi. 71. 6 (*on* ii. 1. 7); मन्त्राश्चानुष्ठानस्मारका इत्येतदङ्गतां भजन्ते SarvaMaSaṁ. 34. 17.

**अनुष्ठानस्मारकादि** (anuṣṭhānasmārakādi) *adj.* reminder etc. of the performance (of rites) तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते NyāyMāVi. 70. 27 (*on* ii. 1. 7); तद्य समाख्यानमनुष्ठानस्मारकादीनां मन्त्रत्वं गमयति NyāyMāVi. 71. 5 (*on* ii. 1. 7)

**अनुष्ठानहित** (anuṣṭhāna-hita) *n.* use or practice of the (medical) attendance or treatment अतिबालो ह्यशक्त एनं विधिमनुष्ठानहिते चक्षुराख्याति KāśyaS. 153 A. 29.

**अनुष्ठानहेतुत्व** (anuṣṭhānahetu-tva) *n.* the state of being the cause of performance (of rites) एतादृशं हेतुत्वं यद्यप्यथशब्देन सिद्धं तथापि तस्यैवानुष्ठानहेतुत्वं वक्तुमतःशब्द इति NyāyRa. 37. 18 (*on* 1. 111); आनन्तर्योपदेशाद्धि अध्ययनेन धर्मज्ञाने योग्यो भवतीत्येतावदेवाथशब्देनोक्तं स्यात् न त्वनुष्ठानहेतुत्वमतस्तद्वक्तुमतःशब्दः YuktiSneha. 14. 3 (*on* i. 1. 1)

**अनुष्ठानहेतुभूत** (anuṣṭhāna-hetubhūta) *adj.* which has become the cause of performance (of rites) लिखितपाठादिना तात्कालिकाचार्योपदेशेन वा शूद्रस्याप्यनुष्ठानहेतुभूतविद्यासंभवाच्छूद्रोऽपि यागाधिकारी NyāyMāVi. 307. 19 (*on* vi. 1. 7)

**अनुष्ठानाक्षेप** (anuṣṭhānākṣepa) *m.* **A** implication of performance (of rites) लोकवदध्याहारे कर्तव्ये सत्यपि, जीवनस्यावश्यकत्वेऽन्तरङ्गत्वे च विधेरनुष्ठानाक्षेपो न कल्पेत PrakaPañ. 387. 4; साधनत्वं च द्वयोरपि कुशशरयोरङ्गत्वाविशेषाद् द्वारसंभवाद्याविशिष्टमिति नानुष्ठानाक्षेपे कश्चिद्विशेषः NyāyRaMā. 184. 14; **B** implication of going over, i.e. recitation अनुष्ठानाक्षेपस्य तु मन्त्रेऽपि तुल्यत्वात् MīmāKau. ii. 226. 11 (*on* iii. 2. 1)

**अनुष्ठानाक्षेपकत्व** (anuṣṭhānākṣepaka-tva) *n.* the state of being what implies the performance (of rites) यद्यपि जीवनमन्तरङ्गं नित्यं च। तथापि तस्मिन्नियोज्यविशेषणे समाश्रीयमाणे विधेरपरमनुष्ठानाक्षेपकत्वं कल्पनीयम् PrakaPañ. 252. 16.

**अनुष्ठानाक्षेपकत्वकल्पना** (anuṣṭhānākṣepakatva-kalpanā) *f.* assumption of the state of being what implies the performance (of rites) विधेरनुष्ठानाक्षेपकत्वकल्पना न कर्तव्या PrakaPañ. 252. 17.

**अनुष्ठानाक्षेपाभाव** (anuṣṭhānākṣepābhāva) *m.* absence of the implication of the performance (of rites) न चैवमनभिहितस्य संभवति ग्राहकग्रहणाभावे च विध्यैदमर्थ्याभावादैदमर्थ्यशून्यस्य विधिनानुष्ठानाक्षेपाभावात्तदनाक्षिप्तानुष्ठानस्य विधेयत्वासंभवान्न विधेयत्वं संभवति MayūMāli. 291. 17 (*on* iii. 5. 12)

**अनुष्ठानागोचर** (anuṣṭhānāgocara) *m.* non-object of the performance (of rites) अनादौ चैवंभूतेऽनुष्ठाने प्रतायमाने प्रकारान्तरमाश्रित्यापि बहुवित्तव्ययायासोपदेशमात्रेण प्रतारणा स्यात्, न त्वनुष्ठानागोचरेण कर्मणा NyāyKuA. i. 25. 2.

**अनुष्ठानाङ्ग** (anuṣṭhānāṅga) *n.* subsidiary to or part of the performance (of rites) अनुष्ठानाङ्गे च वर्तनार्थे जीवतिर्वर्तते ManuBh. i. 334. 5 (*on* 4. 11); अध्ययनप्राप्तस्वाध्यायजन्यमेव ज्ञानमनुष्ठानाङ्गम् TantrRaha. 67. 11; वेदाध्ययनाधीनमेव वेदार्थग्रहणमनुष्ठानाङ्गम् ŚivārkaMaDī. i. 487. 27 (*on* i. 3. 39)

**अनुष्ठानाङ्गत्व** (anuṣṭhānāṅga-tva) *n.* the state of being the subsidiary to or part of the performance (of rites) यथार्थज्ञानस्यानुष्ठानाङ्गत्वं नहि तद्विनानुष्ठानं सिध्यति ŚāstrDī. 219. 2 (*on* iii. 2. 7); यदि यज्ञपतिवत्परार्थं हविः तदपि देवतावदनुष्ठानाङ्गत्वेन स्मर्तव्यमेव ŚāstrDī. 716. 8 (*on* x. 4. 26)

**अनुष्ठानाङ्गीकार** (anuṣṭhānāṅgīkāra) *m.* acceptance of or adherence to the performence (of rites) पूर्वत्राग्निहोत्रस्य स्वकालमबाधितुमेवेष्टिमध्येऽनुष्ठानाङ्गीकारात् NyāyMāVi. 277. 15 (*on* v. 1. 18)

**अनुष्ठानात्मक** (anuṣṭhānātma-ka) *adj.* of the nature of performance (of rites) इतिकर्तव्यतोपदेशः प्रयोगश्चानुष्ठानात्मको विधानशब्देनोक्तः Nyās. i. 442. 7 (*on* ii. 4. 4); फलापहारलक्षणो बाधः ... । न चासावनुष्ठानात्मकस्याचारस्य संभवति MīmāKau. i. 60. 24 (*on* i. 3. 9); अनुष्ठानात्मकस्याचारस्याननुष्ठानरूपबाधासंभवेन वाक्यात्मकतया ... स्मृतितो बलीयस्त्वम् BhāṭṭCin. ii. 26. 16 (*on* i. 3. 5)

**अनुष्ठानात्मकत्व** (anuṣṭhānātmaka-tva) *n.* the state of being what is of the nature of performance (of rites) अपि च तत्रानुष्ठानात्मकत्वाद् भवेदपि न त्वत्र वस्तुरूपाणामैकात्म्ये नाविकल्प्यत्वात् TantrVā. 7. 24 (*on* i. 2.2); किं तर्हि कर्मणः कालः। तस्य हि सोऽङ्गं न तस्य कर्म, तदेव चानुष्ठानात्मकत्वादतिक्रमानतिक्रमौ प्रतिपद्यते न कालः तस्य स्वभावसिद्धत्वात् TantrVā. 635. 4 (*on* ii. 4. 3)

**अनुष्ठानादर** (anuṣṭhānādara) *m.* regard for the observance (of the *śiṣṭas*) यत्तु शाङ्गधरं व्याख्यानं नैतद्वैदिकं वचनं येनाविचारितमुपाददीमहे, तस्मात् सकलजनप्रसिद्ध्यानुगुण्यादनुष्ठानादराच्च सौरमासगतैव युगादिरूपादेया CaturCin. iii (2). 655. 10.

**अनुष्ठानादि** (anuṣṭhānādi) *adj.* **i** performance (of rites) etc. पुरोहितम् ... कुर्यात्। ... उदितोदितं विद्याभिजनानुष्ठानादिभिरुदितैः शास्त्रोक्तैरुदितं समृद्धम् Mitā. 109. 2 (*on* 1. 313); VīraMi. 353. 21 (*on* 1. 313); VīraMi. (Rājanīti.) 60. 2; शौर्यज्ञानानुष्ठानादयो गुणाः सर्वेषामपि भविष्यन्ति न तु त्यागगुणः SiṁhāDvā. 137. 1 (1); **ii** observance etc., cf. **अनुष्ठानाद्युपपत्ति**.

**अनुष्ठानादिक** (anuṣṭhānādi-ka) *n.* performance (of rites) etc. ('अभिसंध्यादिष्वपि चैवम्') आदिशब्दाद्योगानुष्ठानादिकं विवक्षितम् ŚrutaPra. ii. 384. 27 (*on* ii. 3. 51)

**अनुष्ठानाद्यशक्ति** (anuṣṭhānādy-aśakti) *f.* inability or incapacity for the performance (of rites) etc. गुर्वाज्ञानुवृत्तियोगो नाम प्रपत्तेरङ्गानामपि कालादिप्रतिबन्धकबाहुल्येनानुष्ठानाद्यशक्तेरसंभवम् आत्मनि विचार्य श्रीगुरुमेव मोक्षाद्युपायं फलं च मत्वा .... तदुक्तमात्राचरणम् VedāntRaMañ. 3. 8 (97. 8)

**अनुष्ठानाद्युच्छेद** (anuṣṭhānādy-uccheda) *m.* loss of the performance (of rites) etc. (दण्डः मुनीन्देवांश्च पीडयेत्) इतःप्रदानजीवना देवाः। अस्मिंश्चानुष्ठानाद्युच्छेदान्नष्टा एव देवमुनयः ManuBh. ii. 9. 13 (*on* 7. 29)

**अनुष्ठानाद्युपपत्ति** (anuṣṭhānādy-upapatti) *f.* tenability of the observance etc. मन्वादिस्मृतित्वेन पूर्वमहाजनपरिग्रहेणोत्तरोत्तरेषां परिग्रहादनुष्ठानाद्युपपत्तेः TattvCin. iv (1). 503. 1.

**अनुष्ठानाधिष्ठान** (anuṣṭhānādhiṣṭhāna) *n.* supervision over or direction of the execution (of work) तदेव सेनापतिः सर्वयुद्धप्रहरणविद्याविनीतो हस्त्यश्वरथचर्यासंघुष्टश्चतुरङ्गस्य बलस्यानुष्ठानाधिष्ठानं विद्यात् ArthŚā. i. 339. 2 (2. 33)

**अनुष्ठानाधिष्ठित** (anuṣṭhānādhiṣṭhita) *adj.* accompanied by observance न चैवमावयोरनुष्ठानाधिष्ठितयोः कोऽप्यागमविरोधो जनापवादानुबन्धो वा YaśasCam. ii. 148. 8.

**अनुष्ठानाधीनसिद्धि** (anuṣṭhānādhīna-siddhi) *f.* accomplishment or fulfilment dependent on the performance (of rites) अनुष्ठानाधीनसिद्धिर्हि नियोगः NyāyRaMā. 2. 15.

**अनुष्ठानानङ्गत्व** (anuṣṭhānānaṅga-tva) *n.* the state of not being subsidiary to the performance (of rites) सर्वलक्षणेषु प्रतीतिमात्रौपयिकत्वादनुष्ठानानङ्गत्वम् TantrVā. 743. 6 (*on* iii. 1. 14); आत्मज्ञानमनुष्ठानानङ्गत्वाद-

पुरुषार्थमिति। तदयुक्तम् Bhām. 99. 20 (*on* i. 1. 4)

**अनुष्ठानानन्तरम्** (anuṣṭhānānantaram) *adv.* (immediately) after the performance (of rites) यदि त्वनुष्ठानानन्तरमेव स्वर्गो भवति अपूर्वकल्पनावैयर्थ्यम् NyāyKa. 274. 10; न चानुष्ठानानन्तरं फलानुपलब्ध्यैव शास्त्रार्थेऽपूर्वमन्तर्भावयितुं शक्यते ŚāstrDī. 88. 22 (*on* i. 1. 5)

**अनुष्ठानानपेक्ष** (anuṣṭhānānapekṣa) *adj.* not expectant of or dependent on the performance ( of rites) पूर्वतन्त्रेऽनुष्ठानापेक्षोऽभ्युदयः फलम्, उत्तरतन्त्रे तु अनुष्ठानानपेक्षं निःश्रेयसमिति फलभेदः VivaPraSaṁ. 215. 13.

**अनुष्ठानानर्हत्व** (anuṣṭhānānarha-tva) *n.* the state of not being worthy or fit for the performance (of rites) वाक्यार्थग्रहणस्य श्रवणादित्रयानन्तर्भावे चतुर्थस्यापि मुमुक्ष्वनुष्ठेयत्वापात इति चेन्न, तस्य ज्ञानरूपतया अनुष्ठानानर्हत्वात् AdvaiSi. 868. 7.

**अनुष्ठानानियम** (anuṣṭhānāniyama) *m.* absence of obligation of the observance न चाङ्गत्वे सत्युपासनस्यानुष्ठानानियम उपपद्यते BrahmSūBh. (Rā.) 658. 2 (*on* iii . 3. 41)

**अनुष्ठानानुगुण** (anuṣṭhānānuguṇa) *adj.* helpful or conducive to the performance (of rites) अनुष्ठानानुगुणं ज्ञानं जपादि चाध्ययनसंस्कृतेन स्वाध्यायेनैवेत्युक्तं भवति ŚrutaPra. iA. 33. 15 (*on* i. 1.1)

**अनुष्ठानानुपपत्ति** (anuṣṭhānānupapatti) *f.* **A** untenability of the performance (of rites) अस्ति चाग्नीदग्नीन्विहरेत्यादिवचनेनार्थोऽन्यथानुष्ठानानुपपत्तेरिति धर्मविशेषप्राप्तिः TantrVā. 423. 2 (*on* ii.1. 42); अनुष्ठानानुपपत्त्या हि कारणं कल्पयतः कुतोऽनुष्ठानम् BālaKrī. i. 21. 18 (*on* 1. 7); किं वाक्यप्रामाण्यानुपपत्तिर्बाधिका उतानुष्ठानानुपपत्तिः स्वर्गादिफलासिद्धिर्वा TattvPradī. (Ci.) 345. 10; प्रकृते च याज्यापुरोरुचोर्भेदात् सुतरां सकृदनुष्ठानानुपपत्तिः, पृथग्गृहीतानां द्रव्याणां विना वचनं मेलनासंभवाच्च MīmāKau. iii (2) . 231. 4 (*on* ii. 2. 19); अनेकपदार्थानामेकस्मिन् कालेऽनुष्ठानानुपपत्तेः MīmāNyāPra. 233. 29; **B** untenability of carrying out or execution देवयानेन पथा प्रस्थितस्य अर्धपथे सुकृतदुष्कृतक्षयोऽभ्युपगम्येत, ततः पतिते देहे यमनियमविद्याभ्यासात्मकस्य ... पुरुषयत्नस्य इच्छातोऽनुष्ठानानुपपत्तेः BrahmSūBh. (Śaṅ.) 663. 13 (*on* iii. 3. 28); देवयानमध्येऽनुष्ठानानुपपत्तेः प्रहाणानुपपत्तिः ŚrutaPra. ii. 493. 30 (*on* iii. 3. 31)

**अनुष्ठानानुपयोग** (anuṣṭhānānupayoga) *m.* **A** futility or uselessness of doing or carrying out अनुष्टुभा सर्वमिदं सृष्टमनुष्टुभा सर्वमुपसंहृतम् NṛsiṁPūTāU. 2. 3; य एतानि नारसिंहानि चक्राण्येतेष्वङ्गेषु बिभृयात् तस्यानुष्टुप् सिध्यति NṛsimṢaCaU. 85. 8; स चात्मीयपुत्राणामनधिगतशास्त्राणामनुष्ठानानुपयोगेनोद्विग्नमनाश्चिन्तयामास PañcT. 0. 2 (3.32); **B** futility or uselessness of performance (of rites) शब्दार्थमक्षरग्रहणार्थं न त्वर्थज्ञानापेक्षापि। अनुष्ठानानुपयोगात् BālamBha. i. 169. 15 (*on* 1. 51)

**अनुष्ठानानुपयोगिता** (anuṣṭhānānupayogi-tā) *f.* the state of not being useful to the performance (of rites) ननु कलियुगे यद्वर्ज्यं तद्वाक्याध्याहारार्थं दृष्टार्थं वा। न च तावद् दृष्टार्थं, अनुष्ठानानुपयोगितया तदर्थावबोधस्य प्रयोजनत्वानुपपत्तेः CanturCin. iii (2). 668. 13.

**अनुष्ठानानुपरोध** (anuṣṭhānānuparodha) *m.* non-hindrance to the perfomance (of rites) अतोऽनुष्ठानानुपरोधोपरोधप्रयुक्तानुमत्यननुमतिविषयत्वं श्रावणस्य श्रवणस्य च तुल्यम् ŚrutaPra. iA. 36. 16 (*on* i. 1. 1)

**अनुष्ठानानुबन्धिनी** (anuṣṭhānānubandhinī) *adj.* (*f.*) closely connected with, i.e. assisted by the performance (of rites) यदि येनेष्टसिद्धिः स्यादनुष्ठानानुबन्धिनी। तस्य धर्मत्वमुच्येत ततः श्येनादिवर्जनम् ŚlokaVār. 2. 270 (126. 8)

**अनुष्ठानानुमिता** (anuṣṭhānānumitā) *adj* (*f.*) inferred through the performance (of rites) स्मृत्यनुष्ठानानुमितानां शाखानामुच्छेददर्शनात् NyāyKuA. i. 127. 7.

**अनुष्ठानानौपयिकत्व** (anuṣṭhānānaupayika-tva) *n.* **A** the state of not being useful or conducive to the carrying out (of an operation) नैराकाङ्क्ष्ये जाते पश्चादुपजातोऽपि मन्दसदृशबोधोऽनुष्ठानानौपयिकत्वाद् बाध्यते NyāyRa. 450. 16 (*on* 5 (6). 54); **B** the state of not being useful or conducive to performance (of rites) सामान्यस्यानुष्ठानानौपयिकत्वात् ... संबन्धसामान्यस्य ग्रहणमयुक्तम् MayūMāli.137. 15 (*on* ii. 2. 7)

**अनुष्ठानान्त** (anuṣṭhānānta) *m.* [Loc.] at the end or completion of the performance (of rites) अनुष्ठानान्ते ब्राह्मणीभ्यो जीवपत्याभ्यः ... अन्नानि च प्रयच्छेत् PārāSū. 78. 10.

**अनुष्ठानान्तर** (anuṣṭhānāntara) *n.* another act श्रवणकाल एव तद्दर्शनस्य कृतत्वाद्द्रष्टव्यविधेर्नानुष्ठानान्तरं कर्तव्यम् BṛĀraUBh. 109.11 (*on* i.4.7); अननुष्ठिते ब्रह्मण्यनुष्ठितमनुष्ठानान्तरं नापेक्षते ŚivārkaMaDī. i. 17. 34 (*on* i. 1. 1)

**अनुष्ठानान्तरापेक्ष** (anuṣṭhānāntarāpekṣa) *adj.* expectant of or dependent on another act or carrying out निःश्रेयसफलं तु ब्रह्मज्ञानम्, न चानुष्ठानान्तरापेक्षम् BrahmSūBh. (Śaṅ.) 6. 7 (*on* i. 1. 1); ब्रह्मज्ञानं च नानुष्ठानान्तरापेक्षम् Bhām. 50. 1 (*on* i. 1.1)

**अनुष्ठानान्यथानुपपत्ति** (anuṣṭhānānyathānupapatti) *f.* untenability of the performance (of rites) otherwise निष्फलानुष्ठाने प्रवृत्त्ययोगेनानुष्ठानान्यथानुपपत्त्यधीनत्वाच्च प्रयोजनापेक्षायाः MayūMāli. 395. 20 (*on* iv. 4. 2)

**अनुष्ठानापत्ति** (anuṣṭhānāpatti) *f.* undesired contingency of the performance (of rites) यद्वैतुष्याभावे तस्याननुष्ठानं न तु वैतुष्यसंभवेऽपि तत् विदलनादेरप्यनुष्ठानापत्तेः MīmāKau. iii (2). 66. 22 (*on* ii. 1. 9); न चैवमाग्नावैष्णवबार्हस्पत्यधर्माणामपि प्राकृतक्लृप्तक्रमेणैवानुष्ठानापत्तेर्याज्ञिकानां वैकृतमुख्यक्रमानुरोधेनाग्नावैष्णवस्य प्रथमं निर्वापाद्यनुष्ठानं विरुध्येतेति वाच्यम् BhāṭṭDī. ii. 166. 19 (*on* v. 1. 10); नन्वेवं सति संख्याया अङ्गत्वं न स्यात्। तथा च द्वयोरनुष्ठानापत्तिः VaiyāBhū. 227. 1 (*on* 54)

**अनुष्ठानापूर्वद्वार्** (anuṣṭhānāpūrva - dvār) *f.* [Inst.] through (the help of) unseen merit acquired through the performance (of rites) साक्षात्प्रयोजनपर्यवसायित्वं विधेरर्थज्ञानपर्यन्तत्वेऽपि नोपपद्यते, अनुष्ठानापूर्वद्वारा स्वर्गस्यैव प्रयोजनत्वात् ŚrutaPra. iA. 34. 20 (*on* i. 1. 1)

**अनुष्ठानापेक्ष** (anuṣṭhānāpekṣa) *adj.* **i** expectant of or dependent on the performance (of rites) अभ्युदयफलं धर्मज्ञानम्, तच्चानुष्ठानापेक्षम् BrahmSūBh. (Śaṅ.) 6. 6 (*on* i. 1. 1); तदुत्पादनप्रकारभेदादपि तद्भेद इत्याह। (अभ्युदयफलम्) 'तच्चानुष्ठानापेक्षम्' Bhām. 49. 25 (*on* i. 1. 1); पूर्वतन्त्रेऽनुष्ठानापेक्षोऽभ्युदयः फलम् VivaPraSaṁ. 215. 12; यस्तूपसंहारे षष्ठीमिति षण्णां पूरणार्थकः प्रत्ययः सोऽभिधानापेक्षः न त्वनुष्ठानापेक्षः BhāṭṭDī. ii. 145. 13 (*on* iv. 4. 7); **ii** required for the performance (of rites) अनुष्ठानापेक्षस्मृत्युपयोगिनो मन्त्रा एव MayūMāli. 410. 3 (*on* v. 1. 4)

**अनुष्ठानापेक्षित** (anuṣṭhānāpekṣita) *adj.* **A.** required for or useful to the performance (of rites) ते च मन्त्राः केनोपकारेण प्रधानापूर्वसिद्धेरुपकुर्वन्तीति वीक्षायामनुष्ठानापेक्षितद्रव्यदेवतादिस्मारणेनेति कल्पनीयम् VivaPraSaṁ. 147. 14; ŚivārkaMaDī. i. 183. 22 (*on* i. 1. 4); सर्वपदार्थानुष्ठानविधायकस्य प्रयोगविधेरनुष्ठानापेक्षितकर्तृनियमविधायकत्वं संभवति MayūMāli. 241. 2 (*on* iii. 3. 6); **B** required for or useful to the carrying out (eating), cf. **अनुष्ठानापेक्षितस्मृति.**

**अनुष्ठानापेक्षितता** (anuṣṭhānāpekṣita-tā) *f.* the state of being what is required for or useful to the performance (of rites) क्रमस्यानुष्ठानापेक्षिततया प्रकृतावक्गतत्वमात्रेण विकृतौ ग्रहणेऽपि ... प्रक्षेपापेक्षाविरहेणानपेक्षितस्य ग्रहणानुपपत्तेः MayūMāli. 205. 13 (*on* iii. 1. 12).

**अनुष्ठानापेक्षितस्मृति** (anuṣṭhānāpekṣita-smṛti) *f.* recollection required for or useful to the carrying out (eating) एतानि वाक्यानि स्वार्थविधायीनि तथानुष्ठानापेक्षितस्मृत्युपयोगीन्यपि तानि च क्रमवन्ति VedāntKa. 33. 5 (*on* i. 1. 1); तृप्तेर्भक्षणानुनिष्पादित्वेनाननुष्ठेयत्वेनानुष्ठानापेक्षितस्मृत्यनपेक्षत्वात् स्मारकमन्त्रानपेक्षत्वात् LaCandr. 873. 29.

**अनुष्ठानाप्रतिपादकत्व** (anuṣṭhānāpratipādaka-tva) *n.* the state of not being expressive of the performance (of rites) यदि ... न विधिविधेयसंबन्धः (विवक्षितः) ततोऽनुष्ठानाप्रतिपादकत्वेनाक्रियार्थत्वाद्धर्मप्रामाण्यानुपपत्तेः NyāySu. (So.) 45. 12 (*on* i. 2. 7); वेदान्तवाक्यम्। तच्चाज्ञातज्ञापकत्वेऽप्यनुष्ठानाप्रतिपादकत्वान्न विधिः PrasthāBhe. 6. 2.

**अनुष्ठानाबोधकत्व** (anuṣṭhānābodhaka- tva) *n.* the state of not being expressive of the performance (of rites) मण्डनोक्तिश्च तस्य (जयसिंहस्य) अनुकूला। तथापि मण्डनस्यात्यापत्तिविषयत्वेन यथाकाममनुष्ठानाबोधकत्वात् BālamBha. i. 268.7 (*on* 1. 89)

**अनुष्ठानाभाव** (anuṣṭhānābhāva) *m.* **A** absence of carrying out (eating) तृप्तिहेतौ भोजनेऽतीते, वर्तमाने वाप्रवृत्तेः, भविष्यत्यपि तत्साधने सामुद्रविदाख्यात इवानुष्ठानाभावात् PrakaPañ. 427. 7 ; **B** absence of performance (of rites ) उभयदिनेऽपि यदि संभावयितुं शक्यते तदा तु स्वतः पूर्वदिनं ग्राह्यम्, कथंचित्तत्रानुष्ठानाभावे उत्तरदिनं ग्राह्यम् SmṛtiCan. v. 136, 2; ननु कामाधिकारेऽनुष्ठानाभावे फलं न सिध्येत् TantrRaha. 59. 9; **C** absence of observance तपःप्रभृतीनाम् आचाराणां व्यभिचारित्वेन प्रत्येकं ब्राह्मणशब्दप्रवृत्तिनिमित्तत्वायोगाद् युगपदनुष्ठानाभावेन च समुदायाभावात् मा भूत् NyāySu. (So). 14. 29 (*on* i. 2. 2).

**अनुष्ठानाभावप्रसङ्ग** (anuṣṭhānābhāva-prasaṅga) *m.* undesired occasion for the absence of performance (of rites ) मानान्तरस्यात्र वस्तुनि कुण्ठतयानुष्ठानाभावप्रसङ्गात् ĀtmaTaVi. 893. 15.

**अनुष्ठानाभावात्मकत्व** (anuṣṭhānābhāvātmaka-tva) *n.* the state of being what is of the nature of absence of performance (of rites) सत्यमवलम्बेत यदि प्रतिषेधार्थोऽनुष्ठेयो भवेत्। अयं त्वनुष्ठानाभावात्मकत्वान्न कर्तृविशेषमपेक्षते TantrVā. 981. 8 (*on* iii. 4. 13)

**अनुष्ठानाभिप्राय** (anuṣṭhānābhiprāya) *adj.* intended for referring to the performance (of rites) मिथ्यात्वं तावदनुष्ठानाभिप्रायं व्यवहारविसंवादादेव हि सर्वसंविदां मिथ्यात्वं न त्वयाथार्थ्यात् NyāyRaMā. 179. 24.

**अनुष्ठानाभ्युपगम** (anuṣṭhānābhyupagama) *m.* admission or acceptance of the performance (of rites) वैदिकतत्त्वाभ्युपगममनुष्ठानाभ्युपगमं चाह ईश्वराभ्युपगमात् योगस्य चाभिधानादिति ŚrutaPra. ii. 212. 29 (*on* ii. 1. 3)

**अनुष्ठानाम्नानसामर्थ्य** (anuṣṭhānāmnāna-sāmarthya) *n.* strength or force of the laying down of the performance (of rites) गुरोः कल्पस्यानुष्ठानाम्नान-सामर्थ्यात् तदनुष्ठानात् फलभूयस्त्वमनुमीयते ŚābaBh. 2123. 16 (*on* xi. 1. 43)

**अनुष्ठानायासदुःख** (anuṣṭhānāyāsa-duḥkha) *n.* suffering or pain due to the exertion in the performance (of rites) जीवनादिनिमित्तेऽपि नित्यकर्मा-नुष्ठानायासदुःखं जीवनादिनिमित्तस्यैव फलं प्रसज्येत GītāBh. (Śaṅ.) 554. 14 (*on* 18. 66)

**अनुष्ठानायोग** (anuṣṭhānāyoga) *m.* untenability of carrying out or execution न चानेनाचार्येणाङ्गभूतमुपनयनं माणवकान्तरेऽनुष्ठितमिति वाच्यम्, तथा सत्यङ्गिनोऽध्यापनस्यापि तत्रानुष्ठितत्वेन पुनरनुष्ठानायोगात् VivaPraSaṁ. 190. 11; अनन्तानां विधानामेकीकृत्यानुष्ठानायोगात् स्वरूपैक्येऽपि ब्रह्मणो गुणभेदात् विद्याभेदः BrahmSūBh. (Śrī.) ii. 378. 5 (*on* iii. 3. 56)

**अनुष्ठानायोग्य** (anuṣṭhānāyogya) *adj.* **i** (person) not fit for performance (of rites) अतोऽनधीतवेदत्वेन यावन्नित्यनैमित्तिककर्मणोऽनुष्ठानायोग्यः तावदकुर्वन्नपि तानि न प्रत्यवैति Kāśi. i. 49. 7 (*on* 1. 98 1/2); सर्वथानुष्ठानायोग्ये स्थले शक्तिसद्भाव एवासिद्धः MayūMāli. 23. 3 (*on* i. 3. 2); **ii** not fit for carrying out or execution, cf. **अनुष्ठानायोग्यत्व A**.

**अनुष्ठानायोग्यत्व** (anuṣṭhānāyogya-tva) *n.* **A** the state of not being fit for carrying out or execution किं केन कथमित्यनेनात्मनापेक्षितैः साध्यादिभिः पूर्णः प्रत्ययः प्रवृत्तिपर्यन्ते विधौ समर्थः, तद्रहितस्य भावस्यानुष्ठानायोग्यत्वात् Kāśi. i. 60. 19 (*on* 2. 3); एकप्रत्ययोपात्तयोर्विधिभावनयोः प्रत्यासत्त्या संबन्धः प्रतीयते तथापि भावनायाः करणाद्यननुरक्तायाः शुद्धाया अनुष्ठानायोग्यत्वात्स संबन्धो न निर्व्यूढो भवति MayūMāli. 446. 10 (*on* vi. 1. 1); **B** the state of not being fit for performance (of rites) फलाद्यन्वयं च विनानुष्ठानायोग्यत्वाद्विध्यविवक्षायामर्थवद्भूति-कामान्तवचनम् NyāySu. (So.) 42. 22 (*on* i. 2. 7)

**अनुष्ठानार्थ** (anuṣṭhānārtha) *adj.* **1A** having the purpose of performance (of rites) कर्तव्यतोपदेशो ह्यनुष्ठानार्थः ManuBh. i. 63. 1 (*on* 2. 6); विध्यन्तरेषु चानुष्ठानार्थेऽधिकारे लब्धे विधितासिद्धिः NayaVi. 28. 2 (*on.* i. 1. 1); **1B** having the purpose of observance (of duties) अग्नीन्धनादीनां पुनर्वचनम् ... उत्तरेषामप्या-श्रमिणामनुष्ठानार्थम् ManuBh. i. 132. 14 (*on* 2. 108); **2** having the sense of, i.e. referring to carrying out or execution ब्राह्मणजीविकामनुतिष्ठेत्। ... अनुष्ठानार्थोऽयं जीवतिः ManvaMu. 146. 11(*on* 4. 11)

**अनुष्ठानार्थत्व** (anuṣṭhānārtha-tva) *n.* the state of having the purpose of performance (of rites) प्रकाशनस्यानुष्ठानार्थत्वेन सकृत्प्रकाशनेनाप्यनुष्ठानसिद्धौ प्रकाशनान्तरानुपयोगात् BhāṭṭDī. iv. 270. 11 (*on* xii. 3. 13)

**अनुष्ठानार्थम्** (anuṣṭhānārtham) *adv.* **A** for the sake of performance (of rites) अनुष्ठानार्थमधिकारापेक्षा तच्च विध्यन्तरप्रयुक्त्या लब्धम् NayaVi. 26.9 (*on* i. 1. 1); न प्रयोजनानुष्ठानलाभात् अनुष्ठानार्थं ह्यधिकारोऽपेक्ष्यते NyāyRaMā. 13. 2; विश्वजिदादिष्वनुष्ठानार्थमेवाधिकारिकल्पनात् विधीनामधिकारिपर्यवसायित्व -नियमस्याप्रामाणिकत्वात् ŚivārkaMaDī. i. 29. 20 (*on* i. 1. 1); तद्ग्रहणाद्यपटूनामष्ट-वर्षादीनामचिरोपनीतानामनुष्ठानार्थमनुष्ठेयार्थज्ञानप्रवृत्तानां बोधो बुद्धिः BālamBha. i. 2. 18 (*on* 1.1); **B** for the sake of observance (of duties) धर्मार्थौ च परस्पर-विरोधेनानुष्ठानार्थमवधारयेत् ManvaMu. 161. 28 (*on* 4. 92); जाबालयमवचनाभ्यां प्रतिषिद्धानाम्... स्वाध्यायानामप्यनुष्ठानार्थम् HārLa. 6.14.

**अनुष्ठानार्थिन्** (anuṣṭhānārth-in) *adj.* **A** desirous of observance लोकसंमतैः प्रमाणैरर्थसद्भावः पूर्वमनुष्ठानार्थिभिः प्रतिपादनीयः TātpaṬ. (U.) 195. 23 (*on* 5 (2). 4); **B** desirous of carrying out or execution यश्च बुद्धावर्थः प्रतिभाति न स एवार्थः। अन्यथा सकलसमीहितार्थसिद्धेर्न कश्चिदनुष्ठानार्थी भवेत् PramāVāBh. 8. 4.

**अनुष्ठानावगति** (anuṣṭhānāvagati) *f.* knowledge of the performance (of rites) अप्राप्तत्वेन विधिकल्पनात् स्वस्थानादपकृष्य पूर्वमनुष्ठानावगतेः MīmāKau. i. 228. 15 (*on* i. 4. 9); न हि प्रयोजनावगमात् पूर्वमनुष्ठानावगतिः MīmāKau. iii (2). 336. 18 (*on* iii. 3. 12)

**अनुष्ठानावगम** (anuṣṭhānāvagama) *m.* knowledge of the performance (of rites) अनुष्ठानं ह्यंशत्रययुक्तभावनावगत्यनन्तरमुपनिपतति। तेनानुष्ठानावगमात् प्रागेव भावनाया भाव्यनिष्ठत्वस्वाभाव्यात् प्रयोजनाकाङ्क्षा MayūMāli. 395. 23 (*on* iv. 4. 2)

**अनुष्ठानावगमोत्तरापेक्षत्व** (anuṣṭhānāvagamottarāpekṣa-tva) *n.* the state of being what is expected or required after the knowledge of performance (of rites) प्रयोगविधिविधेयत्वाभावेऽपि क्रमस्यानुष्ठानावगमोत्तरापेक्षत्वात् तस्य च फलवत्त्वज्ञानोत्तरकालीनत्वेन उक्तविधया न विशेषकत्वम् BhāṭṭDī. ii. 152. 12 (*on* iv. 4. 12)

**अनुष्ठानावगमोपपत्ति** (anuṣṭhānāvagamopapatti) *f.* tenability of the knowledge of performance (of rites) (पशुयागस्य) अनुष्ठानक्रमनियामकस्याग्नीषोम-प्रणयनविध्यनन्तरपाठस्य सत्त्वेन तदनन्तरमनुष्ठानावगमोपपत्तेः MīmāKau. iii(2). 338. 14 (*on* iii. 3. 12)

**अनुष्ठानावघात** (anuṣṭhānāvaghāta) *m.* destruction, i.e. loss of the performance (of rites) शरीरविघातेऽनुष्ठानावघातात् TantrRa. 23. 5.

**अनुष्ठानावबोध** (anuṣṭhānāvabodha) *m.* knowledge of observance (of duties) त्रिवर्गप्रतिपत्तिरनुष्ठानावबोधलक्षणोक्ता JayaMa. 15. 16 (*on* 1. 2).

**अनुष्ठानावश्यकत्व** (anuṣṭhānāvaśyaka-tva) *n.* necessity of performance (of rites) सोमप्रक्षेपेण हविरन्तरप्रक्षेपसिद्धिः, तस्य पृथगनुष्ठानावश्यकत्वात् BhāṭṭDī. iv. 225. 8 (*on* xii. 1. 4)

**अनुष्ठानाविरोध** (anuṣṭhānāvirodha) *m.* non-contradiction to the performance (of rites) आद्यताश्च मन्वादयः तस्मादखिलवेदार्थाभिज्ञाः तदुपदेशाद्यान्यस्या-वगतेरनुष्ठानाविरोधः BālaKri. i. 173. 10 (*on* 1. 266)

**अनुष्ठानाविवक्षार्थ** (anuṣṭhānāvivakṣārtha) *m.* [Loc.] in the case of absence of desire or intention for performance (of rites) कल्पकाभावान्नाध्या-हारादिभिर्विधिकल्पनेत्यर्थः अनेन चानुष्ठानाविवक्षार्थे श्रौतार्थाविवक्षेत्युक्तम् NyāySu. (So.) 54.17 (*on* i. 2. 9)

**अनुष्ठानाविशेष** (anuṣṭhānāviśeṣa) *m.* non-difference in (sameness of) the performance (of rites) किं कृत्स्नफलार्थिनो यागोपदेश उतावयवार्थिनोऽ-पीत्युपदेशोऽधिकार एव चिन्त्यते सत्यप्यनुष्ठानाविशेषे ṬupṬ. 103. 6 (*on* vi. 2. 1); यूपार्था रशना तस्माद्भवेन्न पशुबन्धनी। ... सिद्धान्तस्तु यूपसंस्कारार्थमित्येवमाहुः। तथा सत्यनुष्ठानाविशेषान्निष्प्रयोजना चिन्ता स्यात् ŚāstrDī. 401.7 (*on* iv. 4. 9); प्रक्रान्तकर्मणो नैमित्तिकद्रव्यान्तरेण समापनेऽपि ... पुनःकरणावश्यंभावादनुष्ठानाविशेषादिदं निष्फलम् MayūMāli. 488. 10 (*on* vi. 4. 9); अनुष्ठानाविशेषः शङ्कितः MayūMāli. 658. 1 (*on* x. 1. 11)

**अनुष्ठानावृत्ति** (anuṣṭhānāvṛtti) *f.* repetition of performance (of rites) अनुष्ठानावृत्तिरपि ज्योतिष्टोमस्यानेकद्रव्यदेवतासंयोगसंपादनार्था दृश्यते TantrVā. 445. 1 (*on* ii. 2. 1)

**अनुष्ठानाशक्ति** (anuṣṭhānāśakti) *f.* **Ai** incapacity or inability for performance (of rites) 'न कंचन पाप्मानं स्पृशति' इत्यत्रानुष्ठानाशक्तिर्विवक्षिता ŚrutaPra. ii. 433.9 (*on* iii. 2.9); प्रायश्चित्तयोः ... समुच्चित्यानुष्ठानाशक्तेरन्य-तरस्मिन्ननुष्ठेये किं पूर्वनिमित्तकमनुष्ठेयम् उतोत्तरनिमित्तकम् UpaParā. 5.20; 'कृष्णलं श्रपयेत्सोमेन यजेते'त्यादौ न प्रत्यक्षानुरोधेन लक्षणाश्रयणं किंत्वनुष्ठानाशक्त्या SiddhāLeSaṁ. 253.2; **Aii** impossibility of performance (of rites) एकस्मिन्कर्मणि सर्वशाखागतानामङ्गानामनुष्ठानाशक्त्या ... शाखान्तरे कर्मभेदः स्यात् MayūMāli. 181.9 (*on* ii.4. 2); **B** incapacity or inability for carrying out or execution, cf. **अनुष्ठानाशक्तिदर्शन**.

**अनुष्ठानाशक्तिदर्शन** (anuṣṭhānāśakti - darśana) *n.* perception of incapacity or inability for carrying out or execution 'शशिमण्डलं कान्तिमत् कुर्यात्' इति विधौ अनुष्ठेयत्वाभिमतस्य शशिमण्डले कान्तिमत्त्वस्य प्रत्यक्षाविरोधेऽ-प्यनुष्ठानाशक्तिदर्शनेन तस्यास्ततो भिन्नत्वात् SiddhāLeSaṁ. 253.9.

**अनुष्ठानाशक्तिहेतु** (anuṣṭhānāśakti - hetu) *m.* cause of incapacity or inability for performance(of rites) उत्पत्तिकालेऽनुष्ठानाशक्तिहेतोर्दक्षिणाबाहुल्या-देरनवगमेनोत्पत्तिवाक्यश्रुतमेकत्वमनुपसंजातविरोधित्वान्न परित्याज्यम् MayūMāli. 251.9 (*on* iii. 3.9)

**अनुष्ठानाश्रवण** (anuṣṭhānāśravaṇa) *n.* non - hearing, i.e. non-mention of the performance (of rites) रात्रिष्वनुष्ठानाश्रवणादाकाङ्क्षायां प्रतितिष्ठन्तीत्यर्थवादः ManuBh. i. 465.26 (*on* 5. 89)

**अनुष्ठानासमर्थत्व** (anuṣṭhānāsamartha - tva) *n.* the state of not being capable of performance (of rites) तिर्यगादीनां विधिनिषेधविवेककारणविधुरतया द्रव्यहीनतयानुष्ठानासमर्थत्वान्नास्त्यधिकार इति निर्णीतम् PrakaVi. 266.20.

**अनुष्ठानासंभव** (anuṣṭhānāsambhava) *m.* **A** impossibility of performance (of rites) अग्निहोत्रादिशास्त्राणि ... विद्यामन्तरेणानुष्ठानासंभवात् ... चतुरो वर्णानधिकुर्युः ŚāstrDī. 6.9 (*on* i. 1.1); 199.11 (*on* iii. 1.10); न चैतावताध्ययनस्य क्रत्वर्थत्वप्रसङ्गः तदापादितं ज्ञानं क्रत्वङ्गम्। तेन विनानुष्ठानासंभवेन सामर्थ्यादेव तदङ्गत्वसिद्धेः TantrRaha. 69.11; मन्त्राणां चानुष्ठेयार्थप्रकाशनद्वारेणैव करणत्वात् पदार्थज्ञानाधीनत्वाच्च वाक्यार्थज्ञानस्य मन्त्रस्थपदार्थज्ञानाय निरुक्तमवश्यमपेक्षितम्, अन्यथानुष्ठानासंभवात् PrasthāBhe. 8.10; युगपदनुष्ठानासंभवेनाकाङ्क्षितस्य क्रमादेः श्रुत्यादिना निर्णेयत्वात्पदार्थाविरोधेनैव कल्प्यत्वान्न पदार्थविरोधित्वम् GuruCandr. i. 352.10; **B** impossibility of observance (of duties) आपदि मुख्याशौचकल्पानुष्ठानासंभवेन सद्यःशौचाद्यनुकल्पमुक्त्वेदानीं तत्प्रसङ्गादापदि ... उक्तयाजनादिमुख्यवृत्त्यसंभवेन वृत्त्यन्तरमाह Mitā. 356.3 (*on* 3.35); शूद्रस्य ... °उपनयनाभावेन ... प्रत्युपस्थितनियमाचाराणाम् ... विद्यापेक्षितानां विद्यायाश्चानुष्ठानासंभवात् ŚivārkaMaDī. i. 489.12 (*on* i. 3.39)

**अनुष्ठानासिद्धि** (anuṣṭhānāsiddhi) *f.* non - establishment or non - accomplishment of the performance (of rites) विधिसंबन्धं विनानुष्ठानासिद्धेः, विध्यधीना हि प्रवृत्तिर्नाभिधानविनियोगमात्राधीना YuktiSneha. 151.34 (*on* i.1.7)

**अनुष्ठानिक** (anuṣṭhānika) *m.* name of a class of Theistic Reformers, MW.

**अनुष्ठानी** (anu-ṣṭhānī) *f.* performance (of rites) सर्वैरुपतिष्ठन्ति ... अपि वानुष्ठानीभिः KauśiSū. 81.42; एता अनुष्ठान्यः KauśiSū. 81.43 [action, doing, pw.; MW.; Apte]

**अनुष्ठानैककाल्यमात्र** (anuṣṭhānaikakālya - mātra) *n.* mere simultaneity of performances (of rites) नानुष्ठानैककाल्यमात्रादङ्गाङ्गिभावः, दर्शादावभावात् SiddhāSi. i. 58.25.

**अनुष्ठानैकतानमनस्** (anuṣṭhānaikatāna - manas) *adj.* having the mind (fixed) on a single objective of observance निजनियमानुष्ठानैकतानमनसि ... धन्वन्तरियतीश्वरे YaśasCam. ii. 285.8.

**अनुष्ठानैकरूप्य** (anuṣṭhānaikarūpya ) *n.* similarity or identity of performances (of rites)संशयप्रदर्शनावसरे ग्रन्थकारेणोक्तम्। ... क्रियमाणं प्रकरणाद्उभयोर्दर्शपूर्णमासयोरङ्गमिति। ततश्च पक्षद्वयेऽप्यनुष्ठानैकरूप्यात् किं प्रयोजनं चिन्तायाः MayūMāli. 390.4 (*on* iv. 3.14)

**अनुष्ठानोक्ति** (anuṣṭhānokti) *f.* mention or statement regarding the performance (of rites) 'शक्रेण वर्षकोटीश्च ... शिरसाकृत'मित्यादिस्मृतिषु क्लेशेनानुष्ठानोक्तेश्च Nyāyāmṛ. 645B. 5.

**अनुष्ठानोच्छेद** (anuṣṭhānoccheda) *m.* loss or discontinuity of performance (of rites) पुरुषाणामनुष्ठानशक्तिवत् अध्ययनशक्तिरपि युगक्रमेणापचीयते ततो वेदानां शाखोच्छेदः तदर्थानामनुष्ठानोच्छेदः ĀtmaTaVi. 897.1.

**अनुष्ठानोत्तरकालम्** (anuṣṭhānottarakālam) *adv.* at the time subsequent to the performance (of rites) यागादिजनितं च पुंसां फलप्राप्तिसामर्थ्यमपूर्वशब्दवाच्यं यागानुष्ठानात्पूर्वमभूतमनुष्ठानोत्तरकालं चापूर्वं जायते TantrVā. 254.17 (*on* i.3.26); अनुष्ठानोत्तरकालं यत्फलं भविष्यति तत् विधेरुपगतमिति विध्याश्रयं तत्प्रमाणकम् NyāySu. (So.) 59.11 (*on* i. 2.10)

**अनुष्ठानोत्तरभाविन्** (anuṣṭhānottara - bhāvin) *adj.* occurring or originating after the performance (of rites) अनुष्ठानोत्तरभाविकामनाविषयत्वावच्छिन्नोत्पत्तिवारणाय ... प्रवृत्तिप्रयोजकेति कामनाविशेषणम् BhāṭṭDī. ii. 131.20 (*on* iv. 3.9)

**अनुष्ठानोत्सर्गस्नान** (anuṣṭhānotsarga - snāna) *n.* ablution after the completion of the performance (of rites) अनुष्ठानोत्सर्गस्नानम् PārāSū. 78.9.

**अनुष्ठानोत्साद** (anuṣṭhānotsāda) *m.* loss or discontinuity of performances (of rites) भगवतो व्यासस्य ... वचनानि ...। अनुष्ठानोत्सादमवेक्ष्य 'दानमेकं कलौ युगे' इत्यादीनि ĀtmaTaVi. 897. 6.

**अनुष्ठानोपक्रम** (anuṣṭhānopakrama) *m.* commencement of performance (of rites) अनुष्ठानोपक्रमे या कामना तद्विषयत्वावच्छिन्नस्यैकस्यैवोत्पत्तिर्नान्यस्य BhāṭṭDī. ii. 131. 22 (*on* iv. 3.9)

**अनुष्ठानोपदेश** (anuṣṭhānopadeśa) *m.* **A** instrucrion regarding the employment (of means) चतुर्थाश्रमोचितमोक्षोपायानुष्ठानोपदेशाय षष्ठोऽध्यायः समस्त एव मनुनानुक्रान्तः NyāyMañ. ii. 85.7; **B** instruction regarding performance (of rites) प्रत्यधिकरणं न्यायव्युत्पादनेनानुष्ठानोपदेश एव सर्वत्र Kāśi. iii. 106.25 (*on* 5(5).14); शक्तिः ... सानुष्ठानोपदेशान्यथानुपपत्त्या अशक्तस्य तदुपदेशासंभवात् कल्प्यते NyāyRaMā. 115.19; **C** instruction regarding observance, cf. **अनुष्ठानोपदेशद्वार**.

**अनुष्ठानोपदेशद्वार** (anuṣṭhānopadeśa - dvāra) *n.* [Inst.] through the instruction regarding observance (of duties) ब्रह्मा ... ब्राह्मणान् सृष्टवान्। ... अनुष्ठा-नोपदेशद्वारेण धर्मसंरक्षणार्थम् Mitā. 69.12 (*on* 1.198)

**अनुष्ठानोपदेशपरत्व** (anuṣṭhānopadeśapara - tva) *n.* the state of being what is intended to instruct the performance (of rites) ननु विधायकं शास्त्रमिति शास्त्रलक्षणम्, न च तानि कंचिद् विदधति। मैवम्। सर्वेषामेवानुष्ठानोपदेशपरत्वात् Kāśi. iii. 106.23 (*on* 5(5).14)

**अनुष्ठानोपपत्ति** (anuṣṭhānopapatti) *f.* **A** tenability of performance (of rites) न च कर्तारमन्तरेणानुष्ठानोपपत्तिः PrakaPañ. 252.6; स्वल्पविद्यस्याप्यनुष्ठानोपपत्तिः ManuBh. i. 145.6 (*on* 2.136); न च दध्यानयनस्योभयप्रयुक्तिमन्तरेणानुपपत्तिः तस्याप्येकेनैवानुष्ठानोपपत्तेः TantrRa. 81.11; न चैवमपि शाखान्तरीयाङ्गानाम् ... अध्ययनविधिसिद्धज्ञानाभावात् कथमनुष्ठानोपपत्तिः MīmāKau. ii. 123. 19 (*on* ii. 4. 19); iii (2). 196. 14 (*on* ii. 2. 13); अवघातस्य भर्जनात्पूर्वमेवानुष्ठानोपपत्तेर्नात्र धाना उदाहरणम् BhāṭṭDī. iii. 244.2 (*on* x.2.33); **B** tenability of carrying out or execution 'गामानये' इति करणानुपादानादपरिपूर्णता स्यात्। अथैककारकज्ञानेनापि तावदनुष्ठानोपपत्तेर्न कारकान्तरजिज्ञासा PrakaPañ. 385.15; **C** tenability of observance (of duties) उपनयनप्रभृत्यनुष्ठानवत् हितैषिवचनादनुष्ठानोपपत्तेः ŚrutaPra. iA. 36.21 (*on* i. 1.1)

**अनुष्ठानोपपत्त्यर्था** (anuṣṭhānopapatty - arthā) *adj.* (*f.*) having the purpose of tenability of performance (of rites) इह तु स्वरूपस्यान्यतोऽधिगतेर्वैषम्यम्। किंच, अनुष्ठानोपपत्त्यर्था कल्पना BālaKrī. i. 24.18 (*on* 1.7)

**अनुष्ठानोपयुक्तार्थ** (anuṣṭhānopayuktārtha) *m.* thing useful for or conducive to the performance (of rites) त्रियम्बकादिभिर्मन्त्रैरपि देवो महेश्वरः। अनुष्ठानोपयुक्तार्थस्मारकैः प्रतिपाद्यते SarvaSiSam. 6.21.

**अनुष्ठानोपयोग** (anuṣṭhānopayoga) *m.* use of or contribution towards the performance (of rites) प्रधानान्यप्यङ्गानामनुष्ठानोपयोगं कुर्वन्ति शेषत्वं गच्छेयुः ŚāstrDī. 185.9 (*on* iii. 1.2); यद्यपि च मानादीनां सर्वाभ्यासीयसोमे सकृदेवानुष्ठानान्न तावता कश्चिदनुष्ठानोपयोगः MīmāKau. ii. 299.12 (*on* iii.2.38); अत एव वचनबलात्पूर्वेषां मन्त्राणां संस्कारद्वारा, अन्त्यस्य तु साक्षादेवानुष्ठानोपयोग इति वैषम्यकल्पनेऽपि न दोषः BhāṭṭDī. iv. 270.19 (*on* xii. 3.14)

**अनुष्ठानोपयोगप्रदर्शन** (anuṣṭhānopayoga - pradarśana) *n.* showing or explaining of the use of performance (of rites) व्युत्पादनस्यानुष्ठानोपयोगप्रदर्शनाय विषयान्तरे तस्यातिदेशमात्रपरत्वादस्य नात्र पूर्वपक्षेण कार्यम् MayūMāli. 673. 15 (*on* x. 2. 24)

**अनुष्ठानोपयोगाभाव** (anuṣṭhānopayogābhāva) *m.* absence of use of the performance (of rites) तस्य भक्षणातिरिक्तव्यापारसाध्यत्वाभावेन तत्प्रकाशनस्य ... अनुष्ठानोपयोगाभावात् MayūMāli. 223.20 (*on* iii. 2.10)

**अनुष्ठानोपयोगिज्ञान** (anuṣṭhānopayogi - jñāna) *n.* knowledge useful to the performance (of rites) त्रैवर्णिकानामप्यनुष्ठानोपयोगिज्ञानाक्षेपस्य संप्रतिपन्नत्वात् तद्वच्छूद्रस्यापि विद्यानुष्ठानोपयोगिज्ञानाक्षेपस्संभवति ŚivārkaMaDī. i. 486.32 (*on* i. 3. 39)

**अनुष्ठानोपयोगित्व** (anuṣṭhānopayogi - tva) *n.* **1** the state of being what is useful to the employment (of words or denotation) न च जातिव्यक्त्योरिव संबन्धः सत्तामात्रोपयोगीति वाच्यं तस्य प्रत्यक्षाविषयत्वात्। अस्य चानुष्ठानोपयोगित्वात् Śarka. 12.17; **2** the state of being what is useful to the performance (of rites) अतोऽनुष्ठानोपयोगित्वेनार्थवादा ग्राह्या भवन्ति ŚaṅkaVi. (A.) 222.4; अध्ययनविधिबलेन वेदजन्यज्ञानस्यैवानुष्ठानोपयोगित्वात् MayūMāli. 30.31 (*on* i. 3.4)

**अनुष्ठानोपयोगिधर्म** (anuṣṭhānopayogi - dharma) *m.* property or characteristic useful to the performance (of rites) अनुष्ठानोपयोगिधर्मलाभाय ... साध्यधर्मावलम्बनगौणत्वमङ्गीकृत्य तस्य नैयमिकाग्निहोत्राङ्गकलापप्रापकत्वमुक्तम् ŚivārkaMaDī. i. 358.7 (*on* i. 2.14)

**अनुष्ठानोपयोगिन्** (anuṣṭhānopayogin) *adj.* [*f* - ī] **A** useful to the performance (of rites) इयती सा विद्यानुष्ठानोपयोगिनी यदधिकमाहोपुरुषिकामात्रं तदर्थवाद एव ManuBh. i. 465. 23 (*on* 5.89); न हि नियोज्यत्वावच्छेदकत्वं शक्तिविशिष्टस्य अनुष्ठानोपयोगिनी हि सा न शेषित्वोपयोगिनी अनुष्ठातुरेव शेषित्वादशक्तानामनधिकारो राजसूय इवाराज्ञः NyāyRaMā. 166.22; ज्यौतिषमप्यध्ययनोपयोगिनमनुष्ठानोपयोगिनं च कालविशेषं प्रतिपादयति PadMañ. *on* KāśiVṛ. *on* P. i. 1. 0 (7.4); एवमनुष्ठानोपयोगिना सर्वेणापि रूपेण द्वादशलक्षण्या विचारितस्य धर्मस्यानुष्ठानद्वारा ज्ञानसाधनत्वं युक्तमिति प्रकृतोपयोगमाह ŚivārkaMaDī. i. 79.14. (*on* i. 1.1); **B** useful to undertaking or carrying out (चित्रवृत्तीनाम्) तासामवान्तरविशेषमनुष्ठानोपयोगिनं दर्शयति TattvVai. 10. 5 (*on* 1. 5); वासनाः स्वरूपोत्प्रेक्षामात्रत्वेनालंकारान्तरवच्चमत्काराधायिका अपि यथा नानुष्ठानोपयोगिन्यः

SetuBa. 221.21; **C** useful to the employment, cf. **अनुष्ठानोपयोगित्व 1**.

**अनुष्ठानोपयोगिमीमांसा** (anuṣṭhānopayogi - mīmāṁsā) *f.* (ritualistic) investigation useful to the performance (of rites) अनुष्ठानोपयोगिमीमांसाश्रवणस्य समावर्तनविधिरवकाशप्रदः स्यात् ŚrutaPra. iA. 37.4 (*on* i. 1.1)

**अनुष्ठानोपरोधित्व** (anuṣṭhānoparodhi - tva) *n.* the state of being hindrance to the performance (of rites) साकल्येन मासद्वयं गुरुकुलवासस्यानुष्ठानोपरोधित्वेन तस्यैव निषिद्धत्वात् ŚrutaPra. iA. 36.14 (*on* i. 1.1)

**अनुष्ठानोपाय** (anuṣṭhānopāya) *m.* **1** means of carrying out अस्त्वनुष्ठानोपायो वेदार्थप्रमाणयोः प्रधानोपसर्जनभावः NyāyMāVi. 16.25 (*on* i. 1. 3); **2** means in the form of performance (of rites) , cf. **अनुष्ठानोपायप्राप्या**.

**अनुष्ठानोपायप्राप्या** (anuṣṭhānopāya - prāpyā) *adj.* (*f.*) to be obtained through the means in the form of performance (of rites) पूर्वोक्तकर्मयोगानुष्ठानोपायप्राप्याम् ... निष्ठाम् आत्मविद्भिः सांख्यैः अनुष्ठेयाम् GītāBh. (Śaṅ.) 92.13 (*on* 3. 17)

**अनुष्ठानौपयिक** (anuṣṭhānaupayika) *adj.* useful to the performance (of rites) तेऽपि ह्यनुष्ठानौपायिकमर्थं प्रकाशयन्तः किमविवक्षितवचना मन्त्रा भविष्यन्ति Kāśi. ii. 26. 2 (*on* 5 (2). 3); एवं क्रमकैरेव वाक्यैरनुष्ठानौपयिकं स्मरणं भावयेत् TantrRa. 247. 5; 264. 16; ज्योतिष्टोमादिवाक्याध्ययनं दृष्टेनैवानुष्ठानौपयिकं ज्ञानं जनयति ŚāstrDī. 131. 4 (*on* i. 1. 5)

**अनुष्ठानौपयिकता** (anuṣṭhānaupayika-tā) *f.* the state of being what is useful to the performance (of rites) अर्थज्ञानं चानुष्ठानौपयिकतयैव पुरुषार्थो न स्वतः ŚivārkaMaDī. i. 32. 24 (*on* i. 1. 1)

**अनुष्ठानौपयिकत्व** (anuṣṭhānaupayika-tva) *n.* the state of being what is useful to the performance (of rites) अध्ययनमपि दृष्टार्थज्ञानार्थम्, अर्थज्ञानं त्वनुष्ठानौपयिकत्वात्प्रसिद्धफलकम् ŚāstrDī. 6. 15 (*on* i. 1. 1); ज्ञानस्यानुष्ठानौपयिकत्वेन स्वयमेव फलत्वोपपत्तेः ŚāstrDī. 454. 5 (*on* vi. 1. 7)

**अनुष्ठानौपयिकबोध** (anuṣṭhānaupayika-bodha) *m.* knowledge useful to the performance (of rites) अवबोधित्वात् अनुष्ठानौपयिकबोधजनकत्वादिति भावः ŚrutaPra. iA. 33. 13 (*on* i. 1. 1)

**अनुष्ठानौपयिकार्थ** (anuṣṭhānaupayikārtha) *m.* thing useful to the performance (of rites) यानि प्रयोगकालेऽनुष्ठानौपयिकार्थाभिधानरूपाणि वाक्यानि तानि मन्त्रशब्देनोच्यन्ते ŚastrDī. 113. 6 (*on* ii. 1. 7); तत्र यानि प्रयोगकालेऽनुष्ठानौपयिकार्थाभिधानरूपाणि वेदवाक्यानि तानि मन्त्रशब्देनोच्यन्ते VīraMi. 13. 4 (*on* 1. 3)

**अनुष्ठापक** (anu-ṣṭhāpaka) *adj.* [*f.*- ikā] **1A** which causes to carry out 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिरेवेतिकर्तव्यताभूतस्य धर्मविचारस्योत्पादकोऽनुष्ठापकश्च TātpaṬ.(U.) 25. 11 (*on* 1. 111); YuktiSneha. 14. 5 (*on* i. 1. 1); सर्वस्य सर्वः स्वाध्यायविधेरनुष्ठापकः स्यात् ManuBh. i. 149. 1 (*on* 2. 140); अन्यसाध्यं तु कार्यमन्यस्य कथमिवानुष्ठापकं भवेत् NyāyRaMā. 18. 1; अध्यापनविधिरध्ययनस्यानुष्ठापकः ŚivārkaMaDī. i. 23. 24 (*on* i. 1. 1); **1B** which causes to perform (rites) यावदधिकारहेतुसद्भावमनुष्ठापको विध्यर्थः, न श्रुत्यादिवदुपायमात्रप्रतिपादकः TātpaṬ. (U.) 97. 11 (*on* 2. 206); यो ह्युत्पादकः पदार्थस्यानुष्ठापको वा स्यात्, स एवोपदेशकारणम् BālaKrī. i. 23. 14 (*on* 1. 7); अनुष्ठानाय हि सर्वमाम्नायतेऽतो सत्यनुष्ठापके तदलाभादनर्थकम् TantrRa. 81. 15; विधिस्तु प्रवर्तकस्वभावात्कर्तुरेवेदं फलं साधयतीति कल्पयतीति भवत्यनुष्ठापकः NyāyRaMā. 144. 11; यागः ... नियोगार्थोऽन्यथानुपपत्त्या स्वविषयस्य कर्तव्यतां बोधयन्ननुष्ठापक इत्युच्यते ŚāstrDī. 33. 4 (*on* i. 1. 2); उत्पत्तिविधिरेव वागत्यानुष्ठापको भविष्यति NyāySu. (So.) 74. 11 (*on* i. 2. 19); न खल्वभ्युदितेष्टेरधिकारबुद्धिरनुष्ठापिका। किं त्वधिकारभ्रमः Aparā. 469. 19 (*on* 1. 227); चोदनेति शब्देन क्रियाया नियोगस्यानुष्ठापकं वचनमाहुः VedāntKa. 65. 21 (*on* i. 1. 4); प्रश्नसमानाकारमेव वाक्यं निर्णायकं प्रश्नमूलसंदेहनिवर्तकमनुष्ठापकं च दृश्यते ŚivārkaMaDī. i. 107. 28 (*on* i. 1. 2); CitraMī. 63. 9; प्राप्तिदिने कर्तुं शक्यतया तद्दिन एव निमित्तमनुष्ठापकम् (श्राद्धस्य) VīraMi. (Tīrtha.) 78. 17; न त्वत्कामना अनुष्ठापिका MīmāKau. ii. 107. 16 (*on* ii. 4. 2); iii (2). 197. 19 (*on* ii. 2. 15); BhāṭṭDī. ii. 81. 2 (*on* iv. 1. 1); **1C** which causes to act or behave accordingly, cf. **अनुष्ठापकत्व 1B; 2** which causes to go over, i.e. teaches ब्रह्मज्ञानस्य पुनरनुष्ठापकः प्रयोगविधिः ŚivārkaMaDī. i. 183. 26 (*on* i. 1. 4)

**अनुष्ठापकता** (anuṣṭhāpaka-tā) *f.* the state of being what causes to perform (rites) प्रेरणात्मा लिङादिप्रत्ययवाच्यो विध्यर्थोऽनुष्ठापकतया कृत्स्नशास्त्रप्रमेयमिति सिद्धम् TantrRaha. 53. 25.

**अनुष्ठापकत्व** (anuṣṭhāpaka-tva) *n.* **1A** the state of being what causes to perform (rites) पठ्यमानेऽप्येतत्समानमिति चेत्। न। तस्य स्वमहिम्नैवानुष्ठापकत्वात् BālaKrī. i. 24. 17 (*on* 1. 7); अध्ययनेऽप्यनुष्ठापकत्वं न सिध्यति NyāyRaMā. 14. 15; यद्यप्यर्थवादानां विधिवदनुष्ठापकत्वेन न क्रियार्थत्वं क्रियाभिधायकत्वं वा तथापि ... लक्षणया तादर्थ्यमङ्गीकार्यम् NyāySu. (So.) 26. 11 (*on* i. 2. 7); प्रयोगविधिस्तावदनुष्ठापकत्वात् MīmāKau. i. 34. 4 (*on* i. 3. 7); i. 267. 9 (*on* i. 4. 22); कालदेशनिमित्तानां त्वनुष्ठापकत्वेन प्रयोगविशेषणत्वात् ... युक्तं तद्विधया भेदकत्वम् MīmāKau. ii. 90. 12 (*on* ii. 3. 25); ii. 103. 13 (*on* ii. 4. 2); न च प्रधानाभावे कथं प्रयोगसमाप्तिः ... अनुष्ठापकत्वस्य षष्ठे वक्ष्यमाणत्वेन प्रधानसत्त्वासत्त्वयोरकिंचित्करत्वात् MīmāKau. iii (2) . 11. 10 (*on* ii. 1. 5); BhāṭṭDī. i. 182. 14 (on iii. 1. 2); पूतत्वादिफलानां नानुष्ठापकत्वम् BhāṭṭCin. ii. 70. 13 (*on* i. 4. 11); **1 B** the state of being what causes (one self) to act or behave accordingly रक्षःस्वभावादेव यः क्रोधस्तस्यैतत्तावत्स्वचित्तवृत्तिसमुचितमनुष्ठापकत्वं नाम Loc. 124. 15 (*on* 3. 1); **1C** the state of being what causes to carry out, cf. **अनुष्ठापकत्वकल्पन A; 2** the state of being what causes to go over, i.e. teaches 'तदेतद् व्रतं भस्मनाङ्गानि संस्पृशेत्' ... इति अथर्वशिरउपनिषत् पाशुपतशास्त्रार्थानुष्ठापकत्वे लिङ्गम् Aparā. 18. 11 (*on* 1. 7)

**अनुष्ठापकत्वकल्पन** (anuṣṭhāpakatva-kalpana) *n.* **A** assumption of the state of being what causes to carry out नाध्यापनविधिप्रयुक्तताध्ययनस्य सिद्ध्येत्। ... अध्यापनविधेरनुष्ठापकत्वकल्पनानुपपत्तेः TattvPradī. (Ci.) 50. 1; **B** assumption of the state of being what causes to perform (rites) करणात्तु स्वर्गः अकाम्यमानोऽपि ... विश्वजिन्न्यायेन फलं भविष्यति, न तु तत्कामनायाः अनुष्ठापकत्वकल्पनम् MīmāKau. ii. 106. 18 (*on* ii. 4. 2)

**अनुष्ठापकत्वदशा** (anuṣṭhāpakatva-daśā) *f.* stage (in the form) of the state of being what causes to perform (rites) प्रयोगविधिः अनुष्ठापकत्वदशापन्नविधिः ŚrutaPra. ii. 532. 29 (*on* iii. 3. 59)

**अनुष्ठापकत्वमात्र** (anuṣṭhāpakatva-mātra) *n.* mere state of being what causes to perform (rites) निमित्तत्वं चात्र नियतानुष्ठापकत्वं, न तु अनुष्ठापकत्वमात्रं, कामनादिवत् MīmāKau. ii. 105. 16 (*on* ii. 4. 2)

**अनुष्ठापकत्वरूप** (anuṣṭhāpakatva-rūpa) *adj.* of the form of the state of being what causes to perform (rites) द्वौ विधेर्व्यापारौ एकस्तावत्काम्यमानभावार्थयोरुपायोपेयभावज्ञापनाख्यः, अपरोऽनुष्ठापकत्वरूपः, तत्र योऽधिकारविधिप्रमितोपायोपेयभावोत्तरकालीनस्तदनुष्ठापकत्वरूपः TātpaṬ. (U.) 96. 21 (*on* 2. 206); YuktiSneha 28. 8 (*on* i. 1. 2); निमित्ते चानुष्ठापकत्वरूपोद्देश्यतायाः सत्त्वेऽपि ईप्सितत्वाख्यायाः अभावात् MīmāKau. ii. 136. 7 (*on* iii. 1. 2); अदृष्टम् ... वितुषीभावस्य मुख्यफलत्वेऽप्यानुषङ्गिकत्वेन कल्प्यते, न त्वनुष्ठापकत्वरूपमुख्योद्देश्यतया, गौरवापत्तेः MīmāKau. iii (2). 66. 16 (*on* ii. 1. 9)

**अनुष्ठापकत्वलक्षण** (anuṣṭhāpakatva-lakṣaṇa) *adj.* characterised by the state of being what causes to perform (rites) अतःशब्दोऽप्यध्ययनविधेरेव धर्मजिज्ञासां प्रत्यनुष्ठापकत्वलक्षणं प्रयोजकहेतुत्वमाह TātpaṬ. (U.) 25. 13 (*on* 1. 111); YuktiSneha. 14. 6 (*on* i. 1. 1); MayūMāli. 99. 6 (*on* ii. 1. 1)

**अनुष्ठापकत्वसत्त्व** (anuṣṭhāpakatva-sattva) *n.* existence of the state of being what causes to perform (rites) निमित्तस्य कारकत्वाभावेऽप्यनुष्ठापकत्वसत्त्वाद् भावनान्वयः BhāṭṭCin. i. 84. 33 (*on* i. 1. 4)

**अनुष्ठापकत्वाकल्पन** (anuṣṭhāpakatvākalpana) *n.* non-assumption of the state of being what causes to perform (rites) जातेष्टिभावनाया अनुष्ठापकापेक्षायां निमित्तस्यैवानुष्ठापकत्वेन श्रुतत्वादनुष्ठापकान्तरापेक्षाभावेन पूतत्वादिकामनाया अनुष्ठापकत्वाकल्पनात् MīmāKau. i. 267. 10 (*on* i. 4. 22)

**अनुष्ठापकत्वाङ्गीकार** (anuṣṭhāpakatvāṅgīkāra) *m.* acceptance of the state of being what causes to perform (rites) नापि स्वर्गो विश्वजिन्न्यायलभ्यः स्वर्गकामवाक्यप्रमितो वा। ... द्वयोरनुष्ठापकत्वाङ्गीकारेऽपि तादृशार्थस्य निमित्तश्रुतिं विनापि सिद्धेः तद्वैयर्थ्यात् MīmāKau. ii. 106. 11 (*on* ii. 4. 2)

**अनुष्ठापकत्वानभ्युपगम** (anuṣṭhāpakatvānabhyupagama) *m.* non-admission of the state of being what causes to perform (rites) किंफलप्रसूता कार्यावगतिः क्रियायामुतापूर्वप्रसूता। न तावदपूर्वप्रसूता काम्येषु विधेरनुष्ठापकत्वानभ्युपगमात् NyāyRaMā. 45. 10.

**अनुष्ठापकत्वावगति** (anuṣṭhāpakatvāvagati) *f.* knowledge of the state of being what causes to perform(rites) यजमानेच्छाया एव एतादृशगुणविषये अनुष्ठापकत्वावगतेः BhāṭṭDī. iii. 232. 9 (*on* x. 2. 21)

**अनुष्ठापकत्वावगम** (anuṣṭhāpakatvāvagama) *m.* knowledge of the state of being what causes to perform (rites) पूतत्वादिकामनायाः स्वर्गादिकामनावत् अनुष्ठापकत्वावगमात् कामनाभावे पुत्रे जातेऽपि करणानापत्तिः MīmāKau. i. 267. 6 (*on* i. 4. 22); iii (2). 31. 5 (*on* ii. 1. 5)

**अनुष्ठापकत्वासंभव** (anuṣṭhāpakatvāsambhava) *m.* impossibility of

the state of being what causes to perform (rites) साकाङ्क्षस्य प्रयोगविधेरनुष्ठापकत्वासंभवात्तन्निराकाङ्क्षत्वाय सर्वमङ्गजातमेकस्यामेव शाखायां विधीयेत VedāntKa. 400. 10 (*on* iii. 3. 5)

**अनुष्ठापकप्रमाणान्तर** (anuṣṭhāpaka-pramāṇāntara) *n.* another authoritative means which causes to perform (rites) सर्वेषां पदानां ब्रह्मपरत्वे विभक्तिवैयर्थ्यं कर्मानुष्ठानविलोपश्च प्राप्नोति। ... अनुष्ठापकप्रमाणान्तरादर्शनात् NyāySu. (Ja.) 181A. 6 (*on* i. 4. 2)

**अनुष्ठापकविधित्व** (anuṣṭhāpakavidhi-tva) *n.* the state of being an injunction which causes to perform (rites) विनियोगोऽनुष्ठापकविधित्वान्मुख्यः NyāyMāVi. 139. 14 (*on* iii. 3. 2)

**अनुष्ठापकविधिसंबन्ध** (anuṣṭhāpakavidhi-sambandha) *m.* connection with the injunction which causes to perform (rites) भावनायाः ... अंशत्रययुक्तायास्तु तस्या अनुष्ठेयत्वादनुष्ठापकविधिसंबन्धो निर्वहति MayūMāli. 446. 10 (*on* vi. 1. 1)

**अनुष्ठापकानपेक्षत्व** (anuṣṭhāpakānapekṣa-tva) *n.* the state of not being expectant of what causes to perform (rites) स्वर्गः अकाम्यमानोऽपि ... पापक्षयवद्यानुषङ्गिको विश्वजिन्न्यायेन फलं भविष्यति न तु तत्कामनाया अनुष्ठापकत्वकल्पनम् अनुष्ठापकानपेक्षत्वात् MīmāKau. ii. 106. 18 (*on* ii. 4. 2)

**अनुष्ठापकान्तरापेक्षा** (anuṣṭhāpakāntarāpekṣā) *f.* expectancy for another factor which causes to perform (rites) जातेष्टिभावनाया अनुष्ठापकापेक्षायां निमित्तस्यैवानुष्ठापकत्वेन श्रुतत्वादनुष्ठापकान्तरापेक्षाभावेन पूतत्वादिकामनायाः अनुष्ठापकत्वाकल्पनात् MīmāKau. i. 267. 9 (*on* i. 4. 22)

**अनुष्ठापकापेक्षा** (anuṣṭhāpakāpekṣā) *f.* expectancy for what causes to perform (rites) जातेष्टिभावनाया अनुष्ठापकापेक्षायां निमित्तस्यैवानुष्ठापकत्वेन श्रुतत्वादनुष्ठापकान्तरापेक्षाभावेन पूतत्वादिकामनाया अनुष्ठापकत्वाकल्पनात् MīmāKau. i. 267. 8 (*on* i. 4. 22)

**अनुष्ठापन** (anu-ṣṭhāpana) *n.* **Ai** act of causing to observe (duties) दोषश्च मम स्वाधिकारानुष्ठापनम् DaśKuC. 41. 18; **Aii** act of causing to observe एष हि गणिकामातुरधिकारः ... रक्तस्य दुहित्रैकचारिणीव्रतानुष्ठापनम् DaśKuC. 42. 14; **B** act of causing to perform (rites) यथैव ह्यङ्गानि प्रधानानामुपकुर्वन्ति तथैवानुष्ठापनेनो-पकारप्रतिग्रहणाद्य प्रधानान्यप्यङ्गानामुपकुर्वन्त्येव TantrVā. 666. 9 (*on* iii. 1. 2); प्रयोगोऽनुष्ठापनम् VedāntKa. 59. 10 (*on* i. 1. 3); नाम रूपं चेति स्मृतौ निष्पन्न-कर्मणामनुष्ठापनमुक्तम् VedāntKa. 182. 12 (*on* i. 3. 33); MīmāKau. i. 13. 24 (*on* i. 3. 3); अस्मिन्नध्यायेऽनुष्ठापनापरपर्यायप्रयुक्तिरुच्यते MayūMāli. 345. 3 (*on* iv. 1. 1); **C** act of causing to carry out, cf. **अनुष्ठापनक्षम**.

**अनुष्ठापनक्षम** (anuṣṭhāpana-kṣama) *adj.* capable of the act of causing to undertake or carry out अध्ययनविधिर्न स्वविषयाध्ययनस्यानुष्ठापनक्षमः TattvPradī. (Ci.) 48. 9.

**अनुष्ठापनशक्ति** (anuṣṭhāpana-śakti) *f.* power which causes to perform (rites) सिद्धशेषशेषिभावानां कर्मणामनुष्ठापनशक्तिरूपा प्रयुक्तिः ... निरूपिता ŚivārkaMaDī. i. 73. 32 (*on* i. 1. 1)

**अनुष्ठापनावगम** (anuṣṭhāpanāvagama) *m.* knowledge of the act of causing to perform (rites) उद्भित्संज्ञककर्मान्तरस्यैवानेन विधिना अनुष्ठापनावगमात् नामधेयस्यानधिगतभेदज्ञापकत्वेन प्रामाण्यम् MīmāKau. i. 172. 6 (*on* i. 4. 2)

**अनुष्ठापनीय** (anu-ṣṭhāpanīya) *adj.* to be caused to perform (rites) कर्मणि प्रवर्तकस्य वेदस्य ... प्रवर्तनीयाः परीक्षका यदस्य वास्तवं फलं तल्लम्भनार्थमेव इदमनुष्ठापनीयमिति ... कृत्युद्देशार्हमिदं कर्मेति स्तुवन्ति ŚivārkaMaDī. i. 458. 17 (*on* i. 3. 25)

**अनुष्ठापनीयत्व** (anuṣṭhāpanīya-tva) *n.* the state of being what is to be caused to perform (rites) विधिफलत्वाभावात् विधिनानुष्ठापनीयत्वाभावात् LaCandr. 875. 24.

**अनुष्ठापयत्** (anu-ṣṭhāpayat) *adj.* [*f.* -ntī] **1A** causing to observe (duties) त्रय्यपि स्वधर्माननुष्ठापयन्ती दुःखेभ्यः त्रायते CaturCin. iii (1). 520. 6; **1B** causing to perform (rites) प्रयोगविधिः ... स हि साङ्गं प्रधानमनुष्ठापयन् ... प्रयोगप्रांशुभावं विधत्ते MīmāNyāPra. 233. 20; **2** causing to employ काम्यः प्रयोगविधिः यत्फलसाधनं तदनुष्ठापयन् प्रत्येकं फलसाधनत्वे एकमेवानुष्ठापयेत् न सर्वाणि युगपत् MayūMāli. 794. 2 (*on* xi. 1. 1)

**अनुष्ठापयितव्य** (anu-ṣṭhāpayitavya) *adj.* to be made to observe कुलधर्माः ... य एव पूर्वपुरुषाणां याजकाः कन्यादिसंप्रदानभूता वा त एव कार्याः। तदतिक्रामन् राज्ञोऽनुष्ठापयितव्यः ManuBh. ii. 91. 2 (*on* 8. 41)

**अनुष्ठापयितुम्** (anu-ṣṭhāpayitum) *inf.* to cause to perform (rites) भक्षविधिरपि तान्यचोदयित्वा न शक्नोति स्वार्थमनुष्ठापयितुम् TantrVā. 800. 9 (*on* iii. 2. 26); श्रौतोऽर्थः ... विदधत्प्रयोगवचनः ... पदार्थांश्च पुरोडाशार्थतयानुष्ठापयितुं प्रवृत्तः MayūMāli. 844. 29 (*on* xii. 1. 1)

**अनुष्ठापयितृ** (anu-ṣṭhāpayitṛ) *adj.* (used as noun) one who causes to carry out यद्यध्यापयितैवास्य स्वाधिकारप्रदर्शनात् । अनुष्ठापयिता तत्र स्वाधिकारप्रयुक्तता NyāyRaMā. 18. 4.

**अनुष्ठापित** (anu-ṣṭhāpita) *adj.* (rite) caused to be performed पुरोडाशयागार्थं प्रधानविधिनैवानुष्ठापितानां प्राकृतानामङ्गानामत्राकरणे वैगुण्यापत्तिरनिवार्या BhāṭṭDī. iv. 217. 24 (*on* xii. 1. 1); झटिति प्रवृत्तेन विशेषशास्त्रेण पदेऽनुष्ठापिते सामान्यशास्त्रस्य स्वविषयाननुष्ठापकत्वमात्रम् MayūMāli. 23. 16 (*on* i. 3. 2)

**अनुष्ठापितत्व** (anuṣṭhāpita-tva) *n.* the state of being what is caused to be performed न चाध्ययनमध्यापनविधेर्विषयोऽङ्गं वा, तत्कथं तेनानुष्ठाप्यते इति। अविषयस्यातदङ्गस्याप्याधानस्योत्तरकाम्यक्रतुविधिभिरनुष्ठापितत्वात् VivaPraSaṁ. 178. 19; वरुणप्रघासे ... ज्येष्ठाया असंनिधाने इतरासामाज्यावेक्षणस्याप्यप्राप्तौ मूलस्यैव मीमांसत्वापत्तेः यज्ञप्रवर्तकाचार्यशिरोमणिना स्वग्रामे याज्ञिकैस्तथानुष्ठापितत्वात् BālamBha. i. 266. 10 (*on* 1. 89)

**अनुष्ठाप्य** (anuṣṭhāp-ya) *ger.* having caused to be performed धर्मविचारः कर्माण्यनुष्ठाप्य परमेश्वरप्रसादद्वारा चित्तशुद्धिसंपादनेन ज्ञानहेतुः ŚivārkaMaDī. i. 78. 27 (*on* i. 1. 1)

**अनुष्ठाप्य** (anu-ṣṭhāpya) *adj.* to be caused to be performed प्रतिबन्धकाभावे सति अवयवयोगेन एतद्विध्यनुष्ठाप्यस्य यागस्योद्भित्संज्ञकत्वे सामानाधिकरण्येनावधारिते ... नामधेयस्यानधिगतभेदज्ञापकत्वेन प्रामाण्यम् MīmāKau. i. 171. 26 (*on* i. 4. 2); स्वापेक्षितानैष्ठिकोपकारान् पदार्थांश्च पाशुकप्रयोगवचनेनानुष्ठाप्यान् दृष्ट्वा ... न स्वयं पृथक् पदार्थानुपकारांश्चानुष्ठेयतया विधत्ते MayūMāli. 844. 29 (*on* xii. 1. 1)

**अनुष्ठाप्यत्व** (anuṣṭhāpya-tva) *n.* the state of being what is to be caused to perform (rites) धात्वर्थे अनुष्ठाप्यत्वापरपर्यायोपादेयताक्षेपकत्वात् MīmāKau. ii. 90. 12 (*on* ii. 3. 25); क्रियत इत्यस्यानुष्ठाप्यत्वमर्थ इत्याशयः MayūMāli. 233. 5 (*on* iii. 3. 1)

**अनुष्ठाप्यत्वरूप** (anuṣṭhāpyatva-rūpa) *adj.* of the form of the state of being what is to be caused to be performed अज्ञातज्ञाप्यत्वरूपस्य चात्र विधेयत्वस्यानुष्ठाप्यरूप(? प्यत्वरूप) विधेयत्वाभावप्रतिपादनार्थेन सिद्धवच्छब्देनाभिप्रेतत्वात् NyāySu. (So.) 83. 24 (*on* i. 2. 26); कृतिव्याप्यत्वं च अनुष्ठाप्यत्वरूपं कालादिव्यावृत्तम् BhāṭṭDī. ii. 80. 13 (*on* iv. 1. 1)

**अनुष्ठाप्यमान** (anu-ṣṭhāpyamāna) *adj.* [*f.* -ā] **Ai** being caused to execute, i.e. to administer आतुरार्थं भिषज्यद्भिः ... तत्फलप्रदर्शनेन वा साम्ना वोपायेनानुष्ठाप्यमानस्यौषधस्य स्वाधिकार एव प्रयोजकः तथात्रापि ... पित्रादिभिरनुष्ठाप्यमानस्याध्ययनस्य NyāyRaMā. 12. 13; पित्रादिभिः ... अनुष्ठाप्यमानायामौषधसेवायाम् ... बालस्यैव विध्युक्तं फलं भवतु ŚivārkaMaDī. i. 27. 26 (*on* i. 1. 1); **Aii** being caused to carry out अध्ययनसाध्यमधिकारमवगच्छद्भिः ... पित्रादिभिरनुष्ठाप्यमानस्याध्ययनस्य तत्प्रयुक्तितोपपद्यते NyāyRaMā. 12. 16; **B** being caused to perform (rites) (स्थपतीष्टिः) ऋत्विग्भिरधिकारप्रदर्शनेन निषादेनानुष्ठाप्यमाना स्वाधिकारप्रयुक्ता NyāyRaMā. 18. 9.

**अनुष्ठाय** (anuṣṭhā-ya) *ger.* **1A** having observed (duties) स यदहरहराचार्याय कुलेऽनुतिष्ठते सोऽनुष्ठाय ब्रूयाद्धर्मं गुप्तो मा गोपायेति GopBr. i. 2. 4 (35. 13); तं चेत् पुत्रात्प्रियतरं प्रतियोत्स्ये धनंजयम्। क्षत्रधर्ममनुष्ठाय धिगस्तु क्षत्रजीविकाम् MahāBhā. v. 137. 5; वानप्रस्थपरो भव। तमनुष्ठाय विधिवत् ... वश्यात्मा भव MārkP. 16. 4; प्रवक्ष्यामि शौचाचारस्य लक्षणम्। यदनुष्ठाय शुद्धात्मा प्रेत्य स्वर्गं हि प्राप्नुयात् VāyuP. i. 16. 1; **1Bi** having done, carried out or executed अनुष्ठाय यथादिष्टं नियोगं जनकात्मजा। समारूढवती यानम् Bhaṭṭi. 20. 19; त्वं च सम्यगनुष्ठाय निदेशं म उशत्तमः। मयि तीर्थीकृताशेषक्रियार्थो मां प्रपत्स्यसे BhāgP. iii. 21. 30; अलमङ्गुलीदीपिकया ध्वान्तध्वंसविधिमनुष्ठाय ĀtmaTaVi. 425. 4; इदं प्रथम एव कश्चिदनुष्ठायापि धूर्तः पराननुष्ठापयतीति चेत् किमसौ सर्वलोकोत्तर एव NyāyKuA. i. 24. 5; राजा ... यथोक्तम् अनुष्ठाय भूरिदानार्थम् ... भाण्डागारं विमुक्तवान् SiṁhāDvā. 172. 11 (9); **1Bii** having accomplished, having achieved मदम्बा मरणमण्डनमनुष्ठाय ... पितुर्मे शयनस्थानमेकाकिनी प्राविशत् DaśKuC. 87. 14; (इदं विदित्वा योगी परं स्थानमुपैति) विदित्वा ...अर्थं सम्यगवधार्य अनुष्ठाय योगी ... ऐश्वरं स्थानमुपैति GītāBh. (Śaṅ.) 250. 11 (*on* 8. 28); पौर्वाह्णिकानुष्ठानमनुष्ठाय ... देवीमिदं सदुःखमवदम् TilaMañ. 29. 3; उपाध्यायः ... कायकषायकर्शनां सल्लेखनामनुष्ठाय ... सुरसुखकृतार्थो बभूव YaśasCam. ii. 354. 12; अनुष्ठायाखिलान्धर्मांस्तेन ध्वस्ताखिलाशुभः SkandP. ii (7). 6. 49; अहरहरनुष्ठीयमाननित्यनैमित्तिककर्मानुष्ठानजान् ... ज्ञात्वा यथोक्तप्रकारेणानुष्ठाय विमोक्ष्यसे GītāBh. (Rā.) 274. 8 (*on* 4. 32);

298. 4 (*on* 5. 12); 594. 7 (*on* 14. 18); प्राजापत्येषु कस्माच्चित्पशोरारभ्य एकं सर्वत्रानुष्ठाय द्वितीयादिपदार्थस्तेनैव क्रमेणानुष्ठेयः ArthSaṁ. 86. 3; राजा सर्वमपि अनुष्ठाय पूर्णाहुतिसमये स्वयमेव अग्नौ पपात SiṁhāDvā. 138. 5 (17); 212. 15 (5); न च वाच्यम् ... सप्तम्यन्तामावास्यापौर्णमासीपदोपात्तयोः पुनर्विधानम् ... पौर्णमासीत्रिकमनुष्ठायामावास्यायां प्राप्तायाममावास्यात्रिकमनुष्ठाय उदीच्याङ्गसमापनप्रसङ्गात् ŚivārkaMaDī. i. 433. 6 (*on* i. 3. 13); कश्चित् ... धर्ममनुष्ठाय ... ब्रह्म जिज्ञासते SiddhāSi. i. 5. 25; यथाशास्त्रं धर्माननुष्ठाय भगवत्यर्पितवताम् ... मोक्षः फलति BhāṭṭCan. 126. 10 (*on* xvi. 4. 10); **2** having governed or ruled over पुरमेकादशद्वारमजस्यावक्रचेतसः। अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते KāṭhU. 5. 1 (*but* Śaṅ. ध्यात्वा); **3** having employed or used संसारी कर्मोपासनं वा साधनमनुष्ठाय ब्रह्मादिदेवान् स्वर्गं वा प्राप्तुमिच्छति KenUBh. 37. 4 (*on* 1. 5); (स्वपुत्रमित्रकलत्रबन्ध्वादीञ्शिखायज्ञोपवीते ... संन्यस्यायम् ... कौपीनं दण्डमाच्छादनं च ... परिग्रहेत्) यो गृहस्थः ... श्रवणादिसाधनान्यनुष्ठाय तत्त्वं सम्यगवगच्छति ... तं प्रति स्वपुत्रमित्रेत्याद्युपदेशः JīvanVi. 145. 7; **4** having gone over mentally, i.e. having counted अध्रिगुप्र(?प्रै)षे वाक्यमिदमाम्नायते - 'षड्विंशतिरस्य वङ्क्रयः ता अनुष्ठ्योच्च्यावयतात्' इति। ... ताश्च वङ्क्रीरनुष्ठ्य, अनुष्ठायानुक्रमेण गणयित्वेति यावत् NyāyMāVi. 466. 17 (*on* ix. 4.1)

**अनुष्ठायज्ञयज्ञीय** (anuṣṭhāyajñayajñīya) *n*. name of a Sāman, pw.

**अनुष्ठायिन्** (anu-ṣṭhāyin) *adj*. **1** who observes दुःखाकरोऽयं वनवासः। तस्य फलमपवर्गः स्वर्गो वा । ... द्वितीयस्तु सर्वस्यैव सुलभः कुलधर्मानुष्ठायिनः DaśKuC. 43. 5; **2** who goes over, i.e. recites वेलहिष्टीग्रामीयभूभागः ... बार्हस्पत्यप्रवराय साम(वे)दकौथुमशाखाचरणानुष्ठायिने ... प्रदत्तः EI. xii. 10. 43; xiv. 161. 51; xxi. 219. 42.

**अनुष्ठावन्** (anu-ṣṭhāván) *adj*. [Debru. 898] who is near at hand, standing nearby स॒ होवाचे॒न्द्रो वि॒ष्णुं प्र॒हरिष्यामि वा॒ अह॒मस्मै॒ वृत्रा॒य व॒ज्रमि॒ति त॒स्य मे त्व॒मनुष्ठ्यावे॒ति (v. l. ष्ठावे॒ति Caland, intro. p. 52) तथे॒ति होवाच प्र॒हर त॒स्य तेऽह॒मनुष्ठ्यावे॒ति (v. l. ष्ठावे॒ति Caland) ŚatBr. (K.) VII. v. 3. 2; cf. **अनुष्ठ्यावन्**.

**अनुष्ठाविरति** (anuṣṭhā-virati) *f*. cessation or conclusion of performance (of rites) नियोज्यधर्मिभावो हि तस्यानुष्ठेयता कुतः। सिद्धोऽपि यद्यनुष्ठेयो नानुष्ठाविरतिर्भवेत् PramāVāBh. 9. 9.

**अनुष्ठास्यत्** (anu-ṣṭhāsyat) *adj*. who is about or going to perform (rites) गुरुरयमनुष्ठास्यन्माध्यंदिनीं सवनक्रियाम् ... भवन्तमपेक्षते AnarghaRā. 2. 28 (comm. सवनक्रियां स्नानव्यापारमनुष्ठास्यन्। अनुष्ठानं कर्तुमिति यावत्)

**अनुष्ठि** (anu-ṣṭhi) (= anuṣṭhu, Viśva.) *f*. [ Inst. anu-ṣṭhyā, MW.] **1** immediately यदैवानुष्ठ्या चक्षुषा प्रजानात्यथ प्रजानाति AitBr. 2. 2(40) (*but* Sāy. केनापि प्रयत्नविशेषेण पर्वतारोहणादिरूपेण); **2A** in proper order षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठयोच्च्यावयतात् गात्रं गात्रमस्यानूनं कृणुतात् AitBr. 6. 6(165); ŚāṅkhāŚS. v. 17. 6; ĀśvaŚS. I. iii. 3. 1; ŚāstrDī. 632. 9 (*on* ix. 4. 1); ता॒ एवै॒तदाहा॒ चैना व॒हानुष्ठ्या॒ च यजे॒ति यदा॒ह सुयु॒जा च यजे॒ति ŚatBr. I. iv. 2. 17; स॒ होवाच। अग्न॒येऽग्नि॒रनुष्ठया स्वꣳरेतः प्र॒जनयिष्यते त॒था प्र॒जनिष्यध्वऽइति ŚatBr. II. ii. 4. 17; II. iv. 4. 21; अथो हेक्षतेऽयं वाव मामनुष्ठ्या संभरति हन्तायं साङ्गस्सतनुरविह्रुतो जरसं गच्छत्विति JaimiBr. 1. 8; 1. 53; 2. 287; अथ यो वाक् सामेत्युपास्ते स एवानुष्ठ्या साम वेद JaimiUBr. ii. 15. 6; iii. 33. 4; **2B** in due form एष वै॒ देवा॒ननुविद्वान्यु॒दग्निः स॒ एनाननुविद्वा॒ननुष्ठ्या॒ यक्षदि॒त्येवैत॒दाह ŚatBr. I. v. 1. 6; **3** with effort or activity तस्माद्यतरो विवदमानयोराहाहमनुष्ठ्या चक्षुषादर्शमिति तस्य श्रद्दधति चक्षुरेव तत्संभावयति चक्षुः संस्कुरुते AitBr. 10. 8 (281); तद्वा॒ऽअनुष्ठ्या यद्धस्तेन प्रदीयु॒ते प्र॒ हैवास्मै दीयते ŚatBr. II. i. 2. 12 [being near, present, at hand, MW.]

**अनुष्ठित** (ánu-ṣṭhita) *adj*. [*f*. -ā] **1Ai** (semen) which is carried out, i.e. infused **ii** undertaken, done, carried out or executed **iii** who has undertaken or done **iv** committed **v** practised **Bi** (rites etc.) performed (used as noun) what is performed **ii** who has performed **iii** produced, presented **Ci** who has observed or followed **ii** (what is) observed or followed **2A** accepted, i.e. permitted or allowed **B** obeyed **3A** followed, i.e. pronounced **B** gone over or followed, i.e. recited or uttered **C** followed, i.e. taught **4A** placed, i.e. entrusted with **B** occupied **C** put on or arranged **5A** who has achieved (skill) **B** accomplished or obtained **6Ai** attended to, looked after **ii** attended to, i.e. medically treated **B** gone over mentally, i.e. meditated **C** experienced **7** used, employed or applied **8** developed **1Ai** (semen) which is carried out, i.e. infused प्रथिंष्टु यस्य॑ वी॒रकर्ममि॒ष्णदनु॑ष्ठितं॒ तु नर्यो॒ अपौहत् ṚV. x. 61.5 (Sāy. वीरकर्म। रेत इत्यर्थः ... तद्रेतः अनुष्ठितं प्रजापतिनापत्यार्थं निषिक्तम्); **1Aii** undertaken, done, carried out or executed (कर्मान्ताः) आप्तैरलुब्धैः क्रमिकैस्ते च कच्चिदनुष्ठिताः MahāBhā. ii. 66*; अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम् MahāBhā. iii. 231. 15; SūktiRa. 163. 89; MahāBhā. ix. 30. 37; न युक्तं वः कृत्वा कार्यविनिश्चयम् (v.l. हि त्यक्तुं कार्यमनुष्ठितम्) Rāmā. iv. 1225* (3); सुविशाखेन ... स्वधितिष्ठिता धर्मकीर्त्तियशांसि भर्तुरभिवर्द्धयत् अनुष्ठितम् इति EI. viii. 45.20; पूर्वमेवार्जुनविजयार्थं सर्वदेवैर्यत् समर्थितं तदिदानीं मयानुष्ठितम् KarṇaBhā. 22 (3); अन्यशङ्कया खल्विदमस्माभिरनुष्ठितं न दर्पात् Cārud. 1. 24 (13); Mṛcch. 1. 43 (2); सुयोधनं प्रति मयाप्यनुचितदौत्यसमयोऽनुष्ठितः DūtVā. 13 (3); यद्यत् ... साध्यमरिप्रमाथजननम् ... तत्तन्मयानुष्ठितम् SvapnVā. 5. 12; एवमनुष्ठिते सचिवाहूतः सः ... उपाविशत् Tantrākhyā. 1. 21; PañcT. 0. 4 (8) (5. 3); क्लिष्टोपायबलोऽप्यर्थं विपर्यस्तमनुष्ठितः। हृतधर्मविमार्गस्थो हन्ति भिन्नक्रमो नयः Tantrākhyā. 42. 20; 79. 16; किमिदमनुष्ठितं पौरोभाग्यम् Śāk. 6. 22 (9); महत्खलु तत्रभवतो मघोनः प्रियमनुष्ठितं भवता Vikramo. 1. 13 (1); बन्धुमतिका ... स्वयमेव मेखलां संयोजयति। ... अहो सुकुमारं कर्मानुष्ठितम् DhūrtaViSaṁ. 9. 7; कथमवशीर्णप्रायः संधिरनुष्ठितः PādaTā. 33. 20; PadmPrā. 12. 20; पुनः पुनः प्रयत्नेऽपि सुमहत्यप्यनुष्ठिते। न स सिद्धिमनुप्रापत् JayāS. 1 (App.). 27; तेषां प्रभावेण मया सर्वमनुष्ठितम् MārkP. 8. 255; 109. 20; तथानुष्ठितेऽसौ विमदः ... ताम् आक्रोष्टुम् आरब्धः PañcT. 1. 55 (54) (53. 2); तथा च तैर्जीवितार्थिभिरनुष्ठितम् PañcT. 2. 1 (23) (185. 1); 3. 32 (6) (285. 5); 5. 3 (19) (407. 9); मया खलु मदनिकायाः कृते साहसमनुष्ठितम् Mṛcch. 4. 2 (1); अभ्युद्धृतिश्च सहसा ममैवेयमनुष्ठिता KundaMā. 6. 32; मया ... चन्दनदासस्य गृहे गृहजनं निक्षिप्य ... न्याय्यमनुष्ठितम् MudrāRā. 2. 7 (3); 2. 12 (16); मधुरसविसरम् ... वर्षता वचसैव ते सर्वमनुष्ठितम् HarṣaC. 320. 14; विजयसेनेन महाव्यापारोऽनुष्ठितः PriyDa. 4. 7 (4); मयापि चैनां देवीहस्ते सगौरवं निक्षिपता युक्तमेवानुष्ठितम् Ratnā. 1. 6 (16); कः सः ... येनैतत् मानुषमात्रदुष्करं महत्कर्मानुष्ठितम् DaśKuC. 38. 16; 111. 23; (पवनंजयः) उत्थायानुष्ठितस्नान-भोजनादिवपुःक्रियः। ... क्रामन्भवनादेष सहसैक्षत गेहिनीम् PadmP. (Ra.) 16. 78; तथानुष्ठिते सति ततः पिङ्गलकसंजीवकयोः सर्वबन्धुभृत्यपरित्यागेन महास्नेहेन कालो वर्तते Hitopa. 2. 98 (2); 2. 10 9 (12); बकेन यथाशक्ति राजकार्यमनुष्ठितम् Hitopa. 3. 29 (8); 4. 10 (8); एकेनैव कपिपरमाणुना तावदेवमनुष्ठितम् MahāvīC. 6. 5 (6); मम देवीभ्यां प्रयोगोऽयमनुष्ठितः BṛKathāŚloSaṁ. 12. 59; 18. 436; उद्यता जयिनि कामिनीमुखे तेन (चन्द्रमसा) साहसमनुष्ठितं पुनः RāmC. 2. 95; KāvyPra. 309. 4; VyaktiVi. 41. 25; रघुपतिः ... अकथयन्मिथिलेन्द्रतनूजया। सह यदुक्तमनुष्ठितमीप्सितं जनसमक्षमुपांशु च मुग्धया RāmC. 7. 75; गना[ण]पतिनामा ... राज्ञः समीपवर्त्ती तेनेदम् अनुष्ठितं सर्व्वम् EI. vi. 33. 59; (यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः) प्रचरितैरनुष्ठितैः ManuBh. ii. 359. 18 (*on* 10. 100); महत्खलु मित्रकृत्यमनुष्ठितम् SubhaDha. 3. 2 (15); कार्याणि त्रिवर्गसाधनानि अनुतिष्ठेत्। अनुष्ठितेषु तेषु शरीरसंस्कारार्थमाह JayaMa. 48. 7 (*on* 1. 4); सुरैरेव महाभागे सर्वमेतदनुष्ठितम् BrahmP. 39. 38; वैरं देवैरनुष्ठितम् AdhyāRā. vii. 2. 32; दिग्जयव्यसनिना पुनःपुनस्तस्य किं प्रियमनुष्ठितं मया VikraDeC. 5. 52; प्रागल्भ्यादनुष्ठितं मृगदृशा शक्यं न तद्घोषिताम् SubhāRaK. 19. 41; SaduktiKa. 156. 14; अस्माकम् ... उचितमत्रभवतानुष्ठितम् Kāvyānu. (He.) 21. 25; भ्रातर्भवता किमनुष्ठितम् PariPar. 6. 75; (विजयसेननामा स्वशिष्यः प्रहितः) युक्तमनुष्ठितं भगवता MudriKu. 4. 7 (9); अनुष्ठितं तर्हि पुलस्त्यसंदेशरहस्यं बिभीषणेन PrasaRā. 7. 5 (4); इत्थं निराकृथा यत्तत्सुष्ठु नानुष्ठितं त्वया PāṇḍaC. 1. 180; साधु अनुष्ठितम्। अनिर्वेदो हि संवननबीजाक्षरं सिद्धेः MohaRāPa. 1. 26 (4); दंपत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषोर्भग्नो मानकलिः सहासरभसं कण्ठग्रहोऽनुष्ठितः ŚārṅgaPa. 3715; आकर्ण्य वचः प्रियस्य सहसा तन्मुग्धयानुष्ठितं येनाकाण्डसमाप्तसर्वकरणक्लेशः कृतोऽन्यो जनः Subhāṣi. 1054; अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम्। नानुष्ठेयं मनुष्यैस्तद् उक्तं कर्म समाचरेत् BallāC. 68. 3; (युद्धक्रिया) कुत्राप्युचितप्रयोगविषयाभावेन नानुष्ठिता सा। मायागमसंप्रदायपदवी मय्येव धिग्जीर्यति AdbhuDa. 8. 8; कथमिदमाचार्येण राजविद्विष्टमनुष्ठितं कर्म AmṛUda. 3. 25 (7); महत्प्रियमनुष्ठितं भवता MadaKeC. 112 (3); 22 (5); **1Aiii** who has undertaken or done पप्रच्छ ब्राह्मणान् विप्र वामनोऽदितिनन्दनः। विज्ञातार्थोऽपि भगवान् लोकयात्रामनुष्ठितः BṛDharmaP. i. 47. 1; **1Aiv** (evil etc.) committed दैवोपहतचित्तेन यन्मयापकृतं (v.l. अनुष्ठितम्) पुरा MahāBhā. ix. 2. 58; तच्च मोहाद्दारुणमनुष्ठितम् Śāk. 6. 13 (1); न च स्वधर्मोल्लङ्घनं मया कदाचिदप्यनुष्ठितम् ViṣṇuP. iv. 4. 80; iv. 7. 30; किमिदं मयाज्ञानादनुष्ठितम् MārkP. 61. 27; 71. 11; अज्ञानाद्देवदेवस्य यदस्माभिरनुष्ठितम्। तत्सर्वं क्षन्तुमर्हसि BrahmāṇḍP. i. 27. 63; किमिदमकार्यमनुष्ठितं त्वया Mṛcch. 8. 37 (7); UttaRāC. 3. 27 (4); चाणक्यहतकेनेदमकार्यमनुष्ठितं न राक्षसेन MudrāRā. 5. 5 (42); धिक् सूत किमनुष्ठितं भवता VeṇīSaṁ. 4. 87; न चाग्निशुद्धिमल्पकाः प्रतियन्तीत्यतो दारुणमनुष्ठितम् UttaRāC. 4. 10 (8); अशोभनमनुष्ठितम्

**अनुसंधानमात्रप्राणत्व** (anusandhānamātraprāṇa-tva) *n.* the state of having mere connection(with the next act) as the vital aspect or life यत्र त्वनुसंधानमात्रप्राणत्वेन तदुपयोगितया वृत्तान्तमुच्यते तदुपश्लिष्टमङ्कमुखम् AbhinBhā. ii. 417. 19 (*on*18. 16)

**अनुसंधानयाग** (anusandhāna-yāga) *m.* sacrifice or worship in the form of installation अनुसंधानयागे तु योगपीठं प्रकल्पयेत् PāraS. 6. 148.

**अनुसंधानयुक्तता** (anusandhānayukta-tā) *f.* the state of being associated with meditation मुमुक्षुणा क्रियमाणं कर्म परब्रह्मात्मकमेवेत्यनुसंधानयुक्ततया ज्ञानाकारं साक्षादात्मावलोकनसाधनम् GītāBh. (Rā.) 265. 2 (*on* 4. 24)

**अनुसंधानयोग्यता** (anusandhānayogya-tā) *f.* the state of being competent of recollection or remembrance प्राणस्यापि अनित्यत्वादनुसंधानयोग्यतामपश्यन्तः ... बुद्धिमेव काणादप्रभृतय आत्मानमाहुः PratyabhiVi. i. 318. 5 (*on* i. 6. 5)

**अनुसंधानरहित** (anusandhāna-rahita) *adj.* **A** devoid of recognition अनुसंधानरहितमैक्यं चेदेकता न तत्। ... अनुसंधानरहितं समुदायैक्यमेव चेत्। चेतनेष्वस्तु तन्नाममात्रमेव AnuVyā. 43A. 11 (*on* 3. 2); **B** devoid of experience नानादेहगभोगानुसंधानं योगिनो यथा। ... अनुसंधानरहितदेहबाहुल्यमन्यथा। सिद्धमेव हि UpādhiKha. 1B. 7; **C** devoid of correlation, i.e. unification अन्योन्यविषयानुसंधानरहितानाम् ... जडानां बीजाङ्कुरादीनाम् Bhāsk. ii. 191. 18 (*on* ii. 4. 15)

**अनुसंधानरहितत्व** (anusandhānarhita-tva) *n.* the state of being devoid of recognition जीवब्रह्मणी चेतनत्वे सति परस्परैक्यवती न भवतः परस्प(रस्वरूपानु)रानुसंधानरहितत्वात् NyāySu. (Ja.) 507B. 9 (*on* iii. 2. 10)

**अनुसंधानराहित्य** (anusandhāna-rāhitya) *n.* absence of contemplation or meditation समाधौ क्रियमाणे ... अनुसंधानराहित्यमालस्यं भोगलालसम् ... विघ्नबाहुल्यम् ... त्याज्यं ब्रह्मविशारदैः TejoBiU. 1. 40; AparoAnu. 127; SarvaVeSāSaṁ. 922.

**अनुसंधानरूप** (anusandhāna-rūpa) *adj.* **1A** of the form of thinking अनुसंधानरूपं तच्चित्तं च परिकीर्तितम् DevīBhāP. vii. 32. 38; **1B** of the form of ascertainment, i.e. determination पितृदैवत्यममुं पाकं करिष्यामीति एवंविधानुसंधानरूपं संकल्पविशेषं बाधित्वा श्राद्धात्पूर्वं तन्मध्ये वा शक्यः (वैश्वदेवः) CaturCin. iii (1). 1054. 9; **2** of the form of experience दुःखानुसंधानरूपस्यानर्थस्य उपहितनिष्ठत्वेन ... बद्धस्य निवृत्तिरे AdvaiSi. 817. 10; **3** of the form of correlation, i.e. unification अनुसंधानं (v.l. अनुसंधानरूपम्) प्रत्यभिज्ञानमपि एतदुभयमेलनात्मकम् अत्रैवान्तर्भूतम् PratyabhiVi. i. 188. 5 (*on* i. 4. 8); ऐक्याभासमात्रे अनुसंधानरूपं प्रमाणम् PratyabhiVi. ii. 112. 4 (*on* ii. 3. 9); चिन्मयतया परामर्शः- अनुसंधानरूपं ग्रहणम् Bhāsk. i. 150. 14 (*on* i. 4. 1); **4** of the form of attribution (प्रधानकारणवादे) अचेतनायाः प्रकृतेरनुसंधानरूपोऽध्यासः सुतरां न संभवति VedāntSā. (Rā.) 146. 2 (*on* ii. 1. 10); BrahmSūBh. (Śrī.) ii. 14. 15 (*on* ii. 1. 10); **5** of the form of investigation (शूद्रस्य) उच्चारणे धारणे शब्दतोऽर्थत-श्चानुसंधानरूपे बौद्धनिषेधः BālamBha. i. 379. 16 (*on* 1. 121)

**अनुसंधानरूपत्व** (anusandhānarūpa-tva) *n.* the state of being of the form of correlation, i.e. unification अन्योन्यानुसंधानरूपत्वम् ... चैतन्येन व्याप्तम् PratyabhiVi. ii. 190. 4 (*on* ii. 4. 15)

**अनुसंधानरूपापेक्षा** (anusandhānarūpāpekṣā) *f.* expectancy for, i.e. dependence on the form of correlation, i.e. unification जडानाम् ... प्रयोजकत्वम् ... न युज्यते, अनुसंधानरूपापेक्षामूलत्वात् तस्याश्च चेतनमात्रे' युक्तत्वात् Bhāsk. ii. 191. 22 (*on* ii. 4. 15)

**अनुसंधानलक्षणा** (anusandhāna-lakṣaṇā) *adj.* (*f.*) of the characteristic of installation पीठब्रह्मवशास्थानस्त(म्भ)म्ब?स्य? चतुरात्मनः। चतुर्दिग्वीक्षमाणस्य यानुसंधानलक्षणा। बोद्धव्यं सा प्रतिष्ठा च दिग्व्यूहपरिपूरकी PauṣkS. 43 .70.

**अनुसंधानवत्** (anusandhāna-va(n)t) *adj.* possessing knowledge or awareness, i.e. being aware of नेह नानास्ति किंपि ... । इत्यादिश्रुतिमानेन जीवांशाः सर्व एव च। नियमेनानुसंधानवन्तो यद्येकता स्वतः AnuVyā. 43B. 5 (*on* 3. 2)

**अनुसंधानवत्** (anusandhāna-vat) *adv.* like recollection अनुसंधानं हि सारूप्याद्विजातीयेष्वपि भवति गवयग्रहणसमये गोपिण्डानुसंधानवत् NyāyMañ. i. 204. 5.

**अनुसंधानवत्त्व** (anusandhānavat-tva) *n.* the state of being that which possesses knowledge or awareness (आत्मनः) शुद्धस्यावच्छिन्नतादात्म्यात् परंपरया अनुसंधानवत्त्वम् LaCandr. 818. 35.

**अनुसंधानवन्ध्य** (anusandhāna-vandhya) *adj.* devoid of connection गान्धर्वस्य किं लक्षणमुक्तम् ... मुनिना। तथाप्यनुसंधानवन्ध्यो(?न्ध्यं) महाभो(भा)गं बोधयितुमनुसंधीयते AbhinBhā. iv. 394. 13 (*on* 33. 1)

**अनुसंधानवर्जित** (anusandhāna-varjita) *adj.* devoid of correlation, i.e. unification अनुसंधानवर्जितानाम् ... जडानां बीजाङ्कुरादीनाम्। ... प्रयोजकत्वं न कल्पयते Bhāsk. ii. 191. 17 (*on* ii. 4. 15)

**अनुसंधानवर्जिन्** (anusandhāna-varjin) *adj.* devoid of correlation, i.e. unification अस्मिन् सतीदमस्तीति कार्यकारणतापि या । साप्यपेक्षाविहीनानां जडानां नोपपद्यते। ... स्वात्मैकनिष्ठानामनुसंधानवर्जिनाम् ĪśvaPraSū. ii. 4. 15.

**अनुसंधानवाक्य** (anusandhāna-vākya) *n.* sentence referring to the connection, i.e. connecting link तस्यानुसंधानवाक्यं शास्त्रस्य पुरुषश्रेयोऽभिधायकत्वात् NyāyVār. 1. 7 (*on* i. 1.1)

**अनुसंधानवाक्यत्व** (anusandhānavākya-tva) *n.* the state of being the sentence which refers to the connection प्रामाण्यज्ञानोपायप्रतिपादनपरतयानुसंधानवाक्यत्वमस्य पूर्वमुक्तं संप्रति परपर्यनुयोगमुखेनानुसंधानवाक्यत्वं प्रतिपादयति TātpaṬ. (Vā.) 15. 3 (*on* i. 1. 1)

**अनुसंधानविरहप्रसङ्ग** (anusandhānaviraha-prasaṅga) *m.* undesired occasion for the absence of knowledge यावन्ति ज्ञानानि तावन्त्यज्ञानानीति मते एकस्मिन्नपि जीवे ब्रह्मविषयकाज्ञानानां भिन्नत्वेनानुसंधानविरहप्रसङ्गः AdvaiSi. 816.15.

**अनुसंधानविरोधिन्** (anusandhāna-virodhin) *adj.* contradictory to, i.e. obstructive of the contemplation or meditation धीः ... धीरस्योदेति विषयेऽनुसंधानविरोधिनि PañcDa. 11. 127.

**अनुसंधानविशेष** (anusandhāna-viśeṣa) *m.* particular (mode of) contemplation or meditation श्रीवैकुण्ठगद्ये ... भगवतः ... अनुसंधानविशेषांश्चोपदिश्य ... अनन्यप्रयोजनो विचित्रो योगः प्रतिदिनकर्तव्यत्वेन विहितः PāñcRāRa. 57. 13.

**अनुसंधानविषय** (anusandhāna-viṣaya) *adj.* referring to the cognition (of same thing) प्रत्यक्षबुद्धिनिरोधे तदनुसंधानविषयः प्रत्ययः स्मृतिः। तदनुगृहीतस्तदनुसंधानविषयः प्रत्ययस्तद्भावविषयः प्रत्यभिज्ञानम् NyāyVār. 368. 18 (*on* iii. 1. 19)

**अनुसंधानविषयीकर्तुम्** (anusandhānaviṣayīkartum) *inf.* to make the object of correlation, i.e. unification जडाः ... अन्योन्यरूपम् ... अनुसंधातुम् अनुसंधानविषयीकर्तुमसमर्थाः Bhāsk. ii. 190. 16 (*on* ii. 4. 15)

**अनुसंधानविषयीकृत** (anusandhānaviṣayīkṛta) *adj.* which is made the object of ascertainment or determination किं तत्प्रयोजनलक्षणम् ... संपाद्यत्वेन अभिसंहितम् - चित्तेऽनुसंधानविषयीकृतम् Bhāsk. i. 32. 19 (*on* i. 1. 1)

**अनुसंधानविस्मृति** (anusandhāna-vismṛti) *f.* act of forgetting of the application (of identity) अन्वयव्यतिरेकादेरनुसंधानविस्मृतौ। यदा देहान्तरज्ञानं देहैक्यावसितिः कुतः AnuVyā. 40B. 8 (*on* 3. 2)

**अनुसंधानविहीनत्व** (anusandhānavihīna-tva) *n.* the state of being devoid of correlation, i.e. unification अनुसंधानविहीनत्वाज्जडो भावः ... कथं परत्र प्रसरेत् PratyabhiVi. ii. 190. 6 (*on* ii. 4. 15)

**अनुसंधानवृद्धि** (anusandhāna-vṛddhi) *f.* increase in the knowledge शिष्याणामनुसंधानवृद्धये प्राक्तनार्थोपसंहारपूर्वकं वक्त्रन्तरमासूत्रयन्नाह एवमेतदित्यादि AbhinBhā. ii. 25. 12 (*on* 9. 1)

**अनुसंधानवैधुर्य** (anusandhāna-vaidhurya) *n.* absence of recognition न चेन्द्रियभेदादनुसंधानवैधुर्यमिति वाच्यम् MānaMe. 205. 2.

**अनुसंधानव्यत्यय** (anusandhāna-vyatyaya) *m.* transposition or exchange of meditation जीवाद्व्यावृत्तस्य परस्यानुसंधानमुषस्तवत्कहोलेनापि कार्यं, तथाशनायाद्यतीतत्वेन जीवाद्व्यावृत्तस्य कहोलवदुषस्तेनापि कार्यमेवमन्योन्यमनुसंधानव्यत्ययः VedāntPāSau. 332. 3 (*on* iii. 3. 36)

**अनुसंधानव्याप्यता** (anusandhānavyāpya-tā) *f.* the state of being what is pervaded by knowledge अनुसंधानाभावः ... भेदमात्रप्रतिपादनेन चरितार्थः स्यात्। न चैवम्। चेतनैक्यस्यानुसंधानव्याप्यतयोक्तत्वात् NyāySu. (Ja.) 508A. 6 (*on* iii. 2. 10)

**अनुसंधानशून्य** (anusandhāna-śūnya) *adj.* devoid of knowledge, i.e. wisdom कवेरर्थापथस्पृशः। ... व्युत्क्रमो भूषणं यथा। अनुसंधानशून्यस्य भूषणं दूषणायते KāvyMī. 112. 9.

**अनुसंधानशून्यत्व** (anusandhānaśūnya-tva) *n.* the state of being devoid of knowledge सर्वस्यैव व्यवहारस्य... प्राप्तत्वात् ज्ञानक्षणानां परस्परभेदेनानुसंधानशून्यत्वात् ... व्यवहारानुपपत्तेः RājMār. 83. 3.

**अनुसंधानसंवाद्यादि** (anusandhānasaṁvādy-ādi) *adj.* setting or keep-

ing in order, i.e. tuning up and harmonising etc. वीणावाद्योपजीवकत्वादवनद्ध-स्यानुसंधानसंवाद्यादिना प्रहारपञ्चकयोगेन क्रियत इति सङ्घोटना AbhinBhā. i. 213. 18 (*on* 5. 20)

**अनुसंधानसंसिद्धि** (anusandhāna-saṁsiddhi) *f.* **A** obtainment of ascertainment or determination अर्थान्तरसंबन्धे प्रत्यक्षे देहनिष्ठिते। अनुसंधानसंसिद्धौ न किंचिन्मानमिष्यते BṛĀraUBhVā. ii. 1. 144 (comm. मयैवं विदितमित्यादि यदनुसंधानम्); **B** attainment of meditation (श्रीनारायण उवाच) अनुसंधानसंसिद्ध्यै द्वयमन्त्रधरोऽभवम् BṛBrahmaS. iii. 6. 61.

**अनुसंधानसद्भाव** (anusandhāna-sadbhāva) *m.* existence of contemplation or meditation परमात्मानुसंधेयः ... अपहतपाप्मत्वादिगुणरूपः ... तथानुसंधान-सद्भावभावित्वात् स्वरूपोपलब्धेः BrahmSūBh. (Śrī.) ii. 370. 10 (*on* iii. 3. 52)

**अनुसंधानसमर्थ** (anusandhāna-samartha) *adj.* competent in connection सुखसाधनतामनुसृत्य ... क्रमेण समुपजायमानेच्छा पूर्वापरानुसंधान-समर्थमाश्रयमनुमापयति NyāyMañ. ii. 8. 12.

**अनुसंधानसमाधानपर** (anusandhānasamādhāna-para) *adj.* given to, i.e. engrossed in meditation and contemplation वर्तमानभविष्यन्त्योः स्थित्योरा-देहमेकधीः। स्वसंवित्त्यानुसंधानसमाधानपरो भव YogVā. v. 50. 32 (comm. अनुसंधानं ध्यानं समाधानं समाधिः)

**अनुसंधानसंप्रतिपत्ति** (anusandhāna-sampratipatti) *f.* knowledge of, i.e. reference to the contemplation or meditation सर्वास्वपि ब्रह्मविद्यासु अहं ब्रह्मास्मीत्यनुसंधानसंप्रतिपत्तेः ŚivārkaMaDī. i. 467. 10 (*on* i. 3. 30)

**अनुसंधानसंभव** (anusandhāna-sambhava) *m.* **A** possibility of recollection (प्रबोधे) आत्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते ... स्यादेतत् ... सुषुप्तप्रबुद्धस्य पूर्वप्रबोधव्यवहारानुसंधानसंभवादविरुद्धम् BrahmSūBh. (Śaṅ.) 199. 2 (*on* i. 3. 30); PrakaVi. 289. 21; **B** possibility of knowledge प्रकाशादेर्विततस्य वातायनघटादिस्थानभेदैः परिच्छिद्यानुसंधानसंभवः BrahmSūBh. (Rā.) 453. 7 (*on* iii. 2. 33)

**अनुसंधानसव्यपेक्ष** (anusandhāna-savyapekṣa) *adj.* expectant of, i.e. dependent on recollection इच्छा धर्मिण्याश्रिता ...। पूर्वानुभूतसुखसाधनत्वानुसंधान-सव्यपेक्षतदुत्पादनपर्यालोचनया तत्कार्यसमानकर्तृकत्वावगमाच्छरीरादिविलक्षणाश्रया NyāyMañ. ii. 8. 17.

**अनुसंधानसाधन** (anusandhāna-sādhana) *n.* means of knowledge अन्तःकरणेनैव सुखादिज्ञानम्। तच्च ...। चित्तरूपमनुसंधानसाधनम् SarvaMaSaṁ. 3.20.

**अनुसंधानसाधित** (anusandhāna-sādhita) *adj.* accomplished through correlation, i.e. unification यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते। आभासोऽप्यर्थ एकस्मिन्ननुसंधानसाधिते ĪśvaPraSū. ii. 3. 3; AlaṅkāSa. 47. 5; SāhiDa. 534. 2.

**अनुसंधानसामग्रीत्व** (anusandhānasāmagrī-tva) *n.* the state of being the totality of causes of recollection अन्तःकरणैक्याध्यासस्यानुसंधानसामग्रीत्वेन सुषुप्त्यादौ कथं तद्वारणम् LaCandr. 816. 39.

**अनुसंधानसामर्थ्य** (anusandhāna-sāmarthya) *n.* power or capacity of cognition येष्वनुगतं तत्सामान्यं तेषु बुद्ध्याननुसंधीयमानेषु तद्वृत्तिसामान्य-ग्रहणासंभवान्न चानुसंधानसामर्थ्यं बुद्धेरस्ति NyāyMañ. i. 275.18.

**अनुसंधानसामर्थ्यरहित** (anusandhānasāmarthya-rahita) *adj.* devoid of power of connection पूर्वापरानुसंधानसामर्थ्यरहितात्मना। भारः कथमयं वोढुमविकल्पेन पार्यते NyāyMañ. i. 29. 12.

**अनुसंधानसिद्धि** (anusandhāna-siddhi) *f.* **1** establishment of connection न च नित्यबोधमन्तरेण पूर्वापरबुद्धीनामनुसंधानसिद्धिः TattvPradī. (Ci.) 382. 7; **2** accomplishment of contemplation or meditation दासवेश(ष)श्च संस्कारो मुख्यः सिद्धान्तवर्त्मनि। अपेक्षितो मुमुक्षूणामनुसंधानसिद्धये BṛBrahmaS. i. 1. 26.

**अनुसंधानसिद्ध्यर्थम्** (anusandhānasiddhyartham) *adv.* for the sake of accomplishment of contemplation or meditation अनुसंधानसिद्ध्यर्थं दासवेषो मया धृतः BṛBrahmaS. i. 1. 28.

**अनुसंधानस्मरणादिक्रिया** (anusandhānasmaraṇādi-kriyā) *f.* action like knowing and recollecting etc. ज्ञानं किमात्मवन्नित्यं सौगतैरुपगम्यते। प्राग्दर्शितानु-संधानस्मरणादिक्रियाक्षमम् NyāyMañ. ii. 15. 21.

**अनुसंधानहेतु** (anusandhāna-hetu) *m.* cause of contemplation or meditation पार्षदादीनां यथावदनुसंधानहेतुतया ... तमेव शरणमुपगच्छेत् PāñcRāRa. 161. 13.

**अनुसंधानात्मक** (anusandhānātma-ka) *adj.* (*f.*-ikā) **1** of the nature of ascertainment or determination यत् खलु चैत्र गां बधानेति वाक्यमिदमित्यनु-संधानात्मकं स्मार्तं ज्ञानमुपजायते ... विशिष्टार्थविषयं विज्ञानं प्रसूते तच्छाब्दं प्रमाणम् TātpaṬ. (Vā.) 105. 22 (*on* i. 1. 2); **2A** of the nature of after-cognition or recognition (यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः) ज्ञातस्यापि विशेषतो निरूपणमनुसंधानात्मकमत्र प्रत्यभिज्ञानम् Loc. 30. 23 (*on* 1. 8); **2B** of the nature of thinking or consideration लिङ्गपरामर्शोऽनुमानं परामर्शश्चानुसंधानात्मकं तृतीयं ज्ञानम् NyāySu. (Ja.) 261A. 3 (*on* ii. 1. 2); अनुसंधानात्मिकान्तःकरणवृत्तिः चित्तम् VedāntSā. (Sa.) 10. 12; **2C** of the nature of contemplation or meditation तुर्यावस्था नाम चैतन्याभिव्यक्तिहेतुर्यो नादस्तस्यानुसंधानात्मिका दशा SetuBa. 342. 31; **3** of the nature of correlation, i.e. unification, cf. **अनुसंधानात्मकत्व**.

**अनुसंधानात्मकत्व** (anusandhānātmaka-tva) *n.* the state of being of the nature of correlation, i.e. unification (शब्दज्ञाने) योजना च इति विकल्पव्यापार इति अनुसंधानात्मकत्वादिति भावः Bhāsk. i. 286. 4 (*on* i. 5. 19)

**अनुसंधानात्मन्** (anusandhānātman) *adj.* **1** of the nature of rejoining or revival (बीजं बिन्दुः कार्यम्) बिन्दुनानुसंधानात्मना ... अर्थे संपाद्ये कर्तुः प्रकृतयः Loc. 149. 20 (*on* 3. 12); **2** of the nature of recollection नन्वेकप्रघट्टकेन विचित्रप्रत्यय एवानुसंधानात्मा भविष्यति NyāyVārPari. 308. 1; (काव्ये रमणीयतायाः) कारणं च तदवच्छिन्ने (लोकोत्तरत्वरूपजात्यवच्छिन्ने) भावनाविशेषः पुनःपुनरनुसंधानात्मा RasGaṅ. 5. 2.

**अनुसंधानादि** (anusandhānādi) *adj.* **1** recollection or remembrance etc. प्रजापतिनियोगात् ... महर्षयः ... वेदभागान् पश्यन्ति। तन्नियोगश्च तत्तद्दृषिकत्वेनानु-संधानादेः कर्मोपयिकत्वात् तेषामपि प्रवाहानादित्वान्नानित्ययोगादिदोषः NyāyPari. 390. 4; **2** continuation etc., cf. **अनुसंधानादिकार्य**; **3** knowing etc., cf. **अनुसंधानादिव्यवहार**.

**अनुसंधानादिकार्य** (anusandhānādi-kārya) *n.* effect such as continuation etc. शरीरे ... प्रतिक्षणमुत्पादविनाशौ संभवत इति स्थैर्याभावात्कथमनु-संधानादिकार्ययोगोऽस्य NyāyMañ. ii. 12. 2; शरीरस्य भिन्नत्वात् संतानान्तरवत् स्मृत्यनुसंधानादिकार्ययोगो दुर्घट इति न तस्येच्छादिकार्याश्रयत्वम् NyāyMañ. ii. 12. 24; अनादिप्रबन्धप्रवृत्तो हि ज्ञानानां हेतुफलभावप्रवाहः ... संतानः ... तत्कृतश्चायमनुसंधानादिकार्यनियमः NyāyMañ. ii. 16. 4.

**अनुसंधानादिप्रसङ्ग** (anusandhānādi-prasaṅga) *m.* undersired occasion for recollection etc. द्वितीयादिशरीरस्य ... परीत्याप्यैकात्म्ये नानुसंधानादिप्रसङ्गः BhedaDhi. 71. 3.

**अनुसंधानादिव्यवहार** (anusandhānādi-vyavahāra) *m.* activity such as knowing etc. (भूतानि) चैतन्यत्वानपायात् ... स्मृत्यनुसंधानादिव्यवहारनिवहनिर्वाहण-निपुणतामनुभविष्यन्तीति किमनुमानक आत्मा स्यात् NyāyMañ. ii. 3. 16; प्रमातृतत्त्वमनुसंधानादिव्यवहारसमर्थमस्तु नाम NyāyMañ. ii. 39. 15; नित्यत्वाद्य प्रत्यभिज्ञानुसंधानादिव्यवहारप्रबन्धनिर्वाहणक्षमा बुद्धिः NyāyMañ. ii. 61. 16.

**अनुसंधानाद्यव्यवस्था** (anusandhānādy-avyavasthā) *f.* irregularity in the establishment of recollection etc. अनुसंधानाद्यव्यवस्थादिकं प्रागेव निराकृतम् AdvaiSi. 845. 19.

**अनुसंधानाधायिन्** (anusandhānādhāyin) *adj.* bringing about correlation, i.e. unification न च तुर्यं ज्ञातेयनिबन्धनम् अनुसंधानाधायि संभाव्यते इति ध्वंसेरन् व्यवहाराः PratyabhiVi. i. 138. 7 (*on* i. 3. 7)

**अनुसंधानाननुसंधानप्रयोजक** (anusandhānānanusandhāna-prayojaka) *adj.* conducive to the experience and non-experience भोगायतनाभेदतद्भेदावनु-संधानाननुसंधानप्रयोजकोपाधी SiddhāLeSaṁ. 329. 1.

**अनुसंधानाननुसंधानरूप** (anusandhānānanusandhāna-rūpa) *adj.* of the form of experience and non-experience इह च दहनतुहिनादौ क्लृप्ततयानु-संधानाननुसंधानरूपविरुद्धधर्मयोरेव प्रयोजकत्वात् ... असिद्धिवारकविशेषणवत्त्वं न दोषः Nyāyāmṛ. 577B. 8.

**अनुसंधानाननुसंधानव्यवस्था** (anusandhānānanusandhāna-vyavasthā) *f.* settlement or establishment of experience and non-experience यच्छुद्धं चैत्रीयदुःखानुसंधातृ तदेव मैत्रीयदुःखानुसंधात्रिति कथमनुसंधानाननुसंधानव्यवस्था Nyāyāmṛ. 581A. 7; AdvaiSi. 817. 5; इतरे त्वन्तःकरणाभेदतद्भेदाभ्यामनुसंधाना-ननुसंधानव्यवस्थामाहुः SiddhāLeSaṁ. 333. 1.

**अनुसंधानानियम** (anusandhānāniyama) *m.* irregularity of contemplation or meditaion ब्रह्मव्यतिरिक्तानां चेतनानां मुमुक्षुध्येयत्वनिषेधात् ... अन्नमयादीना-मनुसंधानानियमः BrahmSūBh. (Śrī.) ii. 309. 9 (*on* iii. 3. 15)

**अनुसंधानानुपपत्ति** (anusandhānānupapatti) *f.* untenability of recollection जागरणे ... साक्षिण एव चाधिकोपाधिविशिष्टस्य प्रमातृत्वान्नानुसंधानानुपपत्तिः SiddhāBi. 136. 2 (comm. अनुसंधानं स्मरणम्)

**अनुसंधानान्तर** (anusandhānāntara) *n.* another recollection एतावन्तं कालं मुखमद्राक्षम् इत्येवानुसंधानेनानुसंधानान्तरे विवादात् Vādā. 21. 4.

**अनुसंधानापत्ति** (anusandhānāpatti) *f.* undesired contingency of experience एकस्सुखी अपरो दुःखीत्यादिव्यवस्थायाश्च …। कल्पितभेदेनोपपत्तौ सर्वशरीरेष्वेकस्यानुसंधानापत्तिरिति चेन्न SarvaDaKau. 141.3; न च चैत्रसुखादीनां मैत्रेणानुसंधानापत्तिः अन्तःकरणावच्छिन्नेन … तत्र परस्परं भेदात् AdvaiSi. 540.9.

**अनुसंधानापरिहार** (anusandhānāparihāra) *m.* non-removal, i.e. inevitability of experience चिन्मात्रमेवानुसंधातृ …। अवच्छिन्नस्यानुसंधातृत्वेऽप्यवस्थात्रयानुस्यूताविद्यावच्छिन्नस्यैवानुसंधातृत्वेन तद्वारा शुद्धस्यानुसंधानापरिहाराच्च Nyāyāmṛ. 582B. 8.

**अनुसंधानापात** (anusandhānāpāta) *m.* undesired contingency of experience आत्माभेदे तु अन्योऽन्यं सुखदुःखाद्यनुसंधानं स्यात् … नापि विश्लिष्टोपाधिभेदस्तत्र तन्त्रम्। मातृसुखादेर्गर्भस्थेनानुसंधानापातात् Nyāyāmṛ. 580A. 7; AdvaiSi. 815. 23.

**अनुसंधानाभाव** (anusandhānābhāva) *m.* **1A** absence of knowledge विकल्पोदयसमयेऽनुसंधानाभावात् भिन्नप्रत्ययगोचरत्वम् AlaṅkāRa. 31 (5); नास्त्येव वस्तुतः कश्चिदधिकारी … ब्रह्मणः इति चेन्न … स्वयमनुसंधानाभावे च न प्रवृत्तिः ŚatDū. 195. 16; अनुसंधानाभावो भेदनिमित्तः … नाभेदं निवर्तयति NyāySu. (Ja.) 507B. 12 (*on* 2. 10); **1B** absence of experience, cf. **अनुसंधानाभावापत्ति**; **2** absence of recollection अल्पे ज्ञानादावनुसंधानाभावेऽपि प्रधानसाधनोपासनादिफलानुसंधानात् TattvPrakā. 182A. 7 (*on* iii. 3. 56); स्थायिविचारप्रयोजनं त्यागकाले आग्रयणस्यैवानुसंधानाभावः MīmāKau. ii. 290. 12 (*on* iii. 2. 33); **3** absence of recognition न च जीवभेदादनुसंधानाभावः। आत्मव्यतिरिक्तजीवसद्भावे प्रमाणाभावात् MānaMe. 205. 4.

**अनुसंधानाभावापत्ति** (anusandhānābhāvāpatti) *f.* undesired contingency of the absence of experience उपाधेश्चाणुस्वीकारेण शिरःपाण्याद्यवयवैर्युगपदसंबन्धतया तद्गतसुखादीनां युगपदनुसंधानाभावापत्तेः VedāntRaMañ. 1. 1 (17. 9)

**अनुसंधानाभावोपपत्ति** (anusandhānābhāvopapatti) *f.* tenability of the absence of knowledge एकाशरीरविशिष्टस्य शरीरान्तरेऽनुसंधानाभावोपपत्तेः उपपादितमेतत् … इति SarvaDaKau. 141. 7.

**अनुसंधानाभिधायिवाक्य** (anusandhānābhidhāyi-vākya) *n.* statement expressive of continuation (of the plot) प्रत्यङ्गान्तं यो बिन्दुः अनुसंधानाभिधायिवाक्यं यत्संक्षिप्तं प्रयोजनम् … विस्तारमुद्दिश्येति वाच्यमुक्तम् AbhinBhā. ii. 423. 25 (*on* 18. 32)

**अनुसंधानाभ्यासपाटव** (anusandhānābhyāsa-pāṭava) *n.* proficiency or skill in the repeated practice of meditation न च विद्यानुष्ठानदशायां स्वयमीदृशप्रदेशस्थितयैतादृश्या नाड्या निष्क्रम्य ब्रह्म प्राप्नुवानीत्यनुसंधानाभ्यासपाटवात्तदानीं स्वनिष्क्रमनाडीपरिज्ञानं भवेत् … इति वाच्यम् ŚivārkaMaDī. ii. 462. 24 (*on* iv. 2. 16)

**अनुसंधानाभ्युपगम** (anusandhānābhyupagama) *m.* admission of continuity क्षणिकत्वेऽपि … संततेरेव जीवत्वाज्जडत्वाच्च … अनुसंधानाभ्युपगमे स्थिरत्वापत्तिः AṇuBh. 133. 21 (*on* ii. 2. 19)

**अनुसंधानायोग** (anusandhānāyoga) *m.* untenability of contemplation or meditation अन्नमयादिसर्वान्तरस्यानन्दमयस्यान्नमयाद्यनुसंधानक्रममन्तरेण तदन्तरत्वेनानुसंधानायोगात् तेषामनुसंधानं नियतम् BrahmSūBh. (Śrī.) ii. 308. 6 (*on* iii. 3. 14); देवताविशेषरूपाणामन्नमयादीनां विद्यानुष्ठानकालेऽनुसंधानायोगात् … त्यागे हेत्वभावात् ŚivārkaMaDī. ii. 342. 14 (*on* iii. 3. 32)

**अनुसंधानार्थता** (anusandhānārtha-tā) *f.* the state of being meant for contemplation or meditation स्वयमपरिमितस्वरूपस्यानुसंधानार्थतयापि कथं परिमितत्वम् VedāntDī. 164. 9 (*on* iii. 2. 32); स्तुत्यर्थतयान्वयोपपत्तेश्चेति। नानुसंधानार्थतयेत्यर्थः ŚrutaPra. ii. 480. 20 (*on* iii. 3. 18)

**अनुसंधानार्थत्व** (anusandhānārtha-tva) *n.* the state of being meant for contemplation or meditation तत्त्वमसीति सदात्मकत्वानुसंधानमुपदिश्येति। … अनुसंधानशब्देन निष्ठाशब्दार्थ उक्तः। इहोपदेशस्यानुसंधानार्थत्वं कथमवगतम् ŚrutaPra. iB. 181. 10 (*on* i. 1. 7)

**अनुसंधानार्थम्** (anusandhānārtham) *adv.* **1** for the sake of recollection प्रतिज्ञातोऽर्थः … विस्मृत इत्यनुसंधानार्थं पुनः शिष्यान् प्रतिबोधयति ManuBh. i. 51. 5 (*on* 2. 1); **2** for the sake of indication (अहन्यहन्यवेक्षेत कर्मान्तान्) राजधर्माणामनुसंधानार्थम् ManuBh. ii. 240. 6 (*on* 8. 419); **3** for the sake of contemplation or meditation एनं परमात्मानमस्मिन्नुपासकशरीरे प्राणाहुतिवेलायामनुसंधानार्थम् … आमनन्ति VedāntSā. (Rā.) 81. 5 (*on* i. 2. 33); अन्नमयाद्यान्तरत्वानुसंधानार्थमन्नमयाद्यनुसंधानं नियतम् ŚivārkaMaDī. ii. 309. 24 (*on* iii. 3. 15); **4** for the sake of consideration ब्रह्मचारिग्रहणं प्रकरणान्तरत्वेनातद्धर्माशङ्क्यानुसंधानार्थम् ManuBh. i. 166. 5 (*on* 2. 175)

**अनुसंधानासिद्धि** (anusandhānāsiddhi) *f.* non-establishment of contemplation or meditation अनुभयात्मत्वे त्वनुसंधानासिद्धेरेव ब्रह्मणः … °समस्तार्थविलयप्रसङ्गात् ŚatDū. 173. 24.

**अनुसंधानिन्** (anusandhānin) *adj.* investigating, searching, skilful at concerting or carrying out schemes, MW.; looking after; skilful in concerting plans, Apte.

**अनुसंधानीय** (anusandhānīya) *adj.* **1** to be continued or supplied (word etc. from earlier context) (क्षितावेव गन्धः। रूपमनेकप्रकारं शुक्लादि) अत्रापि क्षितावेवेत्यनुसंधानीयम् NyāyKa. 30. 1; **2** to be considered जनने मरणे नित्यमाशुच्यमनुधावति। सपिण्डान् मातृबन्धूंश्च … सहवासिषु। … अत्र मातृबन्धु° … °गुरुषु मरणाशौचमनुसंबन्धनीयम् (v. l. अनुसंधानीयम्) HārLa. 2. 14 [to be attended to, pw., *nt.*, MW.]

**अनुसंधानैकप्रमाणक** (anusandhānaikapramāṇa-ka) *adj.* having experience as the only testimony or means चैतन्यावच्छिन्नमैक्यमनुसंधानैकप्रमाणकम् NyāySu. (Ja.) 507B. 3 (*on* iii. 2. 10)

**अनुसंधानोपगम** (anusandhānopagama) *m.* acceptance or admission of recollection व्यावहारिकजीवस्वरूपज्ञानात् … स्वाप्नप्रपञ्चबाधः। … व्यावहारिकजीवे प्रातिभासिकजीवस्य अध्यस्ततया तदनुभवाद् व्यावहारिकजीवस्य अनुसंधानोपगमेऽपि अतिप्रसङ्गाभावात् SiddhāLeSaṁ. 292. 6.

**अनुसंधानोपपत्ति** (anusandhānopapatti) *f.* **1** tenability of continuation (of memory) स्वापप्रबोधयोश्च प्रलयप्रभवौ श्रूयेते … महाप्रलये … वैषम्यम्। नैष दोषः .. परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसंधानोपपत्तेः BrahmSūBh. (Śaṅ.) 199. 6 (*on* i. 3. 30); **2A** tenability of consideration or conceiving अनिर्वचनीयस्यापि विभ्रमस्याभावविलक्षणतया तथात्वेनानुसंधानोपपत्तेः TattvPradī. (Ci.) 60. 14; **2B** tenability of recollection or remembrance अनिर्वचनीयस्यापि भ्रमस्याभावविलक्षणतया तथात्वेनानुसंधानोपपत्तिरिति चेन्न Vādā. 20. 7; सुषुप्तौ तदवस्थोपहितमेव स्वरूपचैतन्यम् … इहापि स्वाप्नगजादिभासकचैतन्योपाधिभूतस्वप्नावस्थाविनाशजन्यसंस्कारात् अनुसंधानोपपत्तेश्च SiddhāLeSaṁ. 302. 7.

**अनुसंधाय** (anu-sandhāya) *ger.* **1A** having contemplated or meditated upon **B** having thought, having considered or having regarded **C** having considered as, i.e. having conceived or viewed **2A** having mixed together, i.e. having cross-connected **B** having connected, having correlated **3A** having installed, having superimposed **B** having ascribed, having attributed to **4** having arranged **5** having recollected or remembered **6A** having ascertained, having determined **B** having known or understood **C** having pointed **7** having investigated **1A** having contemplated or meditated upon अनुसंधाय वै द्वाभ्यामेकस्मिन् वा द्विजोत्तम। देवभावस्थितं ध्यात्वा पित्र्यं प्राणगणं क्रमात् PāraS. 7. 316; नाभ्यां स्थितं (वायुम्) हृद्यधिरोप्य … उरसि तं नयेन्मुनिः। ततोऽनुसंधाय धिया मनस्वी स्वतालुमूलं शनकैर्नयेत् BhāgP. ii. 2. 20; तत्र तत्र जगद्योनिमनुसंधाय पुरुषम्। … विष्णुर्भवेदाहवनीयके BrahmP. 161. 55; नारदः .. शान्तो दान्तः … स्वरूपानुसंधानमनुसंधाय नियमानन्दविशेषगण्यम् … नैमिषारण्यं पुण्यस्थलमवलोक्य NāraPaU. 1; ये … मे मतं नानुतिष्ठन्ति नैवमनुसंधाय सर्वाणि कर्माणि कुर्वते GītāBh. (Rā.) 209. 8 (*on* 3. 32); अत्यर्थप्रियमद्गुणगणं चानुसंधाय … उपासनमुपादधानो मामेव प्राप्स्यसि GītāBh. (Rā.) 492. 9 (*on* 9. 34); पित्रादिष्वेव वस्वादिरूपमनुसंधायानुष्ठितेन श्राद्धेन प्रीता वस्वादयः … पितॄन् … प्रीणयन्ति SmṛtiCan. v. 300. 5; **1B** having thought, having considered or having regarded स्वमर्थमभिसंधाय (v.l. °मनुसंधाय) तस्यार्थमनुचिन्त्य च। उद्वेगं चैव कृष्णायाः सुदेष्णा सूतमब्रवीत् MahāBhā. iv. 14. 4; यथाविद्धं याति स्खलितमभिसंधाय (v.l. अनुसंधाय) बहुशो नदीभावेनेयं ध्रुवमसहना। सा परिणता Vikramo. 4. 52; (कनिष्ठमातामहस्यायं नयवचनोपन्यासोऽन्यस्मिन्नेव कस्मिन्नमङ्गले एव विश्रान्तः) वत्से न तदनुसंधायोक्तम् MahāvīC. 6. 7 (13); रामः …। स्वप्रश्नमनुसंधाय प्राह सर्वं वदेति PadmP. iv. 101. 113; एवमनुसंधाय कर्म कुरु GītāBh. (Rā.) 133. 1 (*on* 2. 47); यो माम् … श्रद्धयार्चितुमिच्छति तस्य तस्याजानतोऽपि मत्तनुविषयैषा श्रद्धेत्यहमेवानुसंधाय तामेवाचलां निर्विघ्नां विदधामि GītāBh. (Rā.) 396. 6 (*on* 7. 21); गुणाः स्वेषु कार्येषु … वर्तन्त इत्यनुसंधाय GītāBh. (Rā.) 596. 2 (*on* 14. 23); (अवेक्ष्य बीजं कार्या स्यात्) स्वकृतगर्भाधानमनुसंधाय स्वामिना स्वदासी संतानसहिता … अदासीत्वेन कार्या स्यात् SmṛtiCan. iv. 468. 15; 'अहमस्म्यपराधानामालयः' इत्याद्युक्तप्रकारेण स्वात्मानमनुसंधायाह ममेति ŚrutaPra. iA. 6. 28 (*on* i. 1. 1); यत्रेन्द्रो ब्रह्माधीनस्थितिप्रवृत्तिमत्त्वमात्मनोऽनुसंधाये'न्द्रोऽहमस्मी'ति नानुमन्यते स्म … ब्रह्मैवेदं सर्वं ब्रह्मास्मीति

मन्यते VedāntKau. 43. 14 (*on* i. 1. 29); यत्तु याज्ञवल्क्यादिभिर्व्रात्यस्तोमादिप्रायश्चित्तमुक्तं तेन सहास्य गुरुलाघवमनुसंधाय ... विकल्पो मन्तव्यः ManvaMu. 488. 28 (*on* 11. 191); **1C** having considered as, i.e. having conceived or viewed तद्य साधनम् ... पूर्वमेव दर्शितम्। इह च तदेवानुसंधाय प्रत्यक्षविरोधो योजनीयः Śarka. 93. 24; सुवर्णम् ...। दद्यात् वै व्रतमुद्दिश्य सर्वान् कामान् समश्नुते। ... व्रतमुद्दिश्य व्रतमनुसंधायेत्यर्थः CaturCin. i. 574. 8; शकटारः शूद्रोऽयं वैदिकमपीदं कार्यमनुसंधाय राज्ञो धर्मबाधां कुरुते PuruṣPa. 109. 25; **2A** having mixed together, i.e. having cross-connected ब्रह्मविष्णुमहेश्वरत्वमनुसंधायाद्यन्तमेकीकृत्य चिद्ग्रन्थ्यावद्वैतग्रन्थिं कृत्वा ... मूलमेकं सत्यं मृण्मयं विज्ञातं स्यात् ParaBrahmaU. 528. 13; **2B** having connected, having correlated पूर्वापरमनुसंधाय शब्दसंयुक्ताकारा प्रतीतिरन्तर्जल्पाकारा वा कल्पना TarkBhā. (Mo.) 7. 18; **3A** having installed, having super imposed षोडशदलकमलोपरि भूबिम्बत्रयमनुसंधाय तत्राद्ययोन्यन्तरे देवीमाहूय ध्यायेत् PītāU. 421. 18; पवित्रकं समादाय यायात्कलशसंनिधिम्। ... तृतीयमुभयात्मं वै अध्यात्मादित्रयं तथा। अनुसंधाय वै तस्मिन् संस्मरन् हृदयाद्धिया PauṣkS. 30. 121; अनुसंधाय चण्डीशमन्तश्चण्डांशुमण्डले। पार्थिवः ... उपासामास Gaṅgāva. 4. 8; सैकते ... प्रतिष्ठाप्य चिन्तामणिमयं किमपि पारमेश्वरं लिङ्गम् अनुसंधाय तत्र ... मदनान्तकम् NīlaVi. 9. 14; **3B** having ascribed, having attributed to प्रकृतिरचेतनभूतैव ... पुरुषधर्मं चैतन्यं स्वस्मिन्स्वधर्मं कर्तृत्वं पुरुषे चानुसंधाय बध्यते VedāntDī. 101. 6 (*on* ii. 2. 9); **4** having arranged मन्त्राणामुपदेष्टा ...। स्वयं वस्त्वनुसंधाय हवनार्चनकर्मणाम्। आस्ते ह्युत्पत्तिपूर्वाणां न्यासान्तानामनन्यधीः PāraS. 15. 167; **5** having recollected or remembered पूर्वेद्युरर्धकृतं कर्मानुसंधायापरेद्युः प्रवर्तते BrahmSūBh. (Bhā.) 163. 25 (*on* iii. 2. 9); चित्रकारेण ... रतिरूपस्पर्धया यत्र त्वदीया मूर्तिरालिखिता तं पटमिहानुसंधाय चित्रप्रकारेण मेलिता मया देवी UdaySuKa. 103. 3; यज्जातीयस्यार्थस्य संनिधानाद् दुःखमनुभूतवान् पुरुषः तज्जातीयमर्थं पुनरुपलभमानो दुःखसाधनतामनुसंधाय तं द्वेष्टि NyāyMañ. ii. 9. 8; स तैर्निमित्तैरनुसंधाय गिरं पुरोधसस्ताम्। परिनिश्चिनुते स्म तत्त्रिलोक्यां परमं धाम हरिः परस्य धाम्नः ŚivLī. 3. 45; **6A** having ascertained, having determined सर्वैरेव यौनज्येष्ठत्वमनुसंधायाभिवाद्यानभिवादयेयुः सर्वे PārāSū. 33. 21; केचित्पारानन्दा अग्निहोत्रिणः समारभन्ते प्राणिन आनीय हन्तुमनुसंधाय यूपेषु यावद् बध्यन्ते PārāSū. 92. 14; नित्यानुष्ठानसिद्धिमनुसंधाय पुत्रः श्राद्धे प्रवर्तते CaturCin. iii (1). 102. 2; अर्थतथात्वमनुसंधाय यथार्थतात्पर्यनिश्चयः TattvCin. iv (1). 115. 2; स्वस्वप्नमापरोक्ष्येण दृष्ट्वा पश्यन् स्वजागरम्। ... चिरं तयोः सर्वसाम्यमनुसंधाय जागरे। सत्यत्वबुद्धिं संत्यज्य नानुरज्यति पूर्ववत् PañcDa. 7. 173; **6B** having known or understood कथमिव तद्वाक्यार्थस्य निःशङ्कमशेषपरीक्षकोपादानमित्यवश्यविज्ञेयता सङ्केतकर्तुः। तस्य हि प्रमाणान्तरेण तद्वाक्यार्थमनुसंधाय NyāyKu. 12. 10; ब्रह्मा ... पूर्वेन्द्राद्याकृतिविशेषमनुसंधाय ... सृजति ŚivārkaMaDī. i. 462. 33 (*on* i. 3. 27); **6C** having pointed अप्रधानाः प्रथावत्सु प्रथयन्तः प्रधानताम्। असंधानेऽनुसंधाय भूमीन्द्र मज्जयन्त्यमी ParamāKā. 32. 27; **7** having investigated विद्यया ... आत्मानमन्विष्यानुसंधायेत्यन्वयः VedāntKau. 62. 7 (*on* i. 2. 17)

**अनुसंधायक** (anu-sandhāyaka) *adj.* **1A** which joins or combines शिलाशकलयुगलस्य मिथोऽनुसंधायकं रालादिद्रव्यं तस्मात्पृथक् तृतीयतया प्रतिभासते SyādvāMañ. 7 (20); **1B** which connects अतीतानागतवर्तमानपर्यायपरंपरानुसंधायकं चान्वयि द्रव्यम् SyādvāMañ. 19 (36); **1C** who puts together, i.e. who brings about आसीत् काश्यपसंततौ ... श्रीनागपृथ्वीपतेः। क्षीराब्धेरिव चन्द्रमाः कुवलयानंदानुसंद्धायकः सौम्य[:] श्रीवरविश्वनाथनृपतिः EI. xvi. 293. 122; xvi. 315. 146; **2** which considers as, cf. **अनुसंधायकत्व** .

**अनुसंधायकत्व** (anusandhāyaka-tva) *n.* the state of being that which considers as तथा च विदितलिङ्गस्वरूपपक्षधर्मं तं (? धर्मत्तं) प्रति तत्स्मारकत्वेन लिङ्गतयानुसंधायकत्वेन ... हेतूपनययोः सार्थक्यम् NyāySu. (Ja.) 262B. 8 (*on* ii. 1. 2)

**अनुसंधायिन्** (anusandhāy-in) *adj.* **1** who cognizes, i.e. cognizer आत्मैकः सोऽनुसंधायी तस्य स्मरणसंभवात्। स्मरणे ह्यस्य सामर्थ्यं संधाने चापि विद्यते PramāVāBh. 312. 19; **2** which continues to exist, i.e. persisting विज्ञानलक्षणव्यतिरिक्तस्य स्थायिनः अनुसंधायिनः संतानस्य अभ्युपगमे स्वसिद्धान्तत्यागः ĀtmaSi. 20. 1 [investigating, searching, skilful at concerting or carrying out schemes, MW.; looking after, skilful in concerting plans, Apte]

**अनुसंधि** (anu-sandhi) *m.* **1** investigation न देवः स्वात्मनः परः। नानुसंधेः परा पूजा YogŚiU. 2. 21; नानुसंधात् (v.l. °संधेः) परा पूजा KulārT. 9. 37; **2Ai** (logical) connection (especially of a text), application सर्ववासनानुसंधिगतनिरवशेषसर्वाश्रवक्षयज्ञानबलोपेतत्वात्सर्ववासनानुसंधिगतनिरवशेषसर्वाश्रवक्षयज्ञानबलोपेत इत्युच्यते LaliVi. 312. 18; अनुसंधिसूत्राणि सदा प्रजानति संधाय यं भाषितु नायकेहि SaddhaPuṇ. 232. 19; नैकलोकधातुपर्यापन्नसर्वसत्त्वचर्यावासनानुसंध्यवतरणाय, न यावदनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमलोकधातुपर्यापन्नसर्वसत्त्वचर्यावासनानुसंध्यवतरणाय बोधिसत्त्वानां बोधाय चित्तमुत्पद्यते GaṇḍVyū. 84. 20; महामते धर्मद्वयं संधायेदमुक्तं मया। तत्र स्वप्रत्यात्मधर्मतानुसंधिः कतमः LaṅkāSū. 3. 6 (6) (58. 25); परमार्थः अकृत्रिमं वस्तुरूपं यदधिगमात् सर्वावृतिवासनानुसंधिक्लेशप्रहाणं भवति BodhiCaPañ. 171. 23; अनुच्छविकः। अनुसंधिः। सानुचरः MahāVyu. 109. 93 (*but* Pw. union, combination) [DBHS.]; **2Aii** (literal, physical) connection तस्याः खलु पुनर्वैरोचनश्रियो लोकधातोः पूर्वेण चक्रवालानुसंधौ रत्नकुसुमप्रदीपध्वजा नाम चातुर्द्वीपिका GaṇḍVyū. 207. 11 [DBHS.]; **2B** series or serial line एतं मम कुलपुत्र समाधिं समापन्नस्य ... बुद्धदर्शनानुसंधौ बुद्धपरंपरानुपच्छेदेन चित्तक्षणे चित्तक्षणे बुद्धशतं पश्यामि GaṇḍVyū. 157. 16; एतन्महामते ...। धर्मनैरात्म्यलक्षणानुप्रवेशतया पुद्गलनैरात्म्यलक्षणदृष्टिं निवार्य भूमिक्रमानुसंधौ प्रतिष्ठापयितव्यम् LaṅkāSū. 2. 127 (47) (26. 11) [DBHS.]; **2C** establishment (of a relation) अर्थोऽनुसंधिः MaYānaSū. 54. 18 (11. 3); **3Ai** secondary juncture or division (in the plot of a drama), sub-juncture एकोऽनेकोऽपि वा संधिः पताकायां तु यो भवेत्। प्रधानार्थानुयायित्वादनुसंधिः प्रकीर्त्यते NāṭyaŚā. 19. 28; पताकावृत्तमप्यूनमेकाद्यैरनुसंधिभिः। अङ्गान्यत्र यथालाभमसंधिं प्रकरीं न्यसेत् DaśRū. 3. 27; साध्ये बीजसहकारी कार्यं कार्येत्तु मुख्यता। पताकायाः प्रधानत्वेऽनुसंधिः सूचनादिभिः NāṭyaDa. 4. 8 (33); अपरमपि प्रासङ्गिकमितिवृत्तमेकाद्यैरनुसंधिभिर्न्यूनम् ... पताकेतिवृत्तं न्यसनीयम् Avalo. 70. 20 (*on* 3. 27); पताकावृत्तमप्यूनमेकाद्यैरनुसंधिभिः। संध्यन्तराणि साङ्गानि भवेयुरनुसंधयः BhāvPra. (Śā.) 234. 6 (8); **3Aii** joining together (in proper order) तत्र यत्र पुत्रकादीनां यथा पृथग्भूताङ्गानामनुसंधिस्तयैव AbhinBhā. i. 191. 16 (*on* 4. 290); **3Aiii** junction or combination, cf. **अनुसंधिवर्ज;** **3B** correlation, i.e. unification यदि हि तस्य देहादेः सर्वतः पूर्णत्वम् अवच्छेदहीनत्वं पश्यन् अनुसंधानम् 'अहमिदम्' इति विदध्यात् तदियं सदाशिवभूः केन विकल्पास्पदत्वेन भण्येत यावता विच्छिन्ने एव सोऽनुसंधिः। ... प्राणे बलाबलवशादनुसंधिः ĪśvaPraSū. 326. 3 (*on* i. 6. 6); **3C** rejoining or revival पुनरारब्धविश्रान्ते रसस्याङ्गिनोऽनुसंधिश्च। यथा तापसवत्सराजे Dhvanyā. 342. 1 (*on* 3. 13); अनुसंधिर्हि सर्वस्वं सहृदयतायाः। यथा तापसवत्सराजे षट्स्वप्यङ्केषु वासवदत्ताविषयः प्रेमसंबन्धः Kāvyānu. (He.) 145. 9; **4** recollection or remembrance न च यथा मणिकं दृष्टवतो मणिकान्तरेऽनुसंधिः तथा शरावं दृष्ट्वा तत्र मृज्जातिरप्यवह्नयेत BrahmSi. 59. 16; **5A** reference सर्वनाम्नानुसंधिर्वृत्तिच्छन्नस्य। सर्वनाम्नानुसंधिरनुसंधानं प्रत्यवमर्शः। वृत्तिच्छन्नस्य वृत्तौ समासे छन्नस्य गुणीभूतस्य KāvyālaṅSū. v. 1. 11; **5B** secondary reference, cf. **अनुसंधिवाक्य** ; **6** meditation, cf. **अनुसंधिक्लृप्त.**

**अनुसंधिक्लृप्त** (anusandhi-klpta) *adj.* done or accomplished through meditation कर्मार्चामधिवासयेत् समुपनीयालंकृते मण्डपे मूलार्चामनुसंधिक्लृप्तकलशासेकां च मूलालये TantrSa. 11. 115 (comm. ध्यानेन कृतबिम्बशुद्धिकलशाम्)

**अनुसंधित** (anu-sandhita) *adj.* [*f.*-ā] **1** searched, investigated or explored into अंशुमान् ...। दिलीपस्तस्य तनयः खट्वाङ्ग इति विश्रुतः। येन ... मुहूर्तं प्राप्य जीवितम्। त्रयोऽभिसंधिता (v.l. अनुसंधिता) लोका बुद्ध्या सत्येन च HariVaṁ. 10. 65; **2** experienced धर्मध्यानधना(नु)संधितसुखः ... श्रीमानुभूकोक्कल्लः (Read श्रीमानभूत्कोक्कल्लः) EI. ii. 306. 7; **3** meditated upon (समस्ताक्षरपद्धतिः) एषानुसंधिता। विदधात्यतुलं शान्तिमात्मनोऽथ परस्य वा MālinīT. 19. 65; **4** united, joined पश्चात्मका हि ये खण्डाः शतसंधिषु जर्जराः। तेनानुसंधिताः सर्वे कायधातुसमा अभवन् PadmP. ii. 72. 24.

**अनुसंधित्व** (anusandhi-tva) *n.* the state of being a secondary juncture (in the plot of a drama) पताकायां हि पूर्ववर्णिते पताकान्तरं स्यादित्यनवस्था। तद्युक्तमुक्तमनुसंधित्वान्न पृथग्गणनमस्येति AbhinBhā. iii. 17. 16 (*on* 19. 27-28)

**अनुसंधित्सत्** (anu-sandhitsat) *adj.* desirous of seeking or looking for अथैतद्दोषपरिजिहीर्षया ज्ञानं जडतां नानुकरोतीति ब्रूषे हन्त तर्हि तस्या ग्रहणं स्यादित्येकमनुसंधित्सतोऽपरं प्रच्यवत इति न्यायापातः SarvaDaSaṁ. 3. 61; एकमनुसंधित्सतोऽपरं प्रच्यवत इति न्यायेन दुःखवत् सुखमप्युच्छिद्यत इत्यकाम्योऽयं पक्षः SarvaDaSaṁ. 11. 149.

**अनुसंधित्सु** (anu-sandhitsu) *adj.* desirous of considering or conceiving वैधर्म्यवचनमनुसंधित्सुः ... अनावश्यकत्वं तस्य दर्शयति NyāyRa. 383. 22 (*on* 5(4). 118)

**अनुसंधिद्वित्वाभिधान** (anusandhidvitvābhidhāna) *n.* statement of the twoness of secondary junctures यथा कृत्यारावणे ... इति मुखानुसंधिः, 'वाली यथे'ति प्रतिमुखस्यानुसंधिः ... किं तस्यानुसंधिद्वित्वाभिधाने प्रयोजनं न पश्यामः AbhinBhā. iii. 17. 25 (*on* 19. 28)

**अनुसंधिम्** (anusandhim) *adv.* according to the totality (or profound essence but possibly serial line) तस्य सभिकस्य प्रश्नमेवं पृष्टं भगवम् अनुपूर्वमनुलोममनुसंधिमनुधर्मं व्याकरोहि। ... भगवानाह ... तेऽहम् अनुपूर्वम् ... अनुसंधिम् ... व्याकरिष्यामि MaVastuAva. iii. 394. 19; कालेन सत्कृत्यानुपूर्वमनुसंध्यनुसहितं (better संधिमनुसहितम् DBHS.) हर्षयता ... परांश्चापंसयता। एवं बोधिसत्त्वः परेषां धर्मं देशयति BodhiBhū. 75. 22 [DBHS.]

**अनुसंधिरभस** (anusandhi-rabhasa) *m.* [Abl.] on account of eagerness or impetuosity for connection, i.e. union पादाभिघातदलितं क्षितिपीठबन्धमग्रेऽनुसंधिरभसादिव कालचक्रः। चक्रेऽतिगाढकरसंपुटपिष्टहारतारावलीलुलितधूलिकणावकीर्णम् HarVi. 34. 28.

**अनुसंधिवर्ज** (anusandhi-varja) *adj.* devoid of junction or combination सोऽयमत्र ललित इव गुरुसंघसेवावैकल्यादनुसंधिवर्जः AbhinBhā. iv. 396. 28 (*on* 33. 1)

**अनुसंधिवाक्य** (anusandhi-vākya) *n.* statement of a secondary reference or corroborative statement तदेवमनुसंधिवाक्यं व्याख्याय भाष्यव्याख्यान्तरमवतार्य तत्रैकदेशिव्याख्यानं दूषयितुमुपन्यस्यति TātpaṬ. (Vā.) 28. 19 (*on* i. 1.1)

**अनुसंधीयमान** (anu-sandhīyamāna) *adj.* [*f.* -ā] **1** being recollected or remembered **2A** being known or understood (used as noun) (one) who is being known **B** being cognized or experienced **C** being recognized **3** being investigated or examined **4A** being continued **B** being carried out **C** being connected **5A** being contemplated or meditated upon **B** being considered or conceived **C** being imagined or assumed **1** being recollected or remembered ततः पुनरनुसंधीयमानं यथाभूतं गृहीतं तथाभूतमेव वानुसंधातव्यम् PramāVāBh. 21. 28; सामानाधिकरण्यं च स्मरणानुभवादिषु। अनुसंधीयमानं यद् दृश्यते तत्कथं भवेत् NyāyMañ. ii. 7. 30; बुद्ध्युपारूढस्य हि जनकत्वे अतीतस्यापि संप्रत्यनुसंधीयमानस्य घटत एवाभावबोधोपपादकत्वम् PrakaPañ. 291. 12; अनुसंधीयमानैरेव हि पदार्थैः साक्षादेव हि वाक्यार्थप्रतीतिसंभवे को नामेदृशीं कल्पनामवलम्बते ŚāstrDī. 153. 9 (*on* i. 1. 7); मृतेऽपि पितरि पित्राज्ञाया अनुसंधीयमानाया (?याः) प्रवर्तकत्वदर्शनात् NyāyMa. 229. 8; प्राक्कालीन एव दर्शनाभावोऽनुसंधीयमानोऽभावप्रतीतिकारणम् TantrRaha. 16. 25; **2A** being known or understood अनुमानमप्यागमाविरोधेनानुसंधीयमानमर्थनिश्चायकं न तु विरुद्धमपि NyāyVārPari. 18. 1; उपसंहारगतानेकप्रमाणं तु पूर्वप्रतीतविरोध्यनुसंधीयमानमुपक्रमगतमपि स्वाविरुद्धे अर्थे व्यवस्थाप्य एकान्वयबोधमादधाति PāṇiTaVāNaMā. 29. 24; उपासनोत्पत्तिदशायामेवानुसंधीयमानं प्रधानोपास्यवैरूप्यं भिन्नयोरेवोपासनयोरुत्पत्तिं गमयेत् ŚivārkaMaDī. ii. 295. 6 (*on* iii. 3. 8) ; (used as noun) (one) who is being known देवोऽहं मनुष्योऽहमिति देहसामानाधिकरण्येनानुसंधीयमानमपि वेदितृत्वेन देहादर्थान्तरभूतं ज्ञातुं शक्यम् GītāBh. (Rā.) 581. 14 (*on* 13. 16); **2B** being cognized or experienced आत्मरूपम् ... व्युत्थानावसरेऽनुसंधीयमानं चित्तवृत्त्यन्तरकलुषमेवावभाति AbhinBhā. i. 336. 22 (*on* 6. 83); **2C** being recognized इदं रजतमहं जानामीत्यनुसंधीयमानं यत् ज्ञानविषयत्वं तस्याश्रयान्तरानुपपत्त्या अनिर्वचनीयरजतसिद्धेर्वक्ष्यमाणत्वात् AdvaiSi. 309. 1 (LaCandr. ज्ञायमानम् ) ; **3** being investigated or examined तदेवमवयविद्रव्यमुपपत्तिभिरनुसंधीयमानमेकान्ततो लीयते PrakaPañ. 68. 9; तदेव तर्कसहकृतं पुनरनुसंधीयमानम् .... अनुमितिम् ... जनयति TattvCin. ii (1). 663. 6; **4A** being continued बिन्दुसूत्रसूतस्य ... यदा प्रारम्भावस्था पूर्णत्वमेति तदाङ्कच्छेदो बिन्दुद्वारानुसंधीयमानद्वितीयाङ्काभिधेयरूपो विधेयः AbhinBhā. ii. 415. 7 (*on* 18. 13); **4B** being carried out अस्मिन्पक्षे वचनान्तरावगतः क्रमोऽनुसंधीयमानोऽनुवाद एव स्यात् CaturCin. iii (1). 115. 6; **4C** being connected, cf. **अनुसंधीयमानार्थ** ; **5A** being contemplated or meditated upon सुखाभावे दुःखानुभवे चानुसंधीयमानस्यात्मनः कथमानन्दरूपता स्यात् ŚāstrDī. 129. 19 (*on* i. 1. 5); आत्मनः शेषत्वात् प्रतिसंबन्धितया अनुसंधीयमानम् ... परं ब्रह्मैवैनमात्मानं प्रापयति VedāSaṁ. 171. 8; श्राद्धे पितरो देवतारूपाः तद्रूपेणानुसंधीयमानाः श्राद्धस्य कामपूर्वामैहिकामुष्मिकफलोत्पादिकां शक्तिं जनयन्ति CaturCin. iii (1). 49.13; अनुसंधीयमाने तस्मिन् तद्विरोधिगुणानुसंधानायोगात् ŚivārkaMaDī. ii. 370. 27 (*on* iii. 3. 52); न हि इन्द्रान्तर्यामि परं ब्रह्म अहमेवास्मि इति इन्द्रान्तर्यामित्वेन अनुसंधीयमानस्य स्वाभेदेन अन्यप्रतर्दनादिक र्तृकोपासने कश्चिद्विरोधोऽस्ति PūrvottaVāNaMā. 180. 5; **5B** being considered or conceived यथैव राजपुत्रस्य पितुर्लीलोपकरणमतथात्वेनानुसंधीयमानं प्रियत्वमनुपगतं तथात्वेनानुसंधीयमानं प्रियतमं भवति तथा ... ब्रह्मणः ... लीलोपकरणं तदात्मकं चानुसंधीयमानं जगन्निरतिशयप्रीतये भवत्येव BrahmSūBh. (Rā.) 287. 15 (*on* i. 3. 7); मयानुसंधीयमानेषु सर्वेषु ... भूतेषु माम् एवंविधं वासुदेवम् ... विदित्वा मामेव समाश्रयन्न कश्चिदुपलभ्यते GītāBh. (Rā.) 402. 4 (*on* 7. 26); द्रष्टृत्वमपि अन्तःकरणधर्मत्वेन मिथ्यात्वेनैवानुसंधीयमानमात्मविदं न लिम्पति ŚatDū. 223. 24; भ्रमणे सत्यपि प्रत्येकं कर्मक्षणेषु न भ्रमतीति प्रत्ययः किं तु निरन्तरतयानुसंधीयमानेषु NyāySiA. 264. 23; **5C** being imagined or assumed सर्गप्रतिसर्गव्यवस्थाहेतुरीश्वरेणानुसंधीयमाना प्रकृतेः परिणामविशेषापत्तिः ŚrutaPra. ii. 281. 27 (*on* ii. 2.3)

**अनुसंधीयमानत्व** (anusandhīyamāna-tva) *n.* **1** the state of being contemplated or meditated upon दृश्यत इत्यानेन पूर्वपूर्वोपासकप्रवाहैरारोपेणानुसंधीयमानत्वमुच्यत इति चेत् ŚrutaPra. iB. 238. 18 (*on* i. 1. ?1); **2A** the state of being known अंशगतज्ञानादेरंशिनानुसंधीयमानत्वात् TattvPrakā. 182A. 8 (*on* iii. 3. 56); **2B** the state of being experienced चैतन्यैक्यस्यानुसंधानं व्यापकमित्युक्तं क्व तदुपलब्धमिति चेन्न। देवदत्तसंबन्धिनः सुखादेर्देवदत्तेनानुसंधीयमानत्वात् NyāySu. (Ja.) 509B. 8 (*on* iii. 2. 10)

**अनुसंधीयमानार्थ** (anusandhīyamānārtha) *m.* object or referent being connected (with generic property) अनुसंधीयमानार्थसंहितार्थान्तरविषयत्वात् नैव स्वैकप्रत्ययविषयोऽर्थः परिच्छेद्यतामस्य प्रत्ययस्य प्रतिपद्यते Bṛha. 53. 2 (*on* i. 1.5)

**अनुसंधृ** (anu-sandhṛ-) I. P. to carry out (continuously) राजा ...। सतां च रक्षामसतां च शिक्षां न्यायानुरोधादनुसंदधार RasāSu. 7. 6 (1. 41)

**अनुसंधेय** (anu-sandheya) *adj.* [*f.*-ā] **1A** to be known or understood **B** to be imagined **C** to be established or ascertained **2A** to be contemplated or meditated upon **B** to be considered or regarded **C** to be signified or referred to **3A** to be connected or kept together **B** to be continued or construed or supplied **C** to be applied, i.e. used **D** to be followed or carried out **4** to be recollected or remembered **5A** to be investigated, i.e. to be discussed **B** to be investigated, i.e. to be searched for **6** to be kept or set in order, to be arranged **1A** to be known or understood तत्र शाट्यानकम् ... इतीन्द्रस्तसरयुता ... इति पुनः पुनस्तसरस्थिरगित्येन इत्यादिकनुसंधेयम् Luptaśāṭyāyaṇabrāhmaṇa 98. 20; तादात्म्याङ्गीकारे त्वेकतैव स्यान्न तु संबन्धितेति स नानुज्ञात इत्यनुसंधेयम् धीबलात् NayaVi. 100. 4 (*on* i. 1. 5); जीवात्मनोर्योगेन मोक्षप्रकारश्च कथित इत्यनुसंधेयम् MudgU. 408. 9 (2); एतच्च सम्यगवबोद्धुं वैशेषिकमनुसंधेयम् ĀtmaTaVi. 593. 3; विभावा हि काव्यबलादनुसंधेयाः ... स्थायी तु काव्यबलादपि नानुसंधेयः AbhinBhā. i. 272. 24 (*on* 6. 32); संस्थानं नाम स्वासाधारणरूपमिति यथावस्तु संस्थानमनुसंधेयम् BrahmSūBh. (Rā.) 32. 14 (*on* i. 1. 1); क्षीज अव्यक्ते शब्दे। ... क्षीजकूजोः पृथक्करणादर्थभेदोऽनुसंधेयः DhātuPra. 1. 234 (25. 7); पञ्चमात्सप्तमादिति याज्ञवल्कीयं पुत्रिकाकरणादिविषयमित्यनुसंधेयम् SmṛtiCan. i. 194. 5; ii. 248. 2; अज्ञानादौ बार्हस्पत्यवचनविहितो दमः सभ्यविषये त्वनुसंधेयः SmṛtiCan. iii. 51. 11; यत्र वार्त्तिके प्रामाण्योत्पत्तिज्ञप्त्योरनियमेन साधनदूषणप्रवृत्तिः तत्र सर्वत्रापि विशेषापेक्षया विशेषाभावादित्यनुसंधेयम् NyāyKu. 33. 6; विपक्षे बाधकाभावश्चानुसंधेयः NyāyKu. 101. 10; दधिपात्रस्य कांस्यपात्रमयत्वं चानुसंधेयम् CaturCin. i. 420. 2; प्रतिग्रहस्य शुक्लत्वे दातृप्रतिग्राह्यशुद्धिरपि कारणत्वेनानुसंधेया CaturCin. iii (1). 527. 1; iii (1). 1260. 20; स्वाध्याये च क्रियमाणे निरन्तरं तदर्थोऽनुसंधेयः ManvaVi. 753. 2 (*on* 6. 96); प्रत्यक्षस्य भ्रान्तत्वं, तद्भ्रान्तत्वे निर्विशेषत्वप्रतिपादनं, तत्प्रतिपादने भेदवासनाया दोषत्वमिति चक्रकं चात्रानुसंधेयम् ŚatDū. 131. 13; हेतुपूर्वं पक्षे साध्यमुपसंहरद्वाक्यं निगमनम्। तत्रापि पूर्वतुल्यन्यायतया द्वैविध्यमनुसंधेयम् NyāyPari. 159. 9; श्रीपञ्चरात्ररक्षासिद्धान्तव्यवस्थायाम् ... तद्विस्तरः सात्त्वतधर्मगोप्तुरनन्यैरनुसंधेयः NyāyPari. 477. 19; नित्यसूरीणामानन्त्यावान्तरभेदादिकं श्रीपाञ्चरात्रसंहितासु विशदमनुसंधेयम् NyāySiA. 216. 10; सृष्टिवाक्यैर्यदनुक्तं तत्प्रलयवाक्यादनुसंधेयम् VedāntKau. 219. 15 (*on* ii. 3. 14); घटेश्वरसंयोगे ईश्वरवच्चेत्यनुमानमत्रानुसंधेयं प्रकृतिश्चेति शास्त्रं च VedāntRaMañ. 1. 4 (63. 8); 2. 7 (91. 2); एकमुक्तौ सर्वमुक्तिः स्यात्। न स्यात्। प्रतिजीवमविद्याभेदाङ्गीकारात्। अत्र विशेषः ... आगमादनुसंधेयः NyāySu. (Ja.) 21A. 11 (*on* i. 1. 1); यदि द्वयोर्ग्रन्थयोरैकार्थ्यं संभवति तदा न विरोधः। इतरधा तन्त्रतन्त्रान्तरलक्षणं द्विप्रकारमनुसंधेयम् PāñcRāRa. 11. 20; 37. 8; धर्मस्य श्रद्धा स्वर्गादिलक्षणप्रयोजनज्ञानं च निमित्तकारणमनुसंधेयम् Upask. 271. 4 (*on* vi. 2. 2); स्वामी ... अपराध्नुयादिति दण्डभाग्भवेदिति कल्पतरुः। एतश्च दण्डपारुष्यादिष्वप्यनुसंधेयम् DaṇḍaVi. 85. 9; सर्वतीर्थेषु ... भोगवान्। इति पद्मपुराणीयमाघमाहात्म्यं चातिविस्तरमत्रानुसंधेयम् TristhaSe. 39. 26; तस्य (तेजसः) परमाणुवृत्तित्वं तु जलत्वस्येवानुसंधेयम् SiddhāMu. 20. 3 (*on* 41); विस्तरस्तु वेदान्तकल्पलतिकायामनुसंधेयः SiddhāBi. 133. 2; 'यदातमो' मन्त्रस्य तदुपक्रमस्य च तात्पर्यमस्माभिः शिवतत्त्वविवेके ... उपपादितं तत्रैवानुसंधेयम् ŚivārkaMaDī. i. 132. 24 (*on* i. 1. 2); i. 252. 12 (*on* i. 1. 21); अभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरिति द्वैविध्यं द्रष्टव्यम् तत्राप्याधिक्यन्यूनताविभागश्चेति सर्वमनुसंधेयम् Kuval. 36 (13); न तु अहं रजतमिति अहमाकारानुभवविषयतेति अनुसंधेयम् VedāntPari. 119. 7; यदि परं पदान्तरत्वात्तदपेक्षया विप्रकर्षश्शङ्क्येत, ततः ... विधिशक्तिप्रतिबन्धोऽनुसंधेयः MīmāKau. iii (2). 105. 11 (*on* ii. 1. 32); एतेषां स्वरूपनिष्कर्षस्तु प्रत्यभिज्ञाहृदयेऽनुसंधेयः LalitāSaBh. 49. 16 (*on* 81); अन्येषां

एवालंकारः Dhvanyā. 251.5 (*on* 2.23); अनुस्वानोपमव्यङ्ग्यः स प्रकारोऽपरो ध्वनेः Dhvanyā. 2.25.

**अनुस्वानोपमात्मन्** (anusvānopamātman) *adj.* having the nature similar to the reverberation (of a bell) अनुस्वानोपमात्मापि प्रभेदो य उदाहृतः। ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित् Dhvanyā. 3.15.

**अनुस्वापम्** (anusvāpam) *adv.* after sleep लशुनान् ... अनुस्वापं दन्तकाष्ठं विवर्ज्य च ... भक्षयेत् KāśyaS. 176B. 36.

**अनुस्वामि** (anusvāmi) *adv.* **A** near the master अनुस्वामि ... ते तिष्ठद्गवपि वहद्गिव युध्यमाना अमन्यन्त DvyāśraKā. 5.38; **Bi** by following the master सारथिः सोऽपि ... । अनुस्वामि प्रवव्राज भृत्याः स्वाम्यनुगामिनः TriṣaŚaPuC. i. 1.835; **Bii** after or subsequent to the master हरिः। मेरुशैलं प्रत्यचालीत् ...। अनुस्वामि दधावे ... देवैः TriṣaŚaPuC. ii. 2.346.

**अनुस्वार** (anusvāra) *m.* **1** tone (of a *Sāman*) which is in conformity with the (circumflex accent or tone of the last word in the *yonimantra*) पदानुस्वारं पुरस्ताद् गायत्रं भवति पदानुस्वारमुपरिष्टात् पवमानान्ते JaimiBr. 1.127; 1.166; (सामानि) स्वाराणि हाइकारस्वार पदानुस्वाराणि च LāṭyāŚS. vi. 9.6; DrāhyŚS. xviii. 1.6; पदानुस्वारमेके स्तोभाश्रुतेः DrāhyŚS. xxi. 2.25 (comm. यथर्चं पादानुस्वारमेव गायत्रम्); **2Ai** after-sound, the nasal sound or nasalisation (marked in writing with a dot above the line) belonging to the vowel preceeding it (pronounced after a vowel as immersed in it), a property of the preceeding vowel (used as a mark for nasal sound) विसर्जनीयोऽनुस्वारो जिह्वामूलीय इत्यधः AVPari. 47(1) .10; अनुस्वारो व्यञ्जनं चाक्षराङ्गम् ṚPrāti. 1.15; वर्णः ... अकारव्यपेतो (अकारव्यवेतो) व्यञ्जनानाम्। न विसर्जनीय-जिह्वामूलीयोपध्मानीयानुस्वारनासिक्यानाम् TaiPrāti. 1.18; 1.34; 2.19; 2.30; 17.1; 21.6; उपदिष्टा वर्णाः। ... निर्देश इतिना। ... स्वरैरपि। नानुस्वारयमविसर्जनीय-जिह्वामूलीयोपध्मानीयाः VājaPrāti. 1.41; अनुस्वारो ह्रस्वपूर्वोध्य(?ऽध्य)र्धमात्रा पूर्वाचार्धमात्रेति VājaPrāti. 4.150; अं इत्यनुस्वारः VājaPrāti. 8.21; अनुस्वारौ च ṚTPrāti. 23 (comm. अनुस्वारौ च पूर्वान्तसस्वरौ भवतः); 182; कवर्गावर्णानु-स्वारजिह्वामूलीया जिह्वया ĀpiŚi. 1.10; 1.19; अनुस्वारो विसर्गश्च ... पराश्रितौ PāṇiŚi. 5; 22; 24; नासिका अनुस्वारस्य CāndrVaSū. 8; PrakriKau. i. 28. 1; SiddhāKau. 5A. 12 (*on*. i. 1.9); अनुस्वारः ...। दुस्पृष्टः ŚaiśiŚi. 14; 25; 36; अनुस्वारं हि दोषस्तु हकारादिषु वर्जितः MāṇḍūŚi. 8.10; 12.5; 13.6; अनुस्वारेऽ-ङ्गुलिक्षेप उष्मान्तेऽङ्गुलिमोक्षणम् YājñaŚi. 56; 62; अनुस्वारो द्विमात्रः स्यात् YājñaŚi. 65; 138; 140; 204; 212; नानुस्वारं न संयोगम् ... मात्रा सह भवेद्दीर्घम् PārāŚi. 24; 28; अनुस्वाराद्य संयोगः परतो दृश्यते यदि। ह्रस्वं तं तु विजानीयात् PārāŚi. 32; 110; अनुस्वारः ... त्रिविधः परिकीर्तितः LaMādhyaŚi. 12; अनुस्वारोपध्ममूलानां न क्वचित् क्रमते परम् NāraŚi. ii. 2.11; GautŚi. 1.3(451); अनुस्वारे विवृत्यां च विरामे चाक्षरद्वये। द्विरोष्ठ्यौ तु विनिगच्छत्तथैकारयकारयोः LomŚi. 3.7; 7.10; 8.5; अनुनासिकात् परोऽनुस्वारः P. viii. 3.4; SaraKaṇṭhā. (Gr.) vii. 4.7; नासिकावचनोऽनुनासिक इतीयत्युच्यमाने यमानुस्वाराणामेव प्रसज्येत MahāBh. i. 60.6 (*on* i. 1.8); कुर्वन्ति कृषन्तीति परस्यानुस्वारपरसवर्णयोः कृतयोः पूर्वस्य णत्वं प्राप्नोति MahāBh. iii. 264. 1(*on* vii. 1.72); अं इत्यनुस्वारः Kātan. i. 1.19 ( Vṛ. अकार इहोच्चारणार्थः। इति बिन्दुमात्रो वर्णोऽनुस्वारसंज्ञो भवति); अनुस्वर्यते संलीनं शब्द्यत इत्यनुस्वारः। कर्मणि घञ् Pañjikā *on* KātanVṛ. *on* i. 1.19; *on* ii. 4.48; अनुस्वारः CāndraVyā. vi. 4.7 (Vṛ. अत्रानुस्वारः पूर्वस्यागमो वा भवति); अनुस्वारविसर्गौ च पारुष्याय निरन्तरौ AgniP. 342.7;(ध्रादिपरः) आदिपदेन विसर्जनीयानुस्वारजिह्वामूलीयोपध्मानीयानां ग्रहणम् MṛtaSaṁ. 7.7 (*on* 1.11); 7.10 (*on* 1.11); अक्षरास्तु द्विपञ्चाशन्मातृकायाः प्रकीर्तिताः। स्पर्शाश्चैव त्रयस्त्रिंशदनुस्वारस्तथैव च SkandP. i(2). 5.51; अनुस्वारः परतरः GaṇU. 570. 24; अनुस्वारश्चान्त्यरूपम् GaṇU. 571.1; अं अः अनुस्वारविसर्गौ SiddhaHe. i. 1.9; (ह्रस्वोऽपिगो भवति वक्रश्च) ᵕक ᵡप-विसर्ग-अनुस्वार-व्यञ्जना-ह्रादिसंयोगे Chandonu. 1.7; (चित्रगतशरीरस्य) (आयुधम्) अवशिष्टमधोबाहोश्चतुर्थं नामवाचकम्। प्राधान्यं व्यञ्जनेष्वेव दीर्घानुस्वारयोर्बहिः Mānaso. iii. 1.690; नानुस्वारविसर्गौ च चित्रभङ्गाय संमतौ Vāgbhaṭā. 1.20; AlaṅkāŚe. 15.1(24); अनुस्वारस्य कति भवन्तु (मात्राः) HāsyaCū. 130. 17; अनुस्वाराकारौ चतुर्थे पादे ... इत्यनया व्यवस्थया ... एकव्यञ्जनोच्चारितेन पद्येन पुनः पुनः परिवर्तनं क्रियते KāvyKaVṛ. 5.4 (1.2); व्यञ्जनं चेद्यथावस्थम् ...। आवर्त्यते ... अनुप्रासः ...। यथावस्थमिति यथासंभवमनुस्वारविसर्गस्वरयुक्ताक्षरविशिष्टम् SāhiDa. 477.3; नासिक्या ह्यनुस्वारौ च संवृतकण्ठाः Prasā. i. 29.12; ते ... अनुस्वारेण शोभमानाः LalitāSaBh. 31.12 (*on* 35); उन्मेषस्य स्तोकं पुष्टतापत्तिः अनुस्वारः Bhāsk. ii. 300.12 (*on* iv. 1.10); मुखसहितेत्यादि। मुखेति किम् यमानुस्वाराणामेव प्रसज्येत LaŚabdeŚe. i. 26. 3; i. 35.20; i. 130.7; **2Aii** after-sound, the nasal sound or nasalization as a substitution for *n* and *m* (before semivowels, sibilants and *ha*, but changing to *parasavarṇa* before other letters) रेफोष्मस्वनुस्वारम् ĀśvaŚS. I. i. 2.18; अनुस्वारं मकारः ŚāṅkhāŚS. i. 2.11; अनुनासिकमुपधा प्रागन्तस्थायाः। स्वर औपशविः। अनुस्वारेण व्यञ्जने VājaPrāti. 3.132; अनुस्वारस्तु कर्तव्यो नित्यं ह्रोः शषसेषु च PāṇiŚi. 23; मकारस्य पदान्तस्य रेफोष्मसु परेषु च। अनुस्वारो भवत्येव ŚaiśiŚi. 275; आपद्यते मकारो यरवोष्मसु प्रत्ययेष्वनुस्वारम् MāṇḍūŚi. 9.7; NāraŚi. ii. 4.4; नकारस्य मकारस्य अनुस्वारो यदा भवेत्। तदानुनासिके विद्यात् PārāŚi. 48; 139; मोऽनुस्वारः P. viii. 3.23 (MahāBh. हलीत्यनुस्वारः प्रसज्येत); अनुस्वारस्य ययि परसवर्णः P. viii. 4.58; सर्पींषि धनूंषि। अनुस्वारे कृते शर्व्यवाय इत्येव सिद्धम् MahāBh. i. 29.10 (*on* ŚivSū. (Gr.)5); i. 115.25 (*on* i. 1.47); श्रेयांसि भूयांसीति परस्यानु-स्वारे कृते पूर्वस्य श्रवणं प्रसज्येत MahāBh. iii. 264.20 (*on* vii. 1.72); मोऽनुस्वारं व्यञ्जने Kātan. i. 4.15; मनोरनुस्वारो घुटि Kātan. ii. 4.44; iii. 3.31; यय्यनुस्वारस्य परस्वम् JaineVyā. v. 4.132; CāndraVyā. vi. 4.151; शल्यनुस्वारः ŚākaṭāVyā. i. 1.110; नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्परे SiddhaHe. i. 3.8; i. 3.40; परत्वात् कृतस्यापि णत्वस्यासिद्धत्वादनुस्वारः PrakriKau. ii. 2.6; ii. 111.4; 'मोऽनुस्वारः' इति विधीयमानोऽनुस्वारः किम्वुक्तमित्यादौ न भवति Prasā. i. 83.12; ii. 111.15; (अनयोरभ्यासस्यातो, नुक् स्याद्यङ्यङ्लुकोः) नुक् इत्यनेनानुस्वारो लक्ष्यते SiddhāKau. 437B. 18 (*on* vii. 4.87); **2Aiii** nasal sound as one of the characteristics of an *anuṣṭubh mantra* recited for Nṛsiṁha उन्निद्रान्तमनुस्वारम् अमृताभ्यन्तरम् (समुद्धरेत्) PāraS. 24.53; **2Aiv** dot or crescent as orthographical representation of nasalisation पदं कृत्वा निरालम्बमु-परिष्टादधिष्ठितः। पूर्वशैलाक्षरस्येन्दुरनुस्वार इवाबभौ UdaySuKa. 73.19; वर्णशिरोबिन्दुरनुस्वारः SārasvaVyā. i. 1.25; स्मृतिस्थं मांसमौं बिन्दुयुक्तं भूबीजमीरितम्। स्मृतिः गकारः ... बिन्दुरनुस्वारः TantrSā. (K.) 109.24; 84.10; यद् विषं दातव्यं तदुत्सुकतावशादाकारस्थानेऽनुस्वारो विहितः KathāK. 126.12; शशी अनुस्वारः ... बिन्दुरिति यावत् SetuBa. 14.23; अनुस्वारश्च बिन्दुश्च Tantrābhi. (1) 2.7; **2B** nasal sound as vowel or consonant अनुस्वारो व्यञ्जनं वा स्वरो वा ṚPrāti. 1.11; **2Ci** nasal sound which is not doubled सवर्णे। नानुस्वारः VājaPrāti. 4.112; अभक्ते दीर्घनलोपस्वरणत्वानुस्वारशीभावाः Vār. 4 *on* P. i. 1.47; स्थानी प्रकल्पयेदेतावनुस्वारो यथा यणम् MahāBh. i. 16.10 (*on* ŚivSū. (Gr.)1); अनुस्वारोऽन्यपदार्थः LaŚabdeŚe. ii. 356.1; **2Cii** nasal sound as *ayogavāha* के पुनरयोगवाहाः। विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारानुनासिक्ययमाः MahāBh. i. 28.17 (*on* SivSū. (Gr.)5); (संयोगायोगवाहपरः स गुरुसंज्ञः) के अयोगवाहाः विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वाराः Jānāśra. 1.12 (3); (अयोगवाहाः) ते चानुस्वारविसर्गजिह्वामूलीयोपध्मानीययमाः LaŚabdeŚe. i. 190.5; **2Ciii** nasal sound as a syllable हकाररेफकारानुस्वाराणां वर्णानां समष्टिस्वरूपेण समुदायात्मकत्वात् 'वर्णसमुदायः पदम्' इत्यपि पदलक्षणवत्त्वमस्य घटते LalitāTriBh. 285.10 (*on* 17); **3** mysterious sound (indicated by dot on the top of a letter or by *am*) representing **A** staff अनुस्वारः ... दण्डः Tantrābhi. (1) 2.7; **B** wielder of a staff अनुस्वारः ... दण्डी Tantrābhi. (1) 2.7; **C** sky अनुस्वारः ... वियत् Tantrābhi. (1) 2.7; (5) 36.13; (8) 55.5; **D** Pradyumna अनुस्वारः ... प्रद्युम्नः Tantrābhi. (1) 2.8; (5) 36.13; (8) 55.5; **E** Akrūra अनुस्वारः ... अक्रूरः Tantrābhi. (1) 2.8; (5) 36.13; (8) 55.5; **F** head अनुस्वारः ... शीर्षम् Tantrābhi. (1) 2.8; **G** death अनुस्वारः ... मरणम् Tantrābhi. (1) 2.8; **H** orthographical sign of cresent चन्द्रसंज्ञकः। अनुस्वारः Tantrābhi. (5) 36.15; अनुस्वारः ... बिन्दुचन्द्रौ च अंस्वरः Tantrābhi. (3) 55.6; **I** Śaṅkukarṇaka अनुस्वारः ... शङ्कुकर्णकः Tantrābhi. (8) 55.5; **J** Sthiti अनुस्वारः ...। अक्रूरः स्थितिसंज्ञश्च Tantrābhi. (8) 55.6; **4** the word *anusvāra*, cf. **अनुस्वारग्रहण**; **5** (process of) nasalisation, cf. **अनुस्वारविधि.**

**अनुस्वारकरण** (anusvāra - karaṇa) *n.* making, i.e. indication of nasalisation ह्रस्वानुस्वारकरणे त्वङ्गुष्ठाग्रप्रकुञ्चनम् MāṇḍūŚi. 4.13.

**अनुस्वारगुण** (anusvāra - guṇa) *m.* quality of nasalisation यत्र स्थानतो गुणतश्चान्तरतमास्तत्रानुस्वारस्य परसवर्णाः सन्ति। ... ञमङणनाः स्वस्थाना नासिकास्थानाश्च ... गुणतोऽपि। तेषां पूर्वोक्तैः अनुस्वारगुणैः अनुगतत्वात् Nyās. i. 25.11 (*on* ŚivSū. (Gr.) 5)

**अनुस्वारग्रहण** (anusvāra - grahaṇa) *n.* mention of (the word) *anusvāra* (in the *sūtra*) अनुस्वारव्यवाये नो णो भवतीति वक्तव्यम्। तदनुस्वारग्रहणं कर्तव्यम् MahāBh. iii. 454.2 (*on* viii. 4.2)

**अनुस्वारजश्चर्विधि** (anusvārajaścar-vidhi) *m.* rule regarding nasalisation and the substitution of *jaś* and *car* letters न पदान्तद्विर्वचनसवर्णानुस्वारजश्चर्विधिषु SaraKaṇṭhā. (Gr.) i.2.45.

**अनुस्वारदीचर्विधि** (anusvāradīcar-vidhi) *m.* rule regarding nasalisation and the substitution of *dī* and *car* letters न पदान्ताद्वित्ववरेयखस्वानुस्वारदीचर्विधौ JaineVyā. i. 1. 58.

**अनुस्वारदीर्घजश्चर्विधि** (anusvāradīrghajaścar-vidhi) *m.* rule regarding nasalisation, lengthening of vowels and the substitution of *jaś* and *car* letters न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु P. i. 1. 58.

**अनुस्वारनिवृत्त्यर्थ** (anusvāranivṛtty-artha) *adj.* having the purpose of removal of nasalisation वर्धीं वृत्रम् इत्यादौ मकारस्य अनुस्वारनिवृत्त्यर्थो मकारः स्यात् Pradī. vi. 49. 24 (*on* vii. 1. 40)

**अनुस्वारनिवृत्त्यर्थम्** (anusvāranivṛttyartham) *adv.* for the sake of the removal of nasalisation मस्य मवचनमनुस्वारनिवृत्त्यर्थम् Prasā. i. 92. 20.

**अनुस्वारपक्ष** (anusvāra-pakṣa) *m.* view regarding (compound having) nasalisation पुंस्कोकिल इति। ... अनुनासिकपक्षेऽर्धो बिन्दुः। अनुस्वारपक्षे समग्रः Prasā. i. 97. 21; अनुस्वारपक्षे तु कुप्वोः इत्यस्यैव प्राप्तिः LaŚabdeŚe. i. 135.3.

**अनुस्वारपर** (anusvāra-para) *adj.* following, i.e. subsequent to the nasalisation अनुस्वारपराः शषसा न क्रमन्ति कदाचन LomŚi. 8. 6.

**अनुस्वारपुरोवर्तिन्** (anusvāra-purovartin) *adj.* preceded by nasalisation (मधुरावृत्तिः) सैषा प्रायोऽनुस्वारपुरोवर्तिस्पर्शतया जायते SaraKaṇṭhā. 240. 26.

**अनुस्वारपूर्व** (anusvāra-pūrva) *adj.* preceded by nasalisation नोऽन्त-श्चछयोः शकारमनुस्वारपूर्वम् ... भवांश्चरति Kātan. i. 4. 8; पुमः खय्यंपरे सोऽनु-स्वारपूर्वः (पुंस्कोकिलः) JaineVyā. v. 4. 1.

**अनुस्वारप्रदेश** (anusvāra-pradeśa) *m.* sphere, i.e. case of nasalisation अनुस्वारप्रदेशाः। मोऽनुस्वारं व्यञ्जने इत्येवमादयः KātanVṛ. *on* i. 1. 19.

**अनुस्वारप्रवृत्ति** (anusvāra- pravṛtti) *f.* application of (a change to) nasalisation अपदान्तनकारेऽनुस्वारप्रवृत्त्या फलितार्थप्रदर्शनमिदम् LaŚabdeŚe. i. 130. 3.

**अनुस्वारभूषित** (anusvāra-bhūṣita) *adj.* decorated with, i.e. followed by nasalisation उमाकान्तो दीर्घोऽनुस्वारभूषितः ĪśānŚiPa. i. 48. 16.

**अनुस्वारयुत** (anusvāra-yuta) *adj.* associated with, i.e. possessing nasalisation तेऽनुस्वारयुताः सर्वे कार्याः प्रणवमध्यगाः PauṣkS. 38. 267; बीजं कृत्वादिमाक्षरम्। अनुस्वारयुतं पश्चात् सकलं मन्त्रं उच्यते LakṣmīT. 21. 24; सुदर्शनस्तु तच्छ्रुत्वा दधारैकाक्षरं स्फुटम्। अनुस्वारयुतम् DevīBhāP. iii. 17. 35.

**अनुस्वारलोप** (anusvāra-lopa) *m.* elision of nasalisation संस्कृतशब्दस्थाने ... अनुस्वारलोपः ... प्राकृतापभ्रंशेषु दृष्टः TantrVā. 174. 1 (*on* i. 3. 10); एक एव मन्त्र उपासनीयः घृणिः सूर्य आदित्यमिति तत्रानुस्वारलोपश्छान्दसः ŚankaVi. (Ā.) 96. 7.

**अनुस्वारवत्** (anusvāra-va(n)t) *adj.* having nasalisation रूपद्वयम्। ... अनुनासिकवतां त्रयाणाम् (रूपाणि) ... अनुस्वारवतामनुस्वारस्यापि द्वित्वे द्वादश SiddhāKau. 31B. 9 (*on* viii. 3. 34)

**अनुस्वारविधि** (anusvāra-vidhi) *m.* process of nasalisation अनुस्वारविधिं प्रत्यजादेशो न स्थानिवद् भवति शिंषन्ति। पिंषन्ति KāśiVṛ. *on* i. 1. 58.

**अनुस्वारविपर्यय** (anusvāra-viparyaya) *m.* change, i.e. loss of nasalisation न विसर्गं न तद्धीनं नानुस्वारविपर्ययः। हृद्याकाशनिविष्टं यदचलत्वं प्रयाति चेत्। ... तत्पदं योगिभिर्ध्येयम् BṛParāSm. 12. 175 (98)

**अनुस्वारविशेषण** (anusvāra-viśeṣaṇa) *n.* qualifier to, i.e. substitution for nasalisation अनुस्वारविशेषणं नुम्ग्रहणं नुमो योऽनुस्वारस्तत्र यथा स्यात् MahāBh. i. 29. 11 (*on* ŚivSū. (Gr.) 5); iii. 454. 4 (*on* viii. 4. 2)

**अनुस्वारव्यवधान** (anusvāra-vyavadhāna) *n.* intervention by nasalisation अनुस्वारव्यवधानेनोदुपधत्वाभावात् LaŚabdeŚe. i. 135. 4; ii. 57.5.

**अनुस्वारव्यवाय** (anusvāra-vyavāya) *m.* intervention or separation (of two sounds) by nasalisation अनुस्वारव्यवायवचनात्तु सिद्धम् Vār. 8 *on* P. viii. 4. 2; अनुस्वारव्यवाये नो णो भवतीति वक्तव्यम् MahāBh. iii. 454. 2 (*on* viii. 4. 2); सत्यपि नुमि यत्र अनुस्वारव्यवायो नास्ति तत्र (णत्वम्) न भवति Nyās. ii. 1103. 27 (*on* viii. 4. 2); बृंहणमित्यत्र अनुस्वारव्यवाये नुमभावेऽपि णत्वं स्यात् Prasā. i. 128. 16.

**अनुस्वारसंयुक्त** (anusvāra-saṁyukta) *adj.* associated or furnished with (orthographical sign of) nasalisation लेखकः। मात्रानुस्वारसंयुक्तं पदच्छेद-समन्वितम्। समानि समशीर्षाणि ... लेखयेदक्षराणीह BhaviP. 859A. 2 (iv. 174. 7)

**अनुस्वारसंयुत** (anusvāra-saṁyuta) *adj.* [*f.* - ā] **i** accompanied by nasalisation ज्योतिस्तीक्ष्णाग्निसंयुक्ता श्वेतानुस्वारसंयुता RāmPūTāU. 9. 7; **ii** followed by *anusvāra* वर्णोऽनुस्वारसंयुतः। ... युक्तपरो गुरुः SaṁgīRa. ii. 224. 4(4.54)

**अनुस्वारसंस्कारयोगा** (anusvārasaṁskāra-yogā) *adj.* (*f.*) associated or furnished with nasalisation and grammatical correctness इदमेव महदाश्चर्यम् ... अभिव्यक्तमात्रानुस्वारसंस्कारयोगाम् ... अयम् ... गिरमुदीरयति Kād. 13.3.

**अनुस्वारसहिता** (anusvāra-sahitā) *adj.* (*f.*) associated with nasalisation राकेन्दुवदना अनुस्वारसहिता चेत् रतिरूपा कामकला भवतीत्युद्धारः LalitāSaBh. 89. 21 (*on* 123)

**अनुस्वारसाधारण** (anusvāra-sādhāraṇa) *adj.* common to nasalisation (becoming *parasavarṇa*) वर्गाणां तृतीयचतुर्था इत्यादिना ग्रन्थेन येऽनुस्वारसाधारणा वर्गतृतीयानां गकारादीनां गुणा उक्तास्ते ङकारादीनां निर्दिश्यन्ते Nyās. i. 25. 12 (*on* ŚivSū. (Gr.) 5)

**अनुस्वारस्वरादि** (anusvāra-svarādi) *adj.* nasalisation and vowel etc. शब्दं यथोचितमात्रानुस्वारस्वरादिसमुत्थितमुच्चारयत्याचार्यः NyāyMañ. i. 386. 16.

**अनुस्वारस्वराद्य** (anusvārasvarādya) *adj.* beginning with nasalisation or a vowel अनुस्वारस्वराद्यस्तु संयोगादिर्द्विरुच्यते ŚaiśiŚi. 86.

**अनुस्वारस्वरूप** (anusvāra-svarūpa) *adj.* of the form of dot or crescent representing nasalisation अनुस्वारस्वरूपाय नमस्ते सानुनासिक SkandP. iv. 73. 112 (comm. बिन्द्वात्मकाय)

**अनुस्वाराक्षर** (anusvārākṣara) *n.* letter with nasalisation प्रहेलिका ... दत्ताक्षरा यथा ... मृगाणां पृष्ठतो याति शम्बरः ... अत्र शबर इति शम्बर इत्यनुस्वाराक्षरस्य दत्तत्वाद्दत्ताक्षरेयम् SaraKaṇṭhā. 300. 6.

**अनुस्वारागम** (anusvārāgama) *m.* nasalisation as the augment (अनुस्वारा-गमवचनात् सिद्धम्) अनुस्वारागमो वक्तव्यः। एवमपीदमेव रूपं स्यात् यँय्यम्यते इदं न स्यात् यंयम्यते MahāBh. iii. 358. 23 (*on* viii. 4. 85); अनुनासिकं विहाय रोः पूर्वस्मात् परोऽनुस्वारागमः स्यात् SiddhāKau. 31A. 8 (*on* vii. 3. 4) [an augment consisting in the addition of an Anusvāra, MW.]

**अनुस्वारागमत्व** (anusvārāgama-tva) *n.* the state of having nasalisation as the augment (नावगृह्यन्ते) सँस्कृतम् ... पुँश्चलूमित्यनुनासिकोपधत्वात्। अनुस्वारागमत्वादित्येके VājaPrāti. 5. 43.

**अनुस्वारागमवचन** (anusvārāgama-vacana) *n.* prescription of augment in the form of nasalisation अनुस्वारागमवचनात्सिद्धम् Vār. 2 *on* P. vii. 4. 85

**अनुस्वारादि** (anusvārādi) *adj.* nasalisation (becoming *parasavarṇa*) etc. मो राजिः समः को इति मकारस्य मकारवचने प्रयोजनं नास्तीति कृत्वानुस्वा-रादयो बाध्यन्ते MahāBh. i. 481. 21 (*on* ii. 4. 32); iii. 257. 12 (*on* vi. 1. 40)

**अनुस्वारादिपूर्व** (anusvārādi-pūrva) *adj.* what precedes nasalisation etc. अनुस्वारादिपूर्वस्य वर्णस्य वनं घटः संपदित्यादौ स्थितस्य गुरुसंज्ञा पाणिनिना न कृता ChandaḥSū. 1. 10.

**अनुस्वारान्तरतम** (anusvārāntaratama) *adj.* immediately succeeding, i.e. very close or cognate to nasalisation अनुस्वारस्य ययि परसवर्ण इत्येत-दप्यनुस्वारान्तरतमं सकृदेव परसवर्णं विदधाति KāśiVṛ. *on* ŚivSū. (Gr.) 5.; अनुस्वारान्तरतमः। अनुस्वारस्य सदृशतम इत्यर्थः Nyās. i. 24. 24 (*on* ŚivSū. (Gr.) 5); i. 25. 5(*on* ŚivSū. (Gr.)5); रेफस्य हि रेफ एव तुल्यस्थानप्रयत्नः, स चानुस्वारान्तरतमो न भवति। यत्र वानुस्वारान्तरतमाः परसवर्णास्सन्ति ... तत्र चरितार्थं वचनम् PadMañ. *on* KāśiVṛ. *on* ŚivSū. (Gr.) 5 (47. 7)

**अनुस्वारापत्ति** (anusvārāpatti) *f.* undesired contingency of (being) nasalisation 'मा मौँस्त्रायस्व' इत्यत्रानुनासिकपक्षेऽनुस्वारापत्तिर्दुर्वारा LaŚabdeŚe. i.9.6.

**अनुस्वाराप्राप्तिलक्षण** (anusvārāprāpti-lakṣaṇa) *adj.* characterised by the non-obtainment of nasalisation अन्ये असाधु मन्यमाना अनुस्वाराप्राप्तिलक्षणं दोषमाहुः। एवं च परंतप इत्यपि समर्थितं भवति Pradī. v. 252B. 7 (*on* vi.3.68)

**अनुस्वाराभाव** (anusvārābhāva) *m.* absence of nasalisation (as substitute) नुम् व्यवाये णत्वेऽनुस्वाराभावे प्रतिषेधः Vār. 6 *on* P. vii. 4. 2; नुम्व्यवाये णत्वेऽनुस्वाराभावे प्रतिषेधो वक्तव्यः MahāBh. iii. 453. 23 (*on* vii. 4. 2); अनुस्वारे कर्तव्ये वत्वस्यासिद्धत्वादनुस्वाराभावः Pradī. vii. 168. 16 (*on* viii. 3. 33); प्रेन्वनमित्यत्र तु सत्यपि नुमि अनुस्वाराभावे णत्वं न Prasā. i. 128. 18; अचि अनुस्वाराभावात् LaŚabdeŚe. i. 126. 14.

**अनुस्वारीभूत** (anusvārī-bhūta) *adj.* which has become nasal sound or nasalisation अथैकस्मिन्नपि नुमि णत्वं कस्मान्न भवति। अनुस्वारीभूतो णत्वमतिक्रामति MahāBh. iii. 264. 2 (*on* vii. 1. 72); कुर्वन्ति वृषन्ति इत्यत्र णत्वस्यासिद्धत्वात्पूर्वं नकारस्यानुस्वारः क्रियते, तस्यापि परसवर्णेन पुनर्नकार एव भवति तस्याप्यसिद्धत्वात्पुनर्णत्वं न भवति। एवमनुस्वारीभूतो णत्वमतिक्रामति KāśiVṛ. *on* viii. 4. 58; PadMañ. *on* KāśiVṛ. *on* P. viii. 4. 58 (660. 14)

**अनुस्वारेत्** (anusvāret) *adj.* which has nasal sound or nasalisation as the indicatory letter *it* एकस्वरादनुस्वारेतः। एकस्वरादनुस्वारेतो धातोर्विहितस्य स्ताद्यशित आदिरिट् न स्यात्। पाता SiddhaHe. iv. 4. 56.

**अनुस्वारोत्तरम्** (anusvārottaram) *adv.* after the nasalisation मायाबीजं महेशानि मादनं शक्रसंयुतम्। चन्द्रबीजं केवलम् ... ये तु शक्रसंयुतमिति मायाबीजविशेषणत्वेन व्याचक्षते तेषामनुस्वारोत्तरं हलन्तरयोगस्याप्रसक्तत्वादेव पूर्वम् SetuBa. 67. 12.

**अनुस्वारोपलक्षणार्थ** (anusvāropalakṣaṇārtha) *adj.* meant for indicating the (substitution by) nasalisation नुगतोऽनुनासिकान्तस्य। ... नुग् इत्येतद् अनुस्वारोपलक्षणार्थं द्रष्टव्यम् KāśiVr̥. *on* vii. 4. 85; अनुस्वारोपलक्षणार्थं ह्यत्र नुम्ग्रहणम् Nyās. ii. 1103. 16 (*on* vii. 4. 2); Prasā. ii. 354. 9; SiddhāKau. 481A. 2 (*on* viii. 4. 32)

**अनुस्वारोपलक्षणार्थता** (anusvāropalakṣaṇārtha-tā) *f.* the state of being meant for indicating the (substitution by) nasalisation अनुस्वारोपलक्षणार्थता च नुम इजादेः सनुम इति महतः सूत्रस्य प्रणयनादवसीयते Nyās. ii. 1125. 1 (*on* viii. 4. 32)

**अनुस्वारोपलक्षणार्थत्व** (anusvāropalakṣaṇārtha-tva) *n.* the state of being meant for indicating the (substitution by) nasalisation इति व्याप्तौ ... णत्वविधौ नुमोऽनुस्वारोपलक्षणार्थत्वं द्रष्टव्यमित्युक्तत्वात्प्रेन्वनमिति नुम्व्यवाये णत्वं न भवति DhātuPra. 1. 587 (44. 10)

**अनुस्वारोपलक्षणार्थम्** (anusvāropalakṣaṇārtham) *adv.* for the sake of indicating (the substitution by) nasalisation नुम्ग्रहणम् अनुस्वारोपलक्षणार्थं व्याख्येयम् PadMañ. *on* KāśiVr̥. *on* P. viii. 4. 32 (640. 10); (अट्कुप्वाङ्नुम्व्यवायेऽपि) नुम्ग्रहणमनुस्वारोपलक्षणार्थम् Prasā. i. 128. 16; i. 277. 9; SiddhāKau. 45A. 6 (*on* viii. 4. 2)

**अनुस्वारोपहित** (anusvāropahita) *adj.* preceded by nasal sound or nasalisation स्वरानुस्वारोपहितो द्विरुच्यते। संयोगादिः स क्रमः R̥Prāti. 6. 1 (Uvaṭa अनुस्वारेण चोपहितः)

**अनुस्वृ** (anu-svr̥-) I.P. to pronounce, to utter (with special accent or tone), cf. **अनुस्वार** m.; also cf. **पदानुस्वार** [Viśva.]

**अनुह** (anuha) *m.* **i** name of a king कालवशं गताः। ... अनेना (v. l. अनुहो) युवनाश्वश्च ... रघुः MahāBhā. i. 1. 172; **ii** name of a son of the king Vibhrāj (in the clan of Purus) पुरुवंशं श्रोतुमर्हसि। ... सुपारात् पृथुः पृथोस्सुकृतिस्ततो विभ्राजः। तस्माद्याणुहः ViṣṇuP. (v. l. ततश्चानुहः Wai Ed.) iv. 19. 43; **iii** name of a son of Śveta श्वेतनामेति विश्रुतः। अनुहस्तस्य तनयः BhaviP. 421A.9 (iii (1). 4. 36)

**अनुहत** (anu-hata) *adj.* **A** destroyed, killed कल्किना तु हताः सर्वे (v. l. कल्किनानुहताः Bengali Ed.) आर्या म्लेच्छाश्च सर्वतः MatsyaP. 273. 27; **B** imposed (क्षुद्रविट्क्षत्रविप्राणां यत्रर्तोक्तौ भवेद् वधः। तत्र वक्तव्यमनृतम्) न . चात्र वधार्हेष्वनृतमिष्यते ... यस्त्ववधार्हानवकाशात्र पुरदास्यादिस्खलितादनुहतदण्डताख्यापनाय वा जनैः स्वल्पापराधात् न घातयित्वोपपत्तिः ... न तस्यापि निमित्तत्वोपपत्तिः ManuBh. ii. 118. 9 (*on* 8. 104)

**अनुहति** (anu-hati) *f.* striking a resonant note (by a single stroke similar to *huṁ* sound) अनुहतिरेकहतेः प्रतिहतिवत्सैव RāgVi. 5. 18 (comm. गम्भीरध्वनिरिति शेषः। एकमेवाघातं कृत्वा अतिशीघ्रमेव किंचिदङ्गुलेरुच्छालनेन किंचित्पूर्वस्वरं प्रदर्श्य तदाच्छादनेन हुंकारसमध्वनिरनुहतिरित्यर्थः)

**अनुहन्** (anu-han-) II.P. **1A** to kill or destroy completely, to strike repeatedly (for killing) मध्याश्छस्नामनुजिघासि सर्वं न देवानां सूर्यं समाप AV. (P.) v. 27. 7; यो मे प्राणं यो मेऽपानं व्यानं श्रेष्ठं जिघांसति। इन्द्रश्च तस्याग्निश्च प्राणंप्राणमनुहताम् AV. (P.) x. 12. 4; हीनमनुहन्यात् ArthŚā. iii. 119. 9 (10. 3) (comm. अनुबध्य प्रहरेत् पुनरनुन्मज्जनार्थम्); **1B** to strike again and again, cf. **अनुघण, अनुघन**; **2A** to kill imitatingly अनुकुर्वन् ...। यश्चैवं हन्ति यश्चानुहन्त्युभौ तौ हतः MahāBh. i. 20. 24 (*on* ŚivSū. (Gr.) 2); **2B** to attack upon or haunt as a consequence तं तथा भिन्नमर्यादं पापमात्मोपघातिनम्। देवादयोऽप्यनुघ्नन्ति ग्रहाश्छिद्रप्रहारिणः AṣṭāHr̥. vi. 4. 5; **2C** to strike a resonant note, cf. **अनुहति**; **3** to impose, cf. **अनुहत B**.

**अनुहरण** (anu-haraṇa) *n.* **1** act of carrying after (the fire) प्रणीतानुहरणम् KātyŚS. v. 8. 23 (comm. दक्षिणाग्नौ नीयमाने प्रणीतानामनुहरणं पृष्ठतो नयनं कर्तव्यम्); पर्युह्यमाणेऽनुहरणम् KātyŚS. xiv. 1. 16; **2** act of inheriting (property etc.) सर्वेषां समानजातिभिर्व्यवहारः। स्वपितृवित्तानुहरणं च ViṣṇuSm. 16. 16 [imitation, resemblance, MW.; Apte; similarity, Apte]

**अनुहरत्** (anu-harat) *adj.* [*f.* -ntī] **1** carrying after वाचमनुहरन्तीमग्निरस्मै बलिं हरति JaimiUBr. iv. 24. 4; iv. 24. 6; मनोऽनुहरच्चन्द्रमा अस्मै बलिं हरति ... प्राणमनुहरन्तं वायुरस्मै बलिं हरति JaimiUBr. iv. 24. 8; 'हृञ् हरणे' अनुपूर्वाल्लटः शत्रादेशः। अनुहरत् PadMañ. *on* KāśVr̥. *on* P. ii. 4. 61 (303. 16); **2** carrying out, i.e. performing or observing गाव्यादिभिर्व्यवहरन्तोऽनुमानक्रममनुहरन्त एव तेभ्योऽर्थं प्रतिपद्यन्ते NyāyMañ. i. 375. 31; **3A** resembling राजा ... अनुहरन्तीं च तमेव चित्रप्रपञ्चितं रूपम् ... उदयसुन्दरीं ददर्श UdaySuKa. 132. 27; कविरपरः ... जैनेन्द्रमनुहरन्त्या मनोहरो मूर्त्या दिगम्बराचार्यः ... नाम्ना महाकीर्तिः UdaySuKa. 155. 16; **3B** imitating देव ... नरेन्द्राः। किं तु त्वच्छौर्यलीलामनुहरति पुरः सिंहयूनां निकाये तत्राप्यातङ्कभाजः क्व ननु विधिहताः स्थैर्यमासादयन्ति SaduktiKa. 201. 22.

**अनुहरत्** (anu-harat) *m.* [enumerated in the *anuśatikādigaṇa*, GaṇPā. 8. 10; and also in *bāhvādigaṇa*, GaṇPā. 163. 20] name of a person (who is the head of Gotra) अपत्ये इञ् प्रत्ययो भवति। ... अनुहरत्। देवशर्मन् KāśiVr̥. *on* iv. 1. 96; *on* vii. 3. 20; GaṇRa. 3. 204 (247) (v.l.); Prasā. i. 704.5.

**अनुहरमाण** (anu-haramāṇa) *adj.* imitating महीधरं महेन्द्रम् ... मधुकरविरुतैः प्रियाध्वनीनां सरसिरुहैर्दयितास्यहास्यलक्ष्म्याः ... अनुहरमाणम् Bhaṭṭi. 10. 46 (comm. अनुकुर्वन्तम्)

**अनुहर्तुकाम** (anuhartu-kāma) *adj.* desirous of imitating मैकं तमःस्तबकमूर्ध्नमपाकृथास्त्वम् एणं त्यजास्य विमले नयने गृहाण। लोलालकं तरलवीक्षितमायताक्ष्याः साक्षान्मुखं यदि भवाननुक (v. l. °ह PW.) र्तुकामः SubhāRaK. 16. 15; SūktiMu. 53. 36.

**अनुहलाद** (anuhalāda) *m.* name of a *Daitya* (son of Kayādhū and Hiraṇyakaśipu) हिरण्यकशिपुर्दैत्यः ...। कयाधूरस्य पत्नी ... सुताश्च ते। अनुहलादश्च ते हलादाः KalpaK. 363. 16.

**अनुहव** (anu-havá) *m.* [P. iii. 3. 72; vi. 2. 144] act of calling back or from behind, i.e. detracttion अनुहवं परिहवं परिवादं परिक्षवम्। सर्वाणि रिक्तकुम्भान्निरात्तांत् सवितः सुव AV. xix. 8. 4; AV. (P.) xx. 46. 1; AVPari. 1 (26). 4 (*but* MW. inviting, stirring up) [provocation, stirring up, posthumous fame or memory, PW.]

**अनुहसित** (anu-hasita) *n.* act of laughing after सोऽपि ... अनु जल्पमनुजल्पितम् अनु हासमनुहसितम् ... कुर्वन् गोष्ठीलीलयावतस्थे NalaCam. 7. 10 (17) (*but* comm. अनु जल्पमनुजल्पितम् इति यदा क्वचित्पाठः तदा अनुजल्पितमिति क्रियाविशेषणम्)

**¹अनुहा** (anu-hā-) III. Ā. [DhātuPā. 3. 7] **1A** to join with, to yield to अनु कृष्णे वसुधिती जिहाते उभे सूर्यस्य मंहना यजत्रे। ... इन्द्र R̥V. iii. 31. 17 (Sāy. पुनःपुनरावृत्य वर्तेते); **1B** to go after, to run after, to follow अन्विन्द्रं रोदसी वावशाने अन्वापो अजिहत जायमानम् R̥V. x. 89. 13; ये नः पितुः पितरो ये पितामहा अनूजिहिरे (v. l. अनुजहिरे Viśva.) सोमपीथं वसिष्ठाः AV. xviii. 3. 46; VājaS. 19. 51; **1C** to wait upon, to serve अन्वह मासाः ... अन्विन्द्रं रोदसी वावशाने अन्वापो अजिहत जायमानम् TaiS. I. vii. 13. 1; **1D** to pursue, to chase, cf. **¹अनुहाय 1B**; **1E** to catch, cf. **अनुहाय**; **2** to consent, to approve अनु द्यावापृथिवी तत्त ओजोऽमर्त्या जिहत इन्द्र देवाः R̥V. vi. 18. 15 (*but* Sāy. अनुगच्छन्ति); MaiS. iv. 12. 3 (iv. 183. 6); KāṭhS. 8. 16 (i. 101. 9); अनु तदुर्वी रोदसी जिहाताम् ... रायः स्याम धरुणं धियध्यै R̥V. vii. 34. 24; **3** to imitate, to resemble जृम्भस्य ज्वलदविकल्पकल्पितोल्काकल्पान्तं प्रविततमास्यमन्वहार्षीत् (v. l. अन्वहासीत्)। तप्तांशोः ... °आविलश्रि बिम्बम् Kapphiṇā. 3. 30.

**²अनुहा** (anu-hā-) III.P. [DhātuPā. 3. 8] to abandon, cf. **²अनुहाय**.

**¹अनुहाय** (anuhā́-ya) *ger.* **1A** having pursued or chased ब्राह्मणाः ... अनुहाय तपसा मन्युना चोत दूरादव भिन्दन्त्येनम् AV. v. 18. 9; AV(P.) ix. 18.2; यो वा इतोऽपरो जनिष्यते स मे सपत्नो भविष्यतीति तमनुहाय निवेष्ट्याच्छिनत् KāṭhS. 23. 4 (ii. 79. 3); **1B** having gone, having run after . अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत ... तासां परिगृहीतानामश्वतरोऽत्यप्रवत् तस्यानुहाय रेत आदत्त TaiS. VII. i. 1. 2; AitBr. 13. 7 (37); PañcBr. vi. 1. 4; JaimiBr. 1. 67; प्रजापतिः प्रजा असृजत ... वरुणेनाग्राहयत्तां वरुणगृहीताः कृष्णः पेत्वोऽध्यस्कन्दत्तस्यानुहाय पादमगृह्णात् MaiS. ii. 5. 6 (ii. 54. 18); देवा वै राजन्याज्जायमानादबिभयुस्तमनुहाय दाम्नापौम्भन् KāṭhS. 11.4 (i. 148.6); देवाः ... एतेनैव छन्दसानुहायान्तर्हस्तीनानि वसून्याददत AitBr. 22.6 (583); यज्ञो ह देवेभ्योऽपचक्राम सोऽश्वो भूत्वा पराङावर्त तस्य देवा अनुहाय वालानभिपेदुः ŚatBr. III. iv. 1. 17; ŚatBr. (K.) IV. iv. 1. 11; **2** having seized, having caught स यथा ग्रसितमनुहायाच्छिद्य परास्येत ŚatBr. III. iii. 2. 8; स यथा ग्रसितमनुहायाच्छिद्य तदन्यस्मै प्रयच्छेत् ŚatBr. III. viii. 1. 8; यथा ह दुरादानं संदंशेनानु-हायाददीतैवमेवैनमेतेनादत्ते ṢaḍviBr.

iii. 10. 4.

**²अनुहाय** (anuhā́-ya) *ger.* having left out, having abandoned, having omitted केशी विश्वा भुवनानि विद्वान्। तिरोधायैत्यसितं वसानः शुक्रमा दत्ते अनुहाय जार्यै TaiS. III. ii. 2.2 (Sāy. परित्यज्य; *but.* pw. having caught); BaudhŚS. ii. 184. 2; iii. 281. 14; VādhūŚS. iv. 102. 16; यस्यामस्य दिशि द्वेष्यः स्यात्र तां ध्यायेदनुहायैवास्य तद्वीर्यमादत्ते AitBr. 13. 7 (371) (*but* Sāy. द्वेष्यस्य पृष्ठतो गत्वैव)

**अनुहायनम्** (anuhāyanam) *adv.* every year हुल्लडः स्माह ...। उत्तरायणमहे गाम्यर्चां दाय्यनुहायनम्। ... वारेणैकोऽस्तु वः DvyāśraKā. 13. 88 (comm. प्रतिसंवत्सरम्)

**अनुहार** (anu-hāra) *m.* imitation, resemblance (अङ्गहारप्रयोगे तु भाण्डवाद्यं विधीयते। समं रक्तं विभक्तं च स्फुटं शुद्धप्रहारजम्) स्फुटमिति काविवर्णानामनुहारो यत्र स्पष्टो भवति AbhinBhā. i. 187. 5 (*on* 4. 277); अनुहारेण परं स्वराणामवभासोऽत्र न स्फुटः AbhinBhā. iv. 150. 7 (*on* 31. 1); धातूनां ह्युपसर्गवशादन्यश्चार्थ उपजायते तद्यथाप्रहारः ... अनुहारः संहारः PadMañ. *on* KāśiVṛ. *on* P. i. 4. 2 (498. 19) [Kośas give *anuhāra* as the synonym of the following words: *anukāra*, AmaK. 2284; Vaija. 193. 17; AbhidhāCin. 1463; KośaKaTa. 2. 719; KalpaK. 241. 56; *anupamya*, AbhidhāCin. 1463; KośaKaTa. 2. 719; *sāmya, tulā, upamā*, AbhidhāCin. 1463; *sadharmatā*, KośaKaTa. 2. 719; *anukaraṇa*, ŚabdaRa. (Vā.) 3421; and ŚabdaRa. (Su.) 6. 60 gives following words as the meaning of *anuhāra*:- *sadṛkṣa, sadṛś, sadṛśa*]

**अनुहारक** (anuhāra-ka) *adj.* [MW. *f.* *-ikā*] **i** imitating प्लुतं तु लङ्घनं पक्षिमृगगत्यनुहारकम् AbhidhāCin. 1248; **ii** resembling निर्धूमश्चानलो भौममण्डलस्यानुहारकः एते तदा विष्णुदेव्या महास्वप्नाश्चतुर्दश TriṣaŚaPuC. iv. 1. 39.

**अनुहारमात्र** (anuhāra-mātra) *n.* [Inst.] by mere imitation अनुहारेण परं स्वराणामवभासः ...। तेन ह्यनुहारमात्रेण केवलमत्र स्वरात्मका(कता) AbhinBhā. iv. 150. 8 (*on* 31. 1)

**अनुहारिन्** (anu-hārin) *adj.* befitting, worthy भोजनस्थानवेदीम् ... उपविष्टस्यास्य ... गाढमाढौकन्त स्वस्य स्वस्यानुहारिणोऽन्नविशेषानादाय सूपकाराः NalaCam. 3. 21 (6)

**अनुहार्य** (anu-hārya) (= anu-āhārya) *m.* Monthly obsequies on the Darśa or new moon day, Apte.

**अनुहार्य** (anuhār-ya) *ger.* having made to imitate, having rendered (something) similar कम्पनरेन्द्रसुभ्रुवां मुखपद्मान्यनुहार्य पङ्कजैः। ... भानुमानपरक्ष्माधरकन्दरामगात् MadhuVi. 7. 1 (comm. दीप्तिदानेन तैस्सदृशान्येतानि यथा भवन्ति तथा कृत्वा)

**अनुहार्य** (anu-hārya) *adj.* to be imitated, MW.; Apte.

**अनुहिंकारम्** (anuhiṅkāram) *adv.* after (making) the *him* sound or utterance ज्योतींष्यपि गायत् ...। आग्रयणस्य वानुहिंकारं पवित्रं धारयन् LāṭyāŚS. i. 8. 14 (comm. हिंकारस्य पश्चात्); DrāhyŚS. ii. 4. 19.

**अनुहिण्ड्** (anu-hiṇḍ-) I.U. to wander through or after, DBHS.

**अनुहिण्डन्ती** (anu-hiṇḍantī) *adj.* (*f.*) wandering through or after from one place to another (ब्राह्मणी) अनुहिण्डन्ती येन मिथिलाप्रवणं तेनोपसंक्रान्ता Sphuṭā. iv. 64. 11 (*on* 4. 58)

**अनुहिण्डमान** (anu-hiṇḍamāna) *adj.* wandering through or after, DBHS.

**अनुहिण्ड्य** (anuhiṇḍ-ya) *ger.* having wandered through or after हिरुभिरुकावग्रामात्यौ पृष्ठतोऽनुहिण्ड्य तं प्रदेशमनुप्राप्तौ Divyāva. 485. 9 [DBHS.]

**अनुहित** (anu-hita) *n.* welfare, benefit ब्रह्मणा कथितं सर्वं तेषामनुहिताय (अनुचराणाम्) वै SkandP. iii (2). 10. 10.

**अनुहिमवन्त** (anu-himavanta) *adj.*; *n.*? (the region) near the Himālaya (mountain) मेघमाणवको ...। सो दानि अधीतवेदाध्ययनो अनुहिमवन्ता जनपदम् ओकस्तो (v.l. °सो) आचार्यस्य आचार्यधनं पर्येषयिष्यामि MaVastuAva. i. 232. 3; अनुहिमवन्ते कुण्डला नाम यक्षिणी प्रतिवसति MaVastuAva. i. 253. 1; i. 272. 3; सो कामेषु आदीनवं दृष्ट्वा अनुहिमवन्तं गत्वा ऋषिप्रव्रज्यां प्रव्रजितो MaVastuAva. i. 283. 20; राज्ञा ... अनुहिमवन्ते ... दूतो प्रेषितः MaVastuAva. i. 284. 8; अनुहिमवन्ते कपिलो नाम ऋषिः प्रतिवसति MaVastuAva. i. 350. 14; i. 351. 2; अनुहिमवन्ते प्रत्युद्देशे वानरो महान्तं वानरयूथं परिहरति MaVastuAva. iii. 29. 9 [DBHS.]

**अनुहिमवन्तप्रत्युद्देश** (anuhimavanta-pratyuddeśa) *m.* region (which is) near the Himālaya mountain तर्हिं च अनुहिमवन्तप्रत्युद्देशे महन्तो उदकह्रदो MaVastuAva. iii. 29. 10.

**अनुहु** (anu-hu-) III.P. to offer after or subsequently यावन्त्यः कुम्भ्यस्तावन्तो ब्राह्मणाः ... अध्वर्युं जुह्वतमनुजुह्वति ĀpaŚS. iii. 17. 1; (pass.) to be offered after or subsequently पशवो मरुतो यद्वैश्वानरं मारुता अनुहूयन्ते पशूनां प्रजात्यै KāṭhS. 21. 10 (ii. 50. 11); चक्षुषी शुक्रामन्थिनौ यदेतौ भूयिष्ठास्सोमा अनुहूयन्ते KāṭhS. 27. 10 (ii. 150. 14); सत्यं वै चक्षुः सत्यं हि प्रजापतिस्तस्मादेनौ सर्वं सवनमनुहूयते ŚatBr. IV. ii. 1. 26; ŚatBr. (K.) V. ii. 1. 20; माहेन्द्रं त्वतिग्राह्या अनुहूयन्ते ĀpaŚS. xiii. 8. 7.

**अनुहुंकृ** (anu-huṅkṛ-) VIII.Ā. to roar or thunder in response प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभुजे। अनुहुंकुरुते घनध्वनिं न हि गोमायुरुतानि केसरी ŚiśuVa. 16. 25 (comm. प्रतिगर्जति) (*but* MW. to roar in imitation of)

**अनुहुर्छ्** (anu-hurch-) (= anu-hūrch-) I.P. to fall down after another, MW.

**अनुहूत** (ánu-hūta) *adj.* [P. vi. 2. 49] called after or subsequently अनुहूतः पुनरेहि विद्वानुदयनं पथः। आरोहणमाक्रमणं जीवतोजीवतोऽयनम् AV. v. 30. 7; AV. (P.) ix. 13. 7.

**अनुहूर्छ्** (anu-hūrch-) (= anu-hurch-) I.P. to follow (crookedly), to imitate in going crookedly यजमानं वै हूर्छन्तं प्रजा अनुहूर्छन्ति MaiS. i. 10. 7 (i. 146. 20); KāṭhS. 36. 1 (iii. 69. 11) [to fall down after another, MW.]

**अनुहृ** (anu-hṛ-) I.U. **1A** to take or carry after or behind **Bi** to carry along **ii** to carry or bring in **iii** to bring near **C** to carry out, i.e. to perform **2Ai** to take away, i.e. to lure away **ii** to take away, i.e. to remove **3Ai** to take after, to behave alike **ii** to take after, i.e. to resemble **B** to imitate (in action etc.) **C** to take or to receive after, i.e. to inherit or to adopt **D** to be analogous with, to be similar to **4** to refer to, to tally **5** to divide **1A** to take or carry after or behind परि प्राशित्रं हरन्त्यन्वपोऽनु वेदेन ब्रह्मभागम् BaudhŚS. i. 27. 15; i. 131. 15; यद्धीयेत तन्न त्वेवानुहरेयुरिति विज्ञायते BhārŚS. vi. 6. 15; इध्माबर्हिराज्यानि प्रोक्षणीरित्यनुहरन्ति ĀpaŚS. xi. 17. 1; अनु नो द्यामिति ... उपनिष्क्रामन्त्यनुहरन्ति HirŚS. xxiv. 6. 3 (888. 3); अग्निप्रथमाः प्राञ्चो गच्छन्ति तूष्णीं सोमप्रथमा वा। यथोक्तानि तथानुहरन्ति VaikhāŚS. 14. 15; समोप्यैतमग्निमनुहरन्ति ĀpaGS. ii. 5. 14 (comm. एवं विवाहाग्निं समाप्योखायामनुहरन्ति ... वध्वाः पश्चान्नयन्ति); HirGS. i. 22. 2; अजमनुनयन्ति ... अग्निभाण्डमग्निहोत्रोच्छेषणमित्येतान्यनुहरन्ति HirPiMe. i. 1. 2; **1Bi** to carry along आहरन्ति मेथीम्। अनुहरन्ति मयूखान्। आददते खरौ BhārŚS. xi. 13. 11; अनुहरन्ति मेथीमग्निं मयूखान्विशाखदामानि खरौ ĀpaŚS. xv. 13. 7; तुषाग्निमत्र चोद्वास्य संस्कर्तानुहरेद् यतिम् ĀgniveGS. iii. 10. 4 (173. 10); **1Bii** to carry or bring in अपरया द्वारौदुम्बरीमासन्दीं मौञ्जविवानामति (v.l. नु Viśva.) हरेयुः DrāhyŚS. x. 4. 1; **1Biii** to bring near तस्य (पण्डोः) कामांश्च भोगांश्च नराः ...। उपजह्रु(v.l. अनुजह्रु)र्वनान्तेषु धृतराष्ट्रेण चोदिताः MahāBhā. i. 106. 11; **1C** to carry out, i.e. to perform (ऋत्विजः) ततोऽनुजह्रुस्तं हृष्टा विवाहविधिमुत्तमम् VāmaP. 65. 160; ताड्यांस्तिमिरमंशुयष्टिभिर्विक्षिपं च पुरतः प्रदर्शयन्। मीनकेतनमहीपतेः प्रतीहारतामनुजहार चन्द्रमाः Surath. 6. 54; **2Ai** to take away, i.e. to lure away तमेकाश्वेन मृगमनुसरन्तं मृगो दूरमपाहरत् (v.l. अन्वहरत्) MahāBhā. iii. 190. 4; **2Aii** to take away, i.e. to remove कालिन्दि ... मालिन्यम् ... कस्मादनुहरसि SaduktiKa. 187. 5; यदा त्वेवं क्षमितः क्षीरमविसंवसु(?)मनुहरति, तदास्य (नागस्य) यथाक्रमेण विहितं नस्यं शुद्धिमुपजनयति Hastyāyur. 633. 19 (4. 13); **2B** to take away, i.e. to loose, cf. अनुहृत; **3Ai** to take after, to behave alike हरतेर्गतताच्छील्ये उपसंख्यानं कर्तव्यम् पैतृकमश्वा अनुहरन्ते। मातृकं गावोऽनुहरन्ते MahāBh. i. 280. 13 (*on* i. 3. 21); पैतृकमश्वा अनुहरन्ते JaineVyā. 25. 35 (*on* i. 2. 15); CāndraVṛ. *on* i. 4. 61; KāśiVṛ. *on* i. 3. 21; MugdhaBo. 23. 7 (135. 23); PrakriKau. ii. 402. 1; SiddhāKau. 455B. 14 (*on* i. 3. 21); यदिन्दोरन्वेति व्यसनमुदयं वा निधिरपामुपाधिस्तत्रायं जयति जनिकर्तुः प्रकृतिता। अयं कः संबन्धो यदनुहरते तस्य कुमुदम् AnarghaRā. 1. 58 (comm. अनुगच्छत्यनुकरोति वा); जृम्भस्य ज्वलदविकल्पकल्पितोल्काकल्पान्तं प्रविततमास्यमन्वहार्षीत् Kapphiṇā. 3. 30; अनुहरति दृशोर्द्वन्द्वमिन्दीवरस्य ... किमु। निषधपतेः श्लाघनीयं न तस्य NalaCam. 4. 16; केचित् ... अल्पप्राणेन वचसा मरालतामनुहरन्ति UdaySuKa. 18. 13; तस्याश्चानुहरत्येषा चित्रदृष्टाकृतेरहो। प्रियाया मम मन्दारवत्याः सैव भवेन्नु किम् KathāSaSāg. xii. 34. 229; अनुहरसि हरेः पुरन्ध्रिमूर्तिम् ŚrīKaC. 11. 16; वपुरनुहरति तव ... रतिजयलेखम् GītGo. viii. 17. 3; प्रोल्लसद्बिम्बमिन्दोरनुहरति सुदत्याः पीनलावण्यमास्यम् RukmiHa. 3. 8; अनुहरति गिरिस्तुलां मुरारेर्वलयितचित्रशिखण्डमण्डनस्य KaṁVa. 3. 11; अनुहरति सुभग तस्या वामार्धं दक्षिणार्धस्य RasGaṅ. 274. 3; कलाममृतदीधितेरनुजहार सा जानकी Rāgh.

9.85; शैलपतिर्हिमततिभिर्धवलो हलधरमनुहरति Manmatho. 2. 1 (427.16); तव सुन्दरि मधुरस्मितमेदुरमद्यक्षुरभिमुखं चक्षुः। शरदिन्दुकिरण-तुन्दिलकुमुदोन्मुखमधुपमनुहरते SudarŚ. 38; **3Aii** to take after, i.e. to resemble (हरतिः) सादृश्येऽपि वर्तते। तद्यथा। मातुरनुहरति। पितुरनुहरति MahāBh. i. 393. 11 (*on* ii. 1. 51); मातरमनुहरन्ति JaineVyā. 26. 1 (*on* i. 2. 15); CāndraVṛ. *on* i. 4. 61; KāśiVṛ. *on* i. 3. 21; SiddhāKau. 455B. 16 (*on* i. 3. 21); **3B** to imitate (in action etc.) अयमब्धिः सद्रत्नः ... प्रायस्त्वामनुहरते विना जडिम्ना MahāP. 28. 202; 29. 165; निधुवनमन्वहरज्जलप्लवः RāghPāṇ. (Dha.) 15. 44; अनुहर हरिणाक्षि शंकराङ्कस्थितहिमशैलसुताविलासलक्ष्मीम् PraboCan. 2. 35 (40.12); अनुहरतः खलसुजनावग्रिमपाश्चात्यभागयोः सूच्याः। एकः कुरुते छिद्रं गुणवानन्यः प्रपूरयति SubhāRaK. 37. 6; मणिपङ्क्तिमिवोत्तमाङ्गसक्तामवदातद्युतिमिन्दुमौलिकान्ताम्। कलयन्नवनीभरं च बिभ्रन् नगराजोऽनुजहार नागराजम् Surath. 8. 3; इह तन्तुषु पट इत्यादिप्रत्ययात्समवायसाधनमनोरथः स खल्वनुहरते नपुंसकादपत्यप्रसवमनोरथम् SyādvāMañ. 7 (70); (अम्बुराशिः) उत्तुङ्गैरुपरिसमूढफेनकूटैरुल्लोलैरनुहरति ... अर्धोद्यत्तुहिनकरांशुदीपिताग्रैराकीर्णानवनिधरैर्धराविभागान् Rāgh. 12. 8; (pass.) to be imitated व्रीडितस्य ललितं युवतीनां क्षीबता वहुगुणैरनुजह्रे Kirāta. 9. 67; **3C** to take or to receive after, i.e. to inherit or to adopt मातुः कुलं द्विप(पा?)-दोऽनुहरन्ति ManuBh. i. 210. 26 (*on* 3.7); के तव तस्य चरित्रगुणं रजनिकरानुहरन्ते ŚrīKaC. 12.75; वस्तु सांनिध्यलक्षणे कारणे सत्यपि यदि नाप्राकरणिकगुणस्यानुहरते तदा तस्याप्राकरणिकस्य गुणो नास्त्यस्मिन्नित्यतद्गुणः (अलंकारः) Ekāva. 8. 65 (2) (322.5); **3D** to be analogous with, to be similar to द्वितीये स्थायित्ववृत्त्याशा मूषिकभक्षितबीजादावङ्कुरादिजननप्रार्थनामनुहरेत् SarvaDaSaṁ. 2. 104; 5. 58; **4** to refer to, to tally न चासौ स्वात्मन्यपि निश्चय इति। तदिदं वधूमाषमापनवृत्तान्त-मनुहरति ĀtmaTaVi. 682. 12; KhaṇḍanKhā. 78. 6; यत्तु सत्तेवेत्युक्तं तत् कटकगवोदाहरणमनुहरति KhaṇḍanKhā. 1169.23; पूर्वापरेत्यादिरुपालम्भ उष्ट्रलकुट-न्यायमनुहरति VedāntKa. 118. 10 (*on* i. 1. 22); **5** to divide, cf. **अनुहृत2.**

**अनुहृत** (anu-hṛta) *adj.* **1** taken away, lost or stolen यदि पुनर्धक्ष्यन्तो भवन्ति ... अथ यद्यनुहृताः स्युर्यस्य कस्यचिदश्वत्थस्यारणी गृहीत्वा मथित्वाग्निमुपसमाधाय ... प्रसेकं जुहोति ĀgniveGS. iii. 6. 4 (153. 2); **2** divided कृतगुणषड्(?ड्)-ऋतुयुतमेककर्तुमनुहृतं षड्यमेन्दुभिर्विभजेत् PañcSi. 2. 26 (2.1)

**अनुहृत्य** (anuhṛt-ya) *ger.* having referred to एकैकस्यै देवतायै चतुरश्चतुरो मुष्टीन् निर्वपति। सर्वा वा देवता अनुहृत्य चतुर एव मुष्टीन् MānŚS. 127.11.

**अनुहृष्** (anu-hṛṣ-) IV.P. to rejoice after, to feel happy after अधिपतिः ...। महिषी यद्यदीहेत तत्तदेवान्ववर्तत ... अनुहृष्यति हृष्यन्त्याम् BhāgP. vi. 25. 61.

**अनुहेमवप्रम्** (anuhemavapram) *adv.* near the golden summit अनुहेमव-प्रमरुणैः समतां गतमूर्मिभिः सहचरं पृथुभिः। स (अर्जुनः) रथाङ्गनामवनितां करुणैरनु-बध्नतीमभिननन्द रुतैः Kirātā. 6. 8 (comm. कनकसानुसमीपे) [along the golden slope, *nt.*]

**अनुहोड** (anu-hoḍa) Gr. [P. vii. 3. 20; enumerated in the *anuśatikā-digaṇa*, GaṇPā. 8. 2] **1** the word *anuhoḍa* अनुशतिक इत्येवमादीनां शब्दानां द्वयोः पदयोरचामादेरच ऐब् भवति। ... अनुहोड ... आनुहौडिः JaineVyā. 363. 5 (*on* v. 2. 35); CāndraVṛ. *on* vi. 1. 30; **2** cart, chariot अनुहोडेन चरति, आनुहौडिकः KāśiVṛ. *on* vii. 3. 20; अनुहोडः शकटविशेषः GaṇRa. 3. 164 (200)

**अनुहोम** (anu-homa) *adj.* which is offered subsequently, subsidiary sacrifice अनुहोमाश्च पुरोडाशाः KātyŚS. xxiii. 2. 20 (comm. अनुहोमा हि पुरोडाशाः श्रूयन्त इति अनूपसदं जुहोति। उपसद्यागमनु जुहोतीत्यर्थः)

**अनुहोम** (anu-homa) *m.* type of offering, after- oblation अनुवषट्काराणाम् ... अनुहोमांश्च VaitāSū. 19. 12 (comm. द्विदेवत्यान् अनुहोमांश्चानेनैवानुमन्त्रयते); दारुमयस्य होमकरणत्वेन विधानादुपक्लृप्तानां पात्राणामितरब्राह्मणकर्तृकानुहोमेष्वेव करणत्वम् BhāṭṭCan. 20. 9 (*on* xiii. 3. 2); 20. 13 (*on* xiii. 3. 2)

**अनुहोमपरा** (anuhoma-parā) *adj.* (*f.*) referring to the after-offering कुम्भनिन्दा तु ब्राह्मणकर्तृकानुहोमपरा BhāṭṭCan. 20. 11 (*on* xiii. 3. 2)

**अनुहोमय** (anu-homaya-) *denom.* to make an after-offering अस्त्रं माहेश्वरं यजेत्। जप्त्वा दशसहस्राणि दशांशमनुहोमयेत् MṛgendraT. iv. 1. 99 (comm. होमं कुर्यात्)

**अनुह्रद** (anuhradra) *m.* name of a Nāga (a member of Varuṇa's court) प्रह्लादो मूषिकादश्च(v.1. अनुह्रद्रो मूषिकादः)तथैव जनमेजयः। ... उपासते महात्मानं वरुणम् MahāBhā. ii. 9. 10 [name of a brother of Anuhrāda, PW.; pw.]

**अनुह्राद** (anuhrāda) ( = anuhlāda) *m.* **1Ai** name of a Daitya (son of Hiraṇyakaśipu and Kayādhu) हिरण्यकशिपुः ...तस्येमे पुत्राः पञ्च ...। प्रह्रादः पूर्वजः ...। अनुह्रादस्तृतीयोऽभूत् MahāBhā. i. 59. 18; HariVaṁ. 3. 59; 31. 72; BrahmāṇḍP. ii. 5. 33; BhāgP. vi. 18. 13; KūrmaP. 176. (1. 16); AgniP. 19. 7; BrahmP. 3. 67; 213. 84; PadmP. v. 6. 42; SaurP. 28. 28; ŚivaP. ii (5). 51. 11 (282B. 11); v. 32. 18 (442A. 15); **1Aii** name of a Daitya (who captured Śacī, wife of Indra) जहार ... वैदेहीं राक्षसाधमः। वञ्चयित्वा तु पौलोमीमनुह्लादो (v.1. °ह्रादो) यथा शचीम् Rāmā. iv. 38. 6; महीपतिः ...। निवर्तयेत्तथा क्रोधादनुह्रादं हतात्मजम् (स्मृत्वा) MārkP. 27. 14; यक्षो रजतनाभस्तु ...। अनुह्रादस्य दैत्यस्य भद्रामतिवरां सुताम्। उपयेमे VāyuP. ii. 8. 146; BrahmāṇḍP. ii. 7. 119; तृतीये तु तले ... अनुह्रादस्य च पुरम् BrahmāṇḍP. i. 20. 26; **1Aiii** name of a Daitya (who was killed by Viṣṇu) (जनार्दनेन) येन दैत्या विनिहताः ... ह्रादानुह्राद°...°दारुणाः ... एते चान्ये च ... दैतेयाः ViṣṇuDhaP. i. 38. 31; i. 43. 26; **1B** name of a king मानुषेषु ... संभूता ये दिवौकसः ... अनुह्रादस्तु तेजस्वी योऽभूत् ख्यातो जघन्यजः। धृष्टकेतुरिति ख्यातः स आसीन्मनुजेश्वरः MahāBhā. i. 61. 7; DevīBhāP. iv. 22. 44; **1C** name of a Daitya who worshipped God Śiva प्रह्रादश्चाप्यनुह्रादः ... एते शूराः ... महादेवपरायणाः LiṅgaP. i. 82. 60; **1D** name of a Daitya worshipping God Brahmā अनुह्रादः ... दानवाः ... ब्रह्माणं पर्युपासन्त PadmP. v. 18. 70; **2** name of a Nāga (a member of Varuṇa's court) प्रह्लादो मूषिकादश्च (v. 1.अनुह्रादो मूखिकारः) ...। उपासते महात्मानं वरुणम् MahāBhā. ii. 9. 10; **3** name of a pigeon अनुह्राद इति ख्यातः कपोतो बलवानभूत् BrahmP. 125.2.

**अनुह्रादमहाग्राह** (anuhrāda-mahāgrāha) *adj.* having huge crocodile in the form of the Daitya Anuhrāda बलिबाणमहाकूर्मं शम्बरावर्तभीषणम्। अनुह्रादमहाग्राहं कालकेयमहाजलम्। ... क्षुब्धं दैत्यार्णवं श्रुत्वा ViṣṇuDhaP. i. 43. 1.

**अनुह्रादसुत** (anuhrāda-suta) *m.* son of Anuhrāda अनुह्रादसुतो वायुः शिनीवाली तथैव च VāyuP. ii. 6. 75

**अनुह्लाद** (anuhlāda) (= anuhrāda) *m.* **A** name of a Daitya (son of Hiraṇyakaśipu and Kayādhu) हिरण्यकशिपुः ... तस्येमे पुत्राः पञ्च ...। अनुह्राद(v.1. अनुह्लाद)स्तृतीयोऽभूत् MahāBhā. i. 59. 18; ViṣṇuP. i. 15. 142; VāyuP. iii. 6. 70; MatsyaP. 6. 9; **B** name of a king अनुह्राद (v.1. अनुह्लाद)स्तु तेजस्वी योऽभूत् ख्यातो जघन्यजः। धृष्टकेतुरिति ख्यातः स आसीन्मनुजेश्वरः MahāBhā. i. 61. 7; **C** name of a Daitya who captured Śacī, wife of Indra जहार ... वैदेहीं राक्षसाधमः ... वञ्चयित्वा तु पौलोमीमनुह्लादो यथा शचीम् Rāmā. iv. 38. 6; अनुह्लादस्य च पुरं दैत्येन्द्रस्य महात्मनः ... तृतीये तु तले ख्यातम् VāyuP. i. 50. 25; AvantiKa. 214. 2; पुरुहूत इव ... अनुह्लादं रावणं रणे निहनिष्यसि RāmāCam. 4. 37 (4)

**अनुह्वय** (ánu-hvaya) *m.* who calls near अनुं पो(वो)ऽह्वदनुंह्वयो निवर्तो वो न्यंवीवृतत् ĀpaManPāṭha. ii. 22. 9; BhārGS. ii. 27. 2; HirGS. i. 14. 4 [VIŚVA.]

**अनुह्वे** (anu-hve-) I.U. **A** to call again, to invoke, to call aloud अनुं प्रत्नस्यौकंसो हुवे तुंविप्रतिं नरंम्। यं ते पूर्वं पिता हुवे ṚV. i. 30. 9; AV. xx. 26. 3; SV. II. ii (2). 11. 2; युतः पूर्वाँइव सखीँरनु ह्वय गिरा गृंणीहि कामिनः ṚV. v. 53. 16; वास्तोष्पतिरनुं वो जोहवीतु मयिं सजाता रमतिर्वो अस्तु AV. vi. 73. 3; AV. (P.) xix. 10.10; (इन्द्रम्) तमेतेन विश्वे देवास्साम्नान्व-ह्वयन्तायिही आयिही इति JaimiBr. 3. 268; **B** to call back, to recall यस्मै त्वमिह मृत्यवे दिष्टः पुंरुष जज्ञिषे। स च त्वानुंह्वयामसि मा पुरा जरसो मृथाः AV. v. 30. 17; AV. (P.) ix. 14. 7; असुं तेऽनुं ह्वयामसि AV. viii. 1. 15; तद्यथा वा अदोऽनयनं यन्तमेहीह मात्रैरित्यनुह्वयेत् एवमेवैतेन स्तोमा आप्ता अन्ततोऽनुह्वयन्ति JaimiBr. 3. 165; प्रजापतिर्यज्ञमसृजत। तं देवेभ्यः प्रायच्छत् ... तेनैनं श्रोधियेत्यन्वह्वयन् JaimiBr. 3.274; **C** to call nearby अनुं पो(वो)ऽह्वदनुह्वयो निवर्तो वो न्यंवीवृतत् ĀpaManPāṭha. ii. 22. 9; BhārGS. ii. 27. 2; HirGS. i. 14. 4.

**अनू** (anū) (=anu) *adn.* after सन्नेषु नाराशंसेषु चमसिनः स्वं स्वं चमसमनू न्यन्ते ĀpaŚS. xiii. 12. 9; (comm. दीर्घश्छान्दसः प्रामादिको वा); cf. **अनु** *adn.* **1A.**

**¹अनू** (an-ū) *adj.* other than what ends in (the feminine suffix)-*ū* स्त्र्युक्तपुंस्कादनूरेकार्थेऽडट्प्रियादौ स्त्रियां पुंवत् JaineVyā. iv. 3. 146; मानिस्त्रे-(?स्त्रै)कार्थयोस्त्र्यन्यतोऽनूः ŚākaṭāVyā. ii. 2. 41.

**²अनू** (an-ū) *adj.* [P. vi. 4. 20] protecting (*lit.* who protects the life-breath) ओमतूर्मभिरजूर्मभिरासेषेषि किं नृभिरनूः कृतभूते। ... इति नूनमराटीत् DvyāśraKā. 8. 103 (comm. आरक्षकः)

**अनू** (anū) (=anu) *m.* name of a king (son of Yayāti and Śarmiṣṭhā who refused to part with his youth to his father) व्यजायत। द्रुह्युं चानूं च पूरुं च शर्मिष्ठा AgniP. 273. 23; cf. **अनु** *m.* **B.**

PāṇḍaC. 7. 267; 16. 142; पत्न्या ऊर्ध्वं सवर्णादिविशेषणोपेता प्रतिष्ठितानूढानां दुहितॄणां समवायेऽनूढैव गृह्णाति SmṛtiCan. iv. 687. 10; विवाहाधिकारिण्यां ज्येष्ठायां कन्यायां विरूपायां अनूढायां स्थितायाम् ... कनिष्ठायाः ... विवाहो न दोषाय SmṛtiCan. v. 177. 2; CaturCin. iii (1). 376. 7; iii (1). 485. 5; योषितां स्यादनूढानां प्रौढानां हि स्वयंवरः MalliC. 6. 57; परिवेदनं भ्रातरि ज्येष्ठेऽनूढे ManvaVi. 1373. 18 (*on* 11. 60); अनूढा[पि] वरं कन्या ... न कुपत्या विडम्बिना PrabaCin. 127. 7; कन्या त्वनूढा स्यात् सलज्ञा पितृपालिता RasāSu. 28. 1 (1. 107); UjjvaNīMa. 60. 2; अनूढा चेत्कन्या तदा कानीनो मातामहसुतः Subodhi. 58. 7 (*on* 2. 129); कन्यामनूढां पिता रक्षेत् VīraMi. 150. 13 (*on* 1. 85;) अनूढायां वोढुमनुपक्रान्तायाम् VīraMi. (Vyavahāra.) 476. 14; वैश्यस्तया साकमनूढयैव भूयः स्वमावासमभिप्रतस्थे ŚivLī. 22. 37; या दृष्टा विपिने वधूः ... सत्यप्येवममुं विधातुमधुनानूढेति भीतं मनः JānaPa. 3. 62; 4. 48; एकपत्नीनामेकपतिकानां कन्यां अनूढाविरोधं परिहरति BālamBha. i. 235. 1 (*on* 1. 86); **2Ai** not borne, not sustained प्रेङ्खत्कादम्बमिथुनाभिरनूढाप्यघूर्णत वनकमलिनीकल्लोलदोलाभिः HarṣaC. 48. 2; धुर्ये विपन्ने त्वयि राज्यभारो मज्ञत्यनूढः Bhaṭṭi. 18. 42; **2Aii** not borne, i.e. not worn or put on अतिकृशत्वादशक्नुवद्भिरिवोद्वोढुमवयवैरनूढ-हारकेयूरकटकादिभूषणव्रातमापतन्तमभिमुखं गन्धर्वकमपश्यम् TilaMañ. 404. 2; **2B** not carried, i.e. not used यो भाटयित्वा शकटं नीत्वा वान्यत्र गच्छति। भाटं न दद्याद्दाप्यः स्यादनूढस्यापि भाटकम्। इति। अनूढस्यापि अकृतोपकारस्यापीत्यर्थः VīraMi. (Vyavahāra.) 328. 27.

**अनूढकन्या** (anūḍha-kanyā) *f.* daughter who is not married आतृतीयादित्य-नूढकन्याविषयम् NirṇaSi. 207. 9.

**अनूढता** (anūḍha-tā) *f.* the state of not being married तन्नैषधानूढतया दुरापं शर्म त्वया ...। रसालवन्या मधुपानुविद्धं सौभाग्यमप्राप्तवसन्तयेव NaiṣC. 3. 46.

**अनूढत्व** (anūḍha-tva) *n.* the state of not being married अनूढत्वात्केन-चिद्दारव्यपदेशाभावात् ManuBh. ii. 282. 12 (*on* 9. 135)

**अनूढभसित** (anūḍha-bhasita) *adj.* who has not borne, i.e. worn or put on the sacred ashes अनूढभसितः ... अभुङ्क्ष न कदाप्यसौ YātrāPra. 2. 68.

**अनूढभार्य** (anūḍha-bhārya) *adj.* who has not taken a wife, i.e. who has not been married अनूढभार्यः शूद्रस्तु षोडशाद् वत्सरात्परम्। मृत्युं समधिगच्छेत्तु मासात्तस्यापि बान्धवाः। शुद्धिं समधिगच्छन्ति ŚaṅkhaLiDS. 349; ŚaṅkhaSm. 15. 6; निर्गुणे त्वनूढभार्ये शूद्रे त्रिवर्षोर्ध्वं द्वादशाहः NirṇaSi. 366. 11.

**अनूढभूयिष्ठभार** (anūḍha-bhūyiṣṭhabhāra) *adj.* who has not carried heavy load or weight पान्थैः पन्था न हि न सुगमोऽनूढभूयिष्ठभारैः Kapphiṇā. 15. 12.

**अनूढमातृक** (anūḍhamātṛ-ka) *adj.* who has an unmarried mother अज्ञातपितृको यश्च कानीनोऽनूढमातृकः NāraSm. 194. 8.

**अनूढमाना** (anūḍha-mānā) *adj.* (*f.*) not bearing any anger अनूढमाना शयने नवोढा, परोपकारैकरसैव तस्थौ Bhaṭṭi. 11. 12 (comm. अकृतकोपा) [bashful, modest, Apte.]

**अनूढशूद्रविषय** (anūḍhaśūdra-viṣaya) *adj.* referring to a Śūdra who is not married द्वादशाद्वत्सरादित्यनुपनीतद्विजानूढशूद्रविषयम् NirṇaSi. 367. 18.

**अनूढशूद्रापुत्रविषय** (anūḍhaśūdrāputra-viṣaya) *adj.* referring to the son of a Śūdra woman who is not married अनूढशूद्रापुत्रविषयोऽयं दशमभागनिषेधः ManvaMu. 392. 27 (*on* 9. 155); अनूढशूद्रापुत्रविषयं तत् BālamBha. ii. 160. 30 (*on* 2. 125)

**अनूढसप्तवर्षाधिका** (anūḍha-saptavarṣādhikā) *adj.* (*f.*) being more than seven years of age while being unmarried गौरी तु नग्निकानागतार्तवा ... अनूढसप्तवर्षाधिकानां नामानीति VīraMi. (Saṁskāra.) 768. 3.

**अनूढसवर्णदार** (anūḍha-savarṇadāra) *adj.* who has not taken a wife of the same caste हीनयोनिनिषेवणम् ... उपपातकम् अनूढसवर्णदारस्य केवलहीन-वर्णदारोपयमनं साधारणस्त्रीसंभोगश्च Mitā. 416. 8 (*on* 3. 241)

**अनूढा** (an-ūḍhā) *f.* **1Ai** unmarried woman अनूढायामवकीर्णः पलालभारं सीसमाषकं च दद्यात् ŚaṅkhaLiDS. 401; अनूढानां स्ववित्तानुरूपेण संस्कारं कुर्यात् ViṣṇuSm. 15. 31; कर्णादयो ह्यनूढायाः पुत्राः ManuBh. i. 223. 17 (*on* 3. 34); i. 224. 1 (*on* 3. 34); कन्याशब्दः प्रायोऽनूढासु प्रयुज्यते ManuBh. ii. 275. 21 (*on* 9. 118); सुज्ञिः ... अनूढाया विवाहाय तस्या मातरमागताम् ... ययौ RājTa. (Ka.) 8. 1939; विभजेयुर्दुहितरः पुत्राभावे पितुर्वसु। उद्वाहयन्त्योऽनूढाम् MahNirvāT. 12. 41; यौतकं त्वनूढानामेव न पुत्राणाम् VyavaMa. 158. 14; कानीनः ... अनूढाया एवापत्यम् SiddhāKau. 231B. 10 (*on* iv. 1. 116); ते अनूढायाः पुत्र्याः पुत्रो वृत्तः Nāṭa. 24. 2; **1Aii** betrothed अनूढापि प्रेते पत्यौ प्रेतपत्नी BālaKrī. i. 73. 16 (*on* 1. 69); **1B** unmarried girl, i.e. daughter तत्र चोढानूढासमवायेऽनूढैव गृह्णाति Mitā. 243. 8 (*on* 2. 136); तत्राप्यूढानूढासमवाये ऊढैव, 'दुहिता पुत्रवत्कुर्यात् मातापित्रोस्तु संस्कृता। आशौचमुदकं पिण्डमेकोद्दिष्टं सदा तयोः। इति भारद्वाजोक्तेः NirṇaSi. 272. 20; **2** one of the four types of heroines (a virgin who loves and elopes with the hero without seeking permission of the elders for marriage) (नायिका) ऊढानूढोपयमनात् SaraKaṇṭhā. 567. 19; (नायिका स्याच्चतुर्विधा) अनूढा च स्वकीया च परकीया पणाङ्गना Vāgbhaṭā. 5. 11; AlaṅkāŚe. 20. 2; अनुरक्तानुरक्तेन स्वयं या स्वीकृता भवेत्। सानूढेति यथा राज्ञो दुष्यन्तस्य शकुन्तला Vāgbhaṭā. 5. 12; AlaṅkāŚe. 20. 3; **3** concubine, cf. **अनूढाभ्रातृ.**

**अनूढागमन** (anūḍhā-gamana) *n.* going after an unmarried woman, MW.; fornication, MW.; Apte.

**अनूढातनय** (anūḍhā-tanaya) *m.* son of an unmarried woman कस्मै श्राद्धं न दातव्यम् ... अनूढातनयो राजन्यश्च ... प्रयत्नेन विवर्जयेत् ViṣṇuDhaP. i. 143. 2.

**अनूढादिक्रम** (anūḍhādi-krama) *m.* order of (succession of) an unmarried woman etc. (in inheritance) अनूढादिक्रमः प्रागुक्तो भवेत् BālamBha. ii. 205. 30 (*on* 2. 135 - 136)

**अनूढादुहितृविषय** (anūḍhāduhitṛ-viṣaya) *adj.* referring to an unmarried daughter एवं च कात्यायनवचनान्यनूढादुहितृविषयाणि ... इति मन्तव्यम् SmṛtiCan. iv. 686. 4.

**अनूढापर** (anūḍhā-para) *adj.* conveying or referring to an unmarried woman कन्याशब्द ऊढायामप्यक्षतयोन्यां तथापि तत्साहचर्यादनूढापरः BālamBha. ii. 254. 5 (*on* 2. 143)

**अनूढापुत्र** (anūḍhā-putra) *m.* son of an unmarried woman दैवे कर्मणि। विवर्जयेत् ... अनूढापुत्रान् ViṣṇuSm. 82. 10.

**अनूढाभाव** (anūḍhābhāva) *m.* absence of an unmarried girl, i.e. daughter 'पत्नी दुहितर' इत्येतद्वचनं पत्न्यभावे पुत्रिकाया दुहितुर्धनसंबन्धं ब्रवीति। .... येनानूढाभावे अप्रतिष्ठिता, तदभावे प्रतिष्ठितेत्येषु क्रमः Subodhi. 70. 22 (*on* 2. 135-136)

**अनूढाभ्रातृ** (anūḍhā-bhrātṛ) *m.* brother of a concubine सोऽयमनूढाभ्राता राज्ञः श्यालः शकारः इत्युक्तः SāhiDa. 103. 5 [brother of an unmarried woman, Apte]

**अनूढावस्था** (anūḍhāvasthā) *f.* condition or state of an unmarried woman or girl प्रकृतत्वादनूढावस्थायां दत्तस्यैव (धनस्य) तत्त्वाद्याह। कन्याया इति BālamBha. ii. 254. 11 (*on* 2. 144)

**अनूढासंस्कार** (anūḍhā-saṁskāra) *m.* sacrament (i.e. marriage ceremony) of an unmarried woman अनूढासंस्कारस्य चास्थावरेणैव निर्वाहात् BālamBha. ii. 142. 3 (*on* 2. 117)

**अनूढोत्पन्न** (anūḍhotpanna) *adj.* (also used as noun) (one) born of an unmarried woman शूद्रस्य तु ... अनूढोत्पन्नोऽपि परिणीतभार्योत्पन्नसम एव ManvaVi. 1282. 15 (*on* 10. 5); ये त्वनुलोमजा अप्यनूढोत्पन्नाः कुण्डगोलकाः-स्तेषामुपनयनं न सर्वस्मृतिसंमतम् VīraMi. (Saṁskāra.) 397. 3; अनूढोत्पन्नस्यापि क्षेत्रजस्योभयासावर्ण्यादवर्णत्वेऽपि मातृजातीयत्वमविहतम् BālamBha. i. 281. 11 (*on* 1. 91)

**अनूढोत्पन्नत्व** (anūḍhotpanna-tva) *n.* the state of being (one) born of an unmarried woman अनूढोत्पन्नत्वेन मुख्यपुत्रत्वाभावात् पुत्रप्रतिनिधित्वमभिप्रेत्येति व्याख्येयम् VīraMi. (Saṁskāra.) 211. 13.

**अनूत्** (an-ūt) Gr. not *ū* उः पदान्तेऽनूत् SiddhaHe. ii. 1. 118 (Vṛtti पदान्तस्थस्य दिव उः स्यात् अनूत्। स तु दीर्घो न स्यात्)

**अनूतन** (a-nūtana) *adj.* **A** not fresh i.e. prepared a few days back घृतम् ... क्रीताज्यं यदनूतनं तदधमम् ĪśānŚiPa. i. 7. 22 ; ii. 9. 14; **B** not new, cf. **अनूतनत्व.**

**अनूतनत्व** (anūtana-tva) *n.* the state of not being new, i.e. ancient or eternal धर्मज्ञतयार्तशब्दानां संसारधर्माणामनूतनत्वात् AvantiKa. 119. 3.

**अनूतनोल्लेख** (a-nūtanollekha) *adj.* (subject) lacking in new reference यदप्यनूतनोल्लेखं वस्तु यत्र तदप्यलम् VakroJī. 57. 7.

**अनूति** (án-ūti) *f.* [AltGr. II. 1. 192; III. 149] absence of help इन्द्रः ..., अस्तुती अनूती हिरिशिप्रः सत्वा RV. vi. 29. 6 [not coming or going (to aid), Apte]

**अनूत्क्रम्** (anūtkram-) I.P. **1** to go out after, to depart after स ऐक्षत। अहास्यु, हान्तर्यन्त्यु मा यज्ञादिति सोऽनूच्चक्राम ŚatBr. I. vii. 3. 3; ŚatBr. (K.)

II. vii. 1. 3; एषु आत्मा निष्क्रामति ... तमुत्क्रामन्तं प्राणोऽनूत्क्रामति ŚatBr. XIV. vii. 2. 3; BṛĀraU. iv. 4. 2; सप्तैवानूत्क्रामन्तीति कथमवगम्यते VedāntKau. 243. 9 (*on* ii. 4. 5); लिङ्गशरीरस्य च गतिश्रुतिः तमुत्क्रामन्तं प्राणोऽनूत्क्रामति SāṁkhyaPraBh. 92. 18 (*on* 3. 14); **2** to descend after, cf. **अनूत्क्रम्य**.

**अनूत्क्रमण** (anūtkramaṇa) *n.* going out after, departing after विलयमियाद्यदि सोत्क्रमणे पवनमनूत्क्रमणं न भजेत् NayaMañ. IV. ii. 1. 2.

**अनूत्क्रमणोपपत्ति** (anūtkramaṇopapatti) *f.* tenability of going out or departing after जीवे प्रथममुत्क्रामति प्राणस्यानूत्क्रमणोपपत्तेः SiddhāLeSaṁ. 347.1.

**अनूत्क्रम्य** (anūtkram-ya) *ger.* having stepped out along with, i.e. having descended after पूर्वेण पत्नीशालां विमुक्ते छदिषि शाखामवगुह्य तामेवैषामनूत्क्रम्य यथार्थं स्यात् LāṭyāŚS. i. 2. 22 (comm. अवतीर्य); DrāhyŚS. i. 2.29.

**अनूत्क्रामत्** (anūtkrāmat) *adj.* having gone out after प्राणमनूत्क्रामन्तँ सुर्वे प्राणा अनूत्क्रामन्ति ŚatBr. XIV. vii. 2. 3; BṛĀraU. iv. 4. 2.

**अनूत्खाय** (anūtkhā-ya) *ger.* having dug up ता एताः पर्यूढा अनूत्खायैक उपजीवन्ति JaimiBr. 1. 237.

**अनूत्त** (anūtta) *adj.* given, offered आदिकर्मणोऽन्यत्राच उपसर्गात् त इति तकारादेशो भवति। न तु तद्भावः। अवत्तम् ... अनूत्तमिति Nyās. ii. 858. 4 (*on* vii. 4. 46)

**अनूत्तपुष्प** (anūtta-puṣpa) *n.* flower which is offered जजाप ... क्षितीशः। सुदत्तचित्खे विदवत्तमन्त्रैरनूत्तपुष्पैरनुदत्तहोमैः DvyāśraKā. 10. 13 (comm. अनूत्तपुष्पैर्दत्तकुसुमैः)

**अनूत्तप्ता** (anūttaptā) *adj.* (*f.*) repenting subsequently पूर्वमनङ्गीकृतप्रणयामनूत्तप्तां विरहोत्कण्ठिताम् ... दूतीमुखानीतः प्रियतमः Loc. 116. 20 (*on* 2. 28)

**अनूत्तर** (anūttara) *adj.* having no reply, clueless यद्वदोऽनुत्तरः (v.l. अनूत्तरः) AbhidhāCin. 347.

**अनूत्तिष्ठास** (anūttiṣṭhāsa-) *desid.* to desire to pay homage by standing up, to desire to attend upon तं ह नानूदतिष्ठासत् JaimiUBr. iii. 8. 7.

**अनूत्था** (anūtthā-) I.U. **1Ai** to stand up after, to rise up after अंङ्गिरसो वां उत्तिष्ठतो रंक्षाँस्यनूंदतिष्ठन् MaiS. iv. 8. 5 (iv. 113. 8); उदुष्य देवः सविता हिरण्ययेत्यनूत्तिष्ठति AitBr. 4. 5 (93); अन्वित्यमृतं वाऽएषोऽनूत्तिष्ठति ŚatBr. III. iii. 3. 14; ŚatBr. (K.) IV. iii. 3. 12; इमांल्लोकानजनयत तान्जनयित्वानूदतिष्ठत् ŚatBr. (K.) III. i. 12. 4; य एतद् एवान्य उत्तिष्ठेत् तमुत्तिष्ठन्तमारभ्यानूत्तिष्ठेत् JaimiBr. 1. 89; JaimiŚS. 11; JaimiBr. 2. 23; महावीरमादायोत्तिष्ठत्सूदूष्य देवः सविता हिरण्ययेत्यनूत्तिष्ठेत् ĀśvaŚS.I. iv. 7. 4; न चैनं प्रत्युत्तिष्ठेदनूत्तिष्ठेद्वापि चेदस्य गुरुः स्यात् HirŚS. xxvi. 2. 54 (32. 8); ĀpaDS. i (2). 6. 31; **1Aii** to get up, to rise up पूर्वपक्ष उत्तिष्ठन्ति तानुत्तिष्ठतः पशव ओषधयोऽनूत्तिष्ठन्ति PañcBr. v. 9. 14; स ह स तृणेभ्योऽनूत्तस्थौ JaimiBr. 1. 338; पुण्यैनं कीर्तिरुत्तस्थिवांसमनूत्तिष्ठात् JaimiBr. 2. 195; 2. 402; **1Aiii** to rise up, i.e. to originate from नेदुतो नाष्ट्रा रुक्षाꣳस्यनूत्तिष्ठानिति वुज्रो वा आज्यम् ŚatBr. III. vi. 4. 15; सोऽसावादित्यः तं जायमानम् ... सर्वाणि च भूतानि सर्वे च कामाः तस्मात्तस्योदयं प्रति ... उलूलवोऽनूत्तिष्ठन्ति ChāndoU. iii. 19. 3; **1B** to follow up, i.e. to continue यत्रामी साम गायन्ति स योऽनूत्तिष्ठत्यृचं स स्वादायतनाद्व्यवयत्यृचं स साम्नोऽनुवर्त्मानं करोति KauṣīBr. 12. 5 (55. 10); **1C** to go after, to follow सा हेयं युक्तं ग्राममनुसरिष्यन्त्यनूत्तस्थौ JaimiBr. 3. 122; नाभिराजः ... अनूत्तस्थौ तदा द्रष्टुं विभोर्निष्क्रमणोत्सवम् MahāP. 17. 178; **2** to conclude वाचा प्रयन्ति वाचमनूत्तिष्ठन्ते KauṣīBr. 26. 1 (120. 6); **3** to follow (the example of), i.e. to be active राजानमुत्तिष्ठमानमनूत्तिष्ठन्ते भृत्याः ArthŚā. i. 94. 2 (1. 19); **4** to pursue, to leap after, cf. **अनूत्थाय 1A** [to rise after, MW.]

**अनूत्थाय** (anūtthā́-ya) *ger.* [AltGr. I. 1. 27] **1A** having pursued or leaped after रुद्र एंनं भूत्वाग्निरंनूत्थाय हन्यात् TaiS. III. iv. 10. 3; BaudhŚS. ii. 185. 18; एष वै व्याघ्रः कुंलगोपो यदुग्निस्तस्माद्यद्दीक्षितः प्रवसेत्स एंनमीश्वरोंऽनूत्थाय हन्तोर्न प्रंवस्तुव्यंमात्मनो गुप्त्यैं TaiS. VI. ii. 5. 5; एष वै रुद्रः पशुश्रपण एवेश्वरो वा एष एतमतोऽनूत्थाय हन्तोर्यद्रौद्रीरुपदधाति KāṭhS. 22. 11 (ii. 67. 12); KapiKaS. 35. 5 (181. 7); **1B** having followed अंसुरा अपांवर्तन्त ताँस्तंत एवांनूत्थांयाजयन् MaiS. i. 9. 8 (i. 139. 18); KāṭhS. 9. 15 (i. 118. 8); **2** having stood up after, having risen up after स होतारमनूत्थाय यथेतमग्रतो व्रजेद्यदि राजानं प्रणयेत् ĀśvaŚS. I. iv. 10. 7; उत्तरामाहुतिमनूत्थाय कवातिर्यङ्ङ्डिवाहवनीयमुपतिष्ठते उपप्रयन्तो अध्वरमित्येताभिः षड्भिः BhārŚS. vi. 1. 8; अनूत्थाय तिष्ठन्तं प्रतिश्रूयात् HirŚS. xxvi. 2. 32 (29. 19); ĀpaDS. i (2). 6. 7; भुञ्जानेषु वा यत्रान्योऽनूत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा ... न ... भुञ्जीत HirŚS. xxvi. 5. 35 (74. 7); ĀpaDS. i (5). 17. 3; भुक्त्वा चास्य सकाशे नानूत्थायोच्छिष्टं प्रयच्छेत् ĀpaDS. i (2). 6. 35.

**अनूत्थित** (anūtthita) *adj.* [*f.* -ā] **A** stood up or risen up after अनूत्थितेषु संप्रीत्या पार्थिवेषु ससंभ्रमम्। कुमारमग्रतः कृत्वा प्राप्तराज्यं नवोदयम् (भगवानभिनिष्क्रान्तः) MahāP. 38. 288; विशांपतिः। ... मौलिबद्धैरनूत्थितैः। प्रतस्थे MahāP. 41. 16; अनूत्थितयोश्च तयोरादरकृतप्रणामयोः क्रमेण निक्षिप्य पक्षपातार्द्रतारकं चक्षुरीषदुत्क्षित्पदक्षिणकरः ... अन्तरिक्षमुदपतत् TilaMañ. 33. 14; **Bi** risen up, i.e. appeared विलासिनीजनेन प्रतिबिम्बभावादनूत्थिताया मण्डपश्रियो दीयमानसमालिङ्गनविशेष इव ... आस्थानमण्डपः UdaySuKa. 39. 13; **Bii** risen up सा सुषुवे सरस्वती। विहारमारभ्य सरस्वतीः सुधासरःस्वतीवार्द्रतनूरनूत्थिताः NaiṣC. 12. 4.

**अनूत्थितासन्नखेचरपरिवृत** (anūtthitāsannakhecara-parivṛta) *adj.* surrounded by the Vidyādharas who had risen up and stood nearby (विद्याधरेश्वरः) अनूत्थितासन्नखेचरपरिवृतश्च गत्वायतनमण्डपद्वारम् TilaMañ. 274. 22.

**अनूत्थेय** (anūttheya) *adj.* ought to be followed up, ought to be continued अनूत्थेयः पवमानो ना३ इति KauṣīBr. 12. 5(55. 9)

**अनूत्पत्** (anūtpat-) I.P. **1A** to spring up or jump after स नग्न एवानूत्पपात चिरं तन्मेने यद्वासः पर्यधास्यत ŚatBr. XI. v. 1. 4; **1B** to fly upwards after सोऽकामयतानूत्पतेयं स्वर्गं लोकं प्रतिसत्त्रिभिः संगच्छेयेति JaimiBr. 1. 163; 3. 276; 1. 224; तावकामयेताम् अनूत्पतेव स्वर्गं लोकमिति JaimiBr. 3. 28; अङ्गदः ... गच्छाम इत्युक्त्वा उत्पपात महीतलात्। उत्पतन्तमनूत्पेतुः सर्वे ते हरियूथपाः Rāmā. v. 62. 23; मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति YogBh. 117. 3 (*on* 2. 54); सूर्यप्रभो नभः क्रोधादुत्पपात ...। अनूत्पेतुश्च सचिवास्तस्य सर्वे धृतायुधाः KathāSaSāg. viii. 1. 143; **2A** to follow उत्पतन्तमनूत्पेतू रुमाप्रभृतयः स्त्रियः। सुग्रीवम् Rāmā. iv. 33. 4; **2B** to follow, i.e. to pursue, cf. **अनूत्पत्य**.

**अनूत्पतत्** (anūtpatat) *adj.* flying up after बिभीषणो विहाय विहायसि समुत्पतन्तमनूत्पतद्भिश्चतुर्भिरमात्यैः सममतीत्य वारिधिं दूरत एव ... अन्तरीक्षगत एवमाचष्टे RāmāCam. 6. 16 (3)

**अनूत्पत्य** (anūtpat-ya) *ger.* having followed, i.e. having pursued अनुपत्य (v. 1. अनूत्पत्य) खगं त्विन्द्रो वज्रेणाङ्केऽभ्यताडयत् MahāBhā. i. 29. 17; दृष्ट्वा तु प्रद्रुतां सेनां धार्तराष्ट्रस्य सूतजः। निवारयामास बलादनुपत्य (v. 1. अनूत्पत्य) विशां पते MahāBhā. viii. 44. 38.

**अनूत्पद्** (anūtpad-) IV. Ā. **A** to become accomplished subsequently (as an accessory advantage) तद्यथाम्रे फलार्थे निर्मिते छाया गन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते HirŚS. xxvi. 6. 17 (92. 12); ĀpaDS. i (7). 20. 3; VīraMi. (Paribhāṣā.) 67. 15; **B** to result subsequently एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते HirŚS. xxvi. 6. 17 (92. 13); ĀpaDS. i (7). 20. 4; VīraMi. (Paribhāṣā.) 67. 15.

**अनूत्पा** (anūtpā-) I. U. to drink after, to sip after ततो रुक्षाँसि यज्ञमनूदपिबन्त ŚatBr. III. vii. 1. 29; III. vii. 1. 31; III. vii. 1. 32; तथो रुक्षाँसि यज्ञं नानूत्पास्यन्तेऽयं वै वुज्र उद्यत इति ŚatBr. III. vii. 1. 30; ŚatBr. (K.) IV. vii. 1. 25; तथो वै रुक्षाꣳस्यनूदपिपत ŚatBr. (K.) IV. vii. 1. 24; तथो रुक्षाꣳसि नानूत्पिपते ŚatBr. (K.) IV. vii. 1. 25.

**अनूत्पा** (anūtpā-) II. Ā. (irr.) to protect in order मूलं वा अंतितिष्ठद्रक्षाꣳस्यनूत्पिंपते TaiBr. III. ii. 9. 10 (BhaṭṭaBhā. अनुक्रमेणात्मानं रक्षन्ति ... व्यत्ययेन शपःश्लुः, आत्मनेपदं च)

**अनूत्सक्त** (anūtsakta) *adj.* fastened on, attached to सर्वेषु युक्तेषु दक्षिणोऽग्निष्ठस्य युक्तो भवति सव्यस्य योक्त्रं परिहृतमनूत्सक्तम् HirŚS. iii. 8. 6 (359. 9) (comm. आसञ्जितम्)

**अनूत्सर्ग** (an-ūtsarga) *m.* (lengthening archaic) not going up, non - suspension सर्वेषामनु(नू)त्सर्गो विद्यायाः HirŚS. xxvii. 5. 113 (201. 12) = ĀpaDS. ii (8). 21. 4 (Ujjvalā अनूत्सर्गश्छान्दसो दीर्घः)

**अनूत्सारम्** (anūtsāram) *absolutive* while creeping after अनूत्सारमिव हि ते तमायन् AitBr. 15. 1 (416) (Sāy. अनूत्सारमुत्तरोत्तरभावी सार उत्सारस्तमनुसृत्यानुसृत्येति) (*but* MW. *adv.* while leaving a place or retiring successively)

**अनूत्सुक** (anūtsuka) *adj.* very anxious or eager गजघण्टाटणत्कारैः पूरयन् परितोऽम्बरम्। प्राचालीदचलानाथस्तीर्थनाथमनूत्सुकः PariPar. 1. 44.

**अनूत्सृज्** (anūtsṛj-) VI. P. **1A** to dismiss towards, to send forth to आरुण्यान् पशूनृछुचमनूत्सृजति TaiS. V. ii. 9. 5; MaiS. iii. 2. 7 (iii. 27. 10); KāṭhS. 20. 8 (ii. 28. 2); KapiKaS. 31. 10 (158. 14); BaudhŚS. ii. 31. 11; ii. 31. 15; ii. 31. 19; ii. 32. 5; एतां दिंशमुंत्सृजन्त्येषां हिं देवानां दिंगथो स्वर्गंमेवैंनां लोकंमनूंत्सृजन्ति MaiS. iii. 2. 4 (iii. 21. 9); **1B** to give up after, to abandon

after भवत्येव यत्प्रथमकुसिन्धो वीर्यस्य तद्रूपं य एकाष्टकायां जायेत तमुत्सृजेत् ... यदि संवत्सरे द्वितीयो जायेत तं संवत्सरेऽनूत्सृजेत् KāṭhS. 13. 3 (i. 182. 16); तं योऽनूत्सृजत्यभागो वाचि भवत्यभागो नाके TaiĀ. ii. 15. 1 (259. 2); **2** to leave, to go away from आञ्जनप्रभृति यजमानो यूपं नानु(नू)त्सृजत्यापरिव्ययणात् HirŚS. iv. 2. 51 (413. 9); **3** to pour out or forth afterwards, cf. **अनूत्सृजत्.**

**अनूत्सृजत्** (anūtsṛjat) *adj.* pouring out or forth afterwards वेदिकायां स्तम्भाः ...। आराममण्डपशिखाश्रितवारिपातविच्छिन्ननीरकणवृन्दमनूत्सृजन्तः ... लसन्ति BṛBrahmaS. iii. 5. 3.

**अनून्द्** (anūnd-) VII. P. to wet or moisten along अग्निर्होतासीत् ... तस्य देवा द्विदेवत्यैरन्वौन्दन् KāṭhS. 27. 5 (ii. 144. 7); KapiKaS. 42. 5(252. 9)

**अनूदक** (an - ūdaká) *adj.* [ AltGr. I. 48; II. 1. 101] (also used as noun) **1** other than water, not water यदार्द्रमनूदकम् MaiS. iii. 10. 7 (iii. 139. 11); VārāŚS. I. vi. 7.35 (*but* VIŚVA. अनूदकम् *adv.*); आर्द्रेणानूदकेन खनति MānŚS. 57. 3; **2A** not having (libations of) water अनूदकमधूपं च ... नवश्राद्धम् Aparā. 525. 19 (*on* 1. 250); अनूदकमनर्घ्यम् Aparā. 525. 21 (*on* 1. 250); cf. **अनुदक C; 2B** not having water, waterless अध्वानं प्रस्थितो विप्रः कान्तारे यद्यनूदके। पक्वान्नेन गृहीतेन मूत्रोच्चारं करोति AgniP. 170. 28; ViṣṇuDhaP. ii. 73. 200.

**अनूदक** (an - ūdaka) *n.* [AltGr. I. 48; II. 1. 101] want of water, aridity, drought यथा वर्षमनूदके। ... तथैवागमनं मन्ये स्वागतं ते महामुने Rāmā. i. 17. 33.

**अनूदन्** (anūdan-) II. P. to breathe up after तस्मादेतेनैकमेव प्राणेन करोति यदेव प्राणान् उदन्तो (?उदनतो) ऽनूदनिति JaimiBr. 1. 127; 1. 254; प्राणतो ह्येनामनूदनित्यपानतोऽन्वपानिति JaimiBr. 2. 363.

**अनूदय** (anūdaya) *m.* [AltGr. I. 48] name of a son of Dhṛtarāṣṭra नामधेयानि ...। धृतराष्ट्रस्य पुत्राणामानुपूर्व्येण कीर्तय। ... दुर्योधनः ...। दृढवर्मा दृढक्षत्रः सोमकीर्तिरनूदरः (v. l. अनूदयः) MahāBhā. i. App. I. 41 (17); cf. **अनूदर.**

**अनूदय्य** (anūdáy - ya) *ger.* having gone after or pursued अनग्नौ वा एतामाहुतिं जुहोति तामीश्वराणि रक्षांस्यनूदय्य हन्तोः KāṭhS. 24. 4 (ii. 93. 16); KapiKaS. 37. 5 (198. 18)

**अनूदर** (an - ūdara) *adj.* [AltGr. I. 48; II. 1. 101] having no belly अपाणिपादपृष्ठं तमशिरस्कमनूदरम्। ... सर्वभूतस्थमात्मानं ये पश्यन्ति न ते मृताः MahāBhā. xiv. 46. 45.

**अनूदर** (anūdara) *m.* name of a son of Dhṛtarāṣṭra नामधेयानि ...। धृतराष्ट्रस्य पुत्राणामानुपूर्व्येण कीर्तय। दुर्योधनः ...। दृढवर्मा दृढक्षत्रः सोमकीर्तिरनूदरः MahāBhā. i. 108. 8; App i. 41 (17); BhaviP. 532B. 25 (iii(3). 32. 18); cf. **अनूदय.**

**अनूदस्** (anūdas-) IV. P. to throw up towards अथैनमूषपुटैरनूदस्यन्ति ŚatBr. V. ii. 1. 16; ŚatBr. (K.) VI. ii. 2. 12; ŚatBr. V. ii. 1. 17; ŚatBr. (K.) VI. ii. 2. 14 (*but* MW.; to toss up behind or after)

**अनूदाहृत्य** (anūdāhṛ - tya) *ger.* having brought along afterwards यदि पुरः पराहृतं स्कन्देदनूदाहृत्य चतुरभ्युन्नीय होतव्यमन्यथा वाभिदोह्यम् ĀpaŚS. ix. 6. 4 (comm. अनूदाहृत्य स्रुचमनु स्थालीमानीय)

**अनूदि** (anūdi-) II. U. **1** to come out from, to be born from तस्य वृत्रस्य शीर्षतो गाव उदायन् ... तासामृषभो जघनेऽनूदैत्तमिन्द्रः TaiS. II. i. 4. 5; तासां जघनत ऋषभो वैदेहोऽनूदैत् MaiS. ii. 5. 3. (ii. 50. 11); **2** to end with, i. e. to conclude पञ्चमं पङ्क्तिमेवानु प्रयन्ति पङ्क्तिमनूद्यन्ति TaiS. II. vi. 10. 4; मद्देवत्यमेवं प्रायणीयमसन्मद्देवत्यमुदयनीयं ममेवानुप्रायाथ मामनूदयाथ MaiS. iii. 7. 1 (iii. 75. 5); **3** to go up or after, to follow तस्य सुहस्त्यः पशवोऽनूदायन्त्स उन्नतोऽभवद्यः पशुकामः स्यात् TaiS. II. i. 5. 1; स गिरिमुदैत् तमग्निरनूदैत् तावग्नीषोमौ समभवताम् TaiS. II. iii. 3. 1; स देवान्स्वर्गं लोकं यन्तोऽनूदैत् MaiS. i. 6. 12 (i. 106. 2); यदश्वं पुरो नयन्ति स्वमेव तच्चक्षुः पश्यन्ननूदेति (अग्निः) KāṭhS. 8. 5 (i. 88. 11); TaiBr. I. i. 5. 5; इन्द्रो वै वलमपावृणोत्तं सहस्रमनूदैत् KāṭhS. 13. 3; (i. 181. 21) तामेवानूद्यन्ति यत्तस्यां निमार्ष्टि ते KāṭhS. 38. 13 (iii. 80. 1); यद्येनं पापिका कीर्तिरनूदियाद्धोता म इदमकरिति विद्यात् ṢaḍviBr. ii. 9. 1; ते शुचं पाप्मानमनूद्यन्त्यूर्ध्वो ह्येतेन कर्मणैत्यूर्ध्वामु शुचमुत्सृजन्ति ŚatBr. VII. v. 2. 30; अग्नीदेकस्फ्ययानूदेहि ŚatBr. IX. ii. 3. 1; गार्ग्यः य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपास इति BṛĀraU. ii. 1. 10; **4A** to rise after आदित्यमुद्यन्तमग्निरनूदेति JaimiBr. 1. 9; उद्यन्तं त्वादित्यानूदियासम् MantrBr. ii. 5. 16; सन्धिवेलयोरुपस्थानं स्वस्त्ययनमादित्यनावमित्युद्यन्तं त्वादित्यानूदियासमिति पूर्वाह्णे प्रतितिष्ठन्तं त्वादित्यानुप्रतिष्ठासमित्यपराह्णे GobhiGS. iv. 6. 12; **4B** to arise after, i. e. to wake up subsequently सवितारमुद्यन्तं त्रयो लोकाः पश्यन्ति अनूद्यन्ते च KāmSū. 288. 17 (5. 5); अनूद्यन्ते च तस्मिंस्तूद्गते सुप्ताः प्रबुध्यन्ते JayaMa. 288. 19 (*on* 5. 5)

**¹अनूदित** (anūdita) *adj.* [*f.* - ā] **1A** which is referred to, i.e. which is described or expressed यद्युपसर्जनभूतोऽगुणो गुणः, प्रधानभूतं कारकम्। तथाप्यनूदिते कारकेऽगुणगुणविधानार्थं वचनं युज्यते ŚābaBh. 687. 14 (*on* iii. 1. 12); तत्र संशयः किं यजेतेत्यनूदितानां यागानां वैश्वदेवशब्देन गुणविधिः ŚāstrDī. 78. 11 (*on* i. 4. 13); इत्यनेनानूदिते भावार्थे क्रतुदक्षादीनां विधौ ... तद्धितचतुर्थ्यादीनमनुपयोगात् CaturCin. iii (1). 148. 1; इतिपदेन च पूर्वोक्तमिथ्यात्वलक्षणमनूदितं भवति ŚrutaPra. iA. 80. 18 (*on* i. 1. 1); अनूदितायाः सावित्र्याः पादं पादमिति त्रीन्पादान् ब्रह्मा चकर्ष ManvaMu. 49. 27 (*on* 2. 77); संनिपातिवाक्येषु विधिप्रत्ययेनाधिकारापूर्वेऽनूदिते सत्यवहननप्रोक्षणादयश्च ... स्वार्थमभिदधति TantrRaha. 63. 6; पशुत्वेनानूदितानां गवाश्वव्यतिरिक्तानामपशुत्वोक्तिवत् Pūrvotta-VāNaMā. 69. 19; यागादाविष्टसाधनत्वसंबन्धित्वेनावगतस्य बलवदनिष्टाननुबन्धित्वस्य लक्षणया वानूदितस्य भ्रान्त्या वा प्रसक्तस्यैव निषेधः VaiyāBhū. 90. 27 (*on* 22); एवं चार्थादिकपिण्ड इत्यनेन सजातीयानां साप्तपौरुषं सापिण्ड्यमनूदितं भवति Bālam-Bha. i. 197. 13 (*on* 1. 53); (pred.) referred to, i.e. described or expressed आर्थ्या वृत्त्या सर्वमनूदितम् MudriKu. 5. 8 (9); एष लौकिको वृत्तान्तः श्रुत्या सम्यगनूदितः PañcDa. 7. 201; वाक्याध्याहारे इत्येकदेशेनानूदितमध्याहारे इति Prasā. ii. 282. 14; वाक्येन 'परं ब्रह्म शिव' इति सिद्धवदनूदितम् ŚivārkaMaDī. i. 95. 13 (*on* i. 1. 1); i. 246. 10 (*on* i. 1. 2); पृथिवी स्वशब्देनैवानूदिता ŚivārkaMaDī. i. 388. 25 (*on* i. 2. 26); i. 500. 3 (*on* i. 3. 41); ii. 3. 25 (*on* ii. 1. 1); ii. 410. 26 (*on* iii. 4. 46); ब्रह्मचर्यादेव प्रव्रजेद् गृहाद् वा वनाद् वेत्यनयानूदितं ब्राह्मणः प्रव्रजेत् VīraMi. (Paribhāṣā.) 19. 23; दुःखहेतुत्वं द्वितीयादित्यादिश्रुत्यानूदितम् LaCandr. 421. 18; **1B** which is stated or mentioned cf. **अनूदितसमुच्चयबोधन; 2Ai** which is restated, reiterated or spoken after सर्व एवायं सूत्रार्थो विवृत्तः पुनरिहानूदितः Bṛha. 134. 5 (*on* i. 1. 5); LalitāTriBh. 263. 12 (*on* 5); लौकिकी प्रसिद्धिरिह भाष्यकारेणानूदिता Kāśi. iii. 106. 27 (*on* 5 (5). 14); कथमर्थं तदनूदितं मया PṛthvīVi. 12. 30; नित्यतृप्तत्वादीनि ... भाष्येऽनूदितानि VedāntKa. 72. 23 (*on* i. 1. 4); पञ्चाग्निविद्योक्ता गतिरिहानूदिता अपुनरावृत्तिविधानार्थम् ŚrutaPra. iB. 313. 29 (*on* i. 2. 17); त्वदुक्तमन्योक्तं वा मयानूदितम् NyāyPari. 181. 4; पूर्वोक्तमनूदितं दैविके नास्ति निग्रहः इति विधातुम् ... एषः ... निर्णय उक्तः ManvaMu. 361. 30 (*on* 8. 409); 496. 9 (*on* 11. 230); पञ्चविधमेव मिथ्यात्वं दूषणायानूदितम् GuruCandr. i. 242. 2; यत्पुरोदितम् ... महर्षिणा, तदनूदितमग्रे भवितव्यम् NīlaVi. 27. 12; ( used as noun) what is restated or reiterated ततश्चानूदितानां 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यधिकारसंबन्धात् PrakaPañ. 260. 2; नन्वनूदितस्यानुवादः क्वोपयुज्यते NyāyVārPari. 95. 7; **2Aii** which is related क्रतुविधयः ... तेऽनूदिताः पर्यवस्यन्तोऽपि न धनार्जनं तन्नियमं वा प्रयुञ्जते TātpaṬ. (Vā.) 427. 22 (*on* ii. 1. 63); अनूदितं हननं प्रतिषिध्य ... नञ् न लिङ्गमपरं शक्नोति प्रतिषेद्धुम् NyāyRaMā. 54. 16; कथं चेदृगनूदितस्याविधेयस्य क्रमस्य चोदनालक्षणत्वम् NyāyRaMā. 152. 9; **2B** (pred.) explained, spoken accordingly वेदेऽपि ... महःशब्दवाच्योत्सवप्रसिद्धिरनूदिता TantrVā. 130. 17 (*on* i. 3. 7); तत्र ... संबन्धोऽनूदितः Kāśi. i. 30. 17 (*on* 1. 58); सिद्धमात्मभेदमनूद्य बन्धमोक्षौ प्रतिपादयतीति स चानूदितो भेदः Bhām. 292. 9 (*on* i. 4. 8); तेन लौकिकं प्रमाणस्वरूपमनूदितम् PratyabhiVi. ii. 82. 5 (*on* ii. 3. 2); स च चतुर्विधः केनेदमुक्तमिति वा ... परोक्तमेव मयानूदितमिति वा TārkiRa. 330. 1; तस्मादेतदपि असाधारणधर्मवतः तुल्यमेवानूदितम् VedāntKa. 116. 19 (*on* 1. 1. 22 (?21)); एकदेशिमतम् ... इहानूदितम् ŚivārkaMaDī. i. 185. 21 (*on* i. 1. 4); सोपपत्तिकजन्माद्यधिकरणार्थोऽनूदितः ŚivārkaMaDī. i. 246. 9 (*on* i. 1. 21); अत्रत्यमेवायुरादीनां फलत्वमन्यार्थतया तृतीयेऽनूदितमिति न पुनरुक्तिरित्युक्तं तन्त्ररत्ने MayūMāli. 395. 9 (*on* ix. 1. 13); (used as noun) what is explained or spoken accordingly अनु(नू?)दितं दूषयति तदिति NyāySu. (Ja.) 627A. 2 (*on* 4. 2); यदुक्तमित्यादिना उपदिश्यत इत्यन्तेनानूदितं पूर्वपक्षहेतुं दूषयति ŚrutaPra. iB. 202. 23 (*on* i. 1. 13); अनूदितानां भोग्यभोगस्थानभोगोपकरणानाम् ... उपलक्षणम् ŚivārkaMaDī. i. 434. 31 (*on* i. 3. 13); **2C** which is repeated or recited व्याकृता संप्रदायेन वाणी नित्यैव वैदिकी। अनूदितोच्यमानेयं कर्मस्वाध्यायकालयोः TantrVā. 197. 23 (*on* i. 3. 24); **3** which is echoed वैतालिकाः ... । अनूदितां रैवतकाद्रिपादैर्भोगावलीं पेठुरकुण्ठवाचः VasaViKā. 11. 92; उदितो हरति मनो मे भवनकपोतैरनूदितो निनदः ŚṛṅgāTi. (Rā.) 61; **4** imitated, cf. **अनूदितगतागता; 5** (used as noun) what is prescribed or ordained, cf. **अनूदितातिगामिन्.**

**²अनूदित** (anūdita) *adj.* risen up or ascended ये ... महाचार्याः स्वनिर्वाणपदादनूदिताः Gurvā. 323; 483.

**अनूदितगतागता** (anūdita-gatāgatā) *adj.* (*f.*) which has imitated the going and coming back नीलोत्पलभ्रमवशाद् भ्रमतामलीनामारादनूदितगताग[त]यादृशैव PṛthvīVi. 4. 6 (comm. गतागतानुवादिन्या ... दृष्ट्या)

**अनूदितत्व** (anūdita-tva) *n.* **A** the state of being restated or reiterated भेदस्य लोकसिद्धत्वेन अनूदितत्वात् तन्निषेधो न भ्रान्तजल्पितायते ŚrutaPra. ii. 440. 31 (*on* iii. 2. 21); **B** the state of being referred to सिद्धान्तिनोच्यमानस्यैव जीवो ब्रह्मेत्यर्थस्य पूर्वपक्षिणानूदितत्वात् ŚivārkaMaDī. i. 90. 16 (*on* i. 1. 1)

**अनूदितमन्त्र** (anūdita-mantra) *m.* repeated formula स्वकृतगृह्यसूत्रे अनूदितमन्त्रविधानमुखेनार्थादाहुतीनां त्रयोदशसंख्या दर्शिता SmṛtiCan. v. 326. 17.

**अनूदितवादिनी** (anūdita-vādinī) *adj.* (*f.*) which expresses what is already stated (in the Śruti) स्मृतिः ...। अनूक्तवादिनी सा तु पारिव्राज्यं यथा गृहात्। ... अनूक्तवादिनी अनूदितवादिनी VīraMi. (Paribhāṣā.) 19. 22.

**अनूदितश्रवणादिव्यावृत्ति** (anūditaśravaṇādi-vyāvṛtti) *f.* exclusion of hearing etc. which have been described or expressed मोक्षसाधनतया विहितं वेदनमिति घटादिज्ञानव्यावृत्तिः। विहितमिति अनूदितश्रवणादिव्यावृत्तिः ŚrutaPra. iA. 59. 9 (*on* i. 1. 1)

**अनूदितसमुच्चयबोधन** (anūditasamuccaya - bodhana) *n.* act of conveying of the aggregate which is stated or mentioned 'सर्वद्रव्याच्च यद्वरम्' इत्युक्तमनूदितसमुच्चयबोधनाय ManvaMu. 384. 7 (*on* 9. 114)

**अनूदितसार्वात्म्यब्रह्मोपासना** (anūdita-sārvātmyabrahmopāsanā) *f.* meditation on Brahman as the soul of all, which is stated or mentioned subsequently 'स क्रतुं कुर्वीते'त्यनूदितसार्वात्म्यब्रह्मोपासनां प्रति प्रकारसमर्पकतया (अन्वयः) ŚivārkaMaDī. i. 313. 16 (*on* i. 2. 1)

**अनूदितसिद्धान्ताशय** (anūditasiddhāntāśaya) *m.* purport of established conclusive view which is explained अनूदितसिद्धान्ताशयं दूषयति VedāntKa. 417. 5 (*on* iii. 3. 20)

**अनूदितातिगामिन्** (anūditātigāmin) *adj.* transgressing what is prescribed or ordained समजनि ... शीतवीर्यः। अरिपुरदहने तथापि सोष्मा न खलु विधिर्यदनूदितातिगामी Rāgh. 14. 52.

**अनूदिताशङ्कानिरासार्थत्व** (anūditāśaṅkānirāsārtha-tva) *n.* the state of having the purpose of removing the doubt which is stated or mentioned अनेन चाथ यदुक्तमित्यनूदिताशङ्कानिरासार्थत्वेन ... सूत्रावयवमेवं व्याख्यातम् NyāySu. (So.) 45. 16 (*on* i. 2. 7)

**अनूदे** (anūde-) II. P. **1** to rise after तमापोऽनूदायन् AitBr. 8. 1 (216) (*but* Sāy. अनुग्रहेणोत्कर्षो यथा भवति तथा प्राप्तवत्यः); **2A** to come forward to, to come up after प्रह्रियमाणायानुब्रूह्येकस्फ्ययानूदेहीत्यनूदैति प्रतिप्रस्थातैकस्फ्यया ŚatBr. III. v. 2. 2; ŚatBr. (K.) IV. v. 2. 2; KātyŚS. v. 4. 7; xviii. 3. 17; अग्नीदेकस्फ्ययानूदेहि ŚatBr. IX. ii. 3. 1; **2B** to walk up along or up to तद्धैके। ओत्तरवेदेरनूदायन्ति ... मध्यमाच्छङ्कोरनूदेयात् ŚatBr. III. v. 2. 3; **2C** to go after, i. e. to follow अथापरं चतुर्गृहीतमाज्यं गृहीत्वाहेहि यजमानेत्यनूदैति पत्नी ŚatBr. (K.) IV. v. 3. 9; IV. vi. 3. 3; तं (सोमम्) ह द्रोणकलशेनैव प्रतिधाय पीत्वा प्रवव्राज। अनूदेयाय त्वष्टा JaimiBr. 2. 155; **3** to come out from, i. e. to be born out of य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपासे ŚatBr. XIV. v. 1. 11 (Dvivedagaṅga उत्पद्यते); तदु हैव हिरण्यचण्डातकौ वसानेऽप्सरसावनूदेयतुः JaimiBr. 3. 235.

**अनूदेत्य** (anūde-tya) *ger.* having come out from ईश्वरो वा एष एतमवभृथादनूदेत्य वरुणो ग्रहीतोः KāṭhS. 22. 11 (ii. 67. 14); KapiKaS. 35. 5 (181.8)

**अनूदेश्या** (ánū-deśyā) *adj.* (*f.*) to be assigned to ; to be allocated अप्यनूदेश्यां दक्षिणां प्रतिगृह्णन्ति TaiBr. III. xi. 8. 8.

**अनूद्गत** (anūdgata) *adj.* going up to, i. e. approaching रासमण्डलबद्धोऽपि कृष्णपार्श्वमनूद्गता(?तः)। गोपीजनो न चैवाभूदेकस्थानस्थिरात्मना BrahmP. 189.32.

**अनूद्गृह्णत्** (anūdgṛhṇat) *adj.* lifting up after सछदिष्कयोर्हविर्धानयोर्ग्रन्थीन् विचृत्य प्रक्षाल्याभ्यज्याभितः पृष्ठ्यामवस्थाप्येति। त्रिरनूक्तेऽनूद्गृह्णन्तो वर्तयन्ति KāṭhŚSSaṅkalana 16. 14.

**अनूद्दिश्य** (anūddiś-ya) *ger.* having stated or mentioned subsequently यथैवैतत्स वत्सः ... गतां गामन्वेष्य तामेव तर्पयति तथैव यथाविधिदत्तजलपिण्डदानादि यत्र वा गतं तमेवानूद्दिश्य प्रीणयति VaikhāGS. 5. 15.

**अनूद्दिश्यमान** (anūddiśyamāna) *adj.* being stated or mentioned subsequently यत्र ह्यनूद्दिश्यमानधर्मान्तरसाहित्ययोग्यधर्मयोगित्वं वस्तुनो यच्छब्देनाभिधाय तद्बुद्धिस्थधर्मान्तरसाहित्यं तच्छब्देन निर्वाह्यते Loc. 131. 24 (*on* 3. 4)

**अनूद्दिष्ट** (anūddiṣṭa) *adj.* stated or mentioned subsequently तुल्यत्वं च द्विष्टमतः पूर्वोद्दिष्टानामनु(?नू)द्दिष्टाः समा ज्ञेयाः JaineVyā. 24. 8 (*on* i. 2. 4) उद्दिष्टानां पदार्थानामनु(?नू)द्दिष्टैर्यथाक्रमम्। संबन्धः कथ्यते योऽसौ यथासंख्यं क्रमश्च सः Mānaso. iv. 2. 271.

**अनूद्देश** (anūddeśa) *m.* **Ai** subsequent reference (to words etc.) संख्यातानामनूद्देशो यथासंख्यम् VājaPrāti. 1. 143 (Uvaṭa समानसंख्यानां यः पश्चादुद्देशः स यथासंख्यं भवति); **Aii** (Poet.) subsequent reference (to items etc.) उद्दिष्टानां पदार्थानामनूद्देशो यथाक्रमम्। यथासंख्यमिति प्रोक्तम् Kāvyāda. 2. 273; 3. 144; यथासंख्यमनु(?नू)द्देशः सामान्यमतिदिश्यते AgniP. 345. 21; उद्दिष्टानामर्थानां क्रमेणानूद्देशो यथासंख्यम् (अलंकारः) ... पश्चान्निर्देशोऽनूद्देशः AlaṅkāSa. 148. 15; PratāYaBhū. 451. 6; यथासंख्यमनूद्देश उद्दिष्टानां क्रमेण यत् SāhiDa. 600. 4 (comm. पश्चादुद्देशः); **B** act of explaining accordingly मन्त्रार्थवादेष्वित्युद्देशे अनुष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्यामित्यनूद्देशे चावगतक्रमोऽत्र परित्यक्तः ŚrutaPra. ii. 54. 14 (*on* i. 3. 25)

**अनूद्देश्य** (anūddeśya) *adj.* (used as noun) **1** (person) who performs a sacrifice referring to another नानूद्देश्यं याजयेत् न नीतदक्षिणं याजयेत् BaudhŚS. iii. 197. 6; **2** (sacrifice) involving subsequent announcement (of death of the sacrificer ) कश्चिन्नाहीनः। कश्चिन्नानूद्देश्यः JaimiŚS. 1 (Vṛtti अन्तश्शवो एष यज्ञो योऽनूद्देश्यः ... अन्तश्शवश्चायम्। यज्ञमध्य एव यजमानस्य मरणात्)

**अनूद्द्रु** (anūddru-) I. P. **Ai** to run after, to walk fast यदि सायमहुतेऽग्निहोत्रे पूर्वोऽग्निरनुगच्छेदग्निहोत्रमधिश्रित्योन्नीयाग्निना पूर्वेणोद्द्रुत्याग्निहोत्रेणानूद्द्रवेत् KāṭhS. 6. 6 (i. 55. 4); ĀpaŚS. ix. 9. 6; HirŚS. xv. 3. 5 (291. 23); अग्निमाहितमग्निहोत्रेणानूद्द्रवन्ति KāṭhS. 8. 11 (i. 94. 20); KapiKaS. 7. 8 (78. 22); अन्वङ्ङ्ग्निहोत्रेणानूद्द्रवेत् BhārŚS. ix. 9. 5; ix. 10. 8; ĀpaŚS. ix. 7. 1; ix. 7. 10; **Aii** to run towards, cf. **अनूद्द्रुत्यA; B** to follow (in mind), cf. **अनूद्द्रुत्य B**.

**अनूद्द्रुत्य** (anūddrút-ya) *ger.* **Ai** having run towards अयं वाव प्रजापतिरसौ पूर्वोऽग्निस्तदयमित आदाय प्राङ्नूद्द्रुत्याजुहोत्तस्मादग्निहोत्रं पश्चादधिश्रित्य पुरो जुह्वति KāṭhS. 6. 4 (i. 53. 8); **Aii** having run after कृणुष्वं पाजः प्रसितिं न पृथ्वीमिति तामग्निरनूद्द्रुत्य समदहत्सा दह्यमाना ह्रदं कौसिदं प्रामज्जत् KāṭhS. 10. 5 (i. 130. 6); 21. 8 (ii. 47. 7); 21. 10 (ii. 50. 15); **B** having followed (in mind), i. e. having considered or regarded स एतं सप्तहोतारमपश्यत्तं मनसानूद्द्रुत्याजुहोत्तेन यज्ञमसृजत सोऽस्माद्यज्ञस्सृष्टः पराङैत्तं ग्रहेणानूद्द्रुत्यागृह्णात् KāṭhS. 9. 16 (i. 118. 15);

**अनूद्धा** (anūddhā-) III. Ā. to set out, to go up after (मनसा) अनूज्जिहीते। सुवर्गस्य लोकस्य समष्ट्यै TaiBr. I. vii. 7. 2; अथैनं संशास्ति मनसैव दिशोऽनुप्रक्राम मनसोर्ध्वामनूज्जिहीष्वेत्यथैनं वाचयति BaudhŚS. ii. 100. 6; HirŚS. xii. 5. 24 (175. 24)

**अनूद्धृ** (anūddhṛ-) I. P. to take out from subsequently, cf. **अनूद्धृत्य**; MW.

**अनूद्धृता** (anūddhṛtā) *adj.* (*f.*) held up by running after निष्क्रामन्तीं सखी[भि]रनूद्धृतां कथमपि हठादाकृष्यान्ते पटस्य निवेशिताम् ... मनः स्मरति प्रियाम् SubhāRaK. 15. 33.

**अनूद्धृत्य** (anuddhṛ́t-ya) *adj.* (pred.) to be taken out subsequently यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेदपर आदीप्यानूद्धृत्य इत्याहुः TaiS. II. ii. 4. 7; BaudhŚS. ii. 124. 3; VaikhāŚS. 20. 19.

**अनूद्भासिन्** (an- ūdbhāsin) *adj.* not shining forth, not glossy अनू(?नु)द्भासि वासो वसीत HirŚS. xxvi. 8. 12 (119. 23) (comm. उद्भासनशीलमुद्भासि। तदन्यदनू(?नु)द्भासि); ĀpaDS. i(11). 30. 12 ; cf. **अनुद्भासिन्**.

**अनूद्भू** (anūdbhū-) I. P. **A** to arise or result from अर्थानाचर्यमाणाननर्था अप्यनूद्भवन्त्यनुबन्धाः संशयाश्च KāmSū. 352. 3 (6. 6); **B** to follow in appearance, to appear after चक्षुःप्रीतिमुद्भवन्तीमनूद्भवन्ति चापराणि कुसुमचापलानि AnargharRā. 2. 6 (37) (comm. चाक्षुषरागमनु लक्ष्यीकृत्य ... मन्मथविकारा उद्भवन्ति)

[1]**अनूद्य** (anūdya) *adj.* [*f.* - ā] [ DurghVṛ. *on* iii. 2. 61; BhāṣāVṛ. *on* iii. 1. 106] **1** which is to be restated or reiterated तदाहुर्न वा आर्त्यार्तिरनूद्या PañcBr. ix. 6. 5; **2** (used as noun) what (object) is to be described फलेनोपादेयविधेयगुणभूतयागग्रहणाद्गुणेन चोद्देश्यानूद्यप्रधानभूतापेक्षणात्तन्त्रत्वाभावः TantrVā. 300. 19 (*on* i. 4. 8); **3** which is to be understood by implication न चात्र तुला विधेया किंत्वनूद्या प्राथम्यात् Aparā. 698. 13 (*on* 2. 98)

[2]**अनूद्य** (a - nūdya) *adj.* (used as noun) that which is not to be said quickly or readily नूद्यं न भवतीत्यनूद्यमिति नञ्समासाश्रयणेन रूपसिद्धिः कार्या NyāySu. (So.)451. 6 (*on* i. 4. 8) (better **अनोद्य**)

**अनूद्य** (anūd - ya) *ger.* **1A** having read , having recited **B** having repeated (words etc.) , having quoted or cited **2A** having said in the context (of), having treated as the subject (of a predicate) **B** having narrated, having described **Ci** having restated, having reiterated **ii** having explained

**3Ai** having referred to **ii** having mentioned **iii** having implied **B** having put forward, having stated (by way of hypothesis) **4A** having addressed **B** having told **5** having stated in accordance with **1A** having read, having recited 'वेदानधीत्य' इत्येकस्यां विधीयतेऽनूद्यानन्तर्यं विपरीतमन्यस्यामर्थैकत्वाद्धैकवाक्यतां वक्ष्यति ŚābaBh. 5. 5(*on* i. 1. 1); **1B** having repeated (words etc.), having quoted or cited प्रथमसूत्रमनूद्य तस्य तात्पर्यमाह TātpaṬ.(Vā.) 3.7 (*on* i. 1. 1); यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म इत्यनूद्य ... यो दहराकाशो यच्च तदन्तर्वर्ति गुणजातं तदुभयमन्वेष्टव्यम् BrahmSūBh. (Rā.) 298. 18 (*on* i.3. 13); विद्वत्संन्यासश्च परमहंसोपनिषदि प्रतिपादितः। तां चोपनिषदमनूद्य व्याख्यास्यामः JīvanVi. 141. 4; न चैकस्यामेव शाखायाम् ... श्रवणविधिद्वयं पुनरुक्तमिति वाच्यम्, एकत्र विधायापरत्र विधिमनूद्य विशेषकथनात् VivaPraSaṁ. 6. 11; चराचरस्येति सूत्राक्षराण्यनूद्य श्रुत्यनुसारेण सर्वस्येति व्याख्यानम् TattvPrakā. 32A. 7(*on* i. 2. 9); **2A** having said in the context (of), having treated as the subject (of a predicate) चिरत्वमनूद्य देहपातावधित्वमत्रोच्यते BrahmSi. 130. 14; कथम्... अरुणयेत्यत्र पदे ... करणानि ... सोमप्रभृतीन्यनूद्यारुणप्रातिपदिकार्थो विधीयते TantrVā. 696. 16 (*on* iii. 1. 8); यत्र त्वनूद्य अप्रमाणरूपं विधीयते, तत्र त्वनूद्यमानस्य प्रमाणान्तरसिद्ध्या प्रयोजनम् TātpaṬ. (U.) 31.5 (*on* 2. 1); 'प्रज्ञानघन' इत्यात्मलक्षणं सत्यसूचकम्। अनूद्यौपाधिकस्यैव कथयन्ति विनाशनम् ViveCū. 563; प्रत्यक्षमनूद्य कल्पनापोढत्वम्, अभ्रान्तत्वं च विधीयतेNyāyBiṬ. 40. 7 (*on* 1. 4); अनूद्यापूर्वमैकात्म्यं विधेयमुपपत्तिमत् BṛĀraUBhVā. i. 4. 692; ii. 1. 558; स्वभावतो वा संप्राप्तमनूद्योपासनं श्रुतिः TaiUBhāVā. 92. 1 (2); तमनूद्य अभेदमेव (जीवब्रह्मणोः) तयोः शास्त्रं बोधयति IṣṭaSi. 242.21; वाक्यान्तरेभ्यश्च ब्रह्मावगतेः प्राप्तत्वात् तदनूद्याप्राप्तोपासा भावार्थो विधेयः Bhām. 160. 21 (*on* i. 1. 31); 190. 17 (*on* i. 2. 26); गुणविधानार्थमुपासनमनूद्य ... उपासकस्य प्राप्तौ न संशयोऽस्तीत्युपसंहृतम् BrahmSūBh. (Rā.) 242. 17 (*on* i. 2. 7); आचमनमनूद्याचमनीयानामपां प्राणवासस्त्वानुसंधानमप्राप्तं विधीयत इति युक्तम् VedāntSā. (Rā.) 297. 7 (*on* iii. 3. 18); VedāntKau. 310. 24 (*on* iii. 3. 18); दाहयित्वेत्यनेन स्नेहप्राप्तं दाहमनूद्य त्र्यहाशौचं विधीयते HārLa. 45. 10; अनेकस्यार्थस्य विधातुमशक्यत्वात् आस्यदघ्नपर्वापेक्षया महत्तामनूद्य वृ(?बृ)हत्त्वैव विधीयते SaṅkarKāBh. 71.7 (*on* ii. 1.57); अमुक्ताधिपत्यं तु पूर्वार्धोक्तमनूद्य च। उतामृतस्येश इति विधत्ते AnuVyā. 52B. 7 (*on* 3. 3); प्रायस्त्वमिन्दोरपरावतारः। त्वां पश्यतामेव मुदः स्फुरन्ति ... अत्र त्वामनूद्य चन्द्रावतारत्वं विहितम् Ekāva. 6. 2 (6) (159. 16); 6. 2 (16) (160. 9); निमित्ततयानुमानसिद्धमीश्वरमनूद्य उपादानत्वादि विधीयताम् NyāySiA. 232. 16; आत्मदर्शनमनूद्य ... श्रवणम् ... विधीयते VivaPraSaṁ. 1. 19; प्रत्यक्षावगतं हि जीवत्वमित्यनूद्य तस्य तदसीति ब्रह्मता विधातव्या NyāySu. (Ja.) 66A. 7 (*on* i. 1. 1); 'यदग्नये च प्रजापतये च सायं जुहोती'त्यत्र न केवलं प्रजापतिविधानम्, किं तु मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतेः ArthSaṁ. 103. 3; नापि विशिष्टे विशिष्टान्तरविधानाद्विशेषणानां मिथः समवायादिदोषः ...। अनूद्य विधानेष्वपि यथाव्युत्पत्ति धर्मिप्रधानत्वाच्च NyāyPari. 376. 22; अत्रस्तताद्यनूद्यात्मगोपनाद्येव विधेयम् SāhiDa. 388. 6; यदि सामान्यतः सिद्धं धर्ममनूद्य चोदना प्रमाणत्वेन विधीयते तदानर्थस्य धर्मत्वं न प्राप्नोत्येव YuktiSneha. 32. 16 (*on* i. 1. 2); ऐक्यश्रुत्या प्रत्यक्षसिद्धं जीवमनूद्य तस्य ब्रह्मत्वम् ... उभयानुवादेनाभेदो वा विधेयः Nyāyāmṛ. 592A. 5; अग्रे तु ऋगादिविद्या अनूद्य नामात्मकब्रह्मत्वं तत्रातिदिश्यते AṇuBh. 253.6 (*on* iii. 3. 46); 'यदा तम' इति पूर्वार्धेन तमोऽवशेषाङ्कितं कालमनूद्य तत्कालवर्ती शिव इति विधीयते ŚivārkaMaDī. i. 129. 16 (*on* i. 1. 2); i. 130. 3 (*on* i. 1. 2); i. 150. 18 (*on* i. 1. 3); i. 207. 18 (*on* i. 1. 13); i. 561. 32 (*on* i. 4. 25); गवेषयन्तीत्यत्र गवेषयन्त इत्यनूद्य शोधयन्त इत्यत्र शोधयन्तीति विधाने ... न सौन्दर्यहानिः RasGaṅ. 460. 8; अ अ इति। विवृतमनूद्य संवृतोऽनेन विधीयते SiddhāKau. 5B. 4 (*on* viii. 4. 68); 35B. 14( *on* vi. 1. 113); चक्राण्यनूद्येतोऽपि सुलभं वासनान्तरमाह SetuBa. 199. 27; एतेनाणमनूद्य रपरत्वं विधीयते इति परास्तम् LaŚabdeŚe. i. 98. 14; **2B** having narrated, having described अनूद्यैतत् सर्वं पतति मम चेतस्त्विति विधौ MahāviC. App. (A) 5. 72 (285. 13); रात्रिवृत्तमलमेवमनूद्य त्वं वधूः खलु विलक्ष्य खलेति ... प्रतिहतोऽपि ... स्त्रीरतान्यधिजगौ शुकशायः RāghPāṇ. (Dha.) 17. 88; **2Ci** having restated, having reiterated सम्यग्दर्शनमनूद्य तत्फलं मोक्षः अभिधीयते GītāBh. (Śaṅ.) 201. 15 (*on* 6. 31); अनूद्य स य इत्येवमपकृष्टं नृबुद्धिगम् TaiUBhāVā. 148. 19 (2); भ्रान्तिप्रसिद्ध्यानूद्यार्थं तत्तत्त्वं भ्रान्तिबाधया। अयं नेत्युपदिश्येत तथैवं तत्त्वमित्यपि NaiṣkaSi. 150. 3; तदुक्तमेवानूद्य, तन्न युज्यत इति युक्त्या तुच्छख्यातिभ्रमो मया निरस्यते IṣṭaSi. 141. 3; न्यायतः सिद्धं वेदस्य प्रामाण्यमनूद्य मन्वादिस्मृतीनां तन्मूलतावचनेन ज्ञाप्यते ManuBh. i. 56. 24 (*on* 2. 6); ii. 352. 3 (*on* 10. 75); वृत्तिकृत्तु ... तत्पक्षमनूद्य निराकरोति Loc. 59. 18 (*on* 1. 22); यदि दूषणाभासमयमनूद्य दूषयेत्तदा अयमपि निगृह्येत MudriKu. 5. 7 (16); सम्यक्प्रणिहितं सुष्ठूक्तमर्थमनूद्यात्र किं ब्रवीषीति पृष्टः ... न किंचिदुत्तरं प्रस्तौति SmṛtiCan. iii. 109. 2; त्रयोदश्यां द्वादश्यसंभवमनूद्य पारणनिषेधपराणि तानि CaturCin. iii (2). 283. 16; सर्वानुवादेनानूद्य ततस्तत्पक्षदूषकान्। उदाजहार व्याहारान् मुनिः PrabhāC. 96. 30; 179. 28; अत्र च भक्षयेदिति न विधीयते किं तु रागप्राप्तं भक्षणमनूद्य परिसंख्यायते ManvaVi. 605. 12 (*on* 5. 27); अनूद्य सर्वं फणितं तदीयं सहस्रधा तीर्थकरश्चखण्ड ŚaṅkaDigVi. (Mā.) 7. 9; जैमिनेर्मतमनूद्य तन्निराचिका(?की)र्षुर्भगवान् स्वमतमाह VedāntKau. 105. 2 (*on* i. 3. 33); गायत्र्याः प्रागुक्तषड्विधत्वमनूद्य ... तत्रैव पुरुषसूक्तमन्त्रः ... उदाह्रियते TattvPrakā. 25B. 9 (*on* i. 1. 26); न हि वयं वेदो धर्मान्विधाय स्वयमेव निषेधतीति ब्रूमः। किंत्वनूद्य निषेधतीति NyāySu. (Ja.) 483B. 4 (*on* iii. 2. 1); अन्यैरुक्तमुदाहरणमनूद्य रूपयति Subodhi. 10. 2 (*on* 2. 21); चतुर्विधपूजायोग्यं स्वयं व्यक्तं स्थानं 'मुनिवाक्योक्तमार्गेण ...' इत्यनूद्य ... दिव्यमार्गेण पूजनमविरुद्धमित्युच्यते PāñcRāRa. 38. 9; पूर्वपक्षोक्तं दूषणान्तरमनूद्य परिहरति YuktiSneha. 9. 38 (*on* i. 1. 1); 55. 31 (*on* i. 1. 5); 117. 36 (*on* i. 1. 5); तयोरन्यः पिप्पलं स्वाद्वत्तीत्यहंकारतादात्म्यविशिष्टजीवमनूद्य ... तमेव ... दर्शयति BhedaDhi. 54. 8; द्वितीयपूर्वपक्षमनूद्य ... निराकरोति (भाष्यकारः) ŚivārkaMaDī. i. 177. 31 (*on* i. 1. 4); i. 213. 25 (*on* i. 1. 13); i. 312. 32 (*on* i. 2. 1); एकामेव यजेत न द्वे इत्याशङ्कितुः पक्षं स्तुत्वानूद्य दूषयति BhāṭṭCan. 13. 11 (*on* xiii. 2. 9); **2Cii** having explained यत्तु प्रमाणमनुभूतिरिति प्रमाणसामान्यलक्षणमनूद्य पुनर्वदन्ति ...। तद् दुर्घटम् SaṁkṣeŚā. 1. 284 (i. 214. 21); 1. 533 (i. 381. 21); संयोगजसंयोगेभ्यस्तेभ्यः विभागजविभागाः निवर्तिष्यन्त इत्यर्थः। तदेतदनूद्य देशयति Kiraṇā. 239. 14; अनुपादानं तु ... परिषदाप्यनूद्य दीयते TārkiRa. 348. 1; शास्त्रेण हि ब्रह्मानूद्य तज्ज्ञानं विधीयते ŚrutaPra. iB. 171. 16 (*on* i. 1. 4); तर्कप्रामाण्यपक्षं प्रपञ्चेनानूद्य प्रसङ्गरूपव्यतिरेक्यनुमानमेव तर्क इति च तन्मतमुपसंहृत्य उच्यते NyāyPari. 336. 10; अप्पयदीक्षितैर्विद्याधरोक्तं ध्वन्युदाहरणमनूद्य दूषितम् RasGaṅ. 337. 2; विद्यानाथीयोपमालक्षणमनूद्य 'स्वतःसिद्धेन' इत्यनेनोत्प्रेक्षायां व्यभिचारवारणम् AlaṅkāKau. (Vi.) 12. 4; **3Ai** having referred to एकैवानूद्यानूद्य ... अनुरज्येत TantrVā. 447. 14 (*on* ii. 2. 1); सर्ववेदार्थः शब्द आस्थाय मां भिदाम्। मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति BhāgP. xi. 21. 43; आत्मानमुपदिदिक्षु शास्त्रम् ... अन्नमयं शरीरमनात्मानम् ... आत्मत्वेन प्रसिद्धमनूद्य ... आनन्दमयमात्मानमुपदिदेश BrahmSūBh. (Śaṅ.) 53. 5 (*on* i. 1. 12); 220. 1 (*on* i. 3. 42); 244. 1 (*on* i. 4. 10); सगुणब्रह्मविद्याया उत्तरा गतिरुक्ता। ... तामेव गतिमनूद्य ... संसारगतिः ... वक्तव्या ChāndoUBh. 259. 5 (*on* v. 1. 1); उत्तरसूत्रं त्वर्थप्राप्तमेवानृतौ गमनविकल्पमनूद्य प्रतिषिद्धवर्जमित्येवमर्थम् BālaKrī. i. 82. 19 (*on* 1. 79); साध्यसाधनतां तस्मादज्ञानैकव्यपाश्रयाम्। उच्चैरनूद्य तत्तत्त्वं वेदान्ताः प्रत्यपीपदन् BṛĀraUBhVā. i. 2. 129; i. 3. 54; i. 4. 606; ii. 1. 10; द्रष्टव्यत्वमनूद्य साधनतया यत्तत् प्रतीचः श्रुतं वेदान्तश्रवणादिकं भवति तत्कर्तव्यमावश्यकम् SaṁkṣeŚā. 3. 339 (ii. 338. 16); न तावत्कस्यचित्कर्मणः शालाधिकरणत्वेन विशेषतः समाम्नाता यद्गृह्यमित्यनूद्य गृहिणो विधीयेत ManuBh. i. 235. 17 (*on* 3. 57); अक्षरशिवशंभुपरब्रह्मादिशब्दैः सर्वोपास्याननूद्य नारायणत्वं हि विधीयते VedāntSā. (Rā.) 321. 7 (*on* iii. 3. 43); यद्वस्तु ... यैश्शब्दैर्निर्दिश्यते, तैश्शब्दैः तद्वस्त्वनूद्य ... नारायणस्य परब्रह्मशब्दवाच्यत्वं स्वरूपप्रयुक्तम् NītiMā. 34. 12; ननु ब्रह्मसूत्रैरेव जैमिनिपक्षमनूद्य प्रतिक्षेपादर्थविरोधो दुष्परिहरः ŚrutaPra. iA. 27. 10 (*on* i. 1. 1); iA. 242. 10 (*on* i. 1. 1); सर्वं खल्विदं ब्रह्म इति श्रुतौ सर्वमनूद्य ब्रह्मत्वं तत्र बोध्यते AṇuBh. 307. 23 (*on* iv. 1. 6); 334. 8 (*on* iv. 3. 2); 'आत्मा वा अरे द्रष्टव्यः' इत्यादिश्रुत्या आत्मदर्शनमनूद्य तत्साधनत्वेन ... पुंसः ... अहं ब्रह्मास्मीति ... सिध्येत् SarvaMaSaṁ. 43. 12; हृल्लेखया देवीमनूद्य सकलपदेन सर्वस्याभेदो विधीयते SetuBa. 229. 16; **3Aii** having mentioned यन्न्यायप्रतीतिबाह्यं प्रलपितं तदिह तत्प्रतिपक्षतयैवाभिधानेनायुक्तमिति मन्तव्यम्। ग्रन्थगौरवभयात्पुनरनूद्य न दूष्यते AlaṅkāRa. 7 (93); आदिमध्यरूपे अनूद्य फलत्वेनोपपादितम् AṇuBh. 23. 7 (*on* i. 1. 11); 191. 16 (*on* iii. 2. 14); कर्तृकर्मशानचो योगेनानूद्य विधीयमानं कर्तृकर्मसंस्कारकम् VaiyāBhū. 13. 11 (*on* 2); **3Aiii** having implied चन्द्र इत्यनूद्य क इति प्रश्नायोगात् Nyāyāmṛ. 438B. 7; महाभाष्यकारवचनमर्थतोऽनूद्य तद्वचनबलादत्र यण् भवति Prasā. i. 172. 16; **3B** having put forward, having stated (by way of hypothesis) किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत्। इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन BhāgP. xi. 21. 42; **4A** having addressed अध्वरे दक्षमनूद्य शत्रुहन् क्षितावुदीचीं निषसाद शान्तवाक् BhāgP. iv. 4. 24; **4B** having told सभाप्रविष्टानामर्थसिद्धोपवेशनमनूद्य केषांचिद्दिङ्नियममाह बृहस्पतिः SmṛtiCan. iii. 44. 10; **5** having stated in accordance with एतदेवानूद्य क्षत्रादिष्वाह द्विकमिति ManvaVi. 958. 7 (*on* 8. 142); एतदेव चानूद्य तत्त्वरत्नाकरेऽप्युक्तम् NyāyPari. 149. 2.

**अनूद्यत्** (anūdyat) *adj.* arising after ताः पुरस्त जघन्यमृषभं वैदेहमनूद्यन्तममन्यतेममिदानीमालभेय KāṭhS. 13. 4 (i. 183. 19); यस्त्वेनं परमनूद्यन्तं वेदाथ

तथोपास्ते परं ज्योतिरुपसंपद्यते ĀrṣeU. 6. 8.

**अनूद्यम्** (anūdyam-) I.Ā. to lift after एतमैन्द्राग्नं ग्रहमनूद्यच्छन्ते BaudhŚS. i. 228. 19; i. 252. 9; i. 256. 7; प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं माहेन्द्रं ग्रहमनूद्यच्छन्त इतरान् BaudhŚS. ii. 77. 13; ii. 83. 5; ii. 105. 8; उद्यच्छत एतं षोडशिनं ग्रहमनूद्यच्छन्ते चमसान् BaudhŚS. ii. 286. 3; ii. 287. 14; ii. 288. 10; ii.289.4; ii.289.18; ii.291.3; अनूद्यच्छन्ते चमसानाश्राव्याहेति KāṭhŚSSaṅkalana 20. 24 = comm. *on* KātyŚS. ix. 11. 2.

**अनूद्यमान** (anūdyamāna) *adj.* [*f.* - ā] **1Ai** being restated, being reiterated अनूद्यमानोऽर्थो यथावगममनुवादान्नापूर्वार्थाक्षेपायालम्, विधायकस्तु शब्दोऽनन्यगम्यार्थविषयः BrahmSi. 103. 17; 110. 21; यत्र त्वनूद्य अप्रमाणरूपं विधीयते तत्र त्वनूद्यमानस्य प्रमाणान्तरसिद्ध्या प्रयोजनम् TātpaṬ. (U.) 31.5 (*on* 2. 1); यथा विशिष्टस्य विधानतोऽर्थाद् विशेषणानां घटते विधानम्। स्थितेऽनुवादेऽपि तथेह योज्यमनूद्यमानेऽपि जगन्निदाने SaṁkṣeŚā. 1. 535 (i. 383. 2); **1Aii** being explained शश्वज्ञपप्रैषादिमन्त्राणां कर्माङ्गानां वैदिकवाक्योच्चारणमात्रधर्मः ... न्यायसिद्धेनार्थेनानूद्यमानेन प्रतिबोध्यते ManuBh. i. 131.4 (*on* 2. 105); प्रातिलोम्येनोद्धृतपूर्वत्वं तृतीयकूटस्यासाधारणविशेषणत्वेनानूद्यमानं विरुध्येत SetuBa. 66. 4; **1B** being said in the context (of), being treated as the subject (of a predicate) विध्यनुवादौ निर्वहतो यद्यनूद्यमानो विधीयमानश्चांशः स्वरूपतो लक्षितौ च स्याताम् ... द्वावप्यंशौ लक्ष्यौ ParāTri. 217. 16; अनूद्यमानः सर्वो हि यथाप्राप्तमनूद्यते TantrVā. 141. 10 (*on* i. 3. 7); विधीयमानत्वे हि सति विरोधप्रसङ्गो न तु विधीयमानानूद्यमानयोः NaiṣkaSi. 151. 3; अनूद्यमानैवंविधवाच्यविषये या वार्ता सात्रापि भविष्यति Dhvanyā. 374. 1 (*on* 3. 20); न ह्यनूद्यमानं शक्यं विशेष्टुम् TātpaṬ. (Vā.) 192.11 (*on* i.1.5); (यस्मादनूद्यमानाङ्गनिमित्तोभयरसवस्तुसहकारिणो विधीयमानांशाद्भावविशेषप्रतीतिरुत्पद्यते ततश्च न कश्चिद्विरोधः) अनूद्यमाना ये हस्तक्षेपादयो रसाङ्गभूता विभावादयः Loc. 167. 23 (*on* 3. 20); क्रमविधानार्थमप्यनूद्यमानस्य तेनोपसंहारोपपत्तेः MīmāKau. ii. 221. 6 (*on* iii. 1. 27); ii. 175. 11 (*on* iii. 1. 13); LaCandr. 826. 20; अपरार्धे धर्मिविशेषणतया अनूद्यमानस्य गुणाभावस्य त्वार्थम् (हेतुत्वम्) RasGaṅ. 385. 5; **2A** being referred to or mentioned subsequently यस्यान्यतः स्वरूपमवगतं तस्यान्यत्र कार्यान्तरविधानार्थमनूद्यमानस्य यथावगतस्वरूपस्यैवानुग्रहो भवति ManuBh. i. 213. 13 (*on* 3. 12); दर्शपूर्णमासप्रकरणाम्नातवाक्ये अनूद्यमानस्यानृतवदनस्येव क्रत्वर्थत्वप्रतीतिर्भवेत् PūrvottaVāNaMā. 39. 8; यच्छब्दयोगेन प्रसिद्धवदनूद्यमानसकललोकव्यापिदीप्तिशालिज्योतिःष्ट्वं (? °तिष्ट्वं) ... न संभवति ŚivārkaMaDī. i. 276. 23 (*on* i. 1. 25); i. 320. 3 (*on* i. 2. 3); i.329. 22 (*on* i. 2. 8); i. 433. 3 (*on* i. 3. 13); **2B** being implied स यदनूद्यमाने तादृशस्यैव हृदि परिवृत्तेः निराकाङ्क्षम्। तत्र गुणान्तरविधानानुपपत्तेः कर्मान्तरपरिकल्पना SaṅkarKāBh. 24. 3 (*on* i. 2. 31); वैकल्याज्ज्ञातत्वाच्च द्वैतं न तद्गोचरः, किं तु अनूद्यमानमेव तदिति चेन्नैवम् GoviBh. 8. 9 (*on* i. 1. 3); **3** being imitated फूत्कारोऽपि सुवंशैरनूद्यमानः श्रुतिं हरति ĀryāSaŚa.*42; **4** being uttered at length 'संबुद्धौ' इत्यनेनानूद्यमान ओकारो विशेष्यते PadMañ. *on* KāśiVṛ. *on* P. i. 1. 16 (115. 13)

**अनूद्यमानकर्तृगतत्व** (anūdyamānakartṛgata - tva) *n.* the state of being related to the agent who is being treated as the subject कर्तृसाहित्यस्य तु ... स्वतोऽनूद्यमानत्वाभावात् अनूद्यमानकर्तृगतत्वेनैव अविवक्षा वाच्या MīmāKau. ii. 175. 8 (*on* iii. 1. 13)

**अनूद्यमानकल्पता** (anūdyamānakalpa - tā) *f.* the state of being equal to that which is being treated as the subject यदा विशेषणांशः ... विधेयधुरामधिरोहेदितरस्त्वनूद्यमानकल्पतया न्यग्भावमेव भजेत् तदासौ न वृत्तेर्विषयो भवितुमर्हति VyaktiVi. 43. 19; Kāvyānu. (He.) 210. 11.

**अनूद्यमानगत** (anūdyamāna - gata) *adj.* related or pertaining to what is treated as the subject अनूद्यमानगतोऽतिशयो विधीयमानाकारसंक्रमणक्रमेण तत्संबन्धिनः पर्यवस्यति VyaktiVi. 47. 3; Kāvyānu. (He.) 212. 13.

**अनूद्यमानता** (anūdyamāna - tā) *f.* **1** the state of being what is treated as the subject (of a predicate) मा भूदनूद्यमानतया विरुद्धयो रसयोः समावेशः सहकारितया तु भविष्यति Loc. 167. 20 (*on* 3. 20); तत्सिद्धिपक्षे च समासानुपपत्तिः नञर्थस्य विधीयमानतया प्राधान्यादुत्तरपदार्थस्य चानूद्यमानतया तद्विपर्ययात् VyaktiVi. 38.22; अनूद्यमानविभावादिसमाक्षिप्तत्वाद्रसस्यानूद्यमानता Kāvyānu. (He.) 140. 15; **2** the state of being what is restated or reiterated 'ये चेमे' इत्यादिवाक्यस्य गतिविधिपरत्वेन ब्रह्मप्राप्तेरनूद्यमानतया अधिकारवाक्यत्वाभावात्, एकस्मिन् दोषे विहितप्रायश्चित्तानामिव विकल्पः ŚrutaPra. ii. 531. 20 (*on* iii. 3. 58)

**अनूद्यमानत्व** (anūdyamāna - tva) *n.* **1** the state of being what is restated or reiterated विवक्ष्यमाणमपि तावदनूद्यमानत्वान्न क्रियाविशेषणं वा संभवति TantrVā. 139. 22 (*on* i. 3. 7); नामधेयस्य विध्यन्तर्भावोपपत्तावपि तदर्थस्य प्रमाणान्तरसिद्धत्वेनानूद्यमानत्वात् नामधेयस्य ... कथं प्रामाण्योपपत्तिः MīmāKau. i. 171. 23 (*on* i. 4. 2); **2** the state of being what is referred to अनूद्यमानत्वाद्वदनं न विशेष्यते TantrVā. 981. 20 (*on* iii. 4. 13); सत्सु तु वेदान्तवाक्येषु तदविरोध्यनुमानमपि भवन्न निवार्यते ... मननस्यापि सिद्धवदनूद्यमानत्वात् PañcPā. 79. 16 (*on* i. 1. 2); **3** the state of being what is treated as the subject (of a predicate) विधिप्रतिषेधयोरनूद्यमानत्वेन समावेशे न विरोधः Dhvanyā. 371. 4 (*on* 3. 20); सुकविना मरणपदमात्रं न कृतम्। अनूद्यमानत्वेनैवोपनिबन्धनात् Loc. 165. 19 (*on* 3. 20); 167. 18 (*on* 3. 20); Kāvyānu. (He.) 139. 21; विशेष्याणां शाब्दे प्राधान्येऽप्यार्थो गुणभावोऽनूद्यमानत्वात् Ekāva. 6. 1 (69) (157. 3); 6. 1 (80) (158. 5); बहुत्वं तावदनूद्यमानत्वात् इन्द्रियकामहोमवद्भवत्वविवक्षितम् MīmāKau. ii. 175. 5 (*on* iii. 1. 13)

**अनूद्यमानत्वाभाव** (anūdyamānatvābhāva) *m.* absence of the state of being what is treated as the subject कर्तृसाहित्यस्य ... स्वतोऽनूद्यमानत्वाभावात् अनूद्यमानकर्तृगतत्वेनैव अविवक्षा वाच्या MīmāKau. ii. 175. 7 (*on* iii. 1. 13)

**अनूद्यमानभाव** (anūdyamāna - bhāva) *m.* the state of being what is being restated or reiterated उद्दिश्यमानत्वमनूद्यमानभावः प्रधानत्वमितीदमेकम् SaṁkṣeŚā. 1. 457 (i. 332. 1) ( comm. प्रागवगतस्य पश्चाद्वादोऽनुवादस्तद्विषयोऽनूद्यमानस्य भावः)

**अनूद्यमानभूत** (anūdyamāna - bhūta) *adj.* which has become what is being restated or reiterated उद्दिश्यमानं तदनूद्यमानभूतं प्रधानं च ... प्रमीयमाणं पुनरात्मवस्तु तदास्पदं स्यादितरत्रिकस्य SaṁkṣeŚā. 1. 459 (i. 333. 11)

**अनूद्यमानरूप** (anūdyamāna - rūpa) *adj.* of the form or nature of being what is restated or reiterated यदा तु योऽयम् ...°विवादास्पदीभूत इत्यनूद्यते तदा विवादास्पदीभूतस्यानूद्यमानरूपस्य प्रमाणसिद्धिरस्त्येव NyāyRa. 165. 10 (*on* 4. 98)

**अनूद्यमानविभावादि** (anūdyamānavibhāvādi) *adj.* the condition or transitory state etc. which are being treated as the subject (of the sentence) यदि वानूद्यमानविभावादिसमाक्षिप्तत्वाद्रसस्यानूद्यमानत्वात्तदाह Loc. 167. 19 (*on* 3. 20); Kāvyānu. (He.) 139. 21.

**अनूद्यमानविशेषण** (anūdyamāna - viśeṣaṇa) *n.* qualifier to what is being treated as the subject 'स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः सदे'त्यादिभाष्यवार्त्तिकयथाश्रुतग्रहणाद्भावनाया अविधानमाहुस्तेषामनूद्यमानविशेषणस्याविवक्षितत्वादिदमधिकरणं विरुध्यते ŚāstrDī. 462. 4 (*on* vi. 2. 2); (विधौ परिभाषोपतिष्ठते नानुवादे) अनूद्यमानविशेषणेषु नोपतिष्ठते, किंतु विधावेवेत्यर्थः PariVṛ. (Nī.) 37.9.

**अनूद्यमानश्रुति** (anūdyamāna-śruti) *adj.* by whom the scripture is being repeated अनूद्यमानश्रुतिभिः शुकीभिः ... अनुज्झितानि भञ्जन्ति कुञ्जानि च वीरुधां ते Rāgh. 2. 32.

**अनूद्यमानसिद्धि** (anūdyamāna - siddhi) *f.* establishment of what is being restated or reiterated अनूद्यमानसिद्धिरेव चानुवादस्यापेक्षिता न धर्मस्वरूपस्य NyāyRa. 165. 10 (*on* 4. 98)

**अनूद्यमानाङ्गनिमित्त** (anūdyamānāṅga-nimitta) *adj.* caused by the subject-portion ( of the sentence) यस्मादनूद्यमानाङ्गनिमित्तोभयरसवस्तुसहकारिणो विधीयमानांशाद्भावविशेषप्रतीतिरुत्पद्यते ततश्च न कश्चिद्विरोधः Dhvanyā. 373. 3 (*on* 3. 20)

**अनूद्यमानादेश** (anūdyamānādeśa) *m.* substitute which takes the place of subject यद्यप्यनूद्यमानादेशविशेषणत्वात् स्थानषष्ठी न लभ्यते तथाप्यचो य आदेश इत्युक्ते तत्स्थानिक एव प्रतीयते PadMañ. *on* KāśiVṛ. *on* P. i. 1. 57 (191. 20)

**अनूद्यमानार्थ** (anūdyamānārtha) *m.* **1** object or matter which is being referred to अनुवादो ह्यनूद्यमानार्थस्य प्रापकमपेक्षते ŚivārkaMaDī. i. 117. 9 (*on* i. 1. 2); **2** thing which is being treated as the subject, cf. **अनूद्यमानार्थपरता**; *adj.* having reference to what is being restated, cf. **अनूद्यमानार्थता.**

**अनूद्यमानार्थकता** (anūdyamānārthaka - tā) *f.* the state of having reference to what is being restated or reiterated योऽसौ लिङादिः प्रागनूद्यमानार्थकतया शङ्कितःसइदानींनियोगान्तरमभिधत्ते PrakaPañ. 443. 4.

**अनूद्यमानार्थता** (anūdyamānārtha-tā) *f.* the state of having reference to what is being restated or reiterated योऽसौ लिङ्शब्दः प्रागनूद्यमानार्थतया शङ्कितः स इदानीम् ... विहतप्राधान्यमधिकाराङ्गत्वेनैवाभिधत्ते NyāyRaMā. 138. 25; TantrRaha. 63. 12.

**अनूद्यमानार्थपरता** (anūdyamānārthapara-tā) *f.* the state of being intended to refer to the thing which is being treated as the subject अस्य नञो विधेयार्थनिष्ठतया प्रधानस्यानूद्यमानार्थपरतया तद्विपरीतवृत्तिना संरब्धवत्पदेन सदाचारनिरतस्येव पतितेन वृत्तिर्विद्वद्भिर्नेष्यते VyaktiVi. 39. 24; Kāvyānu. (He.) 205.21.

**अनूद्यमानार्थप्रापक** (anūdyamānārtha - prāpaka) *adj.* which conveys the matter which is being restated or reiterated न ह्यनूद्यमानार्थप्रापकस्य पुरोवादत्वं कल्पयितुं युक्तम् ŚivārkaMaDī. i. 329. 23 (*on* i. 2. 8); i. 129. 33 (*on* i. 1. 2)

**अनूद्यमानोपादेयगत** (anūdyamānopādeya - gata) *adj.* pertaining to the subsidiary being treated as the subject अस्तुवाउद्देश्यविशेषणस्थले कथंचिदविवक्षा। अनूद्यमानोपादेयगतविशेषणस्थले तु न किंचिदविवक्षायां कारणं पश्यामः MīmāKau. ii. 174. 24 (*on* iii. 1. 13)

**अनूद्यवादिनी** (anūdya - vādinī) *adj.* (*f.*) stating what is already stated (स्मृतिः) अनूद्यवादिनी यथा - पुत्रैषणायाश्च ... लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति Aparā. 627. 8 (*on* 2. 21)

**अनूद्यविधि** (anūdya -vidhi) *m.* injunction of what is already stated अनूद्यविधिरिति पक्षे आज्यशब्देन स्तोत्रावान्तरप्रकरणात् स्तोत्रं तत्संबन्धिघृतं वानुवदितव्यम् MayūMāli. 61. 12 (*on* i. 4. 3)

**अनूद्यात** (anūdyāta) *adj.* followed or attended by अभ्युद्ययौ हरिः ... योगिनीभिरनूद्यातो गणेशमुपसंस्थितः SkandP. iv. 62. 10.

**अनूद्यानम्** (anūdyānam) *adv.* in each and every garden धारयन्तमनूद्यानं विद्याधरवधूः क्वचित्। तमित्यद्रीन्द्रम् ...। जिनाधिपमिवासाद्य कुमारौ धृतिमापतुः MahāP. 18. 205.

**अनूद्यानुवादकत्व** (anūdyānuvādaka - tva) *n.* the state of being what restates and what is to be restated शब्दार्थयोः ... वाच्यवाचकत्वेऽवधारिते पश्चाद्विधिविधेयत्वमनूद्यानुवादकत्वं वा कल्प्यते TantrVā. 486. 22 (*on* ii. 2. 10)

**अनूद्वा** (anūdvā-) II. P. to disperse or dissipate by following (the wind), i.e. to waft up यदा वाऽअग्निरनुगछति। वायुं तर्ह्यनूद्वाति तस्मादेनमुदवासीदित्याहुर्वायुर्ह्यनूद्वाति ŚatBr. X. iii. 3. 8.

**अनूद्वास** (anūdvása) *m.* one who is liable to remove subsequently ईश्वरो वै प्रवर्ग्यमुद्वासयन्। प्रजां पशून्त्सो मपीथमनूद्वासः TaiĀ. v. 9. 11 (635. 8)

**अनूधन्** (an - ūdhán) *adj.* [ AltGr. II. 1. 93] who has no udders, udderless, cf. **अनूधस्.**

**अनूधस्** (an-ūdhás) *f.* [ AltGr. II. 1. 93; III. 311] who has no udders, udderless चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावप्येति धातवे। अनूधा यदि जीजनदधा च नु ववक्ष सद्यो महि दूत्यं चरन् RV. x. 115. 1; SV. I.i(2).2.2; नूधा(नूधाश्च स? अनूधाश्च) प्रोक्तौ सकारान्तौ मनीषिभिः NānārthaSaṁ. i. 102. 697.

**अनून** (án - ūna) *adj.* [*f.* - ā] **1A** not lacking or deficient (in quality), i.e. perfect (used as noun) the perfect one **Bi** not lacking in (lustre or brilliance), i. e. splendid **ii** not lacking (in quantity), i. e. prolific **C** (with Inst.) not lacking or deficient (in quality), i. e. endowed with **D** not empty, i. e. full (of) **2Ai** not less, i. e. fully grown **ii** not less, i. e. complete, whole **Bi** not less, i. e. much, abundant, plenty, immense **ii** not less, i. e. all, total, many **Ci** not less, i.e. of exact or same proportion **ii** not less, i. e. large **iii** not less, i. e. great **3A** (mostly with Abl.) not inferior, i. e. equal **B** not inferior, i. e. strong (used as noun) one who is not inferior, i. e. the strong one **4** not separated, i. e. incessant or continuous **1A** not lacking or deficient (in quality), i.e. perfect गृणीषेऽनूनमग्निम् RV. i. 146. 1; ii. 10. 6; iv. 2. 19; vi. 17. 4; यस्यानूना गभीरा मदा उरवस्तरुत्राः। हर्षुमन्तः शूरसातौ RV. viii. 16. 4; आ गर्भो योनिमेतु ते। अनूनः पूर्णो जायताम् RV. (Khila.) ii. 10. 2; ĀpaManPāṭha. i. 13. 1; HirGS. i. 25. 1; गात्रं गात्रमस्यानूनं कृणुतात् MaiS. iv. 13.4 (iv. 204. 1); KāṭhS. 16. 21 (i. 244. 17); AitBr. 6. 6 (165); TaiBr. III. vi. 6. 3; ĀśvaŚS. I. iii. 3. 1; ŚāṅkhāŚS. v. 17. 6; सोमस्यांशो युधां पतेऽनूनो नाम वा असि AV. vii. 81. 3; त्वां यज्ञो विष्णुर् यज्ञविष्णू अनूनं हित्वा आत्मानं देवेषु विदयामीति Atharvaprāyaścitta 3. 4; उक्षाणं वेहतमनूनं नयन्तु। ते पश्यन्तु पुरुषा ममैव MahāBhā. iii. App. I. 21 (5); अनूपराजस्य गुणैरनूनां विधाय सृष्टिं ललितां विधातुर्जगाद भूयः सुदतीं सुनन्दा RaghuVa. 6. 37; कन्याम् ... अनूनाम् ... विधिनोद्वहेत् AṣṭāSaṁ. i. 195. 7 (2. 1); शची ... अर्चयन्ती प्रसन्नैश्च भावप्रसूनैरनूनैः MahāP. 23. 101; नानानूनाननानन AlaṅkāCin. 39. 4 (comm. संपूर्णम् ); 39. 22; शिशुना शशिनानंशुनाशोऽनूनो निशोऽनिशम्। नाशाननानि ... नेशानो नानशे शनैः HarVi. 43. 220; वंशाद्भरद्वाजमुनेरननाद्गुणानतो (? वंशे भरद्वाजमुनेरनूने गुणोन्नतो) धर्म्म इवापरो[भू]त् EI. ii. 175. 3; ग्राम्या युवतया नूना मुष्टिभिः कलहं व्यधुः DvyāśraKā. 3. 10; धनैः प्रसूनैर्वसनैरनूपैः (v. l. अनूनैः)...। तमद्रिमेकं सुरभीचकार ... सः KīrtiKau. 9. 66; तपःकृशामप्यतनुप्रवृद्धैस्तनूमनूनां दधतं महोभिः। ... मुनिम् ... प्रणनाम राजा Rāgh. 2. 4; (used as noun) the perfect one अनूनाय स्वाहा KauśiSū. 122. 2; **1Bi** not lacking in (lustre or brilliance), i. e. splendid (अग्निः) श्रियो मिमीते बृहतीरनूनाः RV. iii. 1. 5 (Sāy. संपूर्णाः); x. 140. 2; सानूनां सानूनां विलोक्य रमणीयतां च सानूनाम्। सालवने सालवने विहरिष्यति सह मयात्र कदा NalaCam. 6. 65; बिभर्ति यः ... द्युतिं च धर्मप्रभवामनूनाम् KīcaVa. 5. 9; **1Bii** not lacking (in quantity), i.e. prolific अनूनमव्यस्तमसक्तमद्भुतम् ... राजसुतोऽब्रवीद्वचः BuddhaC. 9. 72; तस्यानूनमिति श्रुत्वा स्वसुः स्थानोचितं वचः। तत्तु पश्यन्नृपः कृच्छ्रान्मनोनेत्रं न्यवीवृतत् RāghPāṇ. (Dha.) 7. 84 (comm. प्रचुरम्); **1C** (with Inst.) not lacking or deficient (in quality), i. e. endowed with (of) अनूनं दर्श मा कृधि प्रजया च धनेन च AV. vii. 81. 3; ओजसापि खलु नूनमनूनं नासहायमुपयाति जयश्रीः Kirātā. 9. 33; समभूदोजसानूनः सूनुर्भरतचक्रिणः TriṣaŚaPuC. ii. 6. 126; iv. 6. 20; गोपालदेवः ... यं स्वामिनम् राजगुणैरनूनमासेवते चारुतरानुरक्ता । उत्साह° ... °शक्तिलक्ष्मीः पृथ्वीम् EI. xiv. 326. 19; xv. 296. 13; सूनुं मूर्धाभिषिक्तस्य त्वामनूनं गुणश्रिया । ... तत्राभिषिच्यमानम् ... कदा द्रष्टा ParamāKā. 40. 13; **1D** not empty, i. e. full (of) अनूनं पात्रं निहितं न एतत्पक्तारं पक्वः पुनरा विशाति AV. xii. 3. 48; AV. (P.) xvii. 40. 7; **2Ai** not less, i. e. fully grown अनूनेन बृहता वक्षथेनोप स्तभायदुपमिन्न रोधः RV. iv. 5. 1; आदित्सा्प्तस्य चर्किरन्नानूनस्य महि श्रवः RV. viii. 55. 5; RV. (Khila.) iii. 7. 5; **2Aii** not less, i. e. complete, whole धर्मार्थकामाधिगमं ह्यनूनं नृणामनूनं पुरुषार्थमाहुः BuddhaC. 10. 30; त्रितयस्यास्य पूजनात्। फलं भवत्यनूनं वै JayāS. 1. 61; सः ...। सदा वैरिवधेऽनूनां शक्तिं बिभ्रद्भयं ददौ HarVi. 43. 359; सख्यः ... प्रापुस्तुलामप्सरसामनूनाम् Yādavā. 13. 13 (comm. अविकलाम्); अनूनो जायते भोगः ... कल्पितैः स्वप्नवस्तुभिः PañcDa. 7. 178; **2Bi** not less, i. e. much, abundant, plenty, immense इन्द्रः ... वाजं नि यंमते ...। अनूना यस्य दक्षिणा पीपाय वामम् RV. vii. 27. 4; द्रव्याण्यनूनानि पटुः पुरोहितः जुहोति YogYā. 8. 3; नरपतिरनूनैरर्थैरुपछन्द्य दुहितरं मे दत्त्वा ... राज्यभारं मयि समर्पयिष्यते DaśKuC. 100. 17; अनूनमूहे संग्रामे रसमर्जुनपानतः Kapphiṇā. 18. 16; स खलु महान् कुलीनश्च यस्यास्ति धनमनूनम् NītiVā. 21. 11; अनूनं भोजनमेव कृत्वा वैद्याज्ञा न लङ्घिता AlaṅkāMañ. 138. 5; **2Bii** not less, i. e. all, total, many शतमानमनूनं धारयन्सोम-प्रतीकाः पितरस्तृण्णुतेति सुरोच्छेशं (?षं) समवनयति VaikhāŚS. 11. 5; (मनवः) अनूना नातिरिक्तास्ते यस्मात्सर्वे विवस्वतः BrahmāṇḍP. iii. 1. 36; पञ्चेन्द्रियाणां विषयाननूनान्यः प्राप्तवान् ...। स एव पूर्वार्जितपुण्यनाशान्नैकेन्द्रियं तर्पयितुं समर्थः VarāṅgaC. 12. 81; कृष्णराजः ... यश्चालुक्यकुलादनूनविवु(बु)धव्राताश्रयः ... लक्ष्मीन् (म्)...आकृष्टवान् EI. vi. 243. 4; xxiii. 218. 4; योऽयेयाययियायायं पापापापोपपान्पपौ। नृननूनानिनोऽनेनाः RāghPāṇ. (Dha.) 18. 28 (comm. प्रचुरान्); नाम्नैकनाथनामायम् ... गिरीशप्रासादं व्यरचयदनूनैरनुचरैः EI. ii. 421. 1; **2Ci** not less, i. e. of exact or same proportion तमश्च सत्त्वं च समत्वेन व्यवस्थितौ। अनुद्रिक्तावनूनौ च तत्प्रोतौ च परस्परम् MārkP. 46. 5; **2Cii** not less, i. e. large भृतान्यनूनैः प्रस्थैर्मुहुर्भूरिभिरुच्छिखानि। ... जग्राह ... लोकः ŚiśuVa. 4. 11; अभून्नृसिंहप्रतिमोरिसिंहस्तदन्वये ... वि(बि)भेद यो वैरिगजेंद्रकुंभस्थलीमनूनां नखखड्गघातैः EI. xxi. 281. 3; **2Ciii** not less, i. e. great खनिरनूनपराक्षमस्य (Read पराक्रमस्य) ... [म]ल्लपदेव आसीत् EI. iv. 236. 68; राजद्वारे सार्धयामस्य नादो निःशाणस्य प्रादुरासीदनूनः GopāKeCan. 142. 4; कोकिलयूनोऽनूनो रागो रसालमालायाम् KaṁVa. 5. 34; **3A** (mostly with Abl.) not inferior, i. e. equal (मुनिहोमधेनुम्) इमामनूनां सुरभेरवेहि RaghuVa. 2. 54; वृन्दावने चैत्ररथादनूने निर्विश्यतां सुन्दरि यौवनश्रीः RaghuVa. 6. 50; प्राह मुनिं नरेन्द्रः। प्रणम्य शुद्धान्तमुपैति पादौ तीर्थादनूनौ भवतः स्नुषेति JānaHa. 7. 19; न्यविशत भरतः परीतदूतः पितृभवनं पितृकाननादनूनम् RāmāCam. 2. 62; कुलोत्तुंगदेवो देवेंद्रत्वादनूने सुरपतिमहिमा चोडराज्येभिषिक्तः EI. vi. 339. 35; v. 77. 43; सिद्धार्था स्वामिनी सूनुमनूनं तेजसा रवेः। सुखेन सुषुवे TriṣaŚaPuC. iii. 2. 63; iv. 3. 95; कर्णभूतिर्वीरवृत्त्या व्यरोचत। तस्य ... भ्राता... अप्यनूनया RājTa. (Ka.) 8. 398; पौराः। आशापतीनां विभवादनूनां तत्रैव ते संपदमन्वभूवन् Yādavā. 13. 100; **3B** not inferior, i. e. strong नूनं नुन्नानि नानेन नाननेनाननानि नः। नानेना ननु नानूनेनैनेनानानिनो निनीः Kāvyāda. 3. 95 (comm. प्रबलेन); (used as noun) one who is not inferior, i. e. the strong one न न्यूनानां भीतिरनूनात् RāghPāṇ. (Dha.) 13. 25 (comm. अधिकबलात्); **4** not separated, i. e. incessant or continuous सद्ब्रह्मरूपम् ... अन्तःस्फुरत् तदिह नूनमनूनमर्चिः PārśvC. 7. 362 [Kośas give *anūna* in the sense of *nikhila*, NāmŚil. 1878; and give *anūna* as the meaning of *sama* and *sima*, ŚabdaRa. (Su.) 6. 36; also they give *anūna* as the synonym of following words: *akhaṇḍa*, ParaNā. 1493; KalpaK. 227. 122; *akhila*, ParaNā. 1493; KalpaK. 227. 122; *anyūna*, ParaNā. 1493; *aśeṣa*, ParaNā. 1493; KalpK. 227. 122; *kṛtsna*, ParaNā. 1493; KalpaK. 227. 122;

*nikhila*, *niśśeṣa*, KalpaK. 227. 122; *viśva*, ParaNā. 1493; KalpaK. 227. 122; *sakala*, ParaNā. 1493; KalpaK. 227. 122; *sama*, KalpaK. 227. 122; *samagra*, ParaNā. 1493; KalpaK. 227. 122; *samasta*, ParaNā. 1493; KalpaK. 227. 122; *sampūrṇa*, ParaNā. 1493; KalpaK. 227. 122; *sarva*, ParaNā. 1493; KalpaK. 227.122] [ having full power, MW.]

**अनून** (an-ūna) *n*. greatness, cf. **अनूनभाज्**.

**अनूनक** (anūna - ka) *adj*. **1A** not deficient, not less पंच शीर्षसहस्राणि आत्मभावे प्रतिष्ठिता। एकशीर्षे च जिह्वानां शता पंच अनूनका MaVastaAva. ii. 369. 11; शतान पश्चान अनूनकानां आवासु सो तत्र भवेत प्राणिनाम् SȧddhaPuṇ. 56. 12 [DBHS.]; **1B** not lacking or deficient (in quality), i. e. perfect मन्त्रेष्वाप्तानि मे यानि द्वात्रिंशल्लक्षणान्यहम्। सर्वं तत्तव गात्रेषु परिपूर्णमनूनकम् GiMs. iii (1). 275. 4; **2A** (with Abl.) not inferior, i. e. equal तेषां च प्रथमं काण्डं महामेरोरनूनकम् TriṣaŚaPuC. ii. 3. 648; **2B** not less, complete, whole पठितं श्रुतम् ... पुनः पुनरालोक्य रहस्यनूनकम्। प्रविभज्य ... स विधेयान्विदधेतमां सुधीः ŚaṅkaDigVi. (Mā.) 5. 32 [ AmaK. 2155 gives *anūnaka* as the meaning of following words: *akhaṇḍa*, *pūrṇa*, *sakala*, *samagra* ] [having full power, MW.]

**अनूनकन्धर** (anūna - kandhara) *adj*. having large neck महर्षभस्कन्धमनूनकन्धरम् ... महावराहम् (अर्जुनम्) ... गणाः समासेदुः Kirātā. 14. 40 (comm. स्थूलग्रीवम् )

**अनूनकरुणा** (anūna - karuṇā) *f*. great compassion त्रेधा वीजतनूमनूनकरुणापीयूषकल्लोलिनीम्। त्वां मातर्जपतः ... स्फुरन्तु पुलकैरङ्गानि ... मे PadyāTa. 34.

**अनूनक्लेशशेषम्** (anūnakleśaśeṣam) *adv*. with remainder of many troubles अनूनक्लेशशेषं च विवेको न स्फुरेच्चिरम् RājTa. (Ka.) 8. 3075.

**अनूनग** (anūna - ga) *adj*. going or reaching completely ते सर्पा दर्पसंपूर्णाश्चापतूणेष्वनूनगाः। अवतस्थुः शरा भूत्वा MatsyaP. 133. 26.

**अनूनगरिमन्** (anūna - gariman) *adj*. whose greatness is not inferior, i.e. of equal greatness अयं भगवतो भीष्मादनूनगरिमा द्रोणाचार्यः BālBhā. 1. 35 (6); परशुराममिश्राद् गुणैरनूनगरिमा पितुर्जगति मित्रमिश्रोऽजनि VīraMi. (Saṁskāra.) 124. 12.

**अनूनगुण** (anūna - guṇa) *m*. splendid or excellent virtue(s) अम्बिकासूनुना नूनमनूनगुणधारिणा। एताः ... विवाहयितुमर्हसि PāṇḍaC. 1. 393; नार्जयन्ति स्वतः स्वं ये पित्र्यमेव तु भुञ्जते। ताननूनगुणोपेतानपि लोको न मन्यते ParamāKā. 63. 50.

**अनूनगुण** (anūna-guṇa) *adj* . having splendid or excellent virtue(s) स पुनरच्छिददच्छिदुरोर्जितं धनुरनूनगुणः सगुणं शरैः Rāgh. 19. 42.

**अनूनगुरु** (anūna - guru) *adj*. not less, i.e. very big, excessively large मध्योऽधिकं तनुरनूनगुरुर्नितम्बः ... अद्भुतयौवनायाः SāhiDa. 112. 6 (comm. अतिस्थूलः) [of undiminished weight, very heavy, MW.]

**अनूनगुलिकामुख** (anūnagulikā-mukha) *adj*. having perfect ball, i.e. round shape in the mouth or opening सुवर्णवरतारताम्रतरुनिर्मितान्यक्षतान्यनूनगुलिकामुखानि ... परिकल्पयेदुदितलक्षनेत्राण्यलम् KalyāKā. 8. 50.

**अनूनचिन्ता** (anūna-cintā) *f*. incessant or continuous anxiety दुर्गन्धमस्वास्थ्यमनूनचिन्तां विचार्य को वा विरतिं न याति SarvaVeSāSaṁ. 32.

**अनूनतमस्** (anūna-tamas) *adj*. having not less, i.e. complete or total ignorance केषांचिन्महतामनूनतमसां निर्बन्धमात्राश्रयादन्योन्याध्यसने निरास्पदमिदं शून्यं जगत्स्यात् SaṁkṣeŚā. 1. 31 (i. 40. 18); 3. 239 (ii. 289. 9)

**अनूनता** (anūna-tā) *f*. **A** the state of not being less, i.e. fully grown मूलादीनां सुगन्धित्वम् ...। अनुनाद्वा(अनूनता)तिरिक्तत्वरूपत्वं च न (प्र)शस्यते BhelaS. 16.4 (1.9); **B** the state of not being deficient (in quality), i.e. perfect प्रतिक्रियाविरोधश्च प्रतिसंधिरनूनता। ... साधनोत्तमता नानादृष्टिशिष्टिरनूनता ... ह्येता युक्तयः AnuVyā. 48B. 8 (*on* 3. 3)

**अनूनतेजस्** (anūna - tejas) *adj*. **1** having not less, i.e. great lustre क्षीरस्य पूर्णे चषके निरस्तो मणिर्यथा मारकतो महार्हः। क्षीरम् ... करोति तच्छायमनूनतेजाः SaṁkṣeŚā. 3. 64 (ii. 186. 11); **2** having not less, i. e. great valour or might नरेशवंशप्रभवोऽसि कश्चिन्नरेश्वरो नूनमनूनतेजाः Surath. 13. 83; श्रीवीरपूर्वो धवलः क्षितीन्दुरस्याभवत्सूनुरनूनतेजाः VasaViKā. 3. 46.

**अनूनत्व** (anūna-tva) *n*. the state of not being inferior, i.e. the state of being equal or superior प्राकाम्यमविहतेच्छता। तद्विघातादूनत्वम्। अनूनत्वे वा द्वयोरपि प्राकाम्यविघातः कार्यानुत्पत्तेः TattvVai. 30 14 (*on* 1. 24); न प्राणे मनो लीयत इति पूर्वः पक्षः। मनसः प्राणादनूनत्वात् TattvPrakā. 207A. 9 (*on* iv. 2.3)

**अनूनदता** (anūnada - tā) *f*. the state of not giving less इह सल्लकीदलचयानदता करिणां गणेन मधुरं नदता। बहुभिर्मदाम्बुभिरनूनदता क्रियते स्थलेऽपि Surath. 4. 32.

**अनूनदर्शन** (anūna - darśana) *n*. not deficient, i.e. perfect perception तपश्च सज्ज्ञानमनूनदर्शनं त्रिरत्नमेतत् ... संसृतिमोक्षकारणम् VarāṅgaC. 13. 23.

**अनूनद्वादशाङ्गुलि** (anūna - dvādaśāṅguli) *adj* . not less than twelve fingers (in length) (बस्तिप्रयोगे) गुलिकासा(नां) तु नेत्रं स्यादनूनद्वादशाङ्गुलिम्(लि) BhelaS. 257. 17 (8. 6)

**अनूनधामन्** (anūna - dhāman) *adj*. of not less, i. e. splendid or excellent splendour अधिष्ठितं नूनमनूनधामभिः पुरं सुरैः कल्पिततन्महर्द्धिभिः Kapphiṇā. 2. 49.

**अनूनधी** (anūna - dhī) *adj*. of not inferior wisdom, i. e. intelligent (अध्ययनम्) तत्सम्यगाकर्णयितुं भद्रासूनुरनूनधीः। प्रासादाद् द्रुतमुत्तीर्य वसतिद्वारमाययौ PariPar. 11. 136.

**अनूननखनाराचव्रण** (anūna - nakhanārācavraṇa) *m*. large marks of arrows in the form of nails यूनः ... अनूननखनाराचव्रणं बिभ्रतः। ... इन्दुः ... प्रोत्साहयामासिवान् VasaViKā. 8. 70.

**अनूननरलक्षण** (anūnanara - lakṣaṇa) *adj*. having characteristics of perfect man (तिलकावली) सा काले सुषुवे सूनुमनूननरलक्षणम् PārśvC. 2.11.

**अनूननवयौवनयोग** (anūnanavayauvana - yoga) *m*. attainment, i. e. appearance of full prime youth चारुता वपुरभूषयदासां तामनूननवयौवनयोगः ŚiśuVa. 10. 33; VakroJī. 14. 1; VyaktiVi. 62. 19; 70. 7; AlaṅkāŚe. 13. 0 (55); मत्तता दयितसंगमभूषा भूषयत्यसमसायकलक्ष्मीम्। साप्यनूननवयौवनयोगम् VyaktiVi. 63. 11.

**अनूननामन्** (anūna - nāman) *adj*. having many names अनूननामानमिनं नमामि ĪśvaŚ. 92 (comm. अनन्ताभिधानम्)

**अनूननेत्रविभक्त** (anūnanetra- vibhakta) *adj*. divided into two equal sides or wings (*lit*. carriages) रागिदाराक्षनिहतं कृत्वा विष्कम्भमार्जितम्। अनूननेत्रवी(?वि)भक्तं परिणाहं समीपगम्। ... सर्वतोभद्रकं लिङ्गम् ŚilpaRa. ii. 2. 73 (? 72)

**अनूनपरिमण्डल** (anūna - parimaṇḍala) *adj*. having a large expanse कलत्रस्थानमेतस्याः स्थानीकृत्य मनोभुवा। विनिर्जितं जगन्नूनमनूनपरिमण्डलम् MahāP. 12. 28.

**अनूनपल्लवीय** (anūnapallav-īya) *adj*. made of large leaves मधुरं दधि ...। पिब नूनमनूनपल्लवीये पुटके संपुटितोष्ठपल्लवेन GopāKeCan. 101. 32.

**अनूनप्रज्ञ** (anūna - prajña) *adj*. of great wisdom शंस नारद प्रज्ञानमन्यस्मादनूनप्रज्ञात्स्वर्गस्य लोकस्य AVPari. 1 (46).1.

**अनूनप्रेमभार** (anūna - premabhāra) *adj*. of great quantity of affection or love (रघुनाथः) निखिलगुरुरनूनप्रेमभारं नृलोकं जननिगृहमियेष प्रोषितोऽथो निवेष्टुम् PadmP. iv. 3. 34.

**अनूनभाज्** (anūna-bhāj) *adj*. possessing greatness धीरोदात्तं धर्मजन्मा बभाषे। गाम्भीर्येणानूनभाजाम्बवोऽसौ राशिः सत्त्वस्याश्रयः शौर्यवृत्तेः RāghPāṇ. (Dha.) 11. 13 (comm. प्राचुर्यं भजता)

**अनूनभास्** (anūna-bhās) *adj*. possessing not less, i. e. immense lustre धीरोदात्तं धर्मजन्मा बभाषे। गाम्भीर्येणानूनभासाम्बवोऽसौ राशिः सत्त्वस्याश्रयः शौर्यवृत्तेः RāghPāṇ. (Dha. ) 11. 13 (comm. प्रचुरकायकान्तिः)

**अनूनभोग** (anūna-bhoga) *adj*. of great enjoyment सर्वे सुराः ... अनूनभोगा दिविजा रमन्ते VarāṅgaC. 9. 47.

**अनूनभोजनरूप** (anūnabhojana - rūpa) *adj*. of the form of large quantity of food 'न नूनं भोजनं कार्यम्' इति ...। वैद्यमुखादवगत एवार्थोऽनूनभोजनरूपः कृतः AlaṅkāMañ. 138. 7.

**अनूनम्** (anūnam) *adv*. **1A** not lacking in, without deficiency अनूनमासीदसुरस्य कामैर्वैरोचनेः श्रीरपि चाक्षयासीत् MahāBhā. iii. 27. 13; पिता सुराणाम् ... भवस्यनूनम् ... स्वराजितानाम् ĪśvaŚ. 51; **1B** holding nothing back, completely तदिदं यदि कायिकी रुजा भिषजे तूर्णमनूनमुच्यताम् Saund. 8. 4; नातिद्रुताशी तत्सर्वमनूनं प्रतिपद्यते KāśyaS. 257B. 32; पिता सुराणां क्षपितासुराणां भवस्यनूनं विभवस्य नूनम्। ... खराजितानाम् ĪśvaŚ. 51 (comm. अनूनं कृत्वा ... आकाशे राजितानाम्); **2** in abundance, abundantly भ्रमरहितविकचसुमनोमुनिभिर्विनिकाममयमितोऽनूनम् VasaViKā. 12. 28.

**अनूनमति** (anūna - mati) *adj*. of great intelligence नूनमनूनमतेरस्य सचिवपतेरुपमानदानव्यावर्णनेन यशः क्षीरार्णवेऽपि जन्मापूर्वं पङ्कारोपणमपि स्यात् HammīMaMa. 1. 11(3)

**अनूनमन्त्र** (anūna - mantra) *adj.* of perfect counsel ते राक्षसं युद्धमनूनमन्त्राः क्रीडामिवायन्ति नृपाः स्म चण्डाम् Rāvaṇā. 14. 55.

**अनूनमाना** (anūna - mānā) *adj.* (*f.*) of great pride or self - respect (सुरभिः) रसितेन रसादनूनमाना मधुना क्षीबतया तथा विभक्ता। अपराद्धमपि प्रियं यथासौ सभयास्थापयत प्रसाद्यपक्षे Kapphiṇā. 13. 29.

**अनूनमुद्** (anūna - mud) *adj.* of great joy or delight युवराजमङ्गदमुपेत्य सानुगं हनुमाननूनमुदमभ्यवन्दत Rāgh. 14. 67.

**अनूनयत्** (an - ūnayat) *adj.* **A** not lessening, i. e. completely observing अवश्यमवशोऽप्येष वशी स्वावश्यकं दधौ। षड्भेदम् ... अनूनयन् MahāP. 11. 75; **B** not lessening, i.e. increasing or enhancing (भरतः) प्रोत्साहितो देवैः जयोद्योगमनूनयन्। गङ्गापातमभीयाय MahāP. 32. 163.

**अनूनरत्नत्रयतन्त्र** (anūnaratnatraya - tantra) *adj.* depending on the (methodology of) three jewels not lacking (in lustre), i.e. splendid पद्मरथः ... कृत्वा चात्मानमनूनरत्नत्रयतन्त्रं मोक्षामृतपात्रमजायत YaśasCam. ii. 289. 9.

**अनूनर्द्धि** (anūnarddhi) *adj.* possessed of not less, i. e. great affluence पृथिवीं शासतस्तस्य (दशरथस्य) ... अनूनर्द्धेः शरदामयुतं ययौ RaghuVa. 10.1.

**अनूनलक्षणाढ्य** (anūnalakṣaṇāḍhya) *adj.* rich in (or perfect in) all characteristics सत्स्थानस्थितिभिरनूनलक्षणाढ्यैः। रामाणां करणगणैरिवाङ्गहारा नाजहुः श्रियमथ मौक्तिकैर्न हाराः HarVi. 17. 28.

**अनूनलक्षणोपेत** (anūnalakṣaṇopeta) *adj.* endowed with all (good) qualities जनतान(नु)मताद्यप्रभृति प्रभृ(भु)ताभृतम्। अनूनलक्षणोपेतं नूनं सुनुमुं तव। कः ... नोररीक्रियते ParamāKā. 24. 39.

**अनूनलक्ष्मी** (anūna - lakṣmī) *f.* not less, i.e. great prosperity सूरेण सहैव सर्वं कृतं विमानेषु च भूषणानि। अनूनलक्ष्मीरिह भुक्तिमुक्तिम् (करोति) MānaSā. 14. 210.

**अनूनवर्चस्** (ánūna-varcas) *adj.* having full splendour or radiance (अग्ने) शुक्रवर्चा अनूनवर्चा उर्दियर्षि भानुना R̥V. x. 140. 2 (Sāy. संपूर्णतेजस्कः); TaiS. IV. ii. 7. 3; MaiS. ii. 7. 14 (ii. 95. 14); KāṭhS. 16. 14 (i. 237. 11); KapiKaS. 25. 5 (98. 17); VājaS. 12. 107; VājaS. (K.) 13. 7; ŚatBr. VII. iii. 1. 30.

**अनूनवस्तुका** (anūnavastu-kā) *adj.* (*f.*) having not inferior, i.e. superior high substance (origin) आकृतिप्रत्ययाद् एनामनूनवस्तुकां संभावयामि Mālavikā. 1. 5 (14) [complete in substance or essence, MW.]

**अनूनविक्रम** (anūna - vikrama) *adj.* of great valour or power राजन्ननूनविक्रम भवान् सर्वग्रहालम्बनम् RasGaṅ. 406. 4.

**अनूनविभव** (anūna-vibhava) *adj.* of great glory or splendour शूरः सूनृतवागनूनविभ[वो] वंशावतंसः सुतः EI. ii. 412. 8.

**अनूनवेग** (anūna - vega) *m.* not less, i.e. great or full speed अनूनवेगादयमद्वितीयः ... वीर ... तुरङ्गमस्ते SūktiMu. 102. 2.

**अनूनवेग** (anūna-vega) *adj.* having not less, i.e. great or full speed पिबत्यसौ पश्चिमदक्षिणाशां नूनं खगेशोऽयमनूनवेगः Yādavā. 18. 71.

**अनूनव्यसनप्रधूनन** (anūnavyasana - pradhūnana) *adj.* remover of continuous sorrow सुरानन त्वाम् ... स्तुवे ...। मनस्यनूनव्यसनप्रधूननम् SaraKaṇṭhā. 283. 11.

**अनूनशक्ति** (anūna-śakti) *adj.* having or endowed with (three) great powers (जयसिंह) क्रोशाष्टकोत्कर्षमहन्यहन्यच्छिनत्स पन्थानमनूनशक्तिः DvyāśraKā. 14. 21 (comm. शक्तित्रयोपेतः)

**अनूनश्री** (anūna-śrī) *f.* the number 500 सा मे नूनमनूनश्रीरिति संख्या परा हि या। ते ... मन्त्रा जपाद्धागापवर्गदाः LakṣmīT. 32. 62 (F.N. अनूनश्रीः - ५००)

**अनूनश्री** (anūna-śrī) *adj.* (n-i) **1** greatly prosperous, with abundant means प्रत्यष्ठापि मठोऽनूनश्रीर्द्वारिऽवारितातिथिः RājTa. (Ka.) 8. 3320; **2** very glorious, of great glory निर्निमेषाम्बुजव्याजात्कृत्वा नेत्राणि कोटिशः। नूनं सरोऽप्यनूनश्रि तदालोकनकौतुकात् PāṇḍaC. 8. 504.

**अनूनसत्त्व** (anūna-sattva) *adj.* of great strength or valour गङ्गाधरः ... तस्याभवत्सूनुरनूनसत्त्वो जनार्दनाह्वः करिवाहिनीशः SūktiMu. 0. 17; विनष्टचेष्टम्। सौमित्रेरधृत त मनूनसत्त्वः ... हनूमान् Rāgh. 18. 24.

**अनूनसत्त्वक** (anūnasattva - ka) *adj.* having great spiritual essence सोमशर्मा ... यावज्जन्म् ...। चन्द्रप्रभं जिनं कृत्वा हृदयेऽनूनसत्त्वकः। ... जातो देवः BṛKathāK. 2. 15.

**अनूनसंपद्** (anūna-sampad ) *adj.* of immense glory देवैः ... मघोनोऽनूनसंपदः। चक्रवर्तित्वाभिषेकोऽवि(?को व्य)धीयत यथाविधि TriṣaŚaPuC. iv. 6. 46.

**अनूनसाध्वसरस** (anūna-sādhvasarasa) *adj.* of strong feeling of fear यस्मान्नूनमनूनसाध्वसरसो देवस्त्रिशूलायुधः कैलासाग्रमशिश्रयत् ...। तेनास्मत्कमला बलादपहृता शुम्भेन Surath. 7. 73.

**अनूनसार** (anūna -sāra) *adj.* not inferior in strength or vigour (अतिथिः) उत्पादयामास ...। अनूनसारं निषधान्नगेन्द्रात्पुत्रं यमाहुर्निषधाख्यमेव RaghuVa. 18. 1; SaraKaṇṭhā. 249. 22.

**अनूना** (anūnā) *f.* **1Ai** name of an Apsaras (daughter of Prāvā) अनवद्याम् ... अनूनामरुणाम् ... इति प्रावा व्यजायत MahāBhā. i. 59. 44; **1Aii** name of an Apsaras (daughter of Prādhā) अनूनामरुणप्रियाम् ... प्राधा व्यजायत HariVaṁ. App. I.42 (385); **1B** name of an Apsaras अप्सरसः ... ननृतुः ... अनूना चानवद्या च MahāBhā. i. 114. 50; दिव्या वाश्चाप्सरोगणाः। एते त्वामभिषिञ्चन्तु ... । अनवद्या सत्यकामा चानूना ViṣṇuDhaP. ii. 22. 64; **2** (an -ūnā) abundance जगत्यनूना भवति हि रुचिरा Vār. 1 *on* P. viii. 2. 55.

**अनूनाग्निगु** (anūnāgni-gu) *adj.* having large or huge fire as (his) eye नग्नानुगेनानूनाग्निगुनानेनानुगामिना। ... गुप्ता विभुना हरिवाहिनी HarVi. 43. 262 (comm. बहलवह्निर्गौर्विलोचनं यस्य)

**अनूनाङ्ग** (anūnāṅga) *adj.* of perfect or well - developed limbs अभूदभिधया धन्या ... तस्याः ...। आस्ते सूनुरनूनाङ्गः ŚāliC. 1. 19.

**अनूनाधिक** (an-ūnādhika) *adj.* [*f.* - ā] **i**. neither less nor more, i.e. equal विधानाम् इयं समा सर्वत्रानूनाधिका सर्वेषु तन्त्रेषु ... सर्वकालं च सर्वं ददती सिद्धिसंघम् आख्याता ParāTri. 209. 7; **ii** neither less nor more, i. e. same नीलमिदं पश्यामि, संकल्पयामि ... इत्यादौ नीलाभासोऽसौ स्वरूपतोऽनूनाधिकः PratyabhiVi. i. 403. 9 (*on* i. 8.2)

**अनूनाधिकम्** (anūnādhikam) *adv.* in neither less nor more, i.e. in an equally balanced manner धृतिमान् ... अनूनाधिकमाचरन्। ... पिबेन्मद्यम् AṣṭāSaṁ. ii. 54. 3 (4. 9)

**अनूनानतिरिक्त** (anūnānatirikta) *adj.* neither less nor more, i.e. proportionately developed (सिन्धुरम् ... परीक्ष्य) कलिङ्गजम् ... चतुर्विधैरपि प्रदेशैरनूनानतिरिक्तम् YaśasCam. i. 297. 8.

**अनूनानतिरिक्तार्थ** (anūnānatiriktārtha) *m.* [ Loc.] for the sake of (conveying) the sense of neither less nor more विधानानात्वमिति तावत्प्राप्तम्, अभ्याससामर्थ्यात्, अन्यथा हि अनूनानतिरिक्तार्थे द्विराम्नानम् अनर्थकमेव स्यात् BrahmSūBh. (Śaṅ.) 675. 3 (*on* iii. 3. 35)

**अनूनानधिक** (anūnānadhika) *adj.* neither less nor more (than desired in number) ग्रथयेन्मणीन्। अनूनानधिकांस्तुल्यान् ... अक्षमालाविधिस्त्वयम् LakṣmīT. 39. 47.

**अनूनानल** (anūnānala) *m.* large, i.e. huge fire नुन्नानूनानलेनैलीलूनाननेनलेन नो HarVi. 43. 176( comm. अनल्पेन वह्निना)

**अनूनित** ( an-ūnita) *adj.* not lessened, i. e. not made low, not defeated or surpassed लक्ष्मीः ... कलधौतगिरेस्तटानि सान्नूनितानि हसति स्म HarVi. 5. 131(comm. अपरिभूतानि)

**अनून्नी** (anūnnī-) 1. U. to take up (i. e. fill out) (the goblet) subsequently होतुंश्चमसमनून्नयन्ते। होतानुंशंसति TaiBr. I. iv. 5. 2; उन्नेतर्होतुश्चमसमनून्नय सोमं मातिरीरिचः ŚatBr. IV. iv. 2. 17; ŚatBr. (K.) V iv. 4. 13; ĀpaŚS. xiv. 1. 7; KātyŚS. x. 6. 20; xiii. 14. 11; यदि पर्युन्नयेरन् पुनस्समवनयध्वमिति ब्रूयात्। अथ तमेवानून्नयेरन् JaimiBr. 1.353; अध्वर्युः प्रदक्षिणमावृत्य ... होतुश्चमसमनून्नयध्वमुभयतः शुक्रान् कुरुध्वम् ... इति यथासंप्रैषं ते कुर्वन्ति BaudhŚS. i. 220. 14; मुख्यं मुख्यं चमसमनून्नयति ĀpaŚS. xiv. 3. 11; चमसोन्नयनकाले वाहृत्य दध्नोन्मृद्य तद्यमसमनून्नयेत् KātyŚS. x. 9. 31.

**अनूप** (anūpá) *m.* [P. vi. 3. 98; enumerated in the *kacchādigaṇa*, GaṇPā. 35. 12; also enumerated in the *kṣubhādigaṇa*, GaṇPā. 68. 16; GaṇRa. 2. 162 (196); 5. 328 (366); AltGr. I. 103; II. 1. 100; III. 228] **1Ai** watery country (abounding in trees), marshy land **ii** produce of watery country or marshy land **Bi** what is rich in water, i.e. pond **ii** water tank **Ci** land near water **ii** bank or shore of river or sea, slope of mountain **2** the word *anūpa* **3** animals found in watery country **4Ai** name of a king (who wanted to become a seer) **ii** name of a R̥ṣi (belonging to Bhr̥gu family) **iii** name of a R̥ṣi **iv** name of a R̥ṣi (belonging to Bhāradvāja family) **v** name of a R̥ṣi, teacher of the Sāmaveda **Bi** name of country (belonging to Sindhurāja) **ii** name of a country (belonging to Puṣyagupta) **c** name of a community or a country at Vindhya **1Ai** watery country (abounding in trees), marshy land अनूपे गोमानोभिरक्षाः R̥V. ix. 107. 9. SV. II. iii (1). 12. 2; LāṭyāŚS. vii. 9. 8; DrāhyŚS. xx. 4. 11; NidāSū. 2. 2 (1.1); Nir. 5. 3 (93. 3) (*but* PW.; MW.

pond); नद्योऽनूपवनान्ताश्च ...। लोडिता वसुधा सर्वा न च पश्यामि जानकीम् Rāmā. v. 11. 4; स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा ManuSm. 7. 192 (ManuBh. अनूपः पानीयप्रायः); Hitopa. 3. 79; अनूपोऽहितदेशानाम् (श्रेष्ठः) CaraS. i. 25. 40 (1941 Ed.); देशः ...। प्रचुरोदकवृक्षो यो निवातो दुर्लभातपः। अनूपो बहुदोषश्च CaraS. iii. 8. 48 (1941 Ed.); vii. 1. 8 (1922 Ed.); अनूपेषु प्रदेशेषु नाशितेषु दुरात्मभिः। जनास्तन्निलयाः सर्वे संप्रयाता इतस्ततः BrahmāṇḍP. ii. 56. 27; कृषिः शिल्पम् ...। सेवानूपं नृपः YājñaSm. 3. 42 (Aparā. बहुवृक्षजलो देशोऽनूपः); देशस्तु त्रिविधो ज्ञेयो ह्यनूपो जाङ्गलस्तथा। साधारणः HāriS. i. 4. 2; KalyāKā. 2. 19; त्रिभिः करैस्त्रिपुरुषे तोयम्। एतदनूपे वाच्यम् BṛSaṁ. 54. 89; 104. 61; सप्त कोङ्कणाः ... अनूपाः Bārhas. 3. 108; स्स्वलत्तुलाकोटिनिनाद-कोमलः। शौरेरुपानूपमपाहरन्मनः स्वनान्तरात् ŚiśuVa. 12. 44; अनूपं तु कफोल्बणम्। ... त्रिधा भूदेशमादिशेत् AstāSaṁ. i. 3. 21 (1. 1); AṣṭāHṛ. i. 1. 23; सोऽनूपो मधुररसयोनिः AṣṭāSaṁ. i. 100. 1 (1. 18); श्लीपदं जायते तच्च देशेऽनूपे भृशं नृणाम् AṣṭāSaṁ. ii. 309. 15 (6. 34); व्याधिबहुलोऽनूपो देशः ManuBh. i. 353. 6 (*on* 4. 60); वातश्लेष्मातको देशो बहुवृक्षो बहूदकः। अनूप इति विख्यातः AgniP. 279. 15; ViṣṇuDhaP. ii. 56. 96; दक्षिणे सागरेऽनूपे पञ्च तीर्थानि सन्ति वै SkandP. i (2). 1. 73; बहूदकनगोऽनूपः कफमारुतरोगवान् SiddhYo. 81. 65; BhāvPra. (Bhā.) 5.7; बह्वम्बुबहुवृक्षश्च ...। देशोऽनूपः BhāvPra. (Bhā.) 6 (13). 27; BhojanKu. 179. 26; श्यामलितानूपैः कूपैः ... पवित्रीकृतसीमा हेमाङ्गदनामा जनपदः GadyCin. 5. 8; स्यादनूपः सरित्प्रायः स्निग्धोच्छ्रितबहुद्रुमः SamarāSū. 8. 4; अनूपाञ्जङ्गलीकुर्वन् जङ्गलानप्यनूपयन्। उर्वीमनुर्वीकुर्वाणः ... जरासंधः सोऽयमन्यः प्रजापतिः PāṇḍaC. 12. 321; अनूपो बहुवृक्षजलो देशः SmṛtiCan. ii. 475. 5; प्रभावति ... अनूपेऽम्बुनिपानं च मरौ नद्यवतारणम् (यत्त्वया त्रिजगन्नाथो ध्रियते कुक्षिकन्दरे) MalliC. 4. 41; अनूपे सजले स्थाने पुमान्देवे(?शे) ऽथवा जले। आरामं रोपयेत् ... अनूपे अतिस्निग्धे CaturCin. i. 1044. 20; बहुजलो निम्नो देशोऽनूप उदाहृतः AśvaVai. 11. 35; उदग्रवेगानुदधेरनूपे वीतीन् क्षणं विश्रमयांबभूव (अश्वान्) Yādavā. 13. 39; अनूपे तु वृषाश्वानां गजोष्ट्राणां तु जाङ्गले। ... निवेशाद्रक्षणं भवेत् ŚukraNī. 4 (7). 175 [*but* Kośas treat *anūpa* expressing watery country as *adj*. - AnekāSaṁ. 3. 430; NānārthāSaṁ. ii. 51. 51; ViśvaPra. 105. 17; MediK. 109. 13; ViśvaLoK. 229. 13; KośaKaTa. 2. 6831; ŚabdaRaSaK. 212. 1]; **1Aii** produce of watery country or marshy land अनूपो नद्यादिकच्छः तदुत्पन्नशाकादिविक्रयः तदुपजीवनम् BālaKrī. ii. 19. 6 (*on* 3. 42); बहुवृक्षजलो देशोऽनूपः तेन च तत्रत्यकन्दमूलफलान्युपजीवनं लक्ष्यते Aparā. 936. 18 (*on* 3. 41); **1Bi** what is rich in water, i.e. pond त्रयंस्तपन्ति पृथिवीमनूपाः ṚV. x. 27. 23 (*but* Sāy. अनूपाः वर्षादीनामानुपूर्व्येण वप्तारः भावयितारः। प्रक्षेप्तारः इत्यर्थः); **1Bii** water tank ग्रामगृहादेस्तु यत् बाह्यं तत् अग्रामादिरूपं न उच्यते प्रत्येकं वाटानूपकुड्यतुलादेः बाह्यत्वप्रसङ्गात् अपि तु तत्संनिकटम् PratyabhiVi. i. 234. 3 (*on* i. 5. 9); जीर्णानुद्धरता ... देवालयांस्तन्वता येनानूपनि-पानकूपसरसीसत्रप्रपाः ... तस्मै ... दास्ये सुतां सद्गतिम् VasaViKā. 14. 24; **1Ci** land near water बृहच्छाल इवानूपे ... कथं जिष्णुश्चरिष्यति MahāBhā. iii. 36. 24; यसः (शः) कर्णदेवः ... वो(बो)धयति ... देउलापंचेलग्रामाः (मः) ... सजाङ्गलानूपः ... गंगाधरस(श)र्म्मणे ... अस्माभिः शासनत्वेन संप्रदत्तः EI. xii. 213. 29; xxi. 95. 28; **1Cii** bank or shore of river or sea, slope of mountain गोमतीं गोयुतानूपामतरत् सागरंगमाम् (राघवः) Rāmā. ii. 43. 9; गङ्गानूपे तत्र तिष्ठत Rāmā. ii. 78. 5; iii. 33. 11; सागरान् सागरानूपान् ...। सर्वाणि कपयो जग्मुः Rāmā. iv. 972* (2); **2** the word *anūpa* अयमपीतरोऽनूप एतस्मादेव। अनूप्यते उदकेन। अपि वान्वाबिति स्यात् Nir. 2.22 (55.4); न ह्यचोः समाहारोऽस्ति। नन्वयमस्ति गाङ्गेऽनूप इति। नैषोऽचोः समाहारः। अन्योऽ-यमुदात्तानुदात्तयोः स्थान एक आदिश्यते MahāBh. i. 207. 20 (*on* i. 2. 31); (ऊदनोर्देशे) दीर्घोच्चारणं किमर्थं न उदनोर्देश इत्येवोच्येत। का रूपसिद्धिः अनूपः। सवर्णदीर्घत्वेन सिद्धम्। न सिध्यति। अवग्रहे दोषः स्यात् MahāBh. iii. 173.7 (*on* vi. 3. 98); iii. 389.9 (*on* viii. 2. 6); कच्छादेः। कच्छ इत्येवमादिभ्यो देशवाचि-भ्योऽण् भवति शेषे। वुञोऽपवादः। ... द्वीप। अनूप JaineVyā. 191. 9 (*on* iii. 2. 111); KāśiVṛ. *on* iv. 2. 133; Prasā. i. 797. 9; 416. 8 (*on* v. 4. 117); देशेऽभिधेयेऽनूप इति निपात्यते। अन्यत्रान्वीपः CāndraVṛ. *on* v. 2. 114; अनोरुत्तरस्याप ऊकारादेशो भवति देशेऽभिधाने। अनूपो देशः KāśiVṛ. *on* vi. 3. 98; *on* viii. 2. 3; *on* viii. 4. 39; PrakriKau. i. 646. 6; SiddhāKau. 210 A. 6 (*on* vi. 3. 98); समापानूपौ। निपात्यौ। ... अनूपो देशः MugdhaBo. 6. 71 (62. 18); **3** animals found in watery country (स्वप्ने) दुर्गमध्वानगमनमनूपानां च सेवनम्। अभ्यङ्गश्चैव गात्राणां तिलगोमयकर्दमैः ...। दर्शनं वाप्यथैतेषां व्याधीनां संप्रवेशनम् AVPari. 68 (5). 11; अनूपा मधुराः स्निग्धा गुरवो वह्निसादनाः RājNi. 285. 23 (F.N. अनूपा जलानुगतदेशभवे प्राणिवर्गेऽनूपसंज्ञा); **4Ai** name of a king (who wanted to become a seer) अनूपो वै धीतोनिरकामयतोभयं ब्रह्म च क्षत्रं चावरुन्धीय, राजा सन् ऋषि स्याम् JaimiBr. 3. 97; **4Aii** name of a Ṛṣi (belonging to Bhṛgu family) आर्ष्टिषेणास्तेषां पञ्चार्षेयः प्रवरो भवति भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति BaudhŚS. iii. 421. 2; अनूपः ... इत्यादय आर्ष्टिषेणाः VīraMi. (Saṁskāra.) 619. 13; 623. 11; NirṇaSi. 210. 27; **4Aiii** name of a Ṛṣi अनूपनामकस्य ऋषेः पुत्रस्य वाध्र्यश्वस्य साम Sāy. *on* ĀrṣeBr. i. 2. 11; **4Aiv** name of a Ṛṣi (belonging to Bhāradvāja family) °भरद्वाजमन्त्रणानूपाः ... इत्याद्या गोत्रहेतवो मुनयः ŚabdaRa. (Vā.) 410; **4Av** name of a Ṛṣi, teacher of the Sāmaveda. MW.; **4Bi** name of a country (belonging to Sindhurāja) (रावणः) अनूपं सिन्धुराजस्य ददर्श त्रिदिवोपमम् Rāmā. iii. 33. 27; अनूपं सिन्धुराजस्य प्रपेदुर्यदुपुङ्गवाः HariVaṁ. 84. 22; **4Bii** name of a country (belonging to Puṣyagupta) [व्]ऐश्येन पुष्यगुप्तेन कारितम् ... अनुपसृष्टपूर्व्वनगरनिगमजनपदानाम् ... पूर्वापराकरावन्त्य-नूपनीवृदानर्त्त° ... °निषादादीनाम् ... पतिना EI. viii. 44. 11; **4C** name of a community or a country at Vindhya अनूपास्तुण्डिकेराश्च ...। एते जनपदाः सर्वे विन्ध्यपृष्ठनिवासिनः BrahmāṇḍP. i. 16 . 65; VāmaP. 13. 56 [Kośas give *anūpa* as a synonym of the following words: *kaccha*, ParyāRaMā. 1349; AbhidhāCin. 953; ŚabdaRa. (Vā.) 778; ParaNā. 575; *saṁyadvara*, NānārthāSaṁ. iii. 81. 637; Kośas give *anūpa* as the meaning of the following words: *kaccha*, TrikāŚe. iii. 3. 80; ViśvaPra. 31. 1; NānārthāSaṁ. i. 56. 150; MediK. 30. 2; ViśvaLoK. 65. 1; KośaKaTa. 2. 4284; and they give *anūpa* in the sense of the following words: *mahiṣa*, TrikāŚe. iii. 3. 273; NānārthāSaṁ. ii. 51. 51; MediK. 109. 13; ViśvaLoK. 229. 13; KośaKaTa. 2. 6831; ŚabdaRaSaK. 212. 1; *sairibha*. AnekāSaṁ. 3. 430]

**अनूप** (anūpa) *n.* [Pradī. vii. 86. 18 (*on* viii. 2. 6)] **1A** watery country, marshy land अनूपानि वैदेहि सन्त्यगम्यानि कानने Rāmā. ii. 654* (6); अनूपमहित-देशानाम् (श्रेष्ठम्) CaraS. i. 25. 39 (1922 Ed.); कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः। सेवानूपं नृपो भैक्षमापत्तौ जीवनानि तु YājñaSm. 3. 42 (Mitā. अनूपं प्रचुरतृणवृक्षजलप्रायः प्रदेशः); DīpKa. 80. 23 (*on* 3. 42); VīraMi. 821. 27 (*on* 3. 42); VīraMi. (Lakṣaṇa.) 259. 16 [AmaK. 577; KalpaK. 4. 4]; **1B** type of *vāstu* (wherein water is found) जाङ्गलमथवानूपं तथोभयं वा गृहं परीक्षेत Sārā. 33. 3; (भूतलम्) अनूपमिति विख्यातं खात्वैवा(?व) जलदर्शनात् MayaMa. 14. 4; ŚilpaRa. ii. 19. 1; **1C** flesh of big acquatic animal and fish पिशितमष्टधा। महामृगैरप्चरैश्च मत्स्यैश्चानूपमुच्यते KośaKaTa. 1. 4694; **2** the word *anūpa* त्र्यचां स्वाङ्गनां द्वितीयमुदात्तम् ... लघ्वादीनां तु अनूपम् PhiṭSū. 3. 55 (627 A. 2) [ViśvaPra. 105. 17 gives *mahiṣa* as the meaning of *anūpa*] [marsh, bog, buffalo, frog, kind of partridge, elephant, Apte]

[1]**अनूप** (anūpa) *adj.* [*f.*-ā] [Nyās. ii. 1128. 25 (*on* viii. 4. 39)] **A** being or growing near the water वृकोदरः ... आरुजन् रथिनः ...। गङ्गावेग इवानूपांस्ती-रजान् ... द्रुमान् MahāBhā. v. 50. 35; **Bi** having flowing water, watery or marshy अनुगता आपोऽस्मिन्नित्यनूपो देशः JaineVyā. 313. 24 (*on* iv. 3. 203); अनूप इति। अनुगता आपोऽस्मिन्निति विग्रहः Nyās. ii. 476. 23 (*on* vi. 3. 98); देशः ...। अनूपस्साम्बुः Vaija. 38. 45; शीतवातजलप्राया ... अनूपा भूः प्रकीर्तिता ParyāMu. 23. 12; अनूपोऽम्बुप्रायदेशे तु विशेष्यलिङ्गः KośaKaTa. 2. 6831; **Bii** abounding in water, full of water, watery हा नाथाः पतिताः प्रतापनृपति(तेः) क्रोधार्चिषीति द्विषद्घोषाणां तदनूपमश्रुभिरहो जातं स्थलं मारवम् PratāYaBhū. 231. 8 (comm. जलप्रायम्); **C** grown on marshy or watery land घनैः प्रसूनैर्वसनैरनूपैः पत्रैः पवित्रैरशनैः प्रधानैः। नृत्तैर्वधूनां च गृहीतचित्तैर्गानैः सदानैर्विततामपूज्यम् KīrtiKau. 9. 66 [wet, Apte]

[2]**अनूप** (anūpa) *adj.* making ripe, sowing or working in succession, benefactor (त्रयस्तपन्ति पृथिवीमनूपाः) पर्जन्यो वायुरादित्यः शीतोष्णवर्षैरोषधीः पाचयन्ति। अनूपा अनुवपन्ति लोकान्त्स्वेन स्वेन कर्मणा Nir. 2. 22 (55. 4)

**अनूपक** (anūpa-ka) *m.* name of a tribe (inhabiting the marshy land) शिरोऽभूद्दुपदो राजा ...। अनूपगाः (v. l. अनूपकाः) किराताश्च ग्रीवायाम् (व्यूहस्य) MahāBhā. vi. 46. 46 [name of a prince of Paścimānūpaka and Sāgarānūpaka, pw.]

**अनूपग** (anūpaga) *m.* name of a tribe (inhabiting the marshy land) शिरोऽभूद्दुपदो राजा ...। अनूपगाः किराताश्च ग्रीवायाम् (व्यूहस्य) MahāBhā. vi. 46. 46.

**अनूपग्राम** (anūpa- grāma) *adj.* (used as noun) (people) having their village in the marshy land वर्षारात्रमनूपग्रामाः पूरवेलामुत्सृज्य वसेयुः ArthŚā. ii. 129. 7 (4. 3) (comm. अनूपे ग्रामाः येषां ते)

**अनूपचर** (anūpa-cara) *adj.* (used as noun) (elephant) roaming around

exclusion from unreality न ह्यनृतव्यावृत्तिबोधनं विना विज्ञानमानन्दं ब्रह्मेत्यत्र शून्यवादव्यावृत्तब्रह्मसिद्धिः AdvaiSi. 696. 1.

**अनृतव्यावृत्तिमात्र** (anṛtavyāvṛtti-mātra) *n.* mere exclusion from unreality यदि च तत्रानृतव्यावृत्तिमात्रम् अबाधितस्वरूपं वा सत्त्वम् ... तर्हीहापि तथास्तु Nyāyāmṛ.95A.8.

**अनृतव्यावृत्तिसिद्धि** (anṛtavyāvṛtti-siddhi) *f.* establishment of the exclusion from unreality सत्यज्ञानादिवाक्ये ज्ञानपदेनैवानृतव्यावृत्तिसिद्धौ सत्यपदवैयर्थ्यं स्यात् Nyāyāmṛ. 148B. 7.

**अनृतव्रत** (anṛta-vrata) *adj.* **A** of false vow अनृतव्रतलुब्धाश्च पुण्ये चैव प्रजाः स्थिताः MatsyaP. 144. 35; सोऽनृतव्रतदुःशीलानसतो यक्षराक्षसान् ... अवधीत् BhāgP. viii. 1. 26; **B** of deceptive vow, hypocrite धिक्कृतं सर्वलोकेन कूटसाक्ष्यनृतव्रतः VarāP. 202. 52.

**अनृतशत** (anṛta-śata) *n.* hundreds of falsehoods एकतः सर्वसत्यानि तथानृतशतानि च। धर्माधर्मकृतां मध्ये स्थापितासि ... त्वं तुले MatsyaP. 274. 60.

**अनृतशपथ** (anṛta-śapatha) *m.* false swearing (as a witness) अपह्रियमाणसुवर्णादिद्रव्यजात्यपेक्षोऽनृतशपथदोषोऽन्यथाशपथे स्वल्पे ManuBh. ii. 124. 21 (*on* 8. 111)

**अनृतसंहित** (anṛta-saṁhita) *adj.* settled with untruth अथो खल्वाहुः कोऽर्हति मनुष्यः सर्वं सत्यं वदितुं सत्यसंहिता वै देवा अनृतसंहिता मनुष्या इति AitBr. 1. 6 (31) [not true to the contract, stipulation, MW.]

**अनृतसंकर** (anṛta-saṅkara) *adj.* of false vow स्तेनः प्रमुक्तो राजनि याचन्ननृतसंकर इति ĀpaDS. i (6). 19. 16 (comm. संगरः प्रतिज्ञा ... ककारश्छान्दसः)

**अनृतसंगर** (anṛta-saṅgara) *adj.* of false vow स्तेनः प्रमुक्तो राजनि यावन्न(द्)नृतसंगरे HirŚS. xxvi. 5. 117 (84. 18)

**अनृतसंप्राप्त** (anṛta-samprāpta) *adj.* who has arrived on false pretext or deception युध्येतानृतसंप्राप्तं यथार्हायुधवाहनम् NītiSā. 14. 80.

**अनृतसंभव** (anṛta-sambhava) *m.* possibility of false speech or lie 'अनेन हेतुना त्वयि संप्रति निक्षिपामी'त्यनृतसंभवात् कारणकथनमपदेशः ManuBh. ii. 162. 19 (*on* 8. 182)

**अनृतसंभावना** (anṛta-sambhāvanā) *f.* possibility of (being) fraud or deceptive परीक्षणं दूतकादेः साक्षिणः कार्यं न पुनर्गुणान्वितस्य नृपाध्यक्षयोर्वा तत्रैकैकस्याप्यनृतसंभावनासंभवात् SmṛtiCan. iii. 219. 7.

**अनृतसर्वस्व** (anṛtasarvasva) *m.* name of a man, MW.; *nt.*

**अनृतसान्त्व** (anṛta-sāntva) *adj.* of false assurance पापेनानृतसान्त्वेन बाले नित्यं सुखोचिते। रामं स्थापयता राज्ये सानुबन्धा हता ह्यसि Rāmā. ii. 7.25.

**अनृतसूत्र** (anṛta-sūtra) *n.* rule regarding falsehood सत्यानृतसूत्रम् पुरुषाः सैकेष्टगुणा द्विगुणेष्टोना भवन्त्यसत्यानि। पुरुषाकृतिस्तैरूना सत्यानि भवन्ति वचनानि GaṇiSāSaṁ. 5. 215 (4)

**अनृतस्तेयतत्पर** (anṛtasteya-tatpara) *adj.* solely devoted to falsehood and theft यस्यास्ति नरकक्रोडनिवासे रसिकं मनः। सोऽस्तु हिंसानृतस्तेयतत्परः सुतरां जनः Vāgbhaṭa. 4. 76.

**अनृतस्तेयमहावन** (anṛtasteya-mahāvana) *n.* great forest (in the form) of lie and theft हिंसानृतस्तेयमहावनान्तर्बम्भ्राम्यते रेचितसाधुमार्गः NemiNir. 13.9.

**अनृतस्तेयादि** (anṛta-steyādi) *adj.* falsehood, theft etc. (अधर्मस्य) तस्य तु साधनानि ... हिंसानृतस्तेयादीनि NyāyKa. 280. 13.

**अनृतस्वन** (anṛta-svana) *m.* false sound नानृतस्वनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ViṣṇuDhaP. ii. 131. 18.

**अनृतस्वरूप** (anṛta-svarūpa) *adj.* of the form of unreality सत्यादिपदानां शुद्धे ब्रह्मणि लक्षणेति। अनृतस्वरूपे शबले सत्यत्वायोगः योगे वा ततो नानृतव्यावृत्तिः AdvaiSi. 692. 11.

**अनृतहानिजा** (anṛtahāni-jā) *adj.* (*f.*) arisen or produced from the loss of falsehood अनृतहानिजया निजयाख्यया। भजति गोपगणैरभिराध्यताम् Yādavā. 6. 10.

**अनृतहीन** (anṛta-hīna) *adj.* free from falsehood कौटिल्यानृतहीनानां स्वच्छानां कुलमार्गिणाम् ... साधूनां किङ्करः कलिः MahNirvāT. 4. 67.

**[1]अनृता** (anṛtā) *f.* **A** name of a daughter of Dakṣa रुद्राणां प्रददौ कन्या दशैनां धर्मवित्तदा। ... विमला निर्मलानृता SkandP. vii (1). 199. 16; **B** (anṛtā) woman speaking false असत्ययुक्तेऽप्यनृते ... अनृता स्त्रियाम् NānārthāSaṁ. ii. 56. 113.

**[2]अनृता** (a-nṛtā) *f.* name of a form of goddess Devī (*lit.* other than human) वसा मज्जा च त्वक्चाहं वु(?द्दि)ष्टिर्वागनृता नृता DevīBhāP. iii. 6.10.

**अनृतांश** (anṛtāṁśa) *m.* unreal aspect, i.e. modification अनृतांशो न बोद्धव्यस्तद्बोधानुपयोगतः PañcDa. 13. 56 (comm. अनृतांशस्य विभारस्य)

**अनृतांशावबोधन** (anṛtāṁśāvabodhana) *n.* knowledge of unreal aspect, i.e. modification तत्त्वज्ञानं पुमर्थं स्यान्नानृतांशावबोधनम् PañcDa. 13. 56.

**अनृताक्षरप्रतिपत्ति** (anṛtākṣara-pratipatti) *f.* knowledge of unreal letters or symbols अकारादिसत्याक्षरप्रतिपत्तिर्दृष्टा रेखानृताक्षरप्रतिपत्तेः BrahmSūBh. (Śaṅ.) 313. 2 (*on* ii. i. 14)

**अनृताक्षरविन्यास** (anṛtākṣara-vinyāsa) *m.* arrangement of false letters or syllables वाक् च माता द्विजातीनाम् ... अनृताक्षरविन्यासादमङ्गत्या ह्यसंस्कृता SkandP. v (1). 4. 40.

**अनृताख्यान** (anṛtākhyāna) *n.* **A** name of a musical instrument '*ṭaṭṭarī*' टट्टरी त्वनृताख्यानलम्पापटहवाद्ययोः AnekāSaṁ. 3. 553; **B** false speech, cf. **अनृताख्यानशील.**

**अनृताख्यानशील** (anṛtākhyāna-śīla) *adj.* (used as noun) (one) who is habituated to false speech or lie अनृताख्यानशीलानां जिह्वाच्छेदो विशोधनम् KātySm. 778.

**अनृताडम्बरम्** (anṛtāḍambaram) *adv.* in false arrogance or show ग्रामया [३क]चकस्तुतमागधवन्दिनटनर्तक्युपाध्यायासत्यवादबटुविटवणिजगोपालवेश्याकुनृपेष्वनृताडम्बरं वक्तव्यः Bārhas. 1. 54.

**अनृतातिग** (anṛtātiga) *adj.* going beyond falsehood परोपतापपैशुन्यमात्सर्येर्ष्यानृतातिगः। ... गुणानुरागी मितवागात्मसंपत्प्रकीर्तिता NītiSā. 4. 17; 5. 14; AgniP. 238. 10.

**अनृतात्मक** (anṛtātma-ka) *adj.* [*f.* -ikā] **1** of false disposition सा च भूरिवसोर्वागनृतात्मिकैव MālaMā. 4. 98; **2** of the nature of unreality एतस्मादेव पुरुषात् ... जायते उत्पद्यतेऽविद्याविषयो विकारभूतो नामधेयोऽनृतात्मकः प्राणः MuṇḍUBh. 327. 3 (*on* ii. 1. 3); सत्यानृतात्मकमिदं मिथुनं मिथश्चेदध्यस्यते किमिति शून्यकथाप्रसङ्गः SaṁkṣeŚā. 1. 33 (i. 42. 15); न च भञ्जकमीक्षते न तस्योपगमे दुःखजडानृतात्मकस्य ŚaṅkaDigVi. (Mā.) 15. 137.

**अनृतात्मता** (anṛtātma-tā) *f.* the state of being of false nature पारमार्थ्यं क्वचिच्छास्त्रं क्वचिद्याप्यनृतात्मताम्। विदधन्मानतां जह्यात् परस्परविरोधतः BṛĀraUBhVā. v. 1. 47.

**अनृतात्मन्** (anṛtātman) *adj.* of the nature of falsehood सनातनं ब्रह्म विशुद्धमाद्यम्। ... न देयमेतच्च यथानृतात्मने शठाय क्लीबाय न जिह्मबुद्धये BrahmP. 244. 33; *m.* **1** false disposition, cf. **अनृतात्मक 1; 2** nature of unreality, cf. **अनृतात्मक 2.**

**अनृतादि** (anṛtādi) *adj.* **1** beginning with false speech or lie अनृतादिहिंसान्ताः ये दमदोषत्वेन स्मृताः त एते विपर्ययाः स्मृताः SanatBh. 253. 18 (*on* 2. 24); **2** false speech or lie etc. स्त्रीव्यसनसंगेन राजकार्येषु च निर्वेदः ... अर्थध्नेषु चानृतादिषु प्रसङ्ग इति ManuBh. ii.17. 6 (*on* 7. 52); वाचा अनृतादीनि SarvaDaSaṁ. 11. 84; तदध्ययनरहितानां तच्छाखिनां हिंसानृतादिभिः प्रत्यवायो न स्यात् ŚivārkaMaDī. i. 46. 23 (*on* i. 1.1); i. 492. 25 (*on* i. 3. 39); **3A** falsehood etc. रागाद्यपेतं हृदयं वाग्दुष्टानृतादिना JābālaDaU. 2. 8; BhaviP. 163A. 20 (i. 112. 3); ManvaMu. 67. 10 (*on* 2.160); **3B** falsehood etc. personified तान् हृष्ट्वा जनान् धर्मक्रियापरान्। लोभानृतादयो जग्मुस्तद्देशात् दुःखिता भृशम् KalkiP. i. 3. 35; **4** unreality etc. अनृतादेरपोहं तु स्वयमेव हि मन्यते AnuVyā. 68B. 8 (*on* 4.2); व्यावर्तमानत्वमपि ब्रह्माप्यनैकान्तिकम् अनृतादिभ्यो व्यावृत्तत्वेनाभ्युपगमात् ŚrutaPra. iA. 131. 24 (*on* i. 1. 1); **5** the word *anṛta* etc. अनृतादिवद् नञः प्रतिपक्षवाचित्वात् PadMañ. *on* KāśiVṛ. *on* P. ii. 3. 17(172. 15); (प्रकृतिः) इयमनृतादिपदैरुपचर्यते VedāntTaSā. 20. 3; **6** invalidity etc., cf. **अनृतादिभाग.**

**अनृतादिदोषरहिता** (anṛtādidoṣa-rahitā) *adj.* (*f.*) free from the fault of falsehood etc. सा च दैवी वाक् अनृतादिदोषरहिता शुद्धा BṛĀraUBh. 197. 15 (*on* i. 5. 18)

**अनृतादिधर्म** (anṛtādi-dharma) *m.* property such as unreality सत्यादीनामनृतादिधर्मनिवृत्तिपरत्वात् ... शून्यार्थतैव प्राप्ता सत्यादिवाक्यस्य TaiUBh. 232. 4 (*on* 2. 1)

**अनृतादिनिवर्तन** (anṛtādi-nivartana) *n.* abstaining from falsehood etc. वाचो गुप्तता रक्षा अनृतादिनिवर्तनात् ManvaVi. 216. 7 (*on* 2. 160)

**अनृतादिनिषेध** (anṛtādi-niṣedha) *m.* refutation of unreality etc. अनृतादिनिषेधेन सत्यादीनामुपक्षयात् TaiUBhāVā. 53. 1(2)

**अनृतादिप्रतिषेधक** (anṛtādi-pratiṣedhaka) *adj.* which prohibits or negates the unreality etc. अनृतादिप्रतिषेधकव्यावृत्ताकारज्ञानेनैव अनृतादिसंशयादिनिवृत्त्युपपत्तेरन्यथासिद्धत्वात् AdvaiSi. 678. 1.

**अनृतादिभाग** (anṛtādi-bhāga) *m.* part or portion referring to invalidity etc. वेदस्याप्यनृतादिभागपरिहारेण प्रामाण्योपपत्ते: NyāySu. (Ja.) 79B. 9 (*on* i.1.1)

**अनृतादिभ्रान्ति** (anṛtādi-bhrānti) *f.* illusion of unreality etc. व्यावहारिक्या व्यावृत्त्या प्रातिभासिक्यनृतादिभ्रान्तिर्निवर्तते AdvaiSi. 694. 4.

**अनृतादियोग** (anṛtādi-yoga) *m.* association with falsehood etc. वाङ्मनसयोरनृतादियोगात् GuruCandr. i. 305. 5; LaCandr. 371. 9.

**अनृतादिवचन** (anṛtādi-vacana) *n.* speech of falsehood etc. कामवाद: अश्लीलानृतादिवचनम् ViraMi. (Saṁskāra.) 327. 19.

**अनृतादिविरोधित्व** (anṛtādivirodhi-tva) *n.* the state of being contradictory to unreality etc. अनृतादिविरोधित्वं यद्यस्याभ्युपगम्यते AnuVyā. 45A. 7 (*on* 3. 2); अनृतादिविरोधित्वं च ... शून्यस्यापि मन्यते NyāySu. (Ja.) 409B. 10 (*on* ii. 2. 8)

**अनृतादिव्यवच्छेद** (anṛtādi-vyavaccheda) *m.* exclusion from unreality etc. सत्यादिपदैरनृतादिव्यवच्छेदोक्ति: Nyāyāmṛ. 464B. 4.

**अनृतादिव्यावर्तक** (anṛtādi-vyāvartaka) *adj.* which excludes unreality etc. आनन्दादिपदेष्वपि द्रष्टव्यम्।... कथं तेषां नानृतादिव्यावर्तकत्वम् AdvaiSi. 692. 15; अनृतादिव्यावर्तकं यत् सत्यत्वादिरूपं व्यावृत्तं विशेषरूपम् LaCandr. 678. 19.

**अनृतादिव्यावृत्तस्वरूप** (anṛtādivyāvṛtta-svarūpa) *adj.* of the nature excluded from unreality etc. यत्र शाखायामानन्दादिपदानामन्यतमं न श्रूयते तत्रापि तदुपसंहर्तव्यम्। यत: ... ब्रह्मणोऽनृतादिव्यावृत्तस्वरूपस्य प्रतिपत्त्युपाय: LaCandr. 695. 35.

**अनृतादिव्यावृत्ति** (anṛtādi-vyāvṛtti) *f.* exclusion from unreality etc. अनृतादिव्यावृत्तेश्च बोधकानां वेदान्तानाम् अप्रामाण्यम् Nyāyāmṛ. 261B. 8; ब्रह्मणि अनृतादिव्यावृत्ति: ब्रह्मज्ञानाबाध्या Nyāyāmṛ. 545B. 7; AdvaiSi.789.7; अनृतादिव्यावृत्त्याकारेण तत्सिद्धौ साफल्यात् AdvaiSi. 693. 22; LaCandr. 696. 24; शून्यवादिव्यावृत्तं ब्रह्म सिध्यतीत्यनृतादिव्यावृत्तिनिश्चयस्य द्वारत्वं व्यर्थम् LaCandr. 696. 27.

**अनृतादिसंशय** (anṛtādi-saṁśaya) *m.* doubt regarding unreality etc. अनृतादिप्रतिषेधकव्यावृत्ताकारज्ञानेनैव अनृतादिसंशयादिनिवृत्त्युपपत्तेरन्यथासिद्धत्वात् AdvaiSi. 678. 1; श्रुतिजन्येन सत्यत्वाद्युपलक्षितशुद्धब्रह्मज्ञानेन शुद्धब्रह्मण्यनृतादिसंशयनिवृत्ति: LaCandr. 693. 36.

**अनृताद्य** (anṛtādya) *adj.* false speech or lie etc. (कुर्यात्) खरोष्ट्रगोहेमतुलायदासपापानृताद्यं रविपुत्रवारे VasiS. 13. 7.

**अनृताद्यन्यबोधक** (anṛtādyanya-bodhaka) *adj.* expressive of what is other than unreality etc. अनन्तपदस्यापरिच्छिन्नबोधकत्ववत् सत्यादिपदमप्यनृताद्यन्यबोधकम् LaCandr. 696. 29.

**अनृताधर्मरुचि** (anṛtādharma-ruci) *adj.* having the liking for, i.e. addicted to falsehood and wickedness सर्वे पृथिव्यां भूभुजो भविष्यन्ति। ... बृहत्कोपास्सर्वकालमनृताधर्मरुचय: ViṣṇuP. iv. 24. 71.

**अनृतानन्द** (anṛtānanda) *n.* a type of Raudradhyāna (in which one behaves with wrong intention or accuses wrongly and thinks about the evil of others), Jaina L.

**अनृतानभिधान** (anṛtānabhidhāna) *n.* absence of telling of lie उभयत्रानृतानवि(?भि)धानसाम्येऽपि सत्याभिधाननियमाधिक्यात् ManvaVi.164.24 (*on* 2.83)

**अनृतानर्थकविभाग** (anṛtānarthaka-vibhāga) *m.* division as false and meaningless अनृतं किंचिद्वच: किंचिदनर्थकं दशदाडिमादि, किंचित् सत्यम् अन्यथानृतानर्थकविभागो न स्यात् BrahmSi. 102. 5.

**अनृतान्य** (anṛtānya) *n.* other than lie नापि अनृतान्येन कार्यं न साधयेत् GuruCandr. i. 305. 7.

**अनृतापवर्ग** (anṛtāpavarga) *adj.* which liberates from the unreal (world) स्यान्मे तवाङ्घ्रिशरणं सृतिभिर्भ्रमन्त्या यो वै भजन्तमुपयात्यनृतापवर्ग: BhāgP. x. 60. 43.

**अनृतापार्थकादिभेद** (anṛtāpārthakādi-bheda) *m.* distinction as false and incoherent etc. अनृतापार्थकादिभेद: क्वचिदपि शब्दस्य ... न संभवति TattvPradī. (Ci.) 69. 14.

**अनृतापिधान** (anṛtāpidhāna) *adj.* covered with what is unreal त इमे सत्या: कामा अनृतापिधानास्तेषाꣳ सत्यानाꣳ सतामनृतमपिधानं यो यो ह्यस्येत: प्रैति न तमिह दर्शनाय लभते ChāndoU. viii. 3. 1-2; ChāndoUBh. 484. 8 (*on* viii. 3. 1)

**अनृतापिधान** (anṛtāpidhāna) *n.* cover of what is unreal कथमनृतापिधाननिमित्तं(?त्त:)तेषामलाभ: (सत्यानाम् कामानाम्) ChāndoUBh. 484. 13 (*on* viii.3.1)

**अनृतापिहितस्वरूप** (anṛtāpihita-svarūpa) *adj.* of the nature of being covered by what is unreal पूर्वमनृतापिहितस्वरूप: पश्चात् ब्रह्मोपासनया ... तत्समो भवति GoviBh. 49. 7 (*on* i. 3. 22)

**अनृताभिधान** (anṛtābhidhāna) *n.* **1** false speech, telling of lie सत्यं वदितव्यम्। तच्च यथाविहितं तत्र स एव धर्मो यत्र वानृतं तत्रानृताभिधानमेव धर्म इति ManuBh. ii. 117. 25 (*on* 8. 103); गोबीजेति गवाद्यपहारे यत्पापं तत्तेऽनृताभिधाने स्यात् DīpKa. 47. 27 (*on* 2. 74); 103. 14 (*on* 3. 279); अनृताभिधानमित्येतत्प्रत्येकमपात्रीकरणं ज्ञेयम् ManvaMu. 463. 13 (*on* 11. 69); अनृताभिधाने ... प्रायश्चित्तमाह ViraMi. 1023. 13 (*on* 3. 279); **2** uttering, i.e. giving false testimony or evidence सत्यसाक्षिण:। पूयन्ते अनृताभिधानेन पापेन न सम्बध्यन्त इति ManuBh. ii. 188. 8 (*on* 8. 257); (तत्र साक्ष्यनृतं वदेत्) तत्पावनाय तस्यानृताभिधानस्य प्रायश्चित्तेन शोधनाय सारस्वत: ... चरु: प्रागुक्तो निर्वाप्य: ViraMi. 518. 1 (*on* 2. 83); *adj.* (used as noun) (one) who utters, i.e. gives false testimony, cf. **अनृताभिधानत्व.**

**अनृताभिधानजनित** (anṛtābhidhāna-janita) *adj.* arisen or produced from uttering, i.e. giving false testimony or evidence साक्षिण: ... तस्यानृताभिधानजनितपापस्य प्रकृष्टां शुद्धिं कुर्वाणा: ManvaMu. 308. 11 (*on* 8. 105)

**अनृताभिधानजन्य** (anṛtābhidhāna-janya) *adj.* **1** arisen or produced from false speech or telling of lie यत्र देशे सभां विद्वत्संहतिरूपां धर्म: सत्याभिधानजन्योऽनृताभिधानजन्येनाधर्मेण पीडित आगच्छति ManvaMu. 290. 19 (*on* 8. 12); **2** arisen or produced from uttering, i.e. giving false testimony or evidence सामान्यतोऽनृताभिधानजन्यपापस्यानपवादेन प्रायश्चित्तसंभवात् ViraMi. 518. 4 (*on* 2. 83)

**अनृताभिधानत्व** (anṛtābhidhāna-tva) *n.* the state of being one who utters, i.e. gives false testimony or evidence 'दिव्यै: कार्यं परीक्षेत राजा सत्स्वपि साक्षिषु'। तत्र हि साक्षिणामनृताभिधानत्वं विधास्यति Aparā. 630. 5 (*on* 2.22)

**अनृताभिधायिन्** (anṛtābhidhāyin) *adj.* who utters, i.e. gives false testimony or evidence साक्षिणोऽनृताभिधायिनो वाग्देवताकैश्चरुभि: सरस्वतीं यजेरन् ManvaMu. 308. 10 (*on* 8. 105)

**अनृताभियोग** (anṛtābhiyoga) *m.* false accusation or charge व्यवहार इवानृताभियोगं तिमिरं निर्जितवत्यथ प्रकाशे ŚiśuVa. 20. 41 (comm. मिथ्याभिशंसनम्)

**अनृताभिशंसन** (anṛtābhiśaṁsana) *n.* false accusation or charge राजगामि पैशुनं गुरोरनृताभिशंसनं महापातकसमानि GautDS. iii. 3. 10; ManvaMu. 460. 29 (*on* 11. 55); राजकुलात्तेन सह विवादो निर्बन्धोऽनृताभिशंसनं वा ManuBh. ii. 385. 21 (*on* 11. 54); गुरूणामाधिक्येनाधिक्षेप: अनृताभिशंसनम् Mitā. 411. 19 (*on* 3. 228); अलीकनिर्बन्धोऽनृताभिशंसनम् Aparā. 1047. 17 (*on* 3. 228); अनृताभिशंसने पञ्चशतदण्ड इति व्यवस्थेति प्रतिभाति DaṇḍaVi. 203. 4; 202. 13; 254. 20.

**अनृताभिशंसिन्** (anṛtābhiśaṁsin) *adj.* who praises or pays homage falsely तदिमे मूढा उपजीवन्त्यभिष्वङ्गिणस्तर्याभिघातिनोऽनृताभिशꣳसिन: MaiU. 7. 10.

**अनृताभिशस्त** (anṛtābhiśasta) *adj.* accused or charged falsely यत्र कश्चित् कंचिदुद्दिश्यान्यायेन गृहीतस्व: स्वयं प्राणांस्त्यजति तद्विषयं व्याख्येयं न हि तत्रानृताभिशस्त इति विशेषणोपादानम् BālaKrī. ii. 167. 13 (*on* 3. 282½ (289½) )

**अनृताभिसंध** (anṛtābhisandha) *adj.* (used as noun) (one) intent on, i.e. given to untruth or falsehood सोऽनृताभिसंध: अनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति ChāndoU. vi. 16. 1; तस्करदृष्टान्तेन चानृताभिसंधस्य बन्धनं दर्शयति BrahmSūBh. (Śaṅ.) 310. 14 (*on* ii. 1. 14); 310. 17 (*on* i. 1. 14); सत्याभिसंधस्यार्थप्राप्तिरनृताभिसंधस्यानर्थप्राप्ति: AdvaiSi. 836. 11.

**अनृताभिसंधत्व** (anṛtābhisandha-tva) *n.* the state of being (one) intent on, i.e. given to untruth or falsehood अनृताभिसंधत्वप्रयुक्तबन्धेन साधर्म्येण स्तेन: संसारिणाम् ... अस्तेन: ऐक्यज्ञानिनां दृष्टान्त: LaCandr. 836. 35.

**अनृताभिसंधि** (anṛtābhisandhi) *m.* false intention or notion स: दह्यते ... अनृताभिसंधिदोषेण ChāndoUBh. 407. 5 (*on* vi. 16. 1); न च सत्यानृताभिसंधिमात्रमिह विवक्षितम् Nyāyāmṛ. 597A. 9.

**अनृताभ्यनुज्ञान** (anṛtābhyanujñāna) *n.* permission for fraud or deception न तु वाणिज्ये शास्त्रेण सत्यानृताभ्यनुज्ञानम् ManvaMu. 144. 15 (*on* 4. 6)

**अनृताम्भ:प्राप्ति** (anṛtāmbhaḥ-prāpti) *f.* obtaining false water, i.e. mirage शठमरुरनृताम्भ:प्राप्तये तान्प्रयुङ्क्ते (अध्वगान्) Subhāṣi. 943.

**अनृतार्थ** (anṛtārtha) *m.* **A** sense of (the word) *anṛta* (मिथुर्मिथ:) उकारान्तमप्यनृतार्थे केचित् GaṇRa. 1. 16 (37); **B** false intention, cf. **अनृतार्थवत्**; *adj.*

referring to the unreal or non-existing (entity), cf. **अनृतार्थता.**

**अनृतार्थता** (anṛtārtha-tā) *f.* the state of referring to the unreal or non-existant (entity) अतीताजातयोर्वापि न च स्यादनृतार्थता। वाचः कस्याश्चिदित्येषा बौद्धार्थविषया मता PramāVār. 1. 209.

**अनृतार्थवत्** (anṛtārtha-va(n)t) *adj.* whose intention is false, whose objective is deceptive पितुश्च पुत्रस्य च तामसः स्यात्पुत्रो विषान्नं प्रददौ द्विजेभ्यः। तद्वर्जितं तैरनृतार्थवद्भिरतश्च मिथ्या पितृकार्यमत्र VarāṅgaC. 25.66.

**अनृतालाप** (anṛtālāpa) *m.* false speech रौद्रः संग्रामहेतुकः। ... उपघातानृतालापवाक्पारुष्यादिभिर्भवेत् NāṭaLaRaK. 1918.

**अनृतालिङ्गित** (anṛtāliṅgita) *adj.* embraced by falsehood यस्या नखशिखमनृतालिङ्गितमङ्गं जनिष्यनेकासु Mukundā. 93.

**अनृताश्रितत्व** (anṛtāśrita-tva) *n.* the state of being based on unreality सत्त्वं त्रिकालाबाध्यत्वमेवेति न तस्य श्रौतत्वहानिः तस्यानृतं प्रत्यधिष्ठानत्वेऽपि अनृताश्रितत्वाभावेन तद्व्यावर्तकत्वसंभवात् AdvaiSi. 692. 6.

**अनृतिक** (anṛt-ika) *adj.* (also used as noun) untruthful स लोकः पुण्यकर्तृणां नापि युद्धपराङ्मुखैः। नायज्वभिर्नानृतकैः (v.l. नानृतिकैः) ... द्रष्टुं शक्यः कथंचन MahāBhā. iii. 44. 5; viii. 27. 24; उभावानृतिकावेतौ न मृषा कर्तुमर्हसि MahāBhā. xii. 192. 72; न नास्तिको नानृतकः (v.l.नानृतिकः) ... नाविद्वान्विद्यते तदा Rāmā. i. 6. 14; न यान्ति (लोकान्) ताननृतिका इष्ट्वा क्रतुशतैरपि Rāmā. ii App. I. 18 (28); ii. 101. 12 (v.l.); BuddhaC. 2.11.

**अनृतिन्** (anṛt-in) *adj.* **1** untruthful नानृजुः (v.l. नानृती) ... न च पापकृत् स्नाति तीर्थेषु MahāBhā. iii. 90. 11; मा नः कुले ... कश्चिदस्तु ... मित्रद्रोही नैकृतिकोऽनृती वा MahāBhā. v. 36. 30; लुब्धाश्चानृतका (v.l. °तिन)श्चैव पुष्ये जायन्ति भारत MahāBhā. vi. 11. 12; ये वै लोकाश्चानृतानाम् (v.l. अनृतिनाम्) ... तानाप्नु-वामहे MahāBhā. vii. 16. 29; न नास्तिको नानृतको (v.l. नानृती) न कश्चिदबहुश्रुतः Rāmā. i. 6. 14; हृतसारमिदं राज्यम् ... दत्त्वाप्यश्रद्धया मे त्वं भविष्यस्यनृती नृप Rāmā. ii. 846* (4); ये त्वनृतिनस्ते लोकावर्जनार्थं किंचिदनुतिष्ठन्त्यन्यत्त्यजन्ति ManuBh. i. 40. 16 (*on* 1. 81); नाम्ना वज्रकवाटेन महापाते तदानृती ... प्रतुदेत् AgniP. 203. 14; लुब्धोऽनृती दाम्भिकश्च स्वप्रशंसापरायणः। यजन्यज्ञैर्जगद्भन्ति SkandP. i (2). 45. 12; न चेमां विद्यामश्रद्धधानाय ब्रूयात् ... नानृतिने AvyaU. 7; कथं नानृतिनो देव भवामो भवता सह PadmP. v. 28. 22; **2** (used as noun) (one) who gives false testimony, false witness पिशुनानृतिनोः ... अन्नं न भोक्तव्यम् YājñaSm. 1. 165; अनृती कृतकौटसाक्ष्यः ManuBh. i. 401. 25 (*on* 4. 214); VīraMi. (Āhnika.) 498 19; पिशुनानृतिनोश्चान्नम् ... भुक्त्वा चरेत् कृच्छ्रम् ViṣṇuDhaP. ii. 73. 11; अनृती परोपद्रवप्रसङ्गेऽनृतवक्ता BālaKrī. i. 118. 14 (*on* 1. 164); अनृती मिथ्यावादी Aparā. 240. 20 (*on* 1. 166); DīpKa. 20. 22 (*on* 1. 165); VīraMi. 240. 10 (*on* 1. 165)

**अनृतीकर्तुम्** (anṛtī-kartum) *inf.* to falsify, to make (truthful into) untruthful पुण्यशीलस्तु धर्मात्मा सत्यव्रतपरायणः। पार्थिवो नानृतं कर्तुं (v.l. नानृतीकर्तुं) न्याय्यो लंके गुरुर्मया Rāmā. ii App. I. 12 (6)

**अनृतीषह्** (an-ṛtīṣah) *adj.* not enduring affliction or suffering युत्प्रावृषोमी अनृतीषहो भीपरीततः कुत्र नु राजहंसाः। यास्यन्ति DvyāśraKā. 6.67 (comm. न ऋतिं पीडां सहन्ते)

**अनृतु** (an-ṛtú) *m.* **1** time or period not conducive to conception (usually twelve days after menstruation) आंशयेत् ... दीक्षितविमितान्नानृतुभिः क्रम्यमेषः MaiS. iii. 6. 7 (iii. 68. 13) (*but* MW. *ind.* unseasonably); ताभिः सह समापेतुर्ब्राह्मणाः . . ऋतावृतौ ... न कामान्नानृतौ तथा MahāBhā. i. 58. 6; नानृतावाह्वयेत्स्त्रियम् MahāBhā. xii. 235. 6; अनृतावृतुकाले वा ...। प्रोषितस्तु स्त्रियं गच्छेत् MahāBhā. xiv. App. I. 4 (2404); VṛGautaSm. 596. 4 (14); अनृतावृतुकाले च मन्त्रसंस्कारकृत्पतिः। सुखस्य नित्यं दातेह ManuSm. 5. 153; ViṣṇuDhaP. ii. 34. 8; (आर्तवम्) तदेवातिप्रसङ्गेन प्रवृत्तमनृतावपि। असृग्दरं विजानीयात् SuśruS. iii. 2. 18; AṣṭāSaṁ. i. 195. 21 (2. 1); KalyāKā. 9. 30; स्नानम् ...। अनृतौ तु सदा कुर्याच्छौचं मूत्रपुरीषवत् AṅgiSm. 52; YamaSm. 16; पुत्रे जातेऽनृतौ गच्छन्संप्रदुष्येत्सदा गृही LaViṣṇuSm. 1.29; स्वदारेषु ऋतुमत्सु बुधो व्रजेत्। यथोक्तदोषहीनेषु सकामेष्वनृतावपि ViṣṇuP. iii. 11.127; (उत्तरबस्तिम्) विदधीत तदा तस्मादनृतावपि चात्यये AṣṭāSaṁ. i. 152. 22 (1. 28); AṣṭāHṛ. i. 19. 78; (रजोदर्शनादिः षोडश रात्रय ऋतुसंज्ञकः कालः) उत्तरसूत्रं त्वर्थप्राप्तमेवानृतौ गमनविकल्पमनूद्य प्रतिषिद्धवर्जमित्येवमर्थम् BālaKrī. i. 82. 19 (*on* 1. 79); Mitā. 26. 11 (*on* 1. 81); 26. 29 (*on* 1. 81); Aparā. 106. 13 (*on* 1. 81); BālamBha. i. 222. 20 (*on* 1. 81); परिसंख्येति। ऋतावपि गमनं प्राप्तमनृतावपि। न तु यदर्तौ तदानृताविति ManuBh. i. 229. 22 (*on* 3. 45); i. 241. 23 (*on* 3. 69); अनृतौ मैथुनं यातु परनारीं विशेषतः SkandP. vii (1). 255. 52; धर्मपत्न्यामभिप्रेतायां कामातुरायामनृतौ कामो धर्मानुबद्धः JayaMa. 10. 13 (*on* 1. 2); अपराधशतम् ...। अनृतौ मैथुनं पार्थ पर्वण्यपि च मैथुनम् BhaviP. 824B. 19 (iv. 146. 11); अनृतौ तु स्त्रियं गच्छेत् सकामां कामभाववान् BṛDharmaP. ii. 6. 17; ज्योतिःशास्त्रे 'अल्पायुरल्पवीर्यो वा ... दिवामैथुनसंभवः'। अनृतावप्येतत् CaturCin. iii (2). 723. 17; अनृतौ तु मैथुने आचमनमात्रं स्मृत्यन्तरे उक्तम् ManvaVi. 684. 10 (*on* 5. 144); स्कन्दन्ते ... अवीचिनरके यान्ति येऽनृतौ गृहमेधिनः BṛBrahmaS. ii. 3. 77; (मैथुनम्) आर्तवे इति विशेषोपादानादनृतौ दिवा गमने न निषेध इति यत् तन्न VīraMi. (Saṁskāra.) 154. 10; अन्तराले अनृतौ ब्राह्मणवचनाच्च संवेशनम् VīraMi. (Āhnika.) 563. 2; अनृतावप्याह गौतमः। 'ऋतावुपेयात्सर्वत्र वा प्रतिषिद्धवर्जम्' NirṇaSi. 173. 20; **2A** improper or wrong season, non-season or off-season तद् यद्वै किं च म्रियते न हास्यानृतौ म्रियते JaimiBr. 1. 246; अथ स्माहुः कापेया - अनृतौ वा एष प्रतिष्ठितो यत् षडहः JaimiBr. 2. 356; 3. 206; सहाभ्रभारस्तनिते ... अनृतौ ... जानीयान्महद्भयमुपस्थितम् AVPari. 63 (1). 10; अनृतौ चेत् फलं यत्र ... ध्रुवं स्याद्दशमे मासि राज्ञस्तत्र विपर्ययः AVPari. 70B (7). 13; सप्तरात्रं यदा वर्षेत्प्रबद्धं पाकशासनः। अनृतौ तस्य देशस्य प्रधानस्य वधो ध्रुवम् AVPari. 70 B (18). 1; विद्यादनध्यायमनृतौ चाभ्रदर्शने ManuSm. 4. 104; ManvaVi. 507.9 (*on* 4. 104); PadmP. i. 53. 65; SmṛtiCan. i. 149. 14; CaturCin. iii (2). 774. 22; अनृतौ दुर्दिने च शीतदोषान् पूतिनस्यं शिरोरोगं च जनयेत् CaraS. viii. 2. 21 (1941 Ed.) (comm. अनृतुदुर्दिनमित्यनेन अवार्षिकं दुर्दिनमाहुः); अनृतौ तु दिवानन्ता वृष्टिर्ज्ञेया भयानका MatsyaP. 233.1; राष्ट्रविभेदस्त्वनृतौ बालवधोऽतीव कुसुमिते बाले BṛSaṁ. 46. 26; AdbhuSāg. 442. 26; BṛSaṁ. 46. 29; 95. 16; दीर्घं दीनं संहताः सारमेयाः क्रोशन्त्युच्चैर्नित्यमेवानृतौ च YogYā. 3. 10; यद्यारण्यकुदेशजातमनृतौ यद्याल्पपक्वं नवम् ... धान्यमनृत्तमम् KalyāKā. 4. 26; शक्तिर्दोहदस्य वरीयसी। अनृतावपि येनैते जृम्भिताः पादपा इति BṛKathāŚloSaṁ. 28. 57; वृक्षाः ... अनृतुषु अस्वकालं ददति - प्रयच्छन्ति पुष्पफलम् SthānṬ. 345B. 6; अतिवृष्ट्यवनावृष्टौ क्षुद्भयः शत्रुतो भयम्। अनृतौ चेद्रोगभयम् VasiS. 45. 73; अनृतुषु तरवः सुपुष्पिताग्राः ŚaṅkaDigVi. (Mā.) 10. 7; **2B** improper or inconvenient season (not suitable for the operation of army) अनृताविह पर्वादिदोषवर्जं नराधिप (विहन्येतान्यथाकुर्वन्) MahāBhā. xiii. 302*(1); आहूतश्चाप्यथो यायादनृतावपि पार्थिवः MahāBhā. xv. 12.13; यन्नात्मनः सैन्यव्यायामानामृतुः अनृतुः परस्य स उत्तमः कालः ArthŚā. iii. 46. 3 (9. 1); अनृतावपि वक्ष्यमाणसंग्रामसमयभिन्ने, षड्भिर्हस्त्यश्वरथपदातिसेनासैन्यात्मकैः शक्तिस्त्रिविधा RājNīRa. 33. 11.

**अनृतु** (an-ṛtu) *adj.* not containing the word *ṛtu* ऋतुमन्ति पञ्चाहान्यनृतु षष्ठम् JaimiBr. 3. 154.

**अनृतुकन्या** (anṛtu-kanyā) *f.* girl before menstruation, MW.; APTE.

**अनृतुका** (an-ṛtukā) *f.* woman not having time or period conducive to conception (after menstruation) न विद्यते ऋतु-रक्तरूपः शास्त्रप्रसिद्धो वा यस्याः सा अनृतुका SthānṬ. 313B.. 11.

**अनृतुगमन** (anṛtu-gamana) *n.* sexual intercourse at a time or period not conducive to conception वाशब्दोऽनृतुगमनं वैकल्पिकमाह Aparā. 106. 19(*on* 1. 81); VīraMi. 145. 5 (*on* 1. 81); केचित्तु स्त्रियाः सेच्छत्वेऽनृतावप्यवश्यं गच्छेदिति अनृतुगमने नियमं वर्णयन्ति VīraMi. 145. 5 (*on* 1. 81)

**अनृतुगमनपरिहार** (anṛtugamana-parihāra) *m.* avoidance of sexual intercourse at a time or period not conducive to conception महाभारते त्वनृतुगमनपरिहारेण ऋतुगाम्येव ब्रह्मचारीत्युक्तम् VīraMi. (Saṁskāra.) 153. 12.

**अनृतुतुल्यत्व** (anṛtu-tulyatva) *n.* equality to or similarity with the time or period not conducive to conception ऋतावप्युक्तकालातिरेकेणानृतुतुल्यत्वात् स्त्र्यनुरोधेनैव गमनम् BālaKrī. i. 83. 5 (*on* 1. 79)

**अनृतुपरिसंख्यार्थम्** (anṛtuparisaṅkhyārtham) *adv.* for exclusive specification of time or period not conducive to conception गौतमीयं त्वनृतुपरिसंख्यार्थम् 'ऋतावुपेयादि'ति केचित् BālaKrī. i. 82. 16 (*on* 1. 79)

**अनृतुपा** (ánṛtu-pā) *adj.* who drinks (Soma) out of season रूपंरूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम्। त्रिर्यद्दिवः परि मुहूर्तमागात्स्वैर्मन्त्रैरनृतुपा ऋतावा ṚV. iii. 53. 8; JaimiUBr. i. 44. 10 (*but* MW. not drinking in time)

**अनृतुप्रतिषेधार्थम्** (anṛtupratiṣedhārtham) *adv.* for the sake of prohibition of sexual intercourse at a time not conducive to conception यच्चात्रर्तावुपेयादिति तदनृतुप्रतिषेधार्थम् ManuBh. i. 230. 1 (*on* 3. 45)

**अनृतुप्राप्त** (anṛtu-prāpta) *adj.* (army) caught in the inconvenient season बलव्यसनानि।... अनृतुप्राप्तम् अभूमिप्राप्तम् ArthŚā. iii. 35. 3 (8. 5)

**अनृतुफल** (anṛtu-phala) *n.* fruit (produced) at wrong season or off-season अनृतुफलपुष्पयोः शान्त्यन्तरमपि वृद्धगर्गादिभिर्विहितम् AdbhuSāg. 449.11.

**अनृतुभवा** (anṛtu-bhavā) *adj.* (*f.*) which occurs at off - season रोगो ह्यनृतुभवायां नृपवधोऽनभ्रजातायाम् (वृष्टौ) BṛSaṁ. 46. 38.

**अनृतुविषय** (anṛtu-viṣaya) *adj.* referring to the time not conducive to conception यत्तु हेमाद्रौ शिवरहस्ये 'दिवा जन्मदिने चैव न कुर्यान्मैथुनं व्रती। ... न च पर्वसु' इति तदनृतुविषयम् NirṇaSi. 174. 23.

**अनृतेष्टका** (ánṛteṣṭakā) *f.* false brick हिरण्मयान्यु हैके कुर्वन्ति। अमृतेष्टका इति वदन्तस्ता ह ता अनृतेष्टका न हि तानि पशुशीर्षाणि ŚatBr. VI.ii. 1.38.

**अनृतोक्त** (anṛtokta) *n.* **A** false speech अनृतोक्तं प्रजा हन्यात्ततः पापमवाप्नुयात् MahāBhā. viii. 29. 38; **B** act of telling of lie, false utterance शुकतुण्डः ... अनृतोक्ते यथौचित्यं ग्रहणेऽपि कमण्डलोः (हस्तप्रयोगः) Nṛtyā. 174.

**अनृतोक्ताघ** (anṛtoktāgha) *n.* sin of false speech उपासिता बहिः संध्या दिवामैथुनपातकम्। शमयेदनृतोक्ताघम् SkandP. iv. 35. 237.

**अनृतोक्ति** (anṛtokti) *f.* **A** utterance of, i.e. giving false testimony or evidence अपिशब्दादत्राप्यनृतोक्त्या किंचित् पापं भवतीति गम्यते SmṛtiCan. iii. 207. 10; B false speech अनृतोक्तेः पुमर्थत्वात्तन्निषेधस्तथाविधः JaiNyāMā. 15 (*on* iii.4.8)

**अनृतोक्तिसमुद्भूत** (anṛtokti-samudbhūta) *adj.* arisen from false speech रामतीर्थे ... स्नात्वा शिवं दृष्ट्वा धर्मपुत्रः ... अनृतोक्तिसमुद्भूतदोषान्मुक्तोऽभवत्क्षणात् SkandP. iii (1). 18. 30.

**अनृतोक्त्यादि** (anṛtokty-ādi) *adj.* false speech or telling of lie etc. (पुनराचामेद् वासो विपरिधाय च) चकाराद्रोदनाध्ययनारम्भचापत्यानृतोक्त्यादिषु Mitā. 68. 21 (*on* 1. 196)

**अनृतोज्झित** (anṛtojjhita) *adj.* abandoned by, i.e. devoid of unreality यस्या नखशिखमनृतालिङ्गितमङ्गं जनिष्वनेकासु। कथयसि कथमथ तत्त्वं स त्वं कृष्णानृतोज्झितो भूयः Mukundā. 93.

**अनृतोत्तर** (anṛtottara) *n.* false answer अनृतोत्तरेण तरलं प्रत्याय्य पद्मामसौ प्राप्ता पश्य गृहं करोति ललिता राधाप्रमाणे त्वराम् UjjvaNīMa. 243. 4.

**अनृतोदिति** (anṛtoditi) *f.* false speech, telling of lie प्रतिष्ठा लोकविश्वासप्रत्यया अनृतोदितेः। नदीपूरादिव ग्रामाः प्लाव्यन्ते तटवासिनः MalliC. 7. 65.

**अनृतोद्धतकथा** (anṛtoddhata-kathā) *adj.* (*f.*) who tells lie and arrogant words यक्षशीलाङ्गना स्मृता। तुल्यमानावमाना या परुषत्वक् खरस्वरा। शठानृतोद्धतकथा व्यालसत्त्वा NāṭyaŚā. 22. 118.

**अनृतोद्य** (anṛtodya) *n.* **A** false accusation सप्तमर्यादाः कवयश्चक्रुः। ... स्तेयम् ... पातकेऽनृतोद्यम् Nir. 6. 27 (126. 18); **B** false speech अनृतोद्यं न तत्रास्ति सत्यवद्यं ब्रवीम्यहम् Bhaṭṭi. 6. 55.

**अनृतोपभोगार्थ** (anṛtopabhogārtha) *adj.* for the sake of experiencing what is unreal सत्यानृतोपभोगार्थो द्वैतीभावो महात्मनः MaiU. 7. 11.

**अनृतोपम** (anṛtopama) *adj.* [*f.*- ā] comparable to unreality or non-existence संसृतिः कल्पनामूलं कल्पना ह्यमृ(?नृ) तोपमा। यैः कल्पना परित्यक्ता ते यान्ति परमां गतिम् SkandP. i (1).31.56; निमग्नो ह्यस्मि संसारे दुःखरूपेऽनृतोपमे DevīBhāP. iii. 2. 6.

**अनृतोपहता** (anṛtopahatā) *adj.* (*f.*) overcome or affected by untruth or falsehood इमास्तदा तु प्रकृतिर्व्यापत्स्यन्ति प्रजा भृशम्। अनृतोपहताः सर्वा धर्मतः कामतोऽर्थतः VāyuP. ii. 37. 418; MatsyaP. 273. 46; BrahmāṇḍP. ii. 74. 237.

**अनृतोपाधि** (anṛtopādhi) *m.* unreal condition एतस्मिन्ननृतोपाधौ शक्यो दर्शयितुं परः ... स्वयंज्योतिःस्वभावकः ... नैव शक्यः स ईक्षितुम् BṛĀraUBhVā. iv. 3. 899.

**अनृत्त** (a-nṛtta) *adj.* not accompanied by gesticulation नागरकः ... उपक्रमेत् ... रत्यर्थम् ... परिभाषणम्। सनृत्तमनृत्तं वा गीतं वादित्रम् KāmSū. 177. 22 (2. 10); JayaMa. 178. 19 (*on* 2. 10)

**अनृत्तदर्शिन्** (a-nṛttadarśin) *adj.* not observing or watching dance ब्रह्मवृद्धिमिच्छन् ...। अजिनं त्वेवोत्तरं धारयेत् न गायेत् ...। अनृत्तदर्शी HirŚS. xxvi. 1. 84 (15. 24); ĀpaDS. i (1). 3. 11.

**अनृत्य** (a-nṛtya) *adj.* not dancing शिव उवाच। अनृत्यः शान्तभूतोऽहम् BṛDharmaP. i. 40. 45.

**अनृत्यदर्शिन्** (a-nṛtyadarśin) *adj.* not observing or watching dance (शिष्यः) अनृत्यदर्शी सततं भवेद् गीतादिनिस्पृहः KūrmaP. 537. 13 (2. 14); PadmP. i. 53. 20.

**अनृत्यस्** (anṛty-as-) II.P. to become false न यावदनृतीस्यान्मे प्रतिज्ञा सा तदोदिता TriṣaŚaPuC. ii. 6. 332.

**अनृत्वभूमिप्राप्त** (anṛtvabhūmi-prāpta) *adj.* who is caught in the inconvenient season and incovenient terrain बलव्यसनानि। ... अनृत्वभूमिप्राप्तयोरनृतुप्राप्तं यथर्तुयोग्ययुग्यशस्त्रावरणं युध्येत ArthŚā. iii. 36. 5 (8. 5)

**अनृत्विक्कर्तृकत्व** (anṛtvikkartṛka-tva) *n.* the state of having other than the officiating priest as the agent न चैतावता अनृत्विक्कर्तृकत्वं शङ्क्यम् BhāṭṭDī. ii. 312. 24 (*on* vi. 6. 3)

**अनृत्विज्** (án-ṛtvij) *m.* one other than the officiating priest, non-officiating priest यां ब्राह्मणाय श्रोत्रियायानृत्विजे प्रसृप्ताय ददाति यामेव स विद्यां वेद सास्य तेनाभीष्टा प्रीता भवति KāṭhS. 28. 5 (ii. 159. 15); KapiKaS. 44. 5 (261. 14); ĀpaŚS. xiii. 7. 8; HirŚS. x. 4. 15 (1086. 1); ब्राह्मणाः कुले वसन्त्यृत्विजश्चानृत्विजश्च ŚatBr. II. i. 4. 4; ŚatBr. (K.) I. i. 4. 3; ऋत्विग्भ्य एव दक्षिणा दद्यान्नानृत्विग्भ्यः ŚatBr. IV. iii. 4. 5; ŚatBr. (K.) V. iv. 1. 4; दक्षिणानां कालेऽनृत्विजे ब्राह्मणाय दद्यात् VādhūŚS. 2. 20(8); चातुष्प्राश्यम् ... । तद्येदनृत्विग्भिः प्राशयेयुस्तण्डुलानादायापविध्येयुः ... कृन्तानीति DrāhyŚS. xii. 1. 19; अश्वां च ... व्रात्यस्तोमेष्वनृत्विग्भ्यो ददाति NidāSū. 185. 12 (10. 10); शावमाशौचं दशरात्रमनृत्विग्दीक्षितब्रह्मचारिणां सपिण्डानाम् GautDS. ii. 5. 1; यज्ञे कर्मणि कुर्वतामिति अनृत्विजामपि चमसाध्वर्व्यादीनां परिग्रहार्थम् BālaKrī. ii. 10. 4 (*on* 3. 27-28); अनृत्विग्भिरेव सत्रं कर्तव्यमिति वरणनिवृत्तिः ŚāstrDī. 665. 14 (*on* x. 2. 10); 669. 13 (*on* x. 2 16); स यज्ञकर्मणि ऋत्विगनृत्विग्वा यज्ञदर्शनार्थमागतो गुरुवत्पूजामर्हति ManvaMu. 76. 18 (*on* 2. 208); 155. 9 (*on* 4. 57); न हीन्द्रियगतसंख्यापूरणमिन्द्रियेणैवेति नियमः ... ऋत्विग्गतपञ्चत्वसंख्याया अनृत्विजापि यजमानेन पूरणदर्शनात् VedāntPari. 40. 1; शमिता तु वरणभेदानाम्नानात् सत्यपि संज्ञाभेदे यौगिकत्वेन प्रकृतेष्वेव ऋत्विक्षु अनृत्विक्षु वा वृतेषु तस्या उपपत्तेर्नान्यः BhāṭṭDī. ii. 51. 19 (*on* iii. 7. 13)

**अनृत्विज** (an-ṛtvija) *adj.* devoid of officiating priest, not officiated by a priest अनृत्विजं हुतं नास्ति MahāBhā. xii. 78. 22.

**अनृद्धा** (an-ṛddhā) *adj.* (*f.*) not prosperous, i.e. poor अश्रीमती त्वनृद्धा च स्नुषा तव भविष्यति Rāmā. ii. 139* (2)

**अनृद्धि** (an-ṛddhi) *f.* absence of prosperity, i.e. poverty (ब्राह्मणं च पुरोदधीत ... शान्तिपुण्याह °...° द्विषदवृद्धियुक्तानि ... कुर्यात्) द्विषदनृद्धिः, द्विषतां शत्रूणामनृद्धिः ऋद्धयभावः VīraMi. (Rājanīti.) 137. 10.

**अनृधीप्रभव** (a-nṛdhīprabhava) *adj.* not arising from human intellect सापेक्षतायाः ... को हेतुः ... अनृधीप्रभवे नास्ति भूतार्थेऽपि स वैदिके। ... अपुरुषबुद्धिप्रभवत्वाद्वेदवचसि भूतार्थेऽपि न सापेक्षत्वहेतुः BrahmSi. 79. 24.

**अनृध्यमान** (án-ṛdhyamāna) *adj.* not prospering ब्राह्मणो ऽनृध्यमाने द्वितीयं नाम कुर्वीत राध्नोति हैव य एवं विद्वान् ŚatBr. III. vi. 2. 24; ŚatBr. (K.) IV. vi. 2. 13.

**अनृपवंशोत्थराजपत्नी** (anṛpavaṁśottha-rājapatnī) *f.* queen born in other than royal family स्वामिन्यनृपवंशोत्थराजपत्न्यां तथा पुनः। नाट्योक्तिराजपत्न्यां च NānārthāSaṁ. i. 171. 1508.

**अनृपा** (a-nṛpā) *adj.* (*f.*) (land) which is kingless, which has lost its king नृपात्मजौ चिक्लिशतुः ससीतौ ममार राजा विधवा भवत्यः शोच्या। वयं भूरनृपा Bhaṭṭi. 3. 31.

**अनृपादिकजात** (a-nṛpādikajāta) *adj.* not born of the king, i.e. Kṣatriya etc. शुक्तिश्च गजदन्तश्च मृगशृङ्गं तथैव च। अनृ(नृ)पादिकजातानां पर्यङ्केषु न्यसेत् क्रमात् YuktiKa. 218. 1.

**अनृभुक्षी** (an-ṛbhukṣī) *adj.* (*f.*) (army) not having Indra, i.e. thunderbolt भस्य टेर्लोपः स्त्रियां नान्तलक्षणे ङीपि भत्वाट्टिलोपः ... अनृभुक्षी सेना SiddhāKau. 87A. 7 (*on* vii. 1. 88) (Bālamanoramā ऋभुक्षिन्शब्दस्तु इन्द्रवाची)

**अनृम्ण** (a-nṛmṇa) *n.* absence of manliness or power यन्मेऽनृम्णं नृम्णं ब्राह्मणम् च यच्च श्रुतं यच्च रत्नं दधामि। एतान् नोऽत्र सोऽधिपा नि पातु AV. (P.) xix. 50. 10-12.

**अनृशंस** (a-nṛśaṁsa) *adj.* [*f.*-ā] [enumerated in the *brāhmaṇādigaṇa*, P. v. 1. 124; GaṇPā. 167. 89; GaṇRa. 7. 404 (427), and in the *yuvādigaṇa*, P. v. 1. 130; GaṇPā. 188. 23; JaineVyā. 236. 26 (*on* iii. 4. 120); CāndraVṛ. *on* iv. 1. 146; KāśiVṛ. *on* v. 1. 130; GaṇRa. 7. 406 (430)] **A** not malicious, i.e. noble उद्वंशीयम् ...। तद् अनृशंसस्य कुर्यान्न नृशंसस्य परिमितजीवी हि नृशंसोऽतिरिक्तजीव्यनृशंसः JaimiBr. 1. 189; यदानृशंसो जायां विन्दते व्येव वहतुमादिशति JaimiBr. 1. 213; **Bi** not cruel, i.e. kind दानं तपः सत्यमथापि धर्मो ह्रिः ... एतानि ... शिबेः स्थितान्यनृशंसस्य MahāBhā. i. 88.19; शत्रोरपि प्रपन्नस्य सोऽनृशंसः प्रतापवान्। दाताभयस्य बीभत्सुरमितात्मा महाबलः MahāBhā. iii. 142. 15; iii. 231. 20; जाताः कुले अनृशंसा वदान्याः MahāBhā. v. 25. 5;

v. 52. 10; सत्यो मृदुश्चानृशंसः क्षमावान् (गृहाश्रमी स्यात्) MahāBhā. xii. 61. 11; xii. 63. 8; xii. 71. 3; xii. 76. 37; xii. 208. 10; xii. 297. 14; त्वादृशम् ... अनृशंसं बहुश्रुतम्। अमात्यं को न कुर्वीत MahāBhā. xii. 107. 6; दुर्योधनो नाम महान्राजासीत् ... धर्मात्मा चानृशंसश्च MahāBhā. xiii. 2. 16; कौसल्ये ...। वत्सला चानृशंसा च त्वं हि नित्यं परेष्वपि Rāmā. ii. 56. 4; अनृशंसेन रामेण मोचिता राक्षसाः परे Rāmā. vi. 431* (3); पूर्वसंस्तुतो राजवल्लभः कृतोपकारो भक्तिमाननृशंस इत्येते वेश्याजननीसेवकाः DhūrtaViSaṁ. 22. 14; अनृशंसैर्नृभिः ...। श्रुत्वा मृत्युं गतं विप्र शुकं तम् ... महता दुःखभावेन असह्येनातिपीडितः ... अहम् PadmP. ii. 123. 29; **Bii** not causing harm, i.e. helpful प्राच्योदीच्याः ... सर्वे। अनृशंसाः शीलवृत्तोपपन्नास्तेषां सर्वेषां कुशलं तात पृच्छेः MahāBhā. v. 30. 24; भीष्ममिति होवाच केशवः। ... अनृशंसं शुचिं दान्तं सर्वभूतहिते रतम्। महारथं त्वत्सदृशं न कंचिदनुशुश्रुम MahāBhā. xii. 50. 24; कोऽप्यनृशंसम् ... लोकः ... त्वामभियाति RāghPāṇ. (Dha.) 8. 33; अनृशंस द्वादश ते समा निरर्था रिपावसद्वादशते YudhiVi. 4. 33; न नृशंसो घातुकोऽनृशंसः तद्भावः आनृशंस्यमघातुकत्वं पापाजनकत्वम् BālamBha. ii. 175. 12 (*on* 2. 132); **C** gentle, cf. **अनृशंसरूप B.**

**अनृशंस** (a-nṛśaṁsa) *n.* absence of cruelty, i.e. kindness, cf. **अनृशंसवत्.**

**अनृशंसक** (anṛśaṁsa-ka) *adj.* not cruel, i.e. kind कुलीनः कर्मकृत् ... अनृशंसकः। ... पात्रं सर्व इमे द्विजाः VṛGautaSm. 596. 16 (14)

**अनृशंसतम** (a-nṛśaṁsatama) *adj.* not extremely cruel, i.e. kindest स्थविराः ... तेषां यो नृशꣳसतमः(v.l. योऽनृशꣳसतमः pw.) KātyŚS. xxii. 4. 7 (better नृशꣳसतमः)

**अनृशंसतर** (a-nṛśaṁsatara) *adj.* not more cruel, i.e. more kind गच्छन्ति पुष्करम् ... ये अनृशंसतराः सन्तः सर्वदा च प्रियंवदाः ... ते हि सर्वे ... जिगीषन्तो ब्रह्मलोकं सनातनम् PadmP. v. 19. 226.

**अनृशंसता** (anṛśaṁsa-tā) *f.* the state of not being cruel, i.e. kindness, सत्यं चानृततः श्रेयो नृशंसाद्यानृशंसता MahāBhā. iii. 30. 15; xiv. App. I. 4 (3340) (v.l.); नास्ति धर्मः कुतः सत्यं नार्जवं नानृशंसता। यत्र रामस्य वैदेहीं भार्यां हरति रावणः Rāmā. iii. 50. 37; v. 13. 48 (v.l.); MārkP. 8. 212; DevīBhāP. vii. 26. 49.

**अनृशंसत्व** (anṛśaṁsa-tva) *n.* the state of not being cruel, i.e. kindness, भरतस्यानृशंसत्वं संचिन्त्य ... पुनः पुनः। नानुशोचामि पितरं मातरं चापि लक्ष्मण Rāmā. ii. 41. 6; आश्रयोऽनृशंसत्वस्य। तं देशं सत्त्वस्य प्राप नलः Nalo. 3. 16.

**अनृशंसपुरःसरम्** (anṛśaṁsa-purassaram) *adv.* as preceded by or with the kindness अशुभस्यापि दानस्य शुभं स्याद्य फलं कथम्। मनसा तत्त्वतः शुद्धमनृशंसपुरःसरम्। ... दत्त्वा फलमवाप्नुयात् MahāBhā. xiii. App. I. 15 (3612)

**अनृशंसबुद्धि** (anṛśaṁsa-buddhi) *adj.* kind-hearted, sympathetic or compassionate अवचनसमकालभाविनस्त्वेते केवलाप्रतिभामूलव्यथालिङ्गत्वादनृशंसबुद्धीनां प्रतिभानिग्रहस्थानाभियोगं निरुन्धते NyāyPari. 207. 2.

**अनृशंसमत** (a-nṛśaṁsamata) *adj.* who is devoid of the thought of the cruel दृशं समतनुत श्लाघ्यां धर्मात्मजोऽनृशंसमतनुतः YudhiVi. 6. 63 (comm. अविद्यमानं नृशंसानां क्रूराणां मतं येषां ते अनृशंसमताः साधवः)

**अनृशंसरूप** (anṛśaṁsa-rūpa) *adj.* [*f.*-ā] **A** (behaviour) of gentle form कच्चित्पुत्रा जीवपुत्राः सुसम्यग् वर्तन्ते वो वृत्तिमनृशंसरूपाम् MahāBhā. v. 30. 31; **B** of gentle appearance ज्येष्ठं मात्स्यानामनृशंसरूपं विराटपुत्रम् ... यदा द्रष्टा ... तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् MahāBhā. v. 47. 34; **C** of kind nature, sympathetic or compassionate द्रष्टारो हि कुरवस्तं समेताः ... ब्रुवन्तं वाचमनृशंसरूपां वृष्णिश्रेष्ठम् MahāBhā. v. 69. 4.

**अनृशंसवत्** (anṛśaṁsa-va(n)t) *adj.* having absence of cruelty, i.e. kindness ह्रीमानसि कुले जातः श्रुतवाननृशंसवान् MahāBhā. v. 122. 17; xii. 81. 22; xii. 133. 2; xii. 223. 15.

**अनृशंसवाच्** (anṛśaṁsa-vāc) *adj.* of kind words श्रुतवाननृशंसवान् (v.l. अनृशंसवाक्) । ... कापव्यो नाम नैषादिः MahāBhā. xii. 133. 2.

**अनृशंसवृत्ति** (anṛśaṁsa-vṛtti) *adj.* of gentle behaviour गुरुश्च राजा च पिता च वृद्धः ... यद् व्यादिशेत्कार्यमवेक्ष्य धर्मं कस्तं न कुर्यादनृशंसवृत्तिः Rāmā. ii App. 1. 11 (42)

**अनृशंसार्यरूप** (anṛśaṁsārya-rūpa) *adj.* having not cruel, i.e. kind and noble looks ज्येष्ठं मात्स्यानामनृशंसरूपम् (v.l. अनृशंसार्यरूपम्) ... यदा द्रष्टा दंशितं पाण्डवार्थे तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् MahāBhā. v. 47. 34.

**अनृषभ** (an-ṛṣabha) *adj.* without a bull पशवो वै शक्वर्यः पशुष्वेव तन्मिथुनमप्यर्जति प्रजात्यै न ह अनृषभाः पशवः प्रजायन्ते PañcBr. xiii. 5. 18; xiii. 10. 11; xv. 3. 17.

**अनृषि** (an-ṛṣi) *m.* [P. iv. 1. 104; CāndraVyā. ii. 3. 82; KāśiVṛ. *on* iv. 1. 104; PrakriKau. i. 726. 2; SiddhāKau. 230A. 13 (*on* iv. 1. 104); LaŚabdeŚe. ii. 209. 1] **A** non-seer, i.e. unworthy seer स युक्ताश्वो राजवळवानां शिशून् जातान् विपर्यहरत्। ... ते ... तमबाधन्त - स्तेनोऽस्यनृषिरिति JaimiBr. 3. 23; विशेषार्थी ततो भीष्मः पौत्राणां विनयेप्सया ... नाल्पधी(v.l. नानृषि)र्नामहाभागः ... विनयेत्कुरूनस्त्रे महाबलान् MahāBhā. i. 121. 5; विश्वामित्रस्तपस्तेपे नानृषिः स्यामिति। तत्रभवान् ऋषिः संपन्नः MahāBh. ii. 254. 17 (*on* iv. 1. 104); ManuBh. ii. 13. 11 (*on* 7. 42); परशिवशक्तिर्जायते पुरुषोत्तमात्। ऋषयोऽनृषयो जायन्ते पुरुषोत्तमात्। KṛṣṇaPuU. 217. 7; **Bi** non-seer (of sacred formulae) नह्येषु प्रत्यक्षमस्त्यानृषेः Nir. 13. 12 (227. 4); नानृषिर्नौ तु जामाता नैष मन्त्रान् हि दृष्टवान् BṛDe. 5. 58; 5. 59; न तावदनृषिः कश्चित्स्मर्यते कल्पसूत्रकृत् TantrVā. 164. 1 (*on* i. 3. 10); महर्षिप्रणीतानि व्याख्यानानि ... अनुरोद्धव्यानि। न ह्यनृषेः सूक्ष्मदर्शित्वम् ŚrutaPra. iA. 2. 15 (*on* i. 1. 0); तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना न चानृषेर्दर्शनमस्ति किंचित् SūktiRa. 163. 151; **Bii** non-seer (in general) आप्तोपदेशस्य प्रत्यक्षानुमानाभ्यां प्रतिसंधानादनृषेश्च स्वातंत्र्यानुपपत्तेः NyāyBh. 50. 12 (*on* i. 1. 39); नानृषिः कुरुते काव्यम् DevīBhāP. vi. 10. 23; UdaySuKa. 151. 25; Kāvyānu. (He.) 379. 4; अनृषिणा काश्यपेन प्रोक्तः कल्पः काश्यपीयः Prasā. i. 780. 15.

**अनृषिकृत** (anṛṣi-kṛta) *adj.* composed by the non-seer ऋषिकृताः स्विदूहा अनृषिकृता इति। [अनृषिकृता इति वै खल्वाहुः। अप्याद्या विरता एवोहनात्] NidāSū. 22. 1 (2. 1)

**अनृषिवाचिन्** (anṛṣi-vācin) *adj.* expressive of non-seer अनृषिवाचिनो गुरुपोत्तमाद् यावणिञौ गोत्रे विहितौ तयोः स्त्रियां ष्यङादेशो भवति CāndraVṛ. *on* ii. 3. 82.

**अनृष्यानन्तर्य** (anṛṣy-ānantarya) *n.* **1** immediate succession of non-seer अनृष्यानन्तर्ये विदादिभ्योऽञ् P. iv. 1. 104; विदादिभ्योऽनृष्यानन्तर्येऽञ् JaineVyā. iii. 1. 93; विदादेर्वृद्धेऽनृष्यानन्तर्ये। विदादिभ्यो वृद्धेऽपत्येऽञ् भवति न चेद्वृद्धविषयं ऋषित्वस्यानन्तर्यमविच्छेदो गम्यते। ... वैदः ŚākaṭāVyā. ii. 4. [illegible]0; अनृष्यानन्तर्य इत्यस्यार्थद्वयं संभवति। ऋषीणामानन्तर्ये अव्यवधाने न भवति यद्वानन्तरमेवानन्तर्यं तेन ऋषिभ्योऽनन्तरापत्ये प्रत्ययो न भवति Pradī. iv. 136B. 22 (*on* iv. 1. 104); GaṇRa. 3. 180 (219); **2** (the word or expression) *anṛṣyānantarya* अनृष्यानन्तर्यवचन-मनर्थकं संज्ञागोत्राधिकारात् Vār. 1 *on* P. iv. 1. 104; MahāBh. ii. 254. 23 (*on* iv. 1. 104)

**अनृसिंह** (a-nṛsiṁha) *m.* one who is other than a Man-lion, i.e. the fourth incarnation of Viṣṇu ते देवाः ... आत्मानमुग्रमनुग्रं वीरमवीरम् ... नृसिंहमनृसिंहं भीषणमभीषणम् ... नृसिंहानुष्टुभैव बुबुधिरे NṛsiṁhoTāU. 6.

**अनृहवत्** (anṛhava(*n*)t) *m.* name of a Kṣatriya who attained the Brāhmaṇahood (i.e. the status of a seer) श्रूयन्ते हि तपःसिद्धाः क्षात्रोपेता द्विजातयः। ... सत्यश्चानृहवानृथुः। ... क्षात्रोपेताः स्मृता ह्येते तपसा ऋषित्वं गताः VāyuP. ii. 29. 112.

**अनॄकारान्तत्व** (anṝkārānta-tva) *n.* the state of not ending in the syllable ṝ मातृणामित्यादौ मा भूदिति परेण च ग्रहणे 'नामि' इति दीर्घे रपरे कृतेऽनृकारान्तत्वादेव न भविष्यति PadMañ. *on* KāśiVṛ. *on* ŚivSū. (Gr.) 6 (50. 12)

**अनेक** (an-eka) *adj.* [*f.* - ā] [enumerated in the *utkarādigaṇa*, GaṇPā. 25.33; GaṇRa. 4.302 (340); AltGr. II. 1.36; DEBRU. 339; 582; 599] **1Ai** more than one (often in contrast with *eka*) **ii** many, several, innumerable, number of **iii** more than one, i.e. two or more **iv** more than one, i.e. two **v** often, i.e. frequent **Bi** much **ii** immense **C** various, varied, diverse (kinds or types) **D** not having anyone (to help, i.e. helpless) **E** not one, i.e. less by one **F** long (time) **2** (the word) *aneka* **3** only (*lit.* not accompanied by any one) **4** which is not alone **5** belonging to many, i.e. common **1Ai** more than one (often in contrast with *eka*) सप्त मर्यादाः कवयस्ततक्षुस्तासामनेकामभ्यंहुरो गात् AV. (P.) vi. 2. 6; एतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जानः शतं वर्षाणि जीवति SāmaViBr. ii. 1. 4; एतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जानः ... कुटुम्बिनमावर्तयति SāmaViBr. ii. 5. 6; ii. 8. 2; iii. 1. 2; य एकोऽवर्णः वर्णाननेकान् ... दधाति ŚvetāU. 4. 1; एतदक्षरम् ... यदनेकमेकम् Śaunako. 1. 13; आदौ निविद्धानीयानां सूक्तानामनेकं चेत् प्रथमेष्वाहावः ĀśvaŚS. I. v. 10. 16; दशतमनेकस्मै वैकां यस्मै ... दद्यात् HirŚS. xvii. 6. 42 (450. 9); उभाभ्यां तु परं विद्यात् ताभ्यामुदात्त-मक्षरम्। अनेकमप्यनुदात्तम् ṚPrāti. 3. 5; 3. 12; च घ हि वेति च सर्वत्र तेषामनेकं चेत् संनिपतेद् द्वितीयम् ṚPrāti. 15. 12; 16. 44; आसन्नं संदेहे। अनेकस्यापि TaiPrāti. 1. 26; स्वरितात् परमनुदात्तमनुदात्तमयम्। अनेकमपि VājaPrāti. 4. 142; CaturA. (Śau.) 4. 2; अनेकं सत्तथा चान्यदेकमेव निरुक्तवान्। अरुणो मा सकृन्मन्त्रे मासकृद् विग्रहेण तु BṛDe. 2. 112; अनेकं व्यञ्जनं यत्रोपर्युपरि

